[#१]

वृत्तौ भाष्ये तथा धातु-नाम-पारायण-आदिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सार-सङ्ग्रहः । ।१ । ।

इष्ट्य्-उपसङ्ख्यानवती शुद्ध-गणा विवृत-गूढ-सूत्र-अर्था ।
व्युत्पन्न-रूप-सिद्धिर्वृत्तिरियं काशिका नाम । ।२ । ।

व्याकरणस्य शरीरं परिनिष्ठित-शास्त्र-कार्यं एतावथ् ।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थ-कारेण । ।३ । ।

[#२]

अथ सब्द-अनुशासनं केषां शब्दानाम्? लौकिकानां वैदिकानां च ।
कथं अनुशासनम्? प्रकृत्य्-आदि-विभाग-कल्पनया सामान्य-विशेषवता लक्षणेन ।
अथ किम्-अर्थो वर्णानां उपदेशः? प्रत्याहार-अर्थः ।
प्रत्याहारो लाघवेन शास्त्र-प्रवृत्त्य्-अर्थः । ।
अ इ उ ण् ।
अ इ उ इत्यनेन क्रमेण वर्णान्-उपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थं ।
तस्य ग्रहणं भवत्येकेनौरन्नप्रः (*१,१.५१) इत्यकारेण ।
ह्रस्वं अवर्णं प्रयोगे संवृतं ।
दीर्घ-प्लुतयोस्तु विवृतत्वं ।
तेषां सावर्ण्य-प्रसिद्ध्य्-अर्थं अकार इह शास्त्रे विवृतः प्रतिज्ञायते ।
तस्य प्रयोग-अर्थं अ अ (*८,४.६८) इति शास्त्र-अन्ते प्रत्यापत्तिः करिष्यते । ।
ऋ ऌ क् ।
ऋ ऌ इत्येतौ वर्णावुप्दिश्य पूर्वांश्च-अन्ते ककारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति त्रिभिः ।
अकः सवर्णे दीर्घः (*६,१.१०१) इत्यकारेण ।
इको गुण-वृद्धी (*१,१.३) इति-इकारेण ।
उगितश्च (*४,१.६) इत्युकारेण ।
अकार-आदयो वर्णाः प्रचुर-प्रयोग-विषयास्तेषां सुज्ञानं उपदेशे प्रयोजनं ।
ऌकारस्तु क्लृपिस्थ एव प्रयुज्यते ।
क्लृपेश्च पूर्वत्र-असिद्धं (*८,२.१) इति लत्वं असिद्धं ।
तस्य-असिद्धत्वादृकार एव अच्कार्याणि भविष्यन्ति इति किम्-अर्थं ऌकार उपदिश्यते? लत्व-विधानाद्यानि पराण्यच्कार्याणि तानि ऌकारे यथा स्युरिति ।
कानि पुनस्तानि? प्लुतः स्वरितो द्विर्वचनं ।
क्लृ३प्त-शिखः, प्रक्लृप्तः, प्रक्लृप्तवानिति ।
यच्च-अशक्तिजं असाधु शब्द-रुपं, तद्-अनुकरणस्य-अपि साधुत्वं इष्यते ।
तत्स्थस्य-अपि ऌकारस्य अचकार्य-प्रतिपत्त्य्-अर्थं ऌकार-उपदेशः क्रियते ।
ऋतकः इति प्रयोक्तव्ये शक्ति-वैकल्यात्कुमारी ऌतकः इति प्रयुङ्क्ते, तद्-अन्योऽनुकरोति - कुमार्य्-ऌतकः इत्याह इति । ।
ए ओ ङ् ।
ए ओ इत्येतौ वर्णावुपदिश्य अन्ते ङ्कारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवत्येकेन ।
एङि पररूपं (*६,१.९४) इत्येकारेण । ।

[#३]

ऐ औ छ् ।
ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्च-अन्ते चकारमितं करोति प्रत्याहार-अर्थं ।
तस्य-ग्रहणं भवति चतुर्भिः ।
अचः परस्मिन्पूर्व-विधौ (*१,१.५७) इत्यकारेण ।
इच एकाचोऽ प्रत्ययवच्च (*६,३.६८) इति इकारेण ।
एचोऽय्-अव्-आय्-आवः (*६,१.७८) इति एकारेण ।
वृद्धिरादैच्(*१,१.१) इति ऐकारेण ।
प्रत्याहारेऽनुबन्धानां कथं अज्-ग्रहणेषु न ।
आचाराद्-अप्रधानत्वाल्-लोपश्च बलवत्तरः । ।
वर्णेषु ये वर्ण-इकदेशा वर्ण-अन्तर-समान-अकृतयस्तेषु तत्-कार्यं न भवति, तच्-छायामुकारिणो हि ते न पुनस्त एव ।
पृथक्-प्रयत्न-निर्वर्त्यं हि वर्णं इच्छन्त्याचार्याः ।
नुड्विधि-ल-आदेश-विनामेषु ऋकारे प्रतिविधातव्यं ।
नुडिधौ (*७,४.७१) ऋकार-ग्रहणं ।
आनृधतुः, आनृधुः ।
ल-आदेशे ऋकार-ग्रहणं ।
क्लृप्तः, क्लृप्तवान् ।
विनामे ऋकार-ग्रहणं ।
कर्तृणां । ।
ह य व रठ् ।
ह य व र इत्येतान्वर्णानुपदिश्य पूर्वांश्च-अन्ते टकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवत्येकेन ।
शश्-छोऽति (*८,४.६३) इत्यकारेण ।
अयं रेफो य-कारात्पर उपदिश्यते ।
तस्य यर्-ग्रहणेन यय्-ग्रहणेन च ग्रहणे सति, स्वर्नयति, प्रातर्नयति इत्यत्र यरोऽनुनासिकेऽनुनासिको वा (*८,४.५८) इति अनुनासिकः प्राप्नोति ।
मद्र-ह्रदः, भद्र-ह्रद इत्यत्र द्विर्वचनं प्राप्नोति अचो र-हा-भ्यां द्वे (*८,४.४६) इति ।
कुण्डं रथेन, वनं रथेन इत्यत्र अनुस्वारस्य ययि परसवर्णः(*८,४.५८) इति परसवर्णः प्राप्नोति ।
न-इष दोषः ।
आकृतौ पद-अर्थे समुदाये सकृल्-लक्ष्ये लक्षणं प्रवर्तते इत्येतस्मिन्दर्शने यरोऽनुनसिकेऽनुनासिको वा (*८,४.४५) अन्तरतमो भवति इत्येवं एतत्प्रवर्त्तते ।
तद्-अनेन गकार-आदीनां ङकारा-अदयो ये यथा-स्वं स्थानतो गुणतश्च अतरतमाः, ते सर्वे विहिताः ।
ये तु न स्थानतः, न अपि गुणतः, स्थान-मात्रेण गुण-मात्रेण वा अन्तरतमास्ते सर्वे निवर्तिताः इति स्थान-मात्र-अन्तरतमो रेफस्य णकारो न भवति ।
द्विर्वचनेऽपि रेफस्य यर्-अन्तर्भावे सति यर्कार्यं प्राप्तम्, तत्साक्षाच्-छिष्टेन निमित्त-भावेन बाध्यते इति न द्विरुच्यते रेफः ।
अनुस्वारस्य ययि परसवर्णः (*८,४.५८) इत्येतदप्यनुस्वार-अन्तरतमं सकृदेव परसवर्णं विदधाति ।
न च रेफस्य अनुस्वार-अन्तरतमः सवर्णोऽस्ति इति न भविष्यति कुण्डं रथेन, वनं रथेन इत्यत्र ।
अटां मद्ये विसर्जनीय-जिह्वामूलीय-उपध्मानीयानां अप्युपदेशः कर्तव्यः ।
किं प्रयोजनं ? उरःकेण, उरःकेण ।
उरःपेण, उरःपेण ।
अत्र अड्-व्यवाये इति णत्वं यथा स्यातिति । ।

[#४]

ल ण् ।
ल इत्येकं वर्णं उपदिश्य पूर्वांश्च-अन्ते णकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति त्रिभिः ।
अण्-उदित्-सवर्णस्य च अप्रत्ययः (*१,१.६९) इत्यकारेण ।

इण्-कोः (*८,३.५७) इति इकारेण ।
इको यण्-अचि (*६,१.७७) इति यकारेण ।
इण्-ग्रहणानि सर्वाणि परेण णकारेण ।
अण्-ग्रहणानि तु पूर्वेण, अण्-उदित्-सवर्णस्य च-अप्रत्ययः (*१,१.६९) इत्येतद्-एव-इकं परेण ।
अथ किं अर्थं अज्ग्रहणं एव-इतन्-न क्रियते? न-इवं शक्यम्, अन्तः-स्थानां अपि हि सवर्णानां ग्रहणं इष्यते ।
सयं, यं, यन्ता, सवं, वं वत्सरह्, यलं, लं, लोकम्, तल्लं,लं, लोकं इत्यत्र अनुस्वारस्य अनुनासिके ययि परसवर्णे कृते तस्य यर्-ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यादिति ।
हकार-आदिष्व्-अकार उच्चारण-अर्थः, न अनुबन्धः ।
लकारे त्व्-अनुनासिकः प्रतिज्ञायते, तेन उर्-अण्रपरः (*१,१.५१) इत्यत्र र इति प्रत्याहार-ग्रहणाल्-लपरत्वं अपि भवति । ।
ञ म ङण न ं ।
ञ म ङ ण न इत्येतान्वर्णानुपदिश्य पूर्वांश्च-अन्ते मकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति त्रिभिः ।
पुमः खय्य्-अम्परे (*८,३.६) इत्यकारेण ।
हलो यमां यमि लोपः (*८,४.६४) इति यकारेण ।
ङमो ह्रस्वाद्-अचि ङमुण्नित्यं (*८,३.३२) इति ङ्कारेण ।
ञमन्ताड्-डः इति ञकारेण-अपि ग्रहणम्-अस्य दृश्यते ।
केचित्-तु सर्वाण्य्-एतानि प्रत्याहार-ग्रहणानि ञकारेण भवन्तु इति मकारं अनुबन्धं प्रत्याचक्षते ।
तथा च सति ङमो ह्रस्व-अदचि ङमुण्नित्यम्(*८,३.३२) इत्यत्र-आगमिनोः झभोरभावाद्-आगमाभाव-प्रतिपत्तौ प्रतिपत्ति-गौरवं भवति । ।
झ भ ञ् ।
झ भ इत्येतौ वर्णाव्-उपदिश्य पूर्वांश्च-अन्ते ञकारामितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवत्येकेन ।
अतो दीर्घो यञि (*७,३.१०१) इति यकारेण । ।
घ ढ ध ष् ।
घ ढ ध इत्येतान्वर्णानुपदिश्य पूर्वांश्च-अन्ते षकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति द्वाभ्यां ।
एक-अचो बशो भष्झष्-अन्तस्य स्-ध्वोः (*८,२.३७) इति भकार-झकाराभ्यां । ।

[#५]

ज ब ग ड द श् ।
ज ब ग ड द इत्येतान्वर्णानुपदिश्य पूर्वांश्च-अन्ते शकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति षड्भिः ।
भो-भगो-अघो-अपूर्वस्य योऽशि (*८,३.१७) इत्यकारेण हशि च (*६,१.११४) इति हकारेण ।
न-इड्-वशि कृति (*७,२.८) इति वकारेण ।
झलां जश्झशि (*८,४.५३) इति जकार-झकारभ्यां ।
एक-अचो वशो भष्झष्-अन्तस्य स्-ध्व्-ओः (*८,२.३७) इति बकारेण । ।
ख फ ध ढ थ च ट त व् ।
ख फ ध ढ थ च ट त इत्येतान्वर्णानुपदिश्यान्ते वकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवत्येकेन ।
नश्-छव्य्-अप्रशान्(*८,३.७) इति धकरेण ।
ख-फ-ग्रहणं उत्तर-अर्थं । ।
क प य् ।
क प इत्येतौ वर्णावुपदिश्य पूर्वांश्च-अन्ते यकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति चतुर्भिः ।
अनुस्वारस्य ययि परसवर्णः (*८,४.५८) इति यकारेण ।
मय उञो वो वा (*८,३.३३) इति मकारेण ।
झयो होऽन्यतरस्यां (*८,४.६२) इति झकारेण ।
पुमः खय्य्-अम्परे (*८,३.६) इति खकारेण । ।

श ष स र् ।
श ष स इत्येनान्वर्णानुपदिश्य पूर्वांश्च-अन्ते रेफमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति पञ्चभिः ।
यरोऽन्य्नासिकेऽनुनासिको वा (*८,४.४५) इति यकारेण ।
झरो झरि सवर्णे (*८,४.६५)इति झकारेण ।
खरि च (*८,४.५५) इति खकारेण ।
अभ्यासे चर्च (*८,४.५४) इति चकारेण ।
शर्पूर्वाः खयः (*७,४.६१) इति शकारेण । ।
ह ल् ।
ह इत्येकं वर्णं उपदिश्य पूर्वांश्च-अन्ते लकारमितं करोति प्रत्याहार-अर्थं ।
तस्य ग्रहणं भवति षट्भिः ।
अलोऽन्त्यात्पूर्व उपधा (*१,१.६५) इति अकारेण ।
हलोऽनन्तराः संयोगः (*१,१.७)इति हकारेण ।
लोपो व्योर्वलि (*६,१.६६) इति वकारेण ।
रलो व्-य्-उपधद्-धल्-आदेः संश्च (*१,२.२६) इति रेफेण ।
झलो झलि (*८,२.२६) इति झकारेण ।
शल इग्-उपधादनिटः क्षः (*३,१.४५) इति शकारेण ।
अथ किं अर्थं उपदिष्टोऽपि हकारः पुनरुपदिश्यते? कित्त्व विकल्प-क्ष- इड्विधयो यथा स्युः इति ।
स्निहित्वा, स्नेहित्वा इत्यत्र रलो व्-य्-उपधाद्-धल्-आदेः संश्-च (*१,२.२६) इति कित्त्वं वा यथा स्याथ् ।
लिहेः अलिक्षतिति शल इग्-उपधादनिटः क्षः (*३,१.४५) इति क्षो यथा स्याथ् ।

[#६]

रुदिहि, स्वपिहि इति वलादि-लक्षण इड्यथा स्याथ् ।
अदाग्धां ।
झल्ग्रहणेषु च हकारस्य ग्रहणं यथा स्याथ् ।
यद्येवम्, ह य व र डित्यत्र तर्हि किं अर्थं उपदिश्यत्? महां हि सः; देवा हसन्ति इत्यत्र अड्-ग्रहणेषु च अश्-ग्रहणेषुच हकारस्य ग्रहणं यथा स्याथ् ।
ब्राह्मणो हसति - हशि च (*६,१.११४) इत्युत्वं यथा स्याथ् ।
एकस्मान्ङञणावटा द्वाभां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः । ।
इति । ।
इति प्रत्याहारप्रकरणं ।

---

1. <वृद्धिराद्-ऐच्># । । पाणिनीयसूत्र १,१.१ । ।

_______काशिका १,१.१:

वृद्धि-शब्दः सञ्ज्ञात्वेन विधीयते, प्रत्येकं आद्-ऐचां वर्णानां सामान्येन तद्-भावितानाम्, अतद्-भावितानां च ।
तपरकरणं ऐज्-अर्थं ताद्-अपि परः तपरः इति, खट्वैडकादिषु त्रिमात्र-चतुर्मात्र-प्रसङ्ग. निवृत्तये ।
आश्वलायनः ।
ऐतिकायनः ।
औपगवः ।
औपमन्यवः ।
शालीयः ।

मालीयः ।
वृद्धि-प्रदेशाः -- सिचि वृद्धिः परस्मैपदेषु (*७,२.१) इत्येवं आदयः । ।

---

1. <अदेङ्गुणः># । । पाणिनीयसूत्र १,१.२ । ।

_______काशिका १,१.२:

गुण-शब्दः सञ्ज्ञात्वेन विधीयते, प्रत्येकम्, अद्-एङां वर्णानां सामान्येन तद्-भावितानाम्, अतद्-भावितानां च ।
तपरकरणं त्विह सर्वार्थं ।
तरिता ।
चेता ।
स्तोता ।
जयन्ति ।
अहं पचे ।
गुण-प्रदेशाः -- मिदेर्गुणः (*७,३.८२) इत्येवं आदयः । ।

---

1. <इको गुण-वृद्धी># । । पाणिनीयसूत्र १,१.३ । ।

_______काशिका १,१.३:

परिभाषा इयं स्थानि-नियम-अर्था ।
अनियम-प्रसङ्गे नियमो विधीयते ।
वृद्धि-गुणौ स्वसञ्ज्ञया शिष्यमाणौ इकः एव स्थाने वेदितव्यौ ।
वक्ष्यति -- सार्वधातुक-अर्धधातुकयोः (*७,३.८४) अङ्गस्य गुण इति ।
स इको एव स्थाने विदितव्यः ।
नयति ।
भवति ।
वृद्धिः खल्वपि -- अकार्षीथ् ।

[#७]

अहार्षीथ् ।
अचैषीथ् ।
अनैषीथ् ।
अलावीथ् ।
अस्तावीथ् ।
गुण-वृद्धी स्वसञ्ज्ञया विधीयेते, तत्र इकः इति एतद्-उपस्थितं द्रष्टव्यं ।
किं कृतं भवति ? द्वितीयया षष्ठी प्रादुर्भाव्यते ।

मिदिमृजिपुगन्तलघऊपर्धाच्छिदृशिक्षिप्रक्षुद्रेष्वङ्गेन इग्विशेष्यते।
जुसि सार्वधातुक-आदि-गुणेषु इक-अङ्गं विशेष्यते।
मेद्यते।
अबिघयुः।
इकः इति किम्? आत्सन्ध्य्-अक्षर-व्यञ्जनानां मा भूथ्।
यानं।
ग्लायति।
उम्भिता।
पुनर्गुण-वृद्धि-ग्रहणं स्वसञ्ज्ञ्या विधाने नियम-अर्थं।
इह मा भूत्-- द्यौः, पन्थाः, सः, इमं इति।।

---

1. <न धातु-लोप आर्धधातुके>#।। पाणिनीयसूत्र १,१.४।।

_______काशिका १,१.४:

धात्व्-एकदेशो धातुः, तस्य लोपो यस्मिन्नार्धधातुके तद्-आर्धधातुकं धातु-लोपं, तत्र ये गुण-वृद्धी प्राप्नुतः, ते न भवतः।
लोलुवः।
पोपुवः।
मरीमृजः।
लोलूय-आदिभ्यो यङन्तेभ्यः पच-आद्य्-अचि विहिते यङोऽचि च (*२,४.७४) इति यङो लुकि कृते तं एव अचं आश्रित्य ये गुण-वृद्धी प्राप्ते तयोः प्रतिषेधः।
धातु-ग्रहणं किं? लूञ्, लविता।
रेडसि।
पर्णं न वेः।
अनुबन्ध-प्रत्यय-लोपे मा भूथ्।
रिषेर्-हि-स-अर्थस्य विच्प्रत्यय-लोप उदाहरणं रेटिति।
आर्धधातुके इति किं? त्रिधा बद्धो वृषभो रोरवीति इति।
सार्वधातुके मा भूथ्।
इकः इत्येव - अभाजि, रागः।
बहुव्रीहि-समाश्रयणं किं? क्नोपयति, प्रेद्धं।।

---

1. <क्ङिति च>#।। पाणिनीयसूत्र १,१.५।।

_______काशिका १,१.५:

निमित्त-सप्तम्येषा।
क्ङिन्-निमित्ते ये गुण-वृद्धी प्राप्नुतः, ते न भवतः।
चितः, चितवान्।

स्तुतः, स्तुतवान् ।
भिन्नः, भिन्नवान् ।
मृष्टः, मृष्टवान् ।
ङिति खल्वपि - चिनुतः, चिन्वन्ति ।
मृष्टः, मृजन्ति ।
गकारोऽपि अत्र चर्त्व-भूतो निर्दिश्यते ।
ग्ला-जि-स्थश्च ग्स्नुः (*३,२.१३९) जिष्णुः ।
भूष्णुः ।
इकः इत्यं एव - कामयते, लैगवायनः ।
मृजेरजादौ सङ्क्रमे विभाषा वृद्धिरिष्यते ।
सङ्-क्रमो नाम गुण-वृद्धि-प्रतिषेध-विषयः ।
परिमृजन्ति,

[#८]

परिमार्जन्ति ।
परिमृजन्तु, परिमार्जन्तु ।
लघु-उपध-गुणस्य अप्य्-अत्र प्रतिषेधः ।
अचिनवम्, असुनवं इत्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्-वचनं ज्ञापकं ङिति यत्-कार्यं तल्-लकारे ङिति न भवति इति ।।

---

काशिका १,१.६:

1. <दीधी-वेवी-इटाम्># ।। पाणिनीयसूत्र १,१.६ ।।

_______काशिका १,१.६:

दीधी-वेव्योः इटश्च ये गुण-वृद्धी प्राप्नुतः, ते न भवतः ।
आदीध्यनम्, आदीध्यकः ।
आवेव्यनम्, आवेव्यकः ।
इटः खल्वपि - कणिता श्वः ।
रणिता श्वः ।
वृद्धिरिटो न संभवति इति लघु-उपध-गुणस्य-अत्र प्रतिषेधः ।।

---

1. <हलोऽनन्तराः संयोगः># ।। पाणिनीयसूत्र १,१.७ ।।

_______काशिका १,१.७:

भिन्न-जातीयैरज्भिरव्यवहिताः श्लिष्ट-उच्चारिता हलः संयोग-सञ्ज्ञा भवन्ति ।

समुदायः सञ्ज्ञी ।
जातौ चेदं बहुवचनं ।
तेन द्वयोर्बहूनां च संयोगसञ्ज्ञा सिद्धा भवति ।
अग्निः इति ग-नौ ।
अश्वः इति श-वौ ।
कर्णः इति र-णौ ।
इन्द्रः, चन्द्रः मन्द्रः इति न-द-राः ।
उष्ट्रः, राष्ट्रम्, भ्राष्ट्रं इति ष-ट-राः ।
तिलान्स्त्र्यावपति इति न-सत-र-याः, न-त-स-त-र-या वा ।
हलः इति किं ? तितौच्छत्रं - संयोगान्तस्य लोपः (*८,२.२३) इति लोपः स्याथ् ।
अनन्तराः इति किं ? पचति पनसं - स्कोः संयोग-आद्योरन्ते च (*८,२.२९) इति लोपः स्याथ् ।
संयोग-प्रदेशाः - सम्योगान्तस्य लोपः (*८,२.२३) इत्येवं आदयः । ।

---

1. <मुख-नासिका-वचनोऽनुनासिकः># । । पाणिनीयसूत्र १,१.८ । ।

_______काशिका १,१.८:

मुख-सहिता नासिका मुख-नासिका, तया य उच्चार्यते वर्णः सोऽनुनासिक-सञ्ज्ञो भवति ।
आङोऽनुनासिकश्छन्दसि (*६,१.१२६) ।
अभ्र आं अपः ।
गभीर आं उग्रपुत्रे ।
च न आं इन्द्रः ।
मुख-ग्रहनं किं ? अनुस्वारस्य-इव हि स्याथ् ।
नासिक-अग्रहणं किं ? कचटतपानां मा भूथ् ।
अनुनासिक-प्रदेशाः - आङोऽनुनासिकश्छन्दसि (*६,१.२६) इत्येवं आदयः । ।

---

1. <तुल्य-आस्य-प्रयर्नं सवर्णम्># । । पाणिनीयसूत्र १,१.९ । ।

_______काशिका १,१.९:

तुल्य-शब्दः सदृश-पर्यायः ।
आस्ये भवम्-आस्यं ताल्व्-आदि-स्थानं ।
प्रयतनं प्रयत्नः स्पऋष्टत-आदिर्वर्ण-गुणः ।
तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसञ्ज्ञो भवति ।

[#९]
चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसं ज्ञायां आश्रीयन्ते -- स्पृष्टता, ईषत्-स्पृष्टता, संवृतता, विवृतता च इति ।
अ अ अ इति त्रयोऽकारा उदात्त-अनुदात्त-स्वरिताः प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्व-दीर्घ-प्लुत-भेदादष्टादश धा भिद्यन्ते ।

तथा इ-वर्णः, तथा उ-वर्णः, तथा ऋ-वर्णः।
ऌ-वर्णस्य दीर्घा न सन्ति, तं द्वादश-भेदं आचक्शते।
सन्ध्य्-अक्षराणां ह्रस्वा न सन्ति, तान्यपि द्वादश-प्रभेदानि।
अन्तःस्था द्विप्रभेदाः, रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च।
रेफोष्मणां सवर्णा न सन्ति।
वर्ग्यो वर्ग्येण सवर्णः।
दण्डाग्रं।
खट्वाग्रं।
आस्य-ग्रहणं किं? कचटतपानां भिन्न-स्थानानां तुल्य-प्रयत्नानां मा भूथ्।
किं च स्यात्? तप्र्ता, तप्र्तुं इत्यत्र झरो झरि सवर्णे (*८,४.६५) इति पकारस्य तकारे लोपः स्याथ्।
प्रयत्न-ग्रहणं किं? इचुयशानां तुल्य-स्थानानां भिन्न-जातीयानां मा भूथ्।
किं च स्यात्? अरुश्च्योतति इत्यत्र झरो झरि सवर्णे (*८,४.६५) इति शकारस्य चकारे लोपः स्याथ्।
ऋकार-ऌकारयोः सवर्णस्ञ्ज्ञा वक्तव्या।
होत्ऌकारः।
होतृकारः।
उभयोः ऋवर्णस्य ऌवर्णस्य च आन्तरतमः सवर्णो दीर्घो नास्ति इति ऋकार एव दीर्घो भवति।
सवर्ण-प्रदेशाः - अकः सवर्णे दीर्घः (*६,१.१०१) इत्येवं आदयः।।

---

1. <न अज्-झलौ>#।। पाणिनीयसूत्र १,१.१०।।

_______काशिका १,१.१०:

अच्च हल्च, अज्-झलौ।
तुल्य-आस्य-प्रयत्नावपि अज्-झलौ परस्परं सवर्णसञ्ज्ञौ न भवतः।
अवर्ण-हकारौ दण्डहस्तः, इवर्ण-शकारौ-दधि शीतम्, सवर्णदीर्घत्वं न भवति।
वैपाशो मत्स्यः, आनडुहं चर्म इति यस्य-इति च (*६,४.१४८) इति लोपो न भवति।।

---

[#१०]

1. <ईद्-ऊद्-एद्-द्विवचनं प्रगृह्यम्>#।। पाणिनीयसूत्र १,१.११।।

_______काशिका १,१.११:

ईतूतेतित्येवम्-अन्तं द्विवचनं शब्द-रूपं प्रग्र्ह्य-सञ्ज्ञं भवति।
अग्नी इति।
वायु इति।
माले इति।
पचेते इति।

ईद्-ऊदेतिति किं ? वृक्षावत्र ।
प्लक्षावत्र ।
द्विवचनं इति किं ? कुमार्य्-अत्र ।
किशोर्य्-अत्र ।
तपरकरणं असंदेह-अर्थं ।
प्रगृह्य-प्रदेशाः - प्लुत-प्रगृह्या अचि नित्यं (*६,१.१२५) इत्येवं आदयः ।
ईद्-आदीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः ।
मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
दम्पतीव ।
जम्पतीव ।
रोदसीव । ।

---

1. <अदसो मात्># । । पाणिनीयसूत्र १,१.१२ । ।

_______काशिका १,१.१२:
अदसः सम्बधी यो मकारस्-तस्मात्परे ईद्-ऊदेतः प्रग्हृय-सञ्ज्ञा भवन्ति ।
अमी अत्र ।
अमी आसते ।
अमू अत्र ।
अमू आसाते ।
एकारस्य उदाहरणं न अस्ति ।
अदसः इति किम्? शम्यत्र ।
दाडिम्यत्र ।
माितिति किं ? अमुकेऽत्र । ।

---

1. <शे># । । पाणिनीयसूत्र १,१.१३ । ।

_______काशिका १,१.१३:

शे इत्येतत्प्रगृह्य-सञ्ज्ञं भवति ।
किम्-इदं शे इति ? सुपां आदेशश्छन्दसि ।
न युष्मे वाजबन्धवः ।
अस्मे इन्द्रा-बृहस्पती ।
युष्मे इति ।
अस्मे इति ।
त्वे रायः ।
मे रायः ।
त्वे इति ।

मे इति ।
छान्दसं एतदेव-इकं उदाहरणं - अस्मे इन्द्रा-बृहस्पती इति ।
तत्र तथा पाठाथ् ।
इतरत्तु लौकिकं अनुकरणं - युश्मे इति, अस्मे इति, त्वे इति, मे इति । ।

---

1. <निपात एक-अज्-अन्-आङ्># । । पाणिनीयसूत्र १,१.१४ । ।

_______काशिका १,१.१४:

एकश्-च असावच्-च एकाच्, निपातो य एकाचाङ्-वर्जितः स प्रगृह्य-सञ्ज्ञो भवति ।
अ अपेहि ।
इ इन्द्रं पश्य ।
उ उत्तिश्ठ ।
आ एवं नु मन्यसे ।
आ एवं किल तथ् ।
निपातः इति किं ? चकारत्र ।
जहारात्र ।
एकाचिति किं ? प्राग्नये वाचमीरय ।
अनाङिति किं ? आ उदकान्तात्, ओदकान्ताथ् ।
ईषद्-अर्थे त्रिया-योगे मर्या-अदाभिविधौ च यः ।
एतम्-आतं ङितं विद्याद्वाक्य-स्मरणयोर्-अङित् । ।

---

[#११]

1. <ओत्># । । पाणिनीयसूत्र १,१.१५ । ।

_______काशिका १,१.१५:

निपातः इति वर्तते ।
तस्य-उकारेण तदन्त-विधिः ।
ओदन्तो यो निपातः स प्रगृह्य-सञ्ज्ञो भवति ।
आहो इति ।
उताहो इति । ।

---

1. <सम्बुद्धौ शाकल्यस्य-इतावनार्षे># । । पाणिनीयसूत्र १,१.१६ । ।

_______काशिका १,१.१६:

ओतिति वर्तते ।
सम्बुद्धि-निमित्तो य ओकारः स शाकल्यस्य आचार्यसय्मतेन प्नगृह्य-सञ्ज्ञो भवति, इति-शब्दे अनार्षे अवैदिके परतः ।
वायो इति, वायव्-इति ।
भानो इति, भानव्-इति ।
सम्बुद्धौ इति किं ? गवित्ययम्-आह ।
अत्र अनुकार्य-अनुकरणयोः भेदस्य अविवक्षिततत्वात्, असत्य्-अर्थवत्त्वे विभक्तिर्-न भवति ।
शाकल्य-ग्रहणं विभाषा-अर्थं ।
इतौ इति किं ? वायोऽत्र ।
अनार्षे इति किं ? एता गा ब्रहम-बन्ध इत्यब्रवीत् । ।

---

1. <उञः># । । पाणिनीयसूत्र १,१.१७ । ।

_______काशिका १,१.१७:

शाकल्यस्य-इतौ अनार्षे इति वर्तते ।
उञः प्रगृह्य-सञ्ज्ञा भवति इतौ शाकल्यस्य आचार्यस्य मतेन ।
शाकल्यस्य इति विभाष-अर्थं ।
उ इति, विति । ।

---

1. <ऊं># । । पाणिनीयसूत्र १,१.१८ । ।

_______काशिका १,१.१८:

उञः इति वर्तते ।
उञः इताव्-अनार्षे ऊं इत्ययम्-आदेशो भवति दीर्घोऽनुनासिकश्च, शाक्ल्यस्य मतेन प्रगृह्य-सञ्ज्ञकश्च ।
शाकल्यस्य ग्रहणं विभाषा-अर्थं इह अप्यनुवर्तते ।
तेन त्रीणि रूपाणि भवन्ति - उ इति, विति, ऊं इति । ।

---

1. <ईद्-ऊतौ च सप्तम्य्-अर्थे># । । पाणिनीयसूत्र १,१.१९ । ।

_______काशिका १,१.१९:

शाकल्यस्य-इताव्-अनार्शे इति निवृत्तं ।
ईदन्तं ऊदन्तं च शब्द-रूपं सप्तम्य्-अर्थे वर्तमानं प्रगृह्य-सञ्ज्ञं भवति ।
अध्यस्यां मामकी तनू ।
मामक्यां तन्वां इति प्राप्ते, मांक्यां मामकी इति, तन्वां तनू इति ।
सोमो गौरी अधि श्रितः ।
ईदूतौ इति किं ? प्रियः सूर्ये प्रियो अग्ना भवाति ।
अग्नि-शब्दात्परस्याः सप्तम्याः डादेशः ।
सप्तमी-ग्रहणं किं ? धीती, मती, सुष्टुती - धीत्या, मत्या, सुष्टुत्या इति प्राप्ते ।
अर्थ-ग्रहणं किं ? वा-अप्यश्वः ।
नद्यातिः ।
तपरकरणं असन्देह-अर्थं ।

[#१२]

ईद्-ऊतौ सप्तमी-इत्येव लुप्तेऽर्थ-ग्रहणाद्भवेथ् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते । ।१ । ।

वचनाद्य्-अत्र दीर्घत्वं तत्र अपि सरसी यदि ।
ज्ञापकं स्यात्तद्-अन्तत्वे मा वा पूर्वपदस्य भूथ् । ।२ । ।

---

1. <दा-धा घ्व्-अदाप्># । । पाणिनीयसूत्र १,१.२० । ।

_______काशिका १,१.२०:

दा-रूपाश्चत्वारो धातवः, धा-रूपौ च द्वौ दाब्दैपौ वर्जयित्वा घु-सञ्ज्ञका भवन्ति ।
डुदाञ्- प्रणिददाति ।
दाण्- प्रणिदाता ।
दो - प्रणिद्यति ।
देङ्- प्रणिदयते ।
डुधाञ्- प्रणिदधाति ।
धेट्- प्रणिधयति वत्सो मातरं ।
अदापिति किं ? दाप्लवने - दातं बर्हिः ।
दैप्शोधने - अवदातं मुखं ।
घु-प्रदेशाः - घु-मा-स्था-गा-पा-जहाति-सां हलि (*६,४.६६) इत्येवमादयः । ।

---

1. <आद्यन्तवदेकस्मिन्># । । पाणिनीयसूत्र १,१.२१ । ।

_______काशिका १,१.२१:

असहायसयाद्यन्त-उपदिष्टानि कार्याणि न सिध्यन्ति इति अयम्-अतिदेश आरभ्यते ।
सप्तम्य्-अर्थे वतिः ।
आदाव्-इव अन्ते इव एकस्मिन्न्-अपि कार्यं भवति ।
यथा कर्तव्यं इत्यत्र प्रत्यय-आद्य्-उदात्तत्वं भवति, एवं औपगवं इत्यत्र अपि यथा स्याथ् ।
यथा वृक्षाभ्यां इत्यत्र अतोऽङ्गस्य दीर्घत्वं एवं आभ्याम्, इत्यत्र अपि यथा स्याथ् ।
एकस्मिन्न्-इति किं ।
सभासन्नयने भवः साभासन्नयनः, आकारं आश्रित्य वृद्ध-सञ्ज्ञा न भवति । ।

---

1. <तरप्-तमपौ घः># । । पाणिनीयसूत्र १,१.२२ । ।

_______काशिका १,१.२२:

तरप्तमपित्येतौ प्रत्ययौ घ-सञ्ज्ञौ भवतः ।
कुमारितरा ।
कुमरितमा ।
ब्राह्मणितरा ।
ब्राह्मणितमा ।
घ-प्रदेशाः - घ-रूप-कल्प-चेलड्-ब्रुव-गोत्र-मत-हतेषु ङ्योऽनेकाचो ह्रस्वः (*६,३.४३) इत्येवं आदयः । ।

---

1. <बहु-गण-वतु-डति सङ्ख्या># । । पाणिनीयसूत्र १,१.२३ । ।

_______काशिका १,१.२३:

बहु गण वतु इत्येत सङ्ख्या-सञ्ज्ञा भवन्ति ।
बहुकृत्वः ।
बहुधा ।
बहुकः ।
बहुशः ।
गणकृत्वः ।
गणधा ।
गणकः ।
गणशः ।
तावत्कृत्वः ।

तावद्धा।
तावत्कः।
तावच्छः।
कतिकृत्वः।
कतिधा।
कतिकः।
कतिशः।
बहु-गण-शब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति, सङ्ख्या-वाचिनोरेव।
भूर्यादीनां निवृत्त्य्-अर्थं सङ्ख्या-सञ्ज्ञा विधीयते।

[#१३]

अर्ध-पूर्व-पदश्च पूरण-प्रत्ययान्तः सङ्ख्या-सञ्ज्ञो भवति इति वक्तव्यं समासकन्विध्य्-अर्थं।
अर्ध-पञ्चम-शूर्पः।
अर्धं पञ्चमं येशां इति बहुव्रीहौ कृते अर्ध-पञ्चमैः शूर्पैः क्रीतः।
तद्धित-अर्थ-इति समासः।
तत्र दिक्-सङ्ख्ये सञ्ज्ञायां (*२,१.५०) इत्यनुवृत्तेस्ततः सङ्ख्या-पूर्वस्य द्विगु-सञ्ज्ञायां शूर्पादञन्यतरस्यां (*५,१.२६) इति अञ्ठञ्च।
अध्यर्ध-पूर्व-द्विगोर्लुग्-असञ्ज्ञायां (*५,१.२८) इति लुक्।
अर्ध-पञ्चमकः।
सङ्ख्या-प्रदेशाः-सङ्ख्या वंश्येन (*२,१.१९) इत्येवं आदयः।।

---

[#१२]

1. <ष्ण-अन्ता षट्>#।। पाणिनीयसूत्र १,१.२४।।

_______काशिका १,१.२४:

स्त्री-लिङ्ग-निर्देशात्सङ्ख्य इति सम्बध्यते।

[#१३]

ष-कारान्ता न-कारान्ता च या सङ्ख्या सा षट्-सञ्ज्ञा भवति।
ष-कारान्ता तावत्--षट्तिष्ठन्ति।
षट्प्श्ये।
न-कारान्तः-पञ्च।
सप्त।
नव।
दस।
अन्त-ग्रहणं औपदेशिक-अर्थं।
तेन-इह न भवति - शतानि, सहस्राणि।
अष्टानां इत्यत्र नुड्भवति।
षट्-प्रदेशाः--षड्भ्यो लुक्(*७,१.२२) इत्येवं आदयः।।

---

1. <डति च># । । पाणिनीयसूत्र १,१.२५ । ।

_______काशिका १,१.२५:

डत्यन्ता या सङ्ख्या सा षट्-सञ्ज्ञा भवति ।
कति तिष्ठन्ति ।
कति पश्य । ।

---

1. <क्त-क्तवतू निष्ठा># । । पाणिनीयसूत्र १,१.२६ । ।

_______काशिका १,१.२६:

क्तश्च क्तवतुश्च क्त-क्तवतू प्रत्ययौ निश्ठा-सञ्ज्ञौ भवतः ।
कृतः ।
कृतवान् ।
भुक्तः ।
भुक्तवान् ।
क-कारः कित्-कार्य-अर्थः ।
उकारः उगित्-कार्य-अर्थः ।
निष्ठा-प्रदेशाः-- श्वीदितो निष्ठायां (*७,२.१४) इत्येवमादयः । ।

---

1. <सर्व-आदीनि सर्वनामानि># । । पाणिनीयसूत्र १,१.२७ । ।

_______काशिका १,१.२७:

सर्व-शब्दः आदिर्येषां तानि-इमानि सर्व-अदीनि सर्वनाम-सञ्ज्ञानि भवन्ति ।
सर्वः, सर्वौ, सर्वे ।
सर्वस्मै ।
सर्वस्माथ् ।
सर्वेषां ।
सर्वस्मिन् ।
सर्वकः ।
विश्वः, विश्वौ, विस्वे ।

विश्वस्मै ।
विश्वस्माथ् ।
विश्वेषां ।
विश्वस्मिन् ।
विश्वकः ।

[#१४]

उभ ।
उभय ।
उभ-शब्दस्य सर्वनामत्वे प्रयोजनम्-- सर्वनाम्नस्-तृतीय च (*२,३.२७) इति ।
उभाभ्यां हेतुभ्यां वसति, उभयोः हेत्वोः वसति ।
उभये ।
उभयस्मै ।
उभयस्माथ् ।
उभ्येषां ।
उभयस्मिन् ।
डतर, डतम ।
कतर, कतम ।
कतरस्मै, कतमस्मै ।
इतर ।
अन्य ।
अन्यतर ।
इतरस्मै ।
अन्यस्मै ।
अन्यतरसमै ।
त्व-शब्दोऽन्य-वाची स्वर-भेदाद्द्विः पठितः ।
एकः उदात्तः ।
द्वितीयोऽनुदात्तः ।
केचित्तकारान्तमेकं पठन्ति ।
त्व त्वतिति द्वावपि च अनुदाताउ इति स्मरन्ति ।
नेम--नेमस्मै ।
वक्ष्यमाणेन जसि विभाषा भवति ।
नेमे, नेमाः इति ।
सम--समस्मै ।
कथं यथा-सङ्ख्यं अनुदेशः समानां (*१,३.१०), समे देशे यजेत इति ।
समस्य सर्व-शब्द-पर्यायस्य सर्वनाम-स्ञ्ज्ञा इष्य्ते, न सर्वत्र ।
सिम--सिमस्मै ।
पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधराणि व्यवस्थायां असञ्ज्ञायां (*१,१.३४) ।
स्वं अञ्ज्ञाति-धन-आख्यां (*१,१.३५) ।
अन्तरं बहिर्योगोप्संव्यानयोः (*१,१.३६) ।
त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किं ।
सर्वादिः ।
सर्वनाम-प्रदेशाः-- सर्वनाम्नः स्मै (*७,१.१४) इत्येवं आदयः । ।

---

1. <विभाषा दिक्षमासे बहुव्रीहौ># । । पाणिनीयसूत्र १,१.२८ । ।

_______काशिका १,१.२८:

न बहुव्रीहौ (*१,१.२९) इति प्रतिषेधं वक्ष्यति ।
तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभा-षेयं आरभ्यते ।
दिशां समासः दिक्षमासः ।
दिग्-उपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनाम-सञ्ज्ञानि भवन्ति ।
उत्तर-पूर्वस्यै, उत्तर-पूर्वायै ।
दिक्षिण-पूर्वस्यै, दक्षिण-पूर्वायै ।
दिग्-ग्रहणं किं ? न बहुव्रीहौ (*१,१.२९) इति प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते क्व विभाषा, क्व प्रतिषेधः इति ।
दिग्-ग्रहणे पुनः क्रियमाणे ज्ञायते दिग्-उपदिष्ट-समासे विभाषा, अन्यत्र प्रतिषेधः इति ।
समास-ग्रहणं किं ? समास एव यो बहुव्रीहिः, तत्र विभाषा यथा स्याथ् ।
बहुव्रीहिवद्भावेन यो बहुव्रीहिः, तत्र मा भूथ् ।
दक्षिण-दक्षिणस्यै देहि ।
बहुव्रीहौ इति किं ? द्वन्द्वे विभाषा मा भूथ् ।
दक्षिण-उत्तर-पूर्वाणां इति द्वन्द्वे च (*१,१.३२) इत्नित्यं प्रतिषेधो भवति । ।

---

[#१५]

1. <न बहुव्रीहौ># । । पाणिनीयसूत्र १,१.२९ । ।

_______काशिका १,१.२९:

सर्वनाम-सञ्ज्ञायां तद्-अन्त-विधेरभ्युपगमाद्बहुव्रीहेरपि सर्व-आद्य्-अन्तसय्सञ्ज्ञा स्यातिति प्रतिषेध आरभ्यते ।
बहुव्रीहौ समासे सर्वादीनि सर्वनाम-सञ्ज्ञानि न भवन्ति ।
प्रियविश्वाय ।
प्रियोभ्याय ।
द्व्यन्याय ।
त्र्यन्याय ।
इह च, त्वत्-कपितृकः, मत्-कपितृकः इत्य्-अकज्न भवति ।
बहुव्रीहौ इति वर्तमाने पुनर्-बहुव्रीहि-ग्रहणं भूत-पूर्वमात्रेऽपि प्रतिषेधो यथा स्यात्, वस्त्रान्तर-वसनान्तराः इति । ।

---

1. <तृतीया-समासे># । । पाणिनीयसूत्र १,१.३० । ।

_______काशिका १,१.३०:

तृतीया-समासे सर्व-आदीनि सर्वनाम-सञ्ज्ञानि न भवन्ति ।

मास-पूर्वाय ।
संवत्सर-पूर्वाय ।
द्व्यह-पूर्वाय ।
त्र्यह-पूर्वाय ।
समासे इति वर्तमाने पुनः सम्मसग्रहणं तृतीया-समास-अर्थ-वाक्येऽपि प्रतिषेधो यथा स्याथ् ।
मासेन पूर्वाय ।
पूर्व-सदृश-सम-ऊन-अर्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः (*२,१.३१) इति तृतीय-असमासं प्रतिपदं वक्ष्यति, तस्य-इदं ग्रहणं ।
न यस्य कस्यचित्तृतीया-समासस्य ।
कर्तृ करणे कृता बहुलं (*२,१.३२) इति-त्वयका Kऋतम्, मयका कृतं । ।

---

1. <द्वन्द्वे च># । । पाणिनीयसूत्र १,१.३१ । ।

_______काशिका १,१.३१:

द्वन्द्वे च समासे सर्वादीनि सर्वनाम-सञ्ज्ञानि न भवन्ति ।
पूर्व-अपराणां ।
कतर-कतमानां । ।

---

1. <विभाषा जसि># । । पाणिनीयसूत्र १,१.३२ । ।

_______काशिका १,१.३२:

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषा आरब्यते ।
द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनाम-सञ्ज्ञानि न भवन्ति ।
कतरकतमे, कतरकतमाः ।
जसः कार्यं प्रति विभाषा, अकज्झि न भवति - कतरकतमकाः । ।

---

[#१६]

1. <प्रथम-चरम-तय-अल्प-अर्ध-कतिपय-नेमाश्च># । । पाणिनीयसूत्र १,१.३३ । ।

_______काशिका १,१.३३:

विभाषा जसि (*१,१.३२) इति वर्तते ।
द्वन्द्वे इति निवृत्तं ।
प्रथम चरम तय अल्प अर्ध कतिपय नेम इत्येते जसि विभाषा सर्वनाम-सञ्ज्ञा भवन्ति ।
प्रथमे, प्रथमाः ।
चरमे, चरमाः ।
द्वितये, द्वितयाः ।
अल्पे, अल्पाः ।
अर्धे, अर्धाः ।
कतिपये, कतिपयः ।
नेमे, नेमाः ।
तय इति तयप्प्रत्ययः ।
शिष्टानि प्रातिपदिकानि ।
तत्र नेम इति सर्वादिषु पठ्यते, तस्य प्राप्ते विभषा, अन्येषां अप्राप्ते ।
उभय-शब्दस्य तयप्-प्रत्यय-अन्तस्य गने पाठान्नित्या सर्वनाम-सञ्ज्ञा इह अपि जस्कार्यं प्रति विभाषा ।
काकचोर्यथा-योगं वृत्तिः । ।

---

1. <पूर्व-पर-अवरदक्षिण-उत्तर-अपर-अधराणि व्यवस्थायां असञ्ज्ञायाम्># । । पाणिनीयसूत्र १,१.३४ । ।

_______काशिका १,१.३४:
पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्य्-एषां गणे पाठात्पूर्वेण नित्यायां सर्वनाम-सञ्ज्ञायां प्राप्तायां जसि विभाषा आरभ्यते ।
पूर्वादीनि विभषा जसि सर्वनाम-सञ्ज्ञानि भवन्ति व्यवस्थायां असञ्ज्ञायां ।
स्वाभिधेय-अपेक्षावधिनियमो व्यवस्था ।
पूर्वे, पूर्वाः ।
परे, पराः ।
अवरे, अवराः ।
दक्ष्णे, दक्ष्णाः ।
उत्तरे, उत्तराः ।
अपरे, अपराः ।
अधरे, अधरः ।
व्यवस्थायां इति किं ? दक्षिणा इमे गाथकाः ।
प्रवीणाः इत्यर्थः ।
असञ्ज्ञायां इति किं ? उत्तराः कुरवः ।
सत्यां एव व्यवस्थायां इयं तेषां सञ्ज्ञा । ।

---

1. <स्वं अज्ञाति-धन-आख्यायाम्># । । पाणिनीयसूत्र १,१.३५ । ।

_______काशिका १,१.३५:

अत्र अपि नित्या सर्वनाम-सञ्ज्ञा प्राप्ता जसि विभाष्यते ।
स्वं इत्येतच्-छब्द-रूपं जसि विभाषा सर्वनाम-सञ्ज्ञं भवति , न चेज्ज्ञातिधनयोः सञ्ज्ञारूपेण वर्तते ।
स्वे पुत्राः, स्वाः पुत्राः ।
स्वे गावः, स्वा गावः ।
आत्मीयाः इत्यर्थः ।
ज्ञाति-प्रतिषेधः इति किं ? धूमायन्त इव अश्लिष्टाः प्रज्वलन्ति इव संहताः ।
उल्मुकानि इव मेऽमी स्वा ज्ञातयो भरतर्षभ । ।

अधनाख्यायां इति किं ? प्रभूताः स्वा न दीयन्ते, प्रभूतः स्वा न भुज्यन्ते ।
प्रभूतानि धनानि इत्यर्थः । ।

---

1. <अन्तरं बहिर्योग-उपसंव्यानयोः># । । पाणिनीयसूत्र १,१.३६ । ।

_______काशिका १,१.३६:

अत्र अपि पूर्वेण नित्या सर्वनाम-सञ्ज्ञा प्राप्ता सा जसि विभाष्यते ।
अन्तरं इत्येतच्-छब्द-रूपं विभाषा जसि सर्वनाम-सञ्ज्ञं भवति बहिर्योगे उपसंव्याने च गम्यमाने ।
अन्तरे गृहाः, अन्तराः गृहाः ।
नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते ।

[#१७]

उपसंव्याने--अन्तरे शाटकाः, अन्तराः शाटकाः ।
उपसंव्यानं परिधानीयं उच्यते, न प्रावरणीयं ।
बहिर्योग-उपसंव्यानयोः इति किं ? अनयोः ग्रामयोरन्तरे तापसः प्रतिवसति ।
तस्मिन्नन्तरे शीतान्युदकानि ।
मध्यप्रदेश-वचनोऽन्तर-शब्दः ।
गण-सूत्रस्य च-इदं प्रत्युदाहरणं ।
अपुरि इति वक्तव्यं ।
अन्तरायां पुरि वसति ।
विभाषा-प्रकरणे तीयस्य वा ङित्सु सर्वनाम-सञ्ज्ञा इत्युपसंख्यानं ।
द्वितीयस्मै, द्वितीयाय ।
तृतीयस्मै, तृतीयाय । ।

---

1. <स्वरादि-निपातं अव्ययम्># । । पाणिनीयसूत्र १,१.३७ । ।

_______काशिका १,१.३७:

स्वरादीनि शब्द-रूपाणि निपाताश्च अव्यय-सञ्ज्ञानि भवन्ति ।
स्वर्, अन्तर्, प्रातर्, एते अन्त-उदात्ताः पठ्यन्ते ।
पुनराद्य्-उदात्तः ।
सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्, ऋते, युगपत्, पृथक्, एतेऽपि सनुतर्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते ।
ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हेतौ, अद्धा, इद्धा, सामि, एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते ।
वत्-वदन्तं अव्यय-सञ्ज्ञं भवति ।
ब्राह्मणवथ् ।
क्षत्रियवथ् ।
सन्, सनात्, सनत्, तिरस्, एते आद्य्-उदात्ताः पठ्यन्ते ।
अन्तरा-अयमन्तोदात्तः ।
अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या ।
क्त्वातोसुङ्कसुनः, कृन्म-कारान्तः, सन्ध्य्-अक्षरान्तः, अव्ययीभावश्च ।
पुरा, मिथो, मिथस्, प्रबाहुकम्, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, समम, नमस्, हिरुक्, तसिलादिः तद्धित एधाच्पर्यन्तः, शस्तसी, कृत्वसुच्, सुच्, आस्-थालौ, च्व्यर्थाश्च, अम्, आम्, प्रतान्, प्रषान्, स्वरादिः ।
निपाता वक्ष्यन्ते--प्राग्-रीश्वरान्-निपाताः (*१,४.५६) इति ।
च, वा, ह, अह, एव, एवं इत्य्-आदयः ।
अव्यय-प्रदेशाः-- अव्ययादाप्-सुपः (*२,४.८२) इत्येवं आदयः ।
अव्ययं इत्यन्वर्थ-सञ्ज्ञा ।

[#१८]
सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तद्-अव्ययं ।।

---

1. <तद्धितश्च असर्व-विभक्तिः># ।। पाणिनीयसूत्र १,१.३८ ।।

_______काशिका १,१.३८:

तद्धितान्तः शब्दोऽसर्व-विभक्तिः अव्यय-सञ्ज्ञो भवति ।
यस्मात्न सर्व-विभक्तेरुत्पत्तिः सोऽसर्व-विभक्तिः ।
ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा ।
तद्धितः इति किं ? एकः, द्वौ, बहवः ।
असर्व-विभक्तिः इति किं ? औपगवः, औपगवौ, औपगवाः ।।

---

1. <कृन्-म्-एज्-अन्तः># ।। पाणिनीयसूत्र १,१.३९ ।।

_______काशिका १,१.३९:

कृद्यो म-कार-अन्तः, एज्-अन्तश्च तद्-अन्तं शब्द-रूपं अव्यय-सञ्ज्ञं भवति ।
स्वादुङ्-कारं भुङ्क्ते ।
सम्पन्नङ्-कारं भुङ्क्ते ।
लवणङ्-कारं भुङ्क्ते ।
एजन्तः-वक्षे रायः ।
ता वामेषे रथानां ।
ऋत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यं दृशे ।
वक्षे इति वचेः तुम्-अर्थे से-सेन्-असे (*३,४.९) इति से-प्रत्यये कुत्वे षत्वे च कृते रूपं ।
एषे इति इणः से-प्रत्यये गुणे षत्वे च कृते रूपं ।
जीवसे इति जीवेः असे प्रत्यये रूपं ।
दृशे इति दृशेः केन्-प्रत्ययो निपात्यते - दृशे विख्ये च (*३,४.११) इति ।
अन्त-ग्रहणं औपदेशिक-प्रतिपत्त्य्-अर्थं ।
इह मा भूत्- आधये, चिकीर्षवे, कुम्भ-कारेभ्यः इति । ।

---

1. <क्त्वा-तोसुन्-कसुनः># । । पाणिनीयसूत्र १,१.४० । ।

_______काशिका १,१.४०:

क्त्वा, तोसुन्, कसुन्, इत्येवं अन्तं शब्द-रूपं अव्यय-सञ्ज्ञं भवति ।
कृत्वा ।
हृत्वा ।
तोसुन्-- व्युष्टायां पुरा सूर्यस्योदेतो राधेयः ।
पुरा वत्सानामपाकर्त्तोः ।
भाव-लक्षणे स्था-इण्-कृञ्-वदि (*३,४.१६) इति इणः, कृञश्च तोसुन्प्रत्ययः ।
कसुन्-- सृपि-तृदोः कसुन्(*३,४.१७) ।
पुरा क्रूरस्य विसृपो विरप्शिन् ।
पुरा जत्रुभ्य आतृदः । ।

---

1. <अव्ययी-भावश्च># । । पाणिनीयसूत्र १,१.४१ । ।

_______काशिका १,१.४१:

अव्ययी-भाव-समासोऽव्यय-सञ्ज्ञो भवति ।
किं प्रयोजनं ? लुङ्-मुख-स्वर-उपचाराः ।
लुक्- उपाग्नि, प्रत्यग्नि शलभाः पतन्ति ।
मुख-स्वरः- उपाग्निमुखः, प्रत्यग्निमुखः ।

मुखं स्व-अङ्गं (*६,२.१६७) इत्युत्तरपद-अन्त-उदात्तत्वं प्राप्तम्, न-अव्यय-दिक्-शब्द (*६,२.१६८) इति प्रतिषिध्यते ।
तस्मिन्प्रतिषिद्धे पूर्वपद-प्रकृति-स्वर एव भवति ।
[#१९]

उपचारः - उपपयः-कारः, उपपयः-कामः ।
विसर्जनीय-स्थानिकस्य स-कारस्य उपचारः इति सञ्ज्ञा ।
तत्र अव्ययीभावस्य अव्ययत्वे अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णी-ष्वनव्ययस्य (*८,३.४६) इति पर्युदासः सिद्धो भवति ।
सर्वं इदं काण्डं स्वर-अदावपि पठ्यते ।
पुनर्वचनं अनित्यत्वज्ञापन-अर्थं ।
तेन अयं कार्य-नियमः सिद्धो भवति ।
इह च -- पुरा सूर्यस्योदेतोर्-आधेयः, पुरा क्रूरस्य विसृपो विरप्शिनिति न ल-उ-उक-अव्यय-निष्ठा-खल्-अर्थ-तृनां (*२,३.६९) इति षष्ठी-प्रतिषेधो न भवति ।।

---

1. <शि सर्वनाम-स्थानम्># ।। पाणिनीयसूत्र १,१.४२ ।।

_______काशिका १,१.४२:

शि इत्येतत्सर्वनाम-स्थानसञ्ज्ञं भवति ।
किं इदं शि इति ? जश्-शसोः षिः (*७,१.२०) इति शिः आदेशः ।
कुण्डानि तिष्ठन्ति ।
कुण्डानि पश्य ।
दधीनि ।
मधूनि ।
त्रपूणि ।
जतूनि ।
सर्वनाम-स्थान-प्रदेशाः-- सर्वनाम-स्थाने च असम्बुद्धौ (*६,४.८) इत्येवं आदयः ।।

---

1. <सुडनपुंसकस्य># ।। पाणिनीयसूत्र १,१.४३ ।।

_______काशिका १,१.४३:

सुटिति पञ्च वचनानि सर्वनाम-स्थान-सञ्ज्ञानि भवन्ति नपुंसकादन्यत्र ।
नपुंसके न विधिः, न प्रतिषेधः ।
तेन जसः शेः सर्वनाम-स्थान-सञ्ज्ञा पूर्वेण भवत्येव ।
राजा, राजानौ, राजानः ।
राजानम्, राजानौ ।
सुटिति किं ? राज्ञः पश्य ।
अनपुंसकस्य इति किं ? सामनी, वेमनी ।।

---

1. <न वा-इति विभाषा># । । पाणिनीयसूत्र १,१.४४ । ।

_______काशिका १,१.४४:

न इति प्रतिषेधः, वा इति विकल्पः ।
तयोः प्रतिषेध-विकल्पयोः विभाषा इति सञ्ज्ञा भवति ।
इति-करणोऽर्थ-निर्देश-अर्थः ।
विभाषा-प्रदेशेषु प्रतिषेध-विकल्पावुपतिष्ठेते ।
तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते ।
उभयत्र-विभाषाः प्रयोजयन्ति ।
विभाषा श्वेः (*६,१.३०) शुशाव, शिश्वाय ।
शुशुवतुः, शिश्वियतुः ।
विभाषा-प्रदेशाः - विभाषा श्वेः (*६,१.३०) इत्येवं आदयः । ।

---

1. <इग्-यणः सम्प्रसारणम्># । । पाणिनीयसूत्र १,१.४५ । ।

_______काशिका १,१.४५:

इक्यो यणः स्थाने भूतो भावी वा तस्य संप्रसारणं इत्येषा सञ्ज्ञा भवति ।
यज्--इ ष्टं ।
वप्-- उप्तं ।
ग्रह -- गृहीतं ।
केचिदुभयथा सूत्रं इदं व्याचक्षते वाक्य-अर्थः सञ्ज्ञी, वर्णश्च इति ।
इग्-यणः यो वाक्य-अर्थः स्थान्य्-आदेश-सम्बन्ध-लक्षणः स सम्प्रसारण-सञ्ज्ञो भवति, यण्-स्थानिक इग्-वर्णः स सम्प्रसारण-सञ्ज्ञो भवति इति ।
तत्र विधौ वाक्य-अर्थ उपतिष्ठते ष्यङः सम्प्रसारणं पुत्र-पत्योस्तत्पुरुषे (*६,१.१३) वसोः सम्प्रसारणं (*६,४.१३१) इति ।

[#२०]

अनुवादे वर्णः सम्प्रसारणाच्च (*६,१.१०८) इति ।
सङ्ख्यात-अनुदेशादिह न भवति - अधितरां इति ।
द्युभ्यां इत्यत्र दिव उत्(*६,१.१३१) इति तपरकरणाद्दीर्घो न भवति ।
सम्प्रसारण-प्रदेशाः - वसोः सम्प्रसारणं (*६,४.१३१) इत्येवं आदयः । ।
आद्यन्तौ ट-कितौ (*१,१.४६) आदिः टित्भवति, अन्तः कित्भवति षस्ठी-निर्दिष्टस्य ।
लविता ।
मुण्डो भीषयते ।
टित्प्रदेशाः - आर्धधातुकस्य+इड्वल्-आदेः (*७,२.३५) इत्येवं आदयः ।

कित्-प्रदेशाः - भियो हेतुभये शुक्(*७,३.४०) इत्येवं आदयः । ।
मिदचोऽन्त्यात्परः (*१,१.४७) ।
अचः इति निर्धारने षष्ठी ।
जातौ च+इदं एकवचनं ।
अचां संनिविष्टानां अन्त्यादचः परो मित्भवति ।
स्थानेयोग - प्रत्यय परत्वस्य अयं अपवादः ।
विरुणद्धि ।
मुञ्चति ।
पयांसि ।
मित्प्रदेशाः - रुदः-आदिभ्यः श्नं (*३,१.७८) इत्येवं आदयः ।
मस्जेरन्त्यात्पूर्वं नुम्-अम्-इच्छन्त्यनुषङ्ग-संयोग-आदि-लोप-अर्थं ।
मग्नः ।
मग्नवान् ।
मङ्क्ता ।
मङ्क्तुं । ।
एच इग्-घ्रस्व-आदेशे (*१,१.४८) ।
एचो ह्रस्व-आदेशे कर्तव्ये इकेव ह्रस्वो भवति, न अन्यः ।
रै-अतिरि ।
नौ-अतिनु ।
गो-उप गु ।
एचः इति किं ? अतिखट्वः ।
अतिमालः ।
ह्रस्व-आदेशे इति किं ? दे३वदत्त ।
देवदत्३त । ।
षष्ठी स्थाने-योगा (*१,१.४९) ।
परिभाशा इयं योग-नियम-अर्था ।
इह शास्त्रे या षष्ठी अनियत-योगा श्रूयते, सा स्थाने-योगा-इव भवति, न-अन्य-योगा ।
स्थाने-योगस्य निमित्त-भूते सति सा प्रतिपत्तव्या ।
स्थान-शब्दश्च प्रसङ्ग-वाची ।
यथा-दर्भाणां स्थाने शरैः प्रस्तरितव्यं इति दर्भाणां प्रसङ्गे इति गम्यते ।
एवं इह अपि अस्तेः स्थाने प्रसङ्गे भूर्भवति ।
भविता ।
भवितुं ।
भवितव्यं ।
ब्रुवः प्रसङ्गे वचिर्भवति ।
वक्ता ।
वक्तुं ।
वक्तव्यं ।
प्रसङ्गे सम्बन्धस्य निमित्त-भूते ब्रुव इति षस्ठी ।

[#२१]

बहवो हि षष्ठ्य्-अर्थाः- स्व-स्वाम्य्-अनन्तर-समीप-समूह-विकार-अवयव-अद्याः ।
तत्र यावन्तः शब्दे सम्भवन्ति तेषु सर्वेषु प्रप्तेषु नियमः क्रियते षष्ठी स्थाने-योगा इति ।
स्थाने योगोऽस्याः इति व्यधिकरणो बहुव्रीहिः ।
अत एव निपातनाच्च सप्तम्या अलुक् । ।
स्थानेऽन्तरतमः (*१,१.५०) ।
स्थाने प्राप्यमाणानां अन्तरतं आदेशो भवति सदृशतमः ।
कुतश्च शब्दस्य अन्तर्यं ? स्थान-अर्थ-गुण-प्रमाणतः ।

स्थानतः - अकः सवर्णे दीर्घः (*६,१.१०१) ।
दण्डाग्रं ।
यूपाग्रं ।
द्वयोरकारयोः कण्ठ्य एव दीर्घ अ-अकारो भवति ।
अर्थतः - वतण्डी च असौ युवतिश्च वातण्ड्य-युवतिः ।
पुंवद्-भावेन अन्तरतमः पुंशब्दोऽतिदिश्यते ।
गुणतः-पाकः ।
त्यागः ।
रागः ।
चजोः कु घिण्यतोः (*७,३.५२) इति च-कारस्य अल्प-प्राणस्य अघोषस्य तादृश एव क-कारो भवति ।
ज-कारस्य घोषवतोऽल्प-प्राणस्य तादृश एव ग-कारः ।
प्रमाणतः - अनुष्मै ।
अमूभ्यां ।
अदसोऽसेर्दादु दो मः (*८,२.८०) इति ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः ।
स्थाने इति वर्तमाने पुनः स्थाने ग्रहणं किं ? यत्र अनेकं आन्तर्यं सम्भवति तत्र स्थानत एव आन्तर्यं बलीयो यथा स्याथ् ।
चेता, स्तोता ।

[#२१]

प्रमाणतोऽ-कारो गुणः प्राप्तः, तत्र स्थानत आन्तर्यादेकारौकारौ भवतः ।
तम्ब्-ग्रहणं किं ? वाग्घसति ।
त्रिष्टुब्भसति ।
झयो होऽन्यतरस्यां (*८,४.६२) इति ह-कारस्य पूर्व-सवर्णे क्रियमाणे सोष्मणः सोष्माणः इति द्वितीयाः प्रसक्ताः, नादवतो नादवन्तः इति तृतीयाः, तमब्-ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः । ।
उरण्रपरः (*१,१.५१) ।
उः स्थाने अण्प्रसज्यमान एव रपरो वेदितव्यः ।
कर्ता ।
हर्ता ।
किरति ।
गिरति ।
द्वैमातुरः ।
त्रैमातुरः ।
उः इति किं ? खेयं ।
गेयं ।
अन्-ग्रहणं किं ? सु-धातुरकङ्च (*४,१.९७) - सौधातकिः । ।
अलोऽन्त्यस्य (*१,१.५२) ।
षष्ठी-निर्दिष्टस्य य उच्यते आदेशः, सोऽन्त्यस्य अलः स्थाने वेदितव्यः ।
इद्गोण्याः (*१,२.५०) - पञ्च-गोणिः ।
दश-गोणिः । ।

[#२२]

ङिच्च (*१,१.५३) ।
ङित्च य आदेशः सोऽनेक-अलपि अलोऽन्त्यस्य स्थाने भवति ।
आनङृतो द्वन्द्वे (*६,३.२५) - होता-पोतारौ ।
माता-पितरौ ।
तातङि ङित्-करणस्य गुण-वृद्धि-प्रतिषेध-अर्थत्वात्सर्व-आदेशः तातङ्भवति ।
जीवताद्भवान् ।

जीवतात्त्वं । ।
आदेः परस्य (*१,१.५४) ।
परस्य कार्यं शिष्यमाणं आदेरलः प्रत्येतव्यं ।
क्व च परस्य कार्यं शिष्यते ? यत्र पञ्चमी-निर्देशः ।
तद्यथा-ईदासः (*७,२.८३) - आसीनो यजते ।
द्व्य्-अन्तर्-उपसर्गेभ्योऽप ईत्(*६,३.९७) - द्वीपं ।
अन्तरीपं ।
प्रतीपं ।
समीपं । ।
अनेक-अल्शित्सर्वस्य (*१,१.५५) ।
अनेक-अल्य आदेशः शित्च, स सर्वस्य षष्ठी-निर्दिष्टस्य स्थाने भवति ।
अस्तेर्भूः (*२,४.५२)-भविता ।
भवितुं ।
भवितव्यं ।
शित्खल्वपि - जश्-शसोः शिः (*७,१.२०) -कुण्डानि तिष्ठन्ति ।
कुण्डानि पस्य । ।
स्थानिवद्-आदेशोऽन्-अल्-विधौ (*१,१.५६) ।
स्थान्य्-आदेशयोः पृथक्त्वात्स्थान्य्-आश्रयं कार्यं आदेशे न प्राप्नोति इत्ययम्-अतिदेश आरभ्यते ।
स्थानिना तुल्यं वर्तते इति स्थानिवथ् ।
स्थानिवद्-आदेशो भवति स्थान्य्-आश्रयेषु कार्येष्वनल्-आश्रयेषु, स्थान्य्-अलाश्रयाणि कार्याणि वर्जयित्वा ।
न अल्विधिरनल्विधिः इत्यर्थः ।
किं उदाहरणं ? धात्व्-अङ्ग-कृत्-तद्धित-अव्यय-सुप्-तिङ्-पदा-अदेशाः ।
धात्व्-आदेशो धातुवद्भवति ।
अस्तेर्भूः (*२,४.५२) ।
ब्रुवो वचिः (*२,४.५३) ।
आर्धधातुक-विशये प्रागेव-आदेशेषु कृतेषु धातोः (*३,१.९१) इति तव्य-आदयो भवन्ति ।
भविता ।
भवितुं ।
भवितव्यं ।
वक्ता ।
वक्तुं ।
वक्तव्यं ।
अङ्ग-आदेशोऽङ्गवद्भवति - केन ।
काभ्यां ।
कैः ।
किमः कः (*७,२.१०३) इति क-आदेशे कृतेऽङ्ग-आश्रया इन-दीर्घत्व-ऐस्भावाः भवन्ति ।
कृद्-आदेशः कृद्वद्भवति - प्रकृत्य ।
प्रहृत्य ।
क्त्वो ल्यब्-आदेशे कृते ह्रस्वस्य पिति कृति तुक्(*६,१.७१) इति तुग्भवति ।
[#२३]

तद्धित-आदेशः तद्धितवद्भवति - दाधिकं ।
अद्यतनं ।
कृत्-तद्धित-समासाश्च (*१,२.४६) इति प्रातिपदिक-सञ्ज्ञा भवति ।
अव्यय-आदेशोऽव्ययवद्भवति - प्रस्तुत्य ।
प्रहृत्य ।
उपहृत्य ।
उपस्तुत्य ।
अव्ययादाप्सुपः (*२,४.८२) इति सुब्लुग्भवति ।

सुबादेशः सुब्वद्भवति - वृक्षाय ।
प्लक्षाय ।
सुपि च (*७,३.१०२) इति दीर्घत्वं भवति ।
तिङ्-आदेशः तिङ्वद्भवति--अकुरुतां ।
अकुरुतं ।
सुप्-तिङ्-अनतं पदं (*१,४.१४) इति पद-सञ्ज्ञा भवति ।
पद-आदेशः पदवद्भवति -- ग्रामो वः स्वं ।
जन-पदो नः स्वं ।
पदस्य (*८,१.१६) इति रुत्वं भवति ।
वत्-करनं किं ? स्थानी आदेशस्य सञ्ज्ञा मा विज्ञायि इति ।
स्व-आश्रयं अपि यथा स्याथ् ।
आङो यम-हनः (*१,३.२८) - आहत, आवधिष्ट इति आत्मनेपदं उभयत्र अपि भवति ।
आदेश-ग्रहणं किं ? आनुमानिकस्य अप्यादेशस्य स्थानिवद्भावो यथा स्याथ् ।
पचतु - एरुः (*३,४.८६) ।
अनल्-विधौ इति किं ? द्युपथितद्-आदेशा न स्थानिवद्भवन्ति ।
द्यौः, पन्थाः, सः इति ।
हल्-ङ्य्-आब्भो दीर्घात्सु-ति-स्य्-अपृक्तं हल्(*६,१.६८) इति सु-लोपो न भवति । ।
अचः परस्मिन्पूर्व-विधौ (*१,१.५७) ।
पूर्वणानल्-विधौ स्थानिवद्-भाव उक्तः ।
अल्-विध्य्-अर्थम्-इदम्-आरभ्यते ।
आदेशः स्थानिवतिति वर्तते ।
अचः इति स्थानि-निर्देशः ।
परस्मिनिति निमित्त-सप्तमी ।
पूर्व-विधौ इति विषय-सप्तमी ।
अज्-आदेशः परनिमित्तकः पूर्वविदौ कर्तव्ये स्थानिवद्भवति ।
पटयति ।
अवधीथ् ।
बहुखट्वकः ।
पटुमाचष्टे इति णिचिटि-लोपे कृते तस्य स्थानिवद्-भावातत उपधायाः (*७,२.११६) इति वृद्धिर्न भवति ।
अवधीत्-- अतो लोपस्य स्थानिवद्-भावदतो हल्-आदेर्लघोः (*७,२.७) इति हलन्त-लक्षणा वृद्धिर्न भवति ।
बहुखट्वकः इति आपोऽन्यतरस्यां (*७,४.१५) इति ह्रस्वस्य स्थानिवद्-भावाद्ह्रस्वान्तेऽन्त्यात्पूर्वं (*६,२.१७४) इति स्वरो न भवति ।
अचः इति किं ? प्रश्नः ।
आक्राष्टां ।
आगत्य ।
प्रश्नः इति प्रच्छेः नङ्प्रत्यये च्-चः-व्-ओः शूड्-अनुनासिके च (*६,४.१९) इति छ-कारस्य श-कारः परनिमित्तकस्तुकि कर्तव्ये न स्थानिवद्भवति ।
आक्राष्टां इति झलो झलि (*८,२.२६) इति सिचो लोपः परनिमित्तकः कृषेः ष-कारस्य षढोः कः सि (*८,२.४१) इति क-कारे कर्तव्ये न स्थानिवद्भवति ।
आगत्य इति वा ल्यपि (*६,४.३८) इत्यनुनासिक-लोपः परनिमित्तकः तुकि कर्तव्ये न स्थानिवद्भवति ।
परस्मिनिति किं ? युवजानिः वधूटीजानिः ।
वैयाघ्रपद्यः ।
आदीध्ये ।
युवजानिः इति जायायाः निङ्(*५,४.१३४) न परनिमित्तकः, तेन य-लोपे न स्थानिवद्भवति ।
वैयाघ्रपद्यः इति न परनिमित्तकः पादस्य अन्तलोपः पद्भावं न प्रतिबध्नाति ।
आदीध्ये इति दीधीङ उत्तमपुरुष-इकवचने टेरेत्वस्य-अपरनिमित्तकत्वाद्यि-इ-वर्णयोर्दीधी-वेव्योः (*७,४.५३) इति लोपो न भवति ।

[#२४]

पूर्व-विधौ इति किं ? हे गौः ।

बाभ्रवीयाः ।
नैधेयः ।
हे गौः इति वृद्धिरज्-आदेशः सम्बुद्धि-लोपे कर्तव्ये न स्थानिवद्भवति ।
बाभ्रवीयाः इति बाभ्रव्यस्य अमी च्छात्राः इति वृद्धाच्छः (*४,२.११४) इति छः ।
हलस्तद्धितस्य (*६,४.१५०) इति य-कारल्-ओपे कर्तव्ये अव्-आदेशो न स्थानिवद्भवति ।
नैधेयः -- आतो लोप इटि च (*६,४.६४) इत्या-कार-लोपः, इतश्च अनिञः (*४,१.१२२) इति द्व्य्-अज्-लक्षणे प्रत्यय-विधौ न स्थानिवद्भवति । ।
न पदान्त-द्विर्वचन-वरे-य-लोप-स्वर-सवर्ण. अनुस्वार-दीर्घ-जश्-चर्-विधिषु (*१,१.५८) ।
पूर्वेण अतिप्रसक्तः स्थानिवद्-भाव एतेषु विधिषु प्रतिषिध्यते ।
पदान्त-विधिं प्रत्य्-अज्-आदेशो न स्थानिवद्भवति ।
कौ स्तः ।
यौ स्तः ।
तानि सन्ति ।
यनि सन्ति ।
श्न-सोरल्-लोपः क्ङिति सार्वधातुके इति परनिमित्तकः, स पूर्व-विधावाव्-आदेशे यण्-आदेशे च कर्तव्ये स्थानिवत्स्यात्, अस्माद्वचनान्न भवति ।
द्विर्वचन-विधिः -- द्विर्वचन-विधिं प्रति न स्थानिवद्भवति ।
दद्ध्यत्र ।
मद्ध्वत्र ।
यण्-आदेशः परनिमित्तकः, तस्य स्थानिवद्-भावातनचि च (*८,४.४७) इति ध-कारस्य द्विर्वचनं न स्यादस्माद्वचनाद्भवति ।
वरेविधिः -- वरे योऽज्-आदेशः स पूर्व-विधिं प्रति न स्थानिवद्भवति ।
अप्सु यायावरः प्रवपेत पिण्डान् ।
यातेः यङ्-अन्तात्यश्च यङः (*३,२.१७६) इति वरचि कृते अतो लोपः (*६,४.४८) पर-निमित्तकः, तस्य स्थानिवत्त्वादतो लोप इटि च (*६,४.६४) इत्या-कार-लोपः स्याद्, अस्माद्वचनान्न भवति ।
य-लोप-विधिः -- य-लोप-विधिं प्रत्यज्-आदेशो न स्थानिवद्भवति ।
कण्डूतिः ।
कण्डूयतेः क्तिनि कृते, अतो लोपः परनिमित्तकः, लोपो व्-योर्वलि (*६,१.६६) इति यलोपे स्थानिवत्स्यादस्माद्वचनान्न भवति ।
स्वर-विधिः -- स्वर-विधिं प्रति अज्-आदेशो न स्थानिवद्भवति ।
चिकीर्षकः ।
जिहीर्षकः ण्वुलि कृते अतो लोपः परनिमित्तकः, लिति (*६,१.१९३) प्रत्ययात्पूर्वं उदात्तम्, इति स्वरे कर्तव्ये न स्थानिवद्भवति इति ।
सवर्ण-विधिः -- सवर्ण-विधिं प्रति अजादेशो न स्थानिवद्भवति ।
शिण्ढि ।
पिण्ढि ।
शिषेः पिषेश्च लोण्-मध्यम-पुरुष-इकवचने रुदः-आदिभ्यः श्नं (*३,१.७८) ।
हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु, श्नसोरल्-लोपः क्ङिति सार्वधातुके परनिमित्तकः, अनुस्वारस्य ययि परसवर्णे कर्तव्ये न स्थानिवद्भवति ।

[#२५]

अनुस्वार-विधिः -- अनुस्वार-विधिं प्रति अज्-आदेशो न स्थानिवद्भवति ।
शिंषन्ति ।
पिंषन्ति ।
नश्च अपदान्तस्य झलि (*८,३.२४) इति अनुस्वारे कर्तव्ये श्नसोरल्लोपः न स्थानिवद्भवति ।
दीर्घ-विधिः -- दीर्घ-विधिं प्रति अजादेशो न स्थानिवद्भवति ।
प्रतिदीव्ना ।
प्रतिदीव्ने ।
प्रतिदिवनित्येतस्य भस्य (*६,४.१२९) इत्यधिकृत्य तृतीय-इकवचने चतुर्थ्य्-एकवचने च अल्लोपोऽनः (*६,४.१३४) इत्य-कार-लोपः परनिमित्तकः, तस्य स्थानिवद्ब्-हावादहलि च (*८,२.७७) इति दीर्घत्वं न स्यात्, न ह्ययं व-कारो हल्-परः इति, अस्माद्वचनाद्भवति ।
जश्-विधिः -- जश्-विधिं प्रत्य्-अज्-आदेशो न स्थानिवद्भवति ।
सग्धिश्च मे सपीतिश्च मे ।
बब्धां ते हरी धानाः ।

अदेः क्तिनि बहुलं छन्दसि (*२,४.३९) इति घस्-ल-आदेशः ।
घसि-भसोर्हलि च (*६,४.१००) इत्युपधल्-ओपः ।
झलो जह्लि (*८,२.२६) इति स-कार-लोपः ।
झषस्त-थोर्धोऽधः (*८,२.४०) इति धत्वं ।
उपधा-लोपस्य स्थानिवत्तवात्झलां जस्झसि (*८,४.५३) इति घ-कारस्य जश्त्वं न स्यात्, अस्माद्वचनाद्भवति ।
समना ग्धिः ।
समानस्य सभावः ।
सग्धिः ।
बब्धां इति भसेर्-लोड्-द्विवचने शपः स्लुः, द्विर्वचनम्, अभ्यास-कार्यम्, घसि-भसोर्हलि च (*६,४.१००) इति उपधा-लोपः, झलो झलि (*८,२.२६) इत्स-कार-लोपः, झषस्त-थोर्धोऽधः (*८,२.४०) इति धत्वं ।
उपध-लोपस्य स्थानिवत्त्वात्झलां जश्झशि (*८,४.५३) इति जश्त्वं न स्यात्, अस्माद्वचनाद्भवति ।
चर्विधिः -- चर्विधिं प्रति अज्-आदेशो न स्थानिवद्भवति ।
जक्षतुः ।
जक्षुः ।
अक्षन्पितरोऽमीमदन्त पितरः ।
लिड्-द्विवचन-बहुवचनयोरदेर्घस्-ल-आदेशः ।
गम-हन-जन-खन-घसां लोपः क्-ङित्यनङि (*६,४.९८) इति उपधा-लोपः, द्विर्वचनम्, अभ्यास-कार्यं ।
तत्र उपधा-लोपस्य स्थानिवत्त्वात्खरि च (*८,४.५५) इति घ-कारस्य चर्त्वं न स्याद्, अस्माद्वचनाद्भवति ।
शासि-वसि-घसीनां च (*८,३.६०) इति शत्वं ।
अक्षनिति अदेः लुङ्बहुवचने घस्-ल-आदेशः, च्लेरागतस्य मन्त्रे घस-ह्वर (*२,४.८०) इति लुक् ।
गम-हन-जन-खन-घसां लोपः क्-ङित्यनङि (*६,४.९८) इत्युपधा-लोपः, तस्य स्थानिवत्त्वात्खरि च (*८,४.५५) इति चर्त्वं न स्यात्, अस्माद्वचनाद्भवति ।
स्वर-दीर्घय-लोपेशु लोप-अज्-आदेशो न स्थानिवद्भवति ।
अन्यत्र स्थानिवदेव ।
तेन बहुखट्वकह्, किर्योः, गिर्योः, वाय्वोः इति स्थानिवत्त्वात्स्वर-दीर्घय-लोपा न भवन्ति । ।

[#२६]

द्विर्वचनेऽचि (*१,१.५९) ।
द्विर्वचन-निमित्तेऽचि अज्-आदेशः स्थानिवद्भवति , द्विर्वचन एव कर्तव्ये ।
रूप-अतिदेशश्च अयं नियत-कालः ।
तेन कृते द्विर्वचने पुनरादेश रूपं एव अवतिष्ठते ।
आल्-लोप-उपधालोप-णिलोपयण्-अय्-अव्-आय्-आव्-आदेशाः प्रयोजनं ।
आल्-लोपः--पपतुः ।
पपुः ।
आतो लोप इटि च (*६,४.६४) इति आ-कार-लोपे कृते तस्य स्थानिवद्-भावातेक-अचो द्वे प्रथमस्य (*६,१.१) इति द्विर्वचनं भवति ।
उपधा-लोपः--जघ्नतुः ।
जघ्नुः ।
गम-हन-जन-खन-घसां लोपः क्-ङित्यनङि (*६,४.९८) इत्यौपधा-लोपे कृते अनच्कत्वाद्द्विर्वचनं न स्यात्, अस्माद्वचनाद्भवति ।
णि-लोपः -- आट्-इटथ् ।
अटतेः णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वादज्-आदेर्द्वितीयस्य (*६,१.२) इति टि-शब्दस्य द्विर्वचनं भवति ।
यण्-- चक्रतुः ।
चक्रुः ।
करोतेः अतुसि उसि च यण्-आदेशे कृते अनच्कत्वाद्द्विर्वचनं न स्यात्, स्थानिवत्त्वाद्भवति ।
अयवायावादेशाः -- निनय, निनाय ।
लुलव, लुलाव ।
नयतेः लुनातेश्च उत्तमे णलि गुणे कृते वृद्धौ च अय्-अव्-आय्-आव्-आदेशाः, तेषां स्थानिवत्त्वान्ने नै लो लौ इति द्विर्वचनं भवति ।
द्विर्वचने कऋतव्य इति किं ? जग्ले, मम्ले ।

श्रवणं आ-कारस्य न भवति।
द्विर्वचन-निमित्ते इति किं? दुद्यूषति।
ऊठि यण्-आदेशो न स्थानिवद्भवति।
अचि इति किं? जेघ्रीयते, देध्मीयते।
ई घ्रा-ध्मोः (*७,४.३१) यङि च (*७,४.३०) इति ई-कार-आदेशः, तस्य स्थानिवद्भावादा-कारस्य द्विर्वचनं स्यात्, अज्-ग्रहणान्न भवति।।
अदर्शनं लोपः (*१,१.६०)।
अदर्शनम्, अश्रवणम्, अनुच्चारनम्, अनुपलब्धिः, अभावो, वर्णविनाशः इत्यनर्थ-अन्तरं।
एतैः शब्दैर्योऽर्थोऽभिधीयते, तस्य लोपः इति इयं सञ्ज्ञा भवति।
अर्थस्य-इयं सञ्ज्ञा, न शब्दस्य।
प्रसक्तस्य अदर्शनं लोप-सञ्ज्ञं भवति।
गोधाया ढ्रक्(*४,१.१२९)-गौधेरः।
पचेरन्।
जीवे रदानुक्जीरदानुः।
स्त्रिवेर्मनिनास्रेमाणं।
य-कार-वकारयोरदर्शनं इह उदाहरणं।
अपरस्य अनुबन्धादेः प्रसक्तस्य।
लोप-प्रदेशाः-लोपो व्योर्वलि (*६,१.६६) इत्येवं आदयः।।

[#२७]

प्रत्ययस्य लुक्-श्लु-लुपः (*१,१.६१)।
अदर्शनं इति वर्तते।
प्रत्यय. अदर्शनस्य लुक्, श्लु, लुपित्येताः सञ्ज्ञा भवन्ति।
अनेक-सञ्ज्ञा-विधनाच्-च तद्-भावित-ग्रहणं इह विज्ञायते।
लुक्-सञ्ज्ञा-भावितं प्रत्यय-अदर्शनं लुक्-सञ्ज्ञं भवति, श्लु-सञ्ज्ञा-भावितं श्लु-सञ्ज्ञं भवति, लुप्-सञ्ज्ञा भावितं लुप्-सञ्ज्ञं भवति।
तेन सञ्ज्ञानां सङ्करो न भवति।
विधि-प्रदेशेषु च भाविनी सञ्ज्ञा विज्ञायते।
अत्ति।
जुहोति।
वरणाः।
प्रत्यय-ग्रहणं किं? अगस्तयः।
कुण्डिनाः।
लुक्-श्लु-लुप्-प्रदेशाः - लुक्-तद्धित-लुकि (*१,२.४९), जुहोत्य्-आदिभ्यः श्लुः (*२,४.७५), जनपदे लुप्(*४,२.७१) इत्येवं आदयः।।
प्रत्यय-लोपे प्रत्यय-लक्षणं (*१,१.६२)।
प्रत्यय-निमित्तं कार्यं असत्यपि प्रत्यये कथं नु नाम स्यातित्सूत्रं इदं आरभ्यते।
प्रत्यय-लोपे कृते प्रत्यय-लक्षणं प्रत्यय-हेतुकं कर्यं भवति।
अग्निचित्, सोमसुत्, अधोक्, इत्यत्र सुप्-तिङोः लुप्तयोः सुप्-तिङ्-अन्तं पदं (*१,४.१४) इति पद-सञ्ज्ञा भवति।
अधोकिति दुहेः लङि तिपि शब्लुकि तिलोपे घत्व-भष्भाव-जश्त्व-चर्त्वेषु कृतेषु रूपं।
प्रत्यय इति वर्तमाने पुनः प्रत्यय-ग्रहणं किं? कृत्स्न-प्रत्यय-लोपे यथा स्याथ्।
इह मा भूत्-- आघ्नीय।
सङ्ग्मीय।
हनिगम्योर्लिङ्-आत्मनेपदे लिङः स-लोपोऽनन्त्यस्य (*७,२.७९) इति सीयुट्-स-कार-लोपः प्रत्यय-इकदेश-लोपः, तत्र प्रत्यय-लक्षणेन झलि इत्यनुनासिकलोपो न भवति (*६,४.३७)।
प्रत्यय-लक्षणं इति किं? रायः कुलं रैकुलं।
गवे हितं गोहितं।
आयव्-आदेशौ न भवतः वर्ण-आश्रयत्वात्।।
न लुमताऽङ्गस्य (*१,१.६३)।
पूर्वेण अतिप्रसक्तं प्रत्यय-लक्षणं इति विशेषे प्रतिषेधः उच्यते।

लुमता शब्देन लुप्ते प्रत्यये यद्-अङ्गं, तस्य प्रत्यय-लक्षणं कार्यं न भवति ।
गर्गाः ।
मृष्टः ।
जुहुतः ।
यञ्-शपोर्लुमता लुप्तयोरङ्गस्य वृद्धि-गुणौ न भवतः ।
लुमता इति किं ? कार्यते ।
हार्यते ।
अङ्गस्य इति किं ? पञ्च ।
सप्त पयः ।
साम । ।
अचोऽन्त्य-आदि टि (*१,१.६४) ।
अचः इति निर्धारणे षष्ठी ।
जाताव्-एकवचनं ।
अचां सन्निविष्टामां, योऽन्त्योऽच्तद्-आदि शब्द-रूपं टि-सञ्ज्ञं भवति ।
अग्निचित्-इच्छब्दः ।
सोमसुत्-उच्-छब्दः ।
आताम्, आथाम्-आम्-शब्दः ।
पचेते, पचेथे ।
टि-प्रदेशाः--टित आत्मनेपदानं टेरे (*३,४.७९) इत्येवं आदयः । ।

[#२८]

अलोऽन्त्यात्पूर्व उपधा (*१,१.६५) ।
धात्व्-आदौ वर्ण-समुदायेऽन्त्यादलः पूर्वो यो वर्णः सोऽलेव उपधा-सञ्ज्ञओ भवति ।
पच्, पठ्--अ-करः ।
भिद्, छिद्--इ-कारः ।
बुध्, युध्--उकारः ।
वृत्, वृध्--ऋकारः ।
अलः इति किं ? शिष्टः, शिष्टवान् ।
समुदायात्पूर्वस्य मा भूथ् ।
उपधा-प्रदेशाः--अत उपधायाः (*७,२.११५) इत्येवं आदयः । ।
तस्मिन्निति निर्दिष्टे पूर्वस्य (*१,१.६६) ।
तस्मिनिति सप्तम्य्-अर्थ-निर्देशे पूर्वस्य-इव कार्यं भवति, न-उत्तरस्य ।
इको यण्-अचि (*६,१.७७)--दध्युदकं ।
मध्विदं ।
पचत्योदनं ।
निर्दिष्ट-ग्रहणं आनन्तर्य-अर्थं ।
अग्निचिदत्र इति व्यवहितस्य मा भूत् । ।
तस्मादित्युत्तरस्य (*१,१.६७) ।
निर्दिष्ट-ग्रहनं अनुवर्तते ।
तस्माततिति पञ्चम्य्-अर्थ-निर्देश उत्तरस्य-इव कार्यं भवति, न पूर्वस्य ।
तिङ्ङ्-अतिङः (*८,१.२८) -- ओदनं पचति ।
इह न भवति -- पचत्योदनं इति । ।
स्वं रूपं शब्दस्य अशब्द-सञ्ज्ञा (*१,१.६८) ।
शास्त्रे स्वं एव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति, न बाह्योऽर्थः, शब्द-सञ्ज्ञां वर्जयित्वा ।
शब्देन अर्थ-अवगतेरर्थे कार्यस्य असम्भवात्तद्-वाचिनां शब्दानां सम्प्रत्ययो मा भूतिति सूत्रं इदं आरभ्यते ।
अग्नेर्ढक्(*४,२.३३) -- आग्नेयं अष्टा-कपालं निर्वपेथ् ।
अग्नि-शब्दोऽग्नि-शब्दस्य-इव ग्राहको भवति, न ज्वलनः, पावकः, धूम-केतुः इति ।

न अतः प्रत्ययो भवति ।
उदश्वितोऽन्यतरस्यां (*४,२.१९)--औदश्वित्कं ।
औदश्वितं ।
तक्रम्, अरिष्टं, कालशेयं, दण्डाहतं, मथितम्, इति न अतः प्रत्ययो भवति ।
अशब्द-सञ्ज्ञा इति किं ? दा-धा घ्व्-अदाप्(*१,१.२०) तरप्-तमपौ घः (*१,१.२३), घु-ग्रहणेषु घ-ग्रहनेषु च सञ्ज्ञिनां ग्रहनम्, न सञ्ज्ञायाः ।
सित्-तद्-विशेषाणां वृक्षाद्य्-अर्थं ।
सिन्-निर्देशः कर्तव्यः ।
ततो वक्तव्यं तद्-विशेषाणां ग्रहणं भवति इति ।
किं प्रयोजनं ? वृक्षाद्य्-अर्थं ।
विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु. शकुन्य्-अश्व-वडव-पूर्वापर-अधरोत्तराणां (*२,४.१२) इति -- प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः ।

[#२९]

पित्-पर्याय-वचनस्य च स्व-आद्य्-अर्थं ।
पिन्-निर्देशः कर्तव्यः ।
ततो वक्तव्यं पर्याय-वचनस्य ग्रहणं भवति, च-कारात्स्वस्य रूपस्य तद्-विशेषाणां च इति ।
किं प्रयोजनं ? स्व-आद्य्-अर्थं ।
स्वे पुशः (*३,४.४०) ।
स्वपोषं पुष्टः ।
रैपोशं ।
धनपोशं ।
अश्वपोषं ।
गोपोशं ।
जित्पर्याय-वचनस्य-इव राज-आद्य्-अर्थं ।
जिन्-निर्देशः कर्तव्यः ।
ततो वक्तव्यं पर्याय-वचनस्य-इव ग्रहनं भवति इति, न स्वरूपस्य, न अपि तद्-विशेषाणां ।
किं प्रयोजनं ? राज-आद्य्-अर्थं ।
सभा राजा+अमनुष्य-पूर्वा (*२,४.२३) -- इनसभं ।
ईश्वरसभं ।
तस्य-इव न भवति--राज-सभा ।
तद्-विशेषाणां च न भवति -- पुष्यमित्र-सभा ।
चन्द्रगुप्त-सभा ।
झैत्तद्-विशेषाणां च मत्स्य-आद्य्-अर्थं ।
झिन्-निर्देशः कर्तव्यः ।
ततो वक्तव्यं तस्य च ग्रहणं भवति तद्-विशषाणां च इति ।
किं प्रयोजनं ? मत्स्य-आद्य्-अर्थं ।
पक्षि-मत्स्य-मृगान्हन्ति (*४,४.३५) इति ठक्--पाक्षिकः ।
मात्सियकः ।
तद्-विशेषाणां -- शाकुनिकः ।
पर्यायाणां न भवति--अजिह्मान्हन्ति, अनिमिषान्हन्ति इति ।
अथ-इकस्य-इश्यते, मीनान्, हन्ति इति मैनिकः । ।
अणुदित्सवर्णस्य च-अप्रत्ययः (*१,१.६९) ।
परेण ण-कारेण प्रत्याहार-ग्रहणं ।
अण्गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा ।
आद्गुणः (*६,१.८७), अस्य च्वौ (*७,४.३२), यस्य-ईति च (*६,४.१४८) ।
स्वर-अनुनासिक्य-काल-भिन्नस्य ग्रहनं भवति ।
उदित्खल्वपि ।
चु-टू (*१,३.७), लशक्व-तद्धिते (*१,३.८) ।
च-वर्ग-ट-वर्गयोः क-वर्गस्य च ग्रहनं भवति ।

अप्रत्ययः इति किं ? सन्-आशंस-भिक्ष उः (*३,२.१६८), अ साम्प्रतिके (*४,३.९), दीर्घो न भवति । ।
त-परस्तत्-कालस्य (*१,१.७०) ।
तः परो यस्मात्सोऽयं तपरः, तादपि परः तपरः ।
तप्रो वर्णस्तत्-कालस्य, आत्मना तुल्य-कालस्य गुण-अन्तर-युक्तस्य सवर्णस्य ग्राहको भवति, स्वस्य च रूपस्य ।
विदः-यर्थं इदं ।
अणिति न अनुवर्तते ।
अणामन्येषां च तपराणां इदं एव ग्रहणक-शास्त्रं ।

[#३०]

अतो भिस ऐस्(*७,१.९) इत्येवं आदिषु पूर्व-ग्रहणक-शास्त्रं न प्रवर्तत एव ।
अतपरा अणस्तस्य अवकाशः ।
किं उदाहरणं ? अतो भिस ऐस्(*७,१.९)-- वृक्षैः ।
प्लक्षैः ।
विड्-वनोरनुनासिकस्य आत्(*६,४.४१)-- अब्जाह्, गोजाः ।
तत्कालस्य इति किं ? खट्वाभिः ।
मालाभिः । ।
आदिरन्त्येन सह-इता (*१,१.७१) ।
आदिरन्त्येन इत्-सञ्ज्ञकेन सह गृह्यमाणस्तन्-मद्यपतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य ।
अण् ।
अक् ।
अछ् ।
हल् ।
सुप् ।
तिङ् ।
अन्त्येन इति किं ? सुटिति तृतीय-इकवचनेन टा इत्यनेन ग्रहणं मा भूत् । ।
येन विधिस्तद्-अन्तस्य (*१,१.७२) ।
येन विशेषणेन विधिर्-विधीयते स तद्-अन्तस्य आत्मान्तस्य समुदायसय्ग्राहको भवति , स्वस्य च रूपस्य ।
एरच्(*३,३.५६), इ-वर्ण-अन्तादच्-प्रत्ययो भवति--चयः ।
जयः ।
अयः ।
ओरावश्यके (*३,१.१२५), उ-वर्ण-अन्ताद्ण्यद्भवति-- अवश्यलाव्यं ।
अवश्यपाव्यं ।
समास-प्रत्यय-विधौ तद्-अन्त-विधेः प्रतिषेधो वक्तव्यः ।
द्वितीय-अन्तं श्रितादिभिः सह समस्यते (*२,१.२४) -- कष्टश्रितः ।
इह मा भूत्-- कष्टं परमश्रित इति ।
प्रत्यय-विधौ -- नड-आदिभ्यः फक्(*४,१.९९), नडस्य अपत्यं नाडायनः ।
इह मा भूत्-- सूत्र-नडस्य अपत्यं सौत्रनाडिः ।
किं अविशेषेण ? न इत्याह ।
उगिद्-वर्ण-ग्रहण-वर्जं इति वाच्यं ।
उगितश्च (*४,१.६) इति ङीप्-प्रत्ययः तद्-अन्तादपि भवति -- भवती, अतिभवती ।
वर्णग्रहनम्--अत इञ्(*४,१.९५), दाक्षिः ।
प्लाक्षिः ।
यस्मिन्विधिस्तद्-आदावल्ग्रहणे ।
अल्-ग्रहणेषु यस्मिन्विधिस्तदादौ इति वक्तव्यं ।
अचि श्नु-धातु-भ्रुवां य्वोरियङ्-उवङौ (*६,४.७७) इति-- श्रियः ।
भ्रुवः । ।

[#३१]

वृद्धिर्यस्य अचां आदिस्तद्वृद्धं (*१,१.७३) ।
यस्य इति समुदाय उच्यते ।
अचां मद्ये यस्य वृद्धि-सञ्ज्ञक आदि-भूतः, तच्-छब्द-रूपं वृद्ध-सञ्जं भवति ।
अचां इति जातौ बहुवचनं ।
शालीयः ।
मालीयः ।
औपगवीयः ।
कापटवीयः ।
आदिः इति किं ? सभासन्नयते भवः साभासन्नयनः ।
वा नामधेयस्य वृद्ध-सञ्ज्ञा वक्तव्या ।
देवदत्तीयाः ।
दैवदत्ताः ।
गोत्रान्तादसमस्तवत्-प्रत्य्त्यो भवतीति वक्तव्यं ।
घृत-प्रधनो रौढिः घृतरौढिः ।
तस्य छात्रा घृतरौढीयाः ।
ओदन-प्रधानः पाणिनिः ओदन-पाणिनिः ।
तस्य छात्रा ओदन-पाणिनीयाः ।
वृद्धाम्भीयाः ।
वृद्धकाश्यपीयाः ।
जिह्वाकात्य-हरितकाय-वर्जं ।
जैह्वाकाताः ।
हारितकाताः । ।
त्यद्-आदीनि च (*१,१.७४) ।
यस्य अचां आदि-ग्रहणं उत्तर-अर्थं अनुवर्तते ।
इह तु न सम्बध्यते ।
त्यद्-आदीनि शब्द-रूपाणि वृद्ध-सञ्ज्ञानि भवन्ति ।
त्यदीयं ।
तदीयं ।
एतदीयं ।
इदमीयं ।
अदसीयं ।
त्वदीयं ।
त्वादायनिः ।
मदीयं ।
मादायनिः ।
भवतीयं ।
किमीयं । ।
एङ्प्राचां देशे (*१,१.७५) ।
यस्य अचां आदि-ग्रहणं अनुवर्तते ।
एङ्यस्य अचां आदिः तत्प्राचां देशाभिधाने वृद्ध-संज्ञं भवति ।
एणीपचनीयः ।
भोजकटीयः ।
गोनर्दीयः ।
एङिति किं ? आहिच्छत्रः ।
कान्य-कुब्जः ।
प्राचां इति किं ? देवदत्तो नाम बाहीकेषु ग्रामह्, तत्र भवः दैवदत्तः ।
देशे इति किं ? गोमत्यां भवा मत्स्याः ग्ॐअताः । ।

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा।
विदुषां शब्द-सिद्ध्य्-अर्थं सा नः पातु शरावती।।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायसय्प्रथमः पादः।।

---

[#३२]

1. <गाङ्-कुटादिभ्योऽञ्णिन्ङित्># ।। पाणिनीयसूत्र १,२.१ ।।

_______काशिका १,२.१:

अतिदेशोऽयं।
गाङिति इङ्-आदेशो हर्यते, न गाङ्गतौ इति, ङ-कारस्य अनन्य-अर्थत्वाथ्।
कुटादयोऽपि कुट कौटिल्ये इत्येत दारभ्य यावत्कुङ्शब्दे इति।
एग्यो गाङ्-कुटादिभ्यः परे अञ्णितः प्रत्यया ङितो भवन्ति ङिद्वद्भवन्ति इत्यर्थः।
गाङः -- अध्यगीष्ट।
अध्यगीषातां।
अध्यगीषत।
कुटादिभ्यः--कुटिता।
कुटितुं।
कुटितव्यं।
उत्पुटिता उत्पुटितुं।
उत्पुटितव्यं।
अञ्णितिति किं? उत्कोटयति।
उच्चुकोट।
उत्कोटकः।
उत्कोटो वतते।
व्यचेः कुटादित्वमनसीति वक्तव्यं।
विचिता।
विचितुं।
विचितव्यं।
अनसि इति किं? उरुव्यचाः।।

---

1. <विज इट्># ।। पाणिनीयसूत्र १,२.२ ।।

_______काशिका १,२.२:

ओविजी भय-चलनयोः, अस्मात्परः इड्-आदिः प्रत्ययो ङिद्वद्भवति।
उद्विजिता।

उद्विजितुं ।
उद्विजितव्यं ।
इटिति किं ? उद्वेजनं ।
उद्वेजनीयं । ।

---

1. <विभाषा-ऊर्णोः># । । पाणिनीयसूत्र १,२.३ । ।

_______काशिका १,२.३:

इटिति वर्तते ।
ऊर्-णुञाच्छादने, अस्मात्परः इडादिः प्रत्ययो विभाषा ङिद्वद्भवति ।
प्रोर्णुविता ।
प्रोर्णविता ।
इटित्येव प्रोर्णवनं ।
प्रोर्णवतीयं । ।

---

1. <सार्वधातुकं अपित्># । । पाणिनीयसूत्र १,२.४ । ।

_______काशिका १,२.४:

सार्वधातुकं यदपित्तन्ङिद्वद्भवति ।
कुरुतः ।
कुर्वन्ति ।
चिनुतः ।
चिन्वन्ति ।
सार्वधतुकं इति किं ? कर्ता ।
कर्तुं ।
कर्तव्यं ।
अपितिति किं ? करोति ।
करोषि ।
करोमि ।

---

1. <असंयोगाल्लिट्कित्># । । पाणिनीयसूत्र १,२.५ । ।

_______काशिका १,२.५:

अपितिति वर्तते।
असंयोगान्ताद्धातोः परो लिट्प्रत्ययः अपित्किद्भवति।
बिधिदतुः।
बिभिदुः।
चिच्छिदतुः।
चिच्छिदुः।
ईजतुः।
ईजुः।
असंयोगातिति किं? संस्रसे।
दध्वंसे।
अपितित्येव।
बिभेद।।

---

[#३३]

1. <इन्धि-भवतिभ्यां च>#।। पाणिनीयसूत्र १,२.६।।

_______काशिका १,२.६:

इन्धि भवति इत्येताभ्यां परो लिट्प्रत्ययः किड्भवति।
समीधे दस्यु हन्तमं।
पुत्र ईधे अथर्वणः।
भवतेः खल्वपि -- बभूव।
बभूविथ।
इन्धेः संयोगर्थं ग्रहणं।
भवतेः पिदर्थं।
अत्र-इष्टिः -- श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यं।
श्रेथतुः, श्रेथुः।
ग्रेथतुः, ग्रेथुः।
देभतुः, देभुः।
परिषस्वजे, परिषस्वजाते।।

---

1. <मृड्-अमृद-गुध-कुष-क्लिश-वद-वसः क्त्वा>#।। पाणिनीयसूत्र १,२.७।।

_______काशिका १,२.७:

मृड मृद गुध कुष क्लिश वद वस इत्येतेभ्यः परः क्त्वा-प्रत्ययः किद्भवति ।
न क्त्वा सेट्(*१,२.१८) इति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः ।
गुध-कुष-क्लिशीनां तु रलो व्-य्-उपधाद्-धल्-आदेः संश्च (*१,२.२६) इति विकल्पे प्राप्ते नित्य-अर्थं वचनं ।
मृडित्वा ।
मृदित्वा ।
गुधित्वा ।
कुषित्वा ।
क्लिशित्वा ।
उदित्वा ।
उषित्वा । ।

---

1. <रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः संश्च># । । पाणिनीयसूत्र १,२.८ । ।

_______काशिका १,२.८:

रुद विद मुष ग्रहि स्वपि प्रच्छ इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः ।
रुद-विद-मुषीणां रलो व्युपधाद्-धल्-आदेः संश्च (*१,२.२३) इति विकल्पे प्राप्ते नित्य-अर्थं ग्रहणं ।
ग्रहेर्विध्य्-अर्थं एव ।
स्वपि-प्रच्छयोः सन्न्-अर्थं ग्रहणं ।
किदेव हि इत्वा ।
रुदित्वा, रुरुदिषति ।
विदित्वा, विविदिशति ।
मुषित्वा, मुमुषिषति ।
गृहीत्व, जिघृक्षति ।
सुप्त्वा, सुषुप्सति ।
पृष्ट्वा, पिपृच्छिषति ।
ग्रह-आदीनां कित्त्वात्सम्प्रसारणं भवति ।
किरश्च पञ्चभ्यः (*७,२.७५) इति प्रच्छेरिड्-आगमः । ।

---

1. <इको झल्># । । पाणिनीयसूत्र १,२.९ । ।

_______काशिका १,२.९:

सनित्यनुवर्तते ।
क्त्वा इति निवृतं ।
इगन्ताद्धातोः परो झल्-आदिः सन्किद्भवति ।
चिचीषति ।
तुष्टूषति ।

चिकीर्षति ।
इकः इति किं ? पिपासति ।
तिष्ठासति ।
झलिति किं ? शिशयिषते ।
किं अर्थं इदं उच्यते ? गुणो मा भूतिति ।
अज्-झन-गमां सनि (*६,४.१६) इति दीर्घत्वं गुणस्य बाधकं भविष्यति ? यथ-इव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बधेत ।
तस्माद्दीर्घत्वस्य अवकाश-दानाय कित्त्वं इदं आरभ्यते ।
चिचीषति इत्यादिषु सावकाशं दीर्घत्वं पर्त्वाद्णिलोपेन बाध्यते ।
ज्ञीप्सति ।

[#३४]

इकः कित्त्वं गुणो मा भूत्दीर्घ-आरम्भात्कृते भतेथ् ।
अनर्थकं तु ह्रस्व-अर्थं दीर्घाणां तु प्रसज्यते । ।१ । ।

सामर्थ्याद्धि पुनर्भाव्यम्ьदित्त्वं दीर्घसंश्रयं ।
दीर्घाणां नाकृते कीर्घे णिलोपस्तु प्रयोजनं । ।२ । ।

---

1. <हलन्ताच्च># । । पाणिनीयसूत्र १,२.१० । ।

_______काशिका १,२.१०:

हलन्तादिको झल्कितिति वर्तते ।
सनिति निवृत्तं ।
इग्-अन्तदिक्-समीपाद्-धलः परौ झल्-आदी ।

---

1. <लिङ्-सिचौ आत्मनेपदेषु># । । पाणिनीयसूत्र १,२.११ । ।

_______काशिका १,२.११:

परतः कितौ भवतः ।
भित्सीष्ट, भुत्सीष्ट ।
सिचि खल्वपि--अभित्त, अबुद्ध ।
इकः इत्येव ।
यक्षीष्ट, अयष्ट ।
सम्प्रसारणं हि स्याथ् ।
आत्मनेपदेषु इति किं ? अस्राक्षिथ् ।
अद्राक्षीथ् ।

सृजि-दृशोर्झल्य्-अम्-अकिति (*६,१.५८) इत्यम्-आगमो न स्याथ् ।
हल्-अन्तातित्येव ।
चेषीष्ट, अचेष्ट ।
गुणो न स्याथ् ।

[#३३]

झलित्येव वर्तिषीष्ट, अवर्तिष्ट ।
गुणो न स्याथ् ।

[#३४]

लिङ्-सिचौ इति किं ? द्वेष्टा द्वेक्ष्यति । ।

---

1. <उश्च># । । पाणिनीयसूत्र १,२.१२ । ।

_______काशिका १,२.१२:

ऋ-वर्ण-अन्ताद्धातोः परौ लिङ्-सिचौ आत्मनेपदेशु झल्-आदी कितौ भवतः ।
कृषीष्ट ।
हृषीष्ट ।
सिचः खल्वपि अकृत ।
अहृत ।
झलित्येव ।
वरिषीष्ट ।
अवरिष्ट ।
वृ-ऋतो वा (*७,२.३८) अवरीष्ट । ।

---

1. <वा गमः># । । पाणिनीयसूत्र १,२.१३ । ।

_______काशिका १,२.१३:

लिङ्-सिचावात्मनेपदेषु इति वर्तते ।
गमेर्-धातोः परु लिङ्-सिचौ आत्मनेपदेषु झल्-आदी वा कितौ भवतः ।
संगंसीष्ट, संगसीष्ट ।
सिचः खल्वपि -- समगंस्त, समगत ।
कित्त्वपक्षे अनुनासिक-लोपो भवति अनुदात्त-उपदेश-वनति-तनोत्य्-आदीनाम्(*६,४.३७) इति । ।

---

[#३५]

1. <हनः सिच्># । । पाणिनीयसूत्र १,२.१४ । ।

_______काशिका १,२.१४:

हन्तेर्धातोः परः सिच्किद्भवति ।
आहत, आहसाताम्, आहसत ।
सिचः कित्त्वादनुनासिक-लोपः ।
सिज्-ग्रहणं लिङ्-निवृत्त्य्-अर्थं ।
उत्तरत्र-अनुवृत्तिर्मा भूथ् ।
अत्मनेपद-ग्रहणं उत्तर-अर्थं अनुवर्तते ।
इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात्कित्त्वस्य प्रयोजनं न अस्ति । ।

---

1. <यमो गन्धने># । । पाणिनीयसूत्र १,२.१५ । ।

_______काशिका १,२.१५:

सिच आत्मनेपदेषु इति वर्तते ।
यमेर्धातोर्गन्धने वर्तमानात्परः सिच्प्रत्ययः किद्भवति आत्मनेपदेषु परतः ।
गन्धनं सूचनं, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणं ।
अनेक-अर्थत्वाद्धातूनां यमिस्तत्र वर्तते ।
उदयत, उदायसाताम्, उदायसत ।
सूचितवानित्यर्थः ।
सिचः कित्त्वादनुनासिक-लोपः ।
आङो यमहनः (*१,३.२८) इत्यात्मनेपदं ।
गन्धन इति किं ? उदायंस्त पादं ।
उदायंस्त कूपादुदकं ।
उध्दृतवानित्यर्थः ।
सकर्मकत्वेऽपि समुद्दाङ्भ्यो य्मोऽग्रन्थे (*१,३.७५) इत्यात्मनेपदं । ।

---

1. <विभाषा-उपयमने># । । पाणिनीयसूत्र १,२.१६ । ।

_______काशिका १,२.१६:

यमः सिज्-आत्मनेपदेषु इति वर्तते ।
यमेर्धातोः उपयमने वर्तमानात्परः सिच्-प्रत्ययओ विभाषा किद्भवति आत्मनेपदेषु परतः ।
उपायत कन्याम्, उपायंस्त कन्यां ।
उपायत भार्याम्, उपायंस्त भार्यां ।
उपयमनं स्वीकरणं, विवाहः, दारकर्म, पाणि-ग्रहणं इत्यर्थः ।
उपाद्यमः स्वकरणे (*१,३.५६) इत्यात्मनेपदं । ।

---

1. <स्थाघ्वोरिच्च># । । पाणिनीयसूत्र १,२.१७ । ।

_______काशिका १,२.१७:

सिज्-आत्मनेपदेषु इति वर्तते ।
तिष्ठतेर्धातोः घु-सञ्ज्ञकानां च इ-कारश्च अन्तादेशः सिच्च किद्भवति आत्मनेपदेषु परतः ।
उपास्थित, उपास्थिषाताम्, उपास्थिषत ।
घु-सञ्ज्ञकानं -- अदित ।
अधित ।
इच्च कस्य तकारेत्त्वं दीर्घो मा भूद्दतेऽपि सः ।
अनन्तरे प्लुतो मा भूत्प्लुतश्च विषये स्मृतः । ।

---

1. <न क्त्वा स-इट्># । । पाणिनीयसूत्र १,२.१८ । ।

_______काशिका १,२.१८:

क्त्वा प्रत्ययः सेण्न किद्भवति ।
देवित्वा ।
वर्तित्वा ।
सेटिति किं ? इकृत्वाऽ गुत्वाऽ क्त्वा-ग्रहणं किं ? निगृहीतिः ।
उपस्निहितिः ।
निकुचितिः ।

[#३६]

न सेडिति कृतेऽकित्त्वे निष्ठायां अवधारणाथ् ।
ज्ञापकान्-न प्रोक्षायां सनि झल्-ग्रहणं विदुः । ।
इत्त्वं कित्वंनिहोगेन रेण तुल्यं सुधीवनि ।
वस्व्-अर्थं किद्-अतीदेशान्नि गृहीतिः प्रयोजनं । ।

---

1. <निष्ठा शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः># ।। पाणिनीयसूत्र १,२.१९ ।।

_______काशिका १,२.१९:

न सेटिति वर्तते ।
शीङ्स्विदि मिदि क्ष्विदि धृषित्येतेभ्यः प्रो निष्ठा-प्रत्ययः सेण्न किद्भवति ।
शयितह्, शयित्वान् ।
प्रस्वेदितः, प्रस्वेदितवान् ।
प्रमेदितः, प्रमेदितवान् ।
प्रक्ष्वेदितह्, प्रक्ष्वेदितवान् ।
प्रधर्षितः प्रधर्षितवान् ।
सेटित्येव स्विन्नः, स्विन्नवान् ।
स्विद्-आदीनं आदितश्च (*७,२.१६) इति निष्ठायामिट्प्रतिषिध्यते ।
विभाषा भाव-आदिकर्मणोः (*७,२.१७) इति पक्षेऽभ्यनुज्ञायते स विषयः कित्त्व-प्रतिषेधस्य ।।

---

1. <मृषस्तितिक्षायाम्># ।। पाणिनीयसूत्र १,२.२० ।।

_______काशिका १,२.२०:

मृषेर्धातोः तितिक्षायां अर्थे निष्ठा सेण्न किद्भवति ।
तितिक्षा क्षमा ।
मर्षितः, मृषितवान् ।।
तितिक्षायां इति किं ? अपमृषितं वाक्यं आह ।।

---

1. <उदुपधाद्भाव-आदिकर्मणोरन्यतरस्याम्># ।। पाणिनीयसूत्र १,२.२१ ।।

_______काशिका १,२.२१:
निष्ठा सेण्न कितिति वर्तते ।
उदुपधाद्धातोः परो भावे आदिकर्मणि च वर्तमानो निष्ठा-प्रत्ययः सेड्-अन्यतरस्यां न किद्भवति ।
द्युतितत्मनेन, द्योतितमनेन ।
प्रद्युतितः, प्रद्योतितः मुदितमनेन, मोदितमनेन ।
प्रमुदितः, प्रमोदितः ।
उदुपधातिति किं ? लिखितमनेन ।
भाव-आदिकर्मणोः इति किम्? रुचितं कार्षापणं ददाति ।

सेटित्येव ।
प्रभुक्त ओदनः ।
व्यवस्थित-विभाषा च-इयं ।
तेन शब्-विकरणानां एव भवति ।
गुध परिवेष्टने, गुधितं इत्यत्र न भवति । ।

---

1. <पूङः क्त्वा च># । । पाणिनीयसूत्र १,२.२२ । ।

_______काशिका १,२.२२:

अन्यतरस्यां इति न स्वर्यते ।
उतर-सूत्रे पुनर्वा वचनाथ् ।
न सेटिति वर्तते ।
पूङश्च इट्विहितः किल्शः क्त्वा-निष्ठयोः (*७,२.५०), पूङश्च (*७,२.५१) इति ।
पूङः परो निष्ठा-प्रत्ययः इत्वा च सेण्न किद्भवति ।
पवितः, पवितवान् ।
क्त्वा-प्रत्ययसय न क्त्वा सेट्(*१,२.१८) इति सेद्ध एव प्रतिषेधः ।
तस्य ग्रहणमुत्तरार्थं ।
तथा च-उक्तं नित्यं अकित्त्वं इडाद्योः क्त्वा-निष्ठयोः क्त्वा-ग्रहणं उत्तर-अर्थं इति । ।

---

[#३७]

1. <न-उपधात्थ-फ-अन्ताद्वा># । । पाणिनीयसूत्र १,२.२३ । ।

_______काशिका १,२.२३:

निष्ठा इति निवृत्तं ।
निकार-उपधाद्धातोः थकारान्तात्फकरान्ताच्च परः क्त्वा प्रत्ययः सेड्व न किद्भवति ।
ग्रथित्वा, ग्रन्थित्व ।
श्रथित्वा, श्रन्थित्वा ।
गुफित्वा, गुम्फित्वा ।
न-उपधातिति किं ? रेफित्वा ।
गोफित्वा ।
थ-फ-अन्तातिति किं ? स्रंसित्व ।
ध्वंसित्वा । ।

---

1. <वञ्चि-लुञ्च्य्-ऋतश्च># । । पाणिनीयसूत्र १,२.२४ । ।

_______काशिका १,२.२४:

वञ्चि लुञ्चि ऋतित्येतेभ्यः परः क्त्वा प्रत्ययः सेड्वा न किद्भ्वति ।
वचित्वा, वञ्चित्व ।
लुचित्वा, ।
उञ्चित्वा ।
ऋतित्व, अर्तित्वा ।
ऋतेरीयङ्(*३,१.२९) आर्धधातुके विकल्पितः (*३,१.३१) ।
स यत्र पक्षे न अस्ति तत्र-इदं उदाहरणं ।
सेटित्येव ।
वक्त्वा । ।

---

1. <तृषि-मृषि-कृशेः काश्यपस्य># । । पाणिनीयसूत्र १,२.२५ । ।

_______काशिका १,२.२५:

न क्त्वा सेट्(*१,२.१८) इति प्रतिषेधे प्रापे कित्त्वं विकल्प्यते ।
तृषि मृषि कृशि इत्येतेभ्यः परः क्र्वा प्रत्ययः सेट्काश्यपस्य आचार्यस्य मते वा न किड्भवति ।
तृषित्वा, त्रिषत्वा ।
मृषित्व, म्रिषत्व ।
कृशित्व, कर्शित्वा ।
कश्यप-ग्रहणं पूज-अर्थं ।
वा इत्येव हि वर्तते । ।

---

1. <रलो व्-य्-उपधद्-धल्-आदेः संश्च># । । पाणिनीयसूत्र १,२.२६ । ।

_______काशिका १,२.२६:

वा इति वर्तते सेटिति च ।
उश्च इश्च वी ।
वी उपधेयस्य स व्यौपधः ।
उकार-उपध-अदिकार-उपधच्च धातो रलन्ताद्-धलादेः परः संश्च क्त्वा च सेटौ व कितौ भवतः ।

द्युतित्वा, द्योतित्वा ।
दिद्युतिषते, दिद्योतिषते ।
लिखित्वा, लेखित्वा ।
लिलिखिषति, लिलेखिषति ।
रलः इति किं ? देवित्वा, दिदेविषति ।
व्युपधातिति किं ? वर्तित्वा, विवर्तिषते ।
हलादेः इति किं ? एषित्व, एषिषिष्ति ।
सेटित्येव ।
भुक्त्वा, बुभुक्षते । ।

---

1. <ऊकालोऽज्-झ्रस्व-दीर्घ-प्लुतः># । । पाणिनीयसूत्र १,२.२७ । ।

_______काशिका १,२.२७:

ऊ इति त्रयाणां अयं मात्रिक-द्विमात्रिक-त्रिमात्रिकाणां प्रश्लिष्ट-निर्देशः ।
ह्रस्व-दीर्घ-प्लुतः इति द्वन्द्व-इकवद्भावे पुंल्लिङ्ग-निर्देशः ।
उ ऊ ऊ३ इत्येवं कालो अज्यथा-क्रमं ह्रस्व-दीर्घ-प्लुतः इत्येवं सञ्ज्ञो भवति ।
उकालो ह्रस्वः - दधि ।
मधु ।
ऊकालो दीर्घः - कुमारी ।
गौरी ।
ऊ३कालः प्लुतः - देवदत्त३ अत्र न्व्-असि ।
काल-ग्रहणं परिमाण-अर्थं ।
दीर्घ-प्लुतयोः ह्रस्व-सञ्ज्ञा मा भूथ् ।
आलूय, प्रलूय, ह्रस्वस्य पिति कृति तुक्(*६,१.७१) इति तुङ्न भवति ।

[#३८]
अज्-ग्रहणं संयोग-अच्-समुदाय-निवृत्त्य्-अर्थं ।
प्रतक्ष्य, प्ररक्ष्य, ह्रस्वाश्रयस्तुङ्मा भूथ् ।
तितौच्छात्रम्, दीर्घात्(*६,१.७५), पदान्ताद्वा (*६,१.७६) इति विभाषा तुङ्मा भूथ् ।
ह्रस्व-दीर्घ-प्लुत-प्रदेशाः -- ह्रस्वो नपुंसके प्रातिपदिकस्य (*१,२.४७) ।
अकृत्-सर्वधातुकयोर्दीर्घः (*७,४.२५) ।
वाक्यस्य टेः प्लुत उदात्तः (*८,२.८२) । ।

---

1. <अचश्च># । । पाणिनीयसूत्र १,२.२८ । ।

_______काशिका १,२.२८:

परिभाषा इयं स्थानि-नियम-अर्था ह्रस्व-दीर्घ-प्लुतः स्वसञ्ज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः ।
वक्ष्यति ह्रस्वो नपुंसके प्रातिपदिकस्य (*१,२.४७), रै--अतिरि ।
नौ--अतिनु ।
गो--उपगु ।
अचः इति किं ? सुवाग्ब्रह्मण-कुलं ।
अकृत्-सार्वधातुकयोर्दीर्घः (*७,४.२५) -- चीयते ।
श्रूयते ।
अचः इति किं ? भिद्यते ।
धिद्य्ते ।
वाक्यस्य टेः प्लुत उदात्तः (*७,२.८२) --देवदत्त३ ।
यज्ञदत्त३ ।
अचः इति किं ? अग्निचि३थ् ।
सोमसु३थ् ।
तकारस्य मा भूथ् ।
स्वसञ्ज्ञया वधाने नियमः ।
अचिति वर्तते ।
इह मा भूथ् ।
द्यौः पन्थाः ।
सः द्यौभ्यां ।
द्युभिः ।
अत्र नियमो न अस्ति । ।

---

1. <उच्चैरुदात्तः># । । पाणिनीयसूत्र १,२.२९ । ।

______काशिका १,२.२९:

अचिति वर्तते ।
उदात्त-आदि-शब्दाः स्वरे वर्णधर्मे लोक-वेदयोः प्रसिद्धा एव ।
ते इह तद्गुणेऽचि परिभाष्यन्ते ।
उच्चैरुपलभ्यमानो योऽच्स उदात्त-सञ्ज्ञो भवति ।
उच्चैः इति च श्रुति-प्रकर्षो न गृह्यते, उच्चैर्भाषते, उचैः पठति इति ।
किं तर्हि ? स्थान-कृतं उच्चत्वं सञ्ज्ञिनो विशेषणं ।
ताल्व्-आदिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते ।
तत्र यः समाने स्थाने ऊर्ध्व-भग-निष्पन्नोऽच्स उदात्त-सञ्ज्ञो भवति ।
यस्मिन्नुचार्यमाणे गात्राणामायामो निग्रहो भवति, रूक्षता अस्निग्धता स्वरस्य, संवृतता क्ण्ठविवरस्य ।
ये ।
ते ।
के ।
उदात्त-प्रदेशाः--आद्य्-उदात्तश्च (*३,१.३) इत्येवं आदयः । ।

---

1. <नीचैरनुदात्तः># । । पाणिनीयसूत्र १,२.३० । ।

_______काशिका १,२.३०:

अचिति वर्तते ।
नीचैरुपलभ्यमानो योऽच्सोऽनुदात्त-सञ्ज्ञो भवति ।
समाने स्थाने नीच-भागे निष्पन्नोऽचनुदात्तः ।
यस्मिन्नुच्चार्यमाणे गात्राणां अन्ववसर्गो मार्दवं भवति, स्वरस्य मृदुता स्निग्धता, कण्ठ-विवरस्य उरुता महत्ता ।
त्व सम सिम इत्यनुच्चानि ।
नमस्ते रुद्र नीलकण्ठ सहस्राक्ष ।
अनुदात्तप्रदेशाः- अनुदात्तौ सुप्-पितौ (*३,१.४) इत्येवं आद्यः । ।

---

[#३९]

1. <समाहारः स्वरितः># । । पाणिनीयसूत्र १,२.३१ । ।

_______काशिका १,२.३१:

अचिति वर्तते ।
उदात्त-नुदात्त-स्वर-समाहारो योऽच्स स्वरित-सञ्ज्ञो भवति ।
सामर्थ्याच्च अत्र लोक-वेदयोः प्रसिद्धौ गुणावेव वर्ण-धर्मावुदात्त-अनुदात्तौ गृह्येते, नाऽचौ ।
तौ समाह्रियेते यस्मिन्नचि तस्य स्वरितः इत्येषा संज्ञा विधीयते ।
शिक्यं ।
कन्या ।
सामन्यः ।
क्व ।
स्वरित-प्रदेशाः-- तित्स्वरितं (*६,१.१७५) इत्येवं आदयः । ।

---

1. <तस्य-आदित उदात्तं अर्ध-ह्रस्वम्># । । पाणिनीयसूत्र १,२.३२ । ।

_______काशिका १,२.३२:

उदात्त-अनुदात्त-स्वर-समाहारः स्वरितः इत्युक्तं ।
तत्र न ज्ञायते कस्मिन्नंशे उदात्तः कस्मिन्ननुदात्तः, कियान्वा उदात्तः कियान्वा अनुदात्तः इति ।
तद्-उभयं अनेन-आख्यायते ।
तस्य स्वरितस्य आदावर्ध-ह्रस्वं उदात्तम्, परिशिष्टं अनुदात्तं ।
अर्ध-ह्रस्वं इति च अर्धमात्र-उपलक्ष्यते ।
ह्रस्व-ग्रहणं अतन्त्रं ।

सर्वेषां एव ह्रस्व-दीर्घ-प्लुतानां स्वरितानां एष स्वर-विभागः ।
शिक्यं इत्यत्र अर्ध-मात्रा आदित उदात्त, अपर-अर्ध-मात्रा अनुदात्ता, एक-श्रौतिर्वा ।
कन्या इत्यत्र अर्ध-मात्रा आदित उदत्ता अध्यर्ध-मात्रा अनुदात्ता ।
माणवक३ माणवक (*८,२.१०३) इत्यत्र अर्ध-मात्रा आदित उदात्ता अर्ध-तृतीय-मात्रा अनुदात्ता । ।

---

1. <एक-श्रुति दूरात्सम्बुद्धौ># । । पाणिनीयसूत्र १,२.३३ । ।

_______काशिका १,२.३३:

त्रैस्वर्ये पदानां प्राप्ते दूरात्सम्बुद्धाव्-ऐकश्रुत्यं विधीयते ।
एका श्रुतिर्यस्य तदिदं एकश्रुति ।
एक-श्रुति वाक्यं भवति ।
दूरात्सम्बोधयति येन वाक्येन तत्सम्बोधनं सम्बुद्धिः ।
न एक-वचनं सम्बुद्धिः ।
स्वराणां उदात्तादीनां अविभागो भेदति रोधानं एकश्रुतिः ।
आगच्छ भो माणवक देवदत्त३ ।
दूरातिति किं ? आगच्छ भो माणवक देवदत्त । ।

---

1. <यज्ञ-कर्मण्य्-अजप-न्यूङ्ख-सामसु># । । पाणिनीयसूत्र १,२.३४ । ।

_______काशिका १,२.३४:

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते ।
तेषां यज्ञ-क्रियायां अपि तथ-इव प्रयोगे प्राप्ते एक-श्रुतिर्विधीयते जप-न्यूङ्ख-सामानि वर्जयित्वा ।
यज्ञ-कर्मणि मन्त्राणां ऐकश्रुत्यं भवति ।
अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयं ।
अपां रेतंसि जिन्वतो३ ।
यज्ञ-कर्मणि इति किं ? सम्पाठे मा भूथ् ।
अजपेष्व्-इति किं ? ममाग्ने वर्चो विहवेष्वस्तु ।
जपोऽनुकरण-मन्त्र उपांशु-प्रयोगः ।
अन्यूङ्खा-इति किं ? न्यूङ्खा ओकाराः षोडश ।
तेषु केचिदुदात्ताः केचिदनुदात्ताः ।

[#४०]

असामसु इति किं ? विश्वं समत्रिणं दह ।
सामानि वाक्य-विशेष-स्थगीतय उच्यन्ते ।
तत्र-इकश्रुतिर्न भवति । ।

---

1. <उच्चैस्तरां वा वषट्कारः># । । पाणिनीयसूत्र १,२.३५ । ।

_______काशिका १,२.३५:

यज्ञ-कर्मणि इति वर्तते ।
यज्ञ-कर्मणि वषट्कारः उच्चैस्तरां वा भवति एक-श्रुतिर्वा ।
वषट्-शब्देन अत्र वौषट्शब्दो लक्षयते ।
वौषटित्यस्य-इव-इदं स्वर-विधानं ।
यद्येवं वौषड्-ग्रहणं एव कस्मान्न कृतं ? वैचित्र्य-अर्थं ।
विचित्र हि सूत्रस्य कृतिः पाणिनेः ।
सोमस्य अग्ने वीही३षठ् ।
सोमस्य अग्ने वीही३ वौ३षट् । ।

---

1. <विभाषा छन्दसि># । । पाणिनीयसूत्र १,२.३६ । ।

_______काशिका १,२.३६:

छन्दसि विषये विभाषा एकश्रुतिर्भवति ।
पक्ष-अन्तरे त्रैस्वर्यं एव भवति ।
वा इति प्रकृते विभाषा-ग्रहनं यज्ञ-कर्मणि इत्यस्य निवृत्त्य्-अर्थं ।
तेन अयं स्वाध्याय-कालेऽपि पाक्षिक ऐकश्रुत्य-विधिर्भवति ।
इषे त्वोर्जे त्वा ।
इषे त्वोर्जे त्वा ।
अग्न आयाहि वीतये ।
अग्न आयाहि वीत्ये ।
अग्निमीले पुरोहितं ।
अग्निमीले पुरोहितं ।
शं नो देवीरभैष्टये ।
शं नो देवीरभैष्टये । ।

---

1. <न सुब्रह्मण्यायां स्वरितस्य तु उदात्तः># । । पाणिनीयसूत्र १,२.३७ । ।

_______काशिका १,२.३७:

सुब्रह्मण्या नाम निगदस्तत्र यज्ञ-कर्मणि इति विभाषा छन्दसि (*१,२.३६) इति च एकश्रुतिः प्राप्ता प्रतिषिद्यते ।
सुब्रह्मण्यायां एकश्रुतिर्न भवति ।
यस्तु लक्षण-प्राप्तः स्वरितस्तस्य-उदात्त आदेशो भवति ।
सुब्रह्मन्यों ।
इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष वृषणश्वस्य मेने ।
गौराव-स्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन् ।
अत्र सुब्रह्मण्यों इत्योकारस्तित्स्वरेण स्वरितस्तस्य-उदात्तो विधीयते ।
इन्द्र आगच्छ इत्यामन्त्रितं आद्य्-उदत्तं ।
द्वितीयो वर्णोऽनुदात्तः ।
उदात्तादनुदातस्य स्वरितः इति स्वरितः प्रसक्तस्तस्य अनेन-उदात्तः त्रियते ।
तदेवं इन्द्र आगच्छ इति चत्वार उदात्ताः ।
पश्चिम एकोऽनुदात्तः ।
हरिव आगच्छ इत्यनयैव प्रक्रियया चत्वार उदात्ताः द्वावनुदात्तौ ।
मेधातिथेः इति षष्ट्यन्तं परम-अमन्त्रितं अनुप्रविशति सुबामन्त्रिते पराङ्गवत्स्वरे (*२,१.२) इति ।
ततः सकलस्या मन्त्रिताद्य्-उदात्तत्वे इकृते द्वितीयं अक्षरं अनुदात्तं, तस्य उदात्तादनुदात्तस्य स्वरितः (*८,४.६६) इति स्वरितत्वे प्राप्ते इदम्-उदात्तत्वं विधीयते ।
तेन द्वावप्य्-उदात्तौ भवतः ।

[#४१]
शेषमन्-उदात्तं ।
वृषणश्वस्य मेने इति समानं पूर्वेण ।
गौरावस्कन्दिनिति तथ-इव द्वे आद्ये अक्षरे उदात्ते, शेषं अनुदात्तं ।
अहल्यायै जार इति सुबन्तस्य अमन्त्रित-अनुप्रवेशात्तद्वदेव स्वरः ।
द्वावुदात्तौ शेषं अनुदात्तं ।
कौशिकब्रह्मण इति समस्तमामन्त्रितमाद्य्-उदात्तं तत्र पूर्ववद्द्वावुदात्तौ शेषं अनुदात्तं ।
एवं गौतम-ब्रुवाण इति द्वावुदात्तौ शेषं अनुदात्तां ।
श्वः सुत्यामागच्छ मघवनिति श्वः-शब्द उदात्तः सुत्यां इत्यन्तोदात्तः ।
सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः (*३,३.९९) इति क्यपो विधाने उदात्तः इति वर्तते ।
अगच्छ इति द्व-उदात्तौ ।
अन्त्योऽनुदत्तः ।
मघवनिति पदात्परमामन्त्रितं निहन्यते । ।

---

1. <देव-ब्रह्मणोरनुदात्तः># । । पाणिनीयसूत्र १,२.३८ । ।

_______काशिका १,२.३८:

सुब्रह्मण्यायां एव देवा ब्रह्माणः इति पठ्यते, तत्र पूर्वेण स्वरितस्य+उदात्ते प्राअप्तेऽनेन-अनुदात्तो विधीयते ।
देव-ब्रह्मणोः स्वरितस्य अनुदात्त आदेशो भवति ।
देवा ब्रह्माण आगच्छत ।
द्वयोरपि पदयोरामन्त्रित-आद्य्-उदात्तत्वे शेषनिघाते च+उदात्तादनुदात्तस्य स्वरितः कृतस्तस्य-अनुदात्तो भवति । ।

---

1. <स्वरितात्संहितायां अनुदात्तानाम्># । । पाणिनीयसूत्र १,२.३९ । ।

_______काशिका १,२.३९:

एक-श्रुतिः इति वर्तते ।
संहितायं विशये स्वरितात्परेषां अनुदात्तानां एकश्रुतिर्भवति ।
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि ।
माणवक जटिलकाध्यापक क्व गमिष्यसि ।
इमं इत्यन्त-उदात्तं, मे इति अनुदात्तं विधि-काल एव निघात-विधानाथ् ।
तत्पुनः उदात्तादनुदातस्य स्वरितः (*८,४.६६) इति स्वरितं सम्पद्यते ।
तस्मात्स्वरितात्परेषां अनुदात्तानां गङ्गेप्रभृतीनां एकश्रुतिर्भवति ।
सर्व एते आमन्त्रित-निघातेन अनुदात्ताः ।
माणवक जटिलक इति प्रथमं आमन्त्रितमाद्युदात्तं, तस्य द्वितीयं अक्षरं स्वरितं, ततः परेषां अनुदात्तानां एकश्रुतिर्भवति ।
संहिता-ग्रहणं किं ? अवग्रहे मा भूथ् ।
इमं मे गङ्गे यमुने सर्स्वति । ।

---

1. <उदात्त-स्वरित-परस्य सन्नतरः># । । पाणिनीयसूत्र १,२.४० । ।

_______काशिका १,२.४०:

अनुदात्त-ग्रहणं अनुवर्तते ।
उदात्तः परो यस्मात्स उदात्तपरः स्वरितः परो यस्मात्स स्वरितपरः ।
उदात्तपरस्य स्वरितपरस्य च अनुदात्तस्य सन्नतर आदेशो भवति ।
अनुदात्ततरः इत्यर्थः ।
देवा मरुतः पृश्निमातरोऽपः ।
मातरः इत्यनुदात्तः ।
अपः इत्यन्त-उदात्तः ऊड्-इदं-पद्-आद्य्-अप्-पुम्-रै-द्युभ्यः (*६,१.१७१) इति ।
तत्र अनुदात्तयोरेकादेश ओकारोऽनुदात्तः तस्य-उदात्ते परभूते सन्नतर आदेशो भवति ।
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि ।
इकारोऽनुदात्तः ।
शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान्न निहन्यते, अनुदात्तं सर्वं अपादादौ (*८,१.१८) इति ।

[#४२]

तस्य प्रथमं अक्षरं उदात्तं तस्मिन्परभूते पूर्वस्य सरस्वति इति इकारस्य सन्नतर आदेशो भवति ।
माणवक जटिलकाद्यापक क्व गमिष्यसि ।
क्व इति स्वरितस्तस्मिन्परभूते क इति अनुदत्तस्तस्य सन्नतर आदेशो भवति । ।

---

1. <अपृक्त एक-अल्प्रत्ययः># । । पाणिनीयसूत्र १,२.४१ । ।

_______काशिका १,२.४१:

अपृक्तः इति इयं सञ्ज्ञा भवति एक-अल्यः प्रत्ययस्तस्य ।
असहाय-वाची एक-शब्दः ।
स्प्शोऽनुदके क्विन्(*३,२.५८) - धृतस्पृक् ।
भजो ण्विः (*३,२.६२) - अर्धभक् ।
पादभाक् ।
एक-अलिति किं ? दर्विः ।
जागृविः ।
प्रत्यय इति किं ? सुराः ।
अपृक्त-प्रदेशाः -- वेरपृक्तस्य (*६,१.६७) इत्येवं आद्यः । ।

---

1. <तत्पुरुषः समान-अधिकरणः कर्मधारयः># । । पाणिनीयसूत्र १,२.४२ । ।

_______काशिका १,२.४२:

तत्पुरुषः इति समास-विशेषस्य सञ्ज्ञां वक्ष्यति ।
स तत्पुरुषः समान-अधिकरण-पदः कर्मधारय-सञ्ज्ञो भवति ।
अधिकरण-शब्दोऽभिधेय-वाचि ।
समान-अधिकरणः समान-अभिधेयः ।
परमराज्यं ।
उत्तमराज्यं ।
अकर्मधारये राज्यं (*६,२.१३०) इत्युत्तरपद-आद्य्-उदात्तं न भवति ।
पाचकवृन्दारिका ।
तत्पुरुषः इति किं ? पाचिकाभार्यः ।
समान-अधिकरणः इति किं ? ब्राह्मण-राज्यं ।
कर्मधारय-प्रदेशाः - कर्मधारयेऽनिष्ठा (*६,२.४६) इत्येवं आदयः । ।

---

1. <प्रथमा-निर्दिष्टं समास उपसर्जनम्># । । पाणिनीयसूत्र १,२.४३ । ।

_______काशिका १,२.४३:

प्रथमया विभाक्त्या यन्निर्दिश्यते समास-शास्त्रे तदुपसर्जन-सञ्ज्ञं भवति ।
समासे इति समास-विधायि शास्त्रं गृह्यते ।
वक्ष्यति - द्वितीया श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्नैः (*२,१.२४) इति ।
द्विदीया-समासे द्वितीया इत्येतत्प्रथमा-निर्दिष्टं, तृतीया-समासे तृतीया इति, चतुर्थी-समासे चतुर्थी इति, पञ्चमी-समासे पञ्चमी इति, षष्ठी-समासे षष्ठी इति, सप्तमी-समासे सप्तमी इति ।
कष्ट-श्रितः ।
शङ्कुला-खण्डः ।
यूप-दारु ।
वृक-भयं ।
राज-पुरुषः ।
अक्ष-शौण्डः ।
उपसर्जन-प्रदेशाः - उपसर्जनं पूर्वं (*२,२.३०) इत्येवं आदयः । ।

---

1. <एक-विभाक्ति च अपूर्व-निपाते># । । पाणिनीयसूत्र १,२.४४ । ।

_______काशिका १,२.४४:

एक विभाक्तिर्यस्य तदिदं एक-विभाक्ति ।
समासे विधीयमाने यन्नियत-विभक्तिकं, द्वितीये सम्बन्धिनि बहुभिर्-विभक्तिभिर्युज्यमानेऽप्येकयैव विभक्त्या युज्यते तद्-उपसर्जन-सञ्ज्ञं भवति अपूर्व-निपाते, पूर्व-निपतं पूर्व-निपात-आख्यं उपसर्जन-कार्यं वर्जयित्वा ।

[#४३]

निरादयः क्रान्त्-आअद्य्-अर्थे पञ्चम्या ।
पूर्व-पदे नानाविभक्तिकेऽप्युत्तरपदं पञ्चम्यन्तं एव भवति ।
निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ।
निष्त्रान्तं कौशाम्ब्या निष्कौशाम्बिं ।
निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना ।
निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये ।
निष्क्रान्तात्कौशाम्ब्या निष्कौशाम्बेः ।
निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः ।
निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ ।
एवं निर्वाराणसिः ।
एकविभक्ति इति किं ? राजकुमारी ।
अपूर्व-निपाते इति किं ? न हि भवति कौशाम्बीनिः इति । ।

---

1. <अर्थवदधातुरप्रत्ययः प्रातिपदिकम्># । । पाणिनीयसूत्र १,२.४५ । ।

_______काशिका १,२.४५:

अभिधेय-वचनोऽर्थ-शब्दः ।
अर्थवच्-छब्द-रूपं प्रातिपदिक-सञ्ज्ञं भवति धातु-प्रत्ययौ वर्जयित्वा ।
डित्थः ।
कपित्थः ।
कुण्डं ।
पीठं ।
अर्थवतिति किं ? वनम्, धनं इति न अन्तस्य अवधेर्मा भूथ् ।
नलोपो हि स्याथ् ।
अधातुः इति किं ? हन्तेर्लङ् ।
अहन् ।
अलोपः स्यथ् ।
अप्रत्ययः इति किं ? काण्डे ।
कुड्ये ।
ह्रस्वो नपुंसके प्रातिपदिकस्य (*१,२.४७) इति ह्रस्वः स्याथ् ।
अनर्थकस्य अपि निपातस्य प्रातिपदिक-सञ्ज्ञा इष्यते ।
अध्यागच्छति ।
प्रलम्बते ।
प्रातिपदिक-प्रदेशाः -- ह्रस्वो नपुंसके प्रातिपदिकस्य (*१,२.४७) इत्येवं आद्यः । ।

---

1. <कृत्-तद्धित-समासाश्च># । । पाणिनीयसूत्र १,२.४६ । ।

_______काशिका १,२.४६:

कृतस्तद्धिताः समासाश्च प्रातिपदिक-सञ्ज्ञा भवन्ति ।
अप्रत्ययः इति पूर्वत्र पर्युदासत्कृदन्तस्य तद्धितान्तस्य च अनेन प्रातिपदिक-सञ्ज्ञा विधीयते ।
अर्थवत्-समुदयानां समास-ग्रहणं नियम-अर्थं ।
कृत्-- कारकः ।
हारकः ।
कर्ता ।
हर्त ।
तद्धितः -- औपगवः ।
कापटवः ।
समासः -- राज-पुरुषः ।
ब्राह्मण-कम्बलः ।
समास-ग्रहणस्य नियम-अर्थत्वाद्वाक्यस्य अर्थवतः सञ्ज्ञा न भवति । ।

---

1. <ह्रस्वो नपुंसके प्रातिपदिकस्य># । । पाणिनीयसूत्र १,२.४७ । ।

_______काशिका १,२.४७:

नपुंसक-लिङ्गेऽर्थे यत्प्रातिपदिकं वर्तते तस्य ह्रस्वो भवति आदेशः अलोऽन्यस्य अचः ।
अतिरि कुलं ।
अतिनु कुलं ।
नपुंसके इति किं ? ग्रामणीः ।
सेनानीः ।
प्रातिपदिकस्य इति किं ? काण्डे तिष्ठतः ।
कुड्ये तिष्ठतः ।
प्रातिपदिक-ग्रहण-सामर्थ्यतेक-आदेशः पूर्वस्य अन्तवन्-न भवति । ।

---

1. <गोस्त्रियोरुपसर्जनस्य># । । पाणिनीयसूत्र १,२.४८ । ।

_______काशिका १,२.४८:

प्रातिपदिकस्य इति वर्तते ।
गो इति स्वरूप-ग्रहणं स्त्री इति प्रत्यय-ग्रहणं स्वरितत्वाथ् ।
उपसर्जन-ग्रहणं तयोर्विशेषणं ।
गोरुपसर्जनस्य स्त्रीप्रत्यय-अन्तस्य+उपसर्जनस्य इति ।
ताभ्यां प्रातिपदिकस्य तदन्त-विधिः ।
उपसर्जन-गो-शब्दान्तस्य उपसर्जन-स्त्रीप्रत्यय-अन्तस्य च प्रातिपदिकस्य ह्रस्वो भवति ।

[#४४]

चित्रगुः ।
शबलगुः ।
स्त्रियाः -- निष्कौशाम्बिः ।
निर्वाराणसिः ।
अतिखट्वः ।
अतिमालः ।
उपसर्जनस्य इति किं ? राज-कुमारी ।
स्वरितत्वं किं ? अतितन्त्रीः ।
अतिलक्ष्मीः ।
अतिश्रीः । ।
ईयसो बहुव्रीहेः प्रतिषेधो वक्तवयः ।
बहु-श्रेयसी ।
विद्यमान-श्रेयसेई । ।

---

1. <लुक्तद्धित-लुकि># । । पाणिनीयसूत्र १,२.४९ । ।

_______काशिका १,२.४९:

स्त्री-ग्रहणं अनुवर्तते उपसर्जनस्य+इति च ।
पूर्वेण ह्रस्वत्वे प्राप्ते लुग्विधीयते ।
तद्धित-लुकि सति स्त्री-प्रत्ययस्य उपरूजनस्य लुग्भवति ।
पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः ।
दशेन्द्रः ।
पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः ।
आमलक्याः फलमामलकं ।
बदरं ।
कुवलं ।
तद्धित-ग्रहणं किं ? गार्ग्याः कुलं गार्गी-कुलं ।
लुकि इति किं ? गार्गीत्वं ।
उपसर्जनस्य इत्येव ।
अवन्ती ।
कुन्ती ।
कुरूः । ।

---

1. <इद्-गोण्याः># । । पाणिनीयसूत्र १,२.५० । ।

_______काशिका १,२.५०:

पूर्वेण लुकि प्राप्ते इकारो विधीयते ।
गोण्यास्-तद्धित-लुकि सति इकार-आदेशो भवति ।
पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः ।
दशगोणिः ।
इतिति योग-विभागः ।
पण्चभिः सूचीभिः क्रीतः पञ्च-सूचिः ।
दश-सूचिः ।
स च एवं विषय एव । ।

---

1. <लुपि युक्तवद्-व्यक्तिवचने># । । पाणिनीयसूत्र १,२.५१ । ।

_______काशिका १,२.५१:

लुपि इति लुप्-सन्ज्ञया लुप्तस्य प्रत्ययस्य अर्थ उच्यते।
तत्र लुपि युक्तवद्-व्यक्तिवचने भवतः।
युक्तवतिति निष्ठा-प्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते।
स हि प्रत्यय-अर्थं आत्मना युनक्ति।
तस्य युक्तवतो व्यक्तिवचने लुब्-अर्थे विधीयेते।
अथ वा युक्तः प्रकृत्य्-अर्थः प्रत्यय-अर्थेन सम्बद्धः, तस्मिन्न्-इव व्यक्तिवचने लुब्-अर्थे भवतः।
सप्तम्य्-अर्थे वतिः।
व्यक्तिवचने इति च लिङ्ग-सङ्ख्ययोः पूर्वाचर्य-निर्देशः, तद्-ईयं एव+इदं सूत्रं।
तथा च अस्य प्रत्याख्यानं भविष्यते, तदशिष्यं सञ्ज्ञा-प्रमाणत्वात्(*१,२.५३) इति।
व्यक्तिः -- स्त्री-पुम्-नपुंसकानि।
वचनं -- एकत्व-द्वित्व-बहुत्वानि।
पञ्चलाः क्षत्रियाः पुंलिङ्गा बहुवचन-विशयाः।
तेषां निवासो जनपदः।
यथा तेषु क्षत्रियेषु व्यक्तिवचने तद्वज्जनपदे भवतः।
पञ्चालाः।
कुरवः।
मगधाः।
मत्स्याः।
अङ्गाः।
वङ्गाः।
सुग्माः।
पुण्ड्राः।
लुपि इति किं? लुकि मा भूथ्।

[#४५]

लवणः सूपः।
लवणा यवागूः।
लवणं शाकं।
व्यक्तिवचने इति किं? शिरीषाणां अदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनं।
विभाषा-ओषधि-वनस्-पतिभ्यः (*८,४.६) इति णत्वं न भवति।
हरितक्यादिषु व्यक्तिः।
हरीतक्याः फलानि हरीतक्यः फलानि।
खलतिकादिषु वचनं।
खलतिकस्य पर्वतस्य अदूरभवानि वनानि खलतिकं वनानि॥

---

1. <विशेषणानां च अजातेः>#॥ पाणिनीयसूत्र १,२.५२॥

_______काशिका १,२.५२:

लुपि इति वर्तते ।
लुब्-अर्थस्य यानि विशेषणानि तेषां अपि च युक्तवद्व्यक्ति-वचने भवतः जातिं वर्जयित्वा ।
पञ्चालाः रमणीयाः, बह्वन्नाः, बहुक्षीरघृताः, बहुमाल्यफलाः ।
गोदौ रमणीयौ, बह्वन्नौ, बहुक्षीरघृतौ, बहुमाल्यफलौ ।
अजातेः इति किं ? पञ्चालाः जनपदः ।
गोदौ ग्रामः ।
जात्य्-अर्थस्य चायं युक्तवद्भाव-प्रतिषेधः ।
तेन जात्-इद्वारेण यानि विशेषणानि तेषां अपि युक्तवद्भावो न भवति ।
पञ्चालाः जनपदो रमणीयो, बह्वन्नः ।
गोदौ ग्रामो रमणीयो, बह्वन्नः इति ।
मनुष्यलुपि प्रतिषेधो वक्तव्यः ।
चञ्चा अभिरूपः ।
वर्ध्रिका दर्शनीयं ।।

---

1. <तदशिष्यं सञ्ज्ञा-प्रमाणत्वात्># ।। पाणिनीयसूत्र १,२.५३ ।।

_______काशिका १,२.५३:

ततिति प्रकृतं युक्तवद्भाव-लक्षणं निर्दिश्यते ।
तद्-अशिष्यं न वक्तव्यं ।
कस्मात्? सञ्ज्ञा-प्रमाणत्वाथ् ।
सञ्ज्ञा-शब्दा हि नानालिङ्ग-सङ्ख्याः प्रमाणं ।
पञ्चालाः, वरणा इति च, न+एते योग-शब्दाः ।
किं तर्हि ? जनपद्-आदीनां सञ्ज्ञा एताः ।
तत्र लिङ्गं वचनं च स्वभाव-संसिद्धं एव न यत्न-प्रतिपाद्यम्, यथा आपः, दाराः, गृहाः, सिकताः, वर्षाः इति ।।

---

1. <लुब्योग-अप्रख्यानात्># ।। पाणिनीयसूत्र १,२.५४ ।।

_______काशिका १,२.५४:

लुबप्यशिष्यः ।
योऽयं जनपदे लुप्(*४,२.८१), वरणा-आदिभ्यश्च (*४,२.८२) इति लुबुच्यते,

[#४६]

अयं न वक्तव्यः ।
किं कारणं ? योग-अप्रख्यानाथ् ।
न हि पञ्चाल वरणाः इति योगः सम्बधः प्रख्यायते ।

न-एतदुपलभामहे वृक्षयोगान्नगरे वरणाः इति ।
किं तर्हि ? सञ्ज्ञा एताः ।
तस्मादत्र तस्य निवासः (*४,२ ६९), अदूर-भवश्च (*४,२.७०) इति तद्धितो न+एव+उत्पद्यते, किं लुपो विधानेन । ।

---

1. <योग-प्रमाणे च तद्-अभावेऽदर्शनं स्यात्># । । पाणिनीयसूत्र १,२.७५ । ।

_______काशिका १,२.७५:

पञ्चाल-आदयः सञ्ज्ञा-शब्दाः, न योग-निमित्ताः इत्युक्तं ।
तच्-चावश्यं एव अभ्युपगन्तव्यं ।
योग-प्रमाणे हि तद्-अभावेऽदर्शनं स्याथ् ।
यदि पञ्चालादि-शब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात्ततस्तदभावेऽदर्शनं अप्रयोगः स्याथ् ।
दृश्यते च सम्प्रति वनैव क्षत्रिय-सम्बन्धेन जनपदेषु पञ्चालादि-शब्दाः, ततोऽवसीयते नायं योग-निमित्तकः ।
किं तर्हि ? रूढिरूपेणैव तत्र प्रवृत्तः इति । ।

---

1. <प्रधान-प्रत्यय-अर्थवचनं अर्थस्य अन्य-प्रमाणात्वात्># । । पाणिनीयसूत्र १,२.५६ । ।

_______काशिका १,२.५६:

अशिष्यं इति वर्तते ।
प्रधानं समासे किंचित्पदं, प्रत्ययस्तव्यदादिः ।
ताभ्यां अर्थ-वचनं अर्थ-अभिधानं अनेन प्रकारेण भवति इति पूर्व-आचार्यैः परिभाषितं ।
प्रधान-उपसर्जने च प्रधान-अर्थं सह ब्रूतः, प्रक्ति-प्रत्ययौ सहार्थं ब्रूतः इति ।
तत्पाणिनिराचर्यः प्रत्याचष्टे, अशिष्यं एततर्थस्य अन्यप्रमाणत्वातिति ।
अन्यः इति शास्त्र-अपेक्षया लोको व्यपदिश्यते ।
शब्दैरर्थ-अभिधानं स्वाभाविकं न पारिभषाकं अशक्यत्वाथ् ।
लोकत एव अर्थ-अवगतेः ।
यैरपि व्याकरणं न श्रुतं तेऽपि राज-पुरुषं आनय इत्युक्ते राजविशिष्टं पुरुषं आनयन्ति न राजनं न अपि पुरुष-मात्रं ।
औपगवं आनय इत्युक्ते उपगुविशिष्टं अपत्यं आनयन्ति, न+उपगुं न अप्यपत्य-मात्रं, न+उभौ ।
यश्च लोकतोऽर्थः सिद्धः किं तत्र यत्नेन । ।

---

1. <काल-उपसर्जने च तुल्यम्># । । पाणिनीयसूत्र १,२.५७ । ।

_______काशिका १,२.५७:

अशिष्यं इति वर्तते ।
काल-उपसर्जने च अशिष्ये ।
कस्मात्? अर्थस्य अन्यप्रमाणत्वाथ् ।
तुल्य-शब्दो हेत्व्-अनुकर्षण-अर्थः ।
अशिष्य-विशेषणं च-इतथ् ।
काल-उपसर्जने च तुल्यं अशिष्ये भवतः ।
इह अन्ये वैयाकरणाः काल-उपसर्जनयोः परिभाषां कुर्वन्ति ।
आन्याय्यादुत्थानादान्याय्याच्च संवेशनात्, एषोऽद्यतनः कालः ।
अपरे पुनराहुः ।
अहरुभयतोऽर्धरात्रं , एषोऽद्यतनः कालः इति ।
तथा+उपसर्जन-परिभाषां कुर्वन्ति अप्रधानं उपसर्जनं इति ।
तत्पाणिनिराचार्यः प्रत्याचष्टे लोकतोऽर्थवगतेः ।
यैरपि व्याकरणं न श्रुतं तेऽप्याहुरिदं अस्माभिरद्य कर्तव्यं इदं श्वः कर्तव्यं इदं हयः कृतं इति ।
न-इवं व्युत्पाद्यन्ते ।
तथा-उपसर्जनम्, वयमत्र गृहे ग्रामे वा उपसर्जनं अप्रधानं इति गम्यते ।
य्श्च लोकतोऽर्थः सिद्धः किं तत्र यत्नेन ।
यद्येवं पूर्वसूत्र एव काल-उपसर्जन-ग्रहणं कस्मान्न क्रियते ? किमर्थो योगविभागः ? प्रदर्शनार्थः ।
अन्यदप्येवं जातीयकमशिष्यं इति ।
तथा च पूर्वाचार्याः परिभषन्ते मत्वर्थे बहुव्रीहिः, पूर्वपद-अर्थ-प्रधानोऽव्ययीभावः, उत्तरपद-अर्थ-प्रधानस्तत्पुरुषह्, उभयपदार्थ-प्रधानो द्वन्द्वः इत्येवं आदि, तद्-अशिष्यं इति । ।

---

[#४७]

1. <जात्य्-आख्यायं एकस्मिन्बहुवचनं अन्यतरस्याम्># । । पाणिनीयसूत्र १,२.५८ । ।

_______काशिका १,२.५८:

अशिष्यं इति निवृत्तं ।
जातिर्नाम अयं एकोऽर्थः ।
तद्-अभिधाने एकवचनं एव प्राप्तं अत इदं उद्यते ।
जातेराख्या जात्य्-आख्या ।
जात्य्-आख्यायां एकस्मिन्नर्थे वहुवचनं अन्यतरस्यां भवति ।
जात्य्-अर्थो बहुवद्भवति इति यावथ् ।
तेन तद्विशेषणानां अजाति-शब्दानां अपि सम्पन्नादीनां बहुवचनं उपपद्यते ।
सम्पन्नो यवः, सम्पन्ना यवाः ।
सम्पन्नो व्रीहिः, सम्पन्ना व्रीहयः ।
पूर्ववया ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः ।
जाति-ग्रहणं किं ? देवदत्तः ।
यज्ञदत्तः ।
आख्यायां इति किं ? काश्यप-प्रतिकृतिः काश्यपः ।

भवत्ययं जाति-शब्दो न त्वनेन जातिराख्यायते ।
किं तर्हि ? प्रतिकृतिः ।
एकस्मिनिति किं ? व्रीहियवौ ।
सङ्ख्याप्रयोगे प्रतिषेधो वक्तव्यः ।
एको ब्रीहिः सम्पन्नः सुभिक्षं करोति । ।

---

1. <अस्मदो द्वयोश्च># । । पाणिनीयसूत्र १,२.५९ । ।

_______काशिका १,२.५९:

अस्मदो योऽर्थस्तस्य+एकत्वे द्वित्वे च बहुवचनं अन्यतरस्यां भवति ।
अहं ब्रवीमि , वयं व्रूमः ।
आवां ब्रूवः, वयं व्रूमः ।
सविशेषणस्य प्रतिषेधो वक्तव्यः ।
अहं देवदत्तो ब्रवीमि ।
अहं गार्ग्यो व्रवीमि ।
अहं पटुर्ब्रवीमि ।
युष्मदि गुरावेकेषां ।
त्वं मे गुरुः, यूयं मे गुरवः । ।

---

1. <फल्गुनी-प्रोष्ठपदानां च नक्षत्रे># । । पाणिनीयसूत्र १,२.६० । ।

_______काशिका १,२.६०:

चकारो द्वयोः इत्यनुकर्षण-अर्थः ।
फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च द्वयोर्नक्षत्रयोर्बहुवचनं अन्यतरस्यां भवति ।
कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः ।
कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः ।
नक्षत्रे इति किं ? पल्गुन्यौ मणविके । ।

---

1. <छन्दसि पुनर्वस्वोरेकवचनम्># । । पाणिनीयसूत्र १,२.६१ । ।

_______काशिका १,२.६१:

अन्यतरस्यां इत्यनुवर्तते ।
द्वयोर्द्विवचने प्राप्ते पुनर्वस्वोश्छन्दसि विषये एकवचनं अन्यतरस्यां भवति ।
पुनर्वसुर्नक्षत्रं अदितिर्देवता ।
पुनर्वसू नक्षत्रं अदितिर्देवता ।
नक्षत्रे इत्येव ।
पुनर्वसू माणवकौ ।
छन्दसि इति किं ? पुनर्वसू इति । ।

---

[#४८]

1. <विशाखयोश्च># । । पाणिनीयसूत्र १,२.६२ । ।

_______काशिका १,२.६२:

छन्दसि इति वर्तते ।
द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनं अन्यतरस्यां भवति ।
विशाखं नक्षत्रं इन्द्राग्नीं देवता ।
विशाखे नक्षत्रं इन्द्राग्नी देवता । ।

---

1. <तिष्य-पुनर्वस्वोर्नक्षत्र-द्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्># । । पाणिनीयसूत्र १,२.६३ । ।

_______काशिका १,२.६३:

छन्दसि इति निवृत्तं ।
निष्यः एकः, पुनर्वसू द्वौ, तेषं द्वन्द्वो बह्व्-अर्थः ।
तत्र बहुवचने प्राप्ते द्विवचनं विधीयते ।
निष्यपुनर्वस्वोः नक्षत्र-विषये द्वन्द्वे बहुवचन-प्रसङ्गो नित्यं द्विवचनं भवति ।
उदितौ तिष्य-पुनर्वसू दृश्येते ।
तिष्य-पुनर्वस्वोः इति किं ? विशाखानुराधाः ।
नक्षत्रे इति किं ? तिष्यश्च माणवकः, पुनर्वसू माणवकौ, तिष्य-पुनर्वसवो माणवकाः ।
ननु च प्रकृतं एव नक्षत्र-ग्रहणं किम्-अर्थं पुनरुच्यते ।
पर्यायाणां अपि यथा स्याथ् ।
तिष्य-पुनर्वसू ।
पुष्य-पुनर्वसू ।
सिद्ध्य-पुनर्वसू ।

द्वन्द्वे इति किं ? यस्तिष्यस्तौ पुनर्वसू येषां ते इमे तिष्य-पुनर्वसवः ।
उन्मुग्धाः तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते ।
तेन नक्षत्र-समास एव अयं ।
बहुवचनस्य इति किं ? एकवचनस्य मा भूथ् ।
निष्य-पुनर्वसु इदं इति ।
सर्वो द्वन्द्वो विभाषा एकवद्भवति इत्यस्य+एतद एव ज्ञापकं ।
नित्य-ग्रहणं विकल्प-निवृत्त्य्-अर्थं । ।

---

1. <ससूपाणां एकशेष एक-विभक्तौ># । । पाणिनीयसूत्र १,२.६४ । ।

_______काशिका १,२.६४:

समानं रूपं एषां इति सरूपाः ।
सरूपाणां शब्दानं एकविभक्तौ परत एकशेषो भवति ।
एकः शिष्यते तरे निवर्तन्ते ।
वृक्षश्च वृक्षश्च वृक्षौ ।
वृक्षश्च वृक्षश्च Vर्क्षश्च वृक्षाः ।
प्रत्यर्थं शब्द-निवेशान्न+एकेन अनेकस्य अभिधानं ।
तत्र अनेक-अर्थ-अभिधानेऽनेक-शब्दत्वं प्राप्तं तस्मादेकशेषः ।
सरुपाणां इति किं ? प्लक्षन्यग्रोधाः ।
रूप-ग्रहणं किं ? भिन्नेऽप्यर्थे यथा स्याथ् ।
अक्षाः ।
पादाः ।
माषाः ।
एकग्रहणं किं ? द्विबह्वोः शेषो मा भूथ् ।
शेषग्रहनं किं ? आदेशो मा भूथ् ।
एकविभक्तौ इति किं ? पयः पयो जरयति ।
ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि । ।

---

1. <वृद्धो यूना तल्-लक्षणश्चेद्-एव विशेषः># । । पाणिनीयसूत्र १,२.६५ । ।

_______काशिका १,२.६५:

शेषः इति वर्तते ।
यूना इति सहयोगे तृतीया ।
वृद्धो यूना सहवचने शिष्यते युवा निवर्तते ।
वृद्ध-शब्दः पूर्वाचार्य-सञ्ज्ञा गोत्रस्य अपत्यं अन्तर्हितं वृद्धं इति ।
वृद्ध-यूनोः सहवचने वृद्धः शिष्यते तल्-लक्षणश्चेदेव विशेषः ।

तदिति वृद्ध-यूनोर्निर्देशः ।
लक्षण-शब्दो निमित्त-पर्यायः ।
चेच्-छब्दो यद्यर्थे ।
एवकारोऽवधारणे ।
विशेषो वैरूप्यं ।
वृद्ध-युव-निमित्तकं एव यदि वैरूपयं भवति ततो वृद्धिः शिष्यते, युवा निवर्तते ।
समानायामाकृतौ वृद्ध-युव-प्रत्ययौ भिद्येते ।
गार्ग्यश्च गार्ग्याय्णश्च गार्ग्यौ ।
[#४९]

वत्स्यश्च वात्स्यायनश्च वात्स्यौ ।
वृद्धः इति किं ? गर्गश्च गार्ग्यायणश्च गर्गगार्गायणौ ।
यू ना इति किं ? गार्ग्यश्च गर्गश्च गार्ग्य-गर्गौ ।
तल्-लक्षणः इति किं ? गार्ग्य-वात्स्ययनौ ।
एवकारः किम्-अर्थः ।
भागवित्तिश्च भागवित्तिकश्च भागवित्ति-भागवित्तिकौ ।
कुत्सा सौवीरत्वं च भागवित्तिकस्य अपरो विशेषो विद्यते । ।

---

1. < स्त्री पुंवच्-च># । । पाणिनीयसूत्र १,२.६६ । ।

_______काशिका १,२.६६:

शेषः इति वर्तते, वृद्धो यूना इति च सर्वं स्त्री वृद्धा यूना सहवचने शिष्यते, तल्-लक्षणश्चेद्-एव विशेषो भवति ।
पुंसः इव अस्याः कार्यं भवति ।
स्त्र्य्-अर्थः पुम्-अर्थवद्भवति ।
गर्गी च गर्ग्यायणश्च गार्ग्यौ ।
वात्सी च वात्स्यायनश्च वात्स्यौ ।
दाक्षी च दाक्षायाणश्च दाक्षी । ।

---

1. <पुमान्स्त्रिया># । । पाणिनीयसूत्र १,२.६७ । ।

_______काशिका १,२.६७:

तल्-लक्षणश्चेद्-एव विशेषः इति वर्तते ।
वृद्धो यून इति निवृत्तं ।
स्त्रिया सहवचने पुमान्शिष्यते स्त्री निवर्तते ।
स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति ।
ब्राह्मणश्च मयूरी च कुक्कुटमयूर्यौ ।

एवकरः किम्-अर्थः ।
इन्द्रश्च इन्द्राणी च इन्द्रेन्द्राण्यौ ।
पुंयोगादाख्यायां (*४,१.४८) इत्यपरो विशेषः ।
पुमानिति किं ? प्राक्च प्राचि च प्राक्प्राच्यौ ।
प्राकित्यवययं अलिङ्गं । ।

---

1. <भ्रातृ-पुत्रौ स्वसृ-दुहितृभ्याम्># । । पाणिनीयसूत्र १,२.६८ । ।

_______काशिका १,२.६८:

यथा सङ्ख्यं भ्रातृ-पुत्र-शब्दौ शिष्येते सहवचने स्वसृ-दुहितृभ्यं ।
स्वस्रा सहवचने भ्रातृ-शब्दः शिष्यते ।
भ्राता च स्वसा च भ्रातरौ ।
दुहित्रा सहवचने पुत्र-शब्दः शिष्यते ।
पुत्रश्च दुहित च पुत्रौ । ।

---

1. <नपुंसकं अनपुंसकेन-एकवच्-च-अस्य-अन्यतरस्याम्># । । पाणिनीयसूत्र १,२.६९ । ।

_______काशिका १,२.६९:

तल्-लक्षणश्चेद्-एव विशेषः इति वर्तते ।
नपुंसक-अनपुंसक-मात्र-कृते विशेषेऽनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच्च अस्य कार्यं भवति अन्यतरस्यां ।
शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रं, तदिदं शुक्लं ।
तानि इमानि शुक्लानि ।
अनपुंसकेन इति किं ? शुक्लं च शुक्लं च शुक्लं च सुक्लानि ।
एकवच्च इति न भवति । ।

---

1. <पिता मात्रा># । । पाणिनीयसूत्र १,२.७० । ।

_______काशिका १,२.७०:

अन्यतरस्यां इति वर्तते, न एकवतिति ।
मात्रा सहवचने पितृ-शब्दः शिष्यतेऽन्यतरस्यां ।

माता च पिता च पितरौ, मता-पितरौ इति वा । ।

---

[#५०]

1. <श्वशुरः श्वस्रवा># । । पाणिनीयसूत्र १,२.७१ । ।

_______काशिका १,२.७१:

अन्यतरस्यां इति वर्तते ।
श्वस्त्वा सहवचने श्वशुर-शब्दः शिष्यते अन्यतरस्यां ।
श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वस्रू-श्वशुरौ इति वा । ।

---

1. <त्यद्-आदीनि सर्वैर्नित्यम्># । । पाणिनीयसूत्र १,२.७२ । ।

_______काशिका १,२.७२:

तय्द्-आदीनि शब्द-रूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यद्-आदिभिरन्यैश्च ।
सर्व-ग्रहणं सकल्य-अर्थं ।
नित्य-ग्रहनं विकल्प-निवृत्त्य्-अर्थं ।
स च देवदत्तश्च तौ ।
यश्च देवदत्तश्च यौ ।
त्यद्-आदीनां मिथो यद्यत्परं तत्तच्छिस्यते ।
स च यश्च यौ ।
यश्च कश्च कौ । ।

---

1. <ग्राम्य-पशु-सङ्घेष्वतरुणेशु स्त्री># । । पाणिनीयसूत्र १,२.७३ । ।

_______काशिका १,२.७३:

ग्राम्याणां पशूनां सङ्घाः ग्राम्य-पशु-सङ्घाः ।
एतेषु सहविवक्षायां स्त्री शिष्यते ।
पुमान्स्त्रिया (*१,२.६७) इति पुंसः शेषे प्राप्ते स्त्री-शेषो विधीयते ।

अतरुण-ग्रहणं सामर्थ्यात्पशु-विशेषनं।
गाव इमाः।
अजा इमाः।
ग्राम्य-ग्रहनं किं? रुरव इमे।
पुषता इमे।
पुशुषु इति किं? ब्राह्मणाः।
क्षत्रियाः।
सङ्घेषु इति किं? एतौ गवौ चरतः।
अतरुणेसु इति किं? वर्सा इमे।
वर्करा इमे।
अनेकशफेष्विति वक्तव्यं।
इह मा भूथ्।
अश्वा इमे।।

इति स्रीजयादित्यविरचितायं काशिकायां वृत्तौ प्रथमाध्यायस्य द्वितीयः पादः।।

---

[#५१]

1. <भूवादयो धातवः>#।। पाणिनीयसूत्र १,३.१।।

_______काशिका १,३.१:

भू इत्येवं आदयः शब्दाः क्रियावचना धातुसञ्ज्ञा भवन्ति।
भू - भवति।
एध - एधते।
स्पर्ध - स्पर्धते।
धातु-शब्दः पूर्वाचार्य-सञ्ज्ञा।
ते च क्रियावचनानां सञ्ज्ञां कृतवन्तः।
तदिह अपि पूर्वाचर्य-सञ्ज्ञाश्रयणात्क्रियावाचिनां एव भूवादीनां धातुसञ्ज्ञा विधीयते।
भूवादीनां वकारोऽयं मङ्गल-अर्थः प्रयुज्यते।
भूवो वार्थं वदन्ति इति भ्व्-अर्था वा वादयः स्मऋताः।।
धातुप्रदेशाः - धातोः (*३,१.९१) इत्येवं आदयः।।

---

1. <उपदेशेऽज्-अनुनासिक इत्>#।। पाणिनीयसूत्र १,३.२।।

_______काशिका १,३.२:

उपदिश्यतेऽनेन इत्युपदेशः शास्त्रवाक्यानि, सूत्रपाठः, खिलपाठश्च।
तत्र योऽचनुनासिकः स इत्सञ्ज्ञो भवति।

एध ।
स्पर्ध ।
प्रतिज्ञ-अनुनासिक्याः पाणिनीयाः ।
उपदेशे इति किं ? अभ्र आं अपः ।
अचिति किं ? अतो मनिन्-क्वनिब्-वनिपश्च (*३,२.७४) ।
अनुनासिकः इति किं ? सर्वस्य अचो मा भूथ् ।
इत्-प्रदेशाः - आद्-इतश्च (*७,२.१६) इत्येवं आदयः । ।

---

1. <हल्-अन्त्यम्># । । पाणिनीयसूत्र १,३.३ । ।

_______काशिका १,३.३:

उपदेशे इति वर्त्ते ।
अन्ते भवं अन्त्यं ।
धात्वादेः समुदायस्य यद्-अन्त्यं हल्, तदित्सञ्ज्ञं भवति ।
ऐउण्- णकारः ।
ऋलृक्- ककारः ।
एओङ्- ङकरः ।
ऐऔच्- चकारः ।
उपदेशे इत्येव ।
अग्निचिथ् ।
सोमसुथ् ।
हस्य ल्हलिति द्वितीयं अत्र हल्-ग्रहणं तन्त्रेण+उपात्तं द्रष्टव्यं ।
तेन प्रत्याहार-पाठे हलित्यत्र लकारस्य इत्सञ्ज्ञा क्रियते ।
तथा च सति हलन्त्यं इत्यत्र प्रत्याहारे न+इतरेतराश्रय-दोषो भवति । ।

---

1. <न विभक्तौ तुस्माः># । । पाणिनीयसूत्र १,३.४ । ।

_______काशिका १,३.४:

पूर्वेण प्राप्तायमित्सञ्ज्ञायां विभाक्तौ वर्तमानानां तवर्ग-सकार-मकरणां प्रतिषेध उच्यते ।
तवर्गः, टा-ङसि-ङसां इन-आत्-स्याः (*७,१.१२) - वृक्षात्, प्लक्षाथ् ।
सकारः, जस्- ब्राह्मणाः ।

[#५२]

तस्- पचतः ।
थस्- पचथः ।
मकारः - उपचत्ताम्, अपचतं ।

बिभक्तौ इति किं ? अचो यत्(*३,१.९७), ऊर्णाया युस्(*५,२.१२३), रुधादिभ्यः श्नं (*३,१.७८) ।
किमोऽत्(*५,३.१२), इटोऽत्(*३,४.१०६) इत्यत्र प्रतिषेधो न भ्वति , अनित्यत्व-आदस्य प्रतिषेधस्य ।
इदमस्थमुः (*५,३.२४) इत्युकार-अनुबन्ध-निर्देशादनित्यत्वं उपलक्ष्यते । ।

---

1. <आदिर्ञि-टु-डवः># । । पाणिनीयसूत्र १,३.५ । ।

_______काशिका १,३.५:

इतिति वर्तते ।
आदि-शब्दः प्रतेकं अभिसम्बध्यते ।
ञि-टु-डु इत्येतेषां समुदयानां आदितो वर्तमानानां इत्य्सञ्ज्ञा भवति ।
ञि, ञिमिदा - मिन्नः ।
ञिधृषा - धृष्टः ।
ञिक्ष्विदा - क्ष्विण्णः ।
ञीन्धी - इद्धः ।
टु, टुवेपृ - वेपथुः ।
टुओश्वि - श्वयथौः ।
डु, डुपचष्- पक्त्रिमं ।
डुवप्- उप्त्रिमं ।
डुकृञ्कृत्रिमं ।
आदिः इति किं ? प्टूयति ।
क्ण्डूयति ।
उपदेषे इत्येव - ञिकारीयति । ।

---

1. <षः प्रत्ययसय># । । पाणिनीयसूत्र १,३.६ । ।

_______काशिका १,३.६:

षकारः प्रत्ययसय आदिः इत्सञ्ज्ञः भवति ।
शिल्पिनि ष्वुन्(*३,१.१४५) - नर्तकी, रजकी ।
प्रत्ययस्य इति किं ? षोडः, षण्डः, षडिकः ।
आदिः इत्येव - अविमह्योष्टिषच्- अविषः, महिषः । ।

---

1. <दुटू># । । पाणिनीयसूत्र १,३.७ । ।

_______काशिका १,३.७:

चवर्ग-टवर्गौ प्रत्ययस्यादी इत्सञ्जौ भवतः ।
गोत्रे कुञ्ज-आदिभ्यश्च्फः (*४,१.९८) - कौञ्जायनः ।
छस्य ईय-अदेशं वक्ष्यति ।
जस्- ब्राह्मणाः झस्य अन्त-आदेशं वक्ष्यति ।
शण्डिक-आदिभ्यो ञ्यः (*४,३.९२) - शाण्डिक्यः ।
तवर्गः, चरेष्टः (*३,२.१६) - कुरुचरी, मद्रचरी ।
ठस्य इक्-आदेशं वक्ष्यति ।
सप्तम्यां जनेर्डः (*३,२.९७) -उपसरजः, मन्दुरजः ।
ढस्य एय्-आदेशं वक्ष्यति ।
अन्नाण्-णं (*४,४.८५) - आन्नः ।
पृथग्योगकरणं अस्य विधेरनित्यत्वज्ञापन-अर्थं ।

[#५३]

तेन वित्तश्चुञ्चुप्-चणपौ (*५,२.२६) - केशचुञ्चुः, केशचणः ।
अवात्कुटारच्च (*५,२.३०), नते नासिकायाः सञ्ज्ञायां टिटञ्-नाट्ज्-भ्रटचः (*५,२.३१) - अवटीतः ।
आदिः इत्येव ।
कर्मणि घटोऽठच्(*५,२.३५) - कर्मठः । ।

---

1. <ल-श-क्वतद्धिते># । । पाणिनीयसूत्र १,३.८ । ।

_______काशिका १,३.८:

तद्धित-वर्जितस्य प्रत्ययस्यादितो वर्तमाना लकार-शकार-कवर्गा इत्सञ्ज्ञा भवन्ति ।
लकरः, ल्युट्च (*३,३.११५) - चयनम्, जयनं ।
शकारः, कर्तरि शप्(*३,१.६८) - भवति, पचति ।
कवर्गः, क्तक्तवतू निष्ठा (*१,१.२६) - भुक्तः, भुक्तवथ् ।
प्रिय-वशो वदः खच्(*३,२.३८) - प्रियंवदः, वशंवदः ।
ग्ला-जि-स्थश्च ग्स्नुः (*३,२.१३९) - ग्लास्नुः, जिष्णुः, भूष्णुः ।
भञ्ज-भास-मिदो घुरच्(*३,२.१६१) - भुअङ्गुरं ।
टा-ङसिङसां इन-आत्-स्याः (*७,१.१२) - वृक्षात्, वृक्शस्य ।
अतद्धिते इति किं ? चूढालः ।
लोमशः ।
कर्णिका । ।

---

1. <तस्य लोपः># । । पाणिनीयसूत्र १,३.९ । ।

_______काशिका १,३.९:

तस्य इत्सञ्ज्ञकस्य लोपो भवति ।
तथा च+एव+उदाहृतं ।
तस्य ग्रहणं सर्वलोप-अर्थम्, अलोऽन्त्यसय्(*१,१.५२) मा भूतादिर्ञिटुडवः (*१,३.५) इति । ।

---

1. <यथा-सङ्ख्यं अनुदेशः समानाम्># । । पाणिनीयसूत्र १,३.१० । ।

_______काशिका १,३.१०:
सङ्ख्या-शब्देन क्रमो लक्ष्यते ।
यथा-सङ्ख्यं यथा-क्रमं अनुदेशो भवति ।
अनुदिश्यते इति अनुदेशः ।
पश्चादुच्चार्यते इत्यर्थः ।
समानां समसङ्ख्यानं समपरिपहितानां उद्देशिनां अनुदेशिनां च यथा-क्रममौद्देशिभिरनुदेशिनः सम्बध्यन्ते ।
तूदी-शलातुर-वर्मती-कूचवाराड्ढक्-छण्-ढञ्-यकः (*४,३.९४) ।
प्रथमात्प्रथमः, द्वितीयाद्द्वितीयः इत्यादि ।
तौदेयः ।
शालातुरीयः ।
वार्मतेयः ।
कौचवार्यः ।
समानां इति किं ? लक्षण-इत्थम्-भूत-आख्यान-भाग. वीप्सासु प्रति-पर्य्-अनवः (*१,४.९०) ।
लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्त्रयः, सर्वेषं सर्वत्र कर्मप्रवचनीय-सञ्ज्ञा भवति ।
इह कस्मान्न भवति वेशो-यश-आदेर्भगाद्यल्(*४,४.१३१) ख च (*४,४.१३२) इति ? स्वरितेन लिङ्गेन यथा-सङ्ख्यं ।
यत्र एष्यते, तत्र स्वरितत्वं न प्रतिज्ञायते ।
स्वरितेन अधिकारः (*१,३.११) इति स्वरित-ग्रहणं पूर्वेण अपि सम्बध्यते । ।

---

1. <स्वरितेन अधिकारः># । । पाणिनीयसूत्र १,३.११ । ।

_______काशिका १,३.११:

स्वरितेन इति इत्थं भूत-लक्षणे तृतीया ।
स्वरितो नाम स्वर-विशेषो वर्ण-धर्मः ।
तेन चिह्णेन अधिकारो विदितव्यः ।
अधिकारो विनियोगः ।
स्वरित-गुण-युक्तं शब्दरूपं अधिकृतत्वादुत्तरत्र+उपतिष्ठते ।

प्रतिज्ञा-स्वरिताः पाणिनीयाः ।
प्रत्ययः (*३,१.१) ।
धातोः (*३,१.९१) ।
ञ्य्-आप्-प्रातिपदिकात्(*४,१.१) ।
अङ्गस्य (*६,४.१) ।
भस्य (*६,४.१२९) ।
पदस्य (*८,१.१६) ।।

---

[#५४]

1. <अनुदात्तङित आत्मनेपदम्># ।। पाणिनीयसूत्र १,३.१२ ।।

_______काशिका १,३.१२:

अविशेषेण धातोरात्मनेपदं पस्मैपदं च विधास्यते, तत्र अयं नियमः क्रियते ।
अनुदात्त-इतो ये धतवो ङितश्च, तेभ्य एव आत्मनेपदं भवति न अन्येभ्यः ।
अनुदत्तेद्भ्यः, आस - आसते ।
वस - वस्ते ।
ङिद्भ्यः खल्वपि, षूङ्- सूते ।
शीङ्- शेते ।।

---

1. <भाव-कर्मणोः># ।। पाणिनीयसूत्र १,३.१३ ।।

_______काशिका १,३.१३:

लः कर्मणि च भावे च अकर्मकेभ्यः (*३,४.६९) इति भाव-कर्मणोर्विहितस्य लस्य तिब्-आदयः सामान्येन वक्ष्यन्ते ।
तत्र-इदं उच्यते, भावे कर्मणि च आत्मनेपदं भवति ।
भावे - ग्लाय्ते भवता, सुप्यते भवता, आस्यते भवता ।
कर्मणि - क्रियते कटः, ह्रियते भारः ।
कर्मकर्तरि, लूयते केदारः स्वयं एव इति, परस्मैपदं न भवति ।
तस्य विधाने द्वितीयं कर्तृ-ग्रहणं अनुवर्तते ।
तेन कर्तिव यः कर्ता तत्र प्रस्मैपदं भवति ।।

---

1. <कर्तरि कर्म-व्यतिहारे># ।। पाणिनीयसूत्र १,३.१४ ।।

_______काशिका १,३.१४:

कर्म-शब्दः क्रियवाची।
व्यतिहारो विनिमयः।
यत्र-अन्य-सम्बन्धिनीं क्रियामन्यः करोति, इतर-सम्बन्धिनीं चेतरः, स कर्म-व्यतिहारः।
तद्विशिष्ट-क्रियावचनाद्धातोरात्मनेपदं भवति।
व्यतिलुनते।
व्यतिपुनते।
कर्म-व्यतिहारे इति किं? लुनन्ति।
कर्तृ-ग्रहणं उत्तर-अर्थं शेषात्कर्तरि परस्मैपदं (*१,३.७८) इति।।

---

1. <न गति-हिंसा-अर्थेभ्यः>#।। पाणिनीयसूत्र १,३.१५।।

_______काशिका १,३.१५:

पूर्वेण आत्मनेपदं प्राप्तं प्रतिषिद्यते।
गत्य्-अर्थेभ्यो हिंसा-अर्थेभ्यश्च धातुघ्यः कर्म-व्यतिहरे आत्मनेपदं न भवति।
व्यतिगच्छन्ति।
व्यतिसर्पन्ति।
हिंसा-अर्थेभ्यः -- व्यतिहिंसन्ति।
व्यतिघ्नन्ति।
प्रतिषेधे हसादीनां उपसङ्ख्यनं।
व्यतिहसन्ति।
व्यतिजल्पन्ति।
व्यतिपठन्ति।
हरतेरप्रतिषेधः।
संप्रहरन्ते राजानः।।

---

1. <इतरेतर-अन्योन्य-उपपदाच्च>#।। पाणिनीयसूत्र १,३.१६।।

_______काशिका १,३.१६:

इतरेतरः, अन्योन्यः इत्येवं उपपदाद्धातोः कर्म-व्यतिहारे आत्मनेपदं न भवति।
इतरेतरस्य व्यतिलुनन्ति।
अन्योन्यस्य व्यतिलुनन्ति।

[#५५]

परस्पर-उपपदाच्च+इति वक्तव्यं ।
पर्स्परस्य व्यतिलुनन्ति । ।

---

1. <नेर्विशः># । । पाणिनीयसूत्र १,३.१७ । ।

_______काशिका १,३.१७:

शषात्कर्तरि पर्स्मैपदं (*१,३.७८) इति प्रस्मैपदे प्राप्ते नि-पूर्वाद्विश आत्मनेपदं विधीयते ।
नेः परस्माद्विश आत्मनेपदं भवति ।
निविशते ।
निविशन्ते ।
नेः इति किं ? प्रविशति ।
य-दागमास्तद्-ग्रहणेन गृह्यन्ते तेन अटा न अस्ति व्यवधानं ।
न्यविशत ।
नेरुपसर्गस्य ग्रहणम्, अर्थवद्-ग्रहने न अनर्थकस्य ग्रहणं इति ।
तस्मादिह न भवति, मधुनि विशान्ति भ्रमराः । ।

---

1. <परिव्य्-अवेभ्यः क्रियः># । । पाणिनीयसूत्र १,३.१८ । ।

_______काशिका १,३.१८:

डुक्रिञ्द्रव्य-विनिमये ।
ञित्वात्कर्त्र्-अभिप्राये क्रियाफले सिद्धं आत्मनेपदं ।
अकर्त्र्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
परिव्यवेभ्य उत्तरस्मात्क्रीणातेरात्मनेपदं भवति ।
परिक्रीणीते ।
विक्रीणीते ।
अवक्रीणीते ।
पर्यादय उपसर्गा गृह्यन्ते तेन+इह न भवति, वहुवि क्रीणाति वनं । ।

---

1. <विपराभ्यां जेः># । । पाणिनीयसूत्र १,३.१९ । ।

_______काशिका १,३.१९:

शेषात्कर्तरि परस्मैपदं (*१,३.७८) इत्यस्य अपवादः ।
विपरा पूर्वाज्जयतेर्धातोरात्मनेपदं भवति ।
विजयते ।
पराजयते ।
विपरा-शब्दावुपसर्गौ गृह्येते साहचर्यथ् ।
तेन+इह न भवति, बहुवि जयति वनम्, परा जयति सेना इति । ।

---

1. <अङो दोऽनास्य-विहरणे># । । पाणिनीयसूत्र १,३.२० । ।

_______काशिका १,३.२०:
अकर्त्र्-अभिप्रायर्थोऽयं आरम्भः ।
आङ्-पूर्वाद्ददातेरनास्य-विहरणे वर्तमानादात्मनेपदं भवति ।
विध्यामादत्ते ।
अनास्य-विहरणे इति किं ? आस्यं व्याददाति ।
आस्य-विहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः ।
विपादिकां व्याददाति ।
कुलं व्याददाति ।
स्वाङ्गकर्मकाच्च+इति वक्तव्यं ।
इह मा भूत्, व्याददते पिपीलिकाः पतङ्गस्य मुखं । ।

---

[#५६]

1. <क्रीडोऽनु-सं-परिभ्यश्च># । । पाणिनीयसूत्र १,३.२१ । ।

_______काशिका १,३.२१:

क्रीडृ विहारे, एतस्मादनु सं परि इत्येवं पूर्वादाङ्-पूर्वाच्च-आत्मनेपदं भवति ।
अनुक्रीडते ।
सङ्क्रीडते ।
परिक्रीडते ।
आङः खल्वपि, आक्रीडते ।
समा साहचर्यादन्वादिरुपसर्गो गृह्यते, तेन+इह कर्मप्रवचनीय-प्रयोगे न भवति, माणवक-मनु क्रीडति ।
समोऽकूजने इति वक्तव्यं ।
सङ्क्रीडन्ति शकटानि ।

आगमेः क्षमायां आत्मनेपदं वक्तव्यं ।
क्षमा उपेक्षा, कालहरणं इति यावथ् ।
आगमयस्व तावन्माणवकं ।
शिक्षेर्जिज्ञासायां ।
विद्यासु शिक्षते ।
आशिषि नाथः ।
सर्पिषो नाथते ।
मधुनो नाथते ।
आशिषि इति किं ? माणवकमनुनाथति ।
हरतेर्गतताच्छील्ये ।
पैतृकमश्वा अनुहरन्ते ।
मातृकं गावोऽनुहरन्ते ।
गतताच्छील्ये इति किं ? मातुरनुहरति ।
किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यं ।
अपस्किरते वृषभो हृष्टः ।
जीविकायां - अपस्किरते कुक्कुटो भक्षार्थी ।
कुलायकरणे -- अपस्किरते श्वा आश्रयार्थी ।
हर्षादिषु इति किं ? अपकिरति कुसुमं ।
आङि नुप्रच्छयोरुपसङ्ख्यानं ।
आनुते सृगालः ।
आपृच्छते गुरुं ।
शप उपलम्भन इति वक्तव्यं ।
वाचा शरीर-स्पर्शनं उपलम्भनं ।
देवदत्ताय शपते ।
यज्ञदत्ताय शपते ।
उपलम्भने इति किं ? शपति । ।

---

[#५७]

1. <समवप्रविभ्यः स्थः># । । पाणिनीयसूत्र १,३.२२ । ।

_______काशिका १,३.२२:

सं अव प्र वि इत्येवं पूर्वात्तिष्ठतेरात्मनेपदं भवति ।
संतिष्ठते ।
अवतिष्ठते ।
वितिष्ठते ।
आङः स्थः प्रतिज्ञाने इति वक्तव्यं ।
अस्तिं सकारं आतिष्ठते ।
आगमौ गुण-वृद्धी आतिष्ठते । ।

---

1. <प्रकाशन-स्थेय-आख्यहोश्च># । । पाणिनीयसूत्र १,३.२३ । ।

_______काशिका १,३.२३:

स्वाभिप्रायकथनं प्रकाशनं ।
स्थेयस्य आख्या स्थेयाख्या ।
तिष्ठत्यस्मिन्निति स्थेयः ।
विवादपदनिर्णेता लोके स्थेयः इति प्रसिधः ।
तस्य प्रतिपत्त्य्-अर्थं आख्या-ग्रहणं ।
प्रकाशने स्थेय-आख्यायां च तिष्ठतेरात्मनेपदं भवति ।
प्रकाशने तावत्-- तिष्ठते कन्या धात्रेभ्यः ।
तिष्ठते वृषली ग्राम-पुत्रेभ्यः ।
प्रकाशयत्यात्मानं इत्यर्थः ।
स्थेय-आख्यायां -- त्वयि तिष्ठते ।
मयि तिष्ठते ।
संशय्य कर्णादिषु तिष्ठते यः । ।

---

1. <उदोऽनूर्ध्व-कर्मणि># । । पाणिनीयसूत्र १,३.२४ । ।

_______काशिका १,३.२४:

उत्पूर्वात्तिष्ठतेरनूर्ध्व-कर्मणि वर्तमानादात्मनेपदं भवति ।
कर्मशब्दः क्रियावाची ।
अनूर्ध्वताविशिष्टक्रियावचनात्तिष्ठतेरात्मनेपदं भवति ।
गेहे उतिष्ठते ।
कुटुम्बे उत्तिष्ठते ।
तद्-अर्थं यतते इत्यर्थः ।
उद ईहायां इति वक्तव्यं ।
इह मा भूत्, अस्माद्ग्रामात्शतं उत्तिष्ठति ।
शतं उत्पद्यते इत्यर्थः ।
ईहग्रहणं अनूर्ध्व-कर्मण एव विशेषनं, न अपवादः ।
अनूर्ध्व-कर्मणि इति किं ? आसनादुत्तिष्ठति । ।

---

1. <उपान्मन्त्र-करणे># । । पाणिनीयसूत्र १,३.२५ । ।

_______काशिका १,३.२५:

उपपूर्वात्तिष्थतेर्मन्त्रकरणेऽर्थे वर्तमानादात्मनेपदं भवति ।
ऐन्द्र्या गार्हपत्यं उपतिष्ठते ।
आग्नेय्या आनीघ्रं उपतिष्ठते ।
मन्त्रकरणे इति किं ? भर्तारं उपतिष्ठति यौवनेन ।
उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वाच्यं ।
देवपूजायां --आदित्यं उपतिष्ठते ।
सङ्गतकरणे -- रथिकानुपतिष्ठते ।
मित्रकरणे -- महामात्रानुपतिष्ठते ।
मित्रकरणसङ्गतकरणयोः को विशेषः ? सङ्गतकरणं उपश्लेषः ।
तद्-यथा, गङ्गा यमुनां उपतिष्थते ।
मित्रकरणं तु विनाप्युपश्लेषेण मैत्रीसं Bन्धः ।
पथि - अयं पन्थाः स्त्रुघ्नं उपतिष्ठते ।

[#५८]

वा लिप्सायामिति वक्तव्यं ।
भिक्षुको ब्राह्मण-कुलं उपतिष्थते, उपतिष्ठति इति वा । ।

---

1. <अकर्मकाच्च># । । पाणिनीयसूत्र १,३.२६ । ।

_______काशिका १,३.२६:

उपातिति वर्तते ।
उपपूर्वात्तिष्ठतेरकर्मकातकर्मक-क्रियावचनादात्मनेपदं भवति ।
यावद्भुक्तं उपतिष्ठते ।
यावदोदनुं उपतिष्ठते ।
भुक्तं इति भावे क्त-प्रत्ययः ।
भोजने भोजने सन्निधीयते इत्यर्थः ।
अकर्मकातिति किं ? राजानं उपतिष्ठति । ।

---

1. <उद्-विभ्यां तपः># । । पाणिनीयसूत्र १,३.२७ । ।

_______काशिका १,३.२७:

अकर्मकातिति वर्तते ।
उत्वि इत्येवं पूर्वात्तपतेरकर्मक-त्रियावचनादात्मनेपदं भवति ।
उत्तपते ।
वितपते ।
दीप्यते इत्यर्थः ।
अकर्मकातित्येव ।
उत्तपति सुवर्णं सुवर्ण-कारः ।
वितपति पृथ्वीं सविता ।
स्वाङ्गकर्मकाच्च+इति वक्तव्यं ।
उत्तपते पाणिम्, उत्तपते पृष्ठं ।
वितपते पाणिम्, वितपते पृष्ठं ।
स्वाङ्गं च+इह न पारिभाषिकं गृह्यते अद्रवं मूर्तिमत्स्वाङ्गं इति ।
किं तर्हि ? स्वं अङ्गं स्वाङ्गं ।
तेन+इह न भवति, देवदत्तो यज्ञदत्तस्य पृष्ठं उत्तपति इति ।
उद्विभ्यां इति किं ? निष्टपति । ।

---

1. <आङो यम-हनः># । । पाणिनीयसूत्र १,३.२८ । ।

_______काशिका १,३.२८:

अकर्मकातिति वर्तते ।
यम उपरमे, हन हिंसागत्योः इति परस्मैपदिनौ ।
ताभ्यां अकर्मक-क्रियावचनाभ्यां आङ्पूर्वाभ्यां आत्मनेपदं भवति ।
आयच्छते, आयच्छेते आयच्छन्ते ।
हनः खल्वपि -- आहते, आघ्नाते, आघ्नते ।
अकर्मकातित्येव ।
आयच्छति कूपाद्रज्जुं ।
आहन्ति वृषलं पादेन ।
स्वाङ्गकर्मकाच्च+इति वक्तव्यं ।
आयच्छते पाणिं ।
आहते शिरः ।
स्वाङ्गं च+इह न पारिभाषिकं गृह्यते ।
किं तर्हि ? स्वं अङ्गं स्वाङ्गं ।
तेन+इह न भवति , आहन्ति शिरः परकीयं इति । ।

---

1. <समो गम्य्-ऋच्छि-प्रच्छि-स्वरत्यर्ति-श्रु-विदिघ्यः># । । पाणिनीयसूत्र १,३.२९ । ।

_______काशिका १,३.२९:

अकर्मकातिति वर्तते।
शेषात्कर्तरि परस्मैपदं (*१,३.७८) इति प्राप्ते सम्पूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्योऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति।
सङ्गच्छते।
अमृद्धते।
संपृच्छते।
संस्वरति।
सङ्कल्पा अस्य समरन्त।

[#५९]
अर्तेर्लुङि च्लेः सर्-ति-शास्त्य्-अर्तिभ्यश्च (*३,१.५६)।
इत्यङ्-आदेशः।
तत्र प्रस्मैपदेशु इत्येतन्नाश्रीयते।
बहुलं छन्दस्यमाङ्योगेऽपि (*६,४.७५) इत्याट्प्रतिषध्यते।
ऋदृशोऽङि गुणः (*७,४.१६) इति गुणः -- समरनत।
संशृणुते।
संवित्ते।
ऋच्छेरनादेशस्य ग्रहणम्, समृच्छिष्यते।
अर्त्य्-आदेशस्य त्वर्ति इत्येव सिद्धं आत्मनेपदं।
अर्तिरुभयत्र पठ्यते, ऋ गति-प्रापणयोः इति भ्वादौ, ऋ सृ गतौ इति जुहोत्य्-आदौ।
विशेषाभावाद्द्वयोरपि ग्रहणं।
विदेर्ज्ञान-अर्थस्य ग्रहनम्, परस्मैपदिभिर्गमादिभिः साहचर्यात्, न लाभ-अर्थस्य स्वरितेत्त्वादुभ्यतोभाषस्य।
दृशेश्च+इति वक्तव्यं।
संपश्यते।
अकर्मकातित्येव।
ग्रामं संपस्यति॥

---

1. <नि-सम्-उप-विभ्यो ह्वः>#॥ पाणिनीयसूत्र १,३.३०॥

_______काशिका १,३.३०:

अकर्मकातिति निवृत्तं।
अतः परं सामान्येन आत्मनेपद-विधानं प्रतिपत्तव्यं।
नि सं उप वि इत्येवं पूर्वात्ह्वयतेर्धातोरात्नमेपदं भवति।
निह्वयते।
संह्वयते उपह्वयते।
विह्वयते।
अकर्त्र्-अभिप्राय-अर्थोऽयम्-आरम्भः।
अन्यत्र हि ञित्त्वात्सिद्धं एव-आत्मनेपदं।
उपसर्गादस्यत्यूह्योर्वा वचनं।
निरस्यति, निरस्यते।
समूहति, समूहते॥

---

1. <स्पर्धायां आङः># । । पाणिनीयसूत्र १,३.३१ । ।

_______काशिका १,३.३१:

अकर्त्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
स्पर्धायां विषये आङ्-पूर्वाद्ह्वयतेरात्मनेपदं भवति ।
स्पर्धा सङ्घर्षः, पराभिभवेछा, स विषयो धात्व्-अर्थस्य ।
धातुस्तु शब्दत्रिय एव ।
मल्लो मल्लं आह्वयते ।
छात्रश्छात्रं आह्वयते ।
स्पर्धमानस्तस्य-आह्वानं करोति इत्यर्थः ।
स्पर्धायां इति किं ? गां आह्वयति गोपालः । ।

---

1. <गन्धन-अवक्षेपण-सेवन-साहसिक्य-प्रतिथत्न-प्रकथन-उपयोगेषु कृञः># । । पाणिनीयसूत्र १,३.३२ । ।

_______काशिका १,३.३२:

कर्त्-अभिप्राये क्रियाफले सिद्धं एव-आत्मनेपदं ।
अकर्त्-अभिप्रय-अर्थोऽयमारम्भः ।
गन्धन-आदिष्वर्थेषु वर्तमानत्करोतेरात्मनेपदं भवति ।
गन्धनं पकार-प्रयुक्तं हिंसात्मकं सूचनं ।
तथा हि, बस्त गन्ध अर्दने, अर्द हिंसायां इति चुर्-आदौ पथ्यते ।
अवक्षेपणं भर्त्सनं ।
सेवनं अनुवृत्तिः ।
साहसिक्यं साहसिकं कर्म ।
प्रतियत्नः सतो गुण-अन्तराधानं ।
प्रकथनं प्रकर्षेण कथनं ।
उपयोगो धर्मादि प्रयोजनो विनियोगः ।
गन्धने तावत्-- उत्कुरुते ।
उदाकुरुते ।
सूचयति इत्यर्थः ।
अवक्षेपणे -- श्येनो वर्तिकां उदाकुरुते ।
भर्त्सयति इत्यर्थः सेवते -- गणकानुपकुरुते ।
महामात्रानुपकुरुते ।
सेवते इत्यर्थः ।
साहासिक्ये -- परदारान्प्रकुरुते ।

[#६०]

तेषु सहसा प्रवर्तते इत्यर्थः ।
प्रतियत्ने -- एधो दकस्य+उपस्कुरुते ।
काण्डं गुडस्य+उपस्कुरुते ।
तस्य सतो गुणन्तराधानं करोति इत्यर्थः ।
षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते ।
प्रकथने -- गाथाः प्रकुरुते ।
जनापवादान्प्रकुरुते ।
प्रकर्षेण कथयति इत्यर्थः ।
उपयोगे -- शतं प्रकुरुते ।
सहस्रं प्रकुरुते ।
धर्म-अर्थं शतं विनियुङ्क्ते इत्यर्थः ।
एतेषु इति किं ? कटं करोति ।।

---

1. <अधेः प्रसहने># ।। पाणिनीयसूत्र १,३.३३ ।।

_______काशिका १,३.३३:

अकर्त्र्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
अधिपूर्वात्करोतेः प्रसहने वर्तमानातात्मनेपदं भवति ।
प्रसहनं अभिभवः अपराजयो वा ।
तं अधिचक्रे ।
तं अभिवभूव, न तेन प्राजितः इत्यर्थः ।
प्रसहने इति किं ? अर्थं अधिकरोति ।
पृथग्योगकरणं उपसर्ग-विशेषण-अर्थं ।।

---

1. <वेः शब्द-कर्मणः># ।। पाणिनीयसूत्र १,३.३४ ।।

_______काशिका १,३.३४:

कृञः इत्यनुवर्तते ।
विपूर्वत्करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति ।
कर्मशब्द इह कारकाभिधायी, न क्रियावचनः ।
क्रोष्टा विकुरुते स्वरान् ।
ध्वाङ्क्षो विकुरुते स्वरान् ।
शब्दकर्मणः इति किं ? विकरोति पयः ।।

---

1. <अकर्मकाच्च># । । पाणिनीयसूत्र १,३.३५ । ।

_______काशिका १,३.३५:

वेः कृञ इत्यनुवर्तते ।
विपूर्वात्करोतेरकर्मकादकर्मक-क्रियावचनादात्मनेपदं भवति ।
विकुर्वते सैन्धवाः ।
साधु दान्ताः शोभनं वल्गन्ति इत्यर्थः ।
ओदनस्य पूर्णाश्छात्रा विकुर्वते ।
निष्फलं चेष्टन्ते इत्यर्थः । ।

---

1. <सम्मानन-उत्सञ्जन-आचार्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः># । । पाणिनीयसूत्र १,३.३६ । ।

_______काशिका १,३.३६:

णीञ्प्रापणे ।
अस्मात्कर्त्-अभिप्राये क्रियाफले सिद्धं एव-आत्मनेपदं ।
अकर्त्-अभिप्रयार्थोऽयं आरम्भः ।
णीञ्प्राप्णे इत्येतस्माद्धातोरात्मनेपदं भवति सम्मानन-आदिषु विशेषणेषु सत्सु ।
सम्माननं पूजनं -- नयते चार्वी लोकायते ।
चार्वी बुद्धिः, तत्-सम्बन्धादचार्येऽपि चार्वी ।
स लोकायते शास्त्रे पद-अर्थान्नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति ।
ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति ।
उत्सञ्जनं उत्क्षेपणं -- माणवकं उदानयते ।
उत्क्षिपति इत्यर्थः ।
आचार्य-करणं आचार्यक्रिया -- माणवकं ईदृशेन विधिना आत्म-समीपं प्राप्यति यथा स उपनेता स्वयं आचार्यः सम्पद्यते ।
माणवकं उपनयते ।
आत्मानं आचार्यीकुर्वन्माणवकं आत्म-समीपं प्रापयति इत्यर्थः ।
ज्ञानं प्रमेय-निश्चयः -- नयते चर्वी लोकयते ।
तत्र प्रमेयं निश्चिनोति इत्यर्थः ।
भृतिर्वेतनं -- कर्मकरानुपनयते ।
भृतिदानेन समीपं करोति इत्यर्थः ।
विगणनं ऋणादेर्निर्यातनं -- मद्राः करं विनयन्ते ।
निर्यातयन्ति इत्यर्थः ।
व्ययो धर्म-आदिषु विनियोगः ।
शतं विनयते ।
सहस्रं विनयते ।
धर्म-आद्य्-अर्थं शतं विनियुङ्क्ते इत्यर्थः ।
एतेषु इति किं ? अजां नयति ग्रामं । ।

---

[#६१]

1. <कर्तृस्थे च शरीरे कर्मणि># । । पाणिनीयसूत्र १,३.३७ । ।

_______काशिका १,३.३७:

नयतेः कर्ता देवदत्त-आदिर्लकारवाच्यः ।
कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति ।
शरीरं प्राणिकायः, तद्-एकदेशोऽपि शरीरं ।
क्रोधं विनयते ।
मन्युं विनयते ।
कर्तृस्थे इति किं ? देवदत्तो यज्ञदत्तस्य क्रोधं विनयतेइ ।
अशरीरे इति किं ? गडुं विनयति ।
घाटां विनयति ।
कर्मणि इति किं ? बुद्ध्या विनयति ।
प्रज्ञया विनयति । ।

---

1. <वृत्ति-सर्ग-तायनेषु क्रमः># । । पाणिनीयसूत्र १,३.३८ । ।

_______काशिका १,३.३८:

शेषत्कर्तरि परस्मैपदे प्राप्ते वृत्त्य्-आदिश्वर्थेशु कर्मेर्धतोरात्मनेपदं भवति ।
वृत्तिरप्रतिबन्धः ।
सर्ग उत्साहः ।
तायनं स्फीतता ।
वृत्तौ तावत्--ऋक्ष्वस्य क्रमते बुद्धिः ।
न प्रतिहन्यते इत्यर्थः ।
यजुःष्वस्य क्रमते बुद्धिः ।
सर्गे -- व्याकरण-अध्ययनाय क्रमते ।
उत्सहते इत्यर्थः ।
तायते -- अस्मिन्शास्त्रापि क्रमन्ते ।
स्फीतीभवन्ति इत्यर्थः ।
एतेषु इति किं ? अपक्रामति । ।

---

1. <उप-पराभ्याम्># । । पाणिनीयसूत्र १,३.३९ । ।

_______काशिका १,३.३९:

वृत्ति-सर्ग-तायनेषु इति वर्तते ।
उपपरापूर्वात्क्रमतेर्वृत्त्य्-आदिश्वर्थेषु वर्तमानादात्मनेपदं भवति ।
किम्-अर्थं तर्हि इदं उच्यते ? उपसर्ग-नियम-अर्थं ।
सोपसर्गादुप-परा-पूर्वादेव, न अन्य-पूर्वातिति ।
उपक्रमते ।
पराक्रमते ।
उपपराभ्यां इति किं ? सङ्क्रामति ।
वृत्त्य्-आदिष्वित्येव ।
उपक्रामति ।
पराक्रामति । ।

---

1. <आङ उद्गमने># । । पाणिनीयसूत्र १,३.४० । ।

_______काशिका १,३.४०:

आङ्-पूर्वात्क्रमतेरुद्गमने वर्तमानादात्मनेपदं भवति ।
आक्रमते आदित्यः ।
आक्रमते चन्द्रमाः ।
आक्रमन्ते ज्योतींषि ।
उद्गनमे इति किं ? आक्रामति माणवकः कुतुपं ।
ज्योतिरुद्गमने इति वक्तव्यं ।
इह मा भूत्, आक्रमति धूमो हर्म्यतलात् । ।

---

1. <वेः पाद-विहरणे># । । पाणिनीयसूत्र १,३.४१ । ।

_______काशिका १,३.४१:

वि-पूर्वात्क्रमतेः पद-विहरणेऽर्थे वर्तमानादात्मनेपदं भवति ।
विहरणं विक्षेपः ।
सुष्ठु विक्रमते ।
साधु विक्रमते ।
अश्वादीनां गतिविशेषो विक्रमणं उच्यते ।
यद्यपि क्रमिः पाद-विहरण एव पठ्यते, क्रमु पाद-विक्षेपे इति, तथा-अप्यनेकार्थत्वाद्धातूनां एवं उक्तं ।
पादविहरणे इति किं ? विक्रामत्यजिनसन्धिः । ।

---

[#६२]

1. <प्र-उपाभ्यां समर्थाभ्याम्># । । पाणिनीयसूत्र १,३.४२ । ।

_______काशिका १,३.४२:

प्र उपित्येताभ्यां परस्मात्क्रमतेरात्मनेपदं भवति, तौ चेत्प्रोपौ समर्थौ तुल्य-अर्थौ भवतः ।
क्व चानयोस्तुल्य-अर्थता ? आदिकर्मणि ।
प्रक्रमते भोक्तुं ।
उपक्रमते भोक्तुं ।
समर्थाभ्यां इति किं ? पूर्वेध्युः प्रक्रामति ।
गच्छति इत्यर्थः ।
अपरेध्युरुपक्रामति ।
आगच्छति इत्यर्थः ।
अथ उपपराभ्यां (*१,३.३९) इत्यनेन आत्मनेपदं अत्र कर्मान्न भाति ? वृत्त्यादि-ग्रहणं तत्र अनुवर्तते ।
ततोऽन्यत्र+इदं प्रत्युदाहरणं । ।

---

1. <अनुपसर्गाद्वा># । । पाणिनीयसूत्र १,३.४३ । ।

_______काशिका १,३.४३:

क्रमः इति वर्तते ।
अप्राप्त-विभाषेयं ।
उपसर्ग-वियुक्तात्क्रमतेरात्मनेपदं वा भवति ।
क्रमते ।
क्रामति ।
अनुपसर्गातिति किं ? सङ्क्रामति । ।

---

1. <अपह्नवे ज्ञः># । । पाणिनीयसूत्र १,३.४४ । ।

_______काशिका १,३.४४:

शेषात्कर्तरि प्रस्मैपदे प्राप्ते जानतेरपह्नवि वर्तमनादात्मनेपदं भवति ।
अपह्नवोऽपह्नुतिरपलापः ।
सोपसर्गश्च अयम्-अपह्नवे वर्तते, न केवलः ।
शतं अपजनीते ।
सहस्रं अपजानीते ।
अपलपति इत्यर्थः ।
अपह्नवे इति किं ? न त्वं किञ्चदपि जानासि । ।

---

1. <अकर्मकाच्च># । । पाणिनीयसूत्र १,३.४५ । ।

_______काशिका १,३.४५:

अकर्त्र्-अभिप्राय-अर्थं इदं ।
कर्त्र्-अभिप्राये हि अनुपसर्गाज्ज्ञः (*१,३.७६) इति वक्ष्यति ।
जानातेरकर्मकादकर्मक-क्रियावचनादात्मनेपदं भवति ।
सर्पिशो जानीते ।
मधुनो जानीते ।
कथं च अयं अकर्मकः ? न अत्र सर्पिर्-आदि ज्ञेयत्वेन विवक्षितं ।
किं तर्हि ? ज्ञान-पूर्विकायां प्रवृत्तौ करणत्वेन ।
तथा च ज्ञोऽविद्-अर्थस्य करणे (*२,३.५१) इति षष्ठी विधीयते -- सर्पिषो जानीते, मधुनो जानीते ।
सर्पिशा उपायेन प्रवर्तते इत्यर्थः ।
अकर्मकातिति किं ? स्वरेण पुत्रं जानाति । ।

---

1. <सं-प्रतिभ्यां अनाध्याने># । । पाणिनीयसूत्र १,३.४६ । ।

_______काशिका १,३.४६:

ज्ञः इति वर्तते ।
सकर्मक-अर्थं इदं ।
सं प्रति इत्येवं पूर्वाज्जानातेरनाध्याने वर्तमानादात्मनेपदं भवति ।
आध्यानं उत्कण्ठास्मरणं ।
शतं संजानीते ।
सहस्रं संजानीते ।
शतं पतिजानीते ।
सहस्रं प्रतिजानीते ।
अनाध्याने इति किं ? मातुः सञ्जानाति ।
पितुः सञ्जानाति ।
उत्कण्ठते इत्यर्थः । ।

---

1. <भासन-उपसम्भाषा-ज्ञान-यत्न-विमत्य्-उपमन्त्रणेषु वदः># । । पाणिनीयसूत्र १,३.४७ । ।

_______काशिका १,३.४७:
शेषात्कर्तरि परस्मैपदे प्राप्ते भासन-आदिशु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति ।
भासनं दीप्तिः -- वदते चार्वी लोकायते ।
भासमानो दीप्यमानस्तत्र पदार्थान्व्यक्तीकरोति इत्यर्थः ।
उपसम्भाषा उपसान्त्वनं - कर्मकरानुपवदते ।

[#६३]

उपसान्त्वयति इत्यर्थः ।
ज्ञानं सम्यगवबोधः -- वदते चार्वी लोकायते ।
जानाति वदितुं इत्यर्थः ।
यत्न उत्साहः -- क्षेत्रे वदते ।
गेहे वदते ।
तद्-विषयं उत्साहं आविष्करोति इत्यर्थः ।
विमतिर्नानामतिः - क्षेत्रे विवदन्ते ।
गेहे विवदन्ते ।
विमतिपतिता विचित्रं भाषन्ते इत्यर्थः ।
उपमन्त्रणं रहस्युपच्छन्दनं - कुलभार्यां उपवदते ।
परदारानुपवदते ।
उपच्छन्दय्ति इत्यर्थः ।
एतेषु इति किं ? यत्किञ्चिद्वदति । ।

---

1. <व्यक्तवाचां समुच्चारणे># । । पाणिनीयसूत्र १,३.४८ । ।

_______काशिका १,३.४८:

वदः इति वर्तते ।
व्यक्तवाचां समुच्चारणं सहोच्चारणं ।
तत्र वर्तमानाद्वदतेरात्मनेपदं भवति ।
ननु वद व्यक्तायां वाचि इत्येव पठ्यते, तत्र किं व्यक्तवाचां इति विशेषणेन ? प्रसिद्ध्य्-उपसंग्रह-अर्थं एतथ् ।
व्यक्तवाचः इति हि मनुष्याः प्रसिद्धाः ।
तेषां समुच्चारणे यथा स्याथ् ।
संप्रवदन्ते ब्राहमणाः ।
संप्रवदन्ते क्षत्रियाः ।
व्यक्तवाचां इति किं ? संप्रवदन्ति कुक्कुटाः ।

समुच्चारणे इति किं ? ब्राह्मणो वदति ।
क्षत्रियो वदति । ।

---

1. <अनोरकर्मकात्># । । पाणिनीयसूत्र १,३.४९ । ।

_______काशिका १,३.४९:

वदः इति, व्यक्तवाचां इति च वर्तते ।
अनुपूर्वाद्वदतेरकर्मकाद्व्यक्तवाग्विषयादात्मनेपदं भवति ।
अनुवदते कठः कलापस्य ।
अनुवदते मौद्गः पैप्पलादस्य ।
अनुः सादृश्ये ।
यथा कलापोऽधीयानो वदति तथा कठः इत्यर्थः ।
अकर्मकातिति किं ? पूर्वं एव यजुरुदितं अनुवदति ।
व्यक्तवाचं इत्येव ।
अनुवदति वीणा । ।

---

1. <विभाषा विप्रलापे># । । पाणिनीयसूत्र १,३.५० । ।

_______काशिका १,३.५०:

वदः इति वर्तते, व्यक्तवाचां समुच्चारणे इति च ।
विप्रलापात्मके व्यक्तवाचां समुच्चारने वर्तमानाद्वदतेरात्मनेपदं भवति विभाषा ।
प्राप्त-विभाषेयं ।
विप्रवदन्ते संवत्सराः, विप्रवदन्ति सांवत्सराः ।
विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति मौहूर्ताः ।
युगपत्परस्पर-प्रतिषेधेन विरुद्धं वदन्ति इत्यर्थः ।
विप्रलापे इति किं ? संप्रवदन्ते ब्राह्मणाः ।
व्यक्तवाचां इत्येव ।
विप्रवदन्ति शकुनयः ।
समुच्चारणे इत्येव ।
क्रमेण मौहूर्ता मौहूर्तेन सह विप्रवदन्ति । ।

---

[#६४]

1. <अवादग्रः># । । पाणिनीयसूत्र १,३.५१ । ।

_______काशिका १,३.५१:

ग्é निगरणे इति तुदादौ पठ्यते, तस्य+इदं ग्रहणं ।
न तु ग्é शब्दे इति क्र्यादिपठितस्य ।
तस्य ह्यवपूर्वस्य प्रयोग एव न अस्ति ।
शेषात्कर्तरि पस्मैपदे प्राप्ते अवपूर्वाद्गिरतेरात्मनेपदं भवति ।
अवगिरते, अवगिरेते, अवगिरन्ते ।
अवातिति किं ? गिरति । ।

---

1. <समः प्रतिज्ञाने># । । पाणिनीयसूत्र १,३.५२ । ।

_______काशिका १,३.५२:

ग्रः इति वर्तते ।
संपूर्वात्गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति ।
प्रतिज्ञानं अभ्युपगमः ।
शतं संगिरते ।
निर्यं शब्दं संगिरते ।
प्रतिज्ञाने इति किं ? सङ्गिरति ग्रासं । ।

---

1. <उदश्चरः सकर्मकात्># । । पाणिनीयसूत्र १,३.५३ । ।

_______काशिका १,३.५३:

शेषात्कर्तरि परस्मैपदे प्राप्ते उत्पूर्वाच्चरतेः सकर्मक-क्रियाअवचनादात्मनेपदं भवति ।
गेहं उच्चरते ।
कुटुम्बं उच्चरते ।
गुरुवचनं उच्चरते ।
उत्क्रम्य गच्छति इत्यर्थः ।
सकर्मकातिति किं ? वाष्पं उच्चरति । ।

---

1. <संस्तृतीया-युक्तात्># । । पाणिनीयसूत्र १,३.५४ । ।

_______काशिका १,३.५४:

सम्पूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपदं भवति ।
तृतीया इति तृतीया-विभक्तिर्गृह्यते, तया चरतेरर्थद्वारको योगः ।
अश्वेन सञ्चरते ।
तृतीया-युक्तातिति किं ? उभौ लोकौ सञ्चरसि इमं च अमुं च देवल ।

[#६४]

यद्यप्यत्र तद्-अर्थ-योगः सम्भवति, तृतीया तु न श्रूयते, इति प्रत्युदाहरणं भवति । ।

---

1. <दाणश्च सा चेच्चतुर्थ्य्-अर्थे># । । पाणिनीयसूत्र १,३.५५ । ।

_______काशिका १,३.५५:

चाण्दाने परस्मैपदी ।
ततः सम्पूर्वात्तृतीया-युक्तातात्मनेपदं भवति, सा चेत्तृतीया चतुर्थ्य्-अर्थे भवति ।
कथं पुनस्तृतीया चतुर्थ्य्-अर्थे स्यात्? वक्तव्यं एव+एतत्-- अशिष्टव्यवहारे तृतीया चतुर्थ्य्-अर्थे भवति इति वक्तव्यं ।
दास्य संप्रयच्छते ।
वृषल्या संप्रयच्छते ।
कामुकः सन्दास्यै ददाति इत्यर्थः ।
चतुर्थ्य्-अर्थे इति किं ? पाणिना सम्प्रयच्छति ।
समः प्रशब्देन व्यवधाने कथं आत्मनेपदं भवति ? समः इति विशेषणे षष्ठी, न पञ्चमी । ।

---

[#६५]

1. <उपाद्यमः स्वकरने># । । पाणिनीयसूत्र १,३.५६ । ।

_______काशिका १,३.५६:

शेषात्कर्तरि परस्मैपदे प्राप्ते उपपूर्वात्यमः स्वकरणे वर्तमानादात्मनेपदं भवति ।

पाणि-ग्रहण-विशिष्टं इह स्वकरनं गृह्यते, न स्वकरण-मात्रं ।
भार्यां उपयच्छते ।
स्वकरणे इति किं ? देवदत्तो यज्ञदत्तस्य भार्यां उपयच्छति । ।

---

1. <ज्ञा-श्रु-स्मृ-दृशां सनः># । । पाणिनीयसूत्र १,३.५७ । ।

_______काशिका १,३.५७:

ज्ञा श्रु समृ दृशित्येतेषां सन्नन्तानां आत्मनेप्दं भवति ।
तत्र जानातेः अपह्नवे ज्ञः (*१,३.४४) इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रु-दृशोरपि समो गम्यृच्छि (*१,३.२९) इत्यत्र विहितं ।
तस्मिन्विषये पूर्ववत्सनः (*१,३.६२) इत्येव सिद्धं आत्मनेपदं ।
ततोऽन्यत्र अनेन विधीयते ।
स्मरते पुनरप्राप्त एव विधानं ।
धर्मं जिज्ञासते ।
गुरुं शुश्रूषते ।
नष्टं सुस्मूर्षते ।
नृपं दिदृक्षते ।
सनः इति किं ? जानाति, शृणोति, स्मरति, पष्यति । ।

---

1. <न अनोर्ज्ञः># । । पाणिनीयसूत्र १,३.५८ । ।

_______काशिका १,३.५८:

पूर्वेण योगेन प्राप्तं आत्मनेपदं प्रतिषिध्यते ।
अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न भवति ।
तथा च सति सकर्मकस्य+एव अयं प्रतिषेधः सम्पद्यते ।
पुत्रं अनुजिज्ञासति ।
अनोः इति किं ? धर्मं जिज्ञासते । ।

---

1. <प्रत्य्-आङ्भ्यां श्रुवः># । । पाणिनीयसूत्र १,३.५९ । ।

_______काशिका १,३.५९:

प्रति आङित्येवं पूर्वाच्-छृणोतेः सन्नन्तादात्मनेपदं न भवति ।
प्रतिशुश्रूषति ।
आशुश्रूषति ।
उपसर्ग-ग्रहणं चेदं, तस्मादिह प्रतिषेधो न भवति , देवदत्तं प्रति शुश्रूषते । ।

---

1. <शदेः शितः># । । पाणिनीयसूत्र १,३.६० । ।

_______काशिका १,३.६०:

शद्लृ शातने परस्मैपदी, तस्मादात्मनेपदं विधीयते ।
शदिर्यः शित्, शिद्भावी, शितो वा सम्बन्धी तस्मादात्मनेपदं भवति ।
शीयते, शीयेते, शीयन्ते ।
शितः इति किं ? अशत्स्यथ् ।
शत्स्यति ।
शिशत्सति । ।

---

[#६६]

1. <म्रियतेर्लुङ्-लिङोश्च># । । पाणिनीयसूत्र १,३.६१ । ।

_______काशिका १,३.६१:

मृङ्प्राणत्यागे ।
ङित्त्वादात्मनेपदं अत्र सिद्धं एव ।
नियम-अर्थं इदं वचनं ।
म्रियतेर्लुङ्-लिङोः शितश्च-आत्मनेपदं भवति, अन्यत्र न भवति ।
अमृत ।
मृषीष्ट ।
शितः खल्वपि - म्रियते, म्रियेते, म्रियन्ते ।
नियमः किम्-अर्थः ? मरिश्यति ।
अमरिस्यत् । ।

---

1. <पूर्ववत्सनः># । । पाणिनीयसूत्र १,३.६२ । ।

_______काशिका १,३.६२:

सनः पूर्वो यो धातुः आत्मनेपदी, तद्वत्सन्नन्तादात्मनेपदं भवति ।
येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेन+एव सन्नन्तादपि भवति ।
अनुदात्त-ङित आत्मनेपदं (*१,३.१२) -- आस्ते, शेते ।
सन्नन्तादपि तदेव निमित्तं - आसिसिषते, शिशयिषते ।
नेर्विशः (*१,३.१७) -- निविशते, निविविक्षते ।
आङ उद्गम्ने (*१,३.४०) -- आक्रमते, आचिक्रंसते ।
इह न भवति, शिशत्सति, मुमूर्षति ।
न हि शदिम्रियतिमात्रं आत्मनेपदनिमित्तं ।
किं तर्हि ? शिदाद्यपि, तच्च+इह न अस्ति ।
यस्य च पूर्वत्र+एव निमित्त-भावः प्रतिशिध्यते, तत्सन्नन्तेश्वप्यनिमित्तं -- अनुचिकीर्षति ।
पराचिकीर्षति ।
इह जुगुप्सते, मीमांसते इति ? अनुदात्त-ङित इत्येव सिद्धं आत्मनेप्दं ।
अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति इति । ।

---

1. <आम्-प्रत्ययवत्कृञोऽनुप्रयोगस्य># । । पाणिनीयसूत्र १,३.६३ । ।

_______काशिका १,३.६३:

अकर्त्र्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
आम्-प्रत्ययो यस्मात्सोऽयम्-आम्-प्रत्ययः ।
आम्-प्रत्ययस्य+इव धातोः कृञोऽनुप्रयोगस्य आत्मनेपदं भवति ।
ईक्षाञ्चक्रे ।
ईहाञ्चक्रे ।
यदि विध्य्-अर्थं एतत्, तर्हि उदुब्जाञ्चकार, उदुम्भाञ्चकार इति कर्त्र्-अभिप्राये क्रियाफले अत्मनेपदं प्राप्नोति ।
न+एष दोषः ।
उभयं अनेन क्रियते, विधिः नियमश्च ।
कथं ? पूर्ववतिति वर्तते ।
स द्वितीयो यत्नो नियम-अर्थो भविष्यति ।
कृञः इति किं ? ईक्षामास ।
ईक्षाम्बभूव ।
कथं पुनरस्य अनुप्रयोगः यावता कृञ्च अनुप्रयुज्यते लिति (*३,१.४०) इत्युच्यते ? कृञिति प्रत्याहार-ग्रहणं तत्र विज्ञायते ।
क्व संनिविष्टानां प्रत्याहारः ? अभूततद्भावे कृ-भ्व्-अस्तियोगे सम्पद्यकर्तरि च्विः (*५,४.५०) इति कृ-शब्दादारभ्य यावत्कृञो द्वितीय-तृतीय-शम्ब-बीजात्कृषौ (*५,४.५८) इति ञकरं । ।

---

1. <प्र-उपाभ्यां युजेरयज्ञ-पात्रेषु># । । पाणिनीयसूत्र १,३.६४ । ।

_______काशिका १,३.६४:

युजिर्योगे स्वरितेथ् ।
तस्य कर्त्र्-अभिप्राये क्रिया-फले सिद्धं एव आत्मनेपदं ।
अकर्त्र्-अभिप्रायार्थोऽयम्-आरम्भः ।
प्र उप इत्येवं पूर्वात्युजेरयज्ञ-पात्र-प्रयोगविषयादात्मनेपदं भवति ।
प्रयुङ्क्ते ।
उपयुङ्क्ते ।
अयज्ञपात्रेषु इति किं ? द्वन्द्वं न्यञ्च पात्राणि प्रयुनक्ति {देवसंयुक्तानि} ।

[#६७]

स्वराध्यन्तोपसृष्टादिति वक्तव्यं ।
उद्युङ्क्ते ।
नियुङ्क्ते ।
स्वराद्यन्त-उपसृष्तातिति किं ? संयुनक्ति । ।

---

1. <समः क्ष्णुवः># । । पाणिनीयसूत्र १,३.६५ । ।

_______काशिका १,३.६५:

क्ष्णु तेजने परस्मैपदी ।
ततः सम्पूर्वातात्मनेपदं भवति ।
समो गम्य्-ऋच्छि (*१,३.२९) इत्यत्र+एव कस्मान्न पठितः ? अकर्मकातिति तत्र वर्तते ।
संक्ष्णुते षस्त्रं ।
संक्ष्णुवाते, संक्ष्णुवते । ।

---

1. <भुजोऽनवने># । । पाणिनीयसूत्र १,३.६६ । ।

_______काशिका १,३.६६:

भुज पालनाभ्यवहारयोः इति रुधादौ पठ्यते ।
तस्मादनवनेऽपालने वर्तमानादात्मनेपदं भवति ।
भुङ्क्ते, भुञ्जाते, भुञ्जते ।
अनवने इति किं ? भुनक्त्येनं अग्निराहितः ।
अनवन इति प्रतिषेधेन रौधादिकस्य-एव ग्रहनं विज्ञायते, न तौदादिकस्य भुजो कौटिल्ये इत्यस्य ।
तेन+इह न भवति, विभुजति पाणिं । ।

---

1. <णे रणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने># । । पाणिनीयसूत्र १,३.६७ । ।

_______काशिका १,३.६७:

णिच्श्च (*१,३.७४) इति कर्त्-अभिप्राये क्रिया-फले सिद्धं एव आत्मनेपदं ।
अकर्त्-अभिप्रायार्थोऽयम-अरम्भः ।
ण्य्-अन्ता दात्मनेप्दं भवति ।
कथं ? अणौ यत्कर्म णौ चेत्तदेव कर्म, स एव कर्ता भवति, अनाध्याने आध्यानं वर्जयित्वा ।
आरोहन्ति हस्तिनं हस्तिपकाः, अरोहयते हस्ती स्वयं एव ।
उपसिञ्चन्ति हस्तिनं हस्तिपकाः, उपसेचयते हस्ती स्वयं एव ।
पश्यन्ति भृत्या राजानम्, दर्शयते राजा स्वयं एव ।
णेः इति किं ? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति ।
अणौ इति किं ? गनयति गनं गोपालकः, गनयति गणः स्वयं एव ।
कर्म-ग्रहणं किं ? लुनाति दात्रेन, लाव्यति दात्रं स्वयं एव ।
णौ चेद्-ग्रहनं समान-क्रिय-अर्थं -- आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती भीतान्सेचयति मऊत्रेण ।
यत्स-ग्रहणं अनन्यकर्म-अर्थं ।
आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ।
कर्ता इति किं ? आरोहन्ति हस्तिनं हस्तिपकाः, तानरोहयति महामात्रः ।
अनाध्याने इति किं ? स्मरति वङ्गुल्मस्य कोकिलः, समरयत्येनं वङ्गुल्मः स्वयं एव ।
ननु चात्र कर्मकर्तरि मूलोदाहरणानि ।
तत्र कर्म-वद्भावेन+एव सिद्धं आत्मनेपदं ।
किं अर्थं इदं उच्यते ? कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवदतिदेशो विज्ञायते ।
कर्तृस्थ-अर्थोऽयम्-आरम्भः ।
तथा च रुहिः कर्तृस्थ-क्रियः, दृशिः कर्तृस्थभावकः उदाहृतः । ।

---

[#६८]

1. <भी-स्म्योर्हेतुभये># । । पाणिनीयसूत्र १,३.६८ । ।

_______काशिका १,३.६८:

णेः इति वर्तते ।
अकर्त्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
विभेतेः स्मयतेश्च ण्य्-अन्तादात्मनेपदं भवति हेतुभये ।
हेतुः प्रयोजकः कर्ता लकार-वाच्यः, ततश्चेद्भयं भवति ।
भय-ग्रहणं उपलक्षण-अर्थम्, विस्मयोऽपि तत एव ? जटिलो भीषयते ।
मुण्डो भीषयते ।

जटिलो विस्मापयते ।
मुण्डो विस्मापयते ।
हेतुभये इति किं ? कुञ्चिकयैनं भाययति ।
रूपेण विस्माययति ।
अत्र कुञ्चिका भयस्य करणम्, न हेतुः । ।

---

1. <गृधि-वञ्च्योः प्रलम्भने># । । पाणिनीयसूत्र १,३.६९ । ।

_______काशिका १,३.६९:

णेः इति वर्तते ।
अकर्त्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
गृधु अभिकाङ्क्षायाम्, वञ्चु गतौ इत्येतयोर्ण्य्-अनतयोः प्रलम्भने वर्तमानायोरात्मनेपदं भवति ।
प्रलम्भनं विसंवादनं, मिथ्या-फल-आख्यानं ।
माणवकं गर्धयते ।
माणवकं वञ्चयते ।
प्रल्म्भने इति किं ? श्वानं गर्धयति ।
गर्धनं अस्य-उत्पादयति इत्यर्थः अहिं वञ्चयति ।
परिहरति इत्यर्थः । ।

---

1. <लियः संमानन-शालीनीकरणयोश्च># । । पाणिनीयसूत्र १,३.७० । ।

_______काशिका १,३.७०:

णेः इति वर्तते ।
अकर्त्-अभिप्राय-अर्थोऽयम्-आरम्भः ।
लीङ्श्लेषणे इति दिवादौ पठ्यते ली श्लेषणे इति च क्र्यादौ ।
विशेषाभावाद्द्वयोरपि ग्रहणं ।
लियो ण्य्-अन्तात्संमानने शालीनीकरणे च वर्तमानादात्मनेपदं भवति ।
च-शब्दात्प्रलम्भने च ।
सम्माननं पूजनं - जटाभिरालापयते ।
पूजां समधिगच्छति इत्यर्थः ।
शालीनीकरणं न्यग्भावनं - श्येनो वर्तिकामुल्लापय्ते ।
न्यक्करोति इत्यर्थः ।
प्रलम्भने - कस्त्वामुल्लापयते ।
विसंवादयति इत्यर्थः ।
विभाषा लीयतेः (*६,१.५१) इति वा आत्वं विधीयते ।
तद्-अस्मिन्विषये नित्यं अन्यत्र विकल्पः ।

व्यवस्थित-विभाषा हि सा ।
सम्माननादिषु इति किं ? बालकमुल्लापयति । ।

---

1. <मिथ्योपपदात्कृञोऽभ्यासे># । । पाणिनीयसूत्र १,३.७१ । ।

_______काशिका १,३.७१:

णेः इति वर्तते ।
अकर्त्र्-अभिप्राय-अर्थोऽयम्-अरम्भः ।
ण्यन्तात्करोतेर्मिथ्योपपदादात्मनेपदं भवति अभ्यासे ।
अभ्यासः पुनः पुनः करणम्, आवृत्तिः ।
पदं मिथ्या कारयते ।
सापचारं स्वरादिदुष्टं असकृदुच्चारयति इत्यर्थः ।
मिथ्योपपदतिति किं ? पदं सुष्ठु कारयति ।
कृञः इति किं ? पदं मिथ्या वाचयति ।
अभ्यासे इति किं ? पदं मिथ्या कारयति ।
सकृदुच्चारयति । ।

---

[#६९]

1. <स्वरित-ञितः कर्त्र्-अभिप्राये क्रियाफले># । । पाणिनीयसूत्र १,३.७२ । ।

_______काशिका १,३.७२:

णेः इति निवृत्तं ।
शेषात्कर्तरि परस्मैपदे प्रप्ते स्वरितेतो ये धातवो ञितश्च तेभ्यः आत्मनेपदं भवति, कर्तारं चेत्क्रियाफलं अभिप्रैति ।
क्रियायाः फलं क्रियाफलं प्रधान-भूतम्, यद्-अर्थं असौ क्रिया आरभ्यते तच्चेत्कर्तुर्लकार-वाच्यस्य भवति ।
यजते ।
पचते ।
ञितः खल्वपि - सुनुते ।
कुरुते ।
स्वर्गादि प्रधान-फलं इह कर्तारं अभिप्रैति ।
कर्त्रभिप्राये इति किं ? यजन्ति याजकाः ।
पचन्ति पाचकाः ।
कुर्वन्ति कर्मकराः ।
यद्यपि दक्षिणा भृतिश्च कर्तुः फल्मिहास्ति तथा अपि न तद्-अर्थः क्रियारम्भः । ।

---

1. <अपाद्वदः># । । पाणिनीयसूत्र १,३.७३ । ।

_______काशिका १,३.७३:

कर्त्र्-अभिप्राये इति वर्तते ।
अपपूर्वद्वदतेः कर्त्र्-अभिप्राये क्रियाफले आत्मनेपदं भवति ।
धनकामो न्यायं अपवदते ।
न्यायापवादेन धनं अर्जयिष्यामि इति मन्यते ।
कर्त्र्-अभिप्रये क्रियफले इत्येव, अपवदति । ।

---

1. <णिचश्च># । । पाणिनीयसूत्र १,३.७४ । ।

_______काशिका १,३.७४:

कर्त्र्-अभिप्राये क्रियाफले इति वर्तते ।
णिज्-अन्तादात्मनेपदं भवति कर्त्र्-अभिप्राये क्रियाफले ।
कटं कारयते ।
ओदनं पाचयते ।
कर्त्र्-अभिप्राये इत्येव, कटं कारयति परस्य । ।

---

1. <सम्-उद्-आङ्भ्यो यमोऽग्रन्थे># । । पाणिनीयसूत्र १,३.७५ । ।

_______काशिका १,३.७५:

कर्त्र्-अभिप्राये इति वर्तते ।
सं उदाङित्येवं पूर्वाद्यमेः कर्त्र्-अभिप्राये क्रियाफले आत्मनेपदं भवति, ग्रन्थ-विशयश्चेत्प्रयोगो न भवति ।
व्रीहीन्संयच्छते ।
भारं उद्यच्छते ।
वस्त्रं आयच्छते ।
आङ्-पूर्वादकर्मकाताङो यमहनः (*१,३.२८) इति सिद्धं एव-आत्मनेपदं ।
सकर्मक-अर्थं इदं पुनर्-ग्रहणं ।
अग्रन्थे इति किं ? उध्यच्छति चिकित्सां वैद्यः ।
कर्त्र्-अभिप्राये इत्येव, संयच्छति ।
उद्यच्छति ।
आयच्छति । ।

---

1. <अनुपसर्गाज्ज्ञः># । । पाणिनीयसूत्र १,३.७६ । ।

_______काशिका १,३.७६:
कर्त्र्-अभिप्राय इति वर्तते ।
अनुपसर्गाज्जानातेः कर्त्र्-अभिप्राये क्रियाफले आत्मनेपदं भवति ।
गां जानीते ।
अश्वं जाणीते ।
अनुपसर्गातिति किं ? स्वर्गं लोकं न प्रजानाति मूढः ।
कर्त्र्-अभिप्राये इत्येव, देवदत्तस्य गं जानाति । ।

---

[#७०]

1. <विभाषा-उपपदेन प्रतीयमाने># । । पाणिनीयसूत्र १,३.७७ । ।

_______काशिका १,३.७७:

स्वरितञितः (*१,३.७२) इति पञ्चभिः सुत्रैरात्मनेपदं कर्त्र्-अभिप्राये क्रियाफले द्योतिते विहितं ।
तद्-उपपदेन द्योतिते न प्राप्नोति इति वचनं आरभ्यते ।
समीपे श्रूयमाणं शब्द-अन्तरं उपपदं ।
तेन प्रतीयमाने कर्त्र्-अभिप्राये क्रियाफले विभाशा आत्मनेपदं भवति ।
स्वं जज्ञं यजते, सवं यज्ञं यजति ।
सवं कठं कुरुते, स्वं कथं करोति ।
स्वं पुत्रं अपवदते, स्वं पुत्रं अपवदति ।
एवं पञ्चसूत्र्यां उदाहार्यं । ।

---

1. <शेषात्कर्तरि परस्मैपदम्># । । पाणिनीयसूत्र १,३.७८ । ।

_______काशिका १,३.७८:

पूर्वेण प्रकरणेन आत्मनेपद-नियमः कृतः, न प्रस्मैपद-नियमः ।
तत्सर्वतः प्राप्नोति, तद्-अर्थं इदं उच्यते ।

येभ्यो धातुभ्यो येन विशेषणेन आत्मनेपदं उक्तं ततो यद्-अन्यत्स शेषः ।
शेषात्कर्तरि परस्मैपदं भवति ।
शेषादेव न अन्यस्माथ् ।
अनुदात्तङित आत्मनेपदं उक्तं -- अस्ते ।
शेते ।
ततोऽन्यत्र परस्मैपदं भवति -- याति ।
वाति ।
नेर्विशः आत्मनेपदं उक्तं -- निविशते ।
ततोऽन्यत्र परस्मैपदं -- आविशति ।
प्रविशति ।
कर्तरि इति किं ? पच्यते ।
गम्यते ।
कर्मकर्तरि कस्मात्परस्मैपदं न भवति, पच्यते ओदनः स्वयं एव ? कर्तरि कर्म-व्यतिहारे (*१,३.१४) इति द्वितीयं कर्तृ-ग्रहणं अनुवर्तते, तेन कर्ता-एव यः कर्ता तत्र प्रस्मैपदं भवति, कर्मकर्तरि न भवति । ।

---

1. <अनु-पराभ्यां कृञः># । । पाणिनीयसूत्र १,३.७९ । ।

_______काशिका १,३.७९:

कर्त्-अभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितं ।
तद्-अपवादः परस्मैपदं विधीयते ।
अनु परा इत्येवं पूर्वात्करोतेः परस्मैपदं भवति ।
अनुकरोति ।
पराकरोति । ।

---

1. <अभि-प्रत्य्-अतिभ्यः क्षिपः># । । पाणिनीयसूत्र १,३.८० । ।

_______काशिका १,३.८०:

क्षिप प्रेरणे स्वरितेथ् ।
ततः कर्त्-अभिप्राय-क्रियाफल-विवक्षायां आत्मनेपदे प्राप्ते परस्मैपदं विधीयते ।
अभि प्रति अति इत्येवं पूर्वात्क्षिपः परस्मैपदं भवति ।
अभिक्षिपति ।
प्रतिक्षिपति ।
अतिक्षिपति ।
अभि-प्रत्य्-अतिभ्यः इति किं ? आक्षिपते ।
द्वितीयं अपि कर्तृ-ग्रहणं अनुवर्तते, तेन+इह न भवति, अभिक्षिप्यते स्वयं एव । ।

---

[#७१]

1. <प्राद्वहः># । । पाणिनीयसूत्र १,३.८१ । ।

_______काशिका १,३.८१:

वह प्राप्ने स्वरितेथ् ।
तत्र कर्त्र्-अभिप्राय-क्रियाफल-विवक्षायां आत्मनेपदे प्राप्ते परस्मैपदं विधीयते ।
प्रपूर्वाद्वहतेः प्रस्मैपदं भवति ।
प्रवहति, प्रवहतः, प्रवहन्ति ।
प्रातिति किं ? आवहते । ।

---

1. <परेर्मृषः># । । पाणिनीयसूत्र १,३.८२ । ।

_______काशिका १,३.८२:

मृष तितिक्षायां स्वरितेथ् ।
ततः तथा+एव आत्मनेपदे प्राप्ते परस्मैपदं विधीयते ।
परिपूर्वान्मृष्यतेः परस्मैपदं भवति ।
परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति ।
परेः इति किं ? आमृष्यते ।
वहतिं अपि केचिदत्र अनुवर्तयन्ति - परिवहति । ।

---

1. <व्य्-आङ्-परिभ्यो रमः># । । पाणिनीयसूत्र १,३.८३ । ।

_______काशिका १,३.८३:

रमु क्रीडायं ।
अनुदात्तेत्त्वदात्मनेपदे प्राप्ते प्रस्मैपदं विधीयते ।
विआङ्परि इत्येवं पूर्वात्रमतेः परस्मैपदं भवति ।
विरमति ।
आरमति ।

परिरमति ।
एतेभ्यः इति किं ? अभिरमते । ।

---

1. <उपाच्च># । । पाणिनीयसूत्र १,३.८४ । ।

_______काशिका १,३.८४:

रमः इत्येव ।
उपपुर्वात्रमतेः प्रस्मैपदं भवति ।
देवदत्तं उपरमति ।
जज्ञदत्तं उपरमति ।
उपरमयति इति यावथ् ।
अन्तर्भावितन्यर्थोऽत्र रमिः ।
पृथग्योग-करणं उत्तर-अर्थं ।
अकर्मकाद्विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात् । ।

---

1. <विभाशाऽकर्मकात्># । । पाणिनीयसूत्र १,३.८५ । ।

_______काशिका १,३.८५:

रमः उपातिति च वर्तते ।
पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते ।
उपपूर्वद्रमतेरकर्मकाद्विभाषा परस्मैपदं भवति ।
यावद्भुक्तं औपरमति, यावद्भुक्तं उपरमते ।
निवर्तते इत्यर्थः । ।

---

1. <बुध-युध-नश-जन-इङ्-प्रु-द्रु-स्रुभ्यो णेः># । । पाणिनीयसूत्र १,३.८६ । ।

_______काशिका १,३.८६:

णिचश्च (*१,३.७४) इति कर्त्र्-अभिप्राय-त्रियाफल-विवक्षायां आत्मनेपदे प्राप्ते परस्मैपदं विधीयते ।
बुध युध नश जन इङ्प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेम्यः परस्मैपदं भवति ।
बोध्यति ।

योध्यति ।
नाशयति ।
जनयति ।
अध्यापयति ।
प्रावयति ।
द्रावयति ।
स्रवयति ।

[#७२]

येऽत्र-अकर्मकास्तेषां अणाव्-अकर्मकाच्चित्तवत्-कर्तृकात्(*१,३.८८) इत्येवं सिद्धे वचनं इदं अचित्तवत्-कर्तृक-अर्थं ।
बोध्यति पद्मं ।
योध्यन्ति काष्ठानि ।
नाशयति दुःखं ।
जनयति सुखं ।
येऽत्र चलन-अर्थ अपि तेषां निगरण-चलन-अर्थेभ्यश्च (*१,३.८७) इति सिद्धे यदा न चलन-अर्थास्तद्-अर्थं वचनं ।
प्रवते ।
प्राप्नोति इति गम्यते ।
अयो द्रवति ।
विलीयते इत्यर्थः कुण्डिका स्रवति ।
स्यन्दते इत्यर्थः ।
तद्-विषयाण्युदाहरणानि { - प्रावयति ।
द्रावयति ।
स्रावयति} । ।

---

1. <निगरण-चलन-अर्थेभ्यश्च># । । पाणिनीयसूत्र १,३.८७ । ।

_______काशिका १,३.८७:

णेः इति वर्तते ।
कर्त्र्-अभिप्राय-क्रियाफल-विवक्शायां आत्मनेपद-अपवादः परस्मैपदं विधियते ।
निगरणं अभ्यवहारः ।
चलनं कम्पनं ।
निगरण-अर्थेभ्यश्चलन-अर्थेभ्यश्च धातुभ्यो ण्य्-अन्तेभ्यः परस्मैपदं भवति ।
निगारयति ।
आशयति ।
भोजयति ।
चलन-अर्थेभ्यः -- चलयति ।
चोपयति ।
कम्पयति ।
अयं अपि योगः सकर्मक-अर्थः, अचित्तवत्-कर्तृकार्थश्च ।
अदेः प्रतिषेधो वक्तव्यः ।
अत्ति देवदत्तः, आदयते देवदत्तेन । ।

---

1. <अणावकर्मकाच्चित्तवत्-कर्तृकात्># । । पाणिनीयसूत्र १,३.८८ । ।

_______काशिका १,३.८८:

णेः इति वर्तते ।
कर्त्र्-अभिप्राय-क्रियाफल-विवक्षायां आत्मनेपदापवादः परस्मैपदं विधीयते ।
अण्यन्तो यो धतुरकर्मकश्चित्तवत्-कर्तृकश्च तस्माद्ण्यन्तात्परस्मैपदं भवति ।
आस्ते देवदत्तः, आसयति देवदत्तं ।
शेते देवदत्तः, शाययति देवदत्तं ।
अणौ इति किं ? चेतयमानं प्रयोजयति चेतयते, इति केचित्प्रत्युदाहरन्ति तद्-युक्तं ।
हेतुमण्णिचो विधिः ।
प्रतिषेधोऽपि प्रत्यासत्तेस्तस्य+एव न्याय्यः ।
तस्मादिह चेतयति इति परस्मैपदेन+एव भवितव्यं ।
इदं तु प्रत्युदहरणं -- आरोहयमाणं प्रयुङ्क्ते आरोहयते ।
अकर्मकातिति किं ? कठं कुर्वाणं प्रयुङ्क्ते कारयते ।
चितवत्कर्तृकातिति किं ? शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः । ।

---

1. <न पादम्य्-आङ्यम-आङ्यस-परिमुह-रुचि-नृति-वद-वसः># । । पाणिनीयसूत्र १,३.८९ । ।

_______काशिका १,३.८९:

पूर्वेण योगद्वयेन कर्त्रभिप्रय-क्रियाफल-विवक्षायां आत्मनेपद-अपवादः परस्मैपदं विहितं ।
तस्य प्रतिषेधोऽयम्-उच्यते ।
यत्कर्त्रभिप्राय-विषयं आत्मनेपदं तद्-अवस्थितं एव, न प्रतिषिध्यते ।
पा दमि अङ्यम आङ्यस परिमुह रुचि नृति वद वस इत्येतेभ्यो ण्य्-अन्तेभ्यः परस्मैपदं न भवति ।

[#७३]

णिचश्च (*१,३.७४) इत्यात्मनेपदं भवति ।
तत्र पिवतिर्निगरण-अर्थः ।
दमिप्रभृतयश्चित्तवत्कर्तृकाः ।
नृतिश्चलन-अर्थोऽपि ।
एषां परस्मैपदं न भवति ।
पा - पाययते ।
दमि - दमयते ।
आङ्यं - आयामयते ।
यमोऽपरिवेषणे इति मित्सञ्ज्ञा प्रतिषिध्यते ।
अङ्यस - आयासयते ।

परिमुह - परिमोहयते।
रुचि - रोचयते।
नृति - नर्तयते।
वद - वादयते।
वस - वासयते।
पादिषु धेट उपसङ्ख्यानं।
धापयेते शिशुमेकं समीची।।

---

1. <वा क्यषः>#।। पाणिनीयसूत्र १,३.९०।।

_______काशिका १,३.९०:

लोहितादि-डाज्भ्यः क्यष्(*३,१.१३) इति वक्ष्यति।
तद्-अन्ताद्धातोर्वा परस्मैपदं भवति।
लोहितायति, लोहितायते।
पटपटायति, पटपटायते।
अथ अत्र प्रस्मैपदेन मुक्ते कथं आत्मनेपदं लभ्यते, यावता अनुदात्तङित आत्मनेपदं (*१,३.१२) इत्येवं आदिना प्रकर्णेन तन्नियतं ? एवं तर्हि आत्मनेपदं एव अत्र विकल्पितं विधीयते, तच्च अनन्तरं परस्मैपद-प्रतिषेधेन सनिधापितं इह सम्बध्यते।
तेन मुक्ते, शेषात्कर्तरि परस्मैपदं भवति।।

---

1. <ध्य्द्भ्यो लुङि>#।। पाणिनीयसूत्र १,३.९१।।

_______काशिका १,३.९१:

वा इत्येव।
द्युत दीप्तौ।
तत्स्-आहचर्याद्लुठादयोऽपि कृपू पर्यन्तास्तथा+एव व्यपदिश्यन्ते।
बहुवचन-निर्देशादाद्य्-अर्थो भवति।
अनुदात्तेत्त्वान्नित्यं एव आत्मनेपदे प्राप्ते द्युतादिभ्यो लुङि वा परस्मैपदं भवति।
व्यद्युतत्, व्यद्योतिष्ट।
अलुठत्, अलोठिष्ट।
लुङि इति किं ? द्योतते।।

---

1. <वृद्भ्यः स्यसनोः># । । पाणिनीयसूत्र १,३.९२ । ।

_______काशिका १,३.९२:

द्युतादिष्वेव वृतादयः पठ्यन्ते ।
वृतु वर्तते, वृधु वृद्धौ शृधु शब्द-कुत्सायाम्, स्यन्दू प्रस्रवणे, कृपू सामर्थ्ये, एतेभ्यो धतुभ्यः स्ये सनि च परतो वा परस्मैपदं भवति ।
वृत्- वत्स्र्यति ।
अवत्स्र्यथ् ।
विवृत्सति ।
वर्तिष्यते ।
अवर्तिष्यत ।
विवर्तिषते ।
वृदः - वत्स्र्यति ।
अवत्स्र्यथ् ।
विवृत्सति ।
वर्धिष्यते ।
अवर्धिष्यत ।
विवर्धिषते ।
स्यसमोः इति किं ? वर्तते । ।

---

[#७४]

1. <लुटि च क्लुपः># । । पाणिनीयसूत्र १,३.९३ । ।

_______काशिका १,३.९३:

वृतादित्वादेव स्यसनोर्विकल्पः सिद्धो लुटि विधीयते ।
चकारस्तर्हि स्यसनोरनुकर्षण-अर्थो न वक्तव्यः, एवं तर्हि इयं प्राप्तिः पूर्वां प्राप्तिं बाधेत, तस्माच्चकरः स्यसनोरनुकर्षणा-र्थः क्रियते ।
लुटि च स्यसनोश्च क्लृपेः परस्मैपदं वा भवति ।
कल्प्ता, कल्प्तारौ, कल्प्तारः ।
कल्प्स्यति ।
अकल्प्स्यथ् ।
चिक्लृप्सति ।
कल्पिता ।
कल्पिश्यते ।
अकल्पिश्यत ।
चिकल्पिशते । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य तृतीयः पादः । ।

---

[#७५]

1. <आ कडारादेका सञ्ज्ञा># । । पाणिनीयसूत्र १,४.१ । ।

_______काशिका १,४.१:

काडराः कर्मधारये (*२,२.३८) इति वक्ष्यति ।
आ एतस्मात्सूत्रावधेर्यदित ऊर्ध्वं अनुक्रमिष्यामः, तत्र एका सञ्ज्ञा भवति इति वेदितव्यं ।
का पुनरसौ ? या परा अनवकाशा च ।
अन्यत्र सञ्जासमावेशान्नियम-अर्थं वचनं एकैव सञ्ज्ञा भवति इति ।
वक्ष्यति - ह्रस्वं लघु (*१,४.१०), भिदि, छिदि - भेत्ता, छेत्ता ।
संयोगे गुरु (*१,४.११), शिक्षि, भिक्षि - शिक्षा, भिक्षा ।
संयोग-परस्य ह्रस्वस्य लघुसञ्ज्ञा प्राप्नोति, गुरुसञ्ज्ञा च ।
एका सञ्ज्ञा इति वचनाद्गुरुसञ्ज्ञा एव भवति ।
अततक्षत्, अररक्षत्, सन्वल्लघुनि चङ्परेऽनग्लोपे (*७,४.९३) इत्येष विधिर्न भवति । ।

---

1. <विप्रतिषेधे परं कार्यम्># । । पाणिनीयसूत्र १,४.२ । ।

_______काशिका १,४.२:

तुल्यबल-विरोधो विप्रतिषेधः ।
यत्र द्वौ प्रसङ्गावन्यार्थवेकस्मिन्युगपत्प्राप्नुतः, स तुल्यबल-विरोधो विप्रतिषेधः ।
तस्मिन्विप्रतिषेधे परं कार्यं भवति ।
उत्सर्ग-अपवाद-नित्य-अनित्य-अन्तरङ्ग-वहिरङ्गेषु तुल्यबलता न अस्ति इति न अयं अस्य योगस्य विषयः ।
बलवतैव तत्र भवितव्यं ।
अप्रवृत्तौ, पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनं आरभ्यते ।
अतो दीर्घो यञि (*७,३.१०१), सुपि च (*७,३.१०२) इत्यस्य अवकाशः - वृक्षाभ्याम्, प्लक्षाभ्यां ।
वहुवचने झल्येत्(*७,३.१०३) इत्यस्य अवकाशः - वृक्षेषु, प्लक्षेषु ।
इह+उभयं प्राप्नोति - वृक्षेभ्यः, प्लक्षेभ्यः इति ।
परं भवति विप्रतिषेधेन । ।

---

1. <यू स्त्र्य्-आख्यौ नदी># । । पाणिनीयसूत्र १,४.३ । ।

_______काशिका १,४.३:

ई च ऊ च यू ।
अविभक्तिको निर्देशः ।
स्त्रियं आचक्षते स्त्र्याख्यौ ।

[#७६]

मूलविभुजादि-दर्शनात्क-प्रत्ययः ।
ईकार-अन्तं ऊकर-अन्तं च स्त्र्याख्यं शब्द-रूपं नदीसञ्ज्ञं भवति ।

[#७५]

ईकर-अन्तं - कुमारी ।
गौरी ।
लक्ष्मीः ।
शार्ङ्गरवी ।
ऊकार-अन्तं - ब्रह्मवन्धूः ।
यवागूः ।
यू इति किं ? मात्रे ।
दुहित्रे ।
स्त्र्याख्यौ इति किं ? ग्रामणीः ।
सेनानीः ।
खलपूः ।
आख्या-ग्रहणं किं ? शब्द-अर्थे स्त्रीत्व एव यथा स्यात्, पदान्तराख्ये मा भूत्, ग्रामन्ये स्त्रियै ।
खलप्वे स्त्रियै ।
नदीप्रदेशाः - आण्नद्याः (*७,३.११२) इत्येवं आदयः । ।

---

[#७६]

1. <न-इयङ्-उवङ्-स्थानावस्त्री># । । पाणिनीयसूत्र १,४.४ । ।

_______काशिका १,४.४:

पूर्वणातिप्रसक्ता नदीसञ्ज्ञा प्रतिषिध्यते ।
स्थितिः स्थानं ।
इयङ्-उवङोः इति इयङ्-उवङ्-स्थानौ, तौ यू नदीसञ्ज्ञौ न भवतः, स्त्री-शब्दं वर्जयित्वा ।
हे श्रीः ।
हे भ्रूः ।
अस्त्री इति किं ? हे स्त्रि । ।

---

1. <व+आमि># । । पाणिनीयसूत्र १,४.५ । ।

_______काशिका १,४.५:

पूर्वेण नित्ये प्रतिषेधे प्राप्ते आमि विकल्पः क्रिय्ते ।
इयङ्-उवङ्-स्थानौ यू आमि परतो वा नदीसञ्ज्ञौ न भवतः ।
श्रियाम्, श्रीणां ।
भ्रुवाम्, भ्रूणां ।
अस्त्री इत्येव, स्त्रिणां । ।

---

1. <ङिति ह्रस्वश्च># । । पाणिनीयसूत्र १,४.६ । ।

_______काशिका १,४.६:

दीर्घस्य नदीसञ्ज्ञा विहिता, ह्रस्वस्य न प्राप्नोति, इयङ्-उवङ्-स्थानयोश्च प्रतिषिद्धा ।
तस्मान्ङिति व विधीयते ।
ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्यः, स्त्र्याख्यौ इयङ्-उवङ्-स्थानौ च यू वा नदी सञ्ज्ञौ भवतः ।
कृत्यै, कृतये ।
धेन्वै, धेनवे ।
श्रियै, श्रिये ।
भ्रुवै, भ्रुवे ।
अस्त्री इत्येव, स्त्रियै ।
स्त्र्याख्यौ इत्येव, अग्नये ।
वाय्वे ।
भनवे । ।

---

1. <शेषो घ्यसखि># । । पाणिनीयसूत्र १,४.७ । ।

_______काशिका १,४.७:

ह्रस्वः इति वर्तते ।
शेषोऽत्र घिसञ्ज्ञो भवति, सखि-शब्दं वर्जयित्वा ।
कश्च शेषः ? ह्रस्वं इवर्ण-उवर्ण-अन्तं यन्न स्त्र्याख्यम्, स्त्र्याख्यं च यन्न नदीसञ्ज्ञकं, स शेषः ।
अग्नये ।
वायवे ।
कृतये ।
धेनवे ।

असखि इति किं ? सख्या ।
सख्ये ।
सख्युः ।
सख्यौ ।
घि-प्रदेशाः -- द्वन्द्वे घि (*२,२.३२) इत्येवं आदयः । ।

---

1. <पतिः समास एव># । । पाणिनीयसूत्र १,४.८ । ।

_______काशिका १,४.८:

पति-शब्दस्य घिसञ्ज्ञायां सिद्धायां अयं नियमः क्रियते, पति-शब्दः समासे एव घिसञ्ज्ञओ भवति ।
प्रजापतिना ।
प्रजापतये ।
समासे इति किं ? पत्या ।
पत्ये ।
एवकार इश्टतोऽवधारण-अर्थः ।
दृढमुष्टिना ।
दृढमुष्टये । ।

---

[#७७]

1. <षष्ठी-युक्तश्छन्दसि वा># । । पाणिनीयसूत्र १,४.९ । ।

_______काशिका १,४.९:

पतिः इति वर्तते ।
पूर्वेण नियमेन असमासे न प्राप्नोति इति वचनं आरभ्यते ।
षष्ठ्यन्तेन युक्तः पति-शब्दः छन्दसि वषये वा घिसञ्ज्ञो भवति ।
कुलुञ्चानां पतये नमः, कुलुञ्चानां पत्ये नमः ।
षस्ठी-ग्रहणं किं ? मया पत्या जरदष्टिर्यथासः ।
छन्दसि इति किं ? ग्रामस्य पत्ये । ।

---

1. <ह्रस्वं लघु># । । पाणिनीयसूत्र १,४.१० । ।

_______काशिका १,४.१०:

मात्रिकस्य ह्रस्वसञ्ज्ञा कृता तस्य अनेन लघुसञ्ज्ञा विधीयते ।
ह्रस्वं अक्षरं लघुसञ्ज्ञं भवति ।
भेता ।
छेत्त ।
अचीकरथ् ।
अजीहरथ् ।
लघु-प्रदेशाः - पुगन्त-लघु-उपधस्य च इत्येवं आदयः । ।

---

1. <संयोगे गुरु># । । पाणिनीयसूत्र १,४.११ । ।

_______काशिका १,४.११:

ह्रस्वं इति वर्तते ।
पूर्वेण लघुसञ्ज्ञायां प्राप्तायां गुरुसञ्ज्ञा विधीयते ।
संयोगे प्रतो ह्रस्वं अक्षरं गुरुसञ्ज्ञं भवति ।
कुण्डा ।
हुण्डा ।
शिक्षा भिक्षा ।
गुरु-प्रदेशाः - गुरोश्च हलः (*३,३.१०३) इत्येवं आदयः । ।

---

1. <दीर्घं च># । । पाणिनीयसूत्र १,४.१२ । ।

_______काशिका १,४.१२:

संयोगे इति न अनुवर्तते ।
सामान्येन सञ्ज्ञा-विधान ।
दीर्घं च अक्षरं गुरुसञ्ज्ञं भवति ।
ईहाञ्चक्रे ।
ईक्षाञ्चक्रे । ।

---

1. <यस्मात्प्रत्यय-विधिस्तद्-आदि प्रत्ययेऽङ्गम्># । । पाणिनीयसूत्र १,४.१३ । ।

_______काशिका १,४.१३:

यस्मात्प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तद्-आदि शब्द-रूपं प्रत्यये परतोऽङ्गसञ्ज्ञं भवति ।
कर्ता ।
हर्ता ।
करिष्यति हरिष्यति ।
अकरिष्यथ् ।
औपगवः ।
कापटवः ।
यस्मातिति सञ्ज्ञि-निर्देश-अर्थम्, तद्-आदि इति सम्बन्धाथ् ।
प्रत्यय-ग्रहणं किं ? न्यविशत ।
व्यक्रीणीत ।
नेर्बिशः (*१,३.१७) इत्युपसर्गाद्विधिरस्ति, तद्-आदेरङ्गसञ्ज्ञा स्याथ् ।
विधि-ग्रहणं किं ? प्रत्यय-परत्वं आत्रे मा भूथ् ।
स्त्री इयती ।
तद्-आदि-वचनं स्यादिनुं अर्थं ।

[#७८]

करिष्यावः ।
करिष्यामः ।
कुण्डानि ।
पुनः प्रत्यय-ग्रहणं किं अर्थं ? लुप्त-प्रत्यये मा भूथ् ।
श्र्य-र्थं ।
भ्र्व्-अर्थं ।
अङ्ग-प्रदेशाः - अङ्गस्य (*६,४.१) इत्येवं आदयः । ।

---

1. <सुप्-तिङ्-अन्तं पदम्># । । पाणिनीयसूत्र १,४.१४ । ।

_______काशिका १,४.१४:

सुप्तिङिति प्रत्याहार-गरहणं ।
सुबन्तं तिङन्तं च शब्द-रूपं पदसञ्ज्ञं भवति ।
ब्राह्मणाः पथनिथ् ।
पदसञ्ज्ञायां अन्तग्रहणं अन्यत्र सञ्ज्ञा-विधौ प्रत्यय-ग्रहणे तद्-अन्त-विधेः प्रतिषेध-अर्थं ।
गौरी ब्राह्मणितरा ।
पद-प्रदेशाः - पदस्य (*८,१.१३), पदात्(*८,१.१७) इत्येवं आदयः । ।

---

1. <नः क्ये># । । पाणिनीयसूत्र १,४.१५ । ।

_______काशिका १,४.१५:

क्ये इति क्यच्- क्यङ्- क्यशां सामान्य-ग्रहनं ।
न-अन्तं शब्द-रूपं क्ये परतः पदसञ्ज्ञं भवति ।
क्यच्- राजीयति ।
क्यङ्- राजायते ।
क्यश्- चर्मायति, चर्मायते ।
सिद्धे सत्यारम्भो नियम-अर्थः ।
न-अन्तं एव क्ये परतः पदसम्ञ्ज्ञं भवति, न अन्यथ् ।
वाच्यति ।
स्रुच्यति । ।

---

1. <सिति च># । । पाणिनीयसूत्र १,४.१६ । ।

_______काशिका १,४.१६:

यचि भं (*१,४.१८) इति वक्ष्यति ।
तस्यायं पुरस्तादपवादः ।
सिति प्रत्यये परतः पूर्वं पदसञ्ज्ञं भवति ।
भवतष्ठक्-छसौ (*४,२.११५) - भवदीयः ।
ऊर्णाया युस्(*५,२.१२३) - ऊर्णायुः ।
ऋतोरण्(*५,१.१०५), छन्दसि घस्(*५,१.१०६) - ऋत्वियः । ।

---

1. <स्वादिष्व-सर्वनमस्थाने># । । पाणिनीयसूत्र १,४.१७ । ।

_______काशिका १,४.१७:

---

1. <यचि भम्># । । पाणिनीयसूत्र १,४.१८ । ।

_______काशिका १,४.१८:

सवादिश्वसर्वनामस्थाने इति वर्तते ।
पूर्वेण पदसञ्ज्ञायां प्राप्तायां तद्-अपवादो भसञ्ज्ञा विधीयते ।
यकारादावजादौ च स्वादौ सर्वनामस्थान-वर्जिते प्रत्यये परतः पूर्वं भसञ्ज्ञं भवति ।
यकार-आदौ - गार्ग्यः ।
वात्सयः ।
अजादौ - दाक्षिः ।
प्लाक्षिः ।

[#७९]

नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानं ।
नभ इव नभस्वथ् ।
अङ्गिरा इव अङ्गिरस्वथ् ।
मनुरिव मनुष्वथ् ।
वृषण्वस्वश्वयोः ।
वृषनित्येतत्वस्वश्वयोः प्रतो भसञ्ज्ञं भवति छन्दसि विशये ।
वृषण्वसुः ।
वृषणश्वस्य मैनासीथ् ।
भप्रदेशाः -- भस्य (*६,४.१२९) इत्येवं आदयः । ।

---

1. <तसौ मत्व्-अर्थे># । । पाणिनीयसूत्र १,४.१९ । ।

_______काशिका १,४.१९:

भं इति वर्तते ।
तकार-अन्तं सकार-अन्तं शब्द-रूपं मत्व्-अर्थे प्रत्यये परतो भसञ्ज्ञं भवति ।
उदश्वित्वान्घोषः ।
विद्युत्वान्बलाहकः ।
सकारान्तं -- पयस्वी ।
यशस्वी ।
तसौ इति किं ? तक्षवान्ग्रामः । ।

---

1. <अयस्मय-आदीनि छन्दसि># । । पाणिनीयसूत्र १,४.२० । ।

_______काशिका १,४.२०:

अयस्मय-आदीनि शब्दरूपाणि छन्दसि विशये साधूनि भवन्ति ।
भपद-सञ्ज्ञ-अधिकारे विधनात्तेन सुखेन सधुत्वं अयस्मय-आदीनां विधीयते ।
अयस्मयं वर्म ।
अयस्मयानि पात्राणि ।
क्वचिदुभयं अपि भवति ।
स सुष्टुभा स ऋक्वता गणेन ।
पदत्वात्कुत्वं, भत्वाज्जश्त्वं न भवति ।
छन्दसि इति किं ? अयोमयं वर्म ।
आकृतिगणोऽयं । ।

---

1. <बहुषु बहुवचनम्># । । पाणिनीयसूत्र १,४.२१ । ।

_______काशिका १,४.२१:

ङ्य्-आप्प्रातिपदिकात्स्वादयः, लस्य तिबादयः इति सामान्येन बहुवचनं विहितं, तस्य अनेन बहुत्व-सङ्ख्या वाच्यत्वेन विधीयते ।
बहुषु बहुवचनं भवति ।
बहुत्वं अस्य वाच्यं भवति इति यावथ् ।
कर्मादयोऽप्यपरे विभक्तीनां अर्था वाच्याः ।
तदीये बहुत्वे बहुवचनं ।
कर्म-आदिषु बहुषु बहुवचनं इत्यर्थः ।
व्राह्मणाः पठन्ति ।
यत्र च सङ्ख्या सम्भवति तत्र अयं उपदेशः ।
अव्ययेभ्यस्तु निः-सङ्ख्येभ्यः सामान्य-विहिताः स्वादयो विद्यन्त एव । ।

---

1. <द्व्य्-एकयोर्द्विबचन-एकवचने># । । पाणिनीयसूत्र १,४.२२ । ।

_______काशिका १,४.२२:

द्वित्व-एकयोरर्थयोः द्विवचन-एकवचने भवतः ।
एतदपि सामान्य-विहितयोर्द्विवचन-एकवचनयोरर्थ-अभिधानं ।
द्वित्वे द्विवच्नं भवति ।
एकत्वे एकवचनं भवति ।
ब्राह्मणौ पठतः ।
ब्राह्मणः पठति । ।

---

[#८०]

1. <कारके># । । पाणिनीयसूत्र १,४.२३ । ।

_______काशिका १,४.२३:

कारके इति वशेषणं अपादानादिसञ्ज्ञाविषयं अधिक्रियते ।
कारके इत्यधिकारो वेदितव्यः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः कारके इत्येवं तद्वेदितव्यं ।
कारक-शब्दश्च निमित्त-पर्यायः ।
करकं हेतुः इत्यनर्थ-अन्तरं ।
कस्य हेतुः ? क्रियायाः ।
वक्ष्यति, घ्रुवमपायेऽपादानं (*१,४.२४) - ग्रामादागच्छति ।
पर्वतादवरोहति ।
कारके इति किं ? वृक्षस्य पर्णं पतति ।
कुड्यस्य पिण्डः पतति ।
अकथितं च (*१,३.५१), अकथितं च कारकं कर्मसञ्ज्ञं भवति - माणवकं पन्थानं पृच्छति ।
करके इति किं ? माणवकस्य पितरं पन्थानं पृच्छति ।
कारकसंशब्दनेषु च अनेन एव विशेषणेन व्यवहारो विज्ञायते । ।

---

1. <ध्रुवमपायेऽपादानम्># । । पाणिनीयसूत्र १,४.२४ । ।

_______काशिका १,४.२४:

ध्रुवं यदपाययुक्तं अपाये साध्ये यदवधिभूतं तत्कारकं अपादानसञ्ज्ञं भवति ।
ग्रामादागछ्हति ।
पर्वतादवरोहति ।
सार्थाद्धीनः ।
रथात्पतितः ।
जुगुप्साविरामप्रमादार्थनां उपसङ्ख्यानं ।
अधर्माज्जुगुप्सते ।
अधर्माद्विरमति ।
धर्मात्प्रमाद्यति ।
अपादानप्रदेशाः - अपादाने पञ्चमी (*२,३.२८) इत्येवं आदयः । ।

---

1. <भी-त्रा-अर्थानां भय-हेतुः># । । पाणिनीयसूत्र १,४.२५ । ।

_______काशिका १,४.२५:

बिभेत्य्-अर्थानां त्रायत्य्-अर्थानां च धातूनां प्रयोगे भय-हेतुर्यः स्तत्कारकं अपादानसञ्ज्ञं भवति ।
चौरेभ्यो बिभेति ।
चौरेभ्य उद्विजते ।
त्रायत्य्-अर्थानां - चौरेभ्यस्त्रायते ।
चौरेभ्यो रक्षति ।
भय-हेतुः इति किं ? अरण्ये बिभेति ।
अरण्ये त्रायते । ।

---

1. <परा-जेरसोढः># । । पाणिनीयसूत्र १,४.२६ । ।

_______काशिका १,४.२६:

परापूर्वस्य जयतेः प्रयोगेऽसोढो, योऽर्थः सोढुं न शक्यते, तत्कारकं अपादानसञ्ज्ञं भवति ।
अध्ययनात्पराजयते ।
असोढः इति किं ? शत्रून्पराजयते । ।

---

1. <वारण-अर्थानां ईप्सितः># । । पाणिनीयसूत्र १,४.२७ । ।

_______काशिका १,४.२७:
वारण-अर्थानां धातूनां प्रयोगे य ईप्सितोऽर्थः तत्कारकं अपादानसञ्ज्ञं भवति ।
प्रवृत्तिविघातो वारनं ।
यवेभ्यो गा वारयति ।
यवेभ्यो गा निवर्तयति ।
ईप्सितः इति किं ? यवेभ्यो गा वारयति क्षेत्रे । ।

---

[#८१]

1. <अन्तर्धौ येन अदर्शनं इच्छति># । । पाणिनीयसूत्र १,४.२८ । ।

_______काशिका १,४.२८:

व्यव्धानं अन्तर्धिः ।
अन्तर्धि-निमित्तं येन अदर्शनं आत्मन इच्छति तत्कारकं अपादानसञ्ज्ञं भवति ।
उपाध्यायादन्तर्धत्ते ।
उपाध्यायान्निलीयते ।
मा मामुपाध्यायो द्राक्षीतिति निलीयते ।
अन्तर्धौ इति किं ? चौरान्न दिदृक्षते ।
इच्छति-ग्रहणं किं ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् । ।

---

1. <आख्याता-उपयोगे># । । पाणिनीयसूत्र १,४.२९ । ।

_______काशिका १,४.२९:

आख्याता प्रतिपादयिता ।
उपयोगः नियम-पूर्वकं विध्या-ग्रहणं ।
उपयोगे साध्ये य आख्याता तत्कारकं अपादानसञ्ज्ञं भवति ।
उपाध्यायादधीते ।
उपाध्यायादागमयति ।
उपयोगे इति किं ? नटस्य शृणोति । ।

---

1. <जनि-कर्तुः प्रकृतिः># । । पाणिनीयसूत्र १,४.३० । ।

_______काशिका १,४.३०:

जनेः कर्ता जनि-कर्ता ।
जन्य्-अर्थस्य जन्मनः कर्ता जायमानः, तस्य या प्रकृतिः कारणम्, हेतुः, तत्कारकं अपादानञ्ज्ञं भवति ।
शृङ्गाच्छरो जायते ।
गोमयाद्वृश्चिको जायते । ।

---

1. <भुवः प्रभवः># । । पाणिनीयसूत्र १,४.३१ । ।

_______काशिका १,४.३१:

कर्तुः इति वर्तते ।
भवनं भूः ।
प्रभवत्यस्मातिति प्रभाः ।
भू-कर्तुः प्रभवो यः, तत्कारकं अपादानसंज्ञं भवति ।
हिमवतो गङ्गा प्रभवति ।
काश्मीरेभ्यो वितस्ता प्रभवति ।
प्रथमत उपलभ्यते इत्यर्थः । ।

---

1. <कर्मणा यं अभिप्रैति स सम्प्रदानम्># । । पाणिनीयसूत्र १,४.३२ । ।

_______काशिका १,४.३२:

कर्मणा करण-भूतेन कर्ता यं अभिप्रैति तत्कारकं सम्प्रदानसञ्ज्ञं भवति ।
अन्वर्थसञ्ज्ञा-विज्ञानाद्ददाति-कर्मणा इति विज्ञायते ।
उपाध्यायाय गां ददाति ।
माणवकाय भिक्षां ददाति ।
क्रिया-ग्रहणं अपि कर्तव्यं ।
क्रिययाऽपि यं अभिप्रैति स सम्प्रदानं ।
श्राद्धाय निगर्हते ।
युद्धाय सन्नह्यते ।
पत्ये शेते ।
सम्प्रदानप्रदेशाः - चतुर्थी सम्प्रदाने (*२,३.१३) इत्येवं आदयः ।
कर्मणः करणसञ्ज्ञा वक्तव्या सम्प्रदानस्य च कर्मसञ्ज्ञा ।
पशुना रुद्रं यजते ।
पशुं रुद्राय ददाति इत्यर्थः । ।

---

[#८२]

1. <रुच्य्-अर्थानां प्रीयमाणः># । । पाणिनीयसूत्र १,४.३३ । ।

_______काशिका १,४.३३:

रुचिना समान-अर्थाः रुच्य्-अर्थाः अन्यकर्तृकोऽभिलाषो रुदिः ।
रुच्य्-अर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थः, तत्कारकं सम्प्रदाना-सञ्ज्ञं भवति ।
देवदत्ताय रोचते मोदकः ।
यज्ञदत्ताय स्वदतेऽपूपः ।
देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता ।
प्रीयमाणः इति किं ? देवदत्ताय रोचते मोदकः पथि । ।

---

1. <श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः># । । पाणिनीयसूत्र १,४.३४ । ।

_______काशिका १,४.३४:

श्लाघ ह्नुङ्स्था शप इत्येतेषां ज्ञीप्स्यमानो योऽर्थह्, तत्कारकं सम्प्रदान-सञ्ज्ञं भवति ।
ज्ञीप्स्यमानः ज्ञपयितुं इष्यमणः, बोध्यितुं अभिप्रेतः ।
देवदत्ताय श्लाघते ।
देवदत्तं श्लाघमानस्तां श्लाघां तं एव ज्ञपयितुं इच्छति इत्यर्थः ।
एवं - देवदत्ताय ह्नुते ।
यज्ञदत्ताय ह्नुते ।
देवदत्ताय तिष्ठते ।
यज्ञदत्ताय तिष्ठते ।
देवदत्ताय शपते ।
यज्ञदत्ताय शपते ।
ज्ञीप्स्यमानः इति किं ? देअदत्ताय श्लाघते पथि । ।

---

1. <धारेरुत्तमर्णः># । । पाणिनीयसूत्र १,४.३५ । ।

_______काशिका १,४.३५:

धारयतेः प्रयोगे उत्तमर्णो योऽर्थः, तत्कारकं सम्प्रदानसञ्ज्ञं भवति ।
उत्तमं ऋणं यस्य स उत्तमर्णः ।
कस्य चोत्तममृणं ? यदीयं धनं ।
धनस्वामी प्रयोक्ता उत्तमर्णः, स सम्प्रदानसञ्ज्ञो भवति ।
देवदत्ताय शतं धारयति ।
यज्ञदत्ताय शतं धारयति ।
उत्तार्णः इति किं ? देवदत्ताय शतं धरयति ग्रामे । ।

---

1. <स्पृहेरीप्सितः># । । पाणिनीयसूत्र १,४.३६ । ।

_______काशिका १,४.३६:

स्पृह ईप्सायां चुरादावदन्तः पठ्यते ।
तस्य ईप्सितो योऽर्थः, तत्कारकं सम्प्रदान-सञ्ज्ञं भवति ।
ईप्सितः इत्यभिप्रेतः उच्यते ।
पुष्पेभ्यः स्पृहयति ।
फलेभ्यः स्पृहयति ।
ईप्सितः इति किं ? पुश्पेभ्यो वने स्पृहयति । ।

---

1. <क्रुध-द्रुह-ईर्ष्य-असूय-अर्थानां यं प्रति कोपः># । । पाणिनीयसूत्र १,४.३७ । ।

_______काशिका १,४.३७:

अमर्षः क्रोधः ।
अपकारो द्रोहः ।
अक्षमा ईर्ष्या ।
गुणेषु दोषाविष्करनं असूया ।
क्रुधाद्य्-अर्थानां प्रयोगे यं प्रति कोपः, तत्कारकं सम्प्रदानसञ्ज्ञं भवति ।
क्रोधस्तावत्कोप एव ।
द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते ।
तस्मात्सामान्येन विशेसणं यं प्रति कोपः इति ।
देवदत्ताय क्रुध्यति ।
देवदत्ताय द्रुह्यति ।
देवदत्ताय ईर्ष्यति ।
देवदत्ताय असूयति ।
यं प्रति कोपः इति किं ? भार्यां ईर्ष्यति, मा एनां अन्यो द्राक्षीतिति । ।

---

[#८३]

1. <क्रुध-द्रुहोरुपसृष्ठयोः कर्म># । । पाणिनीयसूत्र १,४.३८ । ।

_______काशिका १,४.३८:

पूर्वेण सम्प्रदानसञ्ज्ञायां प्राप्तायां कर्मसञ्ज्ञा विधीयते।

[#८२]

क्रुध-द्रुहोरुपसृष्टयोरुपसर्ग-सम्बद्धयोः यं प्रति कोपः, तत्कारकं कर्मसञ्ज्ञं भवति।
देवदत्तं अभिक्रुध्यति।
देवदत्तं अभिद्रुह्यति।
उपसऋष्टयोः इति किं? देवदत्ताय क्रुध्यति।
यज्ञदत्ताय द्रुह्यति।।

---

[#८३]

1. <रादः-ईक्ष्योर्यस्य विप्रश्नः>#।। पाणिनीयसूत्र १,४.३९।।

_______काशिका १,४.३९:

राधेरीक्षेश्च कारकं सम्प्रदान-सञ्ज्ञं भवति।
कीदृशं? यस्य विप्रशः।
विविधः प्रश्नः विप्रश्नः।
स कस्य भवति? यस्य शुभाशुभं पृच्छयते।
देवदत्ताय राध्यति।
देवदत्ताय ईक्षते।
नैमित्तिकः पृष्टः सन्देवदत्तस्य दैवं पर्यालोचयति इत्यर्थः।।

---

1. <प्रत्य्-आङ्भ्यां श्रुवः पूर्वस्य कर्ता>#।। पाणिनीयसूत्र १,४.४०।।

_______काशिका १,४.४०:

प्रति आङित्येवं पूर्वस्य शृणोतेः कारकं सम्प्रदान-सञ्ज्ञं भवति।
कीदृशं? पूर्वस्य कर्ता।
प्रतिपूर्व आङ्पूर्वश्च शृणोति रभ्युपगमे प्रतिज्ञाने वर्तते।
स च अभ्युपगमः परेन प्रयुक्तस्य सतो भवति।
तत्र प्रयोक्ता पूर्वस्याः क्रियाया कर्ता सम्प्रदानसञ्ज्ञो भवति।
देवचत्ताय गां प्रतिशृणोति।
देवदत्ताय गामाशृणोति।

प्रतिजानीते इत्यर्थः । ।

---

1. <अनु-प्रति-गृणश्च># । । पाणिनीयसूत्र १,४.४१ । ।

_______काशिका १,४.४१:

पूर्वस्य कर्ता इति वर्तते ।
अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायः कर्तृ-भूतं संप्रदान-सञ्ज्ञं भवति ।
होत्रेऽनुगृणाति ।
होता प्रथमं शंसति, तं अन्यः प्रोत्साहयति ।
अनुगरः, प्रतिगरः इति हि संसितुः प्रोत्साहने वर्तते ।
होत्रेऽनुगृणाति, होतारं शंसन्तं प्रोत्साहयति इत्यर्थः । ।

---

1. <साधकतमं करणम्># । । पाणिनीयसूत्र १,४.४२ । ।

_______काशिका १,४.४२:

क्रिया-सिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसञ्ज्ञं भवति ।
दात्रेण लुनाति ।
परशुना छिनत्ति ।
तमब्-ग्रहनं किं ? गङ्गायां घोषः ।
कूपे गर्गकुलं ।
करणप्रदेशाः -- कर्तृ-करणयोस्तृतीया (*२,३.१८) इत्येवं आदयः । ।

---

[#८४]

1. <दिवः कर्म च># । । पाणिनीयसूत्र १,४.४३ । ।

_______काशिका १,४.४३:

पूर्वेण करण-सञ्ज्ञायां करन-सञ्ज्ञायां प्राप्तायां कर्मसञ्ज्ञा विधीयते ।
दिवः साधकतमं यत्कारकं तत्कर्मसञ्ज्ञं भवति, चकारात्करणसञ्ज्ञं च ।

अक्षान्दीव्यति, अक्षैर्दीव्यति । ।

---

1. <परिक्रयणे सम्प्रदानं अन्यतरस्याम्># । । पाणिनीयसूत्र १,४.४४ । ।

_______काशिका १,४.४४:

साधकतमं इति वर्तते ।
पूर्वेन करण-सञ्ज्ञायां प्राप्ताया सम्प्रदान-सज्ञा पक्षे विधीयते ।
परिक्रयणे साधकतमं कारकं अन्यतरस्यां सम्प्रदान-सञ्ज्ञं भवति ।
परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्, नत्यन्तिकः क्रय एव ।
शतेन परिक्रीतोऽनुब्रूहि, शताय परिक्रीतोऽनुब्रूहि ।
सहस्रेण परिक्रीतोऽनुब्रूहि, सहस्राय परिक्रीतोऽनुब्रूहि । ।

---

1. <आधारोऽधिकरणम्># । । पाणिनीयसूत्र १,४.४५ । ।

_______काशिका १,४.४५:

आध्रियन्तेऽस्मिन्क्रियाः इत्याधारः ।
कर्तृ-कर्मणोः क्रियाश्रयभूतयोः धारणक्रियां प्रति य आधारह्, तत्कारकं अधिकरणसञ्ज्ञं भवति ।
कटे आस्ते ।
कटे शेते ।
स्थाल्यां पचति ।
अधिकरन-प्रदेशाः -- सप्तम्य्-अधिकरणे च (*२,३.३६) इत्येवं आदयः । ।

---

1. <अधि-शीङ्-स्था-आसां कर्म># । । पाणिनीयसूत्र १,४.४६ । ।

_______काशिका १,४.४६:

पूर्वेण अधिकरण-सञ्ज्ञायां प्राप्तायां कर्म-सञ्ज्ञा विधीयते ।
अधिपूर्वाणां शीङ्स्था आसित्येतेषां आधारो यः, तत्कारकं कर्म-सञ्ज्ञं भवति ।
ग्रामं अधिशेते ।
ग्रामं अधितिष्ठति ।

पर्वतं अध्यास्ते । ।

---

1. <अभिनिविशश्च># । । पाणिनीयसूत्र १,४.४७ । ।

_______काशिका १,४.४७:

अभिनिपूर्वस्य विशतेराधारो यः, तत्कारकं कर्म-सञ्ज्ञं भवति ।
ग्रामं अभिनिविशते ।
कथं कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, या या सञ्ज्ञा यस्मिन्यस्मिन्सञ्ज्ञिन्यभिनिविशते इति ? अन्यतरस्यां इति वर्तते, परिक्रयणे सम्प्रदानं अन्यतरस्यां (*१,४.४४) इत्यतः ।
सा च व्यवस्थित-विभाषा विज्ञायते । ।

---

[#८५]

1. <उप-अन्व्-अध्य्-आङ्-वसः># । । पाणिनीयसूत्र १,४.४८ । ।

_______काशिका १,४.४८:

उप अनु अधि आ इत्येवं पूर्वस्य वसतेराधारो यः, तत्कारकं कर्मसञ्ज्ञं भवति ।
ग्रामं उपवसति सेना ।
पर्वतं उपवसति ।
ग्रामं अनुवसति ।
ग्रामं अधिवसति ।
ग्रामं आवसति ।
वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः ।
ग्रामे उपवसति ।
भोजन-निवृत्तिं करोति इत्यर्थः । ।

---

1. <कर्तुरीप्सिततमं कर्म># । । पाणिनीयसूत्र १,४.४९ । ।

_______काशिका १,४.४९:

कर्तुः क्रियया यदाप्तुं इष्टतमं तत्कारकं कर्मसञ्ज्ञं भवति ।
कटं करोति ।

ग्रामं गच्छति ।
कर्तुः इति किं ? माषेष्वश्वं बध्नाति ।
कर्मण ईप्सिता माषाः, न कर्तुः ।
तं अब्ग्रहणं किं ? पयसा ओदनं भुङ्क्ते ।
कर्म इत्यनुवर्तमाने पुनः कर्म-ग्रहणं आधार-निवृत्त्य्-अर्थं ।
इतरथा आधारस्य+एव हि स्यात्गेहं प्रविशति इति ।
ओदनं पचति, सक्तून्पिबति इत्यादिषु न स्याथ् ।
पुनः कर्म-ग्रहणात्सर्वत्र सिद्ध भवति ।
कर्म-प्रदेशाः -- कर्मणि द्वितीया (*२,३.२) इत्येवं आदयः । ।

---

1. <तथा-युक्तं च अनीप्सितम्># । । पाणिनीयसूत्र १,४.५० । ।

_______काशिका १,४.५०:

येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते, तेन+एव चेत्प्रकारेन यदनीप्सितं युक्तं भवति, तस्य कर्मसञ्ज्ञा विधीयते ।
ईप्सितादन्यत्सर्वं अनीप्सितम्, द्वेष्यम, इतरच्च ।
विषं भक्षयति ।
चौरान्पश्यति ।
ग्रामं गच्छन्वृक्ष-मूलान्युपसर्पति । ।

---

1. <अकथितं च># । । पाणिनीयसूत्र १,४.५१ । ।

_______काशिका १,४.५१:

अकथितं च यत्कारकं तत्कर्मसञ्ज्ञं भवति ।
केन अकथितं ? अपादानादिविशेषकथाभिः ।
परिगणनं कर्तव्यं -- दुहियाचिरुधिप्रच्छिभिक्षिचित्रां उपयोगनिमित्तं अपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितं आचरितं कविना । ।
उपयुज्यते इत्युपयोगः पयःप्रभृति ।
तस्य निमित्तं गवादि ।
तस्य+उपयुज्यमान-पयःप्रभृति-निमित्तस्य गवादेः कर्मसञ्ज्ञा विधीयते ।
पाणिना कांस्यपात्र्यां गां दोग्धि पयः ।
पाण्यादिकं अप्युपयोग-निमित्तं, तस्य ८६ कस्मान्न भवति ? न+एतदस्ति ।

[#८६]

विहिता हि तत्र करणादिसञ्ज्ञा ।
तद्-अर्थं आह - अपूर्वविधौ इति ।

ब्रुविशासि-गुणेन च यत्सचते ।
ब्रुविशास्योर्गुणः साधनम्, प्रधानं, प्रधानं कर्म, धर्म-अदिकम्, तेन यत्सम्बध्यते, तदकीर्तितं आचरितं कविना, तदकथितं औक्तं सूत्रकारेण ।
दुहि - गां दोग्धि पयः ।
याचि - पौरवं गां याचते ।
रुधि - गामवरुणद्धि व्रजं ।
प्रच्छि - माणावकं पन्थानं पृच्छति ।
भिक्षि - पौरवं गां भिक्षते ।
चिञ्- वृक्षमविचिनोति फलानि ।
ब्रुवि - माणवकं धर्मं ब्रूते ।
शासि - माणवकं धर्मं अनुशास्ति । ।

---

1. <गुति-बुद्धि-प्रत्यवसान-अर्थ-शब्द-कर्म-अकर्मकाणां अणि कर्ता स णौ># । । पाणिनीयसूत्र १,४.५२ । ।

_______काशिका १,४.५२:

अर्थ-शब्दः प्रत्य्-एकं अभिसम्बध्यते ।
गत्य्-अर्थानां बुद्ध्य्-अर्थानां प्रत्यवसान-अर्थानं च धातूनां, तथ शब्द-कर्मकाणां अकर्मकनां च अण्य्-अन्तानां यः कर्ता, स ण्य्-अन्तानां कर्मसञ्ज्ञो भवति ।
गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामं ।
याति माणवको ग्रामम्, यापयति माणवकं ग्रामं ।
गत्य्-अर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः ।
नयति भारं देवदत्तः, नाययति भारं देवदत्तेन ।
वहति भारं देवदत्तः, वाहयति भारं देवदत्तेन ।
वहेरनियन्तृकर्तृकस्य+इति वक्तव्यं ।
इह प्रैत्षेधो मा भूत्, वहन्ति यवान्बलीवर्दाः, वाहयति यवान्बलीवर्दानिति ।
बुद्धिः - बुध्यते माणवको धर्मम्, बोधयति माणवकं दह्मं ।
वेत्ति माणवको धर्मम्, वेदयति माणवकं धर्मं ।
प्रत्यवसानं अभ्यवहारः ।
भुङ्क्ते माणवक ओदनम्, भोजयति माणवकं ओदनं ।
अश्नाति मानवक ओदनम्, आशयति माणवकमोदनं ।
आदिखाद्योः प्रतिशेधो वक्तव्यः ।
अत्ति माणवक ओदनम्, आदयते माणवकेन ओदनं ।
खादति माणवकः, खादयति माणवकेन ।
भक्षेरहिंस-अर्थस्य प्रतिषेधो वक्तव्यः ।
भक्षयति पिण्डीं देवदत्तः, भक्षयति पिण्डीं देवदत्तेन इति ।
अहिंस-अर्थस्य इति किं ? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति बलीवर्दान्सस्यं ।
शब्द-कर्मणां -- अधीते मानवको वेदम्, अध्यापयति माणवकं वेदं ।
पठति माणवको वेदं ।
पाठयति माणवकं वेदं ।
अकर्मकाणां - आस्ते देवदत्तः, आसयति देवदत्तं ।
शेते देवदत्तः, शाययति देवदत्तं ।
एतेषां इति किं ? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेन इति ।
अण्यन्तानां इति किं ? गमयति देवदत्तो यज्ञदत्तम्, तं अपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । ।

---

[#८७]

1. <हृ-क्रोरन्यतरस्याम्># । । पाणिनीयसूत्र १,४.५३ । ।

_______काशिका १,४.५३:

अनि कर्त स णौ इति वर्तते ।
हरतेः करोतेश्च अण्यन्तयोर्यः कर्ता स ण्यन्तयोरन्यतरस्यां कर्मसञ्ज्ञो भवति ।
हरति भारं मानवकः, हरयति भारं मानवकं, मानवकेन इति वा ।
करोति कटं देवदत्तः, कारयति कटं देवदत्तं, देवदत्तेन इति वा ।
अभिवादि-दृशोरात्मनेपद उपसङ्ख्यानं ।
अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तं, देवदत्तेन इति वा ।
पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान्राजानम्, भृत्यैः इति वा ।
आत्मनेपदे इति किं ? दर्शयति चैत्रं मैत्रमपरः ।
प्राप्त-विकल्पत्वाद्द्वितीयैव ।
अभिवादयति गुरुं माणवकेन पिता ।
अप्राप्तविकल्पत्वात्तृतीया+एव । ।

---

1. <स्वतन्त्रः कर्ता># । । पाणिनीयसूत्र १,४.५४ । ।

_______काशिका १,४.५४:

स्वतन्त्रः इति प्रधान-भूत उच्यते ।
अगुणी-भूतो, यः क्रिया-सिद्धौ स्वतन्त्र्येण विवक्ष्यते, तत्कारकं कर्तृसञ्ज्ञं भव्ति ।
देवदत्तः पचति ।
स्थाली पचति ।
कर्तृ-प्रदेशाः - कर्तृ-करणयोस्तृतीया (*२,३.१८) इत्येवं आदयः । ।

---

1. <तत्-प्रयोजको हेतुश्च># । । पाणिनीयसूत्र १,४.५५ । ।

_______काशिका १,४.५५:

ततिति अनन्तरः कर्ता परामृश्यते ।
तस्य प्रयोजकस्तत्-प्रयोजकः ।
निपातनात्समासः ।
स्वतन्त्रस्य प्रयोजको योऽर्थः, तत्-कारकं हेतु-सञ्ज्ञं भवति ।
चकारात्कर्तृ-सञ्ज्ञं च ।
सञ्ज्ञासमावेश-अर्थश्-चकारः ।
कुर्वाणं प्रयुङ्क्ते, कारयति ।
हारयति ।
हेतुत्वद्णिचो निमित्तं कर्तृत्वाच्च कर्तृ-प्रत्ययेन+उच्यते ।
हेतु-प्रदेशाः - हेतुमति च (*३,१.२६) इत्येवं अदयः । ।

---

1. <प्राग्-रीश्वरान्निपाताः># । । पाणिनीयसूत्र १,४.५६ । ।

_______काशिका १,४.५६:

अधिरीश्वरे (*१,४.९७) इति वक्ष्यति ।
प्रागेतस्मादवधेर्यानित ऊर्ध्वं अनुक्रमिष्यामः, निपात-सञ्ज्ञास्ते वेदितव्याः ।
वक्ष्यति - च-अदयोऽसत्त्वे (*१,४.५७), च, वा, ह, अह ।
प्राग्-वचनं सञ्ज्ञा-समावेश-अर्थं ।
गत्य्-उपसर्ग-कर्मप्रवचनीय. सञ्ज्ञाभिः सह निपात-सञ्ज्ञा समाविशति ।
रेफोच्चारणं इश्वरे तोसुन्-कसुनौ (*३,४.१३) इत्ययं अवधिर्मा विज्ञायि इति ।
रीश्वराद्वीश्वरान्मा भूत्कृन्मेजन्तः परोऽपि सः ।
समासेष्वव्ययीभावो लौकिकं च अतिवर्तते । ।

---

[#८८]

1. <च-आदयोऽसत्त्वे># । । पाणिनीयसूत्र १,४.५७ । ।

_______काशिका १,४.५७:

च-आदयो निपात-सञ्ज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते ।
प्रसज्य-प्रतिषेधोऽयं ।
सत्त्वं इति द्रव्यं उच्यते ।
च ।
वा ।
ह ।
अह ।
एव ।

एवं ।
नूनं ।
शश्वथ् ।
युगपथ् ।
सूपथ् ।
कूपथ् ।
कुविथ् ।
नेथ् ।
चेथ् ।
चण् ।
कच्चिथ् ।
यत्र ।
नह ।
हन्त ।
माकिं ।
नकिं ।
माङ् ।
माङो ङकारो विशेषणार्थः, माङि लुङ्(*३,३.१७५) इति ।
इह न भवति, मा भवतु, म भविष्यति ।
नञ् ।
यावथ् ।
तावथ् ।
त्वा ।
त्वै ।
द्वै ।
रै ।
श्रौषठ् ।
वौषठ् ।
स्वाहा ।
वषठ् ।
स्वधा ।
ओं ।
किल ।
तथा ।
अथ ।
सु ।
स्म ।
अस्मि ।
अ ।
इ ।
उ ।
ऋ ।
ऌ ।
ए ।
ऐ ।
ओ ।
औ ।
अं ।
तक् ।

उञ् ।
उकञ् ।
वेलायां ।
मात्रायां ।
यथा ।
यथ् ।
यं ।
तथ् ।
किं ।
पुरा ।
अद्धा ।
धिक् ।
हाहा ।
हे ।
है ।
प्याठ् ।
पाठ् ।
थाठ् ।
अहो ।
उताहो ।
हो ।
तुं ।
तथाहि ।
खलु ।
आं ।
आहो ।
अथो ।
ननु ।
मन्ये ।
मिथ्या ।
असि ।
ब्रूहि ।
तु ।
नु ।
इति ।
इव ।
वथ् ।
चन ।
बत ।
इह ।
शं ।
कं ।
अनुकं ।
नहिकं ।
हिकं ।
सुकं ।
सत्यं ।
ऋतं ।
श्रद्धा ।

इद्धा।
मुधा।
नो चेथ्।
न चेथ्।
नहि।
जातु।
कथं।
कुतः।
कुत्र।
अव।
अनु।
हाहौ।
हैहा।
ईहा।
आहोस्विथ्।
छम्बठ्।
खं।
दिष्ट्या।
पशु।
वठ्।
सह।
आनुषक्।
अङ्ग।
फठ्।
ताजक्।
अये।
अरे।
चटु।
बाठ्।
कुं।
खुं।
घुं।
हुं।
आईं।
शीं।
सीं।
वै।
उपसर्ग-विभक्ति-स्वर-प्रतिरूपकाश्च निपाताः।
उपसर्ग-प्रतिरूपकाः -- अवदत्तं विदत्तं च प्रदतं च अदिकर्मणि।
सुदत्तं अनुदत्तं च निदत्तं इति चेष्यते।।
अच उपसर्गात्तः (*७,४.४७) इति तत्वं न भवति।
दुर्नीतं।
दुर्नयः।
दुर्निर्णयः।।
उपसर्गात्(*८,४.१४) इति णत्वं न भवति।
असत्त्वे इति किं? पशुर्वै पुरुषः।
पशुः पुरोडशः निपात-प्रदेशाः -- स्वर-आदि-निपतं अव्ययं (*१,१.३७) इत्येवं आदयः।।

---

1. <प्र-आदयः># । । पाणिनीयसूत्र १,४.५८ । ।

_______काशिका १,४.५८:

प्र-आदयोऽसत्त्वे निपत-सञ्ज्ञा भवन्ति ।
प्र ।
परा ।
अप ।
सं ।
अनु ।
अव ।
निस् ।
निर् ।
रुस् ।
दुर् ।
वि ।
आङ् ।
नि ।
अधि ।
अपि ।
अति ।
सु ।
उतभि ।
प्रति ।
परि ।
उप् ।
पृतग्योग-करनं उत्तरसञ्ज्ञा-विशेषण-अर्थं ।
उपसर्गाः क्रिया-योगे (*१,४.५९) इति च-आदीनां उपसर्ग-सञ्ज्ञा मा भूथ् ।
असत्त्वे इत्येव, परा जयति सेना । ।

---

[#८९]

1. <उपसर्गाः क्रिया-योगे># । । पाणिनीयसूत्र १,४.५९ । ।

_______काशिका १,४.५९:

प्र-आदयः क्रिया-योगे उपसर्गस्-अञ्ज्ञा भवन्ति ।
प्रणयति ।
परिणयति ।

प्रणायकः ।
परिणायकः ।
क्रिया-योगे इति किं ? प्रगतो नायकोऽस्माद्देशात्, प्रनायको देशः ।
मरुच्-छाब्दस्य च+उपसङ्ख्यानं कर्तव्यं ।
मरुद्भिर्दत्तो मरुतः ।
सञ्ज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि अच उपसर्गात्तः (*७,४.४७) इति तत्त्वं भवति ।
श्रच्-छब्दस्य+उपसङ्ख्यानं ।
आत्-अश्-च-उपसर्गे (*३,३.१०६) इति अङ्भवति - श्रद्धा ।
उपसर्ग. प्रदेशाः -- उपसर्गे घोः किः (*३,३.९३) इत्येवं आदयः । ।

---

1. <गतिश्च># । । पाणिनीयसूत्र १,४.६० । ।

_______काशिका १,४.६०:

गति-सञ्ज्ञकाश्च प्र-आदयो भवन्ति क्रिया-योगे ।
प्रकृत्य ।
प्रकृतं ।
यत्प्रकरोति ।
योग-विभाग उत्तर-अर्थः ।
उत्तरत्र गति-सञ्ज्ञा+एव यथा स्याथ् ।
उपसर्ग-सञ्ज्ञा मा भूथ् ।
ऊरीस्यातित्यत्र उपसर्ग-प्रादुर्भ्यां अस्तिर्य्-अच्-परः (*८,३.८७) इति षत्वं प्रसज्येत ।
च-करः सञ्ज्ञा-समावेश-अर्थः ।
प्रणीतं ।
अभिषिक्तं ।
गतिरनन्तरः (*६,२.४९) इति स्वरः, उपसर्गात्(*८,४.१४) (*८,३.६५) इति णत्वषत्वे च भवतः ।
कारिका-शब्दस्य+उपसङ्ख्यानं ।
कारिका-कृत्य ।
कारिका-कृतं ।
यत्कारिका करोति ।
पुनश्चनसौ छन्दसि गतिसञ्ज्ञौ भवत इति वक्तव्यं ।
पुनरुत्स्यूतं वासो देयं ।
गतिर्गतौ (*८,१.७०) इति निघातो भवति ।
चनो हितः ।
गतिरनन्तरः (*६,२.४९) इति स्वरः ।
गति-प्रदेशाः -- कु-गति-प्र-आदय (*२,२.१८) इत्येवं आदयः । ।

---

1. <ऊर्य्-आदि-च्वि-डाचश्च># । । पाणिनीयसूत्र १,४.६१ । ।

_______काशिका १,४.६१:

ऊर्य्-आदयः शब्दाः च्व्य्-अन्ता डज्-अन्ताश्च क्रिया-योगे गति-सञ्ज्ञा भवन्ति ।
च्वि-डाचोः कृभ्वस्तियोगे विधनं ।
तत्-साहचर्यादूर्य्-आदीनां अपि तैरेव योगे गति-सञ्ज्ञा विधीयते ।
ऊरी-उररी-शब्दावङ्गीकरने विस्तारे च ।
ऊरीकृत्य ।
ऊरीकृतं ।
यदुरीकरोति ।
उररीकृत्य ।

[#९०]

उररीकृतं ।
यदुररीकरोति ।
पापी ।
ताली ।
आत्ताली ।
वेताली ।
धूसी ।
शकला ।
संशक्ला ।
ध्वंसकला ।
भ्रंशकला ।
एते शकलादयो हिंसायं ।
शकलाकृत्य ।
संशकलाकृत्य ।
ध्वंसकलाकृत्य ।
भ्रंशकलाकृत्य ।
गुलुगुध पीड-अर्थे - गुलुगुधाकृत्य ।
सुजूःसह-अर्थे - सजूःकृत्य ।
फलू, फली, विक्ली, आक्ली इति विकारे - फलू कृत्य ।
फली कृत्य ।
विक्ली कृत्य ।
आलूष्टी ।
करली ।
केवाली ।
शेवाली ।
वर्षाली ।
मस्मसा ।
मसमसा ।
एते हिंसायां ।
वषठ् ।
वौषठ् ।
श्रौषठ् ।
स्वाहा ।
स्वधा ।

वन्धा ।
प्रादुस् ।
श्रुथ् ।
आविस् ।
च्व्य्-अन्ताः खल्वपि -- शुक्लीकृत्य ।
शुक्लीकृतं ।
यच्छुक्लीकरोति ।
डाच्-- पटपटाकृत्य ।
पटपटाकृतं ।
यत्पटपटकरोति । ।

---

1. <अनुकरणं च अनिति-परम्># । । पाणिनीयसूत्र १,४.६२ । ।

_______काशिका १,४.६२:

इतिः परे यस्मातिति बहुव्रीहिः ।
अनुकरनं अनितिपरं क्रिया-योगे गति-सञ्ज्ञं भवति ।
खाट्कृत्य ।
खाट्कृतं ।
यत्खाट्करोति ।
अनितिपरं इति किं ? खाडिति कृत्वा निरष्ठीवत् । ।

---

1. <आदर-अनादरयोः सद्-असती># । । पाणिनीयसूत्र १,४.६३ । ।

_______काशिका १,४.६३:

प्रीतिसंभ्रम आदरः ।
परिभवौदासीन्यं अनादरः ।
आदरानादरयोः यथा-क्रमं सद्-असच्-छब्दौ गति-सञ्ज्ञौ भवतः ।
सत्कृत्य ।
सत्कृतं ।
यत्सत्करोति ।
असत्कृत्य ।
असत्कृतं ।
यदसत्करोति ।
आदर-अनादरयोः इति किं ? सत्कृत्वा काण्डं गतः ।
असत्कृत्वा काण्डं गतः । ।

---

1. <भूषनेऽलम्># । । पाणिनीयसूत्र १,४.६४ । ।

_______काशिका १,४.६४:

अलं इति प्रतिषेधे, सामर्थ्ये, पर्याप्तौ, भूषणे च इति विशेषनं उपादीयते ।
भूवणे योऽलं-शब्दः स गति-सञ्ज्ञो भवति ।
अलङ्कृत्य ।
अलङ्कृतं ।
यदलङ्करोति ।
भूषणे इति किं ? अलं भुक्त्वा ओदनं गतः । ।

---

1. <अन्तरपरिग्रहे># । । पाणिनीयसूत्र १,४.६५ । ।

_______काशिका १,४.६५:

अन्तः-शब्दोऽपरिग्रहेऽर्थे गति-सञ्ज्ञो भवति ।
परिग्रहः स्वीकरणं ।
तद्-अभावे गतिसञ्ज्ञा विधीयते ।
अन्तर्हत्य ।
अन्तर्हतं ।
यदन्तर्हन्ति ।
अपरिग्रहे इति किं ? अन्तर्हत्वा भूषिकां श्येनो गतः ।
परिगृह्य गतः इत्यर्थः ।
अन्तः-शब्दस्य अङ्किविधिणत्वेषु उपसर्गसञ्ज्ञा वक्तव्या ।
अन्तर्धा ।
अन्तर्धिः ।
अन्तर्णयति । ।

---

[#९१]

1. <कणे-मनसी श्रद्धा-प्रतीघाते># । । पाणिनीयसूत्र १,४.६६ । ।

_______काशिका १,४.६६:

कणे-शब्दो मनस्-शब्दश्च श्रद्धा-प्रतीघाते गति-सञ्ज्ञौ भवतः।
कणेहत्य पयः पिबति।
मनोहत्य पयः पिबति।
तावत्पिबति यावदस्य अभिलाशो निवृत्तः।
श्रद्धा प्रतिहता इत्यर्थः।
श्रद्धा-प्रतीघाते इति किं? कणे हत्वा गतः।
मनो हत्वा गतः।।

---

1. <पुरोऽव्ययम्>#।। पाणिनीयसूत्र १,४.६७।।

_______काशिका १,४.६७:

असि-प्रत्ययान्तः पुरः-शब्दोऽव्ययं।
स गति-सञ्ज्ञो भवति।
समास-स्वरोपचाराः प्रयोजनं।
पुरस्-कृत्य।
पुरस्-कृतं।
यत्पुरस्करोति।
अव्ययं इति किं? पूः, पुरौ।
पुरः कृत्वा काण्डं गतः।।

---

1. <अस्तं च>#।। पाणिनीयसूत्र १,४.६८।।

_______काशिका १,४.६८:

अस्तं-शब्दो म-कारान्तोऽव्ययं अनुपलब्धौ वर्तते।
स गति-सञ्ज्ञओ भवति।
अस्तंगत्य सविता पुनरुदेति।
अस्तं-गतानि धनानि।
यदस्तं गच्छति।
अव्ययं इत्येव, अस्तं काण्डं।
क्षिपतं इत्यर्थः।।

---

1. <अच्छ गत्य्-अर्थ-वदेषु># । । पाणिनीयसूत्र १,४.६९ । ।

_______काशिका १,४.६९:
अच्छ-शब्दः अव्ययं अभि-शब्दस्य अर्थे वर्तते ।
स गत्य्-अर्थेषु धातुषु वदतौ च गतिसञ्ज्ञो भवति ।
अच्छगत्य ।
अच्छगतं ।
यदच्छगच्छति ।
वदतौ - अच्छोद्य ।
अच्छोदितं ।
यदच्छवचति ।
अव्ययं इत्येव, उदकं अच्छं गच्छति । ।

---

1. <अदोऽनुपदेशे># । । पाणिनीयसूत्र १,४.७० । ।

_______काशिका १,४.७०:

अदः-शब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गति-सञ्ज्ञो भवति ।
उपदेशः परार्थः प्रयोगः ।
स्वयं एव तु यदा बुद्ध्या परां ऋशति तदा न अस्त्युपदेशः इति सोऽस्य विशयः ।
अदःकृत्य ।
अदःकृतं ।
यददःकरोति ।
अनुपदेशे इति किं ? अदः कृत्वा काण्डं गतः इति परस्य कथयति । ।

---

1. <तरोऽन्तर्धौ># । । पाणिनीयसूत्र १,४.७१ । ।

_______काशिका १,४.७१:

अन्तर्धिः व्यवधानं ।
तत्र तिरः-शब्दो गति-सञ्ज्ञो भवति ।
तिरोभूय ।
तिरोभूतं ।
यत्तिरोभवति ।

अन्तर्धौ इति किं ? तिरो भूत्वा स्थितः ।
पार्श्वतो भूत्वा इत्यर्थः । ।

---

[#९२]

1. <विभाषा कृञि># । । पाणिनीयसूत्र १,४.७२ । ।

_______काशिका १,४.७२:

अन्तर्धौ इति वर्तते ।
प्राप्त-विभाषेयं ।
तिरः-शब्दः करोतौ परतो विभाषा गति-सञ्ज्ञो भवति ।
तरः कृत्य, तिरस्कृत्य ।
तिरस्कृतं ।
यत्तिरस्करोति ।
तिरः कृत्वा, तिरस्कृत्वा ।
अन्तर्धौ इत्येव, तिरः-कृत्वा काष्ठं तिष्ठति । ।

---

1. <उपाजेऽन्वाजे># । । पाणिनीयसूत्र १,४.७३ । ।

_______काशिका १,४.७३:

विभाषा कृञि इति वर्तते ।
उपाजेऽन्वाजे-शब्दौ विभक्ति-प्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते ।
तौ कृञि विभाषा गति-सञ्ज्ञौ भवतः ।
उपाजेकृत्य, उपाजे कृत्वा ।
अन्वाजेकृत्य, अन्वाजे कृत्वा । ।

---

1. <साक्षात्-प्रभृतीनि च># । । पाणिनीयसूत्र १,४.७४ । ।

_______काशिका १,४.७४:

विभाषा कृञि इति वर्तते ।

साक्षात्-प्रभृतीनि शब्दरूपाणि कृञि विभाषा गति-सञ्ज्ञानि भवन्ति।
साक्षात्प्रभृतिषु च्व्यर्थवचनं।
साक्षात्कृत्य, साक्षात्कृत्वा।
मिथ्याकृत्य, मिथ्या कृत्वा।
साक्षाथ्।
मिथ्या।
चिन्ता।
भद्रा।
लोचन।
विभाषा।
सम्पत्का।
आस्था।
अमा।
श्रद्धा।
प्राजर्या।
प्राजरुहा।
वीजर्या।
वीजरुहा।
संसर्या।
अर्थे।
लवणं।
उष्णं।
शीतं।
उदकं।
आर्द्रं।
गतिसञ्ज्ञा-संनियोगेन लवणादीनां मकारन्तत्वं निपात्यते।
अग्नौ।
वशे।
विकम्पते।
विहसने।
प्रहसने।
प्रतपने।
प्रादुस्।
नमस्।
आविस्।।

---

1. <अनत्याधान उरसि-मनसी>#।। पाणिनीयसूत्र १,४.७५।।

_______काशिका १,४.७५:

विभाषा कृञि इति वर्तते।
अत्याधानं उपश्लेषणम्, तद्-अभावेऽनत्याधाने उरसि-मनसी शब्दौ विभाषा कृञि गति-सञ्ज्ञौ भवतः।
उरसिकृत्य, उरसि कृत्वा।
मनसिकृत्य, मनसि कृत्वा।
अनत्यावाने इति किं? उरसि कृत्वा पाणिं शेते।।

---

1. <मध्ये पदे निवचने च># । । पाणिनीयसूत्र १,४.७६ । ।

_______काशिका १,४.७६:

विभाषा कृञि इति वर्तते ।
च-कारातनत्याधाने इति च ।
मद्ये पदे निवचने इत्येते शब्दा अनत्याधाने विभाषा कृञि गति-सज्ञा भवन्ति ।
मद्येकृत्य, मध्ये कृत्वा ।
पदेकृत्य, पदे कृत्वा ।
निवचनं वचनाभावः ।
निवचनेकृत्य, निवचने कृत्वा ।
वाचं नियम्य इत्यर्थः अनत्याधाने इत्येव, हस्तितः पदे कृत्वा शिरः शेते । ।

---

[#९३]

1. <नित्यं हस्ते पानाव्-उपयमने># । । पाणिनीयसूत्र १,४.७७ । ।

_______काशिका १,४.७७:

कृञि इति वर्तते ।
हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसञ्ज्ञौ भवतः उपयमने ।
उपयमनं दारकर्म ।
हस्तेकृत्य ।
पाणौकृत्य ।
दारकर्म कृत्वा इत्यर्थः ।
उपयमने इति किं ? हस्ते कृत्वा कार्षापनं गतः । ।

---

1. <प्राध्वं वन्धने># । । पाणिनीयसूत्र १,४.७८ । ।

_______काशिका १,४.७८:

कृञि इति वर्तते ।
प्राध्वं इति मकारान्तं अव्ययमानुकूल्ये वर्तते ।
तद्-आनुकूल्यं वन्धन-हेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसञ्ज्ञो भवति ।
प्राध्वंक्रत्य ।
बन्ध्ने इति किं ? प्राध्वं कृत्वा शकटं गतः । ।

---

1. <जीविका-उपनिषदावौपम्ये># । । पाणिनीयसूत्र १,४.७९ । ।

_______काशिका १,४.७९:

कृञि इति वर्तते ।
जीविका उपनिषदित्येतौ शब्दौ औपम्ये विषहे कृञि गतिसञ्ज्ञौ भवतः ।
जीविकाकृत्य ।
उपनिषत्कृत्य ।
औपम्ये इति किं ? जीविकां कृत्वा गतः । ।

---

1. <ते प्राग्धातोः># । । पाणिनीयसूत्र १,४.८० । ।

_______काशिका १,४.८०:

ते गत्युपसर्ग-सञ्ज्ञका धातोः प्राक्प्रयोक्तव्याः ।
तथा चैवोदाहृताः ।
तेग्रहणं उपसर्ग-अर्थं ।
गतयो ह्यनन्तराः । ।

---

1. <छन्दसि परेऽपि># । । पाणिनीयसूत्र १,४.८१ । ।

_______काशिका १,४.८१:

प्राक्प्रयोगे प्रप्ते छन्दसि परेऽपि अभ्यनुज्ञायन्ते ।
छन्दसि विषये गत्युपसर्ग-सञ्ज्ञकाः प्रेऽपि पूर्वेऽपि प्रयोक्तव्याः ।
न च प्रेषां प्रयुज्यमानानां सञ्ज्ञा-कार्यं किञ्चिदस्ति ।

केवलं प्रप्रयोगेऽपि क्रियायोगे एषां अस्ति इति ज्ञाप्यते ।
याति नि हस्तिना, नियाति हस्तिना ।
हन्ति नि मुष्टिना, निहन्ति मुष्टिना । ।

---

1. <व्यवहिताश्च># । । पाणिनीयसूत्र १,४.८२ । ।

_______काशिका १,४.८२:

व्यवहिताश्च गत्युपसर्ग-सञ्ज्ञकाः छन्दसि दृश्यन्ते आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
आ याहि । ।

---

1. <कर्मप्रवचनीयाः># । । पाणिनीयसूत्र १,४.८३ । ।

_______काशिका १,४.८३:

कर्मप्रवचनीयाः इत्यधिकारो विदितव्यः ।
यानित ऊर्ध्वं अनुक्रमिष्यामः कर्मप्रवचनीय. सञ्ज्ञास्ते वेदितव्याः अधिरीश्वरे (*१,३.९७) इति यावद्वक्ष्यति ।
कर्मप्रवचनीय-प्रदेशाः -- कर्मप्रवचनीय-युक्ते द्वितीया (*२,३.८) इत्येवं आदयः । ।

---

[#९४]

1. <अनुर्लक्षणे># । । पाणिनीयसूत्र १,४.८४ । ।

_______काशिका १,४.८४:

अनु-शब्दो लक्षणे ध्योत्ये कर्मप्रवचनीय-सञ्ज्ञो भवति ।
शाकल्यस्य संहितामनु प्रावर्षथ् ।
अनड्डुद्यज्ञमन्वसिञ्चथ् ।
अगस्त्यमन्वसिञ्चत्प्रजाः ।
किं अर्थं इदं उच्यते, यावता लक्षन-इत्थं भूत-आख्यान (*१,४.९०) इति सिद्धैवानोः कर्मप्रवचनीय-सञ्ज्ञा ? हेत्व्-अर्थं तु वचनं ।
हेतु-तृतीयां वाधित्वा द्वितीयऽ+एव यथा स्यात् । ।

---

1. <तृतीया-अर्थे># । । पाणिनीयसूत्र १,४.८५ । ।

_______काशिका १,४.८५:

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीय-सञ्ज्ञो भवति ।
नदीं अन्ववसिता सेना ।
पर्वतं अन्ववसिता सेना ।
पर्वतेन सम्बद्धा इत्यर्थः । ।

---

1. <हीने># । । पाणिनीयसूत्र १,४.८६ । ।

_______काशिका १,४.८६:

हीनः इति न्यूनः उच्यते, स च+उत्कृष्टापेक्षः ।
तेन+इयं हीन-उत्कृष्ट-सम्बन्धे सञ्ज्ञा विज्ञायते ।
हीने द्योत्ये अयं अनुः कर्मप्रवचनीय-सञ्ज्ञो भवति ।
अनु शाकटायनं वैयाकरणाः ।
अन्वर्जुनं योद्धारः । ।

---

1. <उपोऽधिके च># । । पाणिनीयसूत्र १,४.८७ । ।

_______काशिका १,४.८७:

उप-शब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीय-सञ्ज्ञो भवति ।
उप खार्यं द्रोणः ।
उप निष्के कार्षापणं ।
हीने - उप शाकटायनं वैयाकरणाः । ।

---

1. <अप-परी वर्जने># । । पाणिनीयसूत्र १,४.८८ । ।

_______काशिका १,४.८८:

अप-परी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीय-सञ्ज्ञौ भवतः ।
प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धः वर्जनं ।
अप त्रिगर्तेभ्यो वृष्टो देवः ।
परि परि त्रिगर्तेभ्यो वृष्टो देवः ।
वर्जने इति किं ? ओदनं परिषिञ्चति । ।

---

[#९५]

1. <आङ्मर्यादा-वचने># । । पाणिनीयसूत्र १,४.८९ । ।

_______काशिका १,४.८९:

आङित्येषा शब्दो मर्यादा-वचने कर्मप्रवचनीय-सञ्ज्ञो भवति ।
अवधिर्मर्यादा ।
वचन-ग्रहणादभिविधिरपि गृह्यते ।
आ पाटलिपुत्राद्वृष्टो देवः ।
आ कुमारं यशः पाणिनेः ।
आ सांकाश्याथ् ।
आ मथुरायाः ।
मर्यादा-वचने इति किं ? ईषद्-अर्थे क्रियायोगे च मा भूत् । ।

---

1. <लक्षन-इत्थं-भूत-आख्यान-भाग-वीप्सासु प्रति-पर्य्-अनवः># । । पाणिनीयसूत्र १,४.९० । ।

_______काशिका १,४.९०:

लक्षणे, इत्थं-भूत-आख्याने, भागे, वीप्सायां च विशाय-भूतायां प्रति परि अनु इत्येते कर्मप्रवचनीय-सञ्ज्ञा भवन्ति ।
लक्षणे तावत्- वृक्षं प्रति विद्योतते विद्युथ् ।
वृक्षं परि ।
वृक्षं अनु ।
इत्थं-भूत-आख्याने - साधुर्देवदत्तो मातरं प्रति ।
मातरं परि ।
मातरं अनु ।
भागे - यदत्र मां प्रति स्याथ् ।

मां परि स्याथ् ।
मामनु स्याथ् ।
वीप्सायां - वृक्षं वृक्षं प्रति सिञ्चति ।
परि सिञ्चति ।
अनु सिञ्चति ।
लक्षणादिषु इति किं ? ओदनं परिषिञ्चति ।
अथ परिशब्द-योगे पञ्चमी कस्मान्न भवति पञ्चम्य्-अप-अङ्-परिभिः (*२,३.१०) इति ? वर्जनविषाये सा विधीयते, अपशब्द-साहचर्यात् । ।

---

1. <अभिरभागे># । । पाणिनीयसूत्र १,४.९१ । ।

_______काशिका १,४.९१:

लक्षन-आदिषु एव भाग-वर्जितेषु अभिः कर्मप्रवचनीय-सञ्ञो भवति ।
वृक्षं अभि विद्योतते विद्युथ् ।
साधुर्देवदत्तो मातरं अभि ।
वृक्षं वृक्षं अभि सिञ्चति ।
अभागे इति किं ? भागः स्वीक्रियमाणोऽशः ।
यदत्र मम अभिष्यत्तद्दीयतां ।
यदत्र मम भवति तद्दीयतां इत्यर्थः । ।

---

1. <प्रतिः प्रतिनिधि-प्रतिदानयोः># । । पाणिनीयसूत्र १,४.९२ । ।

_______काशिका १,४.९२:

मुख्य-सदृशः प्रतिनिधिः ।
दत्तस्य प्रतिनिर्यातनं प्रतिदानं ।
प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीय-सञ्ज्ञो भवति ।
अभिमन्युर्-अर्जुनतः प्रति ।
माषानस्मै तिलेभ्यः प्रति यच्छति । ।

---

1. <अधिपरी अनर्थकौ># । । पाणिनीयसूत्र १,४.९३ । ।

_______काशिका १,४.९३:

अधिपरी शब्दौ अनर्थकौ अनर्थ-अन्तरवाचिनौ कर्मप्रवचनीय-सञ्ज्ञौ भवतः ।
कुतोऽध्यागच्छति ।
कुतः पर्यागच्छति ।
गत्य्-उपसर्ग-सञ्ज्ञावाधनार्था कर्मप्रवचनीय-सञ्ज्ञा विधीयते । ।

---

[#९६]

1. <सुः पूजायाम्># । । पाणिनीयसूत्र १,४.९४ । ।

_______काशिका १,४.९४:

सु-शब्दः पूजायां अर्थे कर्मप्रवचनीय-सञ्ज्ञो भवति ।
सु सिक्तं भवता ।
सु स्तुतं भवता ।
धात्व्-अर्थः स्तूयते ।
उपसर्ग-सञ्ज्ञ-आश्रयं षत्वं न भवति ।
पूजायां इति किं ? सुषिक्तं किं तवात्र । ।

---

1. <अतिरतिक्रमणे च># । । पाणिनीयसूत्र १,४.९५ । ।

_______काशिका १,४.९५:

अति-शब्दः अतिक्रमणे, च-कारात्पूजयं च कर्मप्रवचनीय-सञ्ज्ञो भवति ।
निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिः अतिक्रमणं ।
अति सिक्तं एव भवता ।
अति स्तुतं एव भवता ।
पूजायं - अति सिक्तं भवता ।
अति स्तुतं एव भवता ।
शोभनं कृतं इत्यर्थः । ।

---

1. <अपिः पदार्थ-सम्भावन-अन्ववसर्ग-गर्हा-समुच्चयेषु># । । पाणिनीयसूत्र १,४.९६ । ।

_______काशिका १,४.९६:

पदार्थे, सम्भावने, अन्ववसर्गे, गर्हायाम्, समुच्चये च वर्तमानः अपिः कर्मप्रवचनीय-सञ्ज्ञो भवति ।
पदान्तरस्य अप्रयुज्यमानस्य अर्थः पदार्थः - सर्पिषोऽपि स्याथ् ।
मधुनोऽपि स्याथ् ।
मात्रा, बिन्दुः, स्तोकं इत्यस्य अर्थे ऽपि शब्दो वर्तते ।
सम्भावनं अधिकार्थ-वचनेन शक्तेरप्रतिघाताविष्करनं - अपि सिञ्चेन्मूलक-सहस्रं ।
अपि स्तुयाद्राजानं ।
अन्ववसर्गः कामचार-अभ्यनुज्ञानं - अपि सिञ्च ।
अपि स्तुहि ।
गर्हा निन्दा - धिग्जाल्मं देवदत्तम्, अपि सिञ्चेत्पलाण्डुं ।
अपि स्तुयाद्वृषलं ।
समुच्चये - अपि सिञ्च ।
अपि स्तुहि ।
सिञ्च च स्तुहि च ।
उपसर्गसञ्ज्ञाबाधनात्षत्वं न भवति । ।

---

1. <अधिरीश्वरे># । । पाणिनीयसूत्र १,४.९७ । ।

_______काशिका १,४.९७:

ईश्वरः स्वामी, स च स्वं अपेक्षते ।
तदयं स्वस्वामि-सम्बन्धे अधिः कर्मप्रवचनीय-सञ्ज्ञो भवति ।
तत्र कदाचित्स्वामिनः कर्मप्रवचनीय-विभक्तिः सप्तमी भवति, कदाचित्स्वाथ् ।
अधि ब्रह्मदत्ते पञ्चालाः ।
अधि पञ्चालेषु ब्रह्मदत्तः । ।

---

1. <विभाषा कृञि># । । पाणिनीयसूत्र १,४.९८ । ।

_______काशिका १,४.९८:
अधिः करोतौ विभाषा कर्मप्रवचनीय-सञ्ज्ञो भवति ।
यदत्र मामधि करिष्यति ।
कर्मप्रवचनीय-सञ्ज्ञ-अपक्षे गतिसञ्ज्ञा-बाधनात्तिङि च+उदात्तवति (*८,१.७१) इति निघातो न भवति । ।

---

[#९७]

1. <लः परस्मैपदम्># । । पाणिनीयसूत्र १,४.९९ । ।

_______काशिका १,४.९९:

लः इति षष्ठी आदेश-अपेक्षा ।
ल-आदेशाः परस्मैपद-सञ्ज्ञा भवन्ति ।
तप्, तस्, झ ।
सिप्, थस्, थ ।
मिप्, वस्, मस् ।
शतृक्वसू च परस्मैपद-प्रदेशाः - सिचि वृद्धिः प्रस्मैपदेषु (*७,२.१) इत्येवं आदयः । ।

---

1. <तङ्-आनावात्मनेपदम्># । । पाणिनीयसूत्र १,४.१०० । ।

_______काशिका १,४.१००:

तङिति प्रत्याहारो नवानां वचनानां ।
आनः इति शानच्-कानचोर्-ग्रहनं ।
पूर्वेण परस्मैपदस्-अञ्ज्ञायां प्राप्तायां तङ्-आनयोरात्मनेपद-सञ्ज्ञा विधीयते ।
त, आताम्, झ ।
थास्, आथाम्, ध्वं ।
इट्, वहि, महिङ् ।
आनहः खल्वपि - शानच्-कानचौ ।
लः इत्येव, कतीह निघ्नानाः ।
आत्मनेपद-प्रदेशाः - अनुदत्त-ङित आत्मनेपदं (*१,३.१२) इत्येवं आदयः । ।

---

1. <तिङस्त्रीणि त्रीणि प्रथम-मध्यम-उत्तमाः># । । पाणिनीयसूत्र १,४.१०१ । ।

_______काशिका १,४.१०१:

तिङोऽष्टादश प्रत्ययाः ।
नव परस्मैपद-सञ्ज्ञकाः, नव-आत्मनेपद-सञ्ज्ञकाः ।

तत्र परस्मैप्रदेषु त्रयस्त्रिकाः यथाक्रमं प्रथम-मध्यम-उत्तम-सञ्ज्ञा भवन्ति ।
तिप्, तस्, झि इति प्रथमः ।
सिप्, थस्, थ इति मद्यमः ।
मिप्, वस्, मसिति उत्तमः ।
आत्मनेपदेषु - त, आताम्, झ इति प्रथमः ।
थास्, आथाम्, ध्वं इति मध्यामः ।
इट्, वहि, महिङिति उत्तमः ।
प्रथम-मध्यम-उत्तम-प्रदेशाः - शेषे प्रथमः (*१,४.१०८) इत्येवं आदयः । ।

---

1. <तान्येकवचनाद्विवचनबहुवचनान्येकशः># । । पाणिनीयसूत्र १,४.१०२ । ।

_______काशिका १,४.१०२:

---

1. <सुपः># । । पाणिनीयसूत्र १,४.१०३ । ।

_______काशिका १,४.१०३:

तिङां त्रिकेषु एकवचनादि-सञ्ज्ञा विहिताः ।
सम्प्रति सुपां त्रिकेषु विधीयन्ते ।
सुपश्च त्रीणि त्रीणि पदानि एकश एकवचन-द्विवचन-बहुवचन-सञ्ज्ञानि भवन्ति ।
सु इति एकवचनं ।
औ इति द्विवचनं ।
जसिति बहुवचनं ।
एवं सर्वत्र । ।

---

1. <विभक्तिश्च># । । पाणिनीयसूत्र १,४.१०४ । ।

_______काशिका १,४.१०४:

त्रीणि त्रीणि इत्यनुवर्तते ।
त्रीणि त्रीणि विभक्ति-सञ्ज्ञाश्च भवन्ति सुपस्तिङश्च ।
विभक्ति-प्रदेशाः - अष्टन आ विभक्तौ (*७,२.८४) इत्येवं आदयः । ।

---

[#९८]

1. <युष्मद्य्-उपपदे समान-अधिकरणे स्थानिन्यपि मध्यमः># । । पाणिनीयसूत्र १,४.१०५ । ।

_______काशिका १,४.१०५:

लस्य (*३,४.७७) इत्यधिकृत्य सामान्येन तिब्-आदयो विहिताः ।
तेषां अयं पुरुष-नियमः क्रियते ।
युष्मद्य्-उपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समान-अभिधेये तुल्य-कारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यम-पुरुषो भवति ।
त्वं पचसि ।
युवां पचथः ।
यूयं पचथ ।
अप्रयुज्यमानेऽपि - पचसि ।
पचथः ।
पचथ । ।

---

1. <प्रहासे च मन्य-उपपदे मन्यतेरुत्तम एकवच्च># । । पाणिनीयसूत्र १,४.१०६ । ।

_______काशिका १,४.१०६:

प्रहासः परिहासः क्रीडा ।
प्रहासे गम्यमाने मन्य-उपपदे धातोर्मध्यम-पुरुषो भवति, मन्यतेश्च-उत्तमः, स च एकवद्भवति ।
एहि मन्ये ओदनं भोक्ष्यसे इति, न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः ।
एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यात्स्तेन ते पिता ।
मध्यम-उत्तमयोः प्राप्तयोः उत्तम-मध्यमौ विधीयेते ।
प्रहासे इति किं ? एहि मन्यसे ओदनं भोक्ष्ये इति ।
सुष्ठु मन्यसे ।
साधु मन्यसे । ।

---

1. <अस्मद्युत्तमः># । । पाणिनीयसूत्र १,४.१०७ । ।

_______काशिका १,४.१०७:

उत्तमपुरुषो नियम्यते ।
अस्मद्य्-उपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति ।
अहं पचामि ।
आवां पचावः ।
वयं पचामः ।
अप्रयुज्यमानेऽपि - पचामि ।
पचावः ।
पचामः । ।

---

1. <शेषे प्रथमः># । । पाणिनीयसूत्र १,४.१०८ । ।

_______काशिका १,४.१०८:

शेषः इति मध्यम-उत्तम-विषयादन्य उच्यते ।
यत्र युष्मद्-अस्मदी समनाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति ।
पचति ।
पचतः ।
पचन्ति । ।

---

1. <परः संनिकर्षः संहिता># । । पाणिनीयसूत्र १,४.१०९ । ।

_______काशिका १,४.१०९:

पर-शब्दोऽतिशये वर्तते ।
संनिकर्षः प्रत्यासत्तिः ।
परो यः सन्निकर्षः, वर्णानां अर्धमात्राकालव्यवधानं, स संहितासञ्ज्ञो भवति ।
दध्यत्र ।
मध्वत्र ।
संहिता-प्रदेशाः -- सिंहितायां (*६,१.७२) इत्येवं आदयः । ।

---

1. <विरामोऽवसानम्># । । पाणिनीयसूत्र १,४.११० । ।

_______काशिका १,४.११०:

विरतिः विरामः ।
विरम्यतेऽनेन इति वा विरामः ।
सोऽवसान-सञ्ज्ञो भवति ।
दधिं ।
मधुं ।
वृक्षः ।
प्लक्षः ।
अवसान-प्रदेशाः - खर्-अवसानयोर्विसर्जनीयः (*८,३.१५) इत्येवं आदयः । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमोध्यायस्य चतुर्थः पादः । ।

---

[#९९]

1. <समर्थः पदविधिः># । । पाणिनीयसूत्र २,१.१ । ।

_______काशिका २,१.१ः

परिभाषेयं ।
यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थो विदितव्यः ।
विधीयते इति विधिः ।
पदानां विधिः पदविधिः ।
स पुनः समासादिः ।
समर्थः शक्तः ।
विग्रहवाक्यार्थभिधाने यः शक्तः स समर्थो विधितव्यः ।
अथ वा समर्थपदाश्रयत्वात्समर्थः ।
समर्थनां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः ।
वक्ष्यति, द्वितीया श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्नैः (*२,१.२४) - कष्टं श्रितः कष्टश्रितः ।
समर्थ-ग्रहणं किं ? पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलं ।
तृतीया तत्कृत-अर्थेन गुणवचनेन (*२,१.३०) - शङ्कुलया खण्डः शङ्कुलाखण्डः ।
समर्थ-ग्रहणं किं ? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन ।
चतुर्थी तदर्थ-अर्थ-वलि-हित-सुख-रक्षितैः (*२,१.३६) - यूपाय दारु यूपदारु ।
समर्थ-ग्रहणं किं ? गच्छ त्वं यूपाय, दारु देवदत्तस्य ग्रेहे ।
पञ्चमी भयेन (*२,१.३७) - वृकेभ्यो भयं वृकभयं ।
समर्थ-ग्रहणं किं ? गच्छ त्वं मा वृकेभ्यो, भयं देवदत्तस्य यज्ञदत्ताथ् ।
षष्ठी (*२,२.८) - राज्ञः पुरुषः राजपुरुषः ।
समर्थ-ग्रहणं किं ? भार्या राज्ञः, पुरुषो देवदत्तस्य ।
सप्तमी शौण्डैः (*२,१.४०) - अक्षेषु शौण्डः अक्षशौण्डः ।
समर्थ-ग्रहणं किं ? शक्तस्त्वं अक्षेषु, शौण्डः पिबति पानागारे ।
पद-ग्रहणं किं ? वर्णविधौ समर्थपरिभाशा मा भूथ् ।
तिष्ठतु दध्यशान त्वं शाकेन ।
तिष्ठतु कुमारी च्छत्रं हरदेवदत्ताथ् ।
यणादेशो, नित्यश्च तुग्भवति । ।

---

1. <सुबामन्त्रिते पर-अङ्गवत्स्वरे># । । पाणिनीयसूत्र २,१.२ । ।

_______काशिका २,१.२ः

सुबन्तं आमन्त्रिते परतः परस्य अङ्गवद्भवति, स्वरे स्वर-लक्षणे कर्तव्ये ।
तादात्म्यातिदेशोऽयं ।
सुबन्तं आमन्त्रितं अनुप्रविशाति ।
वक्ष्यति - आमन्त्रितस्य च (*६,१.१९८) ।
आमन्त्रितस्यादिरुदात्तो भवति ।
ससुप्कस्य अपि यथा स्याथ् ।
कुण्डेनाटन् ।
परशुना वृश्चन् ।
मद्राणां राजन् ।
कश्मीराणां राजन् ।
सुपिति किं ? पीड्ये पीद्यमान ।
आमन्त्रिते इति किं ? गेहे गार्ग्यः ।
पर-ग्रहणं किं ? पूर्वस्य मा भूथ् ।
देवदत्त, कुण्डेनाटन् ।
अङ्ग-ग्रहणं किं ? यथा मृत्पिण्डीभूतः स्वरं लभेत ।
उभयोराद्यौत्तत्वं मा भूथ् ।
वत्करणं किं ? स्वाश्रयं अपि यथा स्याथ् ।

[#१००]

आं कुण्डेनाटन् ।
आम एक-अन्तरं आमन्त्रितं अनन्तिके (*८,१.५५) इत्येकान्तरता भवति ।
स्वरे इति किं ? कूपे सिञ्चन् ।
चर्म नमन् ।
षत्वणत्वे प्रति पराङ्ग्वद्न भवति ।
सुब्-अन्तस्य पर-अङ्गवद्भावे समानाधिकरणस्य+उपसङ्ख्यानं अनन्तरत्वथ् ।
तीक्ष्णया सुच्या सीव्यन् ।
तीक्ष्णेन प्रशुना वृश्चन् ।
अव्ययानां प्रतिषेधो वक्तव्यः ।
उच्चैरधीयानः ।
नीचैरधीयानः । ।

---

1. <प्राक्कडारात्समासः># । । पाणिनीयसूत्र २,१.३ । ।

_______काशिका २,१.३ः

कडार-संशब्दनात्प्राग्यानित उर्ध्वं अनुक्रमिष्यामः, ते समाससञ्ज्ञा वेदितव्याः ।
वक्ष्यति - यथाऽसादृश्ये (*२,१.७) ।
यथा वृद्धं ब्राह्मणानामन्त्रयस्व ।
प्राग्-वचनं सञ्ज्ञा-समावेश-अर्थं ।
समास-प्रदेशाः - तृतीयासमासे (*१,१.३०) इत्येवं आदयः । ।

---

1. <सह सुपा># । । पाणिनीयसूत्र २,१.४ । ।

_______काशिका २,१.४ः

सुपिति वर्तते ।
सुपिति सह इति सुपा इति च त्रयं अपि अधिकृतं वेदितव्यं ।
यदित ऊर्ध्वं अनुक्रमिष्यामः, तत्र+इदं उपस्थितं द्रष्टव्यं ।
वक्ष्यति - द्वितीया श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्नैः (*२,१.२४) इति ।
द्वितीय-अन्तं श्रितादिभिः सह समस्यते, कष्टं श्रितः कष्टश्रितः ।
सह-ग्रहणं योगविभाग-अर्थम्, तिङापि सह यथा स्याथ् ।
अनुव्यचलथ् ।
अनुप्रावर्षत् । ।

---

1. <अव्ययीभवः># । । पाणिनीयसूत्र २,१.५ । ।

_______काशिका २,१.५ः

अव्ययीभावः इत्यधिकारो वेदितव्यः ।
यानित ऊर्ध्वं अनुक्रमिष्यामः, अव्ययीभाव-सञ्ज्ञा अस्ते वेदितव्याः ।
वक्ष्यति - यथाऽसादृश्ये (*२,१.७) ।
यथा-वृद्धं ब्राह्मणानामन्त्रयस्व ।
अन्वर्थ-सञ्ज्ञा चेयं महती पूर्वपदार्थ-प्राधान्यं अव्ययीभावस्य दर्शयति ।
अव्ययीभाव-प्रदेशाः - अव्ययीभावश्च (*२,४.१८) इत्येवं आदयः । ।

---

[#१०१]

1. <अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्य्-अर्थाभाव-अत्यय-असम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथा-आनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्य-अन्तव्चनेषु># । । पाणिनीयसूत्र २,१.६ । ।

_______काशिका २,१.६ः

सुप्सुपा इति च वर्तते ।
विभक्त्यादिश्वर्थेषु यदव्ययं वर्तते तत्समर्थेन सुब्-अन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति ।
वचन-ग्रहणं प्रत्येकं सम्बध्यते ।

विभक्तिवचने तावत्-- स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि ।
अधिकुमारि ।
सप्तम्य्-अर्थे यदव्ययं तद्बिभक्तिवचनं ।
समीपवचने -- कुम्भस्य समीपं उपकुम्भं ।
उपमणिकं ।
समृद्धिरृद्धेराधिक्यं -- समृद्धिर्मद्राणां सुमद्रं ।
सुमगधं वर्तते ।
व्यृद्धिरृद्धेरभावः -- गवदिकानां ऋद्धेरभावः दुर्गवदिकं ।
दुर्यबनं वर्तते ।
अर्थ-अभावः वस्तुनोऽभावः -- अभावो मक्षिकाणां निर्मक्षिकं ।
निर्मशकं वर्तते ।
अत्ययः अभूतत्वम्, अतिक्रमः -- अतीतानि हिमानि अतिहिमं ।
निर्हिमं ।
निःशीतं वर्तते ।
असम्प्रति उपभोगस्य वर्तमानकाल-प्रतिषेधः -- अतितसृकं ।
तैसृकमाच्छादनम्, तस्य अयं उपभोगकालो न भवति इत्यर्थः ।
शब्दप्रादुर्भावः प्रकाशता शब्दस्य - इति पाणिनि ।
तत्-पाणिनि ।
पाणिनि-शब्दो लोके प्रकाशते इत्यर्थः ।
पश्चात्-- अनुरथं पादातं ।
रथानां पश्चातित्यर्थः ।
यथा ।
यथा-अर्थे यदव्ययं वर्तते तत्समस्यते ।
योग्यता विप्सा पदार्थानतिवृत्तिः सादृश्यं च इति यथार्थाः ।
योग्यतायां -- अनुरूपं ।
रूपयोग्यं भवति इत्यर्थः ।
वीप्सायां -- अर्थमर्थं प्रति प्रत्यर्थं ।

[#१०२]

पदार्थनतिवृत्तौ -- यथाशक्ति ।
आनुपूर्व्यमनुक्रमः -- अनुज्येष्ठं प्रविशन्तु भवन्तिअः ।
ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्तु इत्यर्थः ।
यौगपद्यं एककालता -- सचक्रं धेहि ।
युगपच्चक्रं धेहि इत्यर्थः ।
सादृश्यं तुल्यता ।
किम्-अर्थं इदं उच्यते, यथार्थ इत्येव सिद्धं ? गुणभूतेऽपि सादृश्ये यथा स्यात्, सदृशः किख्या राकिखि ।
सम्पत्तिः अनुरूप आत्मभावः समृद्धेरन्यः -- सब्रहम बाभ्रवाणां ।
सक्षत्रं शालङ्कायनानां ।
साक्ल्यं अशेषता -- सतृणं अभ्यावहरति ।
सबुसं ।
न किंचिदभ्यावहार्यं परित्यजति इत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते ।
अन्तवचने -- अन्तः इति परिग्रह-अपेक्षया समाप्तिरुच्यते ।
साग्नि अधीते ।
सेष्टि सपशुबन्धं ।
सपशुबन्धान्तमधीते इत्यर्थः ।
इयं समाप्तिरसकलेऽप्यध्ययने भवति इति साकल्यात्पृथगुच्यते । ।

---

1. <यथाऽसादृश्ये># । । पाणिनीयसूत्र २,१.७ । ।

_______काशिका २,१.७ः

यथा इत्येतदव्ययं असादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति ।
यथावृद्धं ब्राह्मणानामन्त्रयस्व ।
ये ये वृद्धाः यथावृद्धं ।
यथाध्यापकं ।
असादृश्ये इति किं ? यथा देवदत्तः तथा यज्ञदत्तः ।
यथार्थे यदव्ययं इति पूर्वेण+एव सिद्धे समासे वचनं इदं सादृश्य-प्रतिषेध-अर्थं । ।

---

1. <यावदवधारणे># । । पाणिनीयसूत्र २,१.८ । ।

_______काशिका २,१.८ः

यावतित्येतदव्ययं अवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति ।
अवधारणं इयत्तापरिच्छेदः ।
यावदमत्रं ब्राह्मणानामन्त्रयस्व ।
यावन्त्यमत्राणि सम्भवन्ति पञ्च षट्वा तावत आमन्त्रयस्व ।
अवधारणे इति किं ? यावद्दत्तं तावद्भुक्तं ।
न अवधारयामि कियन्मया भुक्तं इति । ।

---

1. <सुप्प्रैत्ना मात्रा-अर्थे># । । पाणिनीयसूत्र २,१.९ । ।

_______काशिका २,१.९ः

मात्रा बिन्दुः, स्तोकम्, अल्पं इति पर्यायाः ।
मात्रा-अर्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति ।
अस्त्यत्र किञ्चित्शाकं शाकप्रति ।
सूपप्रति ।
मात्रा-अर्थे इति किं ? वृक्षं प्रति विधोतते विद्युथ् ।
सुपिति वर्तमाने पुनः सुब्-ग्रहणं अव्ययनिवृत्त्य्-अर्थं । ।

---

[#१०३]

1. <अक्ष-शलाका-सङ्ख्याः परिणा># । । पाणिनीयसूत्र २,१.१० । ।

_______काशिका २,१.१०ः

अक्ष-शब्दः, शलाका-शब्दः, सङ्ख्या-शब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति ।
कितवव्यवहारे समासोऽयं इष्यते ।
पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति ।
तत्र यदा सर्वे उत्तानाः पतन्ति अवाञ्चो वा, तदा पात्यिता ज्यति, तस्य+एव अस्य विपातोऽन्यथा पाते सति जायते ।
अक्षेण+इदं न तथा वृत्तं यथा पूर्वं जये अक्षपरि ।
शलाकापरि ।
एकपरि ।
द्विपरि ।
त्रिपरि ।
परमेण चतुष्परि ।
पञ्चसुत्वेकरूपासु जय एव भविष्यति ।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तथ् ।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः । ।

---

1. <विभाषा># । । पाणिनीयसूत्र २,१.११ । ।

_______काशिका २,१.११ः

विभाषा इत्ययं अधिकारो वेदितव्यः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः, तद्विभाषा भवति ।

---

वक्ष्यति -

1. <अप-परि-बहिरञ्चवः पञ्चम्या># । । पाणिनीयसूत्र २,१.१२ । ।

_______काशिका २,१.१२ः

अपत्रिगर्तं वृष्तो देवः, अप त्रिगर्तेभ्यः । ।
अप-परि-बहिरञ्चवः पञ्चम्या (*२,१.१२) ।
अप परि बहिसञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति ।
अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः ।
परित्रिगर्तम्, परि त्रिगर्तेभ्यः ।
बहिर्ग्रामम्, वहिर्ग्रामाथ् ।
प्राग्ग्रामम्, प्राग्ग्रामाथ् ।
बहिः शब्दयोगे पञ्चमीभावस्य+एतदेव ज्ञापकं । ।

---

1. <आङ्मर्यादा-अभिविध्योः># । । पाणिनीयसूत्र २,१.१३ । ।

_______काशिका २,१.१३ः

आङित्येतन्मर्यादायां अभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा संस्यते, अव्ययीभावश्च समासो भवति ।
आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्राथ् ।
अभिविधौ - आकुमारं यशः पाणिनेः, आ कुमारेभ्यः । ।

---

1. <लक्षणेन अभिप्रती आभिमुख्ये># । । पाणिनीयसूत्र २,१.१४ । ।

_______काशिका २,१.१४ः

लक्षणं चिह्नं, तद्-वाचिना सुबन्तेन सह अभिप्रती शब्द-अवाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति ।
अभ्यग्नि शलभाः पतन्ति, अग्निमभि ।
प्रत्यग्नि, अग्निं प्रति ।
अग्निं लक्ष्यीकृत्य अभिमुखं पतन्ति इत्यर्थः ।
लक्षणेन इति किं ? स्रुग्घ्नं प्रतिगतः ।
प्रतिनिवृत्त्य स्रुग्घ्नं एव अभिमुखं गतः ।
अभिप्रती इति किं ? येन अग्निस्तेन गतः ।
आभिमुख्ये इति किं ? अभ्यङ्का गावः ।
प्रत्यङ्क्का गावः ।
नवाङ्का इत्यर्थः । ।

---

[#१०४]

1. <अनुर्यत्-समया># । । पाणिनीयसूत्र २,१.१५ । ।

_______काशिका २,१.१५ः

समया समीपं ।
अनुर्यस्य समीप-वाची तेन लक्षण-भूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति ।
अनुवनमशनिर्गतः ।
अनुः इति किं ? वनं समया ।
यत्समया इति किं ? वृक्षमनु विद्योतते विद्युथ् ।
अव्ययं विभक्ति-समीप (*२,१.६) इत्येव सिद्धे पुनर्वचनं विभाष-अर्थं । ।

---

1. <यस्य च आयामः># । । पाणिनीयसूत्र २,१.१६ । ।

_______काशिका २,१.१६ः

लक्षनेन इति वर्तते ।
आयामो दैर्घ्यं ।
अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति ।
अनुगङ्गं वाराणसी ।
अनुयमौनं मथुरा ।
यमुनायामेन मथुरायामो लक्ष्यते ।
आयामः इति किं ? वृक्षमनु विध्योतते विद्युत् । ।

---

1. <तिष्ठद्गु-प्रभृतीनि च># । । पाणिनीयसूत्र २,१.१७ । ।

_______काशिका २,१.१७ः

तिष्ठद्ग्व्-आदयः समुदाया एव निपात्यन्ते ।
तिष्ठद्गु-प्रभृतीनि शब्दरूपाणि अव्ययीभावस्-अञ्ज्ञानि भवन्ति ।
तिष्ठद्गु कालविशेषः ।
तिष्ठन्ति गावो यस्मिन्काले दोहनाय स तिष्ठद्गु कालः ।
खलेयवादीनि प्रथमानतानि विभक्त्यनतरेन्ण न+एव सम्बध्यन्तेऽन्यपदार्थे च काले वर्तन्ते ।
चकारोऽवधारण-अर्थः ।
अपरः समासो न भवति, परमतिष्ठद्गु इति ।
तिष्ठद्गु ।
वहद्गु ।
आयतीगवं ।
खलेबुसं ।

खलेयवं ।
लूनयवं ।
लूयमानयवं ।
पूतयवं ।
पूयमानयवं ।
संहृतयवं ।
संह्रियमाणायवं ।
संहृतबुसं ।
संह्रियमाणाबुसं ।
एते कालशब्दाः ।
समभूमि ।
समपदाति ।
सुषमं ।
विषमं ।
निष्षमं ।
दुष्षमं ।
अपरसमं ।
आयतीसमं ः
प्राह्णं ।
प्रथं ।
प्रमऋगं ।
प्रदक्षिणं ।
अपरदक्षिणं ।
संप्रति ।
असंप्रति ।
पापसमं ।
पुण्यसमं ।
इच्कर्मव्यतिहारे (*५,४.१२७) -- दण्डादण्डि ।
मुसलामुसलि । ।

---

1. <पारे मध्ये षष्ठ्या वा># । । पाणिनीयसूत्र २,१.१८ । ।

_______काशिका २,१.१८ः

षष्थीसमासे प्राप्ते तद्-अपवादोऽव्ययीभव आरभ्यते ।
वा-वचनात्षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते ।
पारंध्य-शब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति ।
तत्-सन्नियोगेन च अनयोरेकारान्तत्वं निपात्यते ।
पारं गङ्गायाः पारेगङ्हं ।
मध्यं गङ्गायाः मध्येगङ्गं ।
षष्ठीसमास-पक्षे - गङ्गापारं ।
गङ्गामध्यं ।
महाविभाषया वाक्यविकल्पः क्रियते । ।

---

[#१०५]

1. <सङ्ख्या वंश्येन># ।। पाणिनीयसूत्र २,१.१९ ।।

_______काशिका २,१.१९ः

विद्यया जन्मना वा प्राणिनां एकलक्षणसन्तानो वंशः इत्यभिधीयते ।
तत्र भवो वंश्यः ।
तद्-वाचिना सुबन्तेन सह सङ्ख्या समस्यते, अव्ययीभावश्च समासो भवति ।
द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरनस्य ।
त्रिमुनि व्याकरणस्य ।
यदा तु विद्यय तद्वतां अभेदविवक्षा तदा सामानाधिकरण्यं भवति ।
द्विमुनि व्यकरणं ।
त्रिमुनि व्याकरणं इति ।
जन्मना - एकविंशतिभारद्वाजं ।।

---

1. <नदीभिश्च># ।। पाणिनीयसूत्र २,१.२० ।।

_______काशिका २,१.२०ः

सङ्ख्या इत्यनुवर्तते ।
नदीवचनैः शब्दैः सह सङ्ख्या समस्यते, अव्ययीभावश्च समासो भवति ।
समाहारे च अयं इष्यते ।
सप्तगङ्गं ।
द्वियमुनं ।
पञ्चनदं ।
सप्तगोदावरं ।।

---

1. <अन्यपदर्थे च सञ्ज्ञायाम्># ।। पाणिनीयसूत्र २,१.२१ ।।

_______काशिका २,१.२१ः

सङ्ख्या इति निवृत्तं ।
नदीग्रहनं अनुवर्तते ।
नदीभिः सह सुबन्तं अन्यपदार्थे वर्तमानं सञ्ज्ञायां विष्ये समस्यते, अव्ययीभावश्च समासो भवति ।
विभाषाऽधिकारेऽपि नित्यसमास एव अयं ।
न हि वाक्येन सञ्ज्ञा गम्यते ।
उन्मत्तगङ्गं नाम देशः ।
लोहितगङ्गं ।
शनैर्गङ्गं ।
कृष्णगङ्गं ।
अन्यपदार्थे इति किं ? कृष्णवेण्णा ।
सञ्ज्ञायां इति किं ? शीघ्रगङ्गो देशः । ।

---

1. <तत्पुरुषः># । । पाणिनीयसूत्र २,१.२२ । ।

_______काशिका २,१.२२ः

तत्पुरुषः इति सञ्ज्ञाऽधिक्रियते प्राग्बहुव्रीहेः ।
यानित ऊर्ध्वं अनुक्रमिष्यामः, तत्पुरुष-सञ्ज्ञास्ते वेदितव्याः ।
वक्ष्यति, द्वितीय श्रित-अतीत-पतित (*२,१.२४) ।
इति ।
कष्टश्रितः ।
पूर्वाचार्यसञ्ज्ञा चेयं महती, तदङ्गीकरणौपाधेरपि तदीयस्य परिग्रह-अर्थम्, उत्तरपदार्थ-प्रधानस्तत्पुरुषः इति ।
तत्पुरुषप्रदेशाः - तत्पुरुषे कृति बहुलं (*३,३.१४) ।
इत्येवं आदयः । ।

---

1. <द्विगुश्च># । । पाणिनीयसूत्र २,१.२३ । ।

_______काशिका २,१.२३ः

द्विगुश्च समासः तत्पुरुशसञ्ज्ञो भवति ।
द्विगोस्तत्पुरुशत्वे समासान्ताः प्रयोजनं ।
पञ्चराजं ।
दशराजं ।
द्व्यहः ।
त्र्यहः ।
पङ्चगवं ।
दशगवं । ।

---

[#१०६]

1. <द्विदीया श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपनैः># । । पाणिनीयसूत्र २,१.२४ । ।

_______काशिका २,१.२४ः

सुप्स्पा इति वर्तते ।
तस्य विशेषणं एतद्द्वितीया ।
द्वितीयान्तं सुबन्तं श्रित-अदिभिः सह समस्यते, तत्पुरुषश्च समासो भवति ।
कष्टं श्रितः कष्टश्रितः ।
नरकश्रितः ।
अतीत -- कान्तारं अतीतः कान्तारातितः ।
पतित -- नरकं पतितः नरकपतितः ।
गत -- ग्रामं गतः ग्रामगतः ।
अत्यस्त -- तरङ्गनत्यस्तः तरङ्गात्यस्तः ।
तुहिनात्यस्तः ।
प्राप्त -- सुखं प्राप्तः सुखप्राप्तः ।
आपन्न -- सुखं आपन्नः सुखापन्नः ।
दुःखापन्नः ।
श्रित्त-अदिषु गमिगाम्यादिनां उपसङ्ख्यनं ।
ग्रामं गमी ग्रामगमी ।
ग्रामं गामी ग्रामागामी ।
ओद्नं बुभुक्षुः ओदनबुभुक्षुः । ।

---

1. <स्वयं क्तेन># । । पाणिनीयसूत्र २,१.२५ । ।

_______काशिका २,१.२५ः

स्वयं एतदव्ययं आत्मना इत्यस्यार्थे वर्तते, तस्य द्वितीयया सम्बन्धोऽनुपपन्नः इति द्वितीया-ग्रहणं उत्तरार्थं अनुवर्तते ।
स्वयं इत्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भाति ।
स्वयंधौतौ पादौ ।
स्वयंविलीनं आज्यं ।
ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति । ।

---

1. <खट्वा क्षेपे># । । पाणिनीयसूत्र २,१.२६ । ।

_______काशिका २,१.२६ः

खट्वा-शब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति ।
क्षेपो निन्दा, स च समास-अर्थ एव, तेन विभाषाऽधिकारेऽपि नित्यसमास एव अयं ।
न हि वक्येन क्षेपो गम्यते ।
खट्वारोहणं च+इह विमार्गप्रस्थानस्य+उपलक्षनं ।
सर्व एव अविनीतः खट्वारूढः इत्युच्यते ।
खट्वारुढो जाल्मः ।
खट्वाप्लुतः ।
अपथप्रस्थितः इत्यर्थः ।
क्षेपे इति किं ? खट्वामारूढः । ।

---

1. <सामि># । । पाणिनीयसूत्र २,१.२७ । ।

_______काशिका २,१.२७ः

सामि इत्येतदव्ययं अर्धशब्द-पर्यायः, तस्य असत्त्ववाचित्वाद्द्वितीयया न अस्ति सम्बन्धः ।
तत्सुबन्तं क्तन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
सामिकृतं ।
सामिपीतं ।
समिभुक्तं ।
ऐकपद्यमैकस्वर्यं च समासत्वद्भवति । ।

---

[#१०७]

1. <कालाः># । । पाणिनीयसूत्र २,१.२८ । ।

_______काशिका २,१.२८ः

द्वितीया क्तेन इति वर्तते ।
कालवाचिनः शब्दाः द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाष, तत्पुरुषश्च समासो भवति ।
अन्त्यन्तसम्योग-अर्थं वचनं ।
कालाः इति न स्वरूप-विधिः ।
षण्मुहूर्ताश्चराचराः, ते कदाचितहर्गच्छन्ति कदाचित्रात्रिं ।
अहरतिसृता मुहूर्ताः अहःसङ्क्रान्ताः ।
रात्र्यतिसृता मुहूर्ताः रात्रिसङ्क्रान्ताः ।

मासप्रमितश्चन्द्रमाः ।
मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमाः इत्यर्थः । ।

---

1. <अत्यन्तसंयोगे च># । । पाणिनीयसूत्र २,१.२९ । ।

_______काशिका २,१.२९ः

कालाः इति वर्तते ।
क्तेन इति निवृत्तं ।
अत्यन्तसंयोगः कृत्स्न-संयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः ।
कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति ।
मुहूर्तं सुखं मुहूर्तसुखं ।
सर्वरात्रकल्पाणी ।
सर्वरात्रशोभना । ।

---

1. <तृतीया तत्कृत-अर्थेन गुणवचनेन># । । पाणिनीयसूत्र २,१.३० । ।

_______काशिका २,१.३०ः

सुप्सुपा इति वर्तते ।
तस्य विशेषणं एतथ् ।
तृतीयान्तं गुणवचनेन अर्थशब्देन च सह संस्यते, तत्पुरुषश्च समासो भवति ।
कीदृशेन गुणवचनेन ? तत्कृतेन तदर्थ-कृतेन, तृतीयान्त-अर्थ-कृतेन इति यावथ् ।
शङ्कुलया खण्डः सङ्कुलाखण्डः ।
किरिणा काणः किरिकाणः ।
अर्थ-शब्देन -- धान्येन अर्थः धान्यार्थः ।
तत्कृतेन इति इं ? अक्ष्णा काणः ।
गुणवचनेन इति किं ? गोभिर्वपावान् । ।

---

1. <पूर्व-सदृश-सम-ऊनार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः># । । पाणिनीयसूत्र २,१.३१ । ।

_______काशिका २,१.३१ः

पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण इत्येतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समसो भवति ।
अस्मादेव वचनात्पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या ।
पूर्व -- मासेन पूर्वः मासपूर्वः ।
संवत्सरपूर्वः ।
सदृश -- मातृसदृशः ।
पितृसदृशः ।
सम -- मातृसमः ।
ऊनार्थ - माशोनं ।
कार्षापणोनं ।
माषविकलं ।
कार्षापनविकलं ।
कलह -- असिकलहः ।
वाक्कलहः ।
निपुण - वाङ्निपुणः ।
आचारनिपुणः ।
मिश्र - गुडमिश्रः ।
तिलमिश्रः ।
श्लक्ष्ण -- आचारश्लक्ष्णः ।
पूर्वादिष्ववरस्योपसङ्ख्यानं ।
मासेनावरः मासावरः ।
संवत्सरावरः । ।

---

[#१०८]

1. <कर्तृकर्णे दृता बहुलम्># । । पाणिनीयसूत्र २,१.३२ । ।

_______काशिका २,१.३२ः

तृतीया इति वर्तते ।
कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति ।
सर्वोपाधिव्यभिचारार्थं बहुल-ग्रहनं ।
कर्तरि -- अहिना हतः अहिहतः ।
करणे -- नखैर्निर्भिन्नः नखनिर्भिन्नः ।
परशुना छिन्नः ।
कर्तृकरणे इति किं ? भिक्षाभिरुषितः ।
बहुल-ग्रहनं किं ? दात्रेण लूनवान्, परशुना छिन्नवान्, इह समासो न भवति ।
पादहारकः, गले चोपकः इति च भवति । ।

---

1. <कृत्यैरधिक-आर्थ-वचने># । । पाणिनीयसूत्र २,१.३३ । ।

_______काशिका २,१.३३ः

स्तुतिनिन्दाप्रयुक्तं अध्यारोपितार्थवचनं अधिकार्थवचनं ।
कर्तृकरणयो या तृतीया तदन्तं सुबन्तं कृतैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति ।
कर्ता - काकपेया नदी ।
श्वलेह्यः कूपः ।
करणं - बाष्पच्छेद्यानि तृणानि ।
क्ण्टकसञ्चेय ओदनः ।
पूर्वस्या+एव अयं प्रपञ्चः ।
कृत्य-ग्रहणे यण्ण्यतोर्ग्रहनं कर्तव्यं ।
इह मा भूत्, काकैः पातव्या इति । ।

---

1. <अन्नेन व्यञ्जनम्># । । पाणिनीयसूत्र २,१.३४ । ।

_______काशिका २,१.३४ः

तृतीया इति वर्तते ।
व्यञ्ज्नवाचि तृतीयान्तं अनवाचिना सुबन्तेन सहा समस्यते, विभाशा तत्पुरुषश्च समासो भवति ।
संस्कार्यं अन्नं, संस्कारकं व्यञ्जनं ।
दध्ना उपसिक्त ओदनः दध्योदनः ।
क्षीरौदनः ।
वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यं । ।

---

1. <भक्ष्येण मिश्रीकरनम्># । । पाणिनीयसूत्र २,१.३५ । ।

_______काशिका २,१.३५ः

मिश्रीकरन-वाचि तृतीयान्तं भक्ष्य-वाचिना सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
खरविशदमभ्यवहार्यं भक्ष्यं, तस्य संस्कारकं मिश्रीकरणं ।
हुडेन मिश्राः धानाः गुडधानाः ।
गुडपृथुकाः ।
वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यं । ।

---

[#१०९]

1. <चतुर्थी तदर्थ-अर्थ-बलि-हित-सुख-रक्षितैः># । । पाणिनीयसूत्र २,१.३६ । ।

_______काशिका २,१.३६ः

सुप्सुपा इति वर्तते ।
तस्य विशेषणं एतथ् ।
ततिति सर्वनाम्ना चतुर्थ्यन्तस्य अर्थः परामृश्यते ।
तस्मै इदं तदर्थं ।
तदर्थ अर्थ बलि हित सुख रक्षित इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति ।
तदर्थेन प्रकृतिविकारभावे समासोऽयं इष्यते ।
यूपाय दारु यूपदारु ।
कुण्ड्लाय हिरण्यं कुण्डलहिरण्यं ।
इह न भवति, रन्धनाय स्थली, अवहननाय उलूखलं इति ।
तादर्थ्ये चतुर्थी च अस्मादेव ज्ञापकाद्भवति ।
अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या ।
ब्राह्मणार्थं पयः ।
ब्राह्मणार्था यवागूः ।
बलि - कुबेराय बलिः कुबेरबलिः ।
महाराजबलिः ।
हित - गोहितं ।
अश्वहितं ।
सुख - गोसुखं ।
अश्वसुखं ।
रक्षित - गोरक्षितं ।
अश्वरक्षितं । ।

---

1. <पञ्चमी भयेन># । । पाणिनीयसूत्र २,१.३७ । ।

_______काशिका २,१.३७ः

सुप्सुपा इति वर्तते ।
तस्य विशेषणं एतथ् ।
पञ्चम्यन्तं सुबनतं भय-शब्देन ।
सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति ।
वृकेब्यो भयं वृकभयं ।
चौरभयं ।
दस्युभयं ।
भय-भीत-भीति-भीभिरिति वक्तव्यं ।

वृकेभ्यो भीतः वृकभीतः ।
वृकभीतिः ।
वृकभीः ।
पूर्वस्य+एव अयं बहुलग्रहणस्य प्रप्ञ्चः ।
तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुः इत्येवं आदि सिद्धं भवति । ।

---

1. <अपेत-अपोढ-मुक्त-पतित-अपत्रस्तैरल्पशः># । । पाणिनीयसूत्र २,१.३८ । ।

_______काशिका २,१.३८ः

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह पज्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति ।
अपेत - सुखापेतः ।
अपोढ - कल्पनापोढः ।
मुक्त - चक्रमुक्तः ।
पतित - स्वर्गपतितः ।
अपत्रस्त - तरङ्गापत्रस्तः ।
अल्पशः इति समासस्य अल्पविषयतामाचष्टे ।
अल्पा पञ्चमी संस्यते, न सर्वा ।
प्रासादात्पतितः, भोजनादपत्रस्तः इत्येवं अदौ न भवति ।
कर्तृकरने कृता बहुलं (*२,१.३२) इत्यस्य+एव अयं प्रपञ्चः । ।

---

[#११०]

1. <स्तोक-अन्तिक-दूर-अर्थ-कृच्छ्राणि क्तेन># । । पाणिनीयसूत्र २,१.३९ । ।

_______काशिका २,१.३९ः

स्तोक अन्तिक दूर इत्येवं अर्थाः शब्दाः कृच्छ्र-शब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
स्तोकान्मुक्तः ।
अन्तिकादागतः ।
अभ्याशादागतः ।
दूरादागतः ।
विप्रकृष्टादागतः ।
कृच्छ्रान्मुक्तः ।
कृच्छ्राल्लब्धः ।
पञ्चम्याः स्तोक-आदिभ्यः (*६,३.२) इत्यलुक् ।
शतसहत्रौ परेणेति वक्तव्यं ।
शतात्परे परश्शताः ।
सहस्रात्परे परस्सहस्राः ।

राजदन्तादित्वात्परनिपातः ।
निपातनात्सुडागमः । ।

---

1. <सप्तमी शौण्डैः># । । पाणिनीयसूत्र २,१.४० । ।

_______काशिका २,१.४०ः

सप्तम्यन्तं शौण्ड-आदिभिः सह समस्यते, तत्पुरुषाश्च समासो भवति ।
अक्षेषु शौण्डः अक्षशौण्डः ।
अक्षधूर्तः ।
अक्षकितवः ।
शौण्ड ।
धूर्त ।
कितव ।
व्याड ।
प्रवीण ।
संवीत ।
अन्तर् ।
अन्तःशब्दस्त्वराधिकरनप्रधान एव पठ्यते ।
अधि ।
पटु ।
पण्डित ।
चपल ।
निपुण ।
वृत्तौ प्रसक्तिक्रियाया अन्तर्भावदक्षादिषु अधिकरणे सप्तमी । ।

---

1. <सिद्ध-शुष्क-पक्व-बन्धैश्च># । । पाणिनीयसूत्र २,१.४१ । ।

_______काशिका २,१.४१ः

सप्तमी इति वर्तते ।
सिद्ध शुष्क पक्व बन्ध इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति ।
साङ्काश्यसिद्धः ।
काम्पिल्यसिद्धः ।
शुष्क - आतपशुष्कः ।
छायाशुष्कः ।
पक्व - स्थालीपक्वः ।
कुम्भीपक्वः ।
बन्ध - चक्रबन्धः ।

बहुल-ग्रहणस्य+एव अयं उदाहरण-प्रपञ्चः । ।

---

1. <ध्वाङ्क्षेन क्षेपे># । । पाणिनीयसूत्र २,१.४२ । ।

_______काशिका २,१.४२ः

ध्वाग्क्षेण इत्यर्थग्रहनं ।
धवाग्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं सुबन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति क्षेपे गम्यमाने ।
तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः ।
अनवस्थितः इत्यर्थः ।
तीर्थकाकः ।
तीर्थवायसः ।
क्षेपे इति किं ? तीर्थे ध्वाङ्क्षस्तिष्थति । ।

---

[#१११]

1. <क्र्त्यैरृणे># । । पाणिनीयसूत्र २,१.४३ । ।

_______काशिका २,१.४३ः

सुप्तमी इति वर्तते ।
कृत्य-प्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति ऋणे गम्यमाने ।
यत्प्रत्ययेन+एव+इष्यते ।
मासे देयमृणं मासदेयं ।
संवत्सरदेयं ।
व्यहदेयं ।
ऋणग्रहणं नियोगोपलक्षण-अर्थं, तेन+इह अपि समासो भवति, पूर्वाह्णे गेयं साम पूर्वाह्णगेयं ।
प्रातरध्येयोऽनुवाकः ।
ऋणे इति किं ? मासे देया भिक्षा । ।

---

1. <सञ्ज्ञायाम्># । । पाणिनीयसूत्र २,१.४४ । ।

_______काशिका २,१.४४ः

सञ्ज्ञायां विषये सप्तयन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ।
सञ्ज्ञा समुदायोपाधिः ।
तेन नित्यसमास एव अयम्, न हि वाक्येन सञ्ज्ञा गम्यते ।
अरण्येतिलकाः ।
अरण्येमाषाः ।
वनेकिंशुकाः ।
वने - बिल्वकाः ।
कूपेपिशाचकाः ।
हलदन्तात्सप्तम्याः सञ्ज्ञायां (*६,३.९) इत्यलुक् । ।

---

1. <क्तेन अहो-रात्र-अवयवाः># । । पाणिनीयसूत्र २,१.४५ । ।

_______काशिका २,१.४५ः

अहरवयवाः रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
पूर्वाह्णकृतं ।
अपराह्णकृतं ।
पूर्वरात्रकृतं ।
अपररात्रकृतं ।
अवयव-ग्रहनं किं ? एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि ।
अहनि भुक्तं ।
रात्रौ वृत्तं ।
बहुल-ग्रहणाथ् ।
रात्रिवृत्तम्, सन्ध्यगर्जितं इत्यादयः । ।

---

1. <तत्र># । । पाणिनीयसूत्र २,१.४६ । ।

_______काशिका २,१.४६ः

तत्र इत्येतत्सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
तत्रभुक्तं ।
तत्रकृतं ।
तत्रपीतं ।
ऐकपद्यमैकस्वर्यं च समासत्वात्भवति । ।

---

1. <क्षेपे># । । पाणिनीयसूत्र २,१.४७ । ।

_______काशिका २,१.४७ः

क्षेपो निन्दा ।
क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
अवतप्ते - नकुलस्थितं त एतथ् ।
चापलं एतत्, अनवस्थितत्वं तवैततित्यर्थः ।
उदकेविशीर्णं ।
प्रवाहेमूत्रितं ।
भस्मनिहुतं ।
निष्फलं यत्क्रियते तदेवं उछ्यते ।
तत्पुरुषे कृति बहुलं (*६,३.१४) इत्यलुक् । ।

---

[#११२]

1. <पात्रेसमित-आदयश्च># । । पाणिनीयसूत्र २,१.४८ । ।

_______काशिका २,१.४८ः

समुदाया एव निपात्यन्ते ।
पात्रेसमित-आदयः शब्दस्तत्पुरुष-सञ्ज्ञा भवन्ति क्षेपे गम्यमाने ।
ये च अत्र क्तान्तेन सह समासाः, तेषां पूर्वेन+एव सिद्धे पुनः पाठो युक्तारोहयादि-परिग्रह-अर्थः, पूर्वपदाद्य्-उदात्तत्वं यथा सयातिति ।
युक्तरोहयादिषु हि पात्रेसमितादयश्च इति पठ्यते ।
पात्रेसमिताः ।
पात्रेबहुलाः ।
अवधारणेन क्षेपो गम्यते, पात्रे एव समिता न पुनः क्वचित्कार्ये इति ।
उदुम्बरमशकादषु उपमया क्षेपः ।
मातरिपुरुषः इति प्रतिषिद्धसेवनेन ।
पिण्डीषूरादिषु निरीहतया ।
अव्यक्तत्त्वाच्चाकृतिगणोऽयं ।
पात्रेसमिताः ।
पात्रेबहुलाः ।
उदुम्बरमशकाः ।
उदरकृमिः ।
कूपकच्छपः ।
कूपचूर्णकः ।
अवटकच्छपः ।
कूपमण्डूकः ।

कुम्भमण्डूकः।
उदपानमःडूकः।
नगरकाकः।
नगरवायसः।
मातरिषुरुषः।
पिण्डीषूरः।
पितरिषूरः।
गेहेशूरः।
गेहेनर्दी।
गेहेक्ष्वेडी।
गेहेविजिती।
गेहेव्याडः।
गेहेमेही।
गेहेदाही।
हेहेदृप्तः।
गेहेधृष्टः।
गर्भेतृप्तः।
आखनिकबकः।
गोष्ठेशूरः।
गोष्ठे विजिती।
गोष्ठेक्ष्वेडी।
गोष्ठेपटुः।
गोष्ठेपण्डितः।
गोष्ठेप्रगल्भः।
कर्णेटिट्टिभः।
कर्णेटिरिटिरा।
कर्णेचुरचुरा।
चकारोऽवधारण-अर्थः, तेन समासान्तरं न भवति, परमपात्रेसमिताः इति।।

---

1. <पूर्वकाल-एक-सर्व-जरत्-पुराणा-नव-केवलाः समानाधिकरणेन>#।। पाणिनीयसूत्र २,१.४९।।

_______काशिका २,१.४९ः
सुप्सुपा इति वर्तते।
तस्य विशेषणं एतथ्।
पूर्वकाल एक सर्व जरत्पुराण नव केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति।
भिन्न-प्रवृत्ति-निमित्तस्य शब्दस्य+एकस्मिन्नर्थे वृत्तिः साअमानाधिकरण्यं।
पूर्वकालः इत्यर्थ-निर्देशः, परिशिष्टानां स्वरूप-ग्रहणं।
पूर्वकालोऽपरकालेन समस्यते।
स्नातानुलिप्तः।
कृष्टसमीकृतं।
दग्धप्ररूढं।
एकशाटी।
एकभिक्षा।
सर्वदेवाः।

सर्वमनुष्याः ।
जरद्धस्ती ।
जरद्गृष्टिः ।
जरद्वृत्तिः ।
पुराणान्नं ।
पुराणावसथं ।
नवान्नं ।
नवावसथं ।
केवलान्नं ।
समानाधिकरणेन इति किं ? एकस्याः शाटी । ।

---

[#११३]

1. <दिक्-सङ्ख्ये सञ्ज्ञायाम्># । । पाणिनीयसूत्र २,१.५० । ।

_______काशिका २,१.५०ः

समानाधिकरणेन इत्यापादसमाप्तेरनुवर्तते ।
दिग्वाचिनः शब्दाः सङ्ख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति सञ्ज्ञयां वषये ।
पूर्वेषुकामशमी ।
अपरेषुकामशमी ।
पञ्चाम्राः ।
सप्तर्षयः ।
सञ्ज्ञायां इति किं ? उत्तरा वृक्षाः ।
पञ्च ब्राह्माणाः । ।

---

1. <तद्धितर्थ-उत्तरपद-समाहारे च># । । पाणिनीयसूत्र २,१.५१ । ।

_______काशिका २,१.५१ः

दिक्-सङ्ख्ये इत्यनुवर्तते ।
तद्धित-अर्थे विषये उत्तरपदे च परतः समाहारे च अभिधेये दिक्-सङ्ख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति ।
तद्धित-अर्थे तावत्- पूर्वस्यां शालायां भवः, दिक्पूर्वपदादसञ्ज्ञायां ञः (*४,२.१०७), पौर्वशालः ।
आपरशालः ।
उत्तरपदे - पूर्वशालाप्रियः ।
अपरशालाप्रियः ।
समाहारे दिक्-शब्दो न सम्भवति ।
सङ्ख्या तद्धित-अर्थे - पाञ्चनापितिः ।

पञ्चकपालः ।
उत्तरपदे - पञ्चगवधनः ।
दशगवधनः ।
समाहारे - पञ्चपूली ।
दशपूली ।
पञ्चकुमारि ।
दशकुमारि ।
स नपुंसकं (*२,४.१७) इति नपुंसकत्वं ।
ह्रस्वो नपुंसके प्रातिपदिकस्य (*१,२.४७) इति ह्रस्वत्वं । ।

---

1. <सङ्ख्या-पूर्वो द्विगुः># । । पाणिनीयसूत्र २,१.५२ । ।

_______काशिका २,१.५२ः

तद्धित-अर्थ-उत्तरपद-समाहारे च (*२,१.५१) इत्यत्र यः सङ्ख्या-पूर्वः समासः स द्विगु-सञ्ज्ञो भवति ।
तद्धित-अर्थे तावत्- पञ्चसु कपालेशु संस्कृतः पञ्चकपालः ।
दशकपालः ।
संस्कृतं भक्षाः (*४,२.१६) इति इह अण्, तस्य द्विगोर्लुग्-अनपत्ये (*४,१.८८) इति लुक् ।
उत्तरपदे - पञ्चनावप्रियः ।
नावो द्विगोः (*५,४.९९) इति समासान्तो भवति ।
समाहारे - पञ्चपूली ।
द्विगोः (*४,१.२१) इति ङीब्भवति ।
द्विगुप्रदेशाः - द्विगोः (*४,१.२१) इत्येवं आदयः । ।

---

1. <कुत्सितानि कुत्सनैः># । । पाणिनीयसूत्र २,१.५३ । ।

_______काशिका २,१.५३ः

कुत्सित-वाचीनि सुबन्तानि कुत्सन-वचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
शब्द-प्रवृत्ति-निमित्त-कुत्सायां अयं समास इष्यते ।
विशेषणं विशेष्येण बहुलं (*२,१.५७) इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपात-अर्थ आरम्भः ।
वैयाकरणखसूचिः ।
निष्प्रतिभः इत्यर्थः ।
याज्ञिककितवः ।
अयाज्ययाजनतृष्णापरः ।
मीमांसकदुर्दुरूढः ।
नास्तिकः ।
कुत्सितानि इति किं ? वैयाकरणश्चौरः ।
न ह्यत्र वैयाकरणत्वं कुत्स्यते ।

कुत्सनैः इति किं ? कुत्सितो ब्राह्मणः । ।

---

[#११४]

1. <पापाणके कुत्सितैः># । । पाणिनीयसूत्र २,१.५४ । ।

_______काशिका २,१.५४ः

पापाणक-शब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपत-अर्थं इदं आरभ्यते ।
पाप अणक इत्येते सुबन्ते कुत्सित-वचनैः सह समस्येते, तत्पुरुषश्च समासो भवति ।
पापनापितः ।
पापकुलालः ।
अणकनापितः ।
अणककुलालः । ।

---

1. <उपमानानि सामान्य-वचनैः># । । पाणिनीयसूत्र २,१.५५ । ।

_______काशिका २,१.५५ः

उपमीयतेऽनेन इत्युपमानं ।
उपमान-वाचीनि सुबन्तानि सामान्य-वचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
उपमान-उपमेययोः साधारणे धर्मः सामान्यं, तद्विशिष्ट-उपमेय-वचनैरयं समासः ।
शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता ।
कुमुदश्येनी ।
हंसगद्गदा ।
न्यग्रोधपरिमण्डला ।
उपमानानि इति किं ? देवदत्ता शयामा ।
सामान्य-वचनैः इति किं ? फाला इव तण्डुलाः ।
पर्वता इव बलाहकाः । ।

---

1. <उपमितं व्याघ्र-आदिभिः सामान्य-अप्रयोगे># । । पाणिनीयसूत्र २,१.५६ । ।

_______काशिका २,१.५६ः

उपमेयं उपमितं , तद्वाचि सुबन्तं व्याघ्र-आदिभिः सामर्थ्यादुपमान-वचनैः सह सामस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची शब्दः प्रयुज्यते ।
विशेषणं विशेष्येण बहुलं (*२,१.५७) इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपात-अर्थ आरम्भः ।
पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः ।
पुरुषसिंहः ।
सामान्य-अप्रयोगे इति इं ? पुरुषोऽयं व्याघ्र इव शूरः ।
व्याघ्र ।
सिंह ।
ऋक्ष ।
ऋषभ ।
चन्दन ।
वृक्ष ।
वराह ।
वृष ।
हस्तिन् ।
कुञ्जर ।
रुरु ।
पृषत ।
पुण्डरीक ।
बलाहक ।
अकृतिगनश्च अयम्, तेन+इदं अपि भवति - मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः इत्येवं आदि । ।

---

1. <विशेसनं विशेष्येण बहुलम्># । । पाणिनीयसूत्र २,१.५७ । ।

_______काशिका २,१.५७ः

भेदकं विशेषणं, भेद्यं विशेष्यं ।
विशेषण-वाचि सुबन्तं विशेष्य-वाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति ।
नीलोत्पलं ।
रक्तोत्पलं ।
बहुलवचनं व्यवस्थार्थं ।
क्वचिन्नित्यसमास एव, कृष्णसर्पः, लोहितशालिः ।
क्वचिन्न भवत्येव, रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः ।
क्वचिद्विकल्पः, नीलं उत्पलम्, नीलोत्पलं ।
विशेषणं इति किं ? तक्षकः सर्पः ।
विशेष्येण इति किं ? लोहितस्तक्षकः । ।

---

[#११७]

1. <पूर्व-अपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीराश्च># ।। पाणिनीयसूत्र २,१.५८ ।।

_______काशिका २,१.५८ः

पूर्व अपर प्रथम चरम जघन्य समान मध्य मध्यम वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
पूर्वपुरुषः ।
अपरपुरुषः ।
प्रथमपुरुषः ।
चरमपुरुषः ।
जघन्यपुरुषः ।
समानपुरुषः ।
मध्यपुरुषः ।
मध्यमपुरुषः ।
वीरपुरुषः ।
पूर्वस्य+एव अयं प्रपञ्चः ।।

---

1. <श्रेण्य्-आदयः कृत-आदिभिः># ।। पाणिनीयसूत्र २,१.५९ ।।

_______काशिका २,१.५९ः

श्रेण्य-आदयः सुबन्ताः कृत-आदिभिः समानधिकरणैः सहः समस्यन्ते, तत्पुरुषश्च समासो भवति ।
श्रेण्य्-आदिषु च्व्य्-अर्थ-वचनं ।
अश्रेणयः श्रेनयः कृताः श्रेणिकृताः ।
एककृताः ।
पूगकृताः ।
श्रेण्यादयः पठ्यन्ते ।
कृतादिराकृतिगनः ।
च्व्यन्तानां तु कु-गति-प्र-आदयः (*२,२.१८) इत्यनेन नित्यसमासः ।
श्रेणीकृताः ।
श्रेणि ।
एक ।
पूग ।
कुण्ड ।
राशि ।
विशिख ।
निचय ।
निधान ।
इन्द्र ।
देव ।

मुण्ड।
भूत।
श्रवन।
वदान्य।
अध्यापक।
अभिरूपक।
ब्राह्मण।
क्षत्रिय।
पटु।
पण्डित।
कुशल।
चपल।
निपुण।
कृपण।
इति श्रेण्य्-आदिः।
कृत।
मित।
मत।
भूत।
उक्त।
समाज्ञात।
समाम्नात।
समाख्यात।
सम्भावित।
अवधारित।
निराकृत।
अवकल्पित।
उपकृत।
उपाकृत।
इति कृत-आदिः।।

---

1. <क्तेन नञ्-विशिष्टेन अनञ्>#।। पाणिनीयसूत्र २,१.६०।।

_______काशिका २,१.६०ः

नञैव विशेषो यस्य, सर्वमन्यत्प्रकृत्यादिकं तुल्यं, तन्नञ्-विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह अनञ्क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति।
कृतं च तदकृतं च कृताकृतं।
भुक्ताभुक्तं।
पीतापीतं।
उदतानुदितं।
नुडिटौ तद्भक्तत्वान्नैव भेदकौ।
अशितानशितेन जीवति।
क्लिष्टाक्लिशितेन वर्तते।

कृतापकृतादीनां उपसङ्ख्यानं ।
कृतापकृतं ।
भुक्तविभुक्तं ।
पीतविपीतं ।
गतप्रत्यागतं ।
यातानुयातं ।
क्रयाक्रयिका ।
पुटापुटिका ।
फलाफलिका ।
मानोन्मानिका ।
समानाधिकरणाधिकारे शाकपार्थिवादीनां उपसङ्ख्यानं उत्तरपदलोपश्च ।
शाकप्रधानः पार्थिवः शाकपार्थिवः ।
कुतपसौश्रुतः ।
अजातौल्वलिः । ।

---

[#११६]

1. <सन्-महत्-परम-उत्तम-उत्कृष्टाः पूज्यमानैः># । । पाणिनीयसूत्र २,१.६१ । ।

_______काशिका २,१.६१ः

सत्महत्परम उत्तम उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।
पूज्यमानैः इति वचनात्पूजावचनाः सदादयो विज्ञायन्ते ।
सत्पुरुषः ।
महापुरुषः ।
परमपुरुषः ।
उत्तमपुरुषः ।
उत्कृष्टपुरुषः ।
पूज्यमानैः इति किं ? उत्कृष्टो गौः कदर्मात् । ।

---

1. <वृन्दरक-नाग-कुञ्जरैः पूज्यमानम्># । । पाणिनीयसूत्र २,१.६२ । ।

_______काशिका २,१.६२ः

वृन्दारक नाग कुञ्जर इत्येतैः सह पूज्यमान-वाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति ।
पूज्यमानं इति वचनात्पूजावचना वृन्दारक-आदयो गृह्यन्ते ।
गोवृन्दारकः ।
अश्ववृन्दारकः ।

गोनागः ।
अश्वनागः ।
गोकुञ्जरः ।
अश्वकुञ्जरः ।
पूज्यमानं इति किं ? सुषीमो नागः । ।

---

1. <कतर-कतमौ जातिपरिप्रश्ने># । । पाणिनीयसूत्र २,१.६३ । ।

_______काशिका २,१.६३ः

कतर-कतमौ जातिपरिप्रश्ने वृतमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति ।
कतरकठः ।
कतरकालापः ।
कतमकठः ।
कतमकालापः ।
ननु कतम-शब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतर-शब्दोऽपि साहचर्यात्तदर्थ-वृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्न-ग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति कतम-शब्दोऽन्यत्र अपि वर्तते इति ।
तथा च प्रत्युदाहरनं - कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः । ।

---

1. <किं क्षेपे># । । पाणिनीयसूत्र २,१.६४ । ।

_______काशिका २,१.६४ः

किं इत्येतत्क्षेपे गम्यमाने सुपा सह समस्यते ततुरुषश्च समासो भवति ।
किंराजा, यो न रक्षति ।
किंसखा, योऽभिद्रुह्यति ।
किंगौः, यो न वहति ।
किमः क्षेपे (*५,४.७०) इति समासान्तो न भवति ।
क्षेपे इति किं ? को राजा पाटलिपुत्रे । ।

---

1. <पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रिय-अध्यापक-धूर्तैर्जातिः># । । पाणिनीयसूत्र २,१.६५ । ।

_______काशिका २,१.६५ः

उभय-व्यञ्जना पोटा इत्यभिधीयते ।
गृष्टिरेकवारप्रसूता ।
धेनुः प्रत्यग्रप्रसूता ।
वशा वन्ध्या ।
देहद्गर्भपातिनी ।
बष्कयणी तरुणवत्सा ।
पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति ।
इभपोटा ।
इभयुवतिः ।
अग्निस्तोकः ।
उदश्वित्कतिपयं ।
गोगृष्टिः ।
गोधेनुः ।
गोवशा ।
गोवेहथ् ।
गोबष्कयणी ।
कठप्रवक्ता ।
कठश्रोत्रियः ।
कठाध्यापकः ।
कठधूर्तः ।
जातिः इति किं ? देवदत्ततः प्रवक्ता ।
धूर्त-ग्रहणं अकुत्स-अर्थं । ।

---

[#११७]

1. <प्रशंसा-वचनैश्च># । । पाणिनीयसूत्र २,१.६६ । ।

_______काशिका २,१.६६ः

जातिः इति वर्तते ।
जातिवाचि सुबन्तं प्रशंसा-वचनैः सह समस्यते, तत्पुरुषश्च समासो भवति ।
रूढि-शब्दाः प्रशंसा-वचना गृह्यन्ते मतल्लिकादयः ।
ते च आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जाति-शब्दे स्वलिङ्गोपादाना एव समानाहिकरना भवन्ति ।
गोप्रकाण्डं ।
अश्वप्रकाण्डं ।
गोमत्ल्लिका ।
अश्वमतल्लिका ।
गोमचर्चिका ।
अश्वमचर्चिका ।
जातिः इति किं ? कुमारी मतल्लिका । ।

---

1. <युवा खलति-पालित-वलिन-जरतीभिः># । । पाणिनीयसूत्र २,१.६७ । ।

_______काशिका २,१.६७ः

खलत्य्-आदिभिः ।
समानाधिकरणैः सह युव-शब्दः समस्यते, तत्पुरुषश्च समासो भवति ।
जरतीभिः इति स्त्रीलिङ्गेन निर्देशः, प्रातिपादिक-ग्रहणे लिङ्गविशिष्टस्य अपि ग्रहनं इति ज्ञापक-अर्थः ।
युवा खलतिः युवखलतिः ।
युवतिः खलती युवखलती ।
युवा पलितः युवपलितः ।
युवतिः पलिता युवपलिता ।
युवा वलिनः युववलिनः ।
युवतिर्वलिना युववलिना ।
युवा जरन्युवजरन् ।
युवतिर्जरती युवजरती । ।

---

1. <कृत्य-तुल्य-आख्या अजात्या># । । पाणिनीयसूत्र २,१.६८ । ।

_______काशिका २,१.६८ः

कृत्यप्रत्यय-अन्तास्तुल्यपर्यायाश्च सुबन्ता अजाति-वचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति ।
भोज्योष्णं ।
भोज्यलवणं ।
पानीयशीतं ।
तुल्याख्याः - तुल्यश्वेतः ।
तुल्यमहान् ।
सदृशश्वेतः ।
सदृशमहान् ।
अजात्या ति किं ? भोज्य ओदनः । ।

---

1. <वर्णो वर्णेन># । । पाणिनीयसूत्र २,१.६९ । ।

_______काशिका २,१.६९ः

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्य्ते, तत्पुरुषश्च समासो भवति ।
कृष्णसारङ्गः ।
लोहितसारङ्गः ।
कृष्णशबलः ।
लोहितशबलः ।
अवयवद्वारेन कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति । ।

---

1. <कुमारः श्रमणा-आदिभिः># । । पाणिनीयसूत्र २,१.७० । ।

_______काशिका २,१.७०ः

कुमार-शब्दः श्रमणा-आदिभिः सह समस्यते, तत्पुरुषश्च समासो भवति ।
येऽत्र स्त्रीलिङ्गाः पठ्यन्ते, श्रमणा, प्रव्रजिता, कुलटा इत्येवं आदयः, तैः सह स्त्रीलिङ्गः एव कुमार-शब्दः समस्यते ।
ये तु पुंलिङ्गाः, अध्यापकः, अभिरूपकः, पण्डितः इति, तैरुभयथा, प्रातिपदिक-ग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणं इति ।
कुमारी श्रमणा कुमारश्रमणा ।
श्रमना ।
प्रव्रजिता ।
कुलटा ।
गर्भिणी ।
तापसी ।
दासी ।
बन्धकी ।
अध्यापक ।
अभिरूपक ।
पण्डित ।
पटु ।
मृदु ।
कुशल ।
चपल ।
निपुण । ।

---

[#११८]

1. <चतुष्पादो गर्भिण्या># । । पाणिनीयसूत्र २,१.७१ । ।

_______काशिका २,१.७१ः
चतुष्पाद्-वाचिनः सुबन्ता गर्भिणी-शब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति ।
गोगर्भिणी ।
अजागर्भिणी ।
चतुष्पाज्जातिरिति वक्तव्यं ।
इह मा भूत्- कालाक्षी गर्भणी, स्वस्तिमती गर्भिणी ।
चतुष्पादः इति किं ? ब्राह्मणी गर्भिणी । ।

---

1. <मयूर-व्यंसक-आदयश्च># । । पाणिनीयसूत्र २,१.७२ । ।

_______काशिका २,१.७२ः

समुदाया एव निपात्यन्ते ।
मयूर-व्यंसक-आदयः शब्दाः तत्पुरुषसञ्ज्ञा भवति ।
चकारोऽवधारण-अर्थः , परममयूरव्यंसकः इति समासान्तरं न भवति ।
मयूरव्यंसकः ।
छात्रव्यंसकः ।
काम्बोजमुण्डः ।
यवनमुण्डः ।
छन्दसि - हस्तेगृह्य ।
पादेगृह्य ।
लाङ्गलेगृह्य ।
पुनर्दाय ।
एहीडादयोऽन्यपदार्थे - एहीडं ।
एहियवं वर्तते ।
एहिवाणिजाक्रिया ।
अपेहिवाणिजा ।
प्रेहिवाणिजा ।
एहिस्वागता ।
अपोहिस्वागता ।
प्रेहिस्वागता ।
एहिद्वितीया ।
अपेहिद्वितीया ।
इहवितर्का ।
प्रोहकटा ।
अपोहकटा ।
प्रोहकर्दमा ।
अपोहकर्दमा ।
उद्धरचूडा ।
आहरचेला ।
आहरवसना ।
आहरवनिता ।

कृन्तविचक्षणा ।
उद्धरोत्सृजा ।
उद्धमविधमा ।
उत्पचिविपचा ।
उत्पतनिपता ।
उच्चावचं ।
उच्चनीचं ।
अचितोपचितं ।
अवचितपराचितं ।
निश्चप्रचं ।
अकिञ्चनं ।
स्नात्वाकालकः ।
पीत्वास्थिरकः ।
भुक्त्वासुहितः ।
प्रोष्यपापीयान् ।
उत्पत्यपाकला ।
निपत्यरोहिणी ।
निषण्णाश्यामा ।
अपेहिप्रसवा ।
इहपञ्चमी ।
इहद्वितीया ।
जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति - जहिजोडः ।
उज्जहिजोडः ।
जहिस्तम्बः ।
उज्जहिस्तम्बः ।
आख्यातमाख्यातेन क्रियासातत्ये - अश्नीतपिबता ।
पचतभृज्जता ।
खादतमोदता ।
खादतवमता ।
खादताचमता ।
आहरनिवपा ।
आवपनिष्किरा ।
उत्पचच्विपचा ।
भिन्धिलवना ।
छिन्धिविचक्षना ।
पचलवना ।
पचप्रकूटा ।
अविहितलक्षनस्तत्पुरुषो मयूर-व्यंसक-आदिषु द्रष्टव्यः ।।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ।।

द्वित्तियोऽध्ययः द्वितीयः पादः

---

1. <पूर्व-अपर-अधर-उत्तरं एकदेशिना-एकाधिकरणे># । । पाणिनीयसूत्र २,२.१ । ।

_______काशिका २,२.१ः

एकदेशोऽस्य अस्ति इत्येकदेशी, अवयवी, तद्वाचिना सुबन्तेन सह पूर्व अपर अधर उत्तर इत्येते शब्दाः सामर्थ्यादेकदेशबचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति ।
एकाधिकरण-ग्रहनं एकदेशिनो विशेषणं ।
एकं चेदधिकरणं एकद्रव्यं एकदेशि भवति ।
षष्ठीसमास-अपवदोऽयं योगः ।
पूर्वं कायस्य पूर्वकायः ।
अपरकायः ।
अधरकायः ।
उत्तरकायः ।
एकदेशिना इति किं ? पूर्वं न अभेः कायस्य ।
एकाधिकरणे इति किं ? पूर्वं छात्राणां आमन्त्रय ।
कथं मध्याह्नः, सायाह्नः इति ? सङ्ख्या-वि-साय्-अपूर्वस्य अह्नस्य अह्नन्न्यतरस्यां ङौ (*६,३.११०) इति ज्ञापकात्सर्वणैकदेश-शब्देन अह्नः समासो भवति । ।

---

1. <अर्धं नपुंसकम्># । । पाणिनीयसूत्र २,२.२ । ।

_______काशिका २,२.२ः

एकदेशिना एकाधिकरणे इति वर्तते ।
समप्रविभागेऽर्धशब्दो नपुंसकं आविष्टलिङ्गः, तस्य+इदं ग्रहनं ।
अर्धं इत्येतद्नपुंसकं एकदेशिना-एकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति ।
षष्ठीसमास-अपवादोऽयं योगः ।
अर्धं पिप्पल्याः अर्धपिप्पली ।
अर्धकोशातकी ।
नपुंसकं इति किं ? ग्रामार्धः ।
नगरार्धः ।
एकदेशिना इत्येव, अर्धं पसोर्देवदत्तस्य ।
देवदत्तेन सह समसो न भवति ।
एकाधिकरणे इत्येव, अर्धं पिप्पलीनां । ।

---

1. <द्वितिय-तृतीय-चतुर्थ-तुर्याण्यन्यतरस्याम्># । । पाणिनीयसूत्र २,२.३ । ।

_______काशिका २,२.३ः

एकदेशिना एकाधिकरने इति वर्तते ।
षस्ठीसमास-अपवादोऽयं योगः ।
अन्यतरस्यां ग्रहणात्सोऽपि षष्ठीसमासो भवति ।
पूरण-गुण (*२,२.११) इति प्रतिषेधश्च अत एव अन्यतरस्यां ग्रहण-सामर्थ्यान्न प्रवर्तते ।
द्वितीयं भिक्षायाः चतुर्थभिक्षा, भिक्षाचतुर्थं वा ।
तुर्यं भिक्षायाः तुर्यभिक्षा, भिक्षातुर्यं वा ।
तुरीय-शब्दस्य अपीष्यते ।
तुरीयं भिक्षायाः तुरीयभिक्षा, भिक्षातुरीयं वा ।
एकदेशिना इत्येव, द्वितीयं भिक्षाया भिक्षुकस्य ।
एकाधिकरणे इत्येव, द्वितीयां भिक्षाणां । ।

---

[#१२०]

1. <प्राप्तापन्ने च द्वितीयया># । । पाणिनीयसूत्र २,२.४ । ।

_______काशिका २,२.४ः

एकदेशिना-एकाधिकरणे इति निवृत्तं ।
द्वितीयासमासे प्राप्ते वचनं इदं ।
समासविधानात्सोऽपि भवति ।
प्राप्त आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति ।
प्राप्तो जीविकां प्राप्तजीविकः, जीविकाप्राप्तः इति वा ।
आपन्नो जीविकं आपन्नजीविकः, जीविकापन्नः इति वा । ।

---

1. <कालाः परिमाणिना># । । पाणिनीयसूत्र २,२.५ । ।

_______काशिका २,२.५ः

परिमाणमस्य अस्ति इति परिमाणी, तद्बाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः काल-शब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति ।
षष्ठीसमास-विषये योगारम्भः ।
मासो जातस्य मासजातः ।
संवत्सरजातः ।
द्व्यहजातः ।
त्र्यहजातः । ।

---

1. <नञ्># । । पाणिनीयसूत्र २,२.६ । ।

_______काशिका २,२.६ः

नञ्समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
न ब्राह्मणः अब्राह्मणः ।
अवृषलः । ।

---

1. <ईषदकृता># । । पाणिनीयसूत्र २,२.७ । ।

_______काशिका २,२.७ः

ईषतित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ।
ईषद्गुणवचनेन+इति वक्तव्यं ।
ईषत्कडारः ।
ईषत्पिङ्गलः ।
ईषद्विकटः ।
ईषदुन्नतः ।
ईषत्पीतं ।
ईषद्रक्तं ।
गुणवचनेन इति किं ? इह न भवति, ईषद्गार्ग्यः । ।

---

1. <षष्ठी># । । पाणिनीयसूत्र २,२.८ । ।

_______काशिका २,२.८ः

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति ।
राज्ञः पुरुषः राजपुरुषः ।
ब्राह्मणकम्बलः ।
कृद्योगा च षष्ठी समस्यत इति वक्तव्यं ।
इध्मप्रव्रश्चनः ।
पलाशशातनः ।
किं अर्थं इदं उच्यते ? प्रतिपदविधाना च षष्ठी न समस्यते इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः । ।

---

[#१२१]

1. <याजक-आदिभिश्च># । । पाणिनीयसूत्र २,२.९ । ।

_______काशिका २,२.९ः

पूर्वेण समासः सिद्ध एव, तस्य कर्तरि च (*२,२.१६) इति प्रतिषेधे प्राप्ते वचनं इदं आरभ्यते प्रतिप्रसवार्थं ।
याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति ।
ब्राह्मणयाजकः ।
क्षत्रिययाजकः ।
याजक ।
पूजक ।
परिचारक ।
परिषेचक ।
स्नातक ।
अध्यापक ।
उत्सादक ।
उद्वर्तक ।
होतृ ।
पोतृ ।
भर्तृ ।
रथगनक ।
पत्तिगणक ।
तत्स्थैश्च गुणैः षष्ठी समस्यते इति वक्तव्यं ।
चन्दनगन्धः ।
कपित्थरसः ।
गुणात्तरेण तरलोपश्चेअ+इइ वक्तव्यं ।
सर्वेषां श्वेततरः सर्वश्वेतः ।
सर्वेषां सहत्तरः सर्वमहान् ।
न निर्धारणे (*२,२.१०) इति प्रतिषेधे प्राप्ते वचनं इदं ।
सर्वशुक्ला गौः । ।

---

1. <न निर्धारणे># । । पाणिनीयसूत्र २,२.१० । ।

_______काशिका २,२.१०ः

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते ।
निर्धारने या षष्ठी सा न समस्यते ।
जाति-गुण-क्रियाभिः समुदायादेकदेशस्य पृथक्-करणं निर्धारनं ।
क्षत्रियो मनुष्याणां शूरतमः ।
कृष्णा गवां सम्पन्नक्षीरतमा ।

धवन्नध्वगानां शीघ्रतमः ।
प्रतिपदविधाना च षष्ठी न समस्यते इति वक्तव्यं ।
सर्पिषो ज्ञानं ।
मधुनो ज्ञानं । ।

---

1. <पूरण-गुण-सुहितार्थ-सद्-अव्यय-तव्य-समानाधिकरनेन># । । पाणिनीयसूत्र २,२.११ । ।

_______काशिका २,२.११ः

पूरण गुन सुहितार्थ सतव्यय तव्य समानाधिकरण इत्येतैः सह षष्ठी न समस्यते ।
अर्थ-शब्दः प्रत्येकं अभिसम्बध्यते, तेन स्वरूप-विधिर्न भवति ।
पूरणार्थे - धात्राणां पञ्चमः ।
छात्राणां दशमः ।
गुण - बलाकायाः शौक्ल्यं ।
काकस्य कार्ष्ण्यं ।
सुहित-अर्थास्तृप्त्यर्थाः - फलानां सुहितः ।
फलानां तृप्तः ।
सत्- ब्राहमणस्य कुर्वन् ।
ब्राहमणस्य कुर्वाणः ।
अव्यय - ब्राहमणस्य कृत्वा ।
ब्राहमणस्य हृत्वा ।
तव्य - ब्राहमणस्य कर्तव्यं ।
तव्यता सानुबन्धकेन समासो भवत्येव, ब्राहमण-कर्तव्यं ।
समानाधिकरण - शुकस्य माराविदस्य ।
राज्ञः पाटलिपुत्रकस्य ।
पाणिनेः सूत्रकारस्य ।
किं च स्यात्? पूर्वनिपातस्य अनियमः स्याथ् ।
अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां विशेषणं विशेष्येण बहुलं (*२,१.५७) इति भवत्येव समासः ।
पुर्वनिपातश्च तदा दियोगतो विशेषणस्य+एव । ।

---

[#१२२]

1. <क्तेन च पूजायाम्># । । पाणिनीयसूत्र २,२.१२ । ।

_______काशिका २,२.१२ः

मति-बुद्धि-पूजा-अर्थेभ्यश्च (*३,२.१८८) इति वक्ष्यति, तस्य+इदं ग्रहणं ।
पूजा-ग्रहणं उपलक्षण-अर्थं ।

क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते।
राज्ञां मतः।
राज्ञां बुद्धः।
राज्ञां पूजितः।
पूजायां इति किं? छात्रस्य हसितं छात्रहसितं॥

---

1. <अधिकरण-वाचिना च>#॥ पाणिनीयसूत्र २,२.१३॥

_______काशिका २,२.१३:

क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसान-अर्थेभ्यः (*३,४.७६) इति वक्ष्यति, तस्य+इदं ग्रहणं।
अधिकरण-वाचिना क्तेन षष्ठी न समस्यते।
इदं एषां यातं।
इदं एषां भुक्तं॥

---

1. <कर्मणि च>#॥ पाणिनीयसूत्र २,२.१४॥

_______काशिका २,२.१४:

क्तेन इति निवृत्तं।
कर्म-ग्रहणं षष्ठी-विशेषणं।
कर्मणि च या षष्ठी सा न समस्यते।
उभय-प्राप्तौ कर्मणि (*२,३.६६) इति षष्ठ्या इदं ग्रहनं।
आश्चर्यो गवां दोहोऽगोपालकेन।
रोचते ओदनस्य भोजनं देवदत्तेन।
साधु खलु पयसः पानं देवदत्तेन।
विचित्रा सूत्रस्य कृतिः पाणिनिना॥

---

1. <तृज्-अकाभ्यां कर्तरि>#॥ पाणिनीयसूत्र २,२.१५॥

_______काशिका २,२.१५:

कर्तृ-ग्रहणं षष्ठी-विशेषणं ।
कर्तरि या षष्ठी सा तृचा अकेन च सह न समस्यते ।
भवतः शायिका ।
भवत आसिका ।
भवतोऽग्रगामिका ।
तृच्चर्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी न अस्ति ।
तस्मात्तृज्-ग्रहनं उत्तर-अर्थं ।
कर्तरि इति किं ? इक्षुभक्षिकां मे धारयसि । ।

---

1. <कर्तरि च># । । पाणिनीयसूत्र २,२.१६ । ।

_______काशिका २,२.१६ः

कर्तरि च यौ तृज्-अकौ ताभ्यां सह षष्ठी न समस्यते ।
सामर्थ्यादकस्य विशेषण-अर्थं कर्तृ-ग्रहणम्, इतरत्र व्यभिचाराभावाथ् ।
अपां स्रष्टा ।
पुरां भेत्ता ।
वज्रस्य भर्ता ।
ननु च भर्तृ-शब्दो ह्ययं याजकादिषु पठ्यते ? सम्बन्धि-शब्दस्य पतिपर्यायस्य तत्र ग्रहनं ।
अकः खल्वपि - ओदनस्य भोजकः ।
सक्तूनां पायकः । ।

---

[#१२३]

1. <नित्यं क्रीडा-जीविकयोः># । । पाणिनीयसूत्र २,२.१७ । ।

_______काशिका २,२.१७ः

न इति निवृत्तम्, न तृजकौ ।
नित्यं समासो विधीयते ।
क्रिडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति ।
तृच्क्रिडा-जीविकयोर्न अस्ति इत्यक एव+उदाह्रियते ।
उद्दालकपुष्पभञ्जिका ।
वारनपुष्पप्रचायिका ।
जीविकायां - दन्तलेखकः ।
नखलेखकः ।
क्रिडाजीविक्योः इति किं ? ओदनस्य भोजकः । ।

---

1. <कु-गति-प्र-आदयः># । । पाणिनीयसूत्र २,२.१८ । ।

_______काशिका २,२.१८ः

नित्यं इति वर्तते ।
कु-शब्दोऽव्ययं गृह्यते गत्यादि-साहचर्यात्, न द्रव्यवचनः ।
कु-गति-प्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति ।
कुः पापार्थे - कुपुरुषः ।
गति - उररीकृतं ।
यदूरीकरोति ।
प्रादयः - दुर्निन्दायां - दुष्पुरुषः ।
स्वती पूजायां - सुपुरुषः ।
अतिपुरुषः ।
आङीषादर्थे - आपिङ्गलः ।
प्रायिकं च+एतदुपाधिवचनं ।
अन्यत्र अपि हि समासो दृश्यते ।
कोष्णं ।
कदुष्णं ।
कवोष्णं ।
दुष्कृतं ।
अतिस्तुतं ।
आबद्धं इति ।
प्रदयो गताद्यर्थे प्रथमया ।
प्रगत आचार्यः प्राचार्यः ।
प्रान्तेवासी ।
अत्यादयः क्रान्ताद्यर्थे द्वितीयया ।
अतिक्रान्तः खट्वां अतिखट्वः ।
अतिमालः ।
अवादयः क्रुष्टाद्यर्थे तृतीयया ।
अवक्रुष्टः कोकिलया अवकोकिलः ।
पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ।
परिग्लानोऽध्ययनाय पर्यध्ययनः ।
अलं कुमार्यै अलंकुमारिः ।
निरादयः क्रान्ताद्यर्थे पञ्चम्या ।
निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः ।
निर्वाराणसिः ।
इवेन सह समासो विभक्त्य-लोपः पूर्वपद-प्रकृतिस्वरत्वं च वक्तव्यं ।
वाससी इव ।
वस्त्रे इव ।
प्रादि-प्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः ।
वृक्षं प्रति विद्युथ् ।
साधुर्देवचत्तो मातरं प्रति । ।

---

[#१२४]

1. <उपपदं अतिङ्># । । पाणिनीयसूत्र २,२.१९ । ।

_______काशिका २,२.१९ः

नित्यं इति वर्तते ।
उपपदं अतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति ।
कुम्भकारः ।
नगरकारः ।
अतिङिति किं ? एधानाहारको व्रजति ।
ननु च सुप्सुपा इति वर्तते, तत्र कुतस्तिङन्तेन समास-प्रसङ्गः ? एवं तर्हि ज्ञापयति एतयोर्योगयोः सुप्सुपेति न सम्बध्यते इति ।
तेन गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः इत्येतदुपपन्नं भवति ।
अश्वक्रीती ।
अश्वक्रीती ।
धनक्रीती । ।

---

1. <अमा-एव अव्ययेन># । । पाणिनीयसूत्र २,२.२० । ।

_______काशिका २,२.२०ः

पूर्वेन समासे सिद्धे नियम-अर्थं वचनं ।
अव्ययेन-उपपदस्य यः समासः सोऽमा+एव भवति, न अन्येन ।
स्वादुङ्कारं भुङ्क्ते ।
सम्पन्नङ्कारं भुग्क्ते ।
लवनङ्कारं भुङ्क्ते ।
अमा+एव इति किं ? काल-समय-वेलासु तुमुन्(*३,३.१६७) - काले भोक्तुं ।
एवकारकरणं उपपद-विशेषन-अर्थं ।
अमा+एव यत्तुल्य-विधानं उपपदं तस्य समासो यथा स्यात्, अमा च अन्येन च यत्तुल्य-विहधानं तस्य मा भूथ् ।
अग्रे भुक्त्वा, अग्रे भोजं । ।

---

1. <तृतीया-प्रभृतीन्यतरस्यम्># । । पाणिनीयसूत्र २,२.२१ । ।

_______काशिका २,२.२१ः

अमा+एव इत्यनुवर्तते ।
उपदंशस्तृतीयायां (*३,४.४७) इत्यतः प्रभृति यान्युपपदानि तानि अमा+एव अव्ययेन सह-अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति ।
उभयत्र-विभाशेयं ।
यदमा+एव तुल्यविधानं उपपदं तस्य प्राप्ते, यथा उपदंशस्तृतीयायां (*३,४.४७) इति ।
यत्पुनरमा च अन्येन च तुल्यविधानं तस्य प्राप्ते, यथा अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ (*३,४..५९) इति ।
मूलकोपदंशं भुङ्क्ते, मूलकेन+उपदंशं भुङ्क्ते ।
उच्चैःकारं आचष्टे, उच्चैः कारं ।
अमा+एव इत्येव, पर्यप्तिवचनेष्वलमर्थेषु (*३,४.६६), पर्याप्तो भोक्तुं ।
प्रभुर्भोक्तुं । ।

---

1. <क्त्वा च># । । पाणिनीयसूत्र २,२.२२ । ।

_______काशिका २,२.२२ः

अमा+एव इति पूर्वयोगेऽनुवृत्तं ।
तेन अन्यत्र न प्राप्नोति इति वचनं आरभ्यते ।
क्त्वाप्रत्ययेन सह तृतीया-प्रभृतीनि उपपदान्यन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति ।
उच्चैः कृत्य ।
उच्चैः कृत्वा ।
अव्ययेऽयथाभिप्रेत-आख्याने (*३,४.५९) इति क्त्वाप्रत्ययः ।
समासपक्षे ल्यबेव ।
तृतीया-प्रभृतीनीत्येव, अलं कृत्वा ।
खलु कृत्वा । ।

---

[#१२५]

1. <शेषो बहुव्रीहिः># । । पाणिनीयसूत्र २,२.२३ । ।

_______काशिका २,२.२३ः

उपयुकतादन्यः शेषः ।
षेशः समासो बहुव्रीहि-सञ्ज्ञो भवति ।
कश्च शेषः समासो न+उक्तः ।
वक्ष्यति अनेकं अन्यपदार्थे (*२,२.२४) - चित्रगुः ।

शबलगुः ।
कृष्णोत्तरासङ्गः ।
शेषः इति किं ? उन्मत्तगङ्गं ।
लोहितगङ्गं ।
बहुव्रीहि-प्रदेशाः - न बहुव्रीहौ (*१,१.२९) इत्येवं आदयः । ।

---

1. <अनेकं अन्यपदार्थे># । । पाणिनीयसूत्र २,२.२४ । ।

_______काशिका २,२.२४ः

अनेकं सुबन्तमन्यप्दार्थे वर्तमानं सुपा सह समस्यते, बहुव्रीहिश्च समासो भवति ।
प्रथमार्थं एकं वर्जयित्वा सर्वेषु विभक्त्य्-अर्थेषु बहुव्रीहिर्भवति ।
प्राप्तं उदकं यं ग्रामं प्राप्तोदको ग्रामः ।
ऊढरथोऽनड्वान् ।
उपगृतपशू रुद्रः ।
उद्घृतौदना स्थाली ।
चित्रगुर्देवदत्तः ।
वीरपुरुषको ग्रामः ।
प्रथम-अर्थे तु न भवति ।
वृष्टे देवे गतः ।
अनेक-ग्रहनं किं ? बहूनां अपि यथा स्यात्, सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति । ।
बहुव्रीहिः समानाधिकरणानं इति वक्तव्यं ।
व्यधिकरणानां मा भूत्, पञ्चभिर्भुक्तमस्य ।
अव्ययानां च बहुव्रीहिर्वक्तव्यः ।
उच्चैर्मुखः ।
नीचैर्मुखः ।
सप्तम्य्-उपमान-पूर्वपदस्य+उत्तरपद-लोप श्च वक्तव्यः ।
कण्ठे स्थितः कालोऽस्य कण्ठेकलः ।
उरसिलोमा ।
उष्ट्रस्य मुखं इव मुखं यस्य स उष्ट्रमुखः ।
खरमुखः ।
समुदाय-विकारषष्ठ्याश्च बहुव्रीहिरुत्तरपद-लोपश्च+इति वक्तव्यं ।
केशानां सङ्घातः केशसङ्घातः, केशसङ्घातः चूडाऽस्य केशचूडः ।
सुवर्णस्य विकारोऽलङ्कारोऽस्य सुबर्णालङ्कारः ।

[#१२६]

प्रादिभ्यो धतुजस्य+उत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः ।
प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः ।
प्रतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः ।
नञोऽस्त्यर्थानां बहुव्रीहिर्वाचोत्तरपदलोपश्च वक्तव्यः ।
आविद्यमानः पुत्रो यस्य अपुत्रः, अविद्यमानपुत्रः ।
अभार्यः, अविद्यमानभार्यः ।
सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः ।

अस्तिक्षीरा ब्राह्मणी ।
अस्त्यादयो निपाताः । ।

---

1. <सङ्ख्ययाऽव्यय-आसन्न-अदूर-अधिक-सङ्ख्याः सङ्ख्येये># । । पाणिनीयसूत्र २,२.२५ । ।

_______काशिका २,२.२५ः

सङ्ख्येये या सङ्ख्या वर्तते तया सह अव्यय-आसन्न-अदूर-अधिक-सङ्ख्याः समस्यन्ते बहुव्रीहिश्च समासो भवति ।
अव्यय - उपदशाः ।
उपविंशाः ।
आसन्नदशाः ।
आसन्नविंशाः ।
अदूरदशाः ।
अदूरविंशाः ।
अधिकदशाः ।
अधिकविंशाः ।
सङ्ख्या - द्वित्राः ।
त्रिचतुराः ।
द्विदशाः ।
सङ्ख्यया इति किं ? पञ्च ब्राह्मणाः ।
अव्यय-आसन्न-अदूर-अधिक-सङ्ख्याः इति किं ? ब्राह्मणाः पञ्च ।
सङ्ख्येये इति किं ? अधिका विंशतिर्गवां । ।

---

1. <दिङ्नामान्यन्तराले># । । पाणिनीयसूत्र २,२.२६ । ।

_______काशिका २,२.२६ः

दिशां नामानि दिग्नामानि ।
दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति ।
दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यद्-अन्तरालं दक्षिण-पूर्वा दिक् ।
पूर्वोत्तरा ।
उत्तरपश्चिमा ।
पश्चिमदक्षिणा ।
सर्वनम्नो वृत्तिमात्रे पुंवद्भावः ।
नामग्रहणं रूढ्यर्थं ।
इह म भूत्, ऐन्द्र्याश्च कौबेर्याश्च चिशोर्यद्-अन्तरालं इति । ।

---

1. <तत्र तेन+इदं इति सरूपे># । । पाणिनीयसूत्र २,२.२७ । ।

_______काशिका २,२.२७ः

तत्र इति सप्तम्यन्तं गृह्यते ।
तेन इति तृतीयान्तं ।
सरूप-ग्रहनं प्रत्येकं अभिसम्बध्यते ।
तत्र इति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदं इत्येतस्मिन्नर्थे संस्येते, बहुव्रीहिश्च समासो भवति ।
इतिकरनश्च+इह विवक्षार्थो लौकिकं अर्थं अनुसारयति ।
ततो ग्रहणं, प्रहरनं कर्मव्यतीहारो, युद्धं च समास-अर्थः इति सर्वं इतिकरनाल्लभ्यते ।

[#१२७]

यत्तत्र इति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेन इति निर्दिष्टं प्रहरनं चेत्तद्भवति, यतिदं इति निर्दिष्टं युद्धं चेत्तद्भवति ।
केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि ।
कचाकचि ।
दण्डैश्च दण्डैश्च प्रगृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि ।
मुसलामुसलि ।
इच्कर्मव्यतीहारे (*५,४.१२७) इति इच्समासान्तः, स च अव्ययं ।
अन्येषां अपि दृश्यते (*६,३.१३७) इति पूर्वपदस्य दीर्घत्वं ।
सरूप-ग्रहणं किं ? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं । ।

---

1. <तेन सह+इति तुल्ययोगे># । । पाणिनीयसूत्र २,२.२८ । ।

_______काशिका २,२.२८ः

सह इत्येतच्छाब्दरूपं तुल्ययोगे वर्तमानं तेन इति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति ।
सह पुत्रेणागतः सपुत्रः ।
सच्छात्रः ।
सकर्मकरः ।
तुल्ययोगे इति किं ? सहैव दशभिः पुत्रैर्भारं बहति गर्दभी ।
विद्यमातैरेव दशभिः पुत्रैर्भारं वहति इत्यर्थः ।
कथं सकर्मकः, सलोमकः, सपक्षकः इति ? न ह्यत्र तुल्ययोगो गम्यते ।
किं तर्हि ? विद्यमानता ।
प्रायिकं तुल्ययोगे इति विशेषनं ।
अन्यत्र अपि समासो दृश्यते । ।

---

1. <च-अर्थे द्वन्द्वः># । । पाणिनीयसूत्र २,२.२९ । ।

_______काशिका २,२.२९ः

अनेकं इति वर्तते ।
अनेकं सुबन्तं च-अर्थे वर्तमानं समस्यते, द्वन्द्व-सञ्ज्ञश्च समासो भवति ।
समुच्चयान्वाचयेतरेतरयोगसमाहाराश्च अर्थाः ।
तत्र समुच्चयान्वाचययोरसामर्थ्यात्न अस्ति समासः ।
इतरेतरयोगे समाहारे च समासो विधीयते ।
प्लक्षश्च न्यग्रोधश्च प्लक्ष-न्यग्रोधौ ।
धवश्च खदिरश्च पलाशश्च धव-खदिर-पलाशाः ।
वाक्च त्वक्च वाक्-त्वचं ।
वाग्-दृषदं ।
द्वन्द्व-प्रदेशाः - द्वन्द्वे च (*१,१.३१) इत्येवं आदयः । ।

---

1. <उपसर्जनं पूर्वम्># । । पाणिनीयसूत्र २,२.३० । ।

_______काशिका २,२.३०ः

समासे इति वर्तते ।
उपसर्जन-सञ्ज्ञकं समासे पूर्वं प्रयोक्तव्यं ।
पूर्ववचनं परप्रयोगनिवृत्त्य्-अर्थं ।
अनियमो हि स्याथ् ।
द्वितीया - कष्टश्रितः ।
तृतीया - शङ्कुलाखण्डः ।
चतुर्थी - यूपदारु ।
पञ्चमी - वृकभयं ।
षष्ठी - राजपुरुषः ।
सप्तमी - अक्षशौण्डः । ।

---

[#१२८]

1. <राजदन्त-आदिषु परम्># । । पाणिनीयसूत्र २,२.३१ । ।

पूर्व-निपाते प्राप्ते परप्रयोग-अर्थं वचनं ।
राजदन्त-आदिषु उपसर्जनं परं प्रयोक्तव्यं ।
न केवलं उपसर्जनस्य, अन्यस्य अपि यथा लक्षणं विहितस्य पूर्वनिपातस्य अयं अपवादः परनिपातो विधीयते ।
दन्तानां राजा राजदन्तः ।
वनस्य अग्रे अग्रेवणं ।
निपातनादलुक् ।
राजदन्तः ।
अग्रेवनं ।
लिप्तवासितं ।
नग्नमुषितं ।
सिक्तसंमृष्टं ।
मृष्टलुञ्चितं ।
अवक्लिन्नपक्वं ।
अर्पितोप्तं ।
उप्तगाढं ।
पूर्वकालक्षय्परनिपातः ।
उलूखलमुसलं ।
तण्डुलकिण्वं ।
दृषदुपलं ।
आरग्वायनबन्धकी ।
चित्ररथबह्लीकं ।
आवन्त्यश्मकं ।
शूद्रार्यं ।
स्नातकराजानौ ।
विष्वक्षेनार्जुनौ ।
अक्षिभ्रुवं ।
दारगवं ।
शब्द-अर्थौ ।
धर्म-अर्थौ ।
काम-अर्थौ ।
अनियमश्च अत्र+इष्यते ।
अर्थ-शब्दौ ।
अर्थ-धर्मौ ।
अर्थ-कामौ ।
तत्कथं ? वक्तव्यं इदं ।
धर्म-आदिषु उभयं इति ।
वैकारमतं ।
गजवाजं ।
गोपालधानीपूलासं ।
पूलासककरण्डं ।
स्थूलपूलासं ।
उशीरबीजं ।
सिञ्जास्थं ।
चित्रास्वाती ।
भार्यापती ।
जायापती ।

जम्पती ।
दम्पती ।
जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते ।
पुत्रपती ।
पुत्रपशू ।
केशश्मश्रू ।
श्मश्रुकेशौ ।
शिरोबीजं ।
सर्पिर्मधुनी ।
मधुसर्पिषी ।
आद्यन्तौ ।
अन्तादी ।
गुणवृद्धी ।
वृद्धिगुणौ । ।

---

1. <द्वन्द्वे घि># । । पाणिनीयसूत्र २,२.३२ । ।

_______काशिका २,२.३२ः

पूर्वं इति वर्तते ।
द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यं ।
पटुगुप्तौ ।
मृदुगुप्तौ ।
अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः ।
पटुमृदुशुक्लाः ।
पटुशुक्लमृदवः ।
द्वन्द्वे इति किं ? विस्पष्टपटुः । ।

---

1. <अज्-आद्य्-अद्-अन्तम्># । । पाणिनीयसूत्र २,२.३३ । ।

_______काशिका २,२.३३ः

द्वन्द्वे इति वर्तते ।
अज्-आद्य्-अद्-अन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यं ।
उष्ट्रखरं ।
उष्त्रशशकं ।
बहुष्वनियमः ।
अश्वरथेन्द्राः ।

इन्द्ररथाश्वाः ।
द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन ।
इन्द्राग्नी ।
इन्द्रवायू ।
तपरकरणं किं ? अश्वावृषौ, वृषाश्वे इति वा ।।

---

[#१२९]

1. <अल्प-अच्-तरम्># ।। पाणिनीयसूत्र २,२.३४ ।।

_______काशिका २,२.३४ः

द्वन्द्वे इति वर्तते ।
अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यं ।
प्लक्षश्च न्यग्रोध्श्च प्लक्ष-न्यग्रोधौ ।
धवखदिरपलाशाः ।
बहुष्वनियमः - शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः ।
ऋतुनक्षत्राणामानुपूर्व्येण समानक्षरानां पूर्वनिपातो वक्तव्यः ।
हेमन्तशिशिरवसन्ताः ।
चित्रास्वाती ।
कृत्तिकारोहिण्यौ ।
समानाक्षराणां इति किं ? ग्रीष्मवसन्तौ ।
लघ्व्-अक्षरं पूर्वं निपतति इति वक्तव्यं ।
कुशकाशं ।
शरशादं ।
अभ्यर्हितं च पूर्वं निपतति इति वक्तव्यं ।
मातापितरौ ।
श्रद्धमेधे ।
दीक्षातपसी ।
वर्णानामानुपूर्व्येण पूर्वनिपातः ।
ब्राह्मणक्षत्रियविट्शूद्राः ।
समानाक्षराणां इत्यत्र न अस्ति ।
भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः ।
युधिष्ठिरार्जुनौ ।
सङ्ख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः ।
द्वित्राः ।
त्रिचतुराः ।
नवतिशतं ।।

---

1. <सप्तमी-विशेषने बहुव्रीहौ># । । पाणिनीयसूत्र २,२.३५ । ।

_______काशिका २,२.३५ः

सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियम-अर्थं वचनं ।
सप्तम्यन्तं विशेषणं च बहुव्रीहि-समासे पूर्वं प्रयोक्तव्यं ।
क्ण्ठेकालः ।
उरसिलोमा ।
विशेषनं - चित्रगुः ।
शबलगुः ।
सर्वनाम-सङ्ख्ययोरुपसङ्ख्यानं ।
सर्वश्वेतः ।
सर्वकृष्णः ।
द्विशुक्लः ।
द्विकृष्णः ।
अनयोरेव मिथः संप्रधारणायां प्रत्वात्सङ्ख्यायाः पूर्वनिपातः ।
द्व्यन्यः ।
त्र्यन्यः ।

[#१३०]

वा प्रियस्य पूवनिपातः ।
गुडप्रियः, प्रियगुडः ।
सप्तम्याः पूर्वनिपाते प्रप्ते गड्वादिभ्यः सप्तम्यन्तं परं ।
गडुकण्ठः ।
गडुशिराः ।
कथं वहेगडुः ? प्राप्तस्य चाबाधा व्याख्येया । ।

---

1. <निष्ठा># । । पाणिनीयसूत्र २,२.३६ । ।

_______काशिका २,२.३६ः

निष्ठन्तं च भुव्रीहि-समासे पूर्वं प्रयोक्तव्यं ।
कृतकटः ।
भिक्षितभिक्षिः ।
अवमुक्तोपानत्कः ।
आहूतसुब्रह्मण्यः ।
ननु च विशेषणं एव अत्र निष्ठा ? न+एष नियमः, विशेषण-विशेष्य-भवस्य विवक्षा निबन्धनत्वाथ् ।
कथे कृतं अनेन इति वा विग्रहीतव्यं ।
निष्थायाः पूर्वनिपाते जातिकालसुखादिभ्यः प्रवचनं ।
शार्ङ्गजग्धी ।
पलाण्डुभक्षिती ।

मासजातः ।
सम्बत्सरजातः ।
सुखजातः ।
दुःखजातः ।
कथं कृतकटः, भुक्तौदनः ? प्राप्तस्य चाबाधा व्याख्येया ।
प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यं ।
अस्युद्यतः ।
दण्डपाणिः ।
कथं उद्यतगदः, उद्यतासिः ? प्राप्तस्य चाबाधा व्याख्येया । ।

---

1. <वा+आहित-अग्न्य्-आदिषु># । । पाणिनीयसूत्र २,२.३७ । ।

_______काशिका २,२.३७ः

निष्ठा इति पूर्वनिपाते प्राप्ते विकल्प उच्यते ।
आहिताग्न्य्-आदिषु निष्ठान्तं पूर्वं वा प्रयोक्तव्यं ।
अग्न्याहितः ।
आहिताग्निः ।
जातपूत्रः, पुत्रजतः ।
जातदन्तः ।
जातशमश्रुः ।
तैलपीतः ।
घृतपीतः ।
ऊढभार्यः ।
गतार्थः ।
आकृतिगनश्च अयम्, तेन गडुकण्ठप्रभृतय इह+एव द्रष्टव्याः । ।

---

1. <कडाराः कर्मधारये># । । पाणिनीयसूत्र २,२.३८ । ।

_______काशिका २,२.३८ः

गुन-शब्दानां विशेषनत्वात्पूर्वनिपाते प्राप्ते विकल्प उच्यते ।
कडारादयः कर्मधारये समासे वा पूर्वं ।
प्रयोक्तव्याः ।
कडारजैमिनिः, जैमिनिकडारः ।

[#१३१]

कडार ।
गुडुल ।
काण ।
खञ्ज ।
कुण्ठ ।
खञ्जर ।
खलति ।
गौर ।
वृद्ध ।
भिक्षुक ।
पिङ्गल ।
तनु ।
वटर ।
कर्मधरये इति किं ? कडारपुरुषो ग्रामः । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य द्वितीय पादः । ।

द्वितीयाध्यायस्य तृतीयः पादः

---

[#१३२]

1. <अनभिहिते># । । पाणिनीयसूत्र २,३.१ । ।

_______काशिका २,३.१ः

अनभिहिते इत्यधिकारोऽयं वेदितव्यः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः, अनभिहिते इत्येवं तद्वेदितव्यं ।
अनभिहिते अनुक्ते, अनिर्दिष्टे कर्मादौ विभक्तिर्भवति ।
केन अनभिहिते ? तिङ्-कृत्-तद्धित-समासैः परिसङ्ख्यानं ।
वक्ष्यति, कर्मणि द्वितीया (*२,३.२) - कटं कर्तोति ।
ग्रामं गच्छति ।
अनभिहिते इति किं ? तिङ्- क्रियते कटः ।
कृत्- कृतः कटः ।
तद्धितः - शत्यः ।
शतिकः ।
समासः - प्राप्तं उदकं यं ग्रामं प्राप्तोदको ग्रामः ।
परिसङ्ख्यानं किं ? कटं करोति भीष्ममुदारं दर्शनीयं ।
वहुषु बहुवचनं इत्येवं आदिना सङ्ख्या वच्यत्वेन विभक्तीनां उपदिष्टाः, तत्र विशेषण-अर्थं इदं आरभ्यते - अनभिहितकर्मादयाश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्याः इति । ।

---

1. <कर्मणि द्वितीया># । । पाणिनीयसूत्र २,३.२ । ।

_______काशिका २,३.२ः

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु समर्यन्ते, तैरेव अत्र व्यवहारः ।
कर्मणि कारके या सङ्ख्या तत्र द्वितीया विभक्तिर्भवति ।
कटं करोति ।
ग्रामं गच्छति ।
उभसर्वतसोः कार्या धिगुपर्यादिषु क्रिषु ।
द्वितीया+आम्रेडितान्तेषु ततोऽन्यत्र अपि दृश्यते । ।
उभयतो ग्रामं ।
सर्वतो ग्रामं ।
धिग्देवदत्तं ।
उपर्युपरि ग्रामं ।
अध्यधि ग्रामं ।
अधोऽधो ग्रामं ।
अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते ।
अभितो ग्रामं ।
परितो ग्रामं ।
समया ग्रामं ।
निकाषा ग्रामं ।
हा देवदत्तं ।
बुभुक्षितं न प्रति भाति किञ्चित् । ।

---

1. <तृतीया च होश्छन्दसि># । । पाणिनीयसूत्र २,३.३ । ।

_______काशिका २,३.३ः

कर्मणि इति वर्तते ।
द्वितीयायां प्राप्तायां तृतीया विधीयते ।
च-शब्दात्सा च भवति ।
छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च ।
यवाग्वाऽग्निहोत्रं जुहोति ।
यवागूं अग्निहोत्रं जुहोति ।
छन्दसि इति किं ? यवागूं अग्निहोत्रं जुहोति । ।

---

[#१३३]

1. <अन्तराऽन्तरेण युक्ते># । । पाणिनीयसूत्र २,३.४ । ।

_______काशिका २,३.४ः

द्वितीया स्वर्यते, न तृतीया ।
अन्तरान्तरेण शब्दौ निपातौ साहचर्याद्गृह्येते ।
आभ्यां योगे द्वितीया विभक्तिर्भवति ।
षष्ठ्य्-अपवादोऽयं योगः ।
तत्र अन्तराशब्दो मध्यमाधेय-प्रधानं आचष्टे ।
अन्तरेण शब्दस्तु तच्च विनार्थं च ।
अन्तरा त्वां च मां च कमण्डलुः ।
अन्तरेण त्वां च मां च कमण्डलुः ।
अन्तरेण पुरुषकारं न किंचिल्लभ्यते ।
युक्त-ग्रहणं किं ? अन्तरा तक्षशिलां च पाटलिपुत्रं स्रुघ्नस्य प्राकारः । ।

---

1. <काल-अध्वनोरत्यन्त-संयोगे># । । पाणिनीयसूत्र २,३.५ । ।

_______काशिका २,३.५ः

काल-शब्देभ्योऽध्व-शब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने ।
क्रिया-गुण-द्रव्यैः साकल्येन कालाध्वनोः सम्बन्धः अत्यन्तसंयोगः ।
मासं अधीते ।
संवत्सरं अधीते ।
मासं कल्याणी ।
संवत्सरं कल्याणी ।
मासं गुडधीनाः ।
संवत्सरं गुडधानाः ।
अध्वनः खल्वपि - क्रोशं अधीते ।
योजनं अधीते ।
क्रोशं कुटिला नदी ।
योजनं कुटिला नदी ।
क्रोशं पर्वतः ।
योजनं पर्वतः ।
अत्यन्तसंयोगे इति किं ? मासस्य द्विरधीते ।
क्रोशस्य+एकदेशे पर्वतः । ।

---

1. <अपवर्गे तृतीया># । । पाणिनीयसूत्र २,३.६ । ।

_______काशिका २,३.६ः

काल-अध्वनोरत्यन्तसंयोगे इति वर्तते ।
अपवर्गः फल-प्राप्तौ सत्यां क्रियापरिसमाप्तिः ।
अपवर्गे गम्यमाने काल-अध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति ।
मसेन अनुवाकोऽधीतः ।
संवत्सरेण अनुवाकोऽधीतः ।
अध्वनः - क्रोशेन अनुवाकोऽधीतः ।
योजनेन अनुवाकोऽधीतः ।
अपवर्गे इति किं ? क्रोशं अधीतोऽनुवाकः ।
मासं अधीतः ।
कर्तव्याद्दत्तौ फल-सिद्धेरभावात्तृतीया न भवति ।
मासं अधीतोऽनुवाकः, न च अनेन गृहीतः । ।

---

1. <सप्तमी-पञ्चम्यौ कारक-मध्ये># । । पाणिनीयसूत्र २,३.७ । ।

_______काशिका २,३.७ः

काल-अध्वनोः इति वर्तते ।
कारकयोर्मध्ये यौ काल-अध्वानौ ताभ्यां सप्तमी-पञ्चम्यौ विभक्ती भवतः ।
अद्य भुक्तवा देवदत्तो द्व्यहे भोक्ता द्व्यहाद्वा भोक्ता ।
त्र्यहे त्र्यहाद्वा भोक्ता ।
कर्तृ-शक्त्योर्मध्ये कलः ।
इह स्थोऽयं इष्वासः क्रोशे लक्ष्यं विध्यति ।
क्रोशाल्लक्ष्यं विधियति ।
कर्तृ-कर्मणोः कारकयोः कर्म-अपादानयोः कर्म-अधिकरणयोर्वा मध्ये क्रोशः ।
सङ्ख्यात-अनुदेशो न भवति, अस्वरितत्वात् । ।

---

1. <कर्मप्रवचनीय-युक्ते द्वितीया># । । पाणिनीयसूत्र २,३.८ । ।

_______काशिका २,३.८ः

कर्मप्रवचनीयैर्युक्ते द्वितीया विभ्क्तिर्भवति ।
अनुर्लक्षणे (*१,४.८४) - शाकल्यसय संहितां अनुप्रावर्षथ् ।
आगस्त्यं अन्वसिञ्चत्प्रजाः । ।

---

[#१३४]

1. <यस्मादधिकं यस्य च+ईश्वर-वचनं तत्र सप्तमी># । । पाणिनीयसूत्र २,३.९ । ।

_______काशिका २,३.९ः

कर्मप्रवचनीय-युक्त इति वर्तते ।
यसमा दधिकं यस्य च+ईश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति ।
उप खार्यं द्रोणः ।
उप निष्के कार्षापणं ।
यस्य च+ईश्वरवचनं इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति ।
अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः इति ।
द्वितीय-अपवादो योगः । ।

---

1. <पञ्चम्य्-अप-आङ्-परिभिः># । । पाणिनीयसूत्र २,३.१० । ।

_______काशिका २,३.१०ः

अप आङ्परि इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति ।
अप त्रिगर्तेभ्यो वृष्टो देवः ।
आ पाटलिपुत्राद्वृष्टो देवः ।
परि त्रिगर्तेभ्यो वृष्तो देवः ।
अपेन साहचर्यात्परेर्वर्जन-अर्थस्य ग्रहणम्, तेन+इह न भवति, वृक्षं परि विद्योतते विद्युत् । ।

---

1. <प्रतिनिधि-प्रतिदाने च यस्मात्># । । पाणिनीयसूत्र २,३.११ । ।

_______काशिका २,३.११ः

मुख्य-सदृशः प्रतिनिधिः ।
दत्तस्य प्रतिनिर्यातनं प्रतिदानं ।
यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीय-युक्ते पञ्चमी विभक्तिर्भवति ।
अभिमन्युरर्जुनतः प्रति ।
प्रद्युम्नो वासुदेवतः प्रति ।

माषानस्मै तिलेभ्यः प्रति यच्छति ।
ननु च प्रतिनिधि-प्रतिदाने कर्मप्रवचनीय-युक्ते, न तु यतः प्रतिनिधि-प्रतिदाने ? न+एष दोषः, सम्बन्ध-सम्बन्धात्तस्य अपि योगोऽस्त्येव ।।

---

1. <गत्यर्थ-कर्मणि द्वितीया-चतुर्थ्यौ चेष्टायां अनध्वनि># ।। पाणिनीयसूत्र २,३.१२ ।।

_______काशिका २,३.१२ः

गत्यर्थानां धातूनां चेष्ताक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीया-चतुर्थ्यौ भवतः ।
ग्रामं गच्छति, ग्रामाय गच्छति ।
ग्रामं व्रजति, ग्रामाय व्रजति ।
गत्यर्थ-ग्रहणं किं ? ओदनं पचति ।
कर्मणि इति किं ? अश्वेन व्रजति ।
देष्टायं इति किं ? मनसा पाटलिपुत्रं गच्छति ।
अनध्वनि इति किं ? अध्वानं गच्छति ।
अध्वनीत्यर्थ-ग्रहनं ।
पन्थानं गच्छति ।
मार्गं गच्छति ।
आस्थित-प्रतिषेधश्चायं विज्ञेयः ।
आस्थितः सम्प्राप्तः, आक्रान्त उच्यते ।
यत्र तु उत्पथेन पन्थानं गच्छति, तत्र भवितव्यं एव चतुर्थ्या, पथे गच्छति इति ।
द्वितीया-ग्रहनं किं ? न चत्र्थ्येव विक्ल्प्येत, अपवाद-विषयेऽपि यथा स्याथ् ।
ग्रामं गन्ता ग्रामाय गन्ता ।
कृद्-योग-लक्षणा षष्ठी न भवति ।।

---

[#१३५]

1. <चतुर्थी सम्प्रदाने># ।। पाणिनीयसूत्र २,३.१३ ।।

_______काशिका २,३.१३ः

सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति ।
उपध्यायाय गां ददाति ।
मानवकाय भिक्षां ददाति ।
देवदत्ताय रोचते ।
पुष्पेभ्यः स्पृहयति इत्यादि ।
चतुर्थीविधाने तादर्थ्ये उपसङ्ख्यानं ।
यूपाय दारु ।
कुण्डलाय हिरण्यं ।

रन्धनाय स्थाय स्थाली ।
अवहननायोलूखलं ।
कृपि सम्पद्यमाने चतुर्थी वक्तव्या ।
मूत्राय कल्पते यवागूः ।
उच्चाराय कल्पते यवागूः ।
कृपि इत्यर्थ-निर्देशः ।
मूत्राय सम्पद्यते यवागूः ।
मूत्राय जायते यवगूः ।
उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ।
वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् । ।
हितयोगे चतुर्थी वक्तव्या ।
गोभ्यो हितं ।
अरोचकिने हितं । ।

---

1. <क्रिय-अर्थ-उपपदस्य च कर्मणि स्थानिनः># । । पाणिनीयसूत्र २,३.१४ । ।

_______काशिका २,३.१४:

क्रियार्था क्रिया उपपदं यस्य सोऽयं क्रियार्थोपपाः ।
तुमुन्-ण्वुलौ क्रियायां क्रियार्थायां (*३,३.१०) इत्येष विषयो लक्ष्यते ।
क्रियार्थोपपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति ।
द्वितीय-अपवादो योगः ।
एधेभ्यो व्रजति ।
पुष्पेभ्यो व्रजति क्रियार्थोपपदस्य इति किं ? प्रविश पिण्डीं ।
प्रविश तर्पनं ।
भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः ।
कर्मणि इति किं ? एधेभ्यो व्रजति शकटेन ।
स्थानिनः इति किं ? एधानाहर्तुं व्रजति । ।

---

1. <तुमर्थाच्च भाव-वचनात्># । । पाणिनीयसूत्र २,३.१५ । ।

_______काशिका २,३.१५:

तुमुना समानार्थस्तुमर्थः ।
तुमर्थ-भाववचन-प्रत्ययान्तात्प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति ।
भाववचनाश्च (*३,३.११) इति वक्ष्यति, तस्य+इदं ग्रहनं ।
पाकाय व्रजति ।
त्यागाय व्रजति ।

भूतये व्रजति ।
संपत्तये व्रजति ।
तुमर्थातिति किं ? पाकः ।
त्यागः ।
रागः ।
भावचनातिति किं ? कारको व्रजति । ।

---

[#१३६]

1. <नमः-स्वस्ति-स्वाहा-स्वधाऽलं-वषड्-योगाच्च># । । पाणिनीयसूत्र २,३.१६ । ।

_______काशिका २,३.१६ः

नमः स्वस्ति स्वाहा स्वधा अलं वषटित्येतैर्योगे चतुर्थी विभक्तिर्भवति ।
नमो देवेभ्यः ।
स्वस्ति प्रजाभ्यः ।
स्वाहा अग्नये ।
स्वधा पितृभ्यः ।
अलं मल्लो मल्लाय ।
अलं इति पर्याप्त्यर्थ-ग्रहणं ।
प्रभुर्मल्लो मल्लाय ।
शक्तो मल्लो मल्लाय् ।
वशडग्नये ।
वषडिन्द्राय ।
चकारः पुनरस्य+एव समुचय-अर्थः ।
तेन आशीर्विवक्षायां अपि षष्ठीं वाधित्वा चतुर्थ्येव भवति ।
स्वस्ति गोभ्यो भूयाथ् ।
स्वस्ति ब्राह्मणेभ्यः । ।

---

1. <मन्य-कर्मण्य्-अनादरे विभाषाऽप्राणिषु># । । पाणिनीयसूत्र २,३.१७ । ।

_______काशिका २,३.१७ः

मन्यतेः कर्मणि मन्यकर्मणि ।
मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने ।
अनादरस्तिरस्कारः ।
न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये ।
न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये ।

मन्यति-ग्रहणं किं ? न त्वा तृणं चिन्तयामि ।
विकरण-निर्देशः किं अर्थः ? न त्वा तृणं मन्वे ।
अनादरे इति किं ? अश्मानं दृषदं मन्ये मन्ये कष्ठमुलूखलं ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति । ।
अप्रानिषु इति किं ? न त्वा शृगालं मन्ये ।
यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यं ।
व्यवस्थित-विभाषा च ज्ञेया ।
न त्वा नावं मन्ये यावदुत्तीर्णं न नाव्यं ।
न त्वाऽन्नं मन्ये यावन्न भुक्तं श्राद्धं ।
प्राणिषु तूभयं ।
न त्वा काकं मन्ये ।
न त्वा शृगालं मन्ये ।
इह चतुर्थी द्वितीया च भवतः - न त्वा श्वानं मन्ये, न त्वा शुने मन्ये ।
युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म ? व्यवस्थित-विभाषा-विज्ञानादेव न भवति । ।

---

[#१३७]

1. <कर्तृ-करणयोस्तृतीया># । । पाणिनीयसूत्र २,३.१८ । ।

_______काशिका २,३.१८ः
कर्तरि करणे च कारके तृतीया विभक्तिर्भवति ।
देवदत्तेन कृतं ।
यज्ञदत्तेन भुक्तं ।
करणे - दात्रेण लुनाति ।
परशुना छिनत्ति ।
तृतीया-विधाने प्रकृत्यादीनां उपसङ्ख्यानं ।
प्रकृत्याऽभिरूपः ।
प्रकृत्या दर्शनीयः ।
प्रायेण याज्ञिकः ।
प्रायेण वैयाकरणः ।
गार्ग्योऽस्मि गोत्रेण ।
समेन धावति ।
विषमेण धावति ।
द्विद्रोणेन धान्यं क्रीणाति ।
पञ्चकेन पशून्क्रीणाति ।
साहस्रेण अश्वान्क्रीणाति । ।

---

1. <सहयुक्तेऽप्रधाने># । । पाणिनीयसूत्र २,३.१९ । ।

_______काशिका २,३.१९ः

सह-अर्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति।
पुत्रेण सहागतः पिता।
पुत्रेण सह गोमान्।
पितुरत्र क्रियादि-सम्बन्धः शब्देन+उच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यं।
सहार्थेन च योगे तृतीया-विधानात्पर्याय-प्रयोगेऽपि भवति, पुत्रेण सार्धं इति।
विनाऽपि सह-शब्देन भवति, वृद्धो यूना (*१,२.६५) इति निदर्शनाथ्।
अप्रधाने इति किं ? शिष्येण सहोपाद्यायस्य गौः।।

---

1. <येन अङ्ग-विकारः>#।। पाणिनीयसूत्र २,३.२०।।

_______काशिका २,३.२०ः

अङ्ग-शब्दोऽत्र अङ्ग-समुदाये शरीरे वर्तते, येन इति च तदवयवो हेतुत्वेन निर्दिश्यते।
येन अङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते, ततस्तृतीया विभक्तिर्भवति।
अक्ष्णा काणः।
पादेन खञ्जः।
पाणिना कुन्ठः।
अवयवधर्मेण समुदयो व्यपदिश्यते।
अङ्गविकारः इति किं ? अक्षि काणमस्य।।

---

1. <इत्थम्-भूत-लक्षणे>#।। पाणिनीयसूत्र २,३.२१।।

_______काशिका २,३.२१ः

कञ्चित्प्रकारं प्राप्तः इत्थम्भूतः।
तस्य लक्षणं इत्थम्भूतलक्षणं।
ततस्तृतीया विभक्तिर्भवति।
अपि भवान्कमण्डलुना छात्रमद्राक्षीत्? छात्रेणोपाध्यायं।
शिखया परिव्राजकं।
इह न भवति, कमण्ड्लुपानिश्छात्रः इति, लक्षणस्य समासेऽन्तर्भूतत्वाथ्।
इत्थम्भूतः इति किं ? वृक्षं प्रति विद्योतनं।।

---

[#१३८]

1. <सञ्ज्ञोऽन्यतरस्यां कर्मणि># । । पाणिनीयसूत्र २,३.२२ । ।

_______काशिका २,३.२२ः

सम्पूर्वस्य जानातेः कर्मणि करके द्वितीयायां प्राप्तायां अन्यतरस्यां तृतीयाविभक्तिर्भवति ।
पित्रा सञ्जानीते, पितरं सञ्जानीते ।
मात्रा सञ्जानीते, मातरं सञ्जानीते । ।

---

1. <हेतौ># । । पाणिनीयसूत्र २,३.२३ । ।

_______काशिका २,३.२३ः

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते ।
तद्वाचिनस्तृतीया विभक्तिर्भवति ।
धनेन कुलं ।
कन्यया शोकः ।
विद्यया यशः । ।

---

1. <अकर्तर्य्-ऋणे पञ्चमी># । । पाणिनीयसूत्र २,३.२४ । ।

_______काशिका २,३.२४ः

हेतौ इति वर्तते ।
कर्तृ-वर्जितं यदृणं हेतुः, ततः पञ्चमी विभक्तिर्भवति तृतीया+अपवादो योगः ।
शताद्बद्धः ।
सहस्राद्बद्धः ।
अकर्तरि इति किं ? शतेन बन्धितः ।
शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसञ्ज्ञकं । ।

---

1. <विभाषा गुणेऽस्त्रीयाम्># । । पाणिनीयसूत्र २,३.२५ । ।

_______काशिका २,३.२५ः

हेतौ इति वर्तते ।
गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति ।
जाड्याद्बद्धः, जाड्येन बद्धः ।
पाण्डित्यान्मुक्तः, पाण्डित्येन मुक्तः ।
गुण-ग्रहनं किं ? धनेन कुलं ।
अस्त्रियां इति किं ? बुद्ध्या मुक्तः ।
प्रज्ञया मुक्तः । ।

---

1. <षष्ठी हेतु-प्रयोगे># । । पाणिनीयसूत्र २,३.२६ । ।

_______काशिका २,३.२६ः
हेतोः प्रयोगः हेतुप्रयोगः ।
हेतु-शब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति ।
अन्नस्य हेतोर्वसति । ।

---

1. <सर्वनाम्नस्तृतीया च># । । पाणिनीयसूत्र २,३.२७ । ।

_______काशिका २,३.२७ः

सर्वनाम्नो हेतु-शब्द-प्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति, षष्ठी च ।
पूर्वेण षष्ठ्यां एव प्राप्तायां इदं उच्यते ।
केन हेतुना वसति, कस्य हेतोर्वसति ।
येन हेतुना वसति, यस्य हेतोर्वसति ।
निमित्तकारण-हेतुषु सर्वासां प्रायदर्शनं ।

[#१३९]

किंनिमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्ताय वसति, कस्मान्निमित्ताद्वसति, कस्य निमित्तस्य वसति, कस्मिन्निमित्ते वसति ।
एवं कारणहेत्वोरप्युदहार्यं ।
अर्थ-ग्रहनं च+एतथ् ।
पर्यायोपादानं तु स्वरूप-विधिर्मा विज्ञायि इति ।
तेन+इह अपि भवति - किं प्पयोजनं वसति, केन प्रयोजनेन वसति, कस्मै प्रयोजनाय वसति, कस्मात्प्रयोजनाद्वसति, कस्य प्रयोजनस्य

वसति, कस्मिन्प्रयोजने वसति । ।

---

1. <अपादाने पञ्चमी># । । पाणिनीयसूत्र २,३.२८ । ।

_______काशिका २,३.२८ः

अपादाने कारके पञ्चमी विभक्तिर्भवति ।
ग्रामादागच्छति ।
पर्वतादवरोहति ।
वृकेभ्यो बिभेति ।
अध्ययनात्पराजयते ।
पञ्चमी-विधाने ल्यब्-लोपे कर्मण्युपसङ्ख्यानं ।
प्रासादं आरुह्य प्रेक्षते, प्रासादात्प्रेक्षते ।
अधिकरणे च+उपसङ्ख्यानं ।
आसने उपविष्य प्रेक्षते, आसनात्प्रेक्षते ।
शयनात्प्रेक्षते ।
प्रष्नाख्यानयोष्च पञ्चमी वक्तव्या ।
कुतो भवान्? पाटलिपुत्राथ् ।
यतष्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या ।
गवीधुमतः साङ्काश्यं चत्वारि योजनाअनि ।
कार्तिक्या आग्रहायणी मासे ।
तद्युक्तात्काले सप्तमी वक्तव्या ।
कार्तिक्या आग्रहायणी मासे ।
अध्वनः प्रथमा सप्तमी च वक्तव्या ।
गवीधुमतः साङ्काश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा । ।

---

1. <अन्य-आराद्-इतर-र्ते-दिक्-शब्द-अञ्चु-उत्तरपद-अज्-आहि-युक्ते># । । पाणिनीयसूत्र २,३.२९ । ।

_______काशिका २,३.२९ः

अन्य आरातितर ऋते दिक्-शब्द अञ्चु-उत्तरपद आचाहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति ।
अन्य इत्यर्थ-ग्रहनं ।
तेन पर्याय-प्रयोगेऽपि भवति ।
अन्योदेवदत्ताथ् ।
भिन्नो देवदत्ताथ् ।
अर्थ-अन्तरं देवदत्ताथ् ।

[#१४०]

विलक्षणे देवदत्ताथ् ।
आराच्-छब्दो दूरान्तिक-अर्थे वर्तते ।
तत्र दूरान्तिकार्थैः षष्थ्य्-अन्यतरस्यां (*२,३.३४) ।
इति प्राप्ते पञ्चमी विधीयते ।
आराद्देवदत्ताथ् ।
आराद्यज्ञदत्ताथ् ।
इतर इति निर्दिश्यमान-प्रतियोगी पदार्थ उच्यते ।
इतरो देवदत्ताथ् ।
ऋते इति अव्ययं वर्जन-अर्थे ।
ऋते देवदत्ताथ् ।
ऋते यज्ञदत्ताथ् ।
दिक्-शब्दः -- पूर्वो ग्रामात्पर्वतः ।
उत्तरो ग्रामाथ् ।
पूर्वो ग्रीष्मात्वसन्तः ।
उत्तरो ग्रीष्मो वसन्ताथ् ।
द्विक्-शब्द इत्यत्र शब्द-ग्रहनं देशकालवृत्तिनाऽपि दिक्-शब्देन योगे यथा स्यात्, इतरथा हि दिग्-वृत्तिनैव स्यात्, इत्यमस्याः पूर्वा इति ।
इह तु न स्यात्, अयं अस्मात्पूर्वः कालः इति ।
अञ्चु-उत्तरपद -- प्राग्ग्रामाथ् ।
प्रत्यग्ग्रामाथ् ।
ननु चायं अपि दिक्-शब्द एव ।
षष्ठ्य्-अतसर्थ-प्रययेन (*२,३.३०) इति वक्ष्यति, तस्य अयं पुरस्तादपकर्षः ।
आच्-- दक्षिणा ग्रामाथ् ।
उत्तरा ग्रामाथ् ।
आहि - दक्षिणाहि ग्रामाथ् ।
उत्तराहि ग्रामात् । ।

---

1. <षष्ठ्य्-अतसर्थ-प्रत्ययेन># । । पाणिनीयसूत्र २,३.३० । ।

_______काशिका २,३.३०:

दक्षिण-उत्तराभ्यां अतसुच्(*५,३.२८) इति वक्ष्यति, तस्य+इदं ग्रहनं ।
अतस्-अर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति ।
दक्षिणतो ग्रामस्य ।
उत्तरतो ग्रामस्य ।
पुरस्ताद्ग्रामस्य ।
उपरि ग्रामस्य ।
उपरिष्टाद्ग्रामस्य । ।

---

1. <एनपा द्वितीया># । । पाणिनीयसूत्र २,३.३१ । ।

_______काशिका २,३.३१ः

एनब्-अन्यतरस्यां अदूरेऽपञ्चम्याः (*५,३.३५) इति वक्ष्यति ।
तेन युक्ते द्वितीया विभक्तिर्भवति ।
पूर्वेण षष्ठ्यां प्राप्तायां इदं वचनं ।
दक्षिणेन ग्रामं ।
उत्तरेण ग्रामं ।
षष्ठ्यापीष्यते ।
दक्षिणेन ग्रामस्य ।
उत्तरेण ग्रामस्य ।
तदर्थं योगविभागः कर्तव्यः । ।

---

1. <पृथग्-विना-नानाभिस्तृतीयाऽन्यतरस्याम्># । । पाणिनीयसूत्र २,३.३२ । ।

_______काशिका २,३.३२ः

पञ्चमी-ग्रहणं अनुवर्तते ।
पृथक्विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च ।
पृथग्देवदत्तेन, पृथग्देवदत्ताथ् ।
विना देवदत्तेन, विना देवदत्ताथ् ।
नाना देवदत्तेन, नाना देवदत्ताथ् ।
पृथग्-विना-नानाभिः इति योग-विभागो द्वितीया-अर्थः ।
विना वातं विना वर्षं विद्युत्-प्रपतनं विना ।
विना हस्तिकृतान्दोषान्केनेमौ पातितौ द्रुमौ । ।

---

[#१४१]

1. <करेण च स्तोक-अल्प-कृच्छ्र-कतिपयस्य असत्त्व-वचनस्य># । । पाणिनीयसूत्र २,३.३३ । ।

_______काशिका २,३.३३ः

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्व-वचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति ।
पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करणे इत्येव सिद्धा ।
यदा तु धर्म-मात्रं करणाया विवक्ष्यते न द्रव्यम्, तदा स्तोक-आदीनां असत्त्व-वचनता ।
स्तोकान्मुक्तः, स्तोकेन मुक्तः ।

अल्पान्मुक्तः, अल्पेन मुक्तः ।
कृच्छ्रान्मुक्तः, कृच्छ्रेण मुक्तः ।
कतिपयान्मुक्तः, कतिपयेन मुक्तः ।
असत्त्व-वचनस्य इति किं ? स्तोकेन विषेण हतः ।
अल्पेन मधुना मत्तः ।
करणे इति किं ? क्रियाविशेषणे कर्मणि मा भूत्, स्तोकं मुञ्चति । ।

---

1. <दूर-अन्तिक-अर्थैः षष्ठ्य्-अन्यतरस्याम्># । । पाणिनीयसूत्र २,३.३४ । ।

_______काशिका २,३.३४ः

पञ्चमी अनुवर्तते ।
दूर-अन्तिक-अर्थैः शब्दैर्योगे षष्थी विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च ।
दूरं ग्रामस्य, दूरं ग्रामाथ् ।
विप्रकृष्टं ग्रामस्य, विप्रकृष्टं ग्रामाथ् ।
अन्तिकं ग्रामस्य, अन्तिकं ग्रामाथ् ।
अभ्याशं ग्रामस्य, अभ्याशं ग्रामाथ् ।
अन्यतरस्यां ग्रहणं पञ्चम्य्-अर्थं ।
इतरथा हि तृतीया पक्षे स्यात् । ।

---

1. <दूर-अन्तिक-अर्थेभ्यो द्वितीया च># । । पाणिनीयसूत्र २,३.३५ । ।

_______काशिका २,३.३५ः

पञ्चमी अनुवर्तते ।
दूर-अन्तिक-अर्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीयाऽपि समुच्छीयते ।
दूरं ग्रामस्य, दूराद्ग्रामस्य, दूरेण्ग्रामस्य ।
अन्तिकं ग्रामस्य, अन्तिकाद्ग्रामस्य, अन्तिकेन ग्रामस्य ।
प्रातिपदिकार्थे विधानं ।
असत्त्ववचन-ग्रहणं च अनुवर्तते ।
सत्त्व-शब्देभ्यो यथायथं विभक्तयो भवन्ति ।
दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वं । ।

---

1. <सप्तम्य्-अधिकरने च># । । पाणिनीयसूत्र २,३.३६ । ।

_______काशिका २,३.३६ः

सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद्दूर-अन्तिक-अर्थेभ्यश्च ।
कटे आस्ते ।
शकटे आस्ते ।
स्थाल्यां पचति ।
दूर-अन्तिक-अर्थेभ्यः खल्वपि - दूरे ग्रामस्य ।
अन्तिके ग्रामस्य ।
अभ्याशे ग्रामस्य ।
दूरन्ति - कार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीया-तृतीया-पञ्चमी-सप्तम्यः ।
सप्तमी-विधाने क्तस्येन्विषयस्य कर्मण्य्-उपसङ्ख्यानं ।
अधीती व्याकरणे ।
परिगणिती याज्ञिके ।
आम्नाती छन्दसि ।

[#१४२]

साध्वसाधुप्रयोगे च सप्तमी वक्तव्या ।
साधुर्देवदत्तो मातरि ।
असाधुः पितरि ।
कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या ।
ऋद्धेषु भुञ्जानेषु दरिद्रा आसते ।
ब्राह्मणेषु तरत्सु वृषला आसते ।
अकारकार्हाणां चाकरकत्वे सप्तमी वक्तव्या ।
दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते ।
वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति ।
तद्विपर्यासे च सप्तमी वक्तव्या ।
ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते ।
ब्राह्मणेष्वासीनेषु वृषलास्तरान्ति ।
निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या ।
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरं ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः । ।

---

1. <यस्य च भावेन भाव-लक्षणम्># । । पाणिनीयसूत्र २,३.३७ । ।

_______काशिका २,३.३७ः

सप्तमी इति वर्तते ।
भावः क्रिया ।
यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते, ततो भाववतः सप्तमी विभक्तिर्भवति ।

प्रसिद्धा च किया क्रियान्तरं लक्षयति ।
गोषु दुह्यमानासु गतः, दुग्धास्वागतः ।
अग्निषु हूयमानेषु गतः, हुतेष्वागतः ।
भावेन इति किं ? यो जटाभिः स भुङ्क्ते ।
पुनर्भाव-ग्रहणं किं ? यो भुङ्क्ते स देवदत्तः । ।

---

1. <षष्ठी च अनादरे># । । पाणिनीयसूत्र २,३.३८ । ।

_______काशिका २,३.३८ः

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात्साऽपि भवति ।
अनादर-अधिके भाव-लक्षने भाववतः षष्ठी-सप्तम्यौ विभक्ती भवतः ।
रुदतः प्राव्राजीत्, रुदति प्राव्राजीत्क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीथ् ।
क्रोशन्तमनादृत्य प्रव्रजितः इत्यर्थः । ।

---

[#१४३]

1. <स्वामि-ईश्वर्-आधिपति-दायाद-साक्षि-प्रतिभू-प्रसुतैश्च># । । पाणिनीयसूत्र २,३.३९ । ।

_______काशिका २,३.३९ः

षष्ठी-सप्तम्यौ वर्तते ।
स्वामिनीश्वर अधिपति दायाद साक्षिन्प्रतिभू प्रसूत इत्येतैर्योगे षष्ठी-सप्तम्यौ विभक्ती भवतः ।
गवां स्वामी, गोषु स्वामी ।
गवामीश्वरः, गोष्वीश्वरः ।
गवामधिपतिः, गोष्वधिपतिः ।
गवां दायादः, गोषु दायादः ।
गवां साक्षी, गोषू साक्षी ।
गवां प्रतिभूः, गोषु प्रतिभूतः ।
गवां प्रसूतः, गोषु प्रसूतः ।
षष्ठ्यां एव प्राप्तयां पक्षे सप्तमीविधान-अर्थं वचनं । ।

---

1. <आयुक्त-कुशलाभ्यां च आसेवायाम्># । । पाणिनीयसूत्र २,३.४० । ।

_______काशिका २,३.४०ः

षष्ठी-सप्तम्यौ वर्तते ।
आयुकतः व्यापारितः, कुशलः निपुणः, ताभ्यां योगे आसेवायां गम्यमानायां षष्ठी-सप्तम्यौ विभक्ती भवतः ।
आसेवा तत्पर्यं ।
आयुक्तः कटकरणस्य, आयुक्तः कटकरणे कुशलः कटकरनस्य, कुश्लः कटकरणे ।
आसेवायां इति किं ? आयुक्तो गौः शकटे ।
तत्र सप्तम्येव अधिकरणे भवति । ।

---

1. <यतश्च निर्धारनम्># । । पाणिनीयसूत्र २,३.४१ । ।

_______काशिका २,३.४१ः

षष्ठी-सप्तम्यौ वर्तते ।
जाति-गुण-क्रियाभिः समुदायादेकदेशस्य पृथक्करनं निर्धारनं ।
यतो निर्धारनं ततः षष्ठी सप्तम्यौ विभक्ती भवतः ।
मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः ।
गवं कृष्णा सम्पन्न-क्षीरतमा, गोषु कृष्णा सम्पन्न-क्षीरतमा अध्वगानां धवन्तः शीघ्रतमा, अध्वगेषु धावन्तः शीघ्रतमाः । ।

---

1. <पञ्चमी विभक्ते># । । पाणिनीयसूत्र २,३.४२ । ।

_______काशिका २,३.४२ः

यतश्च निर्धरनं इति वर्तते ।
षष्ठी-सप्तम्य्-अपवादो योगः ।
विभागः विभक्तं ।
यस्मिन्निर्धारण-आश्रये विभक्तं अस्य अस्ति ततः पञ्चमी विभक्तिर्भवति ।
माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः, आढ्यतराः । ।

---

1. <साधु-निपुणाभ्यां अर्चायां सप्तम्यप्रतेः># । । पाणिनीयसूत्र २,३.४३ । ।

_______काशिका २,३.४३ः

साधु निपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत्प्रतिः प्रयुज्यते।
मातरि साधुः।
पितरि साधुः।
मातरि निपुणः।
पितरि निपुणः।
अर्चायां इति किं? साधुर्भृत्यो राज्ञः।
तत्त्वक्-अथने न भवति।
अप्रतेः इति किं? साधुर्देवदत्तो मातरं प्रति।
अप्रत्यादिभिरिति वक्तव्यं।

[#१४४]

साधुर्देवदत्तो मातरं परि।
मातरमनु।।

---

1. <प्रसित-उत्सुकाभ्यां तृतीया च>#।। पाणिनीयसूत्र २,३.४४।।

_______काशिका २,३.४४ः

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च।
प्रसितः प्रसक्तः, यस्तत्र नित्यं एव अवबद्धः स प्रसित-शब्देन+उच्यते।
केशैः प्रसितः केशेषु प्रसितः।
केशैरुत्सुकः, केशेषु उत्सुकः।।

---

1. <नक्षत्रे च लुपि>#।। पाणिनीयसूत्र २,३.४५।।

_______काशिका २,३.४५ः

तृतीया-सप्तम्यावनुवर्तते।
लुब्-अन्तात्नक्षत्र-शब्दात्तृतीया-सप्तम्यौ विभक्ती भ्वतः।
पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयाथ्।
मघाभिः पललौदनम्, मघसु पललौदनं।
नक्षत्र इति किं? पञ्चालेषु वसति।
लुपि इति किं? मघासु ग्रहः।

इह कस्मान्न भवति, अद्य पुस्यः, अद्य कृत्तिका ? अधिकरणे इति वर्तते ।
वचनं तु पक्षे तृतीयाविधान-अर्थं ।।

---

1. <प्रातिपदिकार्थ-लिङ्ग-परिमाणवचन-मात्रे प्रथमा># ।। पाणिनीयसूत्र २,३.४६ ।।

_______काशिका २,३.४६ः

प्रातिपदिकार्थः सत्ता ।
लिङ्गं स्त्रीलिङ्ग-पुंलिङ्ग-नपुंसकानि ।
परिमणं द्रोणः, खारी, आढकं ।
वचनं एकत्व-द्वित्व-बहुत्वानि ।
मात्र-शब्दः प्रत्येकं अभिसम्बध्यते ।
प्रातिपदिकार्थ-मात्रे, लिङ्ग-मात्रे, प्रिमाण-मात्रे, वचन-मात्रे प्रथमा विभक्तिर्भवति ।
प्रातिपदिकार्थ-मात्रे -- उच्चैः ।
नीचैः ।
लिङ्ग-ग्रहणं किं ? कुमारी, वृक्षः, कुण्डं इत्यत्र अपि यथा स्यथ् ।
परिमाण-ग्रहणं किं ? द्रोणः, खारी, आढकं इत्यत्र अपि यथा स्याथ् ।
वचन-ग्रहनं किं ? एकत्व-आदिषु उक्तेष्वपि यथा स्याथ् ।
एकः, द्वौ, बहवः ।
प्रातिपदिक-ग्रहनं किं ? निपातस्य अनर्थकस्य प्रातिपदिकत्वं उक्तं, ततोऽपि यथा स्याथ् ।
प्रलम्बते ।
अध्यागच्छति ।।

---

1. <सम्बोधने च># ।। पाणिनीयसूत्र २,३.४७ ।।

_______काशिका २,३.४७ः

आभिमुख्य-करणं, तद्-अधिके प्रातिपदिक-अर्थे प्रथमा न प्राप्नोति इति वचनं आरभ्यते ।
सम्बोधने च प्रथमा विभक्तिर्भवति ।
हे देवदत्त ।
हे देवदत्तौ ।
हे देवदत्ताः ।।

---

1. <सा+आमन्त्रितम्># ।। पाणिनीयसूत्र २,३.४८ ।।

_______काशिका २,३.४८ः

सम्बोधने या प्रथमा तद्-अन्तं शब्द-रूपं आमन्त्रितसञ्ज्ञं भवति ।
तथा च+एव+उदाहृतं ।
आमन्त्रित-प्रदेशाः -- आमन्त्रितं पूर्वं अविद्यमानवत्(*८,१.७२) इत्येवं आदयः । ।

---

[#१४५]

1. <एकवचनं सम्बुद्धिः># । । पाणिनीयसूत्र २,३.४९ । ।

_______काशिका २,३.४९ः
आमन्त्रित-प्रथमाया यदेकवानं, तत्सम्बुद्धि-सञ्ज्ञं भवति ।
हे पटो ।
हे देवदत्त ।
सम्बुद्धि-प्रदेशाः - एङ्-ह्रस्वात्सम्बुद्धेः (*६,१.६९) इत्येवं आदयः । ।

---

1. <षष्ठी शेषे># । । पाणिनीयसूत्र २,३.५० । ।

_______काशिका २,३.५०ः

कर्म-आदिभ्योऽन्यः प्रातिपदिकार्थ-व्यतिरेकः स्वस्वामि-सम्भन्ध-आदिः शेषः, तत्र षष्ठी विभक्तिर्भवति ।
रज्ञः पुरुषः ।
पशोः पादः ।
पितुः पुत्रः । ।

---

1. <ज्ञोऽविद्-अर्थस्य करणे># । । पाणिनीयसूत्र २,३.५१ । ।

_______काशिका २,३.५१ः

जानातेरविदर्थस्य अज्ञान-अर्थस्य करणे कारके षष्ठी विभक्तिर्भवति ।

सर्षिषो जानीते।
मधुनो जानीते।
सर्पिषा करणेन प्रवर्तते इत्यर्थः।
प्रवृत्ति-वचनो जानतिरविदः-अर्थः।
अथ व मिथ्याज्ञान-वचनः।
सर्पिषि रक्तः प्रतिहतो वा।
चित्तभ्रान्त्या तदात्मना सर्व एव ग्राह्यं प्रतिपद्यते।
मिथ्याज्ञानं अज्ञानं एव।
अविद्-अर्थस्य इति किं ? स्वरेण पुत्रं जानाति।।

---

1. <अधि-इग्-अर्थ-दय-ईशां कर्मणि>#।। पाणिनीयसूत्र २,३.५२।।

_______काशिका २,३.५२ः

शेषे इति वर्तते।
अधि-इग्-अर्थाः स्मरन-अर्थाः, दय दानगतिरक्षनेषु, ईश एश्वर्ये, एतेषं कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति।
मातुरध्येति।
मातुः समरति।
सर्पिषो द्यते।
सर्पिष ईष्टे।
मधुन ईष्टे।
कर्मणि इत्येव, मातुर्गुणैः स्मरति।
शेषे किं ? मातरं स्मरति।।

---

1. <कृञः प्रतियत्ने>#।। पाणिनीयसूत्र २,३.५३।।

_______काशिका २,३.५३ः

सतो गुणान्तराधानं प्रतियत्नः।
करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति।
एधोदकस्योपस्कुरुते।
शस्त्रपत्रस्योपस्कुरुते प्रतियत्ने इति किं ? कटं करोति।
कर्मणि इति किं ? एधोदकस्योपस्कुरुते प्रज्ञया।
शेषे इत्येव, एधोदकमुपस्कुरुते।।

---

[#१४६]

1. <रुजा-अर्थानां भाव-वचनानां अज्वरेः># । । पाणिनीयसूत्र २,३.५४ । ।

_______काशिका २,३.५४ः

रुजार्थानां धातूनां भाव-वचनानां भाव-कर्तृकाणां ज्वरि-वर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति ।
चौरस्य रुजति रोगः ।
चौरस्यामयत्यामयः ।
रुजार्थानां इति किं ? एति जीवन्तमानन्दो नरं वर्षशतादपि ।
जीव पुत्रक मा मैवं तपः साहसमाचर । ।
भाववचनानां इति किं ? नदी कूलानि रुजति ।
अज्वरेः इति किं ? चौरं ज्वरयति ज्वरः ।
अज्वरिसन्ताप्योरिति वक्तव्यं ।
चौरं सन्तापयति तापः ।
शेषे इत्येव, चौरं रुजति रोगः । ।

---

1. <आशिषि नाथः># । । पाणिनीयसूत्र २,३.५५ । ।

_______काशिका २,३.५५ः

नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु पठ्यते, तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति ।
सर्पिषो नाथते ।
मधुनो नाथते ।
आशिषि इति किं ? मानवकं उपनाथति अङ्ग पुत्रकाधीष्व । ।

---

1. <जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम्># । । पाणिनीयसूत्र २,३.५६ । ।

_______काशिका २,३.५६ः

जासि निप्रहण नाट क्राथ पिषित्येतेषां धातूनां हिंसा-क्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति ।
जसु हिंसायाम्, जसु ताडने इति च चुरादौ पठ्यते, तस्य+इदं ग्रहणं, न दैवादिकस्य जसु मोक्षणे इत्यस्य ।
चौरस्य+उज्जासयति ।
वृषलस्य+उज्जासयति ।
निप्रहण इति सग्घातविगृहीतविपर्यस्तस्य ग्रहणं ।
चौरस्य निप्रहति ।

चौरस्य निहन्ति ।
चौरस्य प्रहन्ति ।
चौरस्य प्रणिहन्ति ।
चौरस्य+उन्नाटयति ।
वृषलस्य+उन्नाटयति ।
चौरस्य+उत्क्राथायति ।
वृषलस्य क्राथयति ।
निपातनाद्वृद्धिः ।
अयं हि घटादौ पठ्यते, श्रथ क्नथ क्रथ क्लथ हिंस-अर्थाः इति ।
तत्र घटादयो मितः इति मित्सञ्ज्ञायां मितां ह्रस्वः (*६,४.९२) इति ह्रस्वत्वं स्याथ् ।
चौरस्य पितष्टि ।
वृषलस्य पिनष्टि ।
हिंसायां इति किं ? धानाः पिनष्टि ।
शेषे इत्येव, चौरं उज्जासयति ।
एशां इति किं ? चौरं हिनस्ति ।
निप्रहण इति किं ? चौरं विहन्ति । ।

---

[#१४७]

1. <व्यवहृ-पणोः समर्थयोः># । । पाणिनीयसूत्र २,३.५७ । ।

_______काशिका २,३.५७ः

व्यवहृ पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति ।
द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः ।
शतस्य व्यवहरति ।
सहस्रस्य व्यवहरति ।
शतस्य पणते ।
सहस्रस्य पणते ।
आय-प्रत्ययः कस्मान्न भवति ? स्तुत्य्-अर्थस्य पनतेराय-प्रत्यय इष्यते ।
समर्थयोः इति किं ? शलाकां व्यवहरति ।
विक्षिपति इत्यर्थः व्राहमणान्पणायते ।
स्तौति इत्यर्थः ।
शेषे इत्येव, शतं पणते । ।

---

1. <दिवस्तद्-अर्थस्य># । । पाणिनीयसूत्र २,३.५८ । ।

_______काशिका २,३.५८ः

व्यवहृपणिसमान-अर्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति ।
शतस्य दीव्यति ।
सहस्रस्य दीव्यति ।
तदर्थस्य इति किं ? ब्राह्मनं दीव्यति ।
योग-विभाग उत्तर-अर्थः । ।

---

1. <विभाष-उपसर्गे># । । पाणिनीयसूत्र २,३.५९ । ।

_______काशिका २,३.५९ः

दिवस्तदर्थस्य (*२,३.५८) इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते ।
उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति ।
शतस्य प्रतिदीव्यति ।
सहस्रस्य प्रतिदीव्यति ।
शतं प्रतिदीव्यति ।
सहस्रं प्रतिदीव्यति ।
उपसर्गे इति किं ? शतस्य दीव्यति ।
तदर्थस्य इत्येव शलाकां प्रतिदीव्यति । ।

---

1. <द्वितीया ब्राह्मणे># । । पाणिनीयसूत्र २,३.६० । ।

_______काशिका २,३.६०ः

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति ।
गामस्य तदहः सभायां, दीव्येयुः ।
अनुपसर्गस्य षष्ठ्यां प्राप्तायां इदं वचनं ।
सोपसर्गस्य तु छन्दसि व्यवस्थित-विभाशायाऽपि सिध्यति । ।

---

1. <प्रेष्य-ब्रुवोर्हविषो देवता-सम्प्रदाने># । । पाणिनीयसूत्र २,३.६१ । ।

_______काशिका २,३.६१ः

प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्-मध्यमपुरुषस्य+एकवचनम्, तत्साहचर्याद्ब्रुविरपि तद्विषय एव गृह्यते।
प्रेष्यब्रुवोर्हविषः कर्मणः षष्थी विभक्तिर्भवति देवतासम्प्रदाने सति।
अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य।
अग्नये छागस्य हविषो वपायै मेदसोऽनुब्रूहि३।
प्रेष्यब्रुवोः इति किं? अग्नये छागं हविर्वपां मेदो जुहुधि।
हविषः इति किं? अग्नये गोमयानि प्रेष्य।
देवतासम्प्रदाने इति किं? माणवकाय पुरोडाशं प्रेष्य।
हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः।
इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य३।।

---

[#१४८]

1. <चतुर्थ्य्-अर्थे बहुलं छन्दसि>#।। पाणिनीयसूत्र २,३.६२।।

_______काशिका २,३.६२:

छन्दसि विषये चतुर्थ्य्-अर्थे षष्थी विभक्तिर्भवति बहुलं।
पुरुषमृगश्चन्द्रमसः।
पुरुषमृगश्चन्द्रमसे।
गोधा कालका दार्वाघाटस्ते वनस्पतीनां।
ते वनस्पतिभ्यः।
बहुल-ग्रहणं किं? कृष्णो रात्र्यै।
हिमवते हस्ती।
षष्ठ्यर्थे चतुर्थी वक्तव्या।
या खर्वेण पिवति तस्यै खर्वो जायते।
या दतो धावते तस्यै श्यावदन्।
या नखानि निकृन्तते तस्यै कुनखी।
याऽङ्क्ते तस्यै काणः।
याऽभ्यङ्क्ते तस्यै दुश्चर्मा।
या केशान्प्रलिखते तस्यै खलतिः।
अहल्यायै जारः।।

---

1. <यजेश्च करणे>#।। पाणिनीयसूत्र २,३.६३।।

_______काशिका २,३.६३:

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्थी विभक्तिर्भवति।
घृतस्य यजते, घृतेन यजते।
स्ॐयस्य यजते, सोमेन यजते।।

---

1. <कृत्वोऽर्थप्रयोगे कालेऽधिकरणे># । । पाणिनीयसूत्र २,३.६४ । ।

_______काशिका २,३.६४ः

छन्दसि बहुलं इति निवृत्तं ।
कृत्वोऽर्थानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति ।
पञ्च-कृत्वोऽह्नो भुङ्क्ते ।
द्विरह्नोऽधीते ।
कृत्वोऽर्थ-ग्रहणं किं ? आह्नि शेते ।
रात्रौ शेते ।
प्रयोग-ग्रहणं किं ? अहनि भुक्तं ।
गम्यते हि द्विस्त्रश्चतुर्वेति, न त्वप्रयुज्यमाने भवति ।
काल-ग्रहणं किं ? द्विः कांस्यपात्र्यां भुङ्क्ते ।
अधिकरणे इति किं ? द्विरह्नो भुङ्क्ते ।
शेषे इत्येव, द्विरहन्यधीते । ।

---

1. <कर्तृ-कर्मणोः कृति># । । पाणिनीयसूत्र २,३.६५ । ।

_______काशिका २,३.६५ः

कृत्-प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति ।
भवतः शायिका ।
भवत आसिका ।
कर्मणिअपां स्रष्टा ।
पुरां भेत्ता ।
वज्रस्य भर्ता ।
कर्तृ-कर्मणोः इति किं ? शस्त्रेण भेत्ता ।
कृति इति किं ? तद्धित-प्रयोगे मा भूत्, कृतपूर्वी कटं ।
भुक्तपूर्व्योदनं ।
शेषे इति निवृत्तम्, पुनः कर्म-ग्रहणाथ् ।
इतरथा हि कर्तरि च कृति इत्येवं ब्रूयात् । ।

---

[#१४९]

1. <उभय-प्राप्तौ कर्मणि># । । पाणिनीयसूत्र २,३.६६ । ।

_______काशिका २,३.६६ः

पूर्वेण षष्ठी प्राप्ता नियम्यते ।
उभयप्राप्तौ इति बहुव्रीहिः ।
उभयोः प्राप्तिर्यस्मिन्कृति, सोऽयं उभयप्राप्तिः ।
तत्र कर्मण्येव षष्थी विभक्तिर्भवति, न कर्तरि ।
आश्चर्यो गवां दोहोऽगोपालकेन ।
रोचते मे ओदनस्य भोजनं देवदत्तेन ।
साधु खलु पयसः पानं यज्ञदत्तेन ।
बहुव्रीहिविज्ञानादिह नियमो न भवति, आश्चर्यं इदं ओदनस्य नाम पाको ब्राह्मणानं च प्रादुर्भावः इति ।
अकाकारयोः स्त्री-प्रत्यययोः प्रयोगे न+इति वक्तव्यं ।
भेदिका देवदत्तस्य काष्ठानां ।
चिकिर्षा देवदत्तस्य कटस्य ।
शेषे विभाषा ।
अकाकारयोः स्त्रीप्रत्यययोर्ग्रहनात्तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते ।
शोभना हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा ।
केचिदविशेषेणैव विभाषां इच्छन्ति, शब्दानां अनुशासनं आचार्यण आचार्यस्य इति वा । ।

---

1. <क्तस्य च वर्तमाने># । । पाणिनीयसूत्र २,३.६७ । ।

_______काशिका २,३.६७ः

न ल-उ-उक-अव्यय. निष्ठाखलर्थ-तृनां (*२,३.६९) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते ।
क्तस्य वर्तमान-काल-विहितस्य प्रयोगे षष्ठी विभक्तिर्भवति ।
रज्ञां मतः ।
राज्ञां बुद्धः ।
राज्ञां पूजितः ।
क्तस्य इति किं ? ओदनं पचमानः ।
वर्तमाने इति किं ? ग्रामं गतः ।
नपुंसके भाव उपसङ्ख्यानं ।
छात्रस्य हसितं ।
मयूरस्य नृत्तं ।
कोकिलस्य व्याहृतं ।
शेषविज्ञानात्सिद्धं ।
तथा च कर्तृविवक्षायां तृतीयाऽपि भवति, छाअत्रेण हसितं इति । ।

---

[#१५०]

1. <अधिकरण-वाचिनश्च># । । पाणिनीयसूत्र २,३.६८ । ।

_______काशिका २,३.६८ः

क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसान-अर्थेभ्यः (*३,४.७६) इति वक्ष्यति ।
तस्य प्रयोगे षष्ठी विभक्तिर्भवति ।
अयं अपि प्रतिषेध-अपवादो योगः ।
इदं एषां आसितं ।
इदं एषां शयितं ।
इदं हेः सृप्तं ।
इदं वनकपेर्यातं ।
इदं एषां भुक्तं ।
इदं एषां अशितं ।
द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावथ् ।
नेताऽश्वस्य ग्रामस्य चैत्रः ।
अन्ये प्रधाने कर्मण्याहुः ।
तदा, नेताऽश्वस्य ग्रामं चैत्रः । ।

---

1. <न ल-उ-उक-अव्यय-निष्ठा-खलर्थ-तृनाम्># । । पाणिनीयसूत्र २,३.६९ । ।

_______काशिका २,३.६९ः

कर्तृ-कर्मणोः कृति (*२,३.६५) इति प्राप्ता षष्ठी प्रतिषिध्यते ।
ल उ उक अव्यय निष्ठा खलर्थ तृनित्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति ।
ल इति शतृशानचौ, कानच्-क्वसू, किकिनौ च गृह्यन्ते ।
ओदनं पचन् ।
ओदनं पचमानः ।
ओदनं पेचानः ।
ओदनं पेचिवान् ।
पपिः सोमं ददिर्गाः ।
उ - कटं चिकीर्षुः ।
ओदनं बुभुक्षुः ।
कन्यामलङ्करिष्णुः ।
इष्णुचोऽपि प्रयोगे निषेधः ।
उक - आगामुकं वाराणसीं रक्ष अहुः ।
उकप्रतिषेधे कमेर्भाषायां अप्रतिषेधः ।
दास्याः कामुकः ।
अव्यय - कटं कृत्वा ।
ओदनं भुक्त्वा ।

अव्यय-प्रतिषेधे तोसुङ्कसुनोरप्रतिषेधः।
व्युष्टायां पुरा सूर्यस्योदेतोरधेयः।
पुरा क्रूरस्य विसृपो विरप्शिन्।
निष्ठा - ओदनं बुक्तवान्।
देवदत्तेन कृतं।
खलर्थ - ईषत्करः कटो भवता।
ईषत्पानः सोमो भवता।
तृनिति प्रयाहार-ग्रहणं।
लटः शतृ-शानचावप्रथमा. समानाधिकरणे (*३,२.१२४) इत्यारभ्य आ तृनो नकाराथ्।
तेन शानञ्चानश्शतृतृनां अपि प्रतिषेधो भवति।
सोमं पवमानः।
नडमाघ्नानः।
अधीयन्पारायनं।
कर्ता कटान्।
वदिता जनापवादान्।
द्विषः शतुर्वाव्चनं।
चौरं द्विषन्, चौरस्य द्विषन्।।

---

[#१५१]

1. <अक-इनोर्भविष्यद्-आधमर्ण्ययोः>#।। पाणिनीयसूत्र २,३.७०।।

_______काशिका २,३.७०ः

अकस्य भविष्यति काले विहितस्य, इनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्थी विभक्तिर्न भवति।
कटं कारको व्रजति।
ओदनं भोजको व्रजति।
इनः खल्वपि ग्रामं गमी।
ग्रामं गामी।
शतं दायी।
सहस्रं दायी।
भविष्यद्-आधमर्ण्ययोः इति किं? यवनां लावकः।
सक्तूनां पायकः।
अवश्यंकारी कटस्य।
इह कस्मान्न भवति, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः इति? भविष्यद्-अधिकारे विहितस्य अकस्य+इदं ग्रहणं।।

---

1. <कृत्यानां कर्तरि वा>#।। पाणिनीयसूत्र २,३.७१।।

_______काशिका २,३.७१ः

कर्तृ-कर्मणोः कृति (*२,३.६५) इति नित्यं षष्थी प्राप्ता कर्तरि विकल्प्यते।
कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति, न कर्मणि।
भवता कटः कर्तव्यः, भवतः कटः कर्तव्यः।
कर्तरि इति किं? गेयो माणवकः साम्नां।
उभय-प्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः।
क्रष्टव्या ग्रामं शाखा देवदत्तेन।
नेतव्या ग्राममजा देवदत्तेन।।

---

1. <तुल्य-अर्थैरतुला-उपमाभ्यां तृतीयाऽन्यतरस्याम्>#।। पाणिनीयसूत्र २,३.७२।।

_______काशिका २,३.७२ः

तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्थी च, तुला-उपमा-शब्दौ वर्जयित्वा।
शेषे विषये तृतीया-विधानात्तया मुक्ते षष्थ्येव भवति।
तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य।
सदृशो दीवदत्तेन, सदृशो देवदत्तस्य।
अतुलोपमाभ्यां इति किं? तुला देवदत्तस्य न अस्ति।
उपमा कृष्णस्य न विद्यते।
वा इति वर्तमानेऽन्यतरस्यां ग्रहनं उत्तरसूत्रे तस्य चकारेन अनुकर्षण-अर्थं।
इतरथा हि तृतीयाऽनुकृष्येत।।

---

1. <चतुर्थी च आशिष्यायुष्य-मद्र-भद्र-कुशल-सुख-अर्थ-हितैः>#।। पाणिनीयसूत्र २,३.७३।।

_______काशिका २,३.७३ः

आशिषि गयमानायां आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति।
चकारो विकल्प-अनुकर्षण-अर्थः।
शेषे चतुर्थी-विधानात्तया मुक्ते षष्ठी विभक्तिर्भवति।
अत्र आयुष्य-आदीनां पर्याय-ग्रहणं कर्तव्यं।
आयुष्यं देवदत्ताय भूयात्, आयुष्यं देवदत्तस्य भूयाथ्।
चिरं जीवितं देवदत्ताय देवदत्तस्य वा भुयाथ्।

[#१५२]

मद्रं देवदत्ताय देवदत्तस्य वा भूयाथ्।

भद्रं देवदत्ताय, भद्रं देवदत्तस्य।
कुशलं देवदत्ताय, कुशलं देवदत्तस्य।
निरामयं देवदताय, निरामयं देवदत्तस्य।
सुखं देवदत्ताय, सुखं देवदत्तस्य।
शं देवदत्ताय, शं देवदत्तस्य।
अर्थो देवदत्ताय, अर्थो देवदत्तस्य।
प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य।
हितं देवदताय, हितं देवदत्तस्य।
पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य।
आशिषि इति किं ? आयुष्यं देवदत्तस्य तपः।।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः।।

द्वितीयाध्यायस्य चतुर्थः पादः।

---

[#१५३]

1. <द्विगुरेकवचनम्>#।। पाणिनीयसूत्र २,४.१।।

_______काशिका २,४.१ः

द्विगुः समासः एकवचनं भवति।
एकस्य वचनं एकवचनं।
एकस्य अर्थस्य वाचको भवति इत्यर्थः।
तदनेन प्रकारेण द्विग्व्-अर्थस्य+एकवद्भावो विधीयते, द्विग्व्-अर्थ एकवद्भवति इति।
समाहार-द्विगोश्च+इदं ग्रहणम्, न अन्यस्य।
पञ्च-पूलाः समाहृताः पञ्चपूली।
दशपूली।
द्विग्व्-अर्थस्य)अ ए)कत्वादनुप्रयोगेऽप्येकवचनं भवति, पञ्च-पूलीयं शोभना इति।।

---

1. <द्वन्द्वश्च प्राणि-तूर्य-सेना-अङ्गानाम्>#।। पाणिनीयसूत्र २,४.२।।

_______काशिका २,४.२ः

एकवचनं इति वर्तते।
अङ्ग-शब्दस्य प्रत्येकं वाक्य-परिसमाप्त्या त्रीणि वाक्यानि सम्पद्यन्ते।
प्राण्य्-अङ्गानां द्वन्द्व एकवद्भवति, तथा तूर्य-अङ्गानां सेना-अङ्गानां च।
प्राण्य्-अङ्गानां तावत्- पाणि-पादं।

शिरोग्रीवं ।
तूर्य-अङ्गानां - मार्दङ्गिकपाणविकं ।
वीणावदकपरिवादकं ।
सेना-अङ्गानां - रथिक-अश्वारोहं ।
रथिक-पादातं ।
हस्त्य्-अश्व-आदिषु परत्वात्पशुद्-वन्द्वे विभाषया एअक्वद्भवति ।
इतरेतर-योगे समहारे च द्वन्द्वो विहितः ।
तत्र समाहारस्य+एकत्वात्सिद्धं एव+एकवचनं ।
इदं तु प्रकरणं विषय-विभाग-अर्थम्, प्राण्य्-अङ्ग-आदीनां समाहार एव द्वन्द्वः, दधिपय-आदीनां इतरेतर-योग एव, वृक्ष-मृग-आदीनां उभयत्र इति ।।

---

1. <अनुवादे चरणानाम्># ।। पाणिनीयसूत्र २,४.३ ।।

_______काशिका २,४.३ः

चरण-शब्दः शाखा-निमित्तकः पुरुषेषु वर्तते ।
चरणानां द्वन्द्वः एकवद्भवति अनुवादे गम्यमाने ।
प्रमाण-अन्तरावगतस्य अर्थस्य शब्देन सङ्कीर्तनमात्रं अनुवादः ।
उदगाद्कठकालापं ।
प्रत्यष्ठात्कठकौथुमं ।
कठकालाप-आदीनां उदय-प्रतिष्ठे प्रमाण-अन्तरवगते यदा पुनः शब्देन अनूद्येते तदा+एवं उदाहरणं ।
यदा तु प्रथमत एव+उपदेशस्तदा प्रत्युदाहरणं ।
अनुवादे इति किं ? उदगुः कठकालापाः ।
प्रत्यष्ठुः कठकौथुमाः ।
स्थेणोरद्यतन्यां चेति वक्तव्यं ।
स्थेणोः इति किं ? अनन्दिषुः कठकालापाः ।
अद्यतन्यां इति किं ? उद्यन्ति कथकालापाः ।।

---

1. <अध्वर्यु-क्रतुरनपुंसकम्># ।। पाणिनीयसूत्र २,४.४ ।।

_______काशिका २,४.४ः

अध्वर्यु-वेदे यस्य क्रतोर्विधानं सोऽध्वर्यु-क्रतुः ।
अध्वर्युक्रतु-वाचिनां शब्दानां अनपुंसक-लिङ्गानां द्वन्द्वः एकवद्भवति ।
अध्वर्युक्रतुरनपुंसकं द्वन्द्वः इति गौणो निर्देशः ।
अर्काश्वमेधं ।
सायाह्नातिरात्रं ।
अध्वर्युक्रतुः इति किं ? इषुवज्रौ ।

उद्भिद्बलभिदौ ।
अनपुंसकं इति किं ? राजसूय-वाजपेये ।
इह कस्मान्न भवति, दर्शपौर्णमासौ ? क्रतु-शब्दः सोमयागेषु रूढः । ।

---

[#१५४]

1. <अध्ययनतोऽविप्रकृष्ट-आख्यानाम्># । । पाणिनीयसूत्र २,४.५ । ।

_______काशिका २,४.५ः

अध्ययनेन निमित्तेन येषां अविप्रकृष्टा प्रत्यासन्ना आख्या, तेषां द्वन्द्वः एकवद्भवति ।
पदक-क्रमकं ।
क्रमक-वार्तिकं ।
सम्पाठः पदानां क्रमस्य च प्रत्यासन्नः ।
अध्ययनतः इति किं ? पितापुत्रौ ।
अविप्रकृष्ट-आख्यानां इति किं ? याज्ञैकवैयाकरणौ । ।

---

1. <जातिरप्राणिनाम्># । । पाणिनीयसूत्र २,४.६ । ।

_______काशिका २,४.६ः

जाति-वाचिनां शब्दानां द्वन्द्व एकवद्भवति प्राणिनो वर्जयित्वा ।
आराशस्त्रि ।
धानाशष्कुलि ।
जातिः इति किं ? नन्दकपाञ्चजन्यौ ।
अप्राणिनां इति किं ? ब्राह्मण-क्षत्रियविट्शूद्राः ।
नञिव-युक्तन्यायेन द्रव्य-जातीनां अयं एकवद्भावः, न गुण-क्रियाजातीनां ।
रूपरसगन्धस्पर्शाः ।
गमनाकुञ्चन-प्रसारणानि ।
जाति परत्वे च जाति-शब्दानां अयं एकवद्भावो विधीयते, न नियत-द्रव्य-विवक्षायां - इह कुण्डे बदरामलकानि तिष्ठन्ति इति । ।

---

1. <विशिष्ट-लिङ्गो नदी देशोऽग्रामाः># । । पाणिनीयसूत्र २,४.७ । ।

_______काशिका २,४.७ः

विशिष्त-लिङ्गानां भिन्न-लिङ्गानां नदी-वाचिनां शब्दानां देशवचिनां च ग्राम-वर्जितानं द्वन्द्व एकवद्भवति ।
नद्य्-अवयवो द्वन्द्वो नदी इत्युच्यते ।
देश-अवयवश्च देशः ।
नदी देशः इत्यसमास-निर्देश एव अयं ।
उद्ध्यश्च इरावती च उद्ध्येरावति ।
गङ्गाशोणं ।
देशः खल्वपि - कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रं ।
कुरुकुरुजाङ्गलं ।
विशिष्ट-लिङ्गः इति किं ? गङ्गा-यमुने ।
मद्रकेकयाः ।
नदी देशः इति किं ? कुक्कुटमयूर्यौ ।
अग्रामाः इति किं ? जाम्बवश्च शालूकिनी च जाम्बव-शालूकिन्यौ ।
नदी-ग्रहणमदेशत्वाथ् ।
जनपदो हि देशः ।
तथा च पर्वतानां ग्रहणं न भवति, कैलासश्च गन्धमादनं च कैलास-गन्धमादने ।
अग्रामा इत्यत्र नगरानां प्रतिषेधो वक्तव्यः ।
इह मा भूत्, मथुरा च पाटलिपुत्रं च मथुरा-पाटलिपुत्रं ।
उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः ।
सौर्यं च नगरं, केतवतं च ग्रामः सौर्य-केतवते । ।

---

[#१५५]

1. <क्षुद्र-जन्तवः># । । पाणिनीयसूत्र २,४.८ । ।

_______काशिका २,४.८ः

अपचितपरिमाणः क्षुद्रः ।
क्षुद्र जन्तु-वाचिनां द्वन्द्वः एकवद्भवति ।
दंशमशकं ।
यूकालिक्षं ।
क्षुद्र-जन्तवः इति किं ? ब्राह्मण-क्षत्रियौ ।
क्षुद्र-जन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः ।
शतं वा प्रसुऋतौ येषां केचिदा नकुलादपि । ।
आ नकुलादपि इति इयं एव स्मृतिः प्रमाणम्, इतरासां तद्विरोधात् । ।

---

1. <येषां च विरोधः शाश्वतिकः># । । पाणिनीयसूत्र २,४.९ । ।

_______काशिका २,४.९ः

विरोधो वैरं ।
शाश्वतिको नित्यः ।
येषां शाश्वतिको विरोधः तद्वाचिनां शब्दानां द्वन्द्व एकवद्भवति ।
मार्जारमूषकं ।
अहिनकुलं ।
शाश्वतिकः इति किं ? गौपालिशालङ्कायनाः कलहायन्ते ।
चकारः पुनरस्य+एव समुच्चय-अर्थः ।
तेन पशुशकुनि-द्वन्द्वे विरोधिनां अनेन नित्यं एकवद्भावो भवति - अश्वमहिषं ।
श्वशृगालं ।
काकोलूकं । ।

---

1. <शूद्राणां अनिरवसितानाम्># । । पाणिनीयसूत्र २,४.१० । ।

_______काशिका २,४.१०ः

निरवसानं बहिष्करणं ।
कुतो बहिष्करणं ? पात्राथ् ।
यैर्भुक्ते पात्रं संस्कारेण अपि न शुध्यति ते निरवसिताः ।
न निरवसिताः अनिरवसिताः ।
अनिरवसित-शूद्र-वाचिनां शब्दानां द्वन्द्व एकवद्भवति ।
तक्षायस्कारं ।
रजकतन्तुबायं ।
अनिरवसितानां इति किं ? चण्डालमृतपाः । ।

---

1. <गवाश्व-प्रभृतीनि च># । । पाणिनीयसूत्र २,४.११ । ।

_______काशिका २,४.११ः

गवाश्व-प्रभृतीनि च कृत-एकवद्-भावनि द्वन्द्व-रूपाणि साधूनि भव्न्ति ।
गवाश्वं ।
गवाविकं ।
गवैडकं ।
अजाविकं ।

अजैडकं ।
कुब्जवामनं ।
कुब्जकैरातकं ।
पुत्रपौत्रं ।
श्वचण्डालं ।
स्त्रीकुमारं ।
दासीमाणवकं ।
शाटीपिच्छकं ।
उष्ट्रखरं ।
उष्त्रशशं ।
मूत्रशकृथ् ।
मूत्रपुरीषं ।
यकृन्मेदः ।
मांसशोणितं ।
दर्भशरं ।
दर्भपूतीकं ।
अर्जुनशिरीषं ।
तृणोलपं ।
दासीदासं ।
कुटीकुटं ।
भागवतीभागवतं ।
गवाश्व-प्रभृतिषु यथोच्चारितं द्वन्द्व-वृत्तं ।
रूपान्तरे तु न अयं विधिर्भवति ।
गोऽश्वम्, गोऽश्वौ ।
पशुद्वन्द्व-विभाषा+एव भवति । ।

---

[#१५६]

1. <विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्य्-अश्ववडव-पूर्वापर-अधरोत्तराणाम्># । । पाणिनीयसूत्र २,४.१२ । ।

_______काशिका २,४.१२ः

वृक्ष मृग तृण धन्य व्यञ्जन पशु शकुनि अश्ववडव पूर्वापर अधरोत्तर इत्येतेषां द्वन्द्वो विभाषा एकवद्भवति ।
प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः ।
रुरुपृषतम्, रुरुपृषताः ।
कुशकाशम्, कुशकाशाः ।
व्रीहियवम्, व्रीहियवाः ।
दधिघृतम्, दधिघृते ।
गोमहिषम्, गोमहिषाः ।
तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः ।
अश्ववडवम्, अश्ववडवौ ।
पूर्वापरम्, पूर्वाप्रे ।
अधरोत्तरम्, अधरोत्तरे ।
बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां ।

एषां बहुप्रकृतिरेव द्वन्द्व एकवद्भवति, न द्विप्रकृतिः।
बदरामलके।
रथिकाश्वारोहौ।
प्लक्षन्यग्रोधौ।
रुरुपृषतौ।
हंसचक्रवाकौ।
यूकालिक्षे व्रीहियवौ।
कुशकाशौ।।

---

1. <विप्रतिषिद्धं च अनधिकरण-वाचि>#।। पाणिनीयसूत्र २,४.१३।।

_______काशिका २,४.१३:

परस्परविरुद्धं विप्रतिषिद्धं।
विप्रतिषिद्ध-अर्थानां शब्दानां अनधिकरण-वाचिनां अद्रव्य-वाचिनां द्वन्द्व एकवद्भवति।
विभाष-अनुकर्षण-अर्थश्चकारः।
शीतोष्णम्, शीतोष्णे।
सुख-दुःखम्, सुख-दुःखे।
जीवितमरणम्, जीवितमरणे।
विप्रतिषिद्धं इति किं? काम-क्रोधौ।
अनधिकरणवाचि इति किं? शीतोष्णे उदके।।

---

1. <न दधिपय-आदीनि>#।। पाणिनीयसूत्र २,४.१४।।

_______काशिका २,४.१४:

यथायथं एकवद्भावे प्राप्ते प्रतिषेध आरभ्यते।
दधिपय-आदिनि शब्द-रूपाणि न+एकवद्भवन्ति।
दधिपयसी।
सर्पिर्मधुनी।
मधुसपिषी।
ब्रह्मप्रजापती।
शिववैश्रवणौ।
स्कन्दविशाखौ।
परिव्राट्कौशिकौ प्रवर्ग्योपसदौ।
शौक्लकृष्णौ।
इध्माबर्हिषी।
निपातनाद्दीर्घः।
दीक्षातपसी।

श्रद्धातपसी ।
मेधातपसी ।
अध्ययनतपसी ।
उलूखलमुसले ।
आद्यावसाने ।
श्रद्धामेधे ।
ऋक्षामे ।
वाङ्मनसे । ।

---

1. <अधिकरन-एतावत्त्वे च># । । पाणिनीयसूत्र २,४.१५ । ।

_______काशिका २,४.१५ः

न इति वर्तते ।
अधिकरणं वर्ति-पदार्थः ।
स हि समासस्य अर्थस्य अधारः ।
तस्य+एतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो न+एकवद्भवति ।
यथायथं एकवद्भावः प्राप्तः प्रतिषिध्यते ।
दश दन्तोष्ठाः ।
दश मार्दङ्गिकपाणविकाः । ।

---

[#१५७]

1. <विभाषा समीपे># । । पाणिनीयसूत्र २,४.१६ । ।

_______काशिका २,४.१६ः

अधिकरण-एतावत्त्वस्य समीपे विभाषा द्वन्द्वः एकवद्भवति ।
उपदशं दन्तोष्ठम्, उपदशाः दन्तोष्ठाः ।
उपदशं मार्दङ्गिकपाणविकम्, उपदशा मार्दङ्गिकपाणविकाः ।
अव्ययस्य सङ्ख्यया+अव्ययीभावोऽपि विहितः, बहुव्रीहिरपि ।
तत्र+एकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः । ।

---

1. <स नपुंसकम्># । । पाणिनीयसूत्र २,४.१७ । ।

_______काशिका २,४.१७ः

यस्य अयं एकवद्भावो विहितः स नपुंसक-लिङ्गो भवति द्विगुर्द्वन्द्वश्च ।
पञ्चगवं ।
दशगवं ।
द्वन्द्वः खल्वपि -- पाणिपादं ।
शिरोग्रीवं ।
परलिङ्गतापवादो योगः ।
अकारान्त-उत्तरपदो द्विगुः स्त्रियां भाष्यते ।
पञ्चपूली ।
दशरथी ।
वा+आबन्तः स्त्रियां इष्टः ।
पञ्चखट्वम्, पञ्चखट्वी ।
अनो नलोपश्च वा च द्विगुः स्त्रियां ।
पञ्चतक्षम्, पञ्चतक्षी ।
पात्रादिभ्यः प्रतिषेधो वक्तव्यः ।
पञ्चपात्रं ।
चतुर्युगं ।
त्रिभुवनं । ।

---

1. <अव्ययीभावश्च># । । पाणिनीयसूत्र २,४.१८ । ।

_______काशिका २,४.१८ः

अव्ययीभावश्च समासो नपुंसक-लिङ्गो भवति ।
अधिस्त्रि ।
उपकुमारि ।
उन्मत्तगङ्गं ।
लोहितगङ्गं ।
पूर्वपदार्थ-प्रधानस्य अलिङ्गता+एव प्राप्ता, अन्यपदार्थ-प्रधानस्य अभिधेयवल्-लिङ्गता, अत इदं उच्यते ।
अनुक्त-समुच्चयार्थश्चकारः ।

[#१५८]

पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते ।
पुण्याहं ।
सुदिनाहं ।
पथः सङ्ख्याव्यय-आदेः क्लीबतेष्यते ।
त्रिपथं ।
चतुष्पथं ।
विपथं ।

सुपथं ।
क्रिया-विशेषणानां च क्लीबतेष्यते ।
मृदु पचति ।
शोभनं पचति ।

---

1. <तत्पुरुषोऽनञ्-कर्मधारयः># । । पाणिनीयसूत्र २,४.१९ । ।

_______काशिका २,४.१९ः

अधिकारोऽयं उत्तरसूत्रेषु उपतिष्ठते ।
नञ्-समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसक-लिङ्गो भवति इत्येतदधिकृतं विदितव्यम्, यदित ऊर्ध्वं अनुक्रमिष्यामस्तत्र ।
वक्ष्यति -- विभाषा सेना-सुरा-च्छाया-शाला-निशानां (*२,४.२५) ।
ब्राह्मणसेनम्, ब्राह्मणसेना ।
तत्पुरुषः इति किं ? दृढसेनो राजा अनञिति किं ? असेना ।
अकर्मधार्यः इति किं ? परमसेना । ।

---

1. <सञ्ज्ञायां कन्ता-उशीनरेषु># । । पाणिनीयसूत्र २,४.२० । ।

_______काशिका २,४.२०ः

सञ्ज्ञायां विषये कन्था-अनतस्तत्पुरुषो नपुंसक-लिङ्गो भवति, सा चेत्कन्था उशीनरेसु भवति ।
सौशमिकन्थं ।
आह्वरकन्थं ।
सञ्ज्ञायां इति किं ? वीरणकन्था ।
उशीनरेषु इति किं ? दाक्षिकन्था ।
परविल्-लिङ्गता पवाद इदं प्रकरनं । ।

---

1. <उपज्ञा-उपक्रमं तद्-आद्य्-आचिख्यासायाम्># । । पाणिनीयसूत्र २,४.२१ । ।

_______काशिका २,४.२१ः

उप्ज्ञायते इत्युपज्ञा ।

उपक्रम्यते इत्युपक्रमः ।
उपज्जा च उपक्रमश्च उपज्ञोपक्रमं ।
तदन्तस्तत्पुरुषो नपुंसक-लिङ्गो भवति तद्-आद्य्-आचिख्यासायाम्, तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायां ।
आख्यातुं इच्छा आचिख्यासा ।
यद्युपज्ञेयस्य+उपक्रम्यस्य च अर्थस्य आदिराख्यातुं इष्यते तत एतद्भवति ।
पाणिन्य्-उपज्ञमकालकं व्याकरणं ।
पाणिनेरुपज्ञानेन प्रथं अतः प्रणीतं अकालकं व्याकरणं ।
व्याड्युपज्ञं दशहुष्करणं ।
आद्योपक्रमं प्रासादः ।
नन्दोपक्रमाणि मानानि ।
दर्शनीयोपक्रमं सुकुमारं ।
उपज्ञा-उपक्रमं इति किं ? वाल्मीकिश्लोकाः ।
तद्-आद्य्-आचिख्यासायां इति किं ? देवदत्तोपज्ञो रथः ।
यज्ञदत्तोपक्रमो रथः । ।

---

[#१५९]

1. <छाया बाहुल्ये># । । पाणिनीयसूत्र २,४.२२ । ।

_______काशिका २,४.२२ः

विभाषा सेना-सुरा-च्छाया. शाला-निशानां (*२,४.२५) ।
इति विभाषां वक्ष्यति ।
नित्य-अर्थं इदं वचनं ।
छाया-अन्तस्तत्पुरुषो नपुंसक-लिङ्गो भवति बाहुल्ये गम्यमाने ।
पूर्वपदार्थ-धर्मः बाहुल्यं ।
शलभादीनां हि बहुत्वं गम्यते ।
शलभच्छायं ।
इक्षुच्छायं ।
बहुल्ये इति किं ? कुड्यच्छाया । ।

---

1. <सभा राजाऽमनुस्य-पूर्वा># । । पाणिनीयसूत्र २,४.२३ । ।

_______काशिका २,४.२३ः

सभान्तस्तत्पुरुषो नपुंसक-लिङ्गो भवति, सा चेत्सभा राजपूर्वा, अमनुस्य-पूर्वा च भवति ।
इनसभं ।
ईश्वरसभं ।

इह कस्मान्न भवति, राजसभा ? पर्याय-वचनस्य+एव+इष्यते ।
तदुक्तं - जित्पर्यायस्य+एव राजाध्यर्थं इति ।
अमनुष्य-पूर्वा - रक्षःसभं ।
पिशाचसभं ।
इह कस्मान्न भवति, काष्ठसभा ? अमनुष्य-शब्दो रूढिरूपेण्रक्षःपिशाचादिष्वेव वर्तते ।
राजा+अमनुष्य-पूर्वा इति किं ? देवदत्तसभा । ।

---

1. <अशाला च># । । पाणिनीयसूत्र २,४.२४ । ।

_______काशिका २,४.२४ः

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसक-लिङ्गो भवति ।
सङ्घातवचनोऽत्र सभा-शब्दो गृह्यते ।
स्त्रीसभं ।
दासीसभं ।
दासीसङ्घातः इत्यर्थः ।
अशाला इति किं ।
अनाथकुटी इत्यर्थः । ।

---

1. <विभाषा सेना-सुरा-च्छाया-शाला-निशानाम्># । । पाणिनीयसूत्र २,४.२५ । ।

_______काशिका २,४.२५ः

सेना सुरा छाया शाला निशा इत्येवं अन्तस्तत्पुरुषो नपुंसक-लिङ्गो भवति विभाषा ।
ब्राह्मणसेनम्, ब्राह्मणसेना ।
यवसुरम्, यवसुरा ।
कुड्यच्छायम्, कुड्यच्छाया ।
गोशालम्, गोशाला ।
श्वनिशं ।
श्वनिशा । ।

---

1. <परवल्-लिङ्गं द्वन्द्व-तत्पुरुषयोः># । । पाणिनीयसूत्र २,४.२६ । ।

_______काशिका २,४.२६ः

समाहार-द्वन्द्वे नपुंसक-लिङ्गस्य विहितत्वादितरेतरयोग-द्वन्द्वस्य+इदं ग्रहणं।
परस्य यल्लिङ्गं तत्भवति द्वन्द्वस्य तत्पुरुषस्य च।
उत्तरपद-लिङ्गं द्वन्द्व-तत्पुरुषयोर्विधीयते।
कुक्कुटमयूर्याविमे।
मयूरीकुक्कुटाविमौ।
तत्पुरुषस्य - अर्धं पिप्पल्याः अर्धपिप्पली।
अर्धकोशातकी।
अर्धनखरञ्जनी।
द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः।
द्विगुः - पञ्चसु कपालेसु संस्कृतः पुरोडाशः पञ्चकपालः।

[#१६०]

प्राप्तो जीविकां प्राप्तजीविकः।
आपन्नो जीविकां आपन्नजीविकः।
अलं जीविकायै अलंजीविकः।
गतिसमासः - निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः।।

---

1. <पूर्ववद्-अश्वव-डवौ>#।। पाणिनीयसूत्र २,४.२७।।

_______काशिका २,४.२७ः

अश्व-वडवयोर्विभाष-एकवद्-भावः उक्तः।
तत्र+एकवद्-भावादन्यत्र परविल्लिङ्गतायां प्राप्तायां इदं आरभ्यते।
अश्व-वडवयोः पूर्ववल्लिङ्गं भवति।
अश्वश्च वडवा च अश्ववडवौ।
अर्थ-अतिदेशश्च अयम्, न निपातनं।
तत्र द्विवचनमतन्त्रं।
वचन-अन्तरेऽपि पूर्ववल्लिङ्गता भवति, अश्व-वडवान्, अश्व-वडवैः इति।।

---

1. <हेमन्त-शिशिरावहो-रात्रे च छन्दसि>#।। पाणिनीयसूत्र २,४.२८।।

_______काशिका २,४.२८ः

पूर्ववतिति वर्तते ।
हेमन्त-शिशिरौ अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति ।
हेमन्तशिशिरावृतूनां प्रीणामि ।
अहोरात्रे इदं ब्रूमः ।
परवल्लिङ्गत-अपवादो योगः ।
अर्थ-अतिदेशश्च अयं न निपातनं, तेन द्विवचनमतन्त्रं ।
वचन-अन्तरेऽपि पूर्ववल्लिङ्गता भवति ।
पूर्व-पक्षाश्चितयः ।
अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः ।
छन्दसि इति किं ? दुःखे हेमन्तशिशिरे ।
अहोरात्राविमौ पुण्यौ ।
छन्दसि लिङ्गव्यत्यय उक्तः, तस्य+एव अयं प्रपञ्चः ।।

---

1. <रात्र-अह्न-अहाः पुंसि># ।। पाणिनीयसूत्र २,४.२९ ।।

_______काशिका २,४.२९ः

कृतसमासान्तानां निर्देशः ।
रात्र अह्न अह इत्येते पुंसि भाष्यन्ते ।
परवल्लिङ्गतया स्त्री-नपुंसकयोः प्राप्तयोरिदं वचनं ।
द्विरात्रः ।
त्रिरात्रः ।
चतूरात्रः ।
पूर्वाह्णः ।
अपराह्णः ।
मध्याह्नः ।
द्व्यहः ।
त्र्यहः ।
अनुवाकादयः पुंसीति वक्तव्यं ।
अनुवाकः ।
शंयुवाकः ।
सूक्तवाकः ।।

---

1. <अपथं नपुंसकम्># ।। पाणिनीयसूत्र २,४.३० ।।

_______काशिका २,४.३०ः

अपथ-शब्दो नपुंसक-लिङ्गो भवति ।
अपथं इदं ।

अपथानि गाहते मूढः ।
इह कस्मान्न भवति, अपथो देशः, अपथा नगरी ? तत्पुरुषः इति वर्तते । ।

---

1. <अर्धर्चाः पुंसि च># । । पाणिनीयसूत्र २,४.३१ । ।

_______काशिका २,४.३१ः

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते ।
अर्धर्चः ।
अर्धर्चं ।
गोमयः ।
गोमयं ।

[#१६१]

शब्द-रूप-आश्रया च+इयं द्वि-लिङ्गता क्वचिदर्थभेदेन अपि व्यवतिष्ठते, यथा - पद्मशङ्ख-शब्दौ निधि-वचनौ पुंलिङ्गौ, जलजे उभय-लिङ्गौ ।
भूत-शब्दः पिशाचे उभय-लिङ्गः, क्रिया-शब्दस्य अभिधेयवल्लिङ्गं ।
सैन्धव-शब्दो लवणे उभयलिङ्गः, यौगिकस्य अभिधेयवल्लिङ्गं ।
सार-शब्द उत्कर्षे पुंलिङ्गः, न्यायादनपेते नपुंसकम्, नैतत्सारं इति ।
धर्मः इत्यपूर्वे पुंलिङ्गः, तत्साधने नपुंसकं ।
तानि धर्माणि प्रथमान्यासन् ।
अर्धर्च ।
गोमय ।
कषाय ।
कार्षापण ।
कुतप ।
कपाट ।
शङ्ख ।
चक्र ।
गूथ ।
यूथ ।
ध्वज ।
कबन्ध ।
पद्म ।
गृह ।
सरक ।
कंस ।
दिवस ।
यूष ।
अन्धकार ।
दण्ड ।
कमण्डलु ।
मन्ड ।
भूत ।

द्वीप ।
द्यूत ।
चक्र ।
धर्म ।
कर्मन् ।
मोदक ।
शतमान ।
यान ।
नख ।
नखर ।
चरण ।
पुच्छ ।
दाडिम ।
हिम ।
रजत ।
सक्तु ।
पिधान ।
सार ।
पात्र ।
घृत ।
सैन्धव ।
औषध ।
आढक ।
चषक ।
द्रोण ।
खलीन ।
पात्रीव ।
षष्टिक ।
वार ।
बान ।
प्रोथ ।
कपैत्थ ।
शुष्क ।
शील ।
शुल्ब ।
सीधु ।
कवच ।
रेणु ।
कपट ।
सीकर ।
मुसल ।
सुवर्ण ।
यूप ।
चमस ।
वर्ण ।
क्षीर ।
कर्ष ।
आकाश ।
अष्टापद ।

मङ्गल ।
निधन ।
निर्यास ।
जृम्भ ।
वृत्त ।
पुस्त ।
क्ष्वेडित ।
शृङ्ग ।
शृङ्खल ।
मधु ।
मूल ।
मूलक ।
शराव ।
शाल ।
वप्र ।
विमान ।
मुख ।
प्रग्रीव ।
शूल ।
वज्र ।
कर्पट ।
शिखर ।
कल्क ।
नाट ।
मस्तक ।
वलय ।
कुसुम ।
तृण ।
पङ्क ।
कुण्डल ।
किरीट ।
अर्बुद ।
अङ्कुश ।
तिमिर ।
आश्रम ।
भूषण ।
इल्वस ।
मुकुल ।
वसन्त ।
तडाग ।
पिटक ।
विटङ्क ।
माष ।
कोश ।
फलक ।
दिन ।
दैवत ।
पिनाक ।
समर ।

स्थाणु ।
अनीक ।
उपवास ।
शाक ।
कर्पास ।
चशाल ।
खण्ड ।
दर ।
विटप ।
रण ।
बल ।
मल ।
मृणाल ।
हस्त ।
सूत्र ।
ताण्डव ।
गाण्डीव ।
मण्डप ।
पटह ।
सौध ।
पार्श्व ।
शरीर ।
फल ।
छल ।
पूर ।
राष्ट्र ।
विश्व ।
अम्बर ।
कुट्टिम ।
मण्डल ।
ककुद ।
तोमर ।
तोरण ।
मञ्चक ।
पुङ्ख ।
मध्य ।
बाल ।
वल्मीक ।
वर्ष ।
वस्त्र ।
देह ।
उद्यान ।
उद्योग ।
स्नेह ।
स्वर ।
सङ्गम ।
निष्क ।
क्षेम ।
शूक ।

छत्र।
पवित्र।
यौवन।
पानक।
मूषिक।
वल्कल।
कुञ्ज।
विहार।
लोहित।
विषाण।
भवन।
अरण्य।
पुलिन।
दृढ।
आसन।
ऐरावत।
शूर्प।
तीर्थ।
लोमश।
तमाल।
लोह।
दण्डक।
शपथ।
प्रतिसर।
दारु।
धनुस्।
मान।
तङ्क।
वितङ्क।
मव।
सहस्र।
ओदन।
प्रवाल।
शकट।
अपराह्ण।
नीड।
शकल।
इति अर्धर्चादिः।।

---

1. <इदमोऽन्वादेशेऽशनुदात्तस्तृतीया-आदौ>#।।पाणिनीयसूत्र २,४.३२।।

_______काशिका २,४.३२ः

आदेशः कथनं।
अनवादेशोऽनुकथनं।

इदमोऽन्वादेश-विषयस्य अश्-आदेशो भवत्यनुदात्तः, तृतीय-अदौ विभक्तौ परतः ।
आभ्यां छात्राभ्यं रात्रिरधीता, अथो आभ्यामहरप्यधीतं ।
अस्मै छात्राय कम्बलं देहि, अथोऽस्मै शाटकं अपि देहि ।
अस्य छात्रस्य शोभनं शीलम्, अथोऽस्य प्रभूतं स्वं ।
अश्-आदेश-वचनं साकच्क-अर्थं ।
इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतं ।
नेह पश्चादुच्चारणमात्रं अन्वादेशः ।
किं तर्हि ? एकस्य+एव अभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनं अन्वादेशः ।
तेन+इह न भवति, देवदत्तं भोजय, इमं च यज्ञदत्तं इति । ।

---

[#१६२]

1. <एतदस्त्र-तसोस्त्र-तसौ च अनुदात्तौ># । । पाणिनीयसूत्र २,४.३३ । ।

_______काशिका २,४.३३ः

अन्वादेश अनुदात्त इति वर्तते ।
एतदोऽन्वादेश-विषयस्य अशादेशो भवति अनुदात्तः त्र-तसोः परतः ।
तौ च अपि त्र-तसावनुदात्तौ भवतः ।
एतस्मिन्ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे ।
एतस्माच्छात्राच्छन्तोऽधीष्व, अथो अतो व्याकरणं अप्यधीष्व ।
सर्वानुदात्तं पदं भवति ।
एतदोऽशित्यादेशे लभे पुनर्वचनं अनुदात्त-अर्थं । ।

---

1. <द्वितीया-टा-ओस्स्वेनः># । । पाणिनीयसूत्र २,४.३४ । ।

_______काशिका २,४.३४ः

अन्वादेशेऽनुदात्तः इति वर्तते ।
द्वितीया टा ओसित्येतेषु परत इदं एतदोरन्वादेश-विषययोः एन-शब्द आदेशो आदेशो भवति अनुदात्तः ।
इदमो मण्डूकप्लुतिन्यायेन अनुवृत्तिः ।
इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय ।
अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतं ।
अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वं ।
एतदः खल्वपि -- एतं छात्रं छन्तोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय ।
एतेन छात्रेन रात्रिरधीता, अथो एनेनाहरप्यधीतं ।
एतयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वं ।
एनदिति नपुंसकैकवचने वक्तव्यं ।
प्रक्षालयैनथ् ।

परिवर्तयैनथ् ।
इह कस्मान्न भवति, अयं दण्डो हरानेन, एतमातं ङितं विद्यातिति ? यत्र किञ्चिद्विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः ।
इह तु वस्तु-निर्देशमात्रं कृत्वा एकं एव विधानं । ।

---

1. <आर्धधातुके># । । पाणिनीयसूत्र २,४.३५ । ।

_______काशिका २,४.३५ः

आर्धधातुके इत्यधिकारोऽयम्, ण्य-क्षत्रिय-आर्ष-ञितो यूनि लुग्-अण्-इञोः (*२,४.५८) इति यावथ् ।
यदित ऊर्ध्वं अनुक्रमिष्यमस्तदार्धधातुके वेदितव्यं ।
वक्ष्यति हनो वध लिङि (*२,४.४२) -- वध्याथ् ।
आर्धधातुके इति किं ? हन्याथ् ।
विषय-सप्तमी च+इयं, न परसप्तमी ।
तेन आर्धधातुक-विवक्षायां आदेशेषु कृतेषु पश्चाद्यथा-प्राप्तं प्रत्यया भवन्ति ।
भव्यं ।
प्रवेयं ।
आख्येयं । ।

---

1. <अदो जग्धिर्ल्यप्ति किति># । । पाणिनीयसूत्र २,४.३६ । ।

_______काशिका २,४.३६ः

अदो जग्धिः आदेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये ।
प्रजग्ध्य ।
विजग्ध्य ।
जग्धः ।
जग्धवान् ।
इकार उच्चारण-अर्थः, न अनुबन्धः ।
तेन नुं न भवति ।
एवं वच्यादीनां अपि ।
इह कस्मान्न भवति, अन्नं ? अन्नाण्णः (*४,४.८५) इति निपातनाथ् ।

[#१६३]

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्य्-अन्तरङ्गाणां ल्यपा भवति बाधनं । ।
ति इति किं ? अद्यते ।
किति इति किं ? अत्तव्यं । ।

---

1. <लुङ्-सनोर्घसृ># । । पाणिनीयसूत्र २,४.३७ । ।

_______काशिका २,४.३७ः

लुङि सनि च परतोऽदो घसृआदेशो भवति ।
ऋदित्-करणं अङर्थं ।
लुङि --अघसत्, अघसताम्, अघसन् ।
सनि -- जिघत्सति, जिघत्सतः, जिघत्सन्ति ।
घसृभावेऽच्युपसङ्ख्यानं ।
प्रात्ति इति प्रघसः । ।

---

1. <घञ्-अपोश्च># । । पाणिनीयसूत्र २,४.३८ । ।

_______काशिका २,४.३८ः

घञि अपि च परतः अदो घसृआदेशो भवति ।
घासः ।
प्रघसः ।
उपसर्गेऽदः (*३,३.५९) इत्यप् । ।

---

1. <बहुलं छन्दसि># । । पाणिनीयसूत्र २,४.३९ । ।

_______काशिका २,४.३९ः

छन्दसि विषये बहुलं अदो घसृआदेशो भवति ।
घस्तां नूनं ।
सग्धिश्च मे ।
न च भवति ।
आत्तामद्य मद्यतो मेद उद्भृतं ।
अन्यतरस्य अंग्रहणं एव कस्मान्न क्रियते तदेव+उत्तर-अर्थं अपि भविष्यति ? कार्यान्तर-अर्थं बहुल-ग्रहणं ।
घस्तां इत्यत्र+उपधा-लोपो न भवति । ।

---

1. <लिट्यन्तरस्याम्># ।। पाणिनीयसूत्र २,४.४० ।।

_______काशिका २,४.४०ः

लिटि परतोऽदोऽन्यतरस्यां घस्ल्-आदेशो भवति ।
जघास, जक्षतुः, जक्षुः ।
आद, आदतुः, आदुः ।।

---

1. <वेञो वयिः># ।। पाणिनीयसूत्र २,४.४१ ।।

_______काशिका २,४.४१ः

लिट्यन्यतरस्यां इति वर्तते ।
वेञो वयिः आदेशो भवति अन्यत्रस्यां लिटि परतः ।
इकार उच्चारण-अर्थः ।
उवाय, ऊयतुः, ऊयुः ।
पक्षे -- ऊवतुः, ऊवुः ।
लिटि वयो यः (*६,१.३८) इति यकारस्य सम्प्रसारणं प्रतिषिध्यते ।
वश्च अन्यतरस्यां किति (*६,१.३९) इति व-कारो विधीयते -- ववौ, ववतुः, ववुः ।
वेञः (*६,१.४०) इति सम्प्रसारणं न भवति ।।

---

[#१६४]

1. <हनो वध लिङि># ।। पाणिनीयसूत्र २,४.४२ ।।

_______काशिका २,४.४२ः

हन्तेर्धातोः वध इत्ययं आदेशो भवति लिङि परत आर्धधातुके ।
वध्यात्, वध्यास्ताम्, वध्यासुः ।
अकार-अन्तश्च अयं आदेशः ।
तत्र अकारस्य लोपो भवति ।
तस्य स्थानिवद्भावादवधीतिति हलन्त-लक्षना वृद्धिः न भवति ।।

---

1. <लुङि च># । । पाणिनीयसूत्र २,४.४३ । ।

_______काशिका २,४.४३ः

लुङि च परतः हनो वध इत्ययं आदेशो भवति ।
अवधीत्, अवधीष्टाम्, अवधिषुः ।
योगविभाग उत्तर-अर्थः ।
आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत् । ।

---

1. <आत्मनेपदेष्वन्यतरस्याम्># । । पाणिनीयसूत्र २,४.४४ । ।

_______काशिका २,४.४४ः

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति ।
आवधिष्ट, आवधिषाताम्, आवधिषत ।
न च भवति ।
आहत, आहसाताम्, आहसत । ।

---

1. <इणो गा लुङि># । । पाणिनीयसूत्र २,४.४५ । ।

_______काशिका २,४.४५ः

इणः गा इत्ययं आवेशो भवति लुङि परतः ।
अगात्, अगाताम्, अगुः ।
लुङि इति वर्तमाने पुनर्लुङ्-ग्रहणं आत्मनेपदेष्वन्यतरस्यां (*२,४.४४) इत्येतन्मा भूथ् ।
इह त्वविशेषेण नित्यं च भवति ।
अगाथ् ।
अगायि भवता ।
इण्वदिक इत वक्तव्यं ।
अध्यगात्, अध्यगाताम्, अध्यगुः । ।

---

1. <णौ गमिरबोधने># ।। पाणिनीयसूत्र २,४.४६ ।।

_______काशिका २,४.४६ः

णौ परतः इणोऽबोधन-अर्थस्य गमिर्-आदेशो भवति ।
इकार उच्चारण-अर्थः ।
गमयति, गमयतः, गमयन्ति ।
अबोधने इति किं ? प्रत्याययति ।
इण्वदिक इत्येव, अधिगमयति ।।

---

1. <सनि च># ।। पाणिनीयसूत्र २,४.४७ ।।

_______काशिका २,४.४७ः

सनि परतः इणोऽबोधन-अर्थस्य गमिरादेशो भवति ।
जिगमिषति, जिगमिषतः, जिगमिषन्ति ।
अबोधने इत्येव, अर्थान्प्रतीषिषति ।
इण्वदिक इत्येव, अधिजिगमिषति ।
योग-विभाग उत्तरार्थः ।
इङ्श्च (*२,४.४८) इति सन्येव यथा स्यात् ।।

---

1. <इङ्श्च># ।। पाणिनीयसूत्र २,४.४८ ।।

_______काशिका २,४.४८ः

इङ्श्च सनि परतो गमिरादेशो भवति ।
अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते ।।

---

[#१६५]

1. <गाङ्लिटि># । । पाणिनीयसूत्र २,४.४९ । ।

_______काशिका २,४.४९ः

गाङदेशो भवति इङो लिटि परतः ।
अधिजगे, अधिजगाते, अधिजगिरे ।
गाङोऽनुबन्ध-ग्रहणं विशेषन-अर्थम्, गाङ्कुटादिभ्योऽञ्णिन्ङित्(*१,२.१) इत्यत्र अस्य ग्रहणं यथा स्याथ् ।
न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते । ।

---

1. <विभाषा लुङ्ऌङोः># । । पाणिनीयसूत्र २,४.५० । ।

_______काशिका २,४.५०ः

लुगि ऌङि च परत इङो विभाषा गाङ्-आदेशो भवति ।
आदेश-पक्षे गाङ्कुटादिभ्योऽञ्णिन्डित्(*१,२.१) इति ङित्त्वम्, घु-मा-स्था-गा-पा-जहाति-सां हलि (*६,४.६६) इति ईत्वं ।
अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत ।
न च भवति ।
अध्यैष्ट, अध्यैषाताम्, अध्यैषत ।
ऌङि खल्वपि - अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त ।
न च भवति ।
अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त । ।

---

1. <णौ च संश्-चङोः># । । पाणिनीयसूत्र २,४.५१ । ।

_______काशिका २,४.५१ः

इङो गाङ्विभाषा इति वर्तते ।
णौ इति इङ्-अपेक्षया परसप्तमी, संश्-चङोः इति च ण्य्-अपेक्षया ।
णौ सन्परे चङ्परे च परतः इङो विभाषा गाङ्-आदेशो भवति ।
अधिजिगापयिषति ।
न च भवति ।
अध्यापिपयिषति ।
चङि खल्वपि - अध्यजीगपथ् ।
न च भवति ।

अध्यापिपत्।।

---

1. <अस्तेर्भूः>#।।पाणिनीयसूत्र २,४.५२।।

_______काशिका २,४.५२ः

अस्तेर्धातोर्भूः इतयं आदेशो भवति आर्धधातुके।
भविता।
भवितुं।
भवितव्यं।
इह कस्मान्न भवति, ईहामास, ईहामासतुः, ईहामासुः ? कृञ्च अनुप्रयुज्यते लिटि (*३,१.४०) इति प्रत्याहार-ग्रहणेन अस्तेर्ग्रहण-सामर्थ्याथ्।
तथा चोच्यते - अनुप्रतोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः।
इति।।

---

1. <ब्रुवो बचिः>#।।पाणिनीयसूत्र २,४.५३।।

_______काशिका २,४.५३ः

ब्रुवो वचिरादेशो भवति आर्धधातुक-विषये।
इकार उच्चारण-अर्थः।
वक्ता।
वक्तुं।
वक्तव्यं।
स्थानिवद्भावेन कर्त्-अभिप्राय-क्रिया-फल-विवक्षायां आत्मनेपदं भवति।
ऊचे।
वक्ष्यते।।

---

[#१६६]

1. <चक्षिङः ख्याञ्>#।।पाणिनीयसूत्र २,४.५४।।

_______काशिका २,४.५४ः

चक्षिङः ख्याञादेशो भवति आर्धधातुके ।
आख्याता ।
आख्यातुं ।
आख्यातव्यं ।
स्थानिवद्भावेन नित्यं आत्मनेपदं न भवति, ञकार-अनुबन्धक्-अरण-सामर्थ्याथ् ।
आख्यास्यति ।
आख्यास्यते ।
क्शादिरप्ययं आदेश इष्यते ।
आक्शाता ।
आक्शातुं ।
आक्शातव्यं ।
वर्जने प्रतिषेधो वक्तव्यः ।
दुर्जनः संचक्ष्याः ।
वर्जनीयाः इत्यर्थः ।
असनयोश्च प्रतिषेधो वक्तव्यः ।
नृचक्षा रक्षः हिंसार्थोऽत्र भातुः ।
अने खल्वपि - विचक्षणः पण्डितः ।
बहुलं सञ्ज्ञाछन्दसोरिति वक्तव्यं ।
अन्नवधकगात्रविचक्षणाजिराद्यर्थं ।।

---

1. <वा लिटि># ।। पाणिनीयसूत्र २,४.५५ ।।

________काशिका २,४.५५ः

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
लिटि परतश्चक्षिङः ख्याञादेशः वा भवति ।
आचख्यौ, आचख्यतुः, आचख्युः ।
न च भवति ।
आचचक्षे, आचचक्षाते, आचचक्षिरे ।।

---

1. <अजेर्व्यघञ्-अपोः># ।। पाणिनीयसूत्र २,४.५६ ।।

________काशिका २,४.५६ः

अजेर्धातोः वी इत्ययं आदेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा ।
प्रवयणीयः ।
प्रवायकः ।
अघञपोः इति किं ? समाजः ।

उदाजः ।
अपि तु - समजः ।
उदजः ।
सम्-उदोरजः पशुषु (*३,३.६९) इत्यप् ।
दीर्घोच्चारणं किं ? प्रवीताः ।
भञपोः प्रतिषेधे क्यप उपसङ्ख्यानं कर्तव्यं ।
समज्या ।
वलादावार्धधातुके विकल्प इष्यते ।
प्रवेता, प्राजिता ।
प्रवेतुम्, प्राजितुं । ।

---

[#१६७]

1. <वा यौ># । । पाणिनीयसूत्र २,४.५७ । ।

_______काशिका २,४.५७ः

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
यु इति ल्युटो ग्रहणं ।
यौ प्रभूते अजे र्वा वी इत्ययं आदेशो भवति ।
प्रवयणो दण्डः, प्राजनो दण्डः ।
प्रवयणमानय, प्राजनमानय । ।

---

1. <ण्य-क्षत्रिय-आर्ष-ञितो यूनि लुगण्-इञोः># । । पाणिनीयसूत्र २,४.५८ । ।

_______काशिका २,४.५८ः

ण्य-आदयो गोत्र-प्रत्ययाः ।
ण्यान्तात्क्षत्रियगोत्रादार्षाद्ञितश्च प्रयोः अण्डञोर्यूनि लुग्भवति ।
ण्यान्तात्तावत्-- कुर्व्-आदिभ्यो ण्यः (*४,१.१५१) , तस्माद्यूनि इञ्, तस्य लुक् ।
कौरव्यः पिता ।
कौरव्यः पुत्रः ।
ननु च कौरव्य-शब्दः तिकादिषु पठ्यते, ततः फिञा भवितव्यम्, कौरव्यायणिः इति ? क्षत्रियगोत्रस्य तत्र ग्रहणम्, कुरु-न्-आदिभ्यो ण्यः (*४,१.१७२) इत्यनेन विहितस्य, इदं तु ब्राह्मणगोत्रम्, कुर्व्-आदिभ्यो ण्यः (*४,१.१५१) इति ।
क्षत्रिय -- ऋष्य्-अन्धक-वृष्णि-कुरुभ्यश्च (*४,१.११४) इत्यण्, तस्माद्यूनि इञ्, तस्य लुक् ।
श्वाफल्कः पिता ।
श्वाफल्कः पुत्रः ।
आर्ष -- ऋष्यण(*४,१.११४), तस्माद्यूनि इञ्, तस्य लुक् ।

वासिष्ठः पिता ।
वासिष्ठः पुत्रः ।
ञित्- अनृष्य्-आनन्तर्ये विद-आदिभ्योऽञ्(*४,१.१०४), तस्माद्यूनि इञ्, तस्य लुक् ।
बैदः पिता ।
वैदः पुत्रः ।
अणः खल्वपि -- तिक-आदिभ्यः फिञ्(*४,१.१५४), तस्माद्यूनि प्राग्दीव्यतोऽण्(*४,१.८३), तस्य लुक् ।
तैकायनिः पिता ।
तैकायनिः पुत्रः ।
एतेभ्यः इति किं ? शिव-आदिभ्योऽण्(*४,१.११२), तस्माद्यूनि अत इञ्(*४,१.९५), तस्य लुग्न भवति ।
कौहडः पिता ।
कौहडि पुत्रः ।
यूनि इति किं ? वामरथ्यस्य छात्राः वामरथाः ।
कुर्व्-आदिभ्यो ण्यः (*४,१.१५१) इति ण्यः, तस्मात्कण्व-आदिभ्यो गोत्रे (*४,२.१११) इति शैषिकोऽण् ।
तस्य लुग्न भवति ।
अणिञोः इति किं ? दाक्षेरपत्यं युवा दाक्षायणः ।
अब्राहमणगोत्रमात्रमात्राद्युवप्रत्ययस्तोपसङ्ह्यानं ।
बौधिः पिता ।
बौधिः पुत्रः ।
जाबालिः पिता ।
जाबालिः पुत्रः ।
औदुम्बरिः पिता ।
औदुम्बरिः पुत्रः ।
भाण्डीजङ्घिः पिता ।
भाण्डीजङ्घिः पुत्रः ।
शाल्व-अवयव-लक्षन इञ्, तस्मात्फक्, तस्य लुक् ।
पैलादि-दर्शनात्सिद्धं । ।

---

1. <पैल-आदिब्यश्च># । । पाणिनीयसूत्र २,४.५९ । ।

_______काशिका २,४.५९ः

पैल इत्येवं आदिभ्यश्च युव-प्रत्ययस्य लुग्भवति ।
पीलाया वा (*४,१.११८) इत्यण्, तस्मदणो द्व्यचः (*४,१.१५६) इति फिञ्, तस्य लुक् ।
पैलः पिता ।
पैलः पुत्रः ।
अन्ये पैल-आदयः इञन्ताः तेभ्यः इञः प्राचां (*२,४.६०) इति लुकि सिद्धेऽप्राग्-अर्थः पाठः ।
पैल ।
शालङ्कि ।
सात्यकि ।
सात्यकामि ।
दैवि ।
औदमज्जि ।
औदव्रजि ।
औदमेघि ।

औदबुद्धि ।
दैवस्थानि ।
पैङ्गलायनि ।
राणायनि ।
रौहक्षिति ।
भौलिङ्गि ।
औद्गाहमानि ।
औज्जिहानि ।
तद्राजाच्चाणः ।
आकृतिगणोऽयं । ।

---

[#१६८]

1. <इञः प्राचाम्># । । पाणिनीयसूत्र २,४.६० । ।

_______काशिका २,४.६०:

गोत्रे य इञ्तदन्ताद्युव-प्रत्ययस्य लुग्भवति ।
गोत्र-विशेषनं प्राग्-ग्रहनम्, न विकल्प-अर्थं ।
पान्नागारेरपत्यं युवा ।
यञ्-इञोश्च (*४,१.१०१) इति फक्, तस्य लुक् ।
पान्नागारिः पिता ।
पान्न्नगारिः पुत्रः ।
मन्थरैषणिः पिता ।
मान्थरैषणिः पुत्रः ।
प्राचां इति किं ? दाक्षिः पिता ।
दाक्षायणः पुत्रः । ।

---

1. <न तौल्वलिभ्यः># । । पाणिनीयसूत्र २,४.६१ । ।

_______काशिका २,४.६१:
अनन्तरेण प्राप्तो लुक्प्रतिषिध्यते ।
तौल्वल्य्-आदिभ्यः परस्य युवप्रत्ययस्य न लुग्भवति ।
तौल्वलिः पिता ।
तौल्वलायनः पुत्रः ।
तौल्वलि ।
धारणि ।
रावणि ।
पारणि ।

दैलीपि ।
दैवलि ।
दैवमति ।
दैवयज्ञि ।
प्रावाहणि ।
मान्धातकि ।
आनुहारति ।
श्वाफल्कि ।
आनुमति ।
आहिंसि ।
आसुरि ।
आयुधि ।
नैमिषि ।
आसिबन्धकि ।
बैकि ।
आन्तरहाति ।
पौष्करसादि ।
वैरकि ।
वैलकि ।
वैहति ।
वैकर्णि ।
कारेणुपालि ।
कामालि । ।

---

1. <तद्राजस्य बहुषु तेन+एव अस्त्रियाम्># । । पाणिनीयसूत्र २,४.६२ । ।

_______काशिका २,४.६२ः

ते तद्राजाः (*४,१.१७२), ञ्य-आदयस्तद्राजाः (*५,३.११९) इति वक्ष्यति, तस्य तद्राज-सञ्ज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग्भवति, तेन+एव चेत्तद्राजेन कृतं बहुत्वं भवति ।
अङ्गाः ।
वङ्गाः ।
पुण्ड्राः ।
सुह्माः ।
मगधाः ।
लोहध्वजाः ।
व्रीहिमन्तः ।
तद्राजस्य इति किं ? औपगवाः ।
बहुषु इति किं ? आङ्गः ।
तेन+एव ग्रहणं किं ? प्रियो वाङ्गो येषां ते इमे प्रियवाङ्गाः ।
अस्त्रियां इति किं ? आङ्ग्यः स्त्रियः । ।

1. <यस्क-आदिभ्यो गोत्रे># । । पाणिनीयसूत्र २,४.६३ । ।

_______काशिका २,४.६३ः

बहुषु तेन+एव अस्त्रियां इति सर्वं अनुवर्तते ।
यस्क इत्येवं आदिभ्यः परस्य गोत्र-प्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग्भवति, तेन+एव चेद्गोत्र-प्रत्ययेन कृतं बहुत्वं भवति ।
प्रत्यय-विधेश्च अन्यत्र लौकिकस्य गोत्रस्य ग्रहणं इत्यनन्तरापत्येऽपि लुग्भवत्येव ।
यस्काः ।
लभ्याः ।
बहुषु इत्येव, यास्काः ।
तेन+एव इत्येव, प्रिययास्काः ।
अस्त्रियां इत्येव, यास्क्यः स्त्रियः ।
गोत्रे इति किं ? यास्काश्छात्राः ।

[#१६९]

यस्क ।
लभ्य ।
दुह्य ।
अयःस्थूण ।
तृणकर्ण ।
एते पञ्च शिवादिसु पठ्यन्ते ।
ततः परेभ्यः षड्भ्यः इञ् ।
सदामत्त ।
कम्बलभार ।
बहिर्योग ।
कर्णाटक ।
पिण्डीजङ्घ ।
बकसक्थ ।
ततः परेभ्यश्चतुर्भ्यः गृष्ट्य्-आदिभ्यश्च (*४,१.१३६) इति ढञ् ।
बस्ति ।
कुद्रि ।
अजबस्ति ।
मित्रयु ।
ततः परेभ्यो द्वादशभ्य इञ् ।
रक्षोमुख ।
जङ्घारथ ।
उत्कास ।
कटुकमन्थक ।
पुष्करसथ् ।
विषपुट ।
उपरिमेखल ।
क्रोष्तुमान् ।
क्रोष्टुपाद ।
क्रोष्टुमाय ।

शीर्षमाय ।
पुष्करसच्छब्दाद्बाह्वादिपाठादिञ् ।
खरपशब्दो नडादिषु पथ्यते, ततः फक् ।
पदक ।
वर्मक ।
एताभ्यां अत इञ्(*४,१.९५) ।
भलन्दनशब्दात्शिवादिभ्योऽण्(*४,१.११२) ।
भडिल ।
भण्डिल ।
भदित ।
भण्डित ।
एतेभ्यश्चतुर्भ्यः अश्व-आदिभ्यः फञ्(*४,१.११०) । ।

---

1. <यञ्-अञोश्च># । । पाणिनीयसूत्र २,४.६४ । ।

_______काशिका २,४.६४ः

बहुषु तेन+एव अस्त्रियाम्, गोत्रे इति च अनुवर्तते ।
यञोऽञ्श्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुङ्भवति ।
गर्ग-आदिभ्यो जञ्(*४,१.१०५) - गर्गाः ।
वत्साः ।
अञः खल्वपि, अनृष्य्-आनन्तर्ये बिद-आदिभ्योऽञ्(*४,१.१०४) -- बिदाः ।
उर्वाः ।
बहुष्वित्येव, गार्ग्यः ।
बैदः ।
तेनैव इत्येव, प्रियगार्ग्याः ।
प्रियबैदाः ।
अस्त्रियां इत्येव, गार्ग्यः स्त्रियः ।
बैद्यः स्त्रियः ।
गोत्रे इत्येव, द्वीपादनुसमुद्रं यञ्(*४,३.१०) -- द्वैप्याः ।
उत्सादिभ्योऽञ्- औत्साश्छात्राः ।
यञादीनां एकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानं ।
गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलं वा ।
गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा ।
एवं बैदस्य कुलं बैदकुलं बिदकुलं वा ।
बैदयोः कुलं बैदकुलं बिदकुलं वा ।
यञादीनां इति किं ? आङ्गकुलं ।
एकद्वयोः इति किं ? गार्गाणां कुलं गर्गकुलं ।
तत्पुरुषे इति किं ? गार्गस्य समीपं उपगार्ग्यं ।
षष्ठ्या इति किं ? परमगार्ग्यः । ।

---

1. <अत्रि-भृगु-कुत्स-वसिष्ठ-गोतम-अङ्गिरोभ्यश्च># । । पाणिनीयसूत्र २,४.६५ । ।

_______काशिका २,४.६५ः

अत्र्य्-आदिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति ।
अत्रि-शब्दादितश्च अनिञः (*४,१.१२२) इति ढक् ।
इतरेभ्यः ऋष्यण् ।
अत्रयः भृगवः ।
कुत्साः ।
वसिष्ठाः ।
गोतमाः ।
अङ्गिरसः ।
बहुषु इत्येव, आत्रेयः ।
भर्गवः ।
तेन+एव इत्येव, प्रियात्रेयाः ।
प्रियभार्गवाः ।
अस्त्रियां इति किं ? आत्रेय्यः स्त्रियः । ।

---

[#१७०]

1. <बह्वचिञः प्राच्य-भ्रतेषु># । । पाणिनीयसूत्र २,४.६६ । ।

_______काशिका २,४.६६ः

बह्वचः प्रातिपदिकात्य इञ्विहितः प्राच्य-गोत्रे भरतगोत्रे च वर्तते, तस्य बहुषु लुग्भवति ।
पन्नागाराः ।
मन्थरैषणाः ।
भरतेषु खल्वपि - युधिष्ठिराः ।
अर्जुनाः ।
बह्वचः इति किं ? बैकयः ।
पौष्पयः ।
प्राच्यभरतेषु इति किं ? बालाकयः ।
हास्तिदासयः ।
भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापन-अर्थं अन्यत्र प्राग्ग्रहणे भरत-ग्रहणं न भवति इति ।
तेन इञः प्राचां (*२,४.६०) इति भरतानां युवप्रत्ययस्य लुग्न भवति ।
अर्जुनिः पिता ।
आर्जुनायनः पुत्रः । ।

---

1. <न गोपवन-आदिभ्यः># । । पाणिनीयसूत्र २,४.६७ । ।

_______काशिका २,४.६७ः

गोपवन-आदिभ्यः प्रस्य गोत्रप्रत्ययस्य लुग्न भवति ।
बदाद्यनतर्गणोऽयं ।
ततोऽञो गोत्रप्रत्ययस्य यञ्-अञोश्च (*२,४.६४) इति लुक्प्राप्तः प्रतिषिध्यते ।
गौपवनाः ।
शैग्रवाः ।
गोपवन ।
शिग्रु ।
बिन्दु ।
भाजन ।
अश्व ।
अवतान ।
श्यामाक ।
श्वापर्ण ।
एतावन्त एव अष्टौ गोपवन-आदयः ।
परिशिष्टानां हरितादीनं प्रमादपाठः ।
ते हि चतुर्थे बिद-आदिषु पठ्यन्ते ।
तेभ्यश्च बहुषु लुग्भवत्येव, हरितः, किंदासाः इति । ।

---

1. <तिक-कितव-आदिभ्यो द्वन्द्वे># । । पाणिनीयसूत्र २,४.६८ । ।

_______काशिका २,४.६८ः

तिक-आदिभ्यः कितव-आदिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग्भवति ।
तैकायनयश्च कैतवायनयश्च, तिक-आदिभ्यः फिञ्(*४,१.१५८), तस्य लुक्, तिक-कितवाः ।
वाङ्खरयश्च भान्डीरथयश्च, अत इञ्(*४,१.९५), तस्य लुक्, वङ्खरभण्डीरथाः ।
औपकायनाश्च लामकायनाश्च, नडादिभ्यः फक्(*४,१.९९), तस्य लुक्, उपकलमकाः ।
पाफकयश्च नारकयश्च, अत इञ्(*४,१.९५), तस्य लुक्, पफकनरकाः ।
बाकनखयश्च श्वागुदपरिणद्धयश्च, अत इञ्(*४,१.९५), तस्य लुक्, बकनखश्वगुदपरिणद्धाः ।
उब्ज-शब्दातत इञ्(*४,१.९५), ककुभ-शब्दात्शिवादिभ्योऽन्(*४,१.११२) तयोर्लुक्, औब्जयश्च काकुभाश्च उब्जककुभाः ।
लाङ्कयश्च शान्तमुखयश्च, अत इञ्(*४,१.९५) तस्य लुक्, लङ्कशान्तमुखाः ।
उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कटशब्दादिञ्, तयोर्लुक्, औरसायनश्च लाङ्कटयश्च उरसलङ्कटाः ।
भ्राष्टकयश्च कापिष्ठलयश्च, अत इञ्(*४,१.९५), तस्य लुक्, भ्रष्टकक्पिष्ठलाः ।
कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च, अत इञ्(*४,१.९५), तस्य लुक्, कृष्णाजिनकृष्णसुनदराः ।
आग्निवेश्यश्च दासेरकयश्च, अग्निवेशशब्दात्गर्गादिभ्यो यञ्(*४,१.१०५), दासेरकशब्दातत इञ्(*४,१.९५), तयोर्लुक्, अग्निवेशदासेरकाः । ।

---

[#१७१]

1. <उपक-आदिभ्योऽन्यतरस्यां अद्वन्द्वे># । । पाणिनीयसूत्र २,४.६९ । ।

_______काशिका २,४.६९ः

उपक इत्येवं आदिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति अन्यतरस्यां द्वन्द्वे च अद्वन्द्वे च ।
अद्वन्द्व-ग्रहनं द्वन्द्व-अधिकार-निवृत्त्य्-अर्थं ।
एतेषं च मद्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते - उपकलमकाः, भ्रष्टकक्पिष्ठलः, कृष्णाजिनकृष्णसुन्दराः इति ।
तेषां पूर्वेण+एव नित्यं एव लुग्भवति ।
अद्वन्द्वे त्वनेन विकल्पः - उपकाः, औपकायनाः ।
लमका, लामकायनाः ।
भ्रष्टकाः, भ्राष्टकयः ।
कपिष्ठलाः, कापिष्ठलयः ।
कृष्णाजिनाः, कार्ष्णाजिनयः ।
कृष्णसुन्दराः, कार्ष्णसुन्दरयः इति ।
परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्पः इति ।
पण्डारक ।
अण्डारक ।
गडुक ।
सुपर्यक ।
सुपिष्ठ ।
मयूरकर्ण ।
खारीजङ्घ ।
शलावल ।
पतञ्जल ।
कण्ठेरणि ।
कुषीतक ।
काशकृत्स्न ।
निदाघ ।
कलशीकण्ठ ।
दामकण्ठ ।
कृष्णपिङ्गल ।
कर्णक ।
पर्णक ।
जटिलक ।
बधिरक ।
जन्तुक ।
अनुलोम ।
अर्धपिङ्गलक ।
प्रतिलोम ।
प्रतान ।
अनभिहित । ।

---

1. <आगस्त्य-कौण्डिन्ययोरगस्ति-कुण्डिनच्># । । पाणिनीयसूत्र २,४.७० । ।

_______काशिका २,४.७०ः

आगस्त्य-कौण्डिन्ययोर्गोत्रप्रत्यययोः अणो यञश्च बहुषु लुग्भवति, परिशिष्टस्य च प्रकृति-भागस्य यथा-सङ्ख्यं अगस्ति, कुण्डिनचित्येतावादेशौ भवतः ।
अगस्तयः ।
कुण्डिनाः ।
चकारः स्वरार्थः ।
मद्योदात्तो हि कुण्डिनी-शब्दस्तदादेशोऽपि तथा स्याथ् ।
अगस्त्य-शब्दादृष्यण्, कुण्डिनी-शब्दाद्गर्गादित्वाद्यञ् ।
तयोः गोत्रेऽलुग्-अचि (*४,१.८९) इति लुकि प्रतिषिद्धे आगस्तीयाः छत्राः इति वृद्ध-लक्षणश्छो भवति ।
कौण्डिन्ये त्वणैव भवितव्यम्, कण्वादिभ्यो गोत्रे (*४,२.१११) इति ।
तत्र विशेषो न अस्ति ।
कौण्डिनाश्छात्राः । ।

---

1. <सुपो धातु-प्रातिपदिकयोः># । । पाणिनीयसूत्र २,४.७१ । ।

_______काशिका २,४.७१ः

सुपो विभक्तेर्धातु-सञ्ज्ञायाः प्रातिपदिक-सञ्ज्ञायाश्च लुग्भवति ।
तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते ।
धातोस्तावत्- पुत्रीयति ।
घटीयति ।
प्रातिपदिकस्य - कष्टश्रितः ।
राजपुरुषः ।
धातु-प्रातिपदिकयोः इति किं ? वृक्षः ।
प्लक्षः । ।

---

1. <अदिप्रभृतिभ्यः शपः># । । पाणिनीयसूत्र २,४.७२ । ।

_______काशिका २,४.७२ः

अदिप्रभृतिभ्य उत्तरस्य शपो लुग्भवति ।
अत्ति ।
हन्ति ।
द्वेष्टि । ।

---

[#१७२]

1. <बहुलं छन्दसि># । । पाणिनीयसूत्र २,४.७३ । ।

_______काशिका २,४.७३ः

छन्दसि विषये शपो भौलं लुग्भवति ।
अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि - वृत्रं हन्ति ।
अहिः शयते ।
अन्येभ्यश्च भवति - त्राध्वं नो देवाः । ।

---

1. <यङोऽचि च># । । पाणिनीयसूत्र २,४.७४ । ।

_______काशिका २,४.७४ः

यङो लुग्भवति अचि प्रत्यये परतः ।
चकारेन बहुल-ग्रहनं अनुकृष्यते, न तु छन्दसि इति ।
तेन छन्दसि भाषायां च यङो लुग्भवति ।
लोलुवः ।
पोपुवः ।
सनीस्रंसः ।
दनीध्वंसः ।
बहुल-ग्रहणादनच्यपि भवति ।
शाकुनिको लालपीति ।
दुन्दुभिर्ववदीति । ।

---

1. <जुहोत्य्-आदिभ्यः श्लुः># । । पाणिनीयसूत्र २,४.७५ । ।

_______काशिका २,४.७५ः

शपनुवर्तते, न यङ् ।
जुहोत्य्-आदिभ्यः उत्तरस्य शपः श्लुर्भवति ।
लुकि प्रकृते श्लु-विधानां द्विर्वचन-अर्थं ।
जुहोति ।
विभर्ति ।
नेनेक्ति । ।

---

1. <बहुलं छन्दसि># । । पाणिनीयसूत्र २,४.७६ । ।

_______काशिका २,४.७६ः

छन्दसि विषये बहुलं शपः श्लुर्भवति ।
यत्रोक्तं तत्रं न भवति, अन्यत्र अपि भवति ।
जुहोत्य्-आदिभ्यस्तावन्न भवति - दाति प्रियाणि ।
धाति देवं ।
अन्येभ्यश्च भवति - पूर्णां विवष्टि ।
जनिमा विवक्ति । ।

---

1. <गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु># । । पाणिनीयसूत्र २,४.७७ । ।

_______काशिका २,४.७७ः

लुकनुवर्तते, न श्लुः ।
गाति स्था घु पा भू इत्येतेभ्यः ।
परस्य सिचो लुग्भवति, परस्मैपदेषु परतः ।
अगाथ् ।
अस्थाथ् ।
अदाथ् ।
अधाथ् ।
अपाथ् ।
अभूथ् ।
गापोर्ग्रहने इण्पिबत्योर्ग्रहणं ।
गायतेः पातेः च न भवति ।
अगासीन्नटः ।
अपासीन्नृपः ।

परस्मैपदेषु इति किं ? अगासातां ग्रामौ देवदत्तेन । ।

---

[#१७३]

1. <विभाषा घ्रा-धेट्-शाच्-छा-सः># । । पाणिनीयसूत्र २,४.७८ । ।

_______काशिका २,४.७८ः

घ्रा घेट्शा छा सा इत्येतेभ्य उत्तरस्य सिचः प्रस्मैपदेषु विभाषा लुग्भवति ।
धेटः पूर्वेण प्राप्ते विभाष-अर्थं वचनम्, परिशिष्टानां अप्राप्ते ।
अघ्रात्, अघ्रासीथ् ।
अधात्, अधासीथ् ।
अशात्, अशासीथ् ।
अच्छात्, अच्छासीथ् ।
असात्, असासीथ् ।
परस्मैपदेषु इत्येव, अघ्रासातां सुमनसौ देवदत्तेन । ।

---

1. <तन्-आदिभ्यस्त-थासोः># । । पाणिनीयसूत्र २,४.७९ । ।

_______काशिका २,४.७९ः
तन्-आदिभ्य उत्तरस्य सिचः त-थासोः परतो विभाषा लुग्भवति ।
अतत, अतथाः ।
अतनिष्ट, अतनिष्ठाः ।
असात, असाथाः ।
असनिष्ट, असनिष्ठाः ।
जनसनखनां सञ्झलोः (*६,४.४२) इत्यात्वं ।
थासा साहचर्यादात्मनेपदस्य त-शब्दस्य ग्रहनं ।
प्रस्मैपदे न भवति, अतनिष्त यूयं । ।

---

1. <मन्त्रे घस-ह्वर-नश-वृ-दह-आद्-वृच्-कृ-गमि-जनिभ्यो लेः># । । पाणिनीयसूत्र २,४.८० । ।

_______काशिका २,४.८०ः

मन्त्र-विषये घस ह्वर नश वृ दह आत्वृच कृ गमि जनि इत्येतेभ्यः उत्तरस्य लेः लुग्भवति।
घस -- अक्षन्पितरोऽमीमदन्त पितरः।
ह्वर इति ह्वृ कौटिल्ये - मा ह्वार्मित्रस्य त्वा।
णश - धूर्तिः प्रणङ्मर्त्यस्य।
वृ इति वृङ्वृञोः सामान्येन ग्रहनं -- सुरुचो वेन आवः।
दह - मा न आ धक्।
आतिति आकारान्त-ग्रहनं।
प्रा पूरने - आप्रा द्यावापृठीवी अन्तरिक्षं।
वृच्-- मा नो अस्मिन्महाधने परा वृग्भारभृद्यथा।
कृ -- अक्रन्कर्म कर्मकृतः।
गमि - {सद्यः पुंष्टि निरुन्धानासो} अग्मन्।
जनि -- अज्ञत वा अस्य दन्ताः।
ब्राह्मने प्रयोगोऽयं।
मन्त्र-ग्रहणं तु छन्दस उपलक्षण-अर्थं।।

---

1. <आमः>#।। पाणिनीयसूत्र २,४.८१ ।।

_______काशिका २,४.८१ः

आमः परस्य लेः लुग्भवति।
ईहाञ्चक्रे।
ऊहाञ्चक्रे।
ईक्षाञ्चक्रे।।

---

1. <अव्ययादाप्-सुपः>#।। पाणिनीयसूत्र २,४.८२ ।।

_______काशिका २,४.८२ः

अव्ययादुत्तरस्य आपः सुपश्च लुग्भवति।
तत्र शालायां।
यत्र शालायां।
सुपः खल्वपि कृत्वा।
हृत्वा।।

---

[#१७४]

1. <न अव्ययीभावादतोऽ त्वपञ्चम्याः># । । पाणिनीयसूत्र २,४.८३ । ।

_______काशिका २,४.८३ः

पूर्वेण लुक्प्राप्तः प्रतिषिध्यते ।
दन्तादव्ययीभावादुत्तरस्य सुपो न लुग्भवति, अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः ।
एतस्मिन्प्रतिषिद्धे पञ्चम्याः श्रवनं एव भवति ।
उपकुम्भं तिष्ठति ।
उपकुम्भं पश्य ।
उपमणिकं तिष्ठति ।
उपमणिकं पश्य ।
अतः इति किं ? अधिस्त्रि ।
अधिकुमारि ।
अपञ्चम्याः इति किं ? उपकुम्भादानय । ।

---

1. <तृतीया-सप्तम्योर्बहुलम्># । । पाणिनीयसूत्र २,४.८४ । ।

_______काशिका २,४.८४ः

पूर्वेण नित्यं अम्भावे प्राप्ते वचनं इदं ।
तृतीया-सप्तम्योः विभक्त्योर्बहुलं अम्भावो भवति अव्ययीभावे ।
उपकुम्भेन कृतम्, उपकुम्भं कृतं ।
उपकुम्भे निधेहि, उपकुम्भं निधेहि ।
सपम्या ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्यं इति वक्तव्यं ।
सुमद्रं सुमगधं ।
उन्मत्तगङ्गं ।
लोहितगङ्गं ।
एकविंशतिभारद्वाजं ।
बहुलवचनात्सिद्धं । ।

---

1. <लुटः प्रथमस्य डारौरसः># । । पाणिनीयसूत्र २,४.८५ । ।

_______काशिका २,४.८५ः

लुङ्-आदेशस्य प्रथमपुरुषस्य प्रस्मैपदस्य आत्मनेपदस्य च यथाक्रमं डा रौ रसित्येते आदेशा भवन्ति ।
कर्ता, कर्तारौ, कर्तारः ।
आत्मनेपदस्य -- अध्येता, अध्येतारौ, अध्येतारः ।
प्रथमस्य इति किं ? श्वः कर्तासि ।
श्वोऽध्येतासे । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः । ।

---

तृतीयोऽद्यायः प्रथमः पादः ।

---

[#१७५]

1. <प्रत्ययः># । । PS_३,१.१ । ।

______Sठा~ठ्JKव्_३,१.१ः

अधिकारोऽयं ।
प्रत्यय-शब्दः सञ्ज्ञात्वेन अधिक्रियते ।
आ पञ्चमाद्यायपरिसमाप्तेर्यानित ऊर्ध्वं अनुक्रमिष्यमः, प्रत्ययसञ्ज्ञास्ते वेदितव्याः, प्रकृत्युपपादोपाधिविकारागमान्वर्जयित्वा ।
वक्ष्यति -- तव्यत्-तव्य-अनीयरः (*३,१.९६) ।
कर्तव्यं ।
करणीयं ।
प्रत्ययप्रदेशाः - प्रत्ययलोपे प्रत्ययलक्षणं (*१,१.६२) इत्येवं आदयः । ।

---

1. <परश्च># । । PS_३,१.२ । ।

______Sठा~ठ्JKव्_३,१.२ः

अयं अप्यधिकारो योगे योगे उपतिष्ठते, परिभाषा वा ।
परश्च स भवति धातोर्वा प्रातिपदिकाद्वा यः प्रत्यय-सञ्ज्ञः ।
कर्तव्यं ।
तैत्तिरीयं ।
चकारः पुनरस्यैव समुच्चय-अर्थः ।
तेन+उणादिषु परत्वं न विकल्प्यते । ।

---

1. <आद्य्-उदात्तश्च># । । PS_३,१.३ । ।

______Sठा~ठ्JKव्_३,१.३ः

अयं अप्यधिकारः परिभाषा वा ।

आद्य्-उदात्तश्च स भवति ।
आद्य्-उदात्तश्च स भवति यः प्रत्यय-सञ्ज्ञः ।
अनियतस्वर-प्रत्यय-प्रसङ्गेऽनेकाक्षु च प्रत्ययेषु देशस्य अनियमे सति वचनं इदं आदेरुदात्त-अर्थं ।
कर्तव्यं ।
तैत्तिरीयं । ।

---

1. <अनुदात्तौ सुप्-पितौ># । । PS_३,१.४ । ।

_______Sठा~ठ्JKव्_३,१.४ः

पूर्वस्य अयं अपवादः ।
सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति ।
दृषदौ ।
दृषदः ।
पितः खल्वपि -- पचति ।
पठति । ।

---

1. <गुप्-तिज्-किद्भ्यः सन्># । । PS_३,१.५ । ।

_______Sठा~ठ्JKव्_३,१.५ः

गुप गोपने, तिज निशाने, कित निवासे एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति ।
प्रत्यय-सञ्ज्ञा च अधिकृतैव ।
जुगुप्सते ।
तितिक्षते ।
चिकित्सति ।
निन्दाक्षमाव्याधिप्रतीकारेषु सन्निषतेऽन्यत्र यथा प्राप्तं प्रत्यया भवन्ति ।
योपयति ।
तेजयति ।
सङ्केतयति ।
गुपादिष्वनुबन्धकरणं आत्मनेपदार्थं । ।

---

[#१७६]

1. <मान्-बध-दान्-शान्भ्यो दीर्घश्च अभ्यासस्य># । । PS_३,१.६ । ।

_______Sठा~ठ्JKव्_३,१.६ः

मान्पूजायाम्, बध बन्धने, दान अवखण्डने, शान अवतेजते, इत्येतेभ्यो धातुभ्यः सन्प्रत्ययो भवति, अभ्यासस्य च इकारस्य दीर्घादेशो भवति ।
मीमांसते ।
बीभत्सते ।
दीदांसते ।
शीशांसते ।
उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न भवत्यपि ।
मानयति ।
बाधयति ।
दानयति ।
निशानयति ।
अत्र अपि सन्नर्थ-विशेष इष्यते ।
मानेर्जिज्ञासायाम्, बधेर्वैरूप्ये, दानेरार्जवे, शानेर्निशाने । ।

---

1. <धातोः कर्मणः समान-कर्तृकादिच्छायां वा># । । PS_३,१.७ । ।

_______Sठा~ठ्JKव्_३,१.७ः

इषिकर्म यो धतुरिषिणैव समानकर्तृकः, तस्मादिच्छायां अर्थे वा सन्प्रत्ययो भवति ।
कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं ।
कर्तुं इच्छति ।
चिकीर्षति ।
जिहीर्षति ।
धातु-ग्रहनं किं ? सोपसर्गादुत्पत्तिर्मा भूथ् ।
प्रकऋतुं ऐच्छत्प्राचिकीर्षथ् ।
कर्मणः इति किं ? करणान्मा भूथ् ।
गमनेन+इच्छति ।
समानकर्तृकतिति किं ? देवदत्तस्य भोजनं इच्छति यज्ञदत्तः ।
इच्छायां इति किं ? कर्तुं जानाति ।
वावचनाद्वाक्यं अपि भवति ।
धातोः इति विधानादत्र सनः आर्धधातुक-सञ्ज्ञा भवति, न पूर्वत्र ।
आशङ्कायां उपसंख्यानं ।
आशङ्के पतिष्यति कूलम्, पिपतिषति कूलं ।
श्वा मुमूर्षति ।
इच्छासन्नन्तात्प्रतिषेधो वक्तव्यः ।
चिकीर्षितुं इच्छति ।
विशेषणं किं ? जुगुप्सिषते ।
मीमांसिषते ।
शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।

सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते । ।

---

1. <सुप आत्मनः क्यच्># । । PS_३,१.८ । ।

_______Sठा~ठ्JKव्_३,१.८ः

कर्मणः इच्छायां वा इत्यनुवर्तते ।
इषिकर्मणः एषितुः एव आत्मसम्बन्धिनः सुबन्तादिच्छायां अर्थे वा क्यच्प्रत्ययो भवति ।
आत्मनः पुत्रं इच्छति पुत्रीयति ।
सुब्-ग्रहणं किं ? वाक्यान्मा भूथ् ।
महान्तं पुत्रं इच्छति ।
आत्मनः इति किं ? राज्ञः पुत्रं इच्छति ।
ककारः नः क्ये (*१,४.१५) इति सामान्य्-अग्रहण-अर्थः ।
चकारस्तदविघात-अर्थः ।

[#१७७]

क्यचि मान्ताव्यय-प्रतिषेधो वक्तव्यः ।
इदं इच्छति ।
उच्चैरिच्छति ।
नीचिअरिच्छति ।
छन्दसि परेच्छायां इति वक्तव्यं ।
मा त्वा वृका अघायवो विदन् । ।

---

1. <काम्यच्च># । । PS_३,१.९ । ।

_______Sठा~ठ्JKव्_३,१.९ः

सुबन्तात्कर्मणः आत्मेच्छायां काम्यच्प्रत्ययो भवति ।
आत्मनः पुत्रं इच्छति पुत्रकाम्यति ।
वस्त्रकाम्यति ।
योगविभाग उत्तरत्र क्यचोऽनुवृत्त्य्-अर्थः ।
ककारस्य इत्-सज्ञा प्रयोजन-अभावान्न भवति, चकारादित्वाद्व काम्यचः ।
उपयट्काम्यति । ।

---

1. <उपमानादाचारे># । । PS_३,१.१० । ।

_______Sठा-ठ्JKव्_३,१.१०ः

क्यचनुवर्तते, न काम्यछ् ।
उपमनात्कर्मणः सुबन्तादाचारेऽर्थे वा क्यच्प्रत्ययो भवति ।
आचार-क्रियायाः प्रत्यय-अर्थत्वात्तदपेक्षयैव उपमानस्य कर्मता ।
पुत्रमिव आचरति पुत्रीयति छात्रं ।
प्रावारीयति कम्बलं ।
अधिकरणाच्चेति वक्तव्यं ।
प्रासादीयति कुट्यां ।
पर्यङ्कीयति मञ्चके । ।

---

1. <कर्तुः क्यङ्सलोपश्च># । । PS_३,१.११ । ।

_______Sठा-ठ्JKव्_३,१.११ः

आचारे इत्यनुवर्तते ।
उपमानात्कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ्-प्रत्त्ययो भवति, सकारस्य च लोपो भवति ।
अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ्भवत्येव ।
श्येन इवाचरति काकः श्येनायते ।
कुमुदं पुष्करायते ।
सलोप-विधावपि वा-ग्रहणं सम्बध्यते, सा च व्यवस्थित-विभाषा भवति ।
ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया ।
{सकारस्येष्यते लोपः शब्दशास्त्रविचक्षनैः} ओजायमानं यो अहिं जघान ।
ओजायते, अप्सरायते ।
पयायते, पयस्यते ।
सलोप-विधौ च कर्तुः इति स्थान-षष्ठी सम्पद्यते, तत्र अलोऽन्त्य-नियमे सति हंसायते, सारसायते इति सलोपो न भवति ।

[#१७८]

आचारेऽवगल्भ-क्लीब-होडेभ्यः क्विब्वा वक्तव्यः ।
अवगल्भते, अवगल्भायते ।
क्लीबते, क्लीबायते ।
होडते, होडायते ।
सर्वप्रातिपदिकेभ्य इत्येके ।
अश्व इव आचरति अश्वायते, अश्वति ।
गर्दभायते, गर्दभति । ।

---

1. <भृशादिभ्यो भुव्य्-अच्वेर्लोपश्च हलः># । । PS_३,१.१२ । ।

_______Sठा~ठ्JKव्_३,१.१२ः

भृश इत्येवं आदिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ्प्रत्ययो भवति, हलन्तानां च लोपः ।
अच्वेः इति प्रत्येकं अभिसम्बध्यते ।
किं अर्थं पुन रिदं उच्यते, यावता भवति योगे च्विर्विधीयते, तेनोक्तार्थत्वाच्च्व्यन्तेभ्यो न क्यङ्भविष्यति ? तत्सादृश्यप्रतिपत्त्यर्थं तर्हि च्वि-प्रतिषेधः क्रियते ।
अभूत-तद्भाव-विषयेभ्यो भृशादिभ्यः क्यङ्प्रत्ययः ।
अभृशो भृशो भवति भृशायते ।
शीघ्रायते ।
भृश ।
शीघ्र ।
मन्द ।
चपल ।
पण्डित ।
उत्सुक ।
उन्मनस् ।
अभिमनस् ।
सुमनस् ।
दुर्मनस् ।
रहस् ।
रेहस् ।
शश्वथ् ।
बृहथ् ।
वेहथ् ।
नृषथ् ।
शुधि ।
अधर ।
ओजस् ।
वर्चस् ।
भृशादिः ।
अच्वेः इति किं ? भृशीभवति । ।

---

1. <लोहितादि-डाज्भ्यः क्यष्># । । PS_३,१.१३ । ।

_______Sठा~ठ्JKव्_३,१.१३ः

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष्प्रत्ययो भवति ।

लोहितायति, लोहितयते ।
डाजन्तेभ्यः - पटपटायति, पटपटायते ।
लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि ।
यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस्तु क्यषेव भवति ।
वर्मायति, वर्मायते ।
निद्रयति, निद्रायते ।
करुणायति, करुणायते ।
कृपायति, कृपायते ।
आकृतिगणोऽयं ।
यथा च ककारः सामान्यग्रहणार्थोऽनुबध्यते नः क्ये (*१,४.१५) इति ।
न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति ।
कृभ्वस्तिभिरिव क्यषाऽपि योगे डाज्भवति इत्येतदेव वचनं ज्ञापकं ।
अच्वेः इत्यनुवृत्तेरभूत-तद्भावे क्यष्विज्ञायते ।
लोहित ।
नील ।
हरित ।
पीत ।
मद्र ।
फेन ।
मन्द ।
लोहितादिः । ।

---

1. <कष्टाय क्रमणे># । । PS_३,१.१४ । ।

______Sठा~ठ्JKव्_३,१.१४ः

क्यङनुवर्तते, न क्यष् ।
कष्ट-शब्दाच्चतुर्थीसमर्थात्क्रमणेऽर्थेऽनार्जवे क्यङ्प्रत्ययो भवति ।
कष्टाय कर्मणे क्रामति कष्तायते ।
अत्यल्पं इदं उच्यते ।
स्त्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायां इति वक्तव्यं ।
कन्वचिकीर्षा पापचिकीर्षा, तस्यामेतेभ्यः क्यङ्प्रत्ययो भवति ।
स्त्रायते ।
कष्तायते ।
कक्षायते ।
कृच्छ्रायते ।
गहनायते ।
कण्वचिकीर्षायां इति किं ? अजः कष्टं क्रामति । ।

---

[#१७९]

1. <कर्मणो रोमन्थ-तपोभ्यां वर्ति-चरोः># । । PS_३,१.१५ । ।

_______Sठा०ठJKव्_३,१.१५ः

रोमन्थ-शब्दात्तपः-शब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ्प्रत्ययो भवति ।
रोमन्थं वर्तयति रोमन्थायते गौः ।
हनुचलने इति वक्तव्यं ।
इह मा भूत्, कीटो रोमन्थं वर्तयति ।
तपसः परस्मैपदं च ।
तपशचरति तपस्यति । ।

---

1. <बाष्प-ऊष्मभ्यां उद्वमने># । । PS_३,१.१६ । ।

_______Sठा०ठJKव्_३,१.१६ः

कर्मणः इति वर्तते ।
बाष्प-शब्दादूष्म-शब्दाच्च कर्मन उद्वमनेऽर्थे क्यङ्प्रत्ययो भवति ।
बाष्पं उद्वमति बाष्पायते ।
ऊष्मायते ।
फेना च्चेति वक्तव्यं ।
फेनं उद्वमति फेनायते । ।

---

1. <शब्द-वैर-कलह-अभ्र-कण्व-मेघेभ्यः करणे># । । PS_३,१.१७ । ।

_______Sठा०ठJKव्_३,१.१७ः

शब्द वैर कलह अभ्र कन्व मेघ इत्येतेभयः करणे करोत्यर्थे क्यङ्प्रत्ययो भवति ।
शब्दं करोति शब्दायते ।
वैरायते ।
कलहायते ।
अभ्रायते ।
कण्वायते ।
मेघायते ।
सुदिनदुर्दिननीहरेभ्यश्चेति वक्तव्यं ।
सुदिनायते ।

दुर्दिनायते।
नीहारायते।
अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टा-ग्रहणं कर्तव्यं।
अटायते।
अट्टायते।
शीकायते।
कोटायते।
पोटायते।
सोटायते।
प्रुष्टायते।
प्लुष्टायते।।

---

[#१८०]

1. <सुखादिभ्यः कर्तृ-वेदनायाम्>#।। PS_३,१.१८।।

_______Sठा~ठ्JKव्_३,१.१८ः

कर्म-ग्रहणसनुवर्तते।
सुख इत्येवं आदिभ्यः कर्मभ्यः वेदनायां अर्थेऽनुभवे क्यङ्प्रत्ययो भवति, वेदयितुश्चेत्कर्तुः सम्बन्धीनि सुखादीनि भवन्ति।
सुखं वेदयते सुखायते।
दुःखायते।
कर्तृ-ग्रहणं किं? सुखं वेदयते प्रसाधको देवदत्तस्य।
सुख।
दुःख।
तृप्त।
गहन।
कृच्छ्र।
अस्र।
अलीक।
प्रतीप।
करुण।
कृपण।
सोढ।
सुखादिः।।

---

1. <नमो-वरिवश्-चित्रङः क्यच्>#।। PS_३,१.१९।।

_______Sठाञ्ठ्JKव्_३,१.१९ः

करणे इति वर्तते ।
नमस्वरिवस्चित्रङित्येतेभ्यो वा क्यच्प्रत्ययो भवति, करणविशेषे पूजादौ ।
नमसः पूजायां - नमस्यति देवान् ।
वरिवसः परिचर्यायां -- वरिवस्यति गुरून् ।
चित्रङ आश्चर्ये - चित्रीयते ।
ङकार आत्मनेपदार्थः । ।

---

1. <पुच्छ-भान्ड-चीवराण्णिङ्># । । PS_३,१.२० । ।

_______Sठाञ्ठ्JKव्_३,१.२०ः

करणे इति वर्तते ।
पुच्छ भाण्ड चीवर इत्येतेभ्यो णिङ्प्रत्ययो भवति करणविशेषे ।
पुच्छादुदसने पर्यसने वा ।
उत्पुच्छयते ।
परिपुच्छयते ।
भाण्डात्समाचयने ।
सम्भान्डयते ।
चीवरादर्जने परिधाने वा ।
सञ्चीवरयते भिक्षुः ।
ङकार आत्मनेपदार्थः ।
णकारः सामान्यग्रहणार्थः, णेरनिटि (*६,४.५१) इति । ।

---

[#१८१]

1. <मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच्># । । PS_३,१.२१ । ।

_______Sठाञ्ठ्JKव्_३,१.२१ः

मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः करणे णिच्प्रत्ययो भवति ।
मुण्डं करोति मुण्डयति ।
मिश्रयति ।
श्लक्ष्णयति ।
लवणयति ।

व्रतात्भोजने तन्निवृत्तौ च - पयो व्रतयति ।
वृषलान्नं व्रतयति ।
वस्त्रात्समाच्छादने - संवस्त्रयति ।
हलिं गृह्णाति हलयति ।
कलिं गृह्णाति कलयति ।
हलिकल्योरदन्तत्व-निपातनं सन्वद्भाव-प्रतिषेधार्थं ।
अजहलथ् ।
अचकलथ् ।
कृतं गृह्णाति कृतयति ।
तूस्तानि विहन्ति वितूस्तयति केशान् ।
विशदीकरोति इत्यर्थः ॥

---

1. <धातोरेक-अचो हल-आदेः क्रियासमभिहारे यङ्># ॥ PS_३,१.२२ ॥

_______Sठाऽठ्JKव्_३,१.२२ः

एक-अज्यो धातुर्हलादिः क्रियासमभिहारे वर्तते तस्माद्यङ्प्रत्ययो भवति ।
पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः ।
नः पुनः पचति पापच्यते ।
यायज्यते ।
भृशं ज्वलति जाज्वल्यते ।
देदीप्यते ।
धातोः इति किं ? सोपसर्गादुत्पत्तिर्मा भूत्, भृशं प्राटति ।
एकाचः इति किं ? भृशं जागर्ति ।
हलादेः इति किं ? भृशमीक्षते ।
सूचिसूत्रमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहनं यङ्विधानवेकाजहलाद्य्-अर्थं ।
सोसूच्यते ।
सोसूत्र्यते ।
मोमूत्र्यते ।
अटाट्यते ।
अरार्यते ।
अशाश्यते ।
प्रोर्णोनूयते ।
भृशं शोभते, भृशं रोचते इत्यत्र नेष्यते, अनभिधानात् ॥

---

1. <नित्यं कौटिल्ये गतौ># ॥ PS_३,१.२३ ॥

_______Sठाऽठ्JKव्_३,१.२३ः

गतिवचनाद्धतोः कौटिल्ये गम्यमाने नित्यं यङ्प्रत्ययो भवति ।
कुटिलं क्रामति चङ्क्रम्यते ।
दन्द्रम्यते ।
नित्य-ग्रहणं विषयनियम-अर्थं, गतिवचनान्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे ।
भृशं क्रामति । ।

---

1. <लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भाव-गर्हायाम्># । । PS_३,१.२४ । ।

_______Sठा-ठ्JKव्_३,१.२४ः

लुप सद चर जप जभ दह दश गॄ इत्येतेभ्यो भाव-गर्हायां धात्वर्थ-गर्हायां यङ्प्रत्ययो भवति ।
गर्हितं लुम्पति लोलुप्यते ।
एवं - सासद्यते ।
पञ्चऊर्यते ।
जञ्जप्यते ।
जञ्जभ्यते ।
दन्दह्यते ।
दन्दश्यते ।

[#१८२]

निजेगिल्यते ।
भावगर्हायां इति किं ? साधु जपति ।
भाव-ग्रहणं किं ? साधनगर्हायां मा भूत्, मन्त्रं जपति वृषलः ।
नित्य-ग्रहणं विषयनियम-अर्थं अनुवर्तते ।
एतेभ्यो नित्यं भावगर्हायां एव भवति, न तु क्रियासमभिहारे ।
भृशं लुम्पति । ।

---

1. <सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्># । । PS_३,१.२५ । ।

_______Sठा-ठ्JKव्_३,१.२५ः

सत्य-आदिभ्यश्चूर्णपर्यन्तेभ्यः, चुरादिभ्यश्च णिच्प्रत्ययो भवति ।
सत्यं आचष्टे सत्यापयति ।
अर्थवेदसत्यानां आपुग्वक्तव्यः ।
अर्थं आचष्टे अर्थापयति ।
देवापयति ।
आपुग्वचन-सामर्थ्याट्टिलोपो न भवति ।
पाशाद्विमोचने - विपाशयति ।

रूपाद्दर्शने - रूपयति ।
वीणयोपगायति उपवीणयति ।
तूलेनानुकुष्णाति अनुतूलयति ।
श्लोकैरुपस्तौति उपश्लोकयति ।
सेनयाभियाति अभिषेणयति ।
लोमान्यनुमार्ष्टि अनुलोमयति ।
त्वचं गृह्णाति त्वचयति ।
अकारान्तस्त्वच-शब्दः ।
वर्मणा सन्नह्यति संवर्मयति ।
वर्णं गृह्णाति वर्णयति ।
चूर्णैः अवध्वंसयति अवचूर्णयति ।
चुरादिभ्यः स्वार्थे ।
चोरयति ।
चिन्तयति ।
स्वाभाविकत्वादर्थाभिधानस्य यथास्वं प्रत्ययार्था निर्दिश्यन्ते । ।

---

1. <हेतुमति च># । । PS_३,१.२६ । ।

_______Sठाऽ्ठ्JKव्_३,१.२६ः

हेतुः स्वतन्त्रय कर्तुः प्रयोजकः, तदीयो व्यापारः प्रेषनादि-लक्षणो हेतुमान्, तस्मिन्नभिधेये धातोः णिच्प्रत्ययो भवति ।
कटं कारयति ।
ओदनं पाचयति ।
तत्करोति इत्युपसङ्ख्यानं सूत्रयति इत्याद्यर्थं ।
सूत्रं करोति सूत्रयति ।
आख्यानात्कृतस्तदाचष्ट इति णिच्कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं ।
आख्यानात्कृदन्त्तणिच्वक्तव्यः तदाचष्टे इत्येतस्मिन्नर्थे, कृल्-लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवति ।
कंसवधं आचष्टे कंसं घातयति ।
बलिबन्धं आचष्टे बलिं बन्धयति ।
राजागमनं आचष्टे राजानं आगमयति ।

[#१८३]

आङ्-लोपश्च काल-अत्यन्तसंयोगे मर्यादायां ।
आरात्रि विवासं आचश्टे रात्रिं विवासयति ।
चित्रीकरणे प्रापि ।
उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यं उद्गमयति ।
नक्षत्रयोगे ज्ञि ।
पुष्ययोगं जानाति पुष्येण योजयति ।
मघभिर्योजयति । ।

1. <कण्ड्व्-आदिभ्यो यक्># । । PS_३,१.२७ । ।

______Sठा~ठ्JKव्_३,१.२७ः

कण्डूञित्येवं आदिभ्यो यक्प्रत्ययो भवति ।
द्विवधाः कण्ड्व्-आदयो, धातवः प्रातिपादिकानि च ।
तत्र धात्वधिकाराद्धतुभ्यः एव प्रत्ययो विधीयते, न तु प्रातिपदिकेभ्यः ।
तथा च गुणप्रतिषेध-अर्थः ककारोऽनुबध्यते ।
धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह च अयं इमं दीर्घं मन्ये धतुर्विभाषितः । ।
कण्डूञ्-- कण्डूयति, कण्डूयते ।
ञित्वात्कर्त्र्-अभिप्राये क्रियाफले (*१,३.७२) इत्यात्मनेपदं ।
कण्डूञ् ।
मन्तु ।
हृणीङ् ।
वल्गु ।
अस्मनस् ।
महीङ् ।
लेठ् ।
लोठ् ।
इरस् ।
इरज् ।
इरञ् ।
द्रवस् ।
मेधा ।
कुषुभ ।
मगध ।
तन्तस् ।
पम्पस् ।
सुख ।
दुःख ।
सपर ।
अरर ।
भिषज् ।
भिष्णज् ।
इषुध ।
चरण ।
चुरण ।
भुरण ।
तुरण ।
गद्गद ।
एला ।
केला ।
खेला ।
लिठ् ।

लोट् । ।

---

1. <गुपू-धूप-विच्छि-पणि-पनिभ्य आयः># । । PS_३,१.२८ । ।

______Sठाञ्ठJKव्_३,१.२८ः

गुपू रक्षणे, धूप सन्तापे, विच्छ गतौ, पण व्यवहारे स्तुतौ च, पन च इत्येतेभ्यो धातुभ्यः आय-प्रत्ययो भवति ।
तोपायति ।
धूपयति ।
विच्छायति ।
पणायति ।
पनायति ।
स्तुत्य्-अर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययं उत्पादयति न व्यवहार-अर्थः ।
शतस्य पणते ।
सहस्रसय पणते ।
अनुबन्धश्च केवले चरित-अर्थः, तेन आय-प्रत्यय-अन्तान्नात्मनेपदं भवति । ।

---

[#१८४]

1. <ऋतेरीयङ्># । । PS_३,१.२९ । ।

______Sठाञ्ठJKव्_३,१.२९ः

ऋतिः सौत्रो धतुः धृणायां वर्तते, ततः ईयङ्प्रत्ययो भवति ।
ङकार आत्मनेपद-अर्थः ।
ऋतीयते, ऋतीयेते, ऋतियन्ते ।
ईयङ्-वचनं ज्ञापन-अर्थं, धातु-विहितानां प्रत्ययानां आयनादयो न भवन्ति इति । ।

---

1. <कमेर्णिङ्># । । PS_३,१.३० । ।

______Sठाञ्ठJKव्_३,१.३०ः

कमेर्धातोः णिङ्प्रत्ययो भवति ।

णकारो वृद्ध्य्-अर्थः ।
ङकार आत्मनेपद-अर्थः ।
कामयते, कामयेते, कामयन्ते । ।

---

1. <आयादय आर्धधातुके वा># । । PS_३,१.३१ । ।

_______Sठाऽ्ठJKव्_३,१.३१ः

आर्धधातुक-विषये आर्धधातुक-विवक्षायां आयादयः प्रत्यया वा भवन्ति ।
गोप्ता, गोपायिता ।
अर्तिता, ऋतीयिता ।
कमिता, कामयिता ।
नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुक-विषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति ।
गुप्तिः ।
गोपाया । ।

---

1. <सन्-आद्यन्ता धातवः># । । PS_३,१.३२ । ।

_______Sठाऽ्ठJKव्_३,१.३२ः

सनादिर्येषां ते सनादयः ।
सनादयोऽन्ते येषं ते सनाद्यन्ताः ।
सनाद्यन्ताः समुदायाः धातु-सञ्ज्ञाः भवन्ति ।
प्रत्यय-ग्रहण-परिभाषा+एव पद-सञ्ज्ञायां अन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिह अन्तवचनेन प्रतिप्रसूयते ।
चिकीर्षति ।
पुत्रीयति ।
पुत्रकाम्यति । ।

---

1. <स्यतासी ऋलुटोः># । । PS_३,१.३३ । ।

_______Sठाऽ्ठJKव्_३,१.३३ः

ऋ-रूपं उत्सृष्ट-अनुबन्धं सामान्यं एकं एव ।
तस्मिन्लुटि च परतो धातोर्यथा-सङ्ख्यं स्यतासी प्रत्ययौ भवतः ।
करिष्यति ।
अकरिष्यथ् ।
श्वः कर्ता ।
इदित्-करणं अनुनासिकलोप-प्रतिषेध-अर्थं ।
मन्ता ।
सङ्गन्ता ।।

---

1. <सिब्-बहुलं लेति># ।। PS_३,१.३४ ।।

_______Sठाञ्ठ्JKव्_३,१.३४ः

धातोः सिप्प्रत्ययो भवति बहुलं लेति परतः ।
जोषिषथ् ।
तारिषथ् ।
मन्दिषथ् ।
न च भवति ।
पताति दिद्युथ् ।
उदधिं च्यावयाति ।।

---

1. <कास्-प्रत्ययादां अमन्त्रे लिटि># ।। PS_३,१.३५ ।।

_______Sठाञ्ठ्JKव्_३,१.३५ः

कासृ शब्द-कुत्सायाम्, ततः प्रत्ययान्तेभ्यश्च धातुभ्यः आं प्रत्ययो भवति लिटि परतोऽमन्त्र-विषये ।
कासाञ्-चक्रे ।
प्रत्ययान्तेभ्यः -- लोलूयाञ्चक्रे ।
अमन्त्रे इति किं ? कृष्णो नोनाव ।।

[#१८५]

कास्यनेकाचः इति वक्तव्यं चुलुम्पाद्यर्थं ।
चकासाञ्चकार ।
दरिद्राञ्चकार ।
चुलुम्पाञ्चकार ।
आमोऽमित्वं अदन्तत्वादगुणत्वं विदेस्तथा ।

आस्कासोरां विधानाच्च पररूपं कतन्तवत् । ।

---

1. <इज्-आदेश्च गुरुमतोऽनृच्छः># । । PS_३,१.३६ । ।

_______Sठा~ठ्JKव्_३,१.३६ः

इज्-आदिर्यो धातुर्गुरुमानृच्छति-वर्जितः, तस्माच्च लिटि परत आं प्रत्ययो भवति ।
ईह चेष्टायां ।
ऊह वितर्के ।
ईहाञ्चक्रे ।
ऊहाञ्चक्रे ।
इजादेः इति किं ? ततक्ष ।
ररक्ष ।
गुरुमतः इति किं ? इयज ।
उवप ।
अनृच्छः इति किं ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः ।
ऊर्णोतेश्च प्रतिषेधो वक्तव्यः ।
प्रोर्णुनाव ।
अथ वा -- वाच्य ऊर्णोर्णुवद्भावो यङ्-प्रसिद्धिः प्रयोजनं ।
आमश्च प्रतिषेध-अर्थं एकाचश्चेडुपग्रहात् । ।

---

1. <दय-अय-आसश्च># । । PS_३,१.३७ । ।

_______Sठा~ठ्JKव्_३,१.३७ः

दय दानगति-रक्षणेषु, अय गतौ, आस उपवेषने, एतेभ्यश्च लिटि परत आं प्रत्ययो भवति ।
दयञ्चक्रे ।
पलायाञ्चक्रे ।
आसाञ्चक्रे । ।

---

1. <उष-विद-जागृभ्योऽन्यतरस्याम्># । । PS_३,१.३८ । ।

_______Sठा~ठ्JKव्_३,१.३८ः

उष दाहे, विद ज्ञाने, जगृ निद्राक्षये, एतेभ्यो लिटि परतोऽन्यतरस्यां आं प्रत्ययो भवति।
ओषाञ्चकार, उवोष।
विदाञ्चकार, विवेद।
जागराञ्चकार, जजागार।
विदेरदन्तत्व-प्रतिज्ञानादामि गुणो न भवति॥

---

1. <भी-ह्री-भृ-हुवां श्लुवच्च># ॥ PS_३,१.३९ ॥

_______Sठाञ्ठ्JKव्_३,१.३९ः

ञिभी भये, ह्री लज्जायाम्, डुभृञ्धारणपोषणयोः, हु दानादानयोः, एतेभ्यो लिटि परतः आं प्रत्ययो भवति अन्यतरस्याम्, श्लाविव च अस्मिन्कार्यं भवति।
किं पुनस्तत्? द्वित्वं इत्त्वं च।
बिभायाञ्चकार, विभाय।
जिह्रयाञ्चकार, जिह्राय।
बिभराञ्चकार, बभार।
जुहवाञ्चकार, जुहाव॥

---

1. <कृञ्च अनुप्रयुज्यते लिटि># ॥ PS_३,१.४० ॥

_______Sठाञ्ठ्JKव्_३,१.४०ः

आम्-प्रत्ययस्य पश्चात्कृञनुप्रयुज्यते लिटि परतः।
कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूभावः न भवति।
आचयाञ्चकार।
पाचयां बभूव।
पाचयां आस॥

---

[#१८६]

1. <विदाङ्-कुर्वन्त्वित्यन्यतरस्याम्># ॥ PS_३,१.४१ ॥

______Sठा~ठJKव्_३,१.४१ः

विदाङ्-कुर्वन्तु इत्येतदन्यतरस्यां निपात्यते।
किं पुनरिह निपात्यते? विदेर्लोटि आं प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट्परस्य अनुप्रयोगः।
अत्र भवन्तो विदाङ्-कुर्वन्तु, विदन्तु।
इति-करणः प्रदर्शन-अर्थः, न केवलं प्रथमपुरुष-बहुवचनं, किं तर्हि सर्वाण्येव लोड्-वचनान्यनुप्रयुज्यन्ते, विदाङ्करोतु, विदाङ्कुरुतात्, विदाङ्कुरुताम्, विदाङ्कुरु, विदाङ्कुरुतं इत्यादि।।

---

1. <अभ्युत्सादयां-प्रजनयाम्-चिकयां-रमयाम्-अकः पावयाम्-क्रियाद्विदाम्-अक्रन्निति च्छन्दसि>#।। PS_३,१.४२।।

______Sठा~ठJKव्_३,१.४२ः

अभ्युत्सादयां इत्येवं आदयः छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते।
सदिजनिरमीणां ण्यन्तानां लुङि आं प्रत्ययो निपात्यते।
चिनोतेरपि तत्र+एव+आम्प्रत्ययो द्विर्वचनं कुत्वं च।
अकरिति चतुर्भिरपि प्रत्येकं अनुप्रयोगः सम्बध्यते।
पावयां क्रियातिति पवतेः पुनातेर्वा ण्यन्तस्य लिङि आं निपात्यते, गुणाभावश्च, अक्रनिति च अस्य अनुप्रयोगः।
विदाम्-अक्रनिति विदेर्लुङि आं निपात्यते, गुनभावश्च, अक्रनिति च अस्य अनुप्रयोगः।
अभ्युत्सादयां अकः।
अभ्युदसीषदतिति भाषायां।
प्रजनयां अकः।
प्राजीजनतिति भाषायां।
चिकयां अकः।
अचैषीतिति भाषायां।
रमयां अकः।
अरीरमतिति भाषायां।
पावयाङ्क्रियाथ्।
पाव्यातिति भाषायां।
विदां अक्रन्।
अवेदिषुः इति भाषायां।।

---

1. <च्लि लुङि>#।। PS_३,१.४३।।

______Sठा~ठJKव्_३,१.४३ः

धातोः च्लिः प्रत्ययो भवति लुङि परतः।

इकार उच्चारण-अर्थः, चकारः स्वर-अर्थः ।
अस्य सिजादीनादेशान्वक्ष्यति ।
तत्र+एव+उदाहरिस्यामः । ।

---

1. <च्लेः सिच्># । । PS_३,१.४४ । ।

______Sठाऱ्ठ्JKव्_३,१.४४ः

च्लेः सिजादेशो भवति ।
इकार उच्चारण-अर्थः, चकारः स्वर-अर्थः ।
अकार्षीथ् ।
अहार्षीथ् ।
आगमानुदात्तत्वं हि प्रत्यय-स्वरं इव चित्स्वरं अपि बधेत इति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते ।
स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः ।
अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षथ् ।
अम्राक्षीत्, अमार्क्षीत्, अमृक्षथ् ।
अकार्षीत्, अक्राक्षीत्, अकृक्षथ् ।
अत्राप्सीत्, आताप्र्सीत्, अतृपथ् ।
अद्राप्सीत्, अदाप्र्सीत्, अदृपत् । ।

---

[#१८७]

1. <शल इग्-उपधादनिटः क्सः># । । PS_३,१.४५ । ।

______Sठाऱ्ठ्JKव्_३,१.४५ः

शलन्तो यो धातुरिग्-उपधस्तस्मात्परस्य च्लेः अनिटः क्स आदेशो भवति ।
दुह - अधुक्षथ् ।
लिह - अलिक्षथ् ।
शलः इति किं ? अभैत्सीथ् ।
अच्छैत्सीथ् ।
इग्-उपधातिति किं ? अधाक्षीथ् ।
अनिटः इति किं ? अकोषीथ् ।
अमोषीत् । ।

---

1. <श्लिष आलिङ्गने># । । PS_३,१.४६ । ।

_______Sठा~ठ्JKव्_३,१.४६ः

श्लिषः धातोः आलिङ्गन-क्रियावचनात्परस्य च्लेः क्सः आदेशो भवति ।
आलिङ्गनं उपगूहनं, परिष्वङ्गः ।
अत्र नियम-अर्थं एतथ् ।
आश्लिक्षत्कन्यां देवदत्तः ।
आलिङ्गने इति किं ? समाश्लिषज्जतु काष्ठं । ।

---

1. <न दृशः># । । PS_३,१.४७ । ।

_______Sठा~ठ्JKव्_३,१.४७ः

पूर्वेण क्सः प्राप्तः प्रतिषिध्यते ।
दृशेः धातोः परस्य च्लेः क्स-आदेशो न भवति ।
अस्मिन्प्रतिषिद्धे इरितो वा (*३,१.४५) इति अङ्सिचौ भवतः ।
अदर्शत्, अद्राक्षीत् । ।

---

1. <णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्># । । PS_३,१.४८ । ।

_______Sठा~ठ्JKव्_३,१.४८ः

सिज्-अपवादश्चङ्विधीयते ।
ण्य्-अन्तेभ्यो धातुभ्यः, श्रि द्रु स्रु इत्येतेभ्यश्च परस्य च्लेः चङ्-आदेशो भवति कर्तवाचिनि लुङि परतः ।
ङकारो गुण-वृद्धि-प्रतिषेध-अर्थः, चकारः चङि (*६,१.११) इति विशेषण-अर्थः ।
अचीकरथ् ।
अजीहरथ् ।
अशिश्रियथ् ।
अदुद्रुवथ् ।
असुस्रुवथ् ।
कर्तरि इति किं ? अकारयिषातां कटौ देवदत्तेन ।
कमेरुपसङ्ख्यानं ।

आयादयः आर्धधातुके वा (*३,१.३१) इति यदा णिङ्न अस्ति तदा+एततुपसङ्ख्यानं।
अचकमत।
णिङ्पक्षे सन्वद्भावः।
अचीकमत।
नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्कषिणो यान्ति येऽचीकमतभाषिणः।।

---

1. <विभाषा धेट्-श्व्योः># । । PS_३,१.४९ । ।

______Sठाऱ्ठ्JKव्_३,१.४९ः

धेट्पाने, टुओश्वि गति-वृद्ध्योः, एताभ्यां उत्तरस्य च्लेर्विभाषा चङ्-आदेशो भवति।
धेटस्तावत्- अदधात्।
सिच्पक्षे विभाषा घ्रा-धेट्-शाच्-छा-सः (*२,४.७८) इति लुक्।
अधात्।
अधासीत्।
श्वयतेः खल्वपि।
अशिश्वियथ्।
अङोऽप्यत्र विकल्प इष्यते।
अश्वथ्।
अश्वयीथ्।
कर्तरि इत्येव, अधिषातां गवौ वत्सेन।।

---

[#१८८]

1. <गुपेश्छन्दसि># । । PS_३,१.५० । ।

______Sठाऱ्ठ्JKव्_३,१.५०ः

गुपेः परस्य च्लेः छन्दसि विषये विभाषा चङादेशो भवति।
यत्र आय-प्रत्ययो नास्ति तत्र अयं विधिः।
इमान्मे मित्रावरुणौ गृहञ्जुगुपतं युवं।
अगौप्तम्, अगोपिष्टम्, अगोपायिष्टं इति वा।
भाशायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति।।

---

1. <न-उनयति-ध्वनयत्य्-एलयत्य्-अर्दयतिभ्यः># । । PS_३,१.५१ । ।

______Sठा~ठJKव्_३,१.५१ः
ऊन परिहाणे, ध्वन शब्दे, इल प्रेरणे, अर्द गतौ याचने च, एतेभ्यो धातुभ्यः ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति ।
काममूनयीः ।
औनिनः इति भाषायां ।
मा त्वाग्निर्ध्वनयीथ् ।
अदिध्वनतिति भषायां ।
काममिलयीथ् ।
ऐलिलतिति भाषायां ।
मैनमर्दयीथ् ।
आर्दिदतिति भाशायां । ।

---

1. <अस्यति-वक्ति-ख्यातिभ्योऽङ्># । । PS_३,१.५२ । ।

______Sठा~ठJKव्_३,१.५२ः

असु क्षेपने, वच परिभाषणे ब्रूञ्-आदेशो वा, ख्या प्रकथने चक्षिङ्-आदेशो वा, एभ्यः परस्य च्लेरङ्-आदेशो भवति कर्तृ-वाचिनि लुगि परतः ।
अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणं आत्मनेपद-अर्थं ।
पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त ।
वक्ति - अवोचत्, अवोचताम्, अवोचन् ।
ख्याति - आख्यत्, आख्यताम्, आख्यन् ।
कर्तरि इति किं ? पर्यासिषातां गावौ वत्सेन । ।

---

1. <लिपि-सिचि-ह्वश्च># । । PS_३,१.५३ । ।

______Sठा~ठJKव्_३,१.५३ः

लिप उपदेहे षिच क्षरने, ह्वेञ्स्पर्धायाम्, एतेभ्यश्च परस्य च्लेः अङादेशो भवति ।
अलिपथ् ।
असिचथ् ।
आह्वथ् ।
पृथग्-योग उत्तर-अर्थः । ।

---

1. <आत्मनेपदेष्वन्यतरस्याम्># । । PS_३,१.५४ । ।

_______Sठाञ्ठ्JKव्_३,१.५४ः

पूर्वेण प्राप्ते विभषा आरभ्यते ।
लिपि-सिचि-ह्व आत्मनेपदेषु परतः च्लेः अङ्-आदेशो भवति अन्यतरस्यां ।
स्वरितञितः कर्त्र्-अभिप्राये क्रियाफले (*१,३.७२) इत्यात्मनेपदं ।
अलिपत, अलिप्त ।
असिचत, असिक्त ।
अह्वत्, अह्वास्त । ।

---

[#१८९]

1. <पुषादि-द्युताद्य्-ऌदितः प्रस्मैपदेषु># । । PS_३,१.५५ । ।

_______Sठाञ्ठ्JKव्_३,१.५५ः

द्युतादिभ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतः अङादेशो भवति ।
पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादि-क्र्याद्य्-अन्तर्गणः ।
पुष - अपुषथ् ।
द्युतादि - अद्युतथ् ।
अश्वितथ् ।
ऌदिद्भ्यःगमृ- अगमथ् ।
शकृ- अशकथ् ।
परस्मैपदेसु इति किं ? व्यद्योतिष्ट ।
अलोटिष्ट । ।

---

1. <सर्ति-शास्त्य्-अर्तिभ्यश्च># । । PS_३,१.५६ । ।

_______Sठाञ्ठ्JKव्_३,१.५६ः

सृ गतौ, शासु अनुशिष्टौ ऋ गतौ इत्येतेभ्यः परस्य च्लेः अङ्-आदेशो भवति ।
असरथ् ।

अशिषथ् ।
आरथ् ।
पृथग्योगकरणं आत्मनेपदार्थं ।
समरन्त ।
चकारः परस्मैपदेषु इत्यनुकर्षण-अर्थः तच्चोत्तरत्रोपयोगं यास्यति । ।

---

1. <इरितो वा># । । PS_३,१.५७ । ।

______Sठा~ठ्JKव्_३,१.५७ः

इरितो धातोः परस्य च्लेः अङ्-आदेशो वा भवति ।
भिदिर्- अभिदत्, अभैत्सीथ् ।
छिदिर्- अच्छिदत्, अच्छैत्सीथ् ।
परस्मैपदेषु इत्येव, अभित्त ।
अच्छित्त । ।

---

1. <ज्é-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च># । । PS_३,१.५८ । ।

______Sठा~ठ्JKव्_३,१.५८ः

वा इति वर्तते ।
ज्éष्वयोहानौ, स्तम्भुः सौत्रो धातुः, म्रुचु, म्लुचु गत्यर्थे, ग्रुचु, ग्लुचु स्तेयकरणे, ग्लुञ्चु, षस्ज गतौ, टुओश्वि गति-वृद्ध्योः, एतेभ्यो धातुभ्यः परस्य च्लेर्वा अङ्-आदेशो भवति ।
अजरत्, अजारीथ् ।
अस्तभत्, अस्तम्भीथ् ।
अम्रुचत्, अम्रोचीथ् ।
अम्लुचत्, अम्लोचीथ् ।
अग्रुचत्, अग्रोचीथ् ।
अग्लुचत्, अग्लोचीथ् ।
अग्लुञ्चत्, अग्लुञ्चीथ् ।
अश्वत्, अश्वयीत्, अशीश्वियथ् ।
ग्लुचु-ग्लुज्च्वोरन्यतरोपादानेऽपि रूपत्रयं सिध्यति, अर्थभिदात्तु द्वयोरुपादानं कृतं ।
केचित्तु वर्नयन्ति द्वयोरुपादान-सामर्थ्याद्ग्लुञ्चेरनुनासिकलोपो न भवति, अग्लुञ्चतिति । ।

---

1. <कृ-मृ-दृ-रुहिभ्यश्छन्दसि># । । PS_३,१.५९ । ।

_______Sठा~ठ्JKव्_३,१.५९ः

कृ मृ दृ इत्येतेभ्यः परस्य च्लेः छन्दसि विषये अङ्-आदेशो भवति ।
शकलाङ्गुष्ठकोऽकरथ् ।
अथोऽमर ।
अदरदर्थान् ।
सानुमारुहथ् ।
अन्तरिक्षाद्दिवमारुहं ।
छन्दसि इति किं ? अकार्षीथ् ।
अमृत ।
अदारीथ् ।
अरुक्षत् । ।

---

[#१९०]

1. <चिण्ते पदः># । । PS_३,१.६० । ।

_______Sठा~ठ्JKव्_३,१.६०ः

पद गतौ, अस्माद्धातोः परस्य च्लेः चिण्-आदेसो भवति तशब्दे परतः ।
समर्थ्यादात्मनेपद-एकवचनं गृह्यते ।
उदपादि सस्यं ।
समपादि भैक्षं ।
त इति किं ? उदपत्साताां ।
उदपत्सत । ।

---

1. <दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम्># । । PS_३,१.६१ । ।

_______Sठा~ठ्JKव्_३,१.६१ः

चिण्ते इति वर्तते ।
दीपी दीप्तौ, जनी प्रादुर्भावे, बुध अवगमने, पूरी आप्यायने, तायृ सन्तानपालनयोः, ओप्याअयी वृद्धौ, एतेभ्यः परस्य च्लेः तशब्दे परतोऽन्यतरस्यां चिण्-आदेशो भवति ।
अदीपि, अदीपिष्ट ।
अजनि, अजनिष्ट ।

अबोधि, अबुद्ध ।
अपूरि, अपूरिष्ट ।
अतायि, अतायिष्ट ।
अप्यायि, अप्यायिष्ट । ।

---

1. <अचः कर्मकर्तरि># । । PS_३,१.६२ । ।

_______Sठाऱ्ठ्JKव्_३,१.६२ः

अजन्ताद्धातोः परस्य च्लेः कर्मक्र्तरि त-शब्दे परतः चिणादेषो भवति ।
प्राप्त-विभाषेयं ।
अकारि कटः स्वयं एव, अकृत कटः स्वयं एव ।
अलावि केदारः स्वयं एव, अलविष्ट केदारः स्वयं एव ।
अचः इति किं ? अभेदि काष्ठं स्वयं एव ।
कर्मकर्तरि इति किं ? अकारि कटो देवदत्तेन । ।

---

1. <दुहश्च># । । PS_३,१.६३ । ।

_______Sठाऱ्ठ्JKव्_३,१.६३ः

दुह प्रपूरणे, अस्मात्परस्य च्लेः चिणादेशो भवत्यन्यतरस्यां ।
अदोहि गौः स्वयं एव, अगुग्ध गौः स्वयं एव ।
कर्मकर्तरि इत्येव, अदोहि गौर्गोपालकेन । ।

---

1. <न रुधः># । । PS_३,१.६४ । ।

_______Sठाऱ्ठ्JKव्_३,१.६४ः

रुधिरावरणे, अस्मात्परस्य च्लेः कर्मक्र्तरि चिण्-आदेशो न भवति ।
अन्ववारुद्ध गौः स्वयं एव ।
कर्मकर्तरि इत्येव, अन्ववारोधि गौः गोपालकेन । ।

---

1. <तपोऽनुतापे च># । । PS_३,१.६५ । ।

_______Sठाञ्ठJKव्_३,१.६५ः

न इति वर्तते ।
तप सन्तापे, अस्मात्परस्य च्लेः चिणादेशो न भवति कर्मकर्तरि अनुतापे च ।
अनुतापः पश्चात्तपः ।
तस्य ग्रहणं कर्मकर्त्रर्थं, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति ।
अतप्त तपस्तापसः ।
अन्ववातप्त पापेन कर्मणा । ।

---

[#१९१]

1. <चिण्भावकर्मणोः># । । PS_३,१.६६ । ।

_______Sठाञ्ठJKव्_३,१.६६ः

धातोः परस्य च्लेः चिण्-आदेशो भवति भावे कर्मणि त-शब्दे परतः ।
भावे तावत्-- अशायि भवता ।
कर्मणि खल्वपि -- अकारि कटो देवदत्तेन ।
अहारि भारो यज्ञदत्तेन ।
चिण्-ग्रहणं विस्पष्ट-अर्थं । ।

---

1. <सार्वधातुके यक्># । । PS_३,१.६७ । ।

_______Sठाञ्ठJKव्_३,१.६७ः

भावकर्म-वाचिनि सार्वधातुके परतो धतोः यक्प्रत्ययो भवति ।
आस्यते भवता ।
शय्यते भवता ।
कर्मणि -- क्रियते कटः ।
गम्यते ग्रामः ।
ककारो गुणवृद्धि-प्रतिषेध-अर्थः ।

यग्-विधाने कर्मक्तर्य्-उपसङ्ख्यानं ।
विप्रतिषेधाद्धि यकः शपो वलीयस्त्वं ।
क्रियते कटः स्वयं एव ।
पच्यते ओदनः स्वयं एव । ।

---

1. <कर्तरि शप्># । । PS_३,१.६८ । ।

_______Sठाञ्ठ्JKव्_३,१.६८ः

कर्तृ-वाचिनि सार्वधातुके परतो धातोः शप्प्रत्ययओ भवति ।
पकारः स्वरार्थः ।
शकारः सार्वधातुक-सञ्ज्ञ-अर्थः ।
भवति ।
पचति । ।

---

1. <दिव्-आदिभ्यः श्यन्># । । PS_३,१.६९ । ।

_______Sठाञ्ठ्JKव्_३,१.६९ः

दिवित्येवं आदिभ्यः धातुभ्यः श्यन्पर्त्ययो भवति ।
शपोऽपवादः ।
नकारः स्वर-अर्थः ।
शकारः सार्वधातुक-अर्थः ।
दीव्यति ।
सीव्यति । ।

---

1. <वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुति-लषः># । । PS_३,१.७० । ।

_______Sठाञ्ठ्JKव्_३,१.७०ः

उभयत्र विभाषेयं ।
टुभ्राशृ, दुभ्लाशृ दीप्तौ, भ्रमु अनवस्थाने, भ्रमु चलने, द्वयोरपि ग्रहणम्, क्रमु पादविक्षेपे, क्लमु ग्लानौ, त्रसी उद्वेगे, त्रुटी छेदने, लष कान्तौ, एतेभ्यो वा श्यन्प्रत्ययो भवति ।

भ्राश्यते, भ्राशते।
भ्लाश्यते, भ्लाशते।
भ्राम्यति, भ्रमति।
क्राम्यति, क्रामति।
क्लाम्यति, क्लामति।
त्रस्यति, त्रसति।
त्र्युट्यति, त्रुटति।
लष्यति, लषति।।

---

1. <यसोऽनुपसर्गात्>#।। PS_३,१.७१।।

______Sठा~ठ्JKव्_३,१.७१ः

यसु प्रयत्ने दैवादिकः।
तस्मान्नित्यं श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते।
यसोऽनुपसर्गाद्वा श्यन्प्रत्ययो भवति।
यस्यति, यसति।
अनुपसर्गातिति किं? आयस्यति।
प्रयस्यति।।

---

[#१९२]

1. <संयसश्च>#।। PS_३,१.७२।।

______Sठा~ठ्JKव्_३,१.७२ः

सोपसर्ग-अर्थ आरम्भः।
सम्पूर्वाच्च यसेः वा श्यन्प्रत्ययो भवति।
संयस्यति, संयसति।।

---

1. <स्व्-आदिभ्यः श्नुः>#।। PS_३,१.७३।।

______Sठा~ठ्JKव्_३,१.७३ः

षूञभिषवे, इत्येवं आदिभ्यो धातुभ्यः श्नुप्रत्ययो भवति।
शपोऽपवादः।
सुनोति।
सिनोति॥

---

1. <श्रुवः शृ च># । । PS_३,१.७४ । ।

______Sठा~ठ्JKव्_३,१.७४ः

श्रुवः श्नु-प्रत्ययो भवति, तत्संनियोगेन श्रुवः शृ इत्ययं आदेशो भवति।
शृणोति, शृणुतः, शृ्ण्वन्ति॥

---

1. <अक्षोऽन्यतरस्याम्># । । PS_३,१.७५ । ।

______Sठा~ठ्JKव्_३,१.७५ः

अक्षू व्याप्तौ।
भौवादिकः।
अस्मादन्यतरस्यां श्नु-प्रत्ययो भवति।
अक्ष्णोति, अक्षति॥

---

1. <तनू-करणे तक्षः># । । PS_३,१.७६ । ।

______Sठा~ठ्JKव्_३,१.७६ः

तक्षू त्वक्षू तनू-करणे, अस्मात्तनूकरणे वर्तमानातनतरस्यां श्नु-प्रत्ययो भवति।
अनेकार्थत्वाद्धातूनां विशेषण-उपादानं।
तक्ष्णोति काष्ठम्, तक्षति काष्ठं।
तनूकरणे इति किं? संतक्षति वाग्भिः॥

---

1. <तुद्-आदिभ्यः शः># । । PS_३,१.७७ । ।

_______Sठा~ठ्JKव्_३,१.७७ः

तुद व्यथने इत्येवं आदिभ्यो धातुभ्यः श-प्रत्ययो भवति ।
शपोऽपवादः ।
शकारः सार्वधातुकसञ्ज्ञ-अर्थः ।
तुदति ।
नुदति । ।

---

1. <रुदः-आदिभ्यः श्नम्># । । PS_३,१.७८ । ।

_______Sठा~ठ्JKव्_३,१.७८ः

रुधिरावरणे इत्येवं आदिभ्यो धातुभ्यः श्नं प्रत्ययो भवति ।
शपोऽपवादः ।
मकारो देशविध्यर्थः ।
शकारः श्नान्नलोपः (*६,४.२३) इति विशेषण-अर्थः ।
रुणद्धि ।
भिनत्ति । ।

---

[#१९३]

1. <तन्-आदि-कृञ्भ्यः उः># । । PS_३,१.७९ । ।

_______Sठा~ठ्JKव्_३,१.७९ः

तनु विस्तारे इत्येवं आदिभ्यो धातुभ्यः कृञश्च उ-प्रत्ययो भवति ।
शपोऽपवादः ।
तनोति ।
सनोति ।
क्षणोति ।
कृञः खल्वपि - करोति ।
तनादि-पाठादेव उ-प्रत्यये सिद्धे करोतेरुपादानं नियम-अर्थम्, अन्यत्तन्-आदि-कार्यं मा भूतिति ।

तन्-आदिभ्यस्त-थासोः (*२,४.७९)।
इति विभाषा सिचो लुग्न भवति।
अकृत।
अकृथाः।।

---

1. <धिन्वि-कृण्व्योर च>#।। PS_३,१.८०।।

______Sठाऽठ्JKव्_३,१.८०ः

हिवि, धिवि जिवि प्रीणन-अर्थाः, कृवि हिंसाकरणयोः, इत्येतयोः धात्वोः उ-प्रत्ययो भवति, अकारश्च अन्तादेशः।
धिनोति।
कृणोति।
अतो लोपस्य स्थानिवद्भावात्गुणो न भवति।।

---

1. <क्र्य्-आदिभ्यः श्ना>#।। PS_३,१.८१।।

______Sठाऽठ्JKव्_३,१.८१ः

डुक्रीञ्द्रव्यविनिमये इत्येवं आदिभ्यः धातुभ्यः श्ना प्रत्ययो भवति।
शपोऽपवादः।
शकारः सार्वधातुक-सञ्ज्ञ-अर्थः।
क्रीणाति।
प्रीणाति।।

---

1. <स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च>#।। PS_३,१.८२।।

______Sठाऽठ्JKव्_३,१.८२ः

आद्याश्चत्वारो धातवः सौत्राः, स्कुञाप्रवणे, एतेभ्यः श्ना प्रत्ययो भवति, श्नुः च।
स्तभ्नाति, स्तभ्नोति।
स्तुभ्नाति, स्तुभ्नोति।
स्कभ्नाति, स्कभ्नोति।

स्कुभ्नाति, स्कुभ्नोति ।
स्कुनाति, स्कुनोति ।
उदित्त्व-प्रतिज्ञानात्सौत्राणां अपि धातूनां सर्वार्थत्वं विज्ञायते, न+एतद्विकरण-विषयत्वं एव । ।

---

1. <हलः श्नः शानज्झौ># । । PS_३,१.८३ । ।

______Sठा~ठ्JKव्_३,१.८३ः

हल उत्तरस्य श्ना-प्रत्ययस्य शनज्-आदेशो भवति हौ परतः ।
मुषाण ।
पुषाण ।
हलः इति किं ? क्रीणीहि ।
हौ इति किं ? मुष्णाति ।
श्नः इति स्थानि-निर्देशः आदेश-सम्प्रत्यय-अर्थः ।
इतरथा हि प्रत्यय-अन्तरं एव सर्वविषयं विज्ञायेत । ।

---

[#१९४]

1. <छन्दसि शायजपि># । । PS_३,१.८४ । ।

______Sठा~ठ्JKव्_३,१.८४ः

छन्दसि विषये श्नः शायचादेशो भवति, शानजपि ।
गृभाय जिह्वया मधु ।
शानचः खल्वपि - बधान देव सवितः । ।

---

1. <व्यत्ययो बहुलम्># । । PS_३,१.८५ । ।

______Sठा~ठ्JKव्_३,१.८५ः

यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति ।
व्यतिगमनं व्यत्ययः, व्यतिहारः ।

विषयान्तरे विधानम्, क्वचिद्द्विविकरणता, क्वचित्त्रिविकरणता च ।
आण्डा शुष्णस्य भेदति ।
भिनत्ति इति प्राप्ते ।
ताश्चिन्नौ न मरन्ति ।
न म्रियन्ते इति प्राप्ते ।
द्विविकरणता - इन्द्रो वस्तेन नेषतु ।
नयतु इति प्राप्ते ।
त्रिविकरणता - इन्द्रेण युजा तरुषेम वृत्रं ।
तीर्यस्म इति प्राप्ते ।
बहुल-ग्रहणं सर्वविधि-व्यभिचार-अर्थं ।
सुप्तिङुपग्रलिङ्गनरणां कालहलच्स्वरकर्तृयडां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बहुलकेन । ।

---

1. <लिङ्याशिष्यङ्># । । PS_३,१.८६ । ।

_______Sठा~ठJKव्_३,१.८६ः

आशिषि विषये यो लिङ्तस्मिन्परतः छन्दसि विषये अङ्प्रत्ययो भवति ।
शपोऽपवादः ।
छन्दस्युभयथा (*३,४.११७) इति लिङः सार्वधातुक-सञ्ज्ञाप्यस्ति ।
स्थागागमिवचिविदिशकिरुहयः प्रयोजनं ।
स्था - उपस्थेषं वृषभं तुग्रियाणां ।
गा - सत्यं उपगेषं ।
गमि - गृहं गमेम ।
वचि - मन्त्रं वोचेमाग्नये ।
विदि - विदेयमेनां मनसि प्रविष्टां ।
शकि - व्रतं चरिष्यामि तच्छकेयं ।
रुहि - स्वर्गं लोकं आरुहेयं ।
दृशेरग्वक्तव्यः ।
पितरं दृशेयं मातरं च । ।

---

[#१९५]

1. <कर्मवत्कर्मणा तुल्यक्रियः># । । PS_३,१.८७ । ।

_______Sठा~ठJKव्_३,१.८७ः

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति ।

यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि, स कर्ता कर्मवद्भवति ।
कर्माश्रयाणि कार्याणि प्रतिपद्यते ।
कर्तरि शप्(*३,१.६८) इति कर्तृ-ग्रहणं इह अनुवृत्तं प्रथमया विपरिणम्यते ।
यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनं ।
भिद्यते काष्ठं स्वयं एव ।
अभेदि काष्ठं स्वयं एव ।
कारिष्यते कटः स्वयं एव ।
वत्करणं स्वाश्रयं अपि यथा स्यात्, भिद्यते कुसूलेन इति ।
अकर्मकाणां भावे लः सिद्धो भवति ।
लिङ्य्-आशि-ष्यङ्(*३,१.८६) इति द्विलकारको निर्देशः ।
तत्र लानुवृत्तेर्लान्तस्य कर्ता कर्मवद्भवति इति कुसूलाद्द्वितीया न भवति ।
कर्मणा इति किं ? करण-अधिकरण-अभ्यां तुल्यक्रियस्य मा भूथ् ।
साध्वसिश्छिनत्ति ।
साधु स्थाली पचति ।
धात्व्-अधिकारात्समाने धातौ कर्मवद्-भावः ।
इह न भवति, पचत्योदनं देवदत्तः, राध्यन्त्योदनं स्वयं एव इति ।
कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थाभावकानां न वा कर्तृस्थ-क्रियाणां ।
कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया । ।

---

1. <तपस्तपः-कर्मकस्य+एव># । । PS_३,१.८८ । ।

_______Sठा~ठ्JKव्_३,१.८८ः

तप सन्तापे, अस्य कर्ता कर्मवद्भावति, स च तपः-कर्मकस्य+एव न अन्यकर्मकस्य ।
क्रियाभेदाद्विध्य्-अर्थं एतथ् ।
उपवासादीनि तपांसि तापसं तपन्ति ।
दुःखयन्ति इत्यर्थः ।
स तापसस्त्वगस्थिभूतः स्वर्गाय तपस्तप्यते ।
अर्जयति इत्यर्थः ।
पूर्वेण अप्राप्तः कर्मवद्भावो विधीयते ।
तप्यते तपस्तापसः ।
अतप्त तपस्तापसः ।
तपःकर्मकस्य+एव इति किं ? उत्तपति सुवर्णं सुवर्णकारः । ।

---

1. <न दुह-स्नु-नमां यक्-चिणौ># । । PS_३,१.८९ । ।

_______Sठा~ठ्JKव्_३,१.८९ः

दुह सनु नं इत्येतेषं कर्मकर्तरि यक्-चिणौ कर्मवद्भाव-अपदिष्टौ न भवतः ।
दुहेरनेन यक्प्रतिषिध्यते ।
चिण्तु दुहश्च (*३,१.६३) इति पूर्वं एव विभाषितः ।
दुग्धे गौः स्वयं एव ।
अदुग्ध गौः स्वयं एव ।
अदोहि गौः स्वयं एव ।
प्रस्नुते गौः स्वयं एव ।
प्रास्नोष्ट गौः स्वयं एव ।
नमते दण्डः स्वयं एव ।
अनंस्त दण्डः स्वयं एव ।
यक्-चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञ्. आत्मनेपदाकर्मकाणां उपसङ्ख्यानं ।
कारयति कटं देवदत्तः ।
कारयते कटः स्वयं एव ।
अचीकरत्कटं देवदत्तः ।
अचीकरत कटः स्वयं एव ।
उत्पुच्छयते गां गोपः ।
उत्पुच्छयते गौः स्वयं एव ।
उदपुपुच्छत गौः स्वयं एव ।
श्रथ्नाति ग्रन्थं देवदत्तः ।
श्रथ्नीते ग्रन्थः स्वयं एव ।
अश्रन्थिष्ट ग्रन्थः स्वयं एव ।
ग्रथ्नाति श्लोकं देवदत्तः ।
ग्रथ्नीते श्लोकः स्वयं एव ।

[#१९६]

अग्रन्थिष्ट श्लोकः स्वयं एव ।
ब्रवीति श्लोकं देवदत्तः ।
ब्रूते श्लोकः स्वयं एव ।
अवोचत्श्लोकं देवदत्तः ।
अवोचत श्लोकः स्वयं एव ।
आत्मनेपद-विधानेऽकर्मकाणां - आहन्ति माणवकं देवदत्तः ।
आहते माणवकः स्वयं एव ।
आवधिष्ट मानवकः स्वयं एव, आहत इति वा ।
विकुर्वते सैन्धवाः स्वयं एव ।
व्यकृषत सैन्धवः स्वयं एव । ।

---

1. <कुषि-रजोः प्राचां श्यन्परस्मैपदं च># । । PS_३,१.९० । ।

_______Sठाऱ्ठ्JKव्_३,१.९०:

कुष निष्कर्षे, रञ्ज रागे, अनयोर्धात्वोः कर्मकर्तरि प्राचां आचार्याणां मतेन श्यन्प्रत्ययो भवति, परस्मैपदं च ।
यग्-आत्मनेपदयोरपवादौ ।

कुष्यति पादः स्वयं एव ।
रज्यति वस्त्रं स्वयं एव ।
प्राचां ग्रहणं विकल्प-अर्थं ।
कुष्यते ।
रज्यते ।
व्यवस्थित-विभाषा च+इयं ।
तेन लिट्-लिङोः स्यादि-विषये च न भवतः ।
चुकुषे पादः स्वयं एव ।
ररञ्जे वस्त्रं स्वयं एव ।
कोषिषीष्ट पादः स्वयं एव ।
रङ्क्षीष्ट वस्त्रं स्वयं एव ।
कोषिष्यते पादः स्वयं एव ।
रङ्क्ष्यते वस्त्रं स्वयं एव ।
अकोषि पादः स्वयं एव ।
अरञ्जि वस्त्रं स्वयं एव । ।

---

1. <धातोः># । । PS_३,१.९१ । ।

_______Sठाऽठ्JKव्_३,१.९१ः

धातोः इत्ययं अधिकारो वेदितवयः ।
आतृतीयाध्याय-परिसमाप्तेः यदित ऊर्ध्वं अनुक्रमिष्यामो धातोः इत्येवं तद्वेदितव्यं ।
वक्ष्यति - तव्यत्-तव्य-अनीयरः (*३,१.९६) इति ।
कर्तव्यं ।
करणीयं ।
धातु-ग्रहनं अनकर्थकं यङ्-विधौ धात्व्-अधिकाराथ् ।
कृदुपपद-सज्ञ-अर्थं तर्हि, अस्मिन्धात्व्-अधिकारे ते यथा स्यातां, पूर्वत्र मा भूतां इति ।
आर्धधातुक-सञ्ज्ञ-अर्थं च द्वितीयं धातु-ग्रहणं कर्तव्यं ।
धातोः इत्येवं विहितस्य यथा स्याथ् ।
इह मा भूत्, लूभ्याम्, लूभिः इति । ।

---

1. <तत्र+उपपदं सप्तमीस्थम्># । । PS_३,१.९२ । ।

_______Sठाऽठ्JKव्_३,१.९२ः

तत्र+एतस्मिन्धात्व्-अधिकारे तृतीये यत्सप्तमी-निर्दिष्टं तदुपपद-सञ्ज्ञं भवति ।
वक्ष्यति - कर्मण्य्-अण्(*३,२.१) ।
कुम्भकारः ।

स्थ-ग्रहणं सूत्रेषु सप्तमी-निर्देश-प्रतिपत्त्य्-अर्थं ।
इतरथा हि सप्तमी श्रूयते यत्र तत्र+एव स्यात्, स्तम्बेरमः, कर्णेजपः इति ।
यत्र वा सप्तमी-श्रुतिरस्ति सप्तम्यां जनेर्डः (*३,२.९७) इति, उपसरजः, मन्दुरजः इति ।
स्थ-ग्रहणात्तु सर्वत्र भवति ।
गुरुसञ्ज्ञा-करणं अन्वर्थसञ्ज्ञा-विज्ञाने सति समर्थ-परिभाषाव्यापार-अर्थं ।
पष्य कुम्भं, करोति कटं इति प्रत्ययो न भवति ।
उपपद-प्रदेशाः - उपपदं अतिङ्(*२,२.१९) इत्येवं आदयः । ।

---

[#१९७]

1. <कृदतिङ्># । । PS_३,१.९३ । ।

______Sठाञ्ठJKव्_३,१.९३ः

अस्मिन्धात्व्-अधिकारे तिङ्-वर्जितः प्रत्ययः कृत्-सञ्ज्ञको भवति ।
कर्तव्यं ।
करणीयं ।
अतिङ इति किं ? चीयाथ् ।
स्तूयाथ् ।
कृत्प्रदेशाः -- कृत्-तद्धित-समासश्च (*१,२.४६) इत्येवं आदयः । ।

---

1. <वाऽसरूपोऽस्त्रियाम्># । । PS_३,१.९४ । ।

______Sठाञ्ठJKव्_३,१.९४ः

अस्मिन्धात्व्-अधिकारेऽस्मानरूपः प्रत्ययोऽपवादो वा बाधको भवति स्त्र्यधिकार-विहित-प्रत्ययं वर्जयित्वा ।
ण्वुल्-तृचौ (*३,१.१३३) उत्सर्गौ, इगुपध-ज्ञा-प्रि-इकिरः कः (*३,१.१३५) इत्यपवादः, तद्-विषये ण्वुल्-तृचौ (*३,१.१३३) अपि भवतः ।
विक्षेपकः, विक्षेप्ता, विक्षिपः ।
असरूप इति किं ? कर्मण्य्-अण्(*३,२.१) इत्युत्सर्गः, आतोऽनुपसर्गे कः (*३,२.३) इत्यपवादः, सनित्यं बाधको भवति ।
गोदः ।
कम्बलदः ।
न अमुबन्ध-कृतं असारूप्यं ।
अस्त्रियां इति किं ? स्त्रियां कितन्(*३,३.९४) इत्युत्सर्गः, अ प्रत्ययात्(*३,३.१०२) इत्यपवदः, स बाधक एव भवति ।
चिकीर्षा जिहीर्षा । ।

---

1. <कृत्याः प्रग्ण्वुलः># । । PS_३,१.९५ । ।

_______Sठा~ठ्JKव्_३,१.९५ः

ण्वुल्-तृचौ (*३,१.१३३) इति वक्ष्यति ।
प्रागेतस्माण्ण्वुल्संशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः, कृत्य-सञ्जकस्ते वेदितव्याः ।
तत्र+एव+उदाहरिस्यामः ।
कृत्य-प्रदेशः - कृत्यैरधिक-आर्थ-वचने (*२,१.३३), कृत्यानां कर्तरि वा (*२,३.७१) इत्येवं आदयः । ।

---

1. <तव्यत्-तव्य-अनीयरः># । । PS_३,१.९६ । ।

_______Sठा~ठ्JKव्_३,१.९६ः

धातोः (*३,१.९१) इति वर्तते ।
धातोः तव्यत्, तव्य, अनीयरित्येते प्रयया भवन्ति ।
तकाररेफौ स्वरार्थौ ।
कर्तव्यं ।
कर्तव्यं ।
कर्णीयं ।
वसेस्तव्यत्कर्तरि णिच्च ।
वास्तव्यः ।
केलिमर उपसङ्ख्यानं ।
पचेलिमाः माषाः ।
भिदेलिमानि काष्ठानि ।
कर्मकर्तरि च अयं इष्यते । ।

---

[#१९८]

1. <अचो यत्># । । PS_३,१.९७ । ।

_______Sठा~ठ्JKव्_३,१.९७ः

अजन्ताद्धातोः यत्प्रत्ययो भवति ।
तकारो यतोऽनावः (*६,१.२१३) इति स्वरार्थः ।
गेयं ।
पेयं ।
चेयं ।
जेयं ।

अज्-ग्रहणं किं यावता हलन्ताण्ण्यतं वक्ष्यति ? अजन्तभूत-पूर्वादपि यथा स्यात्, दित्स्यम्, धित्स्यं ।
तकिशसिचतियतिजनीनां उपसङ्ख्यानं तकि -- तक्यं ।
शसि -- शस्यं ।
चति -- चत्यं ।
यति -- यत्यं ।
जनि -- जन्यं ।
हनो वा वध च ।
वध्यम्, घात्यं । ।

---

1. <पोरद्-उपधात्># । । PS_३,१.९८ । ।

______Sठाऽठ्JKव्_३,१.९८ः

पवर्ग-अन्ताद्धातोः अकारोपधात्यत्प्रययो भवति ।
ण्यतोऽपवादः ।
शप्- शप्यं ।
लभ - लभ्यं ।
पोः इति किं ? पाक्यं ।
वाक्यं ।
अदुपधातिति किं ? कोप्यं ।
गोप्यं ।
तपरकरणं तत्काल-अर्थं ।
आप्यं । ।

---

1. <शकि-सहोश्च># । । PS_३,१.९९ । ।

______Sठाऽठ्JKव्_३,१.९९ः

शकृशक्तौ, षह मर्षणे, अनयोर्धात्वोः यत्प्रययो भवति ।
शक्यं ।
सह्यं । ।

---

1. <गद-मद-चर-यमश्च अनुपसर्गे># । । PS_३,१.१०० । ।

_______Sठा~ठ्JKव्_३,१.१००:

गद व्यक्तायां वाचि, मदी हर्षे, चर गतिभक्षणयोः, यम उपरमे, एतेभ्यश्च अनुपसर्गेभ्यो यत्प्रत्ययो भवति।
गद्यं।
मद्यं।
चर्यं।
यम्यं।
अनुपसर्गे इति किं? प्रगाद्यं।
प्रमाद्यं।
यमेः पूर्वेण+एव सिद्धे अनुपसर्ग-नियम-अर्थं वचनं।
चरेराङि चागुरौ।
आचर्यो देशः।
अगुरौ इति किं? आचार्य उपनेता।।

---

[#१९९]

1. <अवद्य-पण्य-वर्या गर्ह्य-पणितव्य-अनिरोधेषु>#।। PS_३,१.१०१।।

_______Sठा~ठ्JKव्_३,१.१०१:

अवद्य पण्य वर्या इत्येते शब्दा निपात्यन्ते गर्ह्य पणितव्य अनिरोध इत्येतेष्वर्थेषु यथा-सङ्ख्यं।
अवध्यं इति निपात्यते गर्ह्यं चेत्तद्भवति।
अवद्यं पापं।
अनुद्यं अन्यथ्।
वदः सुपि क्यप्च (*३,१.१०६)।
पण्यं इति निपात्यते, पणितव्यं चेत्तद्भवति।
पण्यः कम्बलः।
पण्या गौः।
पाण्यं अन्यथ्।
वर्या इति स्त्रियां निपात्यते, अनिरोधश्चेद्भवति।
अनिरोधोऽप्रतिबन्धः।
शतेन वर्या।
सहस्रेण वर्या।
वृत्या अन्या।
स्त्रीलिङ्ग-निर्देशः किं अर्थः? वार्या ऋत्विजः।।

---

1. <वह्यं करणम्>#।। PS_३,१.१०२।।

_______Sठा~ठ्JKव्_३,१.१०२ः

वहेर्धातोः करणे यत्प्रत्ययो निपात्यते।
वहत्यनेन इति वह्यं शकटं।
करणे इति किं ? वाह्यं अन्यत्॥

---

1. <अर्यः स्वमि-वैश्ययोः># ॥ PS_३,१.१०३ ॥

_______Sठा~ठ्JKव्_३,१.१०३ः

ऋ गतौ, अस्माण्ण्यति प्राप्ते स्वामि-वैश्ययोः अभिधेययोः यत्प्रत्ययो निपत्यते।
अर्यः स्वामी।
अर्यो वैश्यः।
यतोऽनावः (*६,१.२१३) इत्याद्य्-उदात्तत्वे प्राप्ते - स्वामिन्यन्तोदात्तत्वं च वक्तव्यं।
स्वामि-वैश्ययोः इति किं ? आर्यो ब्राह्मणः॥

---

1. <उपसर्या काल्या प्रजने># ॥ PS_३,१.१०४ ॥

_______Sठा~ठ्JKव्_३,१.१०४ः

उपसर्या इति निपात्यते काल्या चेत्प्रजने भवति।
उपपूर्वात्सर्तेः यत्प्रत्ययः।
प्रप्तकाला काल्या।
प्रजनः प्रजननं, प्रथमगर्भ-ग्रहणं।
गर्भ-ग्रहणे प्रप्तकाला।
उपसर्या गौः।
उपसर्या वडवा।
काल्या प्रजने इति किं ? उपसार्या शरदि मधुरा॥

---

1. <अजर्यं सङ्गतम्># ॥ PS_३,१.१०५ ॥

_______Sठा~ठ्JKव्_३,१.१०५ः

अजर्यं इति निपात्यते, सङ्गतं चेद्भवति।
जीर्यतेः नञ्पूर्वात्सङ्गते सङ्गमने कर्तरि यत्प्रययो निपात्यते।
न जीर्यति इति अजर्यं।
अजर्यं आर्य-सङ्गतं।
अजर्यं नोऽस्तु सङ्गतं।
सङ्गतं इति किं? अजरिता कम्बलः।।

---

[#२००]

1. <वदः सुपि क्यप्च>#।। PS_३,१.१०६।।

_______Sठा~ठ्JKव्_३,१.१०६ः

अनुपसर्गे इति वर्तते।
वदेर्धातोः सुबन्तोः उपपदे अनुपसर्गे क्यप्प्रत्ययो भवति, चकाराद्यत्च।
ब्रह्मोद्यम्, ब्रह्मवद्यं।
सत्योद्यम्, सत्यवद्यं।
सुपि इति किं? वाद्यं।
अनुपसर्गे इत्येव, प्रवाद्यं।।

---

1. <भुवो भावे>#।। PS_३,१.१०७।।

_______Sठा~ठ्JKव्_३,१.१०७ः

सुप्यनुपसर्गे इत्यनुवर्तते।
भवतेर्धातोः सुबन्ते उपपदेऽनुपसर्गे भावे क्यप्प्रत्ययो भवति।
यत्तु न अनुवर्तते।
ब्रह्म-भूयं गतः ब्रह्मत्वं गतः।
देव-भूयं, देवत्वं गतः।
भाव-ग्रहणं उत्तर-अर्थं।
सुपि इत्येव, भव्यं।
अनुपसर्गे इत्येव, प्रभव्यं।।

---

1. <हनस्त च># । । PS_३,१.१०८ । ।

______Sठाञ्ठ्JKव्_३,१.१०८ः

सुप्यनुपसर्गे इति वर्तते, भावे इति च ।
हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप्प्रत्ययो भवति, तकारश्चान्तादेशः ।
ब्रह्महत्या ।
अश्वहत्या ।
सुपि इत्येव, घातः ।
ण्यत्तु भावे न भव्त्यनभिधानाथ् ।
अनुपसर्गे इत्येव, प्रघातो वर्तते । ।

---

1. <एति-स्तु-शास्-वृ-दृ-जुषः क्यप्># । । PS_३,१.१०९ । ।

______Sठाञ्ठ्JKव्_३,१.१०९ः

सुप्यनुपसर्गे भावे इति निवृत्तं ।
सामान्येन विधानमे तथ् ।
एति स्तु शास्वृ दृ जुषित्येतेभ्यः क्यप्प्रत्ययो भवति ।
इत्यः ।
स्तुत्यः ।
शिष्यः ।
वृत्यः ।
आदृत्यः ।
जुष्यः ।
क्यपिति वर्तमाने पुनः क्यब्-ग्रहणं बाधक-बाधन-अर्थं ।
ओरावश्यके (*३,१.१२५) इति ण्यतं बाधित्वा क्यबेव भवति ।
अवश्य्स्तुत्यः ।
वृ-ग्रहणे वृञो ग्रहणं इष्यते, न वृङः ।
वार्याः ऋत्विजः ।
शंसिदुहिगुहिभ्यो वेति वक्तव्यं ।
शस्यम्, शंस्यं ।
दुह्यम्, दोह्यं , गुह्यम्, गोह्यं ।
आङ्-पूर्वादञ्जेः सञ्ज्ञायां उपसङ्ख्यानं ।
आज्यं घृतं ।
कथं उपेयं ? एः एतद्रूपं, न इणः । ।

---

[#२०१]

1. <ऋदुपधाच्च अकृपि-चृतेः># । । PS_३,१.११० । ।

_______Sठा॑ठJKव्_३,१.११०ः

ऋकार-उपधाच्च धातोः क्यप्प्रत्ययो भवति कृपि-चृती वर्जयित्वा ।
वृतु - वृत्यं ।
वृधु - वृध्यं अकृपि-चृतेः इति किं ? कल्प्यं ।
चर्त्यं ।
तपरकरणं किं ? क्éत संशब्दने ।
ण्यदेव भवति कीर्त्यं ।
पाणौ सृजेर्ण्यद्वक्तव्यः ।
पाणिसर्ग्या रज्जुः ।
समवपूर्वाच्च ।
समवसर्ग्या । ।

---

1. <ई च खनः># । । PS_३,१.१११ । ।

_______Sठा॑ठJKव्_३,१.१११ः

खनेर्धातोः क्यप्प्रत्ययो भवति, ईकारश्च अन्तादेशः ।
खेयं ।
दीर्घ-निर्देशः प्रश्लेष-अर्थः ।
तत्र द्वितीय इकारो ये विभाषा (*६,४.४३) इति आत्त्वबाधनार्थः । ।

---

1. <भृञोऽसञ्ज्ञायाम्># । । PS_३,१.११२ । ।

_______Sठा॑ठJKव्_३,१.११२ः

भृञो धतोः असञ्ज्ञायां विषये क्यप्प्रययो भवति ।
भृत्याः कर्मकराः ।
भर्तव्याः इत्यर्थः ।
असञ्ज्ञायां इति किं ? भार्यो नाम क्षत्रियः ।
सम्पूर्वाद्विभाषा ।

सम्भृत्याः, सम्भार्याः ।
सञ्ज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भाव-अधिकारोऽस्ति तेन भार्य प्रसिध्यति । ।

---

1. <मृजेर्विभाषा># । । PS_३,१.११३ । ।

_______Sठाञ्ठJKव्_३,१.११३ः

मृजेर्धातोः विभाषा क्यप्प्रत्ययो भवति ।
ऋद्-उपधत्वात्प्राप्त-विभाषेयं ।
परिमृज्यः, परिमार्ग्यः । ।

---

[#२०२]

1. <राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्य-अव्यथ्याः># । । PS_३,१.११४ । ।

_______Sठाञ्ठJKव्_३,१.११४ः

राजसुय सुर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य इत्येते शब्दाः क्यपि निपात्यन्ते ।
राज्ञा सोतव्यः, राजा वा इह सूयते राजसूयः क्रतुः ।
सूसर्तिभ्यां क्यप्, सर्तेरुत्वं, सुबतेर्वा रुडागमः ।
सरति सुवति व सूर्यः ।
मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब्निपात्यते ।
मृषा-पूर्वस्य मृषोद्यं ।
रोचतेऽसौ रुच्यः ।
कर्तरि क्यप् ।
गुपेरादेः क्त्वं च सज्ञायां ।
कुप्यं ।
गोप्यं अन्यथ् ।
कृष्टे पच्यन्ते कृष्टप्च्याः ।
कर्मकर्तरि निपातनं ।
न व्यथते अव्यथ्यः । ।

---

1. <भिद्य-उद्ध्यौ नदे># । । PS_३,१.११५ । ।

_______Sठाञ्ठJKव्_३,१.११५:

भिदेरुज्झेश्च क्यप्निपात्यते नदेऽभिधेये ।
उज्झेर्धत्त्वं च ।
भिनत्ति कूलं भिद्यः ।
उज्झति उदकं उद्ध्यः ।
नदे इति किं ? भेत्ता ।
उज्झिता । ।

---

1. <पुष्य-सिद्ध्यौ नक्षत्रे># । । PS_३,१.११६ । ।

_______Sठाञ्ठJKव्_३,१.११६:

पुषेः सिधेश्च अधिकरणे क्यप्निपात्यते नक्षत्रे अभिधेये ।
पुष्यन्ति अस्मिन्नर्थाः इति पुष्यः ।
सिध्यन्ति अस्मिन्निति सिद्ध्यः ।
नक्षत्रे इति किं ? पोषणं ।
सेधनं । ।

---

1. <विपूय-विनीय-जित्या मुङ्ज-कल्क-हलिषु># । । PS_३,१.११७ । ।

_______Sठाञ्ठJKव्_३,१.११७:

निपूय विनीय जित्य इत्येते शब्दा निपात्यन्ते यथा-सङ्ख्यं मुञ्ज कल्क हलि इत्येतेषु अर्थेषु वोध्येषु ।
विपूर्वात्पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते कर्मणि क्यब्निपात्यते ।
विपूयो मुञ्जः ।
विपाव्यं अन्यथ् ।
विनीयः क्ल्कः ।
विनेयं अन्यथ् ।
जित्यो हलिः ।
जेयं अन्यत् । ।

---

1. <प्रत्य्-अपिभ्यां ग्रहेश्छन्दसि># । । PS_३,१.११८ । ।

_______Sठा~ठ्JKव्_३,१.११८ः

प्रति अपि इत्येवं पूर्वाद्ग्रहेः क्यप्प्रत्ययो भवति छन्दसि विषये ।
मत्तस्य न प्रतिगृहयं ।
तस्मान्न अपिगृहयं ।
छन्दसि इति किं ? प्रतिग्राहयं ।
अपिग्राहयं । ।

---

[#२०३]

1. <पद-अस्वैरि-बाहया-पक्ष्येषु च># । । PS_३,१.११९ । ।

_______Sठा~ठ्JKव्_३,१.११९ः

पदे अस्वैरिणि बाहयायां पक्ष्ये चर्थे ग्रहेर्धातोः क्यप्प्रत्ययो भवति ।
पदे तावत्-- प्रगृहयं पदम्, यस्य प्रगृहय-सञ्ज्ञा विहिता ।
अवगृहयं पदम्, यस्य अवग्रहः क्रियते ।
अस्वैरी परतन्त्रः ।
गृहयका इमे ।
गृहीतका इत्यर्थः ।
बाहयायं -- ग्राम-गृहया सेना ।
नगर-गृहया सेना ।
ग्राम.-नगर-अभ्यां बहिर्-भूता इत्यर्थः ।
स्त्रीलिङ्गः निर्देशादन्यत्र न भवति ।
पक्षे भवः पक्ष्यः ।
वासुदेव-गृहयाः ।
अर्जुन-गृहयाः ।
तत्पक्षाश्रिताः इत्यर्थः । ।

---

1. <विभाषा कृ-वृषोः># । । PS_३,१.१२० । ।

_______Sठा~ठ्JKव्_३,१.१२०ः

कृञो वृषश्च विभाषा क्यप्प्रत्ययो भवति ।
करोतेर्ण्यति प्राप्ते वर्षतेः ॠदुपधत्वान्नित्ये क्यपि प्राप्ते विभाषाभ्र्यते ।

कृत्यम्, कार्यं ।
वृष्यम्, वर्ष्यं ॥

---

1. <युग्यं च पत्रे># ॥ PS_३,१.१२१ ॥

_______SठJKव्_३,१.१२१:

युग्यं इति निपात्यते पत्रं चेत्तद्भवति ।
पतत्यनेन इत्पत्रं वाहनं उच्यते ।
युग्यो गौः ।
युग्योऽश्वः ।
युग्यो हस्ती ।
युजेः क्यप्कुत्वं च निपात्यते ।
पत्रे इति किं ? योग्यं अन्यत् ॥

---

1. <अमावस्यद्-अन्यतरस्याम्># ॥ PS_३,१.१२२ ॥

_______SठJKव्_३,१.१२२:

अमा-शब्दः सहार्थे वर्तते ।
तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत्प्रत्ययो भवति, तत्र अन्यतरस्यां वृद्ध्यभावो निपात्यते ।
सह वसतोऽस्मिन्काले सूर्याचन्द्रमसौ इति अमावस्य, अमावस्या ।
एकदेशविकृतस्य अनन्यत्वादमावास्याया वा (*४,३.३०) इत्यत्र अमावस्या-शब्दस्य अपि ग्रहणं भवति ।
अमावसोरहं ण्यतोर्निपातयाम्यवृद्धितां ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥

---

1. <छन्दसि निष्टक्र्य-देवहूय-प्रणीय-उन्नीय-उच्छिष्य-मर्य-स्तर्य-ध्वर्य-खन्य-खान्य-देवयज्या-आपृच्छय-प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ताव्य-उपचाय्यपृडानि># ॥ PS_३,१.१२३ ॥

_______SठJKव्_३,१.१२३:

निष्टक्र्य-आदयः शब्दाश्छन्दसि विषये निपात्यन्ते ।
यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धं ।

निष्टर्क्यः इति कृती छेदने इत्यस्मान्निस्पूर्वात्क्यपि प्राप्ते ण्यत्, आद्यन्त-विपर्ययश्च, निसश्च षत्वं निपात्यते ।
निष्टर्क्यं चिन्वीत पशुकामः ।
देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घस्तुगभावश्च ।
देव-हूयः ।
प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप् ।

[#२०४]

प्रणीयः ।
उन्नीयः ।
उत्पूर्वाच्छिषेः क्यप् ।
उच्छिष्यः ।
मृङ्प्राणत्यागे, स्तृञाच्छन्दने, ध्वृ हूर्च्छने, एतेभ्यो यत्प्रत्ययः ।
मर्यः ।
स्तर्या ।
स्त्रियां एव निपातनं ।
ध्वर्यः ।
खनेर्यथ् ।
खन्या ।
एतस्मादेव ण्यथ् ।
खान्यः ।
देवशब्दे उपपदे यजेर्यथ् ।
देवयज्या ।
स्त्रीलिङ्ग-निपातनं ।
आङ्पूर्वात्पृच्छेः क्यप् ।
आपृच्छ्यः ।
प्रतिपूर्वत्सीव्यतेः क्यप्षत्वं च ।
प्रतिषीव्यः ।
ब्रह्मण्युपपदे वदेर्ण्यथ् ।
ब्रह्मवाद्यं ।
भवतेः स्तौतेश्च ण्यत्, आवदेशश्च भवति ।
भाव्यं ।
स्ताव्यः ।
उपपूर्वस्य चिनोतेः ण्यदायादेशौ ।
उपचाय्यपृडं ।
पृडे चोत्तरपदे निपातनमेतथ् ।
हिरण्य इति वक्तव्यं ।
हिरण्यादन्यत्र उपचेयपृडं एव ।
निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनाथ् ।
ण्यदायादेश इत्येतावुपचाय्ये निपाततौ । ।
ण्यदेकस्माच्चतुर्घ्यः क्यप्चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्य-शब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः । ।

---

1. <ऋ-हलोर्ण्यत्># । । PS_३,१.१२४ । ।

_______Sठाऱ्ठJKव्_३,१.१२४ः

पञ्चम्य्-अर्थे षष्ठी ।
ऋवर्ण-अन्ताद्धातोर्हलन्ताच्च ण्यत्प्रत्ययो भवति ।
कार्यं ।
हार्यं ।
धार्यं वाक्यं ।
पाक्यं । ।

---

1. <ओरावश्यके># । । PS_३,१.१२५ । ।

_______Sठाऱ्ठJKव्_३,१.१२५ः

अवश्यं भावः आवश्यकं ।
उवर्ण-अन्ताद्धातोः ण्यत्प्रययो भवति आवश्यके द्योत्ये ।
यतोऽपवादः ।
लाव्यं ।
पाव्यं ।
अवश्यके इति किं ? लव्यं ।
आवश्यके द्योत्ये इति वेत्, स्वरसमास-अनुपपत्तिः, अवश्यलाव्यम्, अवश्यपाव्यं इति ? नैष दोषः ।
मयूरव्यं सकादित्वात्समासः ।
उत्तरपद-प्रकृति-स्वरे च यत्नः करिष्यते । ।

---

[#२०५]

1. <आसु-यु-वपि-रपि-लपि-त्रपि-चमश्च># । । PS_३,१.१२६ । ।

_______Sठाऱ्ठJKव्_३,१.१२६ः
आङ्-पूर्वात्सुनोतेः यु वपि रपि लपि त्रपि चम इत्येतेभ्यश्च ण्यत्प्रत्ययो भवति ।
यतोऽपवादः आसाव्यं ।
याव्यं ।
वाप्यं ।
राप्यं ।
लाप्यं ।
त्राप्यं ।
आचाम्यं ।

अनुक्त-समुच्चय-अर्थश्चकारः ।
दभि - दाभ्यं । ।

---

1. <आनाय्योऽनित्ये># । । PS_३,१.१२७ । ।

______Sठाचे्ठJKव्_३,१.१२७ः

आनाय्यः इति निपात्यते अनित्येऽभिधेये ।
नयतेराङ्पूर्वाण्ण्यदायादेशौ निपात्येते ।
आनाय्यो दक्षिणाग्निः ।
रूढिरेषा ।
तस्माद्नित्य-विशेषे दक्षिण-अग्नावेव अवतिष्ठते ।
तस्य च अनित्यत्वं नित्यं अजागरणाथ् ।
यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सह एकयोनिः, तत्र तन्निपातनं, न दक्षिणाग्निं आत्रे ।
तस्य हि योनिर्विकल्प्यते वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वा इति ।
आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेथ् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् । ।

---

1. <प्रणाय्योऽसम्मतौ># । । PS_३,१.१२८ । ।

______Sठाचे्ठJKव्_३,१.१२८ः

अविद्यमाना सम्मतिरस्मिनित्यसम्मतिः ।
सम्मननं सममतिः, सम्मतता, पूजा ।
प्रणाय्यः इति निपात्यतेऽसम्मतावभिधेये ।
प्रणाय्यश्चोरः ।
असम्मतौ इति किं ? प्रणेयोऽन्यः ।
यद्येवं कथं एतत्, ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात्प्रणाय्यान्तेवासिने, न अन्यस्मै कस्मैचन इति ? सम्मतिरभिलाषोऽप्युच्यते ।
तदभावेन निष्कामतया असम्मतिरन्तेवासी भवति ।
तस्मै निष्कामाय मोक्ष-अर्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म ब्रूयातिति युज्यते । ।

---

1. <पाय्य-सान्-नाय्य-निकाय्य-धाय्या मान-हविर्-निवास-सामिधेनीषु># । । PS_३,१.१२९ । ।

_______Sठाऽ्ठ्JKव्_३,१.१२९ः

पाय्यादयः शब्दा निपात्यन्ते यथा-सङ्ख्यं माने हविषि निवासे सामिधेन्यां च अभिधेयायां ।
पाय्य इति माङो ण्यत्-प्रत्ययः, आदेः पत्वं च निपात्यते माने ।
पाय्यं मानं मेयं अन्यथ् ।
सम्पूर्वान्नियतेर्ण्यदायादेशावुपसर्ग-दीर्घत्वं च निपात्यते ।
सानाय्यं हविः ।
संनेयमन्यथ् ।
रूढित्वाच्च हविर्-विशेष एव अवतिष्ठते ।
निपूर्वाच्चिनोतेः ण्यदायादेशावादिकुवं च निपात्यते ।
निकाय्यो निवासः ।
निचेयं अन्यथ् ।
सामिधेनी-शब्द ऋग्-विशेषस्य वाचकः ।
तत्र च धाय्या इति न सर्वा सामिधेनी उच्यते, किं तर्हि, काचिदेव ।
रूधि-शब्दो ह्ययं ।
तथा च असामिधेन्यां अपि दृश्यते, धाय्याः शंसत्यग्निर्नेता तं सोमक्रतुभिः इति । ।

---

[#२०६]

1. <क्रतौ कुण्डपाय्य-सञ्चाय्यौ># । । PS_३,१.१३० । ।

_______Sठाऽ्ठ्JKव्_३,१.१३०ः

कुण्डपाय्य सञ्चाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये ।
कुण्ड-शब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो निपात्यते युक्च ।
कुण्डेन पीयतेऽस्मिन्सोमः इति कुण्डपाय्यः क्रतुः ।
यतोऽनावः इति स्वरः ।
सम्पूर्वाच्चिनोतेः ण्यदायादेशौ निपात्येते ।
सञ्चीयतेऽस्मिन्सोमः इति सञ्चाय्यः क्रतुः ।
क्रतौ इति किं ? कुण्डपानं ।
सञ्चेयः । ।

---

1. <अग्नौ परिचाय्य-उपचाय्य-समूहयाः># । । PS_३,१.१३१ । ।

_______Sठाऽ्ठ्JKव्_३,१.१३१ः

परिचाय्य उपचाय्य समूहय इत्येते शब्दा निपात्यन्ते अग्नावभिधेये ।
परिपूर्वतुपपूर्वाच्च चिनोतेर्ण्य दायादेशौ निपात्येते ।

परिचाय्यं ।
उपचाय्यः ।
सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वं च निपात्यते ।
समूह्यं चिन्वीत पशुकामः ।
अग्नौ इति किं ? परिचेयं ।
उपचेयं ।
संवाह्यं । ।

---

1. <चित्य-अग्निचित्ये च># । । PS_३,१.१३२ । ।

_______Sठाऱ्ठ्JKव्_३,१.१३२ः

चित्यशब्दोऽग्निचित्या-शब्दश्च निपात्येते ।
नीयतेऽसौ चित्योऽग्निः ।
अग्निचयनं एव अग्निचित्या ।
भावे यकर-प्रत्ययः तुक्च ।
तेन अनतोदात्तत्वं भवति ।
अग्नावित्येव ।
चेयं अन्यत् । ।

---

1. <ण्वुल्-तृचौ># । । PS_३,१.१३३ । ।

_______Sठाऱ्ठ्JKव्_३,१.१३३ः

धातोः इति वर्तते ।
सर्वधातुभ्यो ण्वुल्-तृचौ प्रत्ययौ भवतः ।
कारकः ।
कर्ता ।
हारकः ।
हर्ता ।
चकारः सामान्य-ग्रहणा-विधात-अर्थः, तुश्छन्दसि (*५,३.५९), तुरिष्ठ-ईमेयस्सु (*६,४.१५४) इति । ।

---

1. <नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिन्य्-अचः># । । PS_३,१.१३४ । ।

_______Sठा~ठ्JKव्_३,१.१३४ः
आदि-शब्दः प्रयेकं सम्बध्यते।
त्रिभ्यो गणेभ्यः त्रयः प्रत्ययाः यथासङ्ख्यं भवन्ति।
नन्द्य-आदिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽछ्।
नन्दि-ग्रह-पचादयश्च न धातु-पाठतः सन्निविष्टा गृह्यन्ते, किं तर्हि, नन्दन रमण इत्येवं आदिषु प्रातिपदिक-गणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते।

[#२०७]

नन्दिवासिपदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः सञ्ज्ञायां।
नन्दनः।
वासनः।
मदनः।
दूषणः।
साधनः।
वर्धनः।
शोभनः।
रोचनः।
सहितपिदमेः सञ्ज्ञायां।
सहनः।
तपनः।
दमनः।
जल्पनः।
रमणः।
दर्पणः।
सङ्क्रन्दनः।
सङ्कर्षणः।
जनार्दनः।
यवनः।
मधुसूदनः।
विभीषणः।
लवणः।
निपातनाण्णत्वं।
चित्तविनाशनः।
कुलदमनः।
शत्रुदमनः।
इति नन्द्य्-आदिः।
ग्रह।
उत्सह।
उद्दस।
उद्भास।
स्था।
मन्त्र।
सम्मर्द।
ग्राही।
उत्साही।
उद्दासो।

उद्भासी ।
स्थायी ।
मन्त्री ।
सम्मर्दी ।
रक्षश्रुवसवपशां नौ ।
निरक्षी ।
निश्रावी ।
निवासी ।
निवापी ।
निशायी ।
याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानां ।
अयाची ।
अव्याहारी ।
असंव्याहारी ।
अव्राजी ।
अवादी ।
अवासी ।
अचामचित्तकर्तृकाणां ।
प्रतिषिद्धानां इत्येव ।
अकारी ।
अहारी ।
अविनायी ।
अविशायी ।
विशयी ।
विशयी देशे ।
विशयो, विषयी देशः ।
अभिभावी भूते ।
अभिभावी ।
अपराधी ।
उपरोधी ।
परिभवी ।
परिभावी ।
इति ग्रहयादिः ।
पच ।
वप ।
वद ।
चल ।
शल ।
तप ।
पत ।
नदट् ।
भषट् ।
वस ।
गरट् ।
प्लवट् ।
चरट् ।
तरट् ।
चोरट् ।
ग्राहट् ।

जर ।
मर ।
क्षर ।
क्षम ।
सूदठ् ।
देवठ् ।
मोदठ् ।
सेव ।
मेष ।
कोप ।
मेधा ।
नर्त ।
व्रण ।
दर्श ।
दंश ।
दम्भ ।
जारभरा ।
श्वपच ।
पचादिराकृतिगणः ।
अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः ।
अण्बाधन-अर्थं एव स्यात्सिध्यन्ति श्वपचादयः । ।

---

1. <इगुपध-ज्ञा-प्री-किरः कः># । । PS_३,१.१३५ । ।

______Sठा~ठ्JKव्_३,१.१३५ः

इग्-उपधेभ्यः जानातेः प्रीणातेः किरतेश्च कप्रत्ययः भवति ।
विक्षिपः ।
विलिखः ।
बुधः ।
कृशः ।
जानाति इति ज्ञः ।
प्रीणाति इति प्रियः ।
किरति इति किरः ।
देवसेवमेषादयः पचादौ पठितव्याः । ।

---

1. <आतश्च+उपसर्गे># । । PS_३,१.१३६ । ।

_______Sठाञ्ठJKव्_३,१.१३६ः

आकारान्तेभ्यो धातुभ्यः उपसर्ग उपपदे कप्रत्ययो भवति ।
णस्यापवादः ।
प्रस्थः ।
सुग्लः ।
सुम्लः । ।

---

[#२०८]

1. <पा-घ्रा-ध्मा-धेट्-दृशः शः># । । PS_३,१.१३७ । ।

_______Sठाञ्ठJKव्_३,१.१३७ः

पादिभ्यो धातुभ्यः उपसर्गे उपपदे श-प्रत्ययो भवति ।
उत्पिबः ।
विपिबः ।
उज्जिघ्रः ।
विजिघ्रः ।
उद्धमः ।
विधमः ।
उद्धयः ।
विधयः ।
उत्पश्यः ।
विपश्यः ।
उपसर्गे इति केचिन्न अनुवर्तयन्ति ।
पश्यति इति पश्य ।
जिघ्रतेः सञ्ज्ञायां प्रतिषेधो वक्तव्यः ।
व्याघ्रः । ।

---

1. <अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्य्-उदेजि-चेति-साति-साहिभ्यश्च># । । PS_३,१.१३८ । ।

_______Sठाञ्ठJKव्_३,१.१३८ः

अनुपसर्गेभ्यो लिम्प-आदिभ्यः श-प्रत्ययो भवति ।
लिम्पति इति लिम्पः ।
विन्दति ति विन्दः ।

धारयति इति धारयः ।
पारयति इति पारयः ।
वेदयति इति वेदयः ।
उदेजाति इति उदेजयः ।
चेतयति इति चेतयः ।
सातिः सौत्रो धातुः ।
सातयः ।
साहयः ।
अनुपसर्गातिति किं ।
प्रलिपः ।
नौ लिम्पेरिति वक्तव्यं ।
निलिम्पा नाम देवाः ।
गवादिषु विन्देः सञ्ज्ञायां ।
गोविन्दः ।
अरविन्दः । ।

---

1. <ददाति-दधात्योर्विभाषा># । । PS_३,१.१३९ । ।

_______Sठाऽठ्JKव्_३,१.१३९ः

दाञो धाञश्च विभाषा श-प्रत्ययो भवति ।
णस्य अपवादः ।
ददः, दायः ।
दधः, धायः ।
अनुपसर्गातित्येव, प्रदः, प्रधः । ।

---

1. <ज्वलिति-कसन्तेभ्यो णः># । । PS_३,१.१४० । ।

_______Sठाऽठ्JKव्_३,१.१४०ः

इति-शब्दः आद्यर्थः ।
ज्वल दीप्तौ इत्येवं आदिभ्यो धातुभ्यः कस गतौ इत्येवं अन्तेभ्यो विभाषा ण-प्रत्ययो भवति ।
अचोऽपवादः ।
ज्वालः, ज्वलः ।
चालः, चलः ।
अनुपसर्गातित्येव, प्रज्वलः ।
तेनोतेर्णस्य+उपसङ्ख्यानं कर्तव्यं ।
अवतनोति इति अवतानः । ।

---

[#२०९]

1. <श्या-आद्-व्यध-आस्रु-संस्र्-अतीण्-अवसा-अवहृ-लिह-श्लिष-श्वसश्च># । । PS_३,१.१४१ । ।

_______Sठा~ठ्JKव्_३,१.१४१ः

अनुपसर्गातिति, विभाषा इति च निवृत्तं ।
श्यैङः, आकार-अन्तेभ्यश्च धातुभ्यः, व्यध आस्रौ संस्रौ अतीणवसा अवहृ लिह श्लिष श्वस इत्येतेभ्यश्च ण प्रत्ययो भवति ।
आकार-अन्तत्वादेव श्यायतेः प्रत्यत्ये सिद्धे पुनर्वचनं बाधकबाधन-अर्थं ।
उपसर्गे कं बाधित्वाऽयं एव भवति ।
अवश्यायः ।
प्रतिश्यायः ।
दायः ।
धायः ।
व्याधः ।
आस्रावः ।
संस्रावः ।
अत्यायः ।
अवसायः ।
अवहारः ।
लेहः ।
श्लेषः ।
श्वासः । ।

---

1. <दु-न्योरनुपसर्गे># । । PS_३,१.१४२ । ।

_______Sठा~ठ्JKव्_३,१.१४२ः

दुनोतेर्नयतेश्च अनुपसर्गे ण-प्रत्ययो भव्ति ।
दुनोति इति दावः ।
नयति इति नायः ।
अनुपसर्गे इति किं ? प्रदवः ।
प्रणयः । ।

---

1. <विभाशा ग्रहः># । । PS_३,१.१४३ । ।

_______Sठा~ठ्JKव्_३,१.१४३ः

विभाषा ग्रहेः धातोः ण-प्रत्ययो भवति ।
अचः अपवादः ।
ग्राहः, ग्रहः ।
व्यवस्थित-विभाषा च+इयं ।
जलचरे नित्यं ग्राहः ।
ज्योतिषि नेस्यते, तत्र ग्रहः एव ।
भवतेश्च इति वक्तव्यं ।
भवति इति भावः, भवः । ।

---

1. <गेहे कः># । । PS_३,१.१४४ । ।

_______Sठा~ठ्JKव्_३,१.१४४ः

ग्रहेर्धातोः क-प्रत्ययो भवति गेहे कर्तरि ।
गृहं वेश्म ।
तात्स्थ्यात्दाराश्च ।
गृह्णन्ति इति गृहाः दाराः ।
गृहाणि वेश्मानि । ।

---

1. <शिल्पिनि ष्वुन्># । । PS_३,१.१४५ । ।

_______Sठा~ठ्JKव्_३,१.१४५ः

धातोः ष्वुन्प्रत्ययो भवति शिल्पिनि कर्तरि ।
नृतिखनिरञ्जिभ्यः परिगणनं कर्तव्यं ।
नर्तकः ।
खनकः ।
रजकः ।
नर्तकी ।
खनकी ।
रजकी ।
रञ्जेरनुनासिकलोपश्च । ।

---

[#२१०]

1. <गस्थकन्># । । PS_३,१.१४६ । ।

_______Sठाऱ्ठ्JKव्_३,१.१४६ः

गायतेः थकन्प्रत्ययो भवति शिल्पिनि कर्तरि ।
गाथकः, गाथिका । ।

---

1. <ण्युट्च># । । PS_३,१.१४७ । ।

_______Sठाऱ्ठ्JKव्_३,१.१४७ः

चकारेण गः इत्यनुकृष्यते ।
गायतेः ण्युट्प्रत्ययो भवति शिल्पिनि कर्तरि ।
गायनः, गायनी ।
योग-विभागः उत्तर-अर्थः । ।

---

1. <हश्च व्रीहि-कालयोः># । । PS_३,१.१४८ । ।

_______Sठाऱ्ठ्JKव्_३,१.१४८ः

चकारेण गः इत्यनुकृस्यते ।
गायतेः ण्युट्प्रत्ययो भवति शिल्पिति कर्तरि ।
गायनः, गायनी ।
योग-विभागः उत्तर-अर्थः । ।

---

1. <प्रु-सृ-ल्वः समभिहारे वुन्># । । PS_३,१.१४९ । ।

_______Sठा-ठ्JKव्_३,१.१४९ः

प्रु सृ लू इत्येतेभ्यः धातुभ्यः समभिहारे वुन्प्रत्ययो भवति ।
प्रवकः ।
सरकः ।
लवकः ।
समभिहार-ग्रहणेन अत्र सधुकारित्वं लक्ष्यते ।
साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र भवति ।
बहुशो यो दुष्टं करोति तत्र न भवति । ।

---

1. <आशिषि च># । । PS_३,१.१५० । ।

_______Sठा-ठ्JKव्_३,१.१५०ः

आशिषि गम्यमानायां धातुं आत्रात्वुन्प्रत्ययो भवति ।
जीवतात्जीवकः ।
नन्दतात्नन्दकः ।
आशीः प्रार्थना-विशेषः ।
स च+इह क्रियाविषयः ।
अमुष्याः क्रियायः कर्ता भवेतित्येवं आशास्यते । ।
इति श्रीज्यादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य प्रथमः पादः । ।

---

[#२११]

तृतीयाध्यायस्य द्वितीयः पादः ।

---

1. <कर्मण्यण्># । । PS_३,२.१ । ।

_______Sठा-ठ्JKव्_३,२.१ः

त्रिविधं कर्म, निर्वर्त्यं, विकार्यं, प्राप्यं च+इति ।
सर्वत्र कर्मणि उपपदे धातोः अण्प्रत्ययो भवति ।
निर्वर्त्यं तावत्-- कुम्भकारः ।

नगरकारः ।
विकार्यं -- काण्डलावः ।
शरलावः ।
प्राप्यं - वेदाध्यायः ।
चर्चापारः ।
ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोति इत्यत्र न भवति, अनभिधानाथ् ।
शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपद-प्रकृतिस्वरत्वं च वक्तव्यं ।
मांसशीलः, मांसशीला ।
मांसकामः, मांसकामा ।
मांसभक्षः, मांसभक्षा ।
कल्याणाचारः, कल्याणाचारा ।
ईक्षक्षमिभ्यां च+इति वक्तव्यं ।
सुखप्रतीक्षः, सुखप्रतीक्षा ।
बहुक्षमः, बहुक्षमा ।।

---

1. <ह्वा-वा-अमश्च># ।। PS_३,२.२ ।।

_______Sठा~ठ्JKव्_३,२.२ः

ह्वेञ्स्पर्धायां शब्दे च, वेञ्तन्तुसन्ताने, माङ्माने इत्येतेभ्यश्च कर्मण्य्-उपपदे अण्प्रत्ययो भवति ।
कप्रत्ययस्य अपवादः ।
स्वर्गह्वायः ।
तन्तुवायः ।
धान्यमायः ।।

---

1. <आतोऽनुपसर्गे कः># ।। PS_३,२.३ ।।

_______Sठा~ठ्JKव्_३,२.३ः

आकार-अन्तेभ्यः अनुपसर्गेभ्यः कर्मण्य्-उपपदे कप्रत्ययो भवति ।
अणोऽपवादः ।
गोदः ।
कम्बलदः ।
पार्ष्णित्रं ।
अङ्गुलित्रं ।
अनुपसर्गे इति किं ? गोसन्दायः ।
वडवासन्दायः ।।

---

1. <सुपि स्थः># । । PS_३,२.४ । ।

_______Sठा~ठ्JKव्_३,२.४ः

सुबन्ते उपपदे तिष्ठतेः कप्रत्ययो भवति ।
समस्थः ।
विषमस्थः ।
अत्र योगविभागः कर्तव्यः सुपि इति ।
सुपि आकारान्तेभ्यः कप्रत्ययो भवति ।
द्वाभ्यां पिबति इति द्विपः ।
पादपः ।
कच्छपः ।
ततः स्थः इति ।
स्थश्च सुपि कप्रत्ययो भवति ।
किमर्थं इदं ? कर्तरि पूर्वयोगः ।
अनेन भावेऽपि यथा स्याथ् ।
आखूनां उत्थानं आखूत्थः ।
शलभोत्थः ।
इति उत्तरं कर्मणि इति च सुपि इति च द्वयं अप्यनुअवर्तते ।
तत्र सकर्मकेषु धातुषु क्रमणि इत्येतदुपतिष्ठते ।
अन्यत्र सुपि इति । ।

---

[#२१२]

1. <तुन्द-शोकयोः परिमृज-अपनुदोः># । । PS_३,२.५ । ।

_______Sठा~ठ्JKव्_३,२.५ः

तुन्द-शोकयोः कर्मणोरुपपदयोः परिमृज-अपनुदोः धात्वोः कप्रत्ययो भवति ।
तुन्द-परिमृज आस्ते ।
शोक-अपनुदः पुत्रो जातः ।
आलस्य सुखाहरणयोः इति वक्तव्यं ।
अलसस्तुन्द-प्रिमृज उच्यते ।
तुन्द-परिमार्जः एव अन्यः ।
सुखस्य अहर्ता शोक-अपनुदः ।
शोक-अपनोदः एव अन्यः ।
कप्रकरणो मूल-विभुजादिभ्यः उपसङ्ख्यानं ।
मूलानि विभुजादिभ्यः उपसङ्ख्यानं ।
मूलानि विभुजति इति मूलविभुजो रथः ।

नखमुचानि धनूंषि ।
काकनुहस्तिलाः ।
कौ मोदते कुमुदं । ।

---

1. <प्रे दा-ज्ञः># । । PS_३,२.६ । ।

_______Sठाञ्ठJKव्_३,२.६ः

सोपसर्ग-अर्थ आरम्भः ।
ददातेः जानातेश्च धातोः प्रेणोपसृष्टात्कर्मण्य्-उपपदे कप्रत्ययो भवति ।
अणोऽपवादः ।
सर्वप्रदः ।
पथिप्रज्ञः ।
प्रे इति किं ? गोसन्दायः । ।

---

1. <समि ख्यः># । । PS_३,२.७ । ।

_______Sठाञ्ठJKव्_३,२.७ः

सोपसर्ग-अर्थः आरम्भः ।
संपूर्वात्ख्या इत्येतस्माद्धातोः कर्मण्य्-उपपदे कप्रत्ययो भवति ।
अणोऽपवादः ।
गां संचष्टे गोसङ्ख्यः । ।

---

1. <गा-पोष्टक्># । । PS_३,२.८ । ।

_______Sठाञ्ठJKव्_३,२.८ः

कर्मण्य्-अनुपसर्गे इति वर्तते ।
गायतेः पिबतेश्च धातोः कर्मण्य्-उपपदेऽनुपसर्गे टक्प्रत्ययो भवति ।
कस्य अपवादः ।
शक्रं गायति शक्रगः, शक्रगी ।
सामगः, सामगी ।

सुराशीध्वोः पिबतेरिति वक्तव्यं ।
सुरापः, सुरापी ।
शीधुपः, शीधुपी ।
सुराशीध्वोः इति किं ? क्षीरपा ब्राह्मणी ।
पिबतेः इति किं ? सुरां पाति इति सुरापा ।
अनुपसर्गे इत्येव, शक्रसङ्गायः ।
सामसङ्गायः ।
बहुलं छन्दसि इति वक्तव्यं ।
या बाह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति ।
या ब्रह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति । ।

---

[#२१३]

1. <हरतेरनुद्यमनेऽच्># । । PS_३,२.९ । ।

______Sठा न्ठ्JKव्_३,२.९ः

हरतेर्धातोरनुद्यमने वर्तमानात्कर्मणि उपपदे अच्प्रत्ययो भवति ।
अणोऽपवादः ।
उद्यमनं उत्क्षेपणं ।
अंशं हरति अंशहरः ।
रिक्थहरः ।
अनुद्यमने इति किं ? भारहारः ।
अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधौष्षु ग्रहेरुपसङ्ख्यानं ।
शक्तिग्रहः ।
लाङ्गलग्रहः ।
अङ्कुशग्रहः ।
यष्टिग्रहः ।
तोमरग्रहः ।
घटग्रहः ।
घटीग्रहः ।
धनुर्ग्रहः ।
सूत्रे च धार्यर्थे ।
सूत्रग्रहः ।
सूत्रं धारयति इत्यर्थः ।
सूत्रग्राहः एव अन्यः । ।

---

1. <वयसि च># । । PS_३,२.१० । ।

_______Sठान्ठJKव्_३,२.१०ः

वयसि गम्यमाने हरतेः कर्मण्य्-उपपदे अच्प्रत्ययो भवति।
उद्यमन-अर्थोऽयं आरम्भः।
कालकृता शरीरावस्था यौवनादिर्वयः।
यदुद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति, तत्र अयं विधिः।
अस्थिहरः श्वा।
कवछरः क्षत्रिय-कुमारः।।

---

1. <आङि ताच्छील्ये>#।। PS_३,२.११।।

_______Sठान्ठJKव्_३,२.११ः

आङ्-पूर्वाद्हरतेः कर्मण्य्-उपपदे अच्प्रत्ययो भवति ताच्छील्ये गम्यमाने।
ताच्छील्यं तत्-स्वभावता।
पुष्पाहरः।
फलाहरः।
पुष्पाद्य्-आहरने स्वाभाविकी फलानपेक्षा प्रवृत्तिरस्य इत्यर्थः।
ताच्छीओये इति किं? भारं आहरति इति भाराहारः।।

---

1. <अर्हः>#।। PS_३,२.१२।।

_______Sठान्ठJKव्_३,२.१२ः

अर्ह पूजायाम्, अस्माद्धातोः कर्मण्य्-उपपदे अच्प्रत्ययओ भवति।
अणोऽपवादः।
स्त्रीलिङ्गे विशेषः।
पूजार्हा।
गन्धार्ह।
मालार्हा।।

---

1. <स्तम्ब-कर्णयो रमि-जपोः>#।। PS_३,२.१३।।

_______Sठा~ठ्JKव्_३,२.१३ः

स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोर्यथा-सङ्ख्यं रमि-जपोः धात्वोः अच्प्रत्ययो भवति ।
रमेः अकर्मकत्वात्, जपेः शब्द-कर्मकत्वात्कर्म न सम्भवति इति सुपि इत्येतदिह अभिसम्बध्यते ।
हस्तिसूचकयोरिति वक्तव्यं ।
स्तम्बे रमते इति स्तम्बेरमः हर्ती ।
कर्णे जपति इति कर्णेजपः सूचकः ।
हस्तिसूचकयोः इति किं ? स्तम्बे रन्ता ।
कर्णे जपिता मशकः । ।

---

[#२१४]

1. <शमि धातोः सञ्ज्ञायाम्># । । PS_३,२.१४ । ।

_______Sठा~ठ्JKव्_३,२.१४ः

शम्युपपदे धातु-मात्रात्सञ्ज्ञायां विषये अच्प्रत्ययओ भवति ।
शङ्करः ।
शंभवः ।
शंवदः ।
धातु-ग्रहणं किं यावता धातोः इति वर्तत एव ? शमि-सञ्ज्ञायां इति सिद्धे धातु-ग्रहणं कृञो हेत्वादिषु टप्रतिषेध-अर्थं ।
शङ्करा नाम परिव्राजिका ।
शङ्करा नाम शकुनिका ।
तच्छीला च । ।

---

1. <अधिकरणे शेतेः># । । PS_३,२.१५ । ।

_______Sठा~ठ्JKव्_३,२.१५ः

सुपि इति सम्बध्यते ।
शेतेर्धातोरधिकरणे सुबन्त उपपदे अच्प्रत्ययो भवति ।
खे शेते खशयः ।
गर्तशयः ।
पार्श्वादिषु उपसङ्ख्यानं ।
पार्श्वाभ्यां शेते पार्श्वशयः ।
उदरशयः ।

पृष्ठशयः ।
दिग्धसहपूर्वाच्च ।
दिग्धेन सह शेते दिग्ध-सहशयः ।
उत्तानादिषु कर्तृषु ।
उत्तानः शेते उत्तानशयः ।
अवमूर्धा शेते अवमूर्धशयः ।
गिरौ डश्छन्दसि ।
गिरौ शेते गिरिशः । ।

---

1. <चरेष्टः># । । PS_३,२.१६ । ।

_______Sठाऽ्ठJKव्_३,२.१६ः

अधिकरणे इति वर्तते ।
चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति ।
कुरुषु चरति कुरुचरः ।
मद्रचरः ।
कुरुचरी ।
मद्रचरी ।
प्रत्ययान्तरकरणं ङीब्-अर्थं । ।

---

1. <भिक्षा-सेना-आदायेषु च># । । PS_३,२.१७ । ।

_______Sठाऽ्ठJKव्_३,२.१७ः

अनधिकरण-अर्थः आरम्भः ।
भिक्षा सेना आदाय इत्येतेषु उपपदेषु चरेः धतोः टप्रत्ययो भवति ।
भिक्षाचरः ।
सेनाचरः ।
आदायचरः । ।

---

[#२१५]

1. <पुरोऽग्रतोऽग्रेषु सर्तेः># । । PS_३,२.१८ । ।

______Sठाञ्ठ्JKव्_३,२.१८ः

पुरसग्रतसग्रे इत्येतेषु उपपदेषु सर्तेः धातोः टप्रत्ययो भवति।
पुरः सरति पुरःसरः।
अग्रतःसरः।
अग्रेसरः।।

---

1. <पूर्वे कर्तरि>#।।PS_३,२.१९।।

______Sठाञ्ठ्JKव्_३,२.१९ः

पूर्व-शब्दे कर्तृ-वाचिन्य्-उपपदे सर्तेर्धातोः टप्रत्ययः भवति।
पूर्वः सरति इति पूर्वसरः।
कर्तरि इति किं? पूर्वं देशं सरति इति पूर्वसारः।।

---

1. <कृञो हेतु-ताच्छील्य-आनुलोम्येषु>#।।PS_३,२.२०।।

______Sठाञ्ठ्JKव्_३,२.२०ः

कर्मणि उपपदे करोतेः धातोः टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने।
हेतुः ऐकान्तिकं करणं।
ताच्छील्यं तत्स्वभावता।
आनुलोम्यं अनुकूलता।
हेतौ तावत्- शोककरी कन्या।
यशस्करी विद्या।
कुलकरं धनं।
ताच्छील्ये - श्राद्धकरः।
अर्थकरः।
आनुलोम्ये - प्रैषकरः।
वचनकरः।
एतेसु इति किं? कुम्भकारः।
नगरकारः।।

1. <दिवा-विभा-निशा-प्रभा-भास्-कार-अन्त-अनन्त-आदि-बहु-नान्दी-किं-लिपि-लिबि-बलि-भक्ति-कर्तृ-चित्र-क्षेत्र-सङ्ख्या-जङ्घा-बाह्व्-अहर्-यत्-तद्-धनुर्-अरुष्षु># । । PS_३,२.२१ । ।

_______Sठा~ठ्JKव्_३,२.२१ः

कर्मणि सुपि इति च द्वयं अप्यनुवर्तते ।
तत्र यथायोगं सम्बन्धः ।
दिवा-आदिषु उपपदेषु करोतेर्धातोः टप्रत्ययो भवति ।
अहेत्वाद्य्-अर्थ आरम्भः ।
दिवा-शब्दो अधिकरण-वचनः सुपि इत्यस्य विशेषणं ।
दिवा करोति प्राणिनशचेष्टायुक्तानिति दिवाकरः ।
विभां करोति इति विभाकरः ।
निशाकरः ।
प्रभाकरः ।
भास्करः ।
सकारस्य निपातनाद्विसर्जनीय-जिह्वामूलीयौ न भवतः ।
कारकरः ।
अन्तकरः ।
अनन्तकरः ।
आदिकरः ।
बहुकरः ।
नान्दीकरः ।
किङ्करः ।
लिपिकरः ।
लिबिकरः ।
बलिकरः ।
भक्तिकरः ।
कर्तृकरः ।
चित्रकरः ।
क्षेत्रकरः ।
सङ्ख्या - एककरः, द्विकरः, त्रिकरः ।
जङ्घाकरः ।
बाहुकरः ।
अहस्करः ।
यत्करः ।
तत्करः ।
धनुष्करः ।
अरुष्करः ।
किंयत्तद्बहुषु कृञोऽज्विधानं ।
किङ्करा ।
यत्करा ।
तत्करा ।
बहुकरा ।
अथवा अजादिषु पाठः करिस्यते । ।

---

[#२१६]

1. <कर्मणि भृतौ># । । PS_३,२.२२ । ।

_______Sठा-ऌJKव्_३,२.२२ः

कर्मणि इति स्वरूप-ग्रहनं ।
करम-शब्दे उपपदे कर्म-वाचिनि करोतेः टप्रत्ययो भवति भृतौ गम्यमानायां ।
भृतिः वेतनं, कर्मनिर्वेशः ।
कर्म करोति इति कर्मकरः भृतकः इत्यर्थः ।
भृतौ इति किं ? करकारः । ।

---

1. <न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदेषु># । । PS_३,२.२३ । ।

_______Sठा-ऌJKव्_३,२.२३ः

शब्दादिषु उपपदेषु करोतेः टप्रत्ययो न भवति ।
हेत्वादिषु प्राप्तः प्रतिषिध्यते ।
शब्दकारः ।
श्लोककारः ।
कलहकारः ।
गाथाकारः ।
वैरकारः ।
चाटुकारः ।
चटुकारः ।
सूत्रकारः ।
मन्त्रकारः ।
पदकारः । ।

---

1. <स्तम्ब-शकृतोरिन्># । । PS_३,२.२४ । ।

_______Sठा-ऌJKव्_३,२.२४ः

स्तम्ब शकृतित्येतयोः कर्मणोरुपपदयोः इन्प्रत्ययो भवति ।
व्रीहिवत्सयोरिति वक्तव्यं ।
स्तम्बकरिर्व्रीहिः ।
शकृत्करिर्वत्सः ।
व्रीहिवत्सयोः इति किं ? स्तम्बकारः ।
शकृत्करः । ।

---

1. <हरतेर्दृति-नाथयोः पशौ># । । PS_३,२.२५ । ।

_______Sठा~ठ्JKव्_३,२.२५ः

दृति नाथ इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्तरि इन्प्रत्ययो भवति ।
दृतिं हरति दृतिहरिः पशुः ।
नाथहरिः पशुः ।
पशौ इति किं ? दृतिहारः ।
नाथहारः । ।

---

1. <फलेग्रहिर्-आत्मम्भरिश्च># । । PS_३,२.२६ । ।

_______Sठा~ठ्JKव्_३,२.२६ः

फलेग्रहिः आत्मम्भरिः इत्येतौ शब्दौ निपात्येते ।
फल-शब्दस्य उपपदस्य एकारान्तत्वं इन्प्रत्ययश्च ग्रहेर्निपात्यते ।
फलानि गृह्णाति इति फलेग्रहिर्वृक्षः ।
आत्म-शब्दस्य उपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते ।
आत्मानं बिभर्ति आत्मम्भरिः ।
अनुक्त-समुच्चय-अर्थश्चकारः ।
कुक्षिम्भरिः ।
उदरम्भरिः । ।

---

1. <छन्दसि वन-सन-रक्षि-मथाम्># । । PS_३,२.२७ । ।

_______Sठा~ठ्JKव्_३,२.२७ः

वन षण सम्भक्तौ, रक्ष पालने, मन्थ विलोडने, एतेभ्यः कर्मण्य्-उपपदे छन्दसि विषये इन्प्रत्ययो भवति ।
ब्रह्मवनिं त्वा क्षत्रवनिं सुप्रजावनिं रायस्पोषवनिं पर्यूहामि ।
गोसनिं वाचमुदेयं ।
यौ पथिरक्षी श्वानौ ।
हविर्मथीनामभ्या ३ विवासतां । ।

---

[#२१७]

1. <एजेः खश्># । । PS_३,२.२८ । ।

_______Sठा~ठ्JKव्_३,२.२८ः

एजृ कम्पने इत्यस्मात्ण्यन्तात्कर्मण्य्-उपपदे खश्प्रत्ययो भवति ।
खकारो मुमथः ।
शकारः सार्वधातुक-सञ्ज्ञ-अर्थः ।
अङ्गमेजयति अङ्गमेजयः ।
जनमेजयः ।
खश्प्रयये वात्शुनीतिलशर्धेष्वजधेट्तुदजहातीनां उपसङ्ख्यानं ।
वातमजा मृगाः ।
शुनिन्धयः ।
तिलन्तुदः ।
शर्धञ्जहा माषाः । ।

---

1. <नासिका-स्तनयोर्ध्मा-धेटोः># । । PS_३,२.२९ । ।

_______Sठा~ठ्JKव्_३,२.२९ः

नासिकास्तनयोः कर्मणोरुपपदयोः ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति ।
यथासङ्ख्यमत्र नेष्यते ।
स्तने धेटः ।
सत्नन्धयः ।
नासिकायां तु ध्मश्च धेटश्च ।
नासिकन्धमः, नासिकन्धयः ।
तच्च+एतन्नासिक-स्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्य अपूर्वनिपातनाल्लभ्यते ।

धेटः टित्वात्स्त्रियां ङीप्प्रत्ययो भवति ।
स्तनन्धयी । ।

---

1. <नाडी-मुष्ट्योश्च># । । PS_३,२.३० । ।

_______Sठाऽ्ठ्JKव्_३,२.३०ः

नाडी मुष्ति इत्येतयोः कर्मणोरुपपदयोः ध्माधेटोः खश्प्रत्ययो भवति ।
अत्र अपि घ्यन्तस्य अपूर्वनिपातो लक्षणव्यभिचारचिह्नं ।
तेन सङ्ख्यातानुदेशो न भवति ।
नाडिन्धमः ।
मुष्टिन्धमः ।
नाडिन्धयः ।
मुष्टिन्धयः ।
अनुक्तसमुच्चय-अर्थश्चकारः ।
घटिन्धमः ।
घटिन्धयः ।
खारिन्धमः ।
खारिन्धयः ।
वातन्धमः पर्वतः ।
वातन्धयः । ।

---

1. <उदि कूले रुजि-वहोः># । । PS_३,२.३१ । ।

_______Sठाऽ्ठ्JKव्_३,२.३१ः
रुजो भङ्गे, वह प्रापणे इत्येताभ्यां उत्पूर्वाभ्यां कूले कर्मणि उपपदे खश्प्रत्ययो भवति ।
कूलं उद्रुजति इति कूलमुद्रुजो रथः ।
कूलमुद्वहः । ।

---

1. <वह-अभ्रे लिहः># । । PS_३,२.३२ । ।

_______Sठाऽ्ठ्JKव्_३,२.३२ः

वह अभ्र इत्येतयोः करम्णोरुपपदयोः लिहेर्धातोः खश्प्रत्ययो भवति ।
वहं लेढि इति वहंलिहो गौः ।
अभ्रंलिहो वायुः । ।

---

[#२१८]

1. <परिमाणे पचः># । । PS_३,२.३३ । ।

_______Sठा-ठ्JKव्_३,२.३३ः

परिमाणं प्रस्थादि, तस्मिन्कर्मण्य्-उपपदे पचेः खश्प्रत्ययो भवति ।
प्रस्थं पचति प्रस्थंपचा स्थाली ।
द्रोणंपचः ।
खारिंपचः कटाहः । ।

---

1. <मित-नखे च># । । PS_३,२.३४ । ।

_______Sठा-ठ्JKव्_३,२.३४ः

मित नख इत्येतयोः कर्मणोरुपपदयोः पचेः खश्प्रत्ययो भवति ।
अपरिमाण-अर्थः आरम्भः ।
मितं पचति मितम्पचा ब्राह्मणी ।
नखंपचा यवागूः । ।

---

1. <विध्व्-अरुषोस्तुदः># । । PS_३,२.३५ । ।

_______Sठा-ठ्JKव्_३,२.३५ः

विधु अरुसित्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश्प्रत्ययो भवति ।
विधुन्तुदः राहुः ।
अरुन्तुदः । ।

---

1. <असूर्य-ललाटयोर्दृशि-तपोः># । । PS_३,२.३६ । ।

______Sठा~ठ्JKव्_३,२.३६ः

असूर्य ललाट इत्येतयोः कर्मणोरुपपदयोः दृशि-तपोः धात्वोः खश्प्रत्ययो भवति ।
असूर्यंपश्या राजदाराः ।
ललाटंतपः आदित्यः ।
असूर्य इति च असमर्थ-समासोऽयं, दृशिना नञः सम्बन्धात्, सूर्यं न पश्यन्ति इति ।
गुप्तिपरं चैतथ् ।
एवं नाम गुप्ता यदपरिहार्य-दर्शनं सूर्यं अपि न पश्यन्ति इति । ।

---

1. <उग्रम्पश्य-इरम्मद-पाणिन्धमाश्च># । । PS_३,२.३७ । ।

______Sठा~ठ्JKव्_३,२.३७ः

उग्रम्पश्य इरम्मद पाणिन्धम इत्येते शब्दा निपात्यन्ते ।
उग्रं पश्यति इति उग्रम्पश्यः ।
इरया माद्यति इति इरम्मदः ।
पाणयो ध्मायन्ते एषु इति पाणिन्धमाः पन्थानः । ।

---

1. <प्रियवशे वदः खच्># । । PS_३,२.३८ । ।

______Sठा~ठ्JKव्_३,२.३८ः

प्रिय वश इत्येतयोः करम्णोः उपपदयोः वदेः धातोः खच्प्रत्ययो भवति ।
प्रियं वदति इति प्रियंवदः ।
वशंवदः ।
चकारः खचि ह्रस्वः (*६,४.९४) इति विशेषण-अर्थः ।
खकारो मुमर्थः ।
प्रत्ययान्तरकरणमुत्तरार्थं ।

[#२१९]

खच्प्रकरणे गमेः सुप्युपसङ्ख्यानं ।
मितङ्गमो हस्ती ।
मितङ्गमा हस्तिनी ।
विहायसो विह च ।
विहायसा गच्छति विहङ्गमः ।
खच्च डिद्वा वक्तव्यः ।
विहङ्गः, विहङ्गमः ।
डे च विहायसो विहादेशो वक्तव्यः ।
विहगः ।

---

1. <द्विषत्-परयोस्तापेः># । । PS_३,२.३९ । ।

______Sठाऽठ्JKव्_३,२.३९ः

द्विषत्-परयोः कर्मणोरुपपदयोः तापेः छातोः खच्प्रत्ययो भवति ।
तप दाहे चुरादिः, तपसन्तापे भ्वादिः, द्वयोरपि ग्रहणं ।
द्विषन्तं तापयति द्विषन्तपः ।
परन्तपः ।
द्विषत्परयोः इति द्वितकारको निर्देशः ।
तेन स्त्रियां न भवति ।
द्विषतीं तापयति द्विषतीतापः । ।

---

1. <वाचि यमो व्रते># । । PS_३,२.४० । ।

______Sठाऽठ्JKव्_३,२.४०ः

वाक्शब्दे कर्मणि उपपदे यमेः धातोः खच्प्रययो भवति व्रते गम्यमाने ।
व्रत इति शस्त्रितो नियमः उच्यते ।
वाचंयमः आस्ते ।
व्रते इति किं ? वाग्यामः । ।

---

1. <पूः-सर्वयोर्दारि-सहोः># । । PS_३,२.४१ । ।

_______Sठा~ठ्JKव्_३,२.४१ः

पुर्सर्व इत्येतयोः करमणोः उपपदयोः यथासङ्ख्यं दारिसहोः धात्वोः खच्प्रत्ययो भवति ।
पुरं दारयति पुरन्दरः ।
सर्वंसहो राजा ।
भवे च दारेरिति वक्तव्यं ।
भगन्दरः । ।

---

1. <सर्व-कूल-अभ्र-करीषेषु कषः># । । PS_३,२.४२ । ।

_______Sठा~ठ्JKव्_३,२.४२ः

सर्वकूल अभ्र करीर इत्येतेषु कर्मसु उपपदेषु कषेः धातोः खच्प्रत्ययो भवति ।
सर्वं कषति सर्वंकषः खलः ।
कूलङ्कषा नदी ।
अभ्रङ्कषो गिरिः ।
करीषङ्कषा वात्या । ।

---

[#२२०]

1. <मेघ-र्ति-भयेषु कृञः># । । PS_३,२.४३ । ।

_______Sठा~ठ्JKव्_३,२.४३ः

मेघ ऋति भय इत्येतेषु कर्मसु उपपदेषु कऋञः खच्प्रत्ययो भवति ।
मेघङ्करः ।
ऋतिङ्करः ।
भयङ्करः ।
उपपद-विधौ भयादि-ग्रहणं तदन्तविधिं प्रयोजयति ।
अभयङ्करः । ।

---

1. <क्षेम-प्रिय-मद्रेऽण्च># । । PS_३,२.४४ । ।

______Sठा~ठ्JKव्_३,२.४४ः

क्षेम प्रिय मद्र इत्येतेषु कर्मसु उपपदेषु करोतेः अण्प्रत्ययो भवति, चकारात्खच्च ।
क्षेमकारः, क्षेमङ्करः ।
प्रियकारः, प्रियङ्करः ।
मद्रकारः, मद्रङ्करः ।
वा इति वक्तव्ये पुनरण्-ग्रहनं हेत्वादिषु टप्रतिषेध-अर्थं । ।

---

1. <आशिते भुवः करण-भावयोः># । । PS_३,२.४५ । ।

______Sठा~ठ्JKव्_३,२.४५ः

अत्र सुपि इत्युपतिष्ठते ।
आशित-शब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे च-अर्थे खच्प्रत्ययो भवति ।
आशितो भवति अनेन आशितम्भव ओदनः ।
भावे - आशितस्य भवनं आशितम्भवं वर्तते । ।

---

1. <सञ्ज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः># । । PS_३,२.४६ । ।

______Sठा~ठ्JKव्_३,२.४६ः

कर्मणि इति सुपि इति च प्रकृतं सज्ञावशाद्यथासम्भवं सम्बध्यते ।
भृ तॄ वृ जि धारि सहि तपि दम इत्येतेभ्यो धातुभ्यः सञ्ज्ञायां विषये खच्प्रत्ययो भवति ।
विश्वम्भरा वसुन्धरा ।
रथन्तरं साम ।
पतिंवरा कन्या ।
शत्रुञ्जयो हस्ती ।
युगन्धरः पर्वतः ।
शत्रुंसहः ।
शत्रुंतपः ।
अरिंदमः ।
सज्ञायां इति किं ? कुटुम्बं बिभर्ति इति कुटुम्बभारः । ।

---

1. <गमश्च># । । PS_३,२.४७ । ।

______Sठा~ठ्JKव्_३,२.४७ः

गमेः धातोः सुपि उपपदे सञ्ज्ञायां विषये खच्प्रत्ययो भवति ।
सुतङ्गमो नाम, यस्य पुत्रः सौतङ्गमिः ।
योगविभागः उत्तरार्थः । ।

---

1. <अन्त-अत्यन्त-अध्व-दूर-पार-सर्व-अनन्तेषु डः># । । PS_३,२.४८ । ।

______Sठा~ठ्JKव्_३,२.४८ः
सञ्ज्ञायां इति न अनुवर्तते ।
अन्त अत्यन्त अध्वन्दुर पार सर्व अनन्त इत्येतेषु कर्मसु उपपदेषु गमेः डप्रत्ययो भवति ।
अन्तगः अत्यन्तगः ।
अध्वगः ।
दूरगः ।
पारगः ।
सर्वगः ।
अनन्तगः ।
अनन्तगः ।
डकरः टिलोपार्थः, डित्यभस्य अप्यनुबन्धकरण-सामर्थ्यातिति । ।

[#२२१]

डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानं ।
सर्वत्रगः ।
पन्नगः ।
उरसो लोपश्च ।
उरसा गच्छति इति उरगः ।
सुदुरोरधिकरणे ।
सुखेन गच्छत्यस्मिनिति सुगः ।
दुर्गः ।
निरो देशे ।
निर्गो देशः ।
अप्र आह - डप्रकरणेऽन्येष्वपि दृश्यते इति ।
स्त्र्यगारगः ।
ग्रामगः ।
गुरुतल्पगः । ।

---

1. <आशिषि हनः># । । PS_३,२.४९ । ।

_______Sठाङ्JKव्_३,२.४९ः

ड इति वर्तते ।
आशिषि गम्यमानायां हन्तेर्धातोः कर्मण्य्-उपपदे डप्रययो भवति ।
तिमिं वध्यात्तिमिहः ।
शत्रुहः ।
आशिषि इति किं ? शत्रुघातः ।
दारावाहनोऽणन्तस्य च टः सञ्ज्ञायां ।
दारावुपपदे आङ्पूर्वाद्हन्तेः अण्प्रत्ययो भवति, अन्तस्य च ट कारादेशो भवति, सञ्ज्ञायां विषये ।
दारु आहन्ति दार्वाघाटः ।
चारौ वा ।
आङ्पूर्वात्हन्तेश्चारावुपपदे अण्, अन्तस्य वा टकारादेशः ।
चार्वाघाटः, चार्वाद्घातः ।
कर्मणि समि च ।
कर्मण्य्-उपपदे सम्पूर्वात्हन्तेः धातोः अण्प्रत्ययो भवति, अन्तस्य च वा टकारदेशः ।
वर्णान्संहन्ति वर्णसङ्घाटः, वर्णसङ्घातः ।
पदानि संहन्ति पदसङ्घाटः, पदसङ्घातः । ।

---

[#२२२]

1. <अपे क्लेश-तमसोः># । । PS_३,२.५० । ।

_______Sठाङ्JKव्_३,२.५०ः

अपपूर्वात्हन्तेः धातोः क्लेश-तमसोः कर्मणोरुपपदयोः डप्रत्ययो भवति ।
क्लेशापहः पुत्रः ।
तमोपहः सूर्यः ।
अनाशीरर्थ आरम्भः । ।

---

1. <कुमार-शीर्षयोर्णिनिः># । । PS_३,२.५१ । ।

_______Sठाञ्ठ्JKव्_३,२.५१ः

हन इति वर्तते ।
कुमार शीर्ष इत्येतयोः उपपदयोः हन्तेः णिनिः प्रत्ययो भवति ।
कुमार-घाती ।
शीर्ष-घाती ।
निपातनाच्छिरसः शीर्षभावः । ।

---

1. <लक्षणे जाया-पत्योष्टक्># । । PS_३,२.५२ । ।

_______Sठाञ्ठ्JKव्_३,२.५२ः

हन्तेः जायापत्योः कर्मणोः उअपपदयोः लक्षणवति कर्तरि टक्प्रत्ययो भवति ।
जायाघ्नो ब्राह्मणः पतिघ्नी वृषली ।
अथ वा लक्षणे द्योत्ये टक्प्रत्ययः । ।

---

1. <अमनुष्यकर्तृके च># । । PS_३,२.५३ । ।

_______Sठाञ्ठ्JKव्_३,२.५३ः

अमनुष्यकर्तृके वर्तमानाद्हन्तेः धातोः कर्मणि उपपदे टक्प्रत्ययो भवति ।
जायाघ्नस्तिलकालकः ।
पतिघ्नी पाणिरेखा ।
श्लेष्मघ्नं मधु ।
पित्तघ्नं घृतं ।
अमनुष्यकर्तृके इति किं ? आखुघातः शूद्रः ।
इह कर्मान्न भवति, चौरघातो हस्ती ? कृत्य-ल्युटो बहुलं (*३,३.११३) इति बहुल-वचनादण्भवति । ।

---

1. <शक्तौ हस्ति कपाटयोः># । । PS_३,२.५४ । ।

_______Sठाञ्ठ्JKव्_३,२.५४ः

शक्तौ गम्यमानायां हस्ति कपाटयोः कर्मणोरुपपदयोः हन्तेः टक्प्रत्ययो भवति।
मनुष्यकर्तृक-अर्थ आरम्भः।
हस्तिनं हन्तुं शक्तः हस्तिघ्नः मनुष्यः।
कं पाटयति प्रविशत इति कपाटघ्नश्चौरः।
शक्तौ इति किं? विषेण हस्तिनं हन्ति हस्तिघातः।।

---

1. <पाणिघ-ताडघौ शिल्पिनि>#।। PS_३,२.५५।।

_______Sठाऱ्ठ्JKव्_३,२.५५:

पाणिघ ताडघ इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि।
पाणि ताड इत्येतयोः कर्मणोः उपपदयोः हन्तेः धतोः टक्प्रत्ययो भवति,

[#२२३]

तस्मिंश्च परतो हन्तेः टिलोपो घत्वं च निपात्यते।
पाणिघः।
ताडघः।
शिल्पिनि इति किं? पाणिघातः।
ताडघातः।
राजघ उपसङ्ख्यानं।
राजानं हन्ति राजघः।।

---

1. <आढ्य-सुभग-स्थूल-पलित-नग्न-अन्ध-प्रियेषु च्व्य्-अर्थेष्वच्वौ कृञः करणे ख्युन्>#।। PS_३,२.५६।।

_______Sठाऱ्ठ्JKव्_३,२.५६:

आढ्यादिषु कर्मसु उपपदेषु च्व्य्-अर्थेषु अच्व्यन्तेषु करोतेः धातोः करणे कारके ख्युन्प्रत्ययो भवति।
च्वेर्विकल्पेन विधानाद्द्विविधाः च्व्यर्थाः, च्व्यन्ता अच्व्यन्ता श्च।
तत्र च्व्यन्ताः पर्युदस्यन्ते।
अनाढ्यं आढ्यं कुर्वन्ति अनेन आढ्यङ्करणं।
सुभगङ्करणं।
स्थूलङ्करणं।
पलितङ्करणं।
नग्नङ्करणं।
अन्धङ्करणं।
प्रियङ्करणं।
च्व्यर्थेषु इति किं? आढ्यं तैलेन कुर्वन्ति अभ्यञ्जयन्ति इत्यर्थः।
प्रकृतेरविवक्षायां अभूतप्रादुर्भावेऽपि प्रत्युदाहरणं भवति।

अच्वौ इति किं ? आढ्यीकुर्वन्त्यनेन ।
ननु च ख्युना मुक्ते ल्युटा भवितव्यम्, न च ल्युटः ख्युनश्च विशेषोऽस्ति, तत्र किं प्रतिषेधेन ? एवं तर्हि प्रतिषेध-सामर्थ्यात्ख्युनि असति ल्युडपि न भवति, तेन ल्युटोऽप्ययं अर्थतः प्रतिषेधः ।
उत्तरार्थश्च च्वि-प्रतिषेधः क्रियते । ।

---

1. <कर्तरि भुवः खिष्णुच्-खुकञौ># । । PS_३,२.५७ । ।

______Sठा~ठ्JKव्_३,२.५७ः

आढ्यादिसु सुबन्तेषु उपपदेषु च्व्यर्थेषु अच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच्, खुकञित्येतौ प्रत्ययौ भवतः ।
अनाढ्य आढ्यो भवति आढ्यंभविष्णुः, आढ्यंभावुकः ।
सुभवंभविष्णु, सुभगंभावुकः ।
स्थूलंभविष्णुः, स्थूलंभावुकः ।
पलितंभविष्णुः, पलितंभावुकः ।
नग्नंभविष्णुः, नग्नंभावुकः ।
अन्धंभविष्णुः, अन्धंभावुकः ।
प्रियंभविष्णुः, प्रियंभावुकः ।
कर्तरि इति किं ? करणे मा भूथ् ।
च्व्यर्थेसु इत्येव, आढ्यो भविता ।
अच्वौ इत्येव, आढ्यीभविता ।
उदात्ततत्वाद्भुवः सिद्धं इकारादित्वं इष्णुचः ।
नञ्स्तु स्वरसिद्ध्यर्थं इकारादित्वं इष्यते । ।

---

1. <स्पृशोऽनुदके क्विन्># । । PS_३,२.५८ । ।

______Sठा~ठ्JKव्_३,२.५८ः

स्पृशे र्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययो भवति ।
ननु सकर्मकत्वात्स्पृशेः कर्मैवोपपदं प्राप्नोति ? न+एष दोषः ।
कर्तरि इति पूर्वसूत्रादनुवर्तते, तत्कर्तृप्रचय-अर्थं विज्ञायते ।
सुबन्तमात्रे च+उपपदे कर्तृपचयो लभ्यते घृतं स्पृशति घृतस्पृक् ।
मन्त्रेण स्पृशति मन्त्रस्पृक् ।
जलेन स्पृशति जलस्पृक् ।
अनुदके इति किं ? उदकस्पर्शः ।
नकारः क्विन्-प्रत्ययस्य कुः (*८,२.६२) इति विशेषण-अर्थः । ।

---

[#२२४]

1. <ऋत्विग्-दधृक्-स्रग्-दिग्-उष्णिग्-अञ्चु-युजि-क्रुञ्चां च># । । PS_३,२.५९ । ।

_______Sठाञ्ठJKव्_३,२.५९ः

ऋत्विगादयः पञ्च-शब्दाः क्विन्-प्रत्ययान्ताः निपात्यन्ते, अपरे त्रयो धात्वो निर्दिष्यन्ते ।
ऋतु-शब्द उपपदे यजेर्धतोः क्विन्प्रत्ययो निपात्यते ।
ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति ऋत्विक् ।
रूढिरेषा यथा कथंचिदनुगन्तव्या ।
धृषेः क्विन्प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च निपात्यते ।
धृष्णोति इति दधृक् ।
सृजेः कर्मणि क्विन्, अमागमः च निपात्यते ।
सृजन्ति तं इति स्रक् ।
दिषेः कर्मणि क्विन्निपात्यते ।
दिशन्ति तां इति दिक् ।
उत्पूर्वात्स्निहेः क्विन्, उपसर्गान्त-लोपः, षत्वं च निपात्यते ।
उष्णिक् ।
अञ्चु युजि क्रुञ्च इत्येतेषां धातूनां क्विन्प्रत्ययो भवति ।
निपातनैः सह निर्देशातत्र अपि किंचिदलाक्षणिकं कार्यं अस्ति ।
अञ्चतेः सुब्नत-मात्र उपपदे क्विन्प्रत्ययो भवति ।
प्राङ् ।
प्रत्यङ् ।
उदङ् ।
युजेः क्रुञ्चेश्च केवलादेव ।
युङ्, युञ्जौ, युञ्जः ।
सोपपदात्तु सत्सूद्विष (*३,२.६१) इत्यादिना क्विप्भवति ।
अश्वयुक्, अश्वयुजौ, अश्वयुजः ।
क्रुङ्, क्रुञ्चौ, क्रुञ्चः ।
नलोपः कस्मान्न भवति ? निपातन-साहचर्यात् । ।

---

1. <त्यदादिषु दृशोऽनालोचने कञ्च># । । PS_३,२.६० । ।

_______Sठाञ्ठJKव्_३,२.६०ः

त्यदादिषु उपपदेषु दृशेर्धातोरनालोचनेऽर्थे वर्तमानात्कञ्प्रत्ययो भवति, चकारात्क्विन्च ।
त्यादृशः, त्यादृक् ।
तादृशः, तादृक् ।
यादृशः, यादृक् ।
कञो ञकारो विशेषण-अर्थः, ठक्ठञ्कञिति ।

अनालोचने इति किं ? तं पश्यति तद्दर्शः ।
तादृगादयो हि रूढिशब्द-प्रकाराः, न+एव अत्र दर्शनक्रिया विद्यते ।
समानान्ययोश्चेति वक्तव्यं ।
सदृशः, सदृक् ।
अन्यादृशः, अन्यादृक् ।
दृशेः क्षश्च वक्तव्यः ।
तादृक्षः ।
यादृक्षः ।
अन्यादृक्षः ।
कीदृक्षः । ।

---

[#२२५]

1. <सत्-सू-द्विष-द्रुह-दुह-युज-विद-भिदच्-छिद-जि-नी-राजां उअसर्गेऽपि क्विप्># । । PS_३,२.६१ । ।

_______Sठान्ठJKव्_३,२.६१ः

सुपि इत्यनुवर्तते ।
कर्म-ग्रहणं तु स्पृशोऽनुदके क्विन्(*३,२.५८) इत्यतः प्रभृति न व्याप्रियते ।
सदादिभ्यः धातुभ्यः सुबन्ते उपपदे उपसर्गेऽपि अनुपसर्गेऽपि क्विप्प्रत्ययो भवति ।
उपसर्ग-ग्रहणं ज्ञापनार्थम्, अन्यत्र सुब्-ग्रहणे उपसर्ग-ग्रहणं न भवति इति, वदः सुपि क्यप्च (*३,१.१०६) इति ।
सू इति द्विषा साहचर्यात्सूतेः आदादिकस्य ग्रहणं, न सुवतेः तौदादिकस्य ।
युजिर्योगे, युज समाधौ, द्वयोरपि ग्रहणं ।
विद ज्ञाने, विद सत्तायाम्, विद विचारणे, त्रयाणां अपि ग्रहणं ।
न लाभ-अर्थस्य विदेः, अकारस्य विवक्षतत्वाथ् ।
सद्- शुचिषथ् ।
अन्तरिक्षसथ् ।
उपसथ् ।
सू - अण्डसूः ।
शतसूः ।
प्रसूः ।
द्विष - मित्रद्विठ् ।
प्रद्विठ् ।
द्रुह - मित्रध्रुक् ।
प्रध्रुक् ।
दुह - गोधुक् ।
प्रधुक् ।
युज - अश्वयुक् ।
प्रयुक् ।
विद - वेदविथ् ।
प्रविथ् ।
ब्रह्मविथ् ।
भिद - काष्ठभिथ् ।
प्रभिथ् ।

छिद - रज्जुच्छिद्।
प्रच्छिद्।
जि - शत्रुजित्।
प्रजित्।
नी - सेनानीः।
प्रणीः।
ग्रामणीः।
अग्रणीः।
कथं अत्र णत्वं ? स एषां ग्रामणीः (*५,२.७८) इति निपातनात्, नयतेः पूर्वपदात्सज्ञायां अगः (*८,४.३) इति णत्वं।
राज - राठ्।
विराठ्।
सम्राठ्।
मो राजि समः क्वौ (*८,२.३५) इति मत्वं।
अन्येभ्योऽपि दृश्यते (*३,२.१७८), क्विप्च (*३,२.७६) इति सामान्येन वक्ष्यति, तस्य+एव अयं प्रपञ्चः।।

---

1. <भजो ण्विः>#।। PS_३,२.६२।।

_______Sठा~ठ्JKव्_३,२.६२ः

उपसर्गे सुपि इति वर्तते।
भजेर्धातोः सुबन्त उपपदे उपसर्गेऽपि - प्रभाक्।।

---

1. <छन्दसि सहः>#।। PS_३,२.६३।।

_______Sठा~ठ्JKव्_३,२.६३ः

उपसर्गे सुपि इत्येव।
छन्दसि विषये सहेर्धातोः सुबन्ते उपपदे ण्वि-प्रत्ययो भवति।
तुराषाठ्।
सहेः साडः सः (*८,३.५६) इति षत्वम्, अन्येषां अपि दृश्यते (*६,३.१३७) इति दीर्घत्वं।।

---

[#२२६]

1. <वहश्च># । । PS_३,२.६४ । ।

_______Sठाऱ्ठJKव्_३,२.६४ः

वहेर्धातोः छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति ।
प्रष्ठवाठ् ।
दिव्यवाठ् ।
योग-विभाग उत्तर-अर्थः । ।

---

1. <कव्य-पुरीष-पुरीष्येषु ञ्युट्># । । PS_३,२.६५ । ।

_______Sठाऱ्ठJKव्_३,२.६५ः

कव्य पुरीष पुरीष्य इत्येतेषु उपपदेषु छन्दसि विषये वहेर्धातोः ण्युट्प्रत्ययो भवति ।
कव्यवाहनः पित्éणां ।
पुरीषवाहणः ।
पुरीष्यवाहनः । ।

---

1. <हव्येऽनन्तःपादाम्># । । PS_३,२.६६ । ।

_______Sठाऱ्ठJKव्_३,२.६६ः

हव्य-शब्दे उपपदे छन्दसि विषये वहेर्धातोः ञ्युट्प्रत्ययो भवति, अनन्तः-पादं चेद्वहिर्वर्तते ।
अग्निश्च हव्य-वाहनः अनन्तःपादं इति किं ? हव्यवाडग्निरजरः पिता नः । ।

---

1. <जन-सन-खन-क्रम-गमो विट्># । । PS_३,२.६७ । ।

_______Sठाऱ्ठJKव्_३,२.६७ः

छन्दसि उपसर्गे सुपि इति अनुवर्तते ।
जन जनने, जनी प्रदुर्भावे, द्वयोरपि ग्रहणं ।

तथा षणु दाने, वन षने संभक्तौ, द्वयोरपि ग्रहणं।
जनादिभ्यः धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट्प्रत्ययो भवति।
टकारः सामान्य-ग्रहण-अविघात-अर्थः वेरपृक्तस्य (*६,१.६७) इति, विषेषण-अर्थश्च विड्वनोरनुनासिकस्यात्(*६,४.४१) इति।
जन - अब्जाः गोजाः।
सन - गोषा इन्दो नृषा असि।
खन - बिसखाः।
कूपखाः।
क्रम - दधिक्राः।
गम - अग्रेगा उन्नत्éणां।।

---

1. <अदोऽनन्ने># । । PS_३,२.६८ । ।

______Sठान्ठJKव्_३,२.६८ः

छन्दसि इति निवृत्तं।
अदेर्धातोरनन्ने सुप्युपपदे विट्प्रत्ययो भवति।
आमममत्ति आमाथ्।
सस्याथ्।
अनन्ने इति किं? अन्नादः।।

---

1. <क्रव्ये च># । । PS_३,२.६९ । ।

______Sठान्ठJKव्_३,२.६९ः

क्रव्य-शब्द उपपदे अदेर्धातोः विट्प्रत्ययो भवति।
क्रव्यमत्ति क्रव्याथ्।
पूर्वेण+एव सिद्धे वचनं असरूपबाधन-अर्थं।
तेन अण्न भवति।
कथं तर्हि क्रव्यादः? कृत्तविकृत्त-शब्दे उपपदे अण्, तस्य च पृषोदरादिपाठात्क्रव्यभावः।
कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यातिति।।

---

[#२२७]

1. <दुहः कब्घश्च># । । PS_३,२.७० । ।

_______Sठा~ठ्JKव्_३,२.७०ः

दुहेर्धातोः सुप्युपपदे कप्प्रत्ययो भवति, घकारश्चान्तादेशः ।
कामदुघा धेनुः ।
अर्घदुघा ।
धर्मदुघ । ।

---

1. <मन्त्रे श्वेत-वह-उक्थशस्-पुरोडाशो ण्विन्># । । PS_३,२.७१ । ।

_______Sठा~ठ्JKव्_३,२.७१ः

श्वेतवह उक्थशस्पुरोडाशित्येतेभ्यो ण्विन्प्रत्ययो भवति मन्त्रे विषये ।
धातु-उपपद-समुदाया निपात्यन्ते अलाक्षणिककार्य-सिद्ध्य्-अर्थं ।
प्रत्ययस्तु विधीयत एव ।
श्वेत-शब्दे कर्तृ-वाचिनि उपपदे वहेर्धातोः करणि कारके ण्विन्प्रत्ययो भवति ।
श्वेता एनं वहन्ति श्वेतवा इन्द्रः ।
उक्थ-शब्दे कर्मणि करणे वा उपपदे शंसतेर्धातोः ण्विन्प्रत्ययो भवति, नलोपश्च निपात्यते ।
उक्थानि शंसति, उक्थैर्वा शंसति, उक्थशा यजमानः ।
दाशृ दाने इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः ।
पुरो दाशन्त एनं प्रोडाः ।
श्वेतवहादीनां डस्पदस्य+इति वक्तव्यं ।
श्वेतवोभ्यां ।
श्वेतवोभिः ।
पदस्य इति किं ? श्वेतवाहौ ।
श्वेतवाहः । ।

---

1. <अवे यजः># । । PS_३,२.७२ । ।

_______Sठा~ठ्JKव्_३,२.७२ः

अवे उपपदे यजेः धातोः ण्विन्प्रत्ययो भवति मन्त्रे विषये ।
त्वं यज्ञे वरुणस्य अवया असि ।
योगविभाग उत्तर-अर्थः । ।

---

1. <विजुपे छन्दसि># । । PS_३,२.७३ । ।

_______Sठाऱ्ठJKव्_३,२.७३ः

उपे उपपदे यजेः छन्दसि विषये विच्प्रत्ययो भवति ।
उपयड्भिरूर्ध्वं वहन्ति ।
उपयट्त्वं ।
छन्दो-ग्रहणं ब्राह्मण-अर्थं ।
विचः चित्करणं सामान्य-ग्रहण-अविघात-अर्थं वेरपृक्तस्य (*६,१.६७) इति ।
किं अर्थं इदं उच्यते, यावत अन्येभ्योऽपि दृश्यन्ते (*३,२.७५) इति यजेरपि विच्सिद्ध एव ? यजेर्नियम-अर्थं एतत्, उपयजेः छन्दस्य+इव, न भाषायां इति । ।

---

[#२२८]

1. <आतो मनिन्-क्वनिब्-वनिपश्च># । । PS_३,२.७४ । ।

_______Sठाऱ्ठJKव्_३,२.७४ः

छन्द्सि इति वर्तते, सुपि उपसर्गेऽपि इति च ।
आकारान्तेभ्यो धातुभ्यः सुपि उपप्दे छन्द्सि विषये मनिन्क्वनिप्वनिपित्येते प्रत्यया भवन्ति ।
चकरात्विच्भवति ।
सुदामा ।
अश्वत्थामा ।
क्वनिप्- सुधीवा ।
सुपीवा ।
वनिप्- भूरिदावा ।
घृतपावा ।
विच्खल्वपि - कीलालपाः ।
शुभंयः ।
रामस्य+उपदाः । ।

---

1. <अन्येभ्योऽपि दृश्यन्ते># । । PS_३,२.७५ । ।

______Sठा~ठ्JKव्_३,२.७५ः

छन्दसि इति निवृत्तं ।
अन्येभ्योऽपि धातुभ्योऽनाकारान्तेभ्यो मनिन्क्वनिप्वनिपित्येते प्रत्यया दृश्यन्ते, विच्च ।
सुशर्मा ।
क्वनिप्- प्रातरित्वा ।
प्रातरित्वानौ ।
वनिप्- विजावाग्ने ।
अग्रेयावा ।
विच्खल्वपि - रेडसि ।
अपि-शब्दः सर्व-उपाधिव्यभिचार-अर्थः ।
निरुपपदादपि भवति ।
धीवा ।
पीवा ।
दृशि-ग्रहणं प्रयोग-अनुसरण-अर्थं । ।

---

1. <क्विप्च># । । PS_३,२.७६ । ।

______Sठा~ठ्JKव्_३,२.७६ः

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप्प्रत्ययो भवति ।
उखायाः स्रंसते उखास्रथ् ।
पर्णध्वथ् ।
वाहात्भ्रश्यति, वाहाभ्रठ् ।
अन्येषं अपि दृश्यते (*६,३.१३७) इति दीर्घः । ।

---

1. <स्थः क च># । । PS_३,२.७७ । ।

______Sठा~ठ्JKव्_३,२.७७ः

सुपि उपसर्गेऽपि इति च वर्तते ।
स्था इत्येतस्माद्धातोः सुपि उपपदे कप्रत्ययो भवति, क्विप्च ।
किमर्थं इदं उच्यते, यवता सुपि स्थः (*३,२.४) इति कः सिद्ध एव, अन्येभ्योऽपि दृश्यते (*३,२.१७८) इति क्विप्? बाधकबाधन-अर्थं पुनर्वचनं ।
शमि धातोः सञ्ज्ञायां (*३,२.१४) अचं बाधते - शंस्थः ।
शंस्थाः । ।

---

[#२२९]

1. <सुप्यजातौ णिनिस्ताच्छील्ये># । । PS_३,२.७८ । ।

_______Sठाऽ्ठ्JKव्_३,२.७८ः

अजाति-वाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोः णिनिः प्रत्ययो भवति ।
उष्णभोजी ।
शीतभोजी ।
अजातौ इति किं ? ब्राह्मणानामन्त्रयिता ।
ताच्छील्ये इति किं ? उष्णं भुङ्क्ते कदाचिथ् ।
सुपि इति वर्तमाने पुनः सुब्-ग्रहणं उपसर्गनिवृत्त्य्-अर्थं ।
उत्प्रतिभ्यां आङि सर्तेरुपसङ्ख्यानं ।
उदासारिण्यः ।
प्रत्यासारिण्यः ।
साधुकारिणि च ।
सधुकारी ।
साधुदायी ।
ब्रह्मणि वदः ।
ब्रह्मवादिनो वदन्ति । ।

---

1. <कर्तर्युपमामे># । । PS_३,२.७९ । ।

_______Sठाऽ्ठ्JKव्_३,२.७९ः

कर्तृ-वाचिनि उपमाने उपपदे धातोः णिनि-प्रत्ययो भवति ।
उपपदकर्ता प्रत्यय-अर्थस्य कर्तुरुपमानं ।
उष्ट्र इव क्रोशति उष्ट्रक्रोशी ।
ध्वाङ्क्षरावी ।
अताच्छील्य-अर्थ आरम्भः, जात्यर्थो वा ।
कर्तरि इति किं ? अपूपानिव भक्षयति माषान् ।
उपमने इति किं ? उष्ट्रः क्रोशति । ।

---

1. <व्रते># । । PS_३,२.८० । ।

_______Sठाऱ्ढ़्JKव्_३,२.८०ः

व्रत इति शास्त्रतो नियम उच्यते व्रते गम्यमाने सुबन्त उपपदे धातोः णिनिः प्रत्ययो भवति ।
समुदायोपधिश्च अयं ।
धतु-उपपद-प्रत्ययसौदयेन व्रतं गम्यते ।
स्थण्डिलशायी ।
अश्राद्धभोजी ।
कामचारप्राप्तौ नियमः ।
सति शयने स्थण्डिल एव शेते न अन्यत्र ।
सति भोजनेऽश्राद्धं एव भुङ्क्ते न श्राद्धं इति ।
व्रते इति किं ? स्थाण्डिले शेते देवदत्तः ।
अतच्छील्य-अर्थ आरम्भः, जात्य्-अर्थो वा । ।

---

[#२३०]

1. <बहुलं आभीक्ष्ण्ये># । । PS_३,२.८१ । ।

_______Sठाऱ्ढ़्JKव्_३,२.८१ः

आभीक्ष्ण्ये गम्यमाने धातोः बहुलं णिनिः प्रत्ययो भवति ।
अभीक्ष्ण्यं पौनःपुन्यं ।
तात्पर्यं आसेवैव, ताच्छील्यादन्यथ् ।
कषायपायिणो गन्धाराः ।
क्षीरपायिणः उशीनराः ।
सौवीरपायिणो बाह्लीकाः ।
बहुल-ग्रहणत्कुल्माषखादः इत्यत्र न भवति । ।

---

1. <मनः># । । PS_३,२.८२ । ।

_______Sठाऱ्ढ़्JKव्_३,२.८२ः

सुपि इति वर्तते ।
मन्यतेः सुबन्ते उपपदे णिनिः प्रत्ययो भवति ।
दर्शनीयमानी ।
शोभनमानी ।

बहुल-ग्रहण-अनुवृत्तेः मन्यतेः ग्रहणं न मनुतेः ।
उत्तरसूत्रे हि खश्-प्रत्यये विकरणकृतो विशेषः स्यात् । ।

---

1. <आत्ममाने खश्च># । । PS_३,२.८३ । ।

______Sठा~ठJKव्_३,२.८३ः

आत्मनो मननं आत्ममानः ।
आत्ममाने वर्तमानान्मन्यतेः सुप्युपपदे खश्-प्रत्ययो भवति ।
चकाराण्णिनिः च ।
यदा प्रत्यय-अर्थः कर्ता आत्मानं एव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदाऽयं विधिः ।
दर्शनीयं आत्मानं मन्यते दर्शनीयंमन्यः, दर्शनीयमानी ।
पण्डितं मन्यः, पण्डितमानी ।
आत्ममाने इति किं ? दर्शनीयमनी देवदत्तस्य यज्ञदत्तः । ।

---

1. <भूते># । । PS_३,२.८४ । ।

______Sठा~ठJKव्_३,२.८४ः

भूते इत्यधिकारो वर्तमने लट्(*३,२.१२३) इति यवथ् ।
यदित ऊर्ध्वं अनुक्रमिष्यामः भूते इत्येवं तद्वेदितव्यं ।
धात्व्-अधिकाराच्च धात्व्-अर्थे भूते इति विज्ञायते ।
वक्ष्यति - करणे यजः (*३,२.८५), अग्निष्टोमेन इष्टवानग्निष्टोमयाजी ।
भूते इति किं ? अग्निष्टोमेन यजते । ।

---

1. <करणे यजः># । । PS_३,२.८५ । ।

______Sठा~ठJKव्_३,२.८५ः

णिनिः अनुवर्तते, न खश् ।
यजतेर्धातोः करणे उपपदे णिनिप्रत्ययो भवति भूते ।
अग्निष्टोमयाजी ।
अग्निष्तोमः फलभावनायां करणं भवति । ।

---

[#२३१]

1. <करमणि हनः># । । PS_३,२.८६ । ।

_______Sठा~ठ्JKव्_३,२.८६ः

करणि उपपदे हन्तेर्धातोः णिनिः प्रत्ययो भवति भूते कले ।
पितृव्यघाती ।
मातुलघाती ।
कुग्सितग्रहणं कर्तव्यं ।
इति मा भूत्, चौरं हतवान् । ।

---

1. <ब्रह्म-भ्रूण-वृत्रेषु क्विप्># । । PS_३,२.८७ । ।

_______Sठा~ठ्JKव्_३,२.८७ः

कर्मणि इति वर्तते ।
ब्रह्मादिषु कर्मसु उपपदेषु हन्तेर्धातोः क्विप्प्रत्ययो भवति भूते ।
ब्रह्महा ।
ब्रूणहा ।
वृत्रहा ।
किमर्थं इदं उच्यते यावता सर्वधातुभ्यः क्विप्विहित एव ? ब्रह्मादिषु हन्तेः क्विब्-वचनं नियम-अर्थं ।
चतुर्विधश्च अत्र नियम इष्यते ।
ब्रह्मादिष्वेव हन्तेः, न अन्यस्मिन्नौपपदे, पुरुषं हतवानिति ।
ब्रह्मादिषु हन्तेरेव, न अन्यस्मात्स्यात्, ब्रह्म अधीतवानिति ।
ब्रह्मादिषु हन्तेर्भूतकाले क्विपेव न अन्यः प्रत्ययः, तथा भूतकाले एव न अन्यस्मिन्, ब्रह्माणं हन्ति हनिष्यति वा इति ।
तदेतद्वक्ष्यमाण-बहुल-ग्रहणस्य पुरस्ताअदपकर्षणाल्लभ्यते । ।

---

1. <बहुलं छन्दसि># । । PS_३,२.८८ । ।

_______Sठा~ठ्JKव्_३,२.८८ः

पूर्वेण नियमादप्राप्तः क्विप्प्रत्ययः विधीयते।
छन्दसि विषये उपपदन्तरेष्वपि हन्तेर्बहुलं क्विप्प्रत्ययो भवति।
मतृहा सप्तमं नरकं व्रजेथ्।
पितृहा।
न च भवति।
मातृघातः।
पितृघातः।।

---

1. <सु-कर्म-पाप-मन्त्र-पुण्येषु कृञः>#।। PS_३,२.८९।।

______Sठा~ठ्JKव्_३,२.८९ः

कर्मणि इति वर्तते।
तद्-असम्भवात्सु-शब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति।
स्वादिषु कर्मसु उपपदेषु करोतेर्धातोः क्विप्प्रत्ययो भवति।
सुकृथ्।
कर्मकृथ्।
पापकृथ्।
मन्त्रकृथ्।
पुण्यकृथ्।
अयं अपि नियम-अर्थ आरम्भः।
त्रिविधश्च अत्र नियम इष्यते।
धातुनियमं वर्जयित्वा कालोपपद-प्रत्ययनियमः।
धतोरनियतत्वादन्यस्मिन्नुपपदे अपि भवति।
शास्त्रकृथ्।
भाष्यकृट्।।

---

1. <सोमे सुञः>#।। PS_३,२.९०।।

______Sठा~ठ्JKव्_३,२.९०ः

कर्मणि इति वरते।
सोमे कर्मणि उपपदे सुनोतेर्धातोः क्विप्प्रत्ययो भवति।
सोमसुत्, सोमसुतौ, सोमसुतः।
अयं अपि नियम-अर्थ आरम्भः।
चतुर्विधश्च अत्र नियमः इष्यते, धातुकाल-उपपद-प्रत्यय-विषयः।।

---

[#२३२]

1. <अग्नौ चेः># । । PS_३,२.९१ । ।

_______Sठा˜ठ्JKव्_३,२.९१ः

कर्मणि इत्येव ।
अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप्प्रत्ययो भवति ।
अग्निचित्, अग्निचितौ, अग्निचितः ।
अत्र अपि पूर्ववच्चतुर्विधो नियम इष्यते । ।

---

1. <कर्मण्य्-अग्न्य्-आख्यायाम्># । । PS_३,२.९२ । ।

_______Sठा˜ठ्JKव्_३,२.९२ः

चेः कर्मणि इति वर्तते ।
कर्मणि उपपदे चिनोतेः कर्मण्येव कारके क्विप्प्रत्ययो भवति अग्न्य्-आख्यायां, धातूपपद-प्रत्यय-समुदायेन चेदग्न्याख्या गम्यते ।
श्येन इव चीयते श्येनचिथ् ।
कङ्कचिथ् ।
आख्या-ग्रहणं रूढिसम्प्रत्ययार्थं ।
अग्न्य्-अर्थो हि इष्टकाचय उच्यते श्येनचितिति । ।

---

1. <कर्मणि इनिर्विक्रियः># । । PS_३,२.९३ । ।

_______Sठा˜ठ्JKव्_३,२.९३ः

कर्मणि उपपदे वि-पूर्वत्क्रीणातेर्धातोः इनिः प्रत्ययो भवति ।
कर्मणि इति वर्तमाणे पुनः कर्म-ग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्म-मात्रे मा भूथ् ।
सोमविक्रयी ।
रसविक्रयी ।
इह न भवति, धान्य-विक्रायः । ।

---

1. <दृशेः क्वनिप्># । । PS_३,२.९४ । ।

______Sठाऱ्ठJKव्_३,२.९४ः

कर्मणि इत्येव ।
दृशेः धातोः कर्मणि उपपदे क्वनिप्प्रत्ययो भवति ।
मेरुदृश्वा ।
परलोकदृश्वा ।
अन्येभ्योऽपि दृश्यन्ते (*३,२.७५) इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तर-निवृत्त्य्-अर्थं । ।

---

1. <राजनि युधिकृञः># । । PS_३,२.९५ । ।

______Sठाऱ्ठJKव्_३,२.९५ः

कर्मणि इत्येव ।
राजन्-शब्दे कर्मणि उपपदे युध्यतेः करोतेश्च क्वनिप्प्रत्ययो भवति ।
ननु च युधिरकर्मकः ? अन्तर्भावितण्य्-अर्थः सकर्मको भवति ।
राजयुध्वा ।
राजानं योधितवानित्यर्थः ।
राजकृत्वा । ।

---

1. <सहे च># । । PS_३,२.९६ । ।

______Sठाऱ्ठJKव्_३,२.९६ः

सह-शब्दे च+उपपदे युधिकृञोः धात्वोः क्वनिप्प्रत्ययो भवति ।
असत्त्ववाचित्वान्न+उपपदं कर्मणा विशेष्यते ।
सहयुध्वा ।
सहकृत्वा । ।

---

1. <सप्तम्यां जनेर्डः># । । PS_३,२.९७ । ।

_______Sठाऽठ्JKव्_३,२.९७ः

सप्तम्यन्त उपपदे जनेर्धतोः डः प्रत्ययो भवति ।
उपसरे जातः उपसरजः ।
मन्दुरजः । ।

---

[#२३३]

1. <पञ्चम्यां अजातौ># । । PS_३,२.९८ । ।

_______Sठाऽठ्JKव्_३,२.९८ः

पञ्चम्यन्त उपपदे जातिवर्जिते जनेर्डः प्रत्ययो भवति ।

[#२३२]

बुद्धिजः ।
संस्कारजः ।
दुःखजः ।
अजातौ इति किं ? हस्तिनो जातः ।
अश्वाजातः । ।

---

[#२३३]

1. <उपसर्गे च सञ्ज्ञायाम्># । । PS_३,२.९९ । ।

_______Sठाऽठ्JKव्_३,२.९९ः

उपसर्गे च उपपदे जनेः डः प्रत्ययो भवति सञ्ज्ञायां विषये ।
समुदायोपाधिः सञ्ज्ञा ।
अथेमा मानवीः प्रजाः । ।

---

1. <अनौ कर्मणि># । । PS_३,२.१०० । ।

_______Sठाऱ्ठJKव्_३,२.१००ः

अनुपूर्वात्जनेः कर्मणि उपपदे डः प्रत्ययो भवति ।

[#२३२]

पुमांसमनुजातः पुमनुजः ।
स्त्र्यनुजः । ।

---

[#२३३]

1. <अन्येष्वपि दृश्यते># । । PS_३,२.१०१ । ।

_______Sठाऱ्ठJKव्_३,२.१०१ः

अन्येष्वपि उपपदेषु कारकेषु जनेः डः प्रत्ययो दृश्यते ।
सप्तम्यां इत्युकतम सप्तम्यां अपि दृश्यते ।
न जायते इति अजः ।
द्विर्जाताः द्विजाः ।
पञ्चम्यां अजातौ (*३,२.९८) इत्युक्तं, जातवपि दृश्यते ।
ब्राह्मणजो धर्मः ।
क्षत्रियजं युद्धं ।
उपसर्गे च सञ्ज्ञायां (*३,२.९९) इत्युक्तम्, असञ्ज्ञायां अपि दृश्यते ।
अभिजाः, परिजाः केशाः ।
अनु कर्मणि (*३,२.१००) इत्युक्तम्, अकर्मण्यपि दृश्यते ।
अनुजातः अनुजः ।
अपि-शब्दः सर्वोपाधिव्यभिचार-अर्थः ।
तेन धात्वन्तरादपि भवति, कारकन्तरेऽपि ।
परितः खाता परिखा ।
आखा । ।

---

1. <निष्ठा># । । PS_३,२.१०२ । ।

_______Sठा~ठ्JKव्_३,२.१०२ः

क्तक्तवतू निष्ठा (*१,१.२६) इत्युक्तं, स निष्ठ-सञ्ज्ञकः प्रत्ययो भूते भवति ।
कृतं ।
कृतवान् ।
भुक्तं ।
भुक्तवान् ।
निष्ठायां इतरेतराश्रयत्वादप्रसिद्धिः ।
सञ्ज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः सञ्ज्ञाया भाव्यं ।
न+एष दोषः ।
भाविनी सञ्ज्ञा विज्ञायते ।
स भूते भवति, यस्योत्पन्नस्य निष्ठा इत्येषा सञ्ज्ञा भवति ।
समर्थ्यात्क्तक्तवत्वोर्विधानं एतथ् ।
आदिकर्मणि निष्ठ वक्तव्या ।
प्रकृतः कटं देवदत्तः ।
प्रकृतवान्कटं देवदत्तः । ।

---

[#२३४]

1. <सु-यजोर्ङ्वनिप्># । । PS_३,२.१०३ । ।

_______Sठा~ठ्JKव्_३,२.१०३ः

सुनोतेर्यजतेश्च ङ्वनिप्प्रत्ययो भवति ।
सुत्वा ।
यज्वा । ।

---

1. <जीर्यतेरतृन्># । । PS_३,२.१०४ । ।

_______Sठा~ठ्JKव्_३,२.१०४ः

भूते (*३,२.७४) इति वर्तते ।
जीर्यतेः अतृन्प्रत्ययो भवति भूते ।
जरन्, जरन्तौ, जरन्तः ।
वा+असरूपेण निष्ठा, जीर्णः, जीर्णवानिति । ।

---

1. <छन्दसि लिट्># । । PS_३,२.१०५ । ।

_______Sठा॒ठJKव्_३,२.१०५ः

भूते इत्येव ।
छन्दसि विषये धातोः लिट्प्रत्ययो भवति ।
अहं सूर्यमुभयतो ददर्श ।
अहं ध्यावापृथिवी आततान ।
ननु च छन्दसि लुङ्-लङ्-लिटः (*३,४.६) इति सामान्येन लिट्विहित एव ? धातु-सम्बन्धे स विधिः, अयं त्वविषेषेण । ।

---

1. <लिटः कानज्वा># । । PS_३,२.१०६ । ।

_______Sठा॒ठJKव्_३,२.१०६ः

छन्दसि लिटः कानज्-आदेशो भवति वा ।
अग्निं चिक्यानः ।
सोमं सुषुवाणः ।
वरुणं सुषुवानं ।
न च भवति ।
अहं सूर्यमुभयतो ददर्श ।
अहं द्यावापृथिवी आततान ।
लिङ्-ग्रहणं किम्, न पूर्वस्य+एव प्रकृतस्य आदेशाविधाने विभक्ति-विपरिणामो भविष्यति ? लिण्मात्रस्य यथा स्यात्, योऽपि परोक्षे विहितस्तस्य अप्ययं आदेशो भवति । ।

---

1. <क्वसुश्च># । । PS_३,२.१०७ । ।

_______Sठा॒ठJKव्_३,२.१०७ः

छन्दसि लिटः क्वसुरादेशः भवति ।
जक्षिवान् ।
पपिवान् ।
न च भवति ।

अहं सूर्यमुभयतो ददर्श ।
योगविभाग उत्तरार्थः । ।

---

1. <भाषायां सद-वस-श्रुवः># । । PS_३,२.१०८ । ।

_______Sठा~ठJKव्_३,२.१०८ः

सद वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति ।
आदेश-विधानादेव लिडपि तद्विषयोऽनुमीयते ।
उपसेदिवान्कौत्सः पाणिनिं ।
तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति ।
उपासदथ् ।
उपासीदथ् ।
उपससाद ।
अनूषीवान्कौत्सः पाणिनिं ।
अन्ववात्सीथ् ।
अन्ववसथ् ।
अनूवास ।
उपशुश्रुवान्कौत्सः पाणिनिं ।
उपाश्रौषीथ् ।
उपाशृणोथ् ।
उपशुश्राव ।
लुङ्-लङ्-विषये परस्तादनुवृत्तेः क्वसुर्भवति । ।

---

[#२३५]

1. <उपेयिवाननाश्वाननूचानश्च># । । PS_३,२.१०९ । ।

_______Sठा~ठJKव्_३,२.१०९ः

उपेयिवाननाश्वाननूचान इत्येते शब्दा निपात्यन्ते ।
उपपूर्वादिणः क्वसुः, द्विर्वचनं अभ्यास-दीर्घत्वं तत्सामर्थ्यादेकादेश-प्रतिबन्धः, तत्र वस्वेक-अज्-आद्-धसां (*७,२.६७) इत्यनेकाच्त्वादिण्न प्राप्नोति, स निपात्यते, अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः ।
उपेयिवान् ।
क्रादिनियमात्प्राप्तश्च वस्वेक-अज्-आद्-धसां (*७,२.६७) इति प्रतिषिद्धः, स पुनरिट्प्रतिप्रसूयते, तेन अजादौ न भवति ।
उपेयुषः ।
उपेयुषा ।
न च अत्र+उपसर्गास्तन्त्रम्, अन्योपसर्ग-पूर्वान्निरुपसर्गाच्च भवत्येव ।
समीयिवान् ।

ईयिवान् ।
वावचन-अनुवृत्तेश्च पूर्ववल्लुङ्-आदयोऽपि भवन्ति ।
उपागाथ् ।
उपैथ् ।
उपेपाय ।
अश्नातेर्नञ्पूर्वात्क्वसुर्निपत्यते, इडभावश्च ।
अनाश्वान् ।
नाशीथ् ।
नश्नाथ् ।
नाश ।
वचेरनुपूर्वात्कर्तरि कानज्निपात्यते ।
अनूचानः ।
अन्ववोचथ् ।
अन्वब्रवीथ् ।
अनूवाच । ।

---

1. <लुङ्># । । PS_३,२.११० । ।

_______Sठा~ठ्JKव्_३,२.११०ः

भूते इत्येव ।
बूतेऽर्थे वर्तमानाद्धातोः लुङ्प्रत्ययो भवति ।
अकार्षीथ् ।
अहार्षीथ् ।
वसतेर्लुङ्रात्रि-विशेषे जागरणसन्ततौ वक्तव्यः ।
क्व भवानुषितः ।
अहमत्रावात्सं । ।

---

1. <अनद्यतने लङ्># । । PS_३,२.१११ । ।

_______Sठा~ठ्JKव्_३,२.१११ः

भूते इत्येव ।
अनद्यतने इति बहुव्रीहि-निर्देशः ।
अविद्यमानाद्यतने भूतेऽर्थे वर्तमानाद्धातोर्लङ्प्रत्ययो भवति ।
अकरोथ् ।
अहरथ् ।
बहुव्रीहि-निर्देशः किं अर्थः ? अद्य ह्यो वा अभुक्ष्महि इति व्यामिश्रे मा भूथ् ।
परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शन-विषये लङ्वक्तव्यः ।

अरुणद्यवनः साकेतं ।
अरुणद्यवनो माद्यमिकानिति । ।

---

1. <अभिज्ञा-वचने लृट्># । । PS_३,२.११२ । ।

_______Sठा~ठJKव्_३,२.११२ः

अभिज्ञा स्मृतिः ।
तद्वचने उपपदे भूतानद्यतने लृट्प्रत्ययो भवति ।
लङोऽपवादः अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः ।
वचन-ग्रहणं पर्याय-अर्थम्, अभिजानासि, स्मरसि, बुद्यसे, चेतयसे इति । ।

---

[#२३६]

1. <न यदि># । । PS_३,२.११३ । ।

_______Sठा~ठJKव्_३,२.११३ः

यच्-छब्द-सहिते अभिज्ञा-वचन उपपदे लृट्प्रत्ययो न भवति ।
पूर्वेण प्राप्तः प्रतिषिद्यते ।
अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम ।
वासमात्रं स्मर्यते, न तु अपरं किंचिल्लक्ष्यते ।
तेन उत्तर-सूत्रस्य न अयं विषयः । ।

---

1. <विभाषा साकाङ्क्षे># । । PS_३,२.११४ । ।

_______Sठा~ठJKव्_३,२.११४ः

यदि इति न अनुवर्तते ।
उभयत्र विभाशेयं ।
अभिज्ञा-वचने उपपदे यच्-छब्द-सहिते केवले च विभाषा लृट्प्रत्ययो भवति, साकाङ्क्षश्चेत्प्रयोक्ता ।
लक्ष्य-लक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति ।
अभिजानसि देवदत्त कश्मीरेषु वत्स्यामस्तत्र उदनं भोक्ष्यामहे ।

अभिजानासि देवदत्त मगधेषु वत्स्यामः, तत्र उदनं भोक्ष्यामहे।
यदि खल्वपि - अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः, यत्तत्र उदनं भोक्ष्यामहे।
अभिजानसि देवदत्त यत्कश्मीरेष्ववसाम, यत्तत्र उदनं अभुञ्ज्महि।
वासो लक्षणं, भोजनं लक्ष्यं।।

---

1. <परोक्षे लिट्>#।। PS_३,२.११५।।

_______Sठा~ठ्JKव्_३,२.११५ः

भूतानद्यतने इति वर्तते।
तस्य विशेषणं परोक्ष-ग्रहणं।
घूतानद्यतन-परोक्षेऽर्थे वर्तमनाद्धातः लिट्प्रत्ययो भवति।
ननु धात्व्-अर्थः सर्वः परोक्ष एव ? सत्यं एतथ्।
अस्ति तु लोके धात्व्-अर्थेन अपि कारकेषु प्रत्यक्षाभिमनः।
स यत्र न अस्ति तत्परोक्षं इत्युच्यते।
चकार।
जहार।
उत्तम-विषयेऽपि चित्तव्याक्षेपात्परोक्षता सम्भवत्येव।
तद्यथा - सुप्तोऽहं किल विललाप।
अत्यन्तापह्नवे च लिड्वक्तव्यः।
कलिङ्गेषु स्थितोऽसि ? हानं कलिङ्गञ्जगाम।
दक्षिणापथं प्रविष्टोऽसि ? नाहं दक्षिणापथं प्रविवेश।।

---

1. <ह-शश्वतोर्लङ्च>#।। PS_३,२.११६।।

_______Sठा~ठ्JKव्_३,२.११६ः

भूतानद्यतन-परोक्षेऽर्थे लिटि प्राप्ते हाश्वतोः उपपदयोः लङ्प्रत्ययो भवति, चकाराल्लिट्च।
इति ह अकरोत्, इति ह चकार।
शश्वदकरोत्, शश्वच्चकार।।

---

1. <प्रश्ने च आसन्न-कले># । । PS_३,२.११७ । ।

_______Sठाऽ्ठJKव्_३,२.११७ः

भुतानद्यतन-परोक्षे इति वर्तते ।
तस्य विशेषणं एतथ् ।
प्रष्टव्यः प्रश्नः ।
आसनकाले पृच्छ्यमने भूतानद्यतन-परोक्षेऽर्थे वर्तमानाद्धातोः लङ्-लिटौ प्रत्ययौ भवतः ।
कश्चित्कञ्चत्पृच्छति ।
अगच्छद्देवदत्तः ? जगाम देवदत्तः ? अयजद्देवदत्तः ? इयाज देवदत्तः ? प्रश्ने इति किं ? जगाम देवदत्तः ।
आसनकाले इति किं ? भवन्तं पृच्छामि, जघान कंसं किल वासुदेवः ? । ।

---

1. <लट्स्मे># । । PS_३,२.११८ । ।

_______Sठाऽ्ठJKव्_३,२.११८ः

भूतानद्यतन-परोक्षे इति वर्तते ।
स्म-शब्दे उपपदे भूतानद्यतन-परोक्षे लट्प्रत्ययो भवति ।
लिटोऽपवादः ।
नडेन स्म पुराधीयते ।
ऊर्णया स्म पुराधीयते । ।

---

1. <अपरोक्षे च># । । PS_३,२.११९ । ।

_______Sठाऽ्ठJKव्_३,२.११९ः

अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्मे उपपदे लट्प्रत्ययओ भवति ।
एवं स्म पिता ब्रवीति ।
इति स्म-उपाद्यायः कथयति । ।

---

1. <ननौ पृष्ट-प्रति-वचने># । । PS_३,२.१२० । ।

______Sठा~ठ्JKव्_३,२.१२०ः

अनद्यतने परोक्षे इति निवृत्तं।
भूतसामान्ये विधिरयं।
ननु-शब्दे उपपदे प्रश्न-पूर्वके प्रतिवचने भूतेऽर्थे लट्प्रययो भवति।
लुङोऽपवादः।
अकार्षीः कटं देवदत्त? ननु करोमि भोः।
अवोचस्तत्र किंचिद्देवदत्त? ननु ब्रवीमि भोः।
पृष्ट-प्रतिवचने इति किं? ननु अकार्षीत्माणवकः।।

---

1. <न-न्वोर्विभाषा>#।। PS_३,२.१२१।।

______Sठा~ठ्JKव्_३,२.१२१ः

भूते इत्येव।
न-शब्दे नु-शब्दे च उपपदे पृष्ट-प्रतिवचने विभषा लट्प्रत्ययो भवति भूते।
अकार्षीः कटं देवदत्त? न क्रोमि भोः, नाकार्षं।
अहं नु करोमि, अहं नु अकार्षं।।

---

1. <पुरि लुङ्च अस्मे>#।। PS_३,२.१२२।।

______Sठा~ठ्JKव्_३,२.१२२ः

अनद्यतन-ग्रहणं इह मण्डूक-प्लुत्याऽनुवर्तते।
पुरा-शब्दे उपपदे स्म-शब्द-वर्जिते भूतानद्यतनेऽर्थे विभाषा लुङ्प्रत्ययो भवति, लट्च।
ताभ्यां मुक्ते पक्षे यथा-विषयमन्येऽपि प्रत्यया भवन्ति।
वसन्ति इह पुरा छात्राः, अवात्सुरिह पुरा छात्राः, अवसन्निह पुरा छात्राः, ऊषुरिह पुरा छात्राः।
अस्मे इति किं? नडेन सं पुरा अधीयते।।

---

[#२३८]

1. <वर्तमाने लट्># ।। PS_३,२.१२३ ।।

______Sठा~ठ्JKव्_३,२.१२३ः

आरब्धोऽपरिसमाप्तश्च वर्तमानः ।
तस्मिन्वर्तमानेऽर्थे वर्तमनाद्धातोः लट्प्रत्ययो भवति ।
पचति ।
पठति ।।

---

1. <लटः शतृ-शानचावप्रथमा-समानाधिकरणे># ।। PS_३,२.१२४ ।।

______Sठा~ठ्JKव्_३,२.१२४ः

लटः शतृशानचौ इत्येतावादेशौ भवतः, अप्रथमान्तेन चेत्तस्य सामानाधिकरण्यं भवति ।
पचन्तं देवदत्तं पश्य ।
पचमानं देवदत्तं पश्य ।
पचता कृतं ।
पचमनेन कृतं ।
अप्रथमा-समानाधिकरणे इति किं ? देवदत्तः पचति ।
लटिति वर्तमने पुनर्लङ्-ग्रहणं अधिकविधान-अर्थं ।
क्वचित्प्रथमा-समानाधिकरणेऽपि भवति ।
सन्ब्राह्मणः ।
अस्ति ब्राह्मणः ।
विद्यमानः ब्राह्मणः ।
विद्यते ब्राह्मणः ।
जुह्वथ् ।
जुहोति ।
अधीयानः ।
अधीते ।।
माङ्याक्रोशे ।
मा पचन् ।
मा पचमानः ।
केचिद्विभाषा-ग्रहणं अनुवर्तयन्ति न-न्वोर्विभाषा (*३,२.१२१) इति ।
सा च व्यवस्थिता ।
तत्र यथा-दर्शनं प्रयोगा नेतव्याः ।।

---

1. <सम्बोधने च># ।। PS_३,२.१२५ ।।

_______Sठा~ठ्JKव्_३,२.१२५ः

प्रथमा-समनाधिकरण-अर्थ आरम्भः ।
सम्भोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः ।
हे पचन् ।
हे पचमान । ।

---

1. <लक्षण-हेत्वोः क्रियायाः># । । PS_३,२.१२६ । ।

_______Sठा~ठ्JKव्_३,२.१२६ः

लक्ष्यते चिह्न्यते तल्लक्षणं ।
जनको हेतुः ।
धात्व्-अर्थ-विशेषणं चैतथ् ।
लक्षणे हेतौ च अर्थे वर्तमनाद धातोः परस्य लटः शतृशानचौ आदेशौ भवतः, तौ चेल्लक्षण-हेतू क्रिया-विषयौ भवतः ।
लक्षणे - शयाना भुञ्जते यवनाः ।
तिष्ठन्तोऽनुशासति गणकाः ।
हेतौ - अर्जयन्वसति ।
अधीयानो वसति ।
लषणहेत्वोः इति किं ? पचति, पठति ।
क्रियायाः इति किं ? द्रव्य-गुणयोर्मा भूथ् ।
यः कम्पते सोऽश्वत्थः ।
यदुत्प्लवते तल्लघु ।
यन्निषीदति तद्गुरु ।
लक्षण-हेत्वोः इति निर्देशः पूर्व-निपात-व्यभिचार-लिङ्गं । ।

---

[#२३९]

1. <तौ सत्># । । PS_३,२.१२७ । ।

_______Sठा~ठ्JKव्_३,२.१२७ः

तौ शतृशानचौ सत्सञ्ज्ञौ भवतः ।
तौ-ग्रहणं उपाद्यसंसर्ग-अर्थं ।
शतृशानज्-मात्रस्य सञ्ज्ञा भवति ।
ब्राह्मणस्य कुर्वन् ।

ब्राह्मणस्य कुर्वाणः ।
ब्राह्मणस्य करिष्यन् ।
ब्राह्मणस्य करिष्यमाणः ।
सत्प्रदेशाः - पूरण-गुण-सुहितार्थ-सद्. अव्यय-तव्य-समानाधिकरणेन (*२,२.११) इत्येवं आदयः । ।

---

1. <पूङ्यजोः शानन्># । । PS_३,२.१२८ । ।

_______Sठाऋठ्JKव्_३,२.१२८ः

पूङो यजेश्च धातोः शानन्प्रत्ययो भवति ।
पवमानः ।
यजमानः ।
यदि प्रत्ययाः शानन्नादयः न ल-आदेशाः, कथं सोमं पवमानः, नडमाघ्नानः इति षष्ठी-प्रतिषेधः ? तृनिति प्रत्याहार-निर्देशाथ् ।
क्व संनिविष्टानां प्रत्याहारः ? लटः शतृ-शानचावप्रथमा-समानाधिकरणे (*३,२.१२४) इत्यतः प्रभृति आ तृनो नकाराथ् ।
द्विषः शतुर्वा वचनं ।
चौरस्य द्विषन्, चौरं द्विषन् । ।

---

1. <ताच्छीय-वयोवचन-शक्तिषु चानश्># । । PS_३,२.१२९ । ।

_______Sठाऋठ्JKव्_३,२.१२९ः
ताच्छील्यं तत्स्वभावता ।
वयः शरीरावस्था यौवनादिः ।
शक्तिः सामर्थ्यं ।
ताच्छील्यादिषु धातोः चानश्प्रत्ययो भवति ।
ताच्छील्ये तावत्- कतीह मुण्डयमानाः ।
कतीह भूषयमाणाः ।
वयोवचने - कतीह कवचं पर्यस्यमानाः ।
कतीह शिखण्डं वहमानाः ।
शक्तौ - कतीह निघ्नानाः ।
कतीह पचमानः । ।

---

1. <इङ्-धार्योः शत्र-कृच्छ्रिणि># । । PS_३,२.१३० । ।

______Sठाञ्ठ्JKव्_३,२.१३०ः

इङो धारेश्च धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्तरि ।
अकृच्छ्रः सुखसाद्यो यसय्कर्तुर्धात्व्-अर्थः सोऽकृच्छ्री ।
अधीयन्पारायणं ।
धारयन्न्-उपनिषदं ।
अकृच्छ्रिणि इति किं ? कृच्छ्रेण अधीते ।
कृच्छ्रेण धरयति । ।

---

1. <द्विषोऽमित्रे># । । PS_३,२.१३१ । ।

______Sठाञ्ठ्JKव्_३,२.१३१ः

अमित्रः शत्रुः ।
अमित्रे कर्तरि द्विषेर्धातोः शतृ-प्रत्ययो भवति ।
द्विषन्, द्विषन्तौ, द्विषन्तः ।
अमित्रे इति किं ? द्वेष्टि भार्या पतिं । ।

---

[#२४०]

1. <सुञो यज्ञसंयोगे># । । PS_३,२.१३२ । ।

______Sठाञ्ठ्JKव्_३,२.१३२ः

यज्ञेन संयोगः यज्ञसंयोगः ।
यज्ञसंयुक्तेऽभिषवे वर्तमानात्सुनोतेर्धातोः शतृ-प्रत्ययो भवति ।
सर्वे सुन्वन्तः ।
सर्वे यजमानाः सत्रिण उच्यन्ते ।
संयोग-ग्रहणं प्रधान-कर्तृ-प्रतिपत्त्य्-अर्थं ।
याजकेसु मा भूथ् ।
यज्ञसंयोगे इति किं ? सुनोति सुरां । ।

---

1. <अर्हः प्रशंसायाम्># । । PS_३,२.१३३ । ।

_______Sठाञ्ठ्JKव्_३,२.१३३ः

प्रशंसा स्तुतिः ।
अर्हतेर्धातोः प्रशंसायां शतृ-प्रत्ययो भवति ।
अर्हन्निह भवान्विद्यां ।
अर्हन्निह भवान्पूजां ।
प्रशंसायां इति किं ? अर्हति चौरो वधं । ।

---

1. <आ क्वेः तच्छील-तद्धर्म-तत्साधुकारिषु># । । PS_३,२.१३४ । ।

_______Sठाञ्ठ्JKव्_३,२.१३४ः

भ्राज-भास-धुर्वि-द्युत-ऊर्जि-प्é-जु-ग्रावस्तुवः क्विप्(*३,२.१७७) इति क्विपं वक्ष्यति ।
आ एतस्मात्क्विप्सं-शब्दाद्यानित ऊर्ध्वम्-अनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः ।
अभिविधौ च अयं आङ् ।
तेन क्विपोऽप्ययं अर्थ-निर्देशः ।
तदिति धात्व्-अर्थः शीलादि विशेषणत्वेन निर्दिश्यते ।
तच्छीलो यः स्वभावतः फल-निरपेक्षस्तत्र प्रवर्तते ।
तद्धर्मा तदाचारः, यः स्वधर्मे ममायमिति प्रवर्तते विनापि शीलेन ।
तत्साधुकरी यो धात्व्-अर्थं साधु करोति ।
उत्तरत्रैव+उदाहरिष्यामः । ।

---

1. <तृन्># । । PS_३,२.१३५ । ।

_______Sठाञ्ठ्JKव्_३,२.१३५ः

सर्वधातुभ्यः तृन्-प्रत्ययो भवति तच्छीलादिषु कर्तृषु ।
नकारः स्वर-अर्थः ।
तच्छीले तावत्- कर्ता कटान् ।
वदिता जनापवादान् ।
तद्धर्मणि - मुण्डयितारः श्राविष्ठायनाः भवन्ति वधूमूढां ।
अन्नमपहर्तारः आह्वरकाः भवन्ति श्राद्धे सिद्धे ।
उन्नेतारः तौल्वलायनाः भवन्ति पुत्रे जाते ।
तत्साधुकारिणि - कर्ताकटं ।
गन्ता खेटं ।
तृन्विधावृत्विक्षु च अनुपसर्गस्य ।

होता ।
पोता ।
अनुपसर्गस्य इति किं ? उद्गाता ।
प्रतिहर्ता ।
तृजेव भवति ।
स्वरे विशेषः ।
नयतेः षुक्च ।
नेष्टा ।

[#२४१]

त्विषेर्देवतायां अकारश्च+उपधाया अनिट्त्वं च ।
त्वष्टा ।
क्षदेश्च नियुक्ते ।
क्षत्ता ।
क्वचिदधिकृत उच्यते ।
छन्दसि तृच्च ।
क्षतृभ्यः सङ्ग्रहीतृभ्यः ।
स्वरे विशेषः । ।

---

1. <अलङ्-कृञ्-निराकृञ्-प्रजन-उत्पच-उत्पत-उन्मद-रुच्य्-अपत्रप-वृतु-वृधु-सह-चर इष्णुच्># । । PS_३,२.१३६ । ।

_______Sठा-ठ्JKव्_३,२.१३६ः

अलङ्-कृञ्-आदिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययो भवति ।
अलङ्करिष्णुः ।
निराकरिष्णुः ।
प्रजनिष्णुः ।
उत्पचिष्णुः ।
उत्पतिष्णुः ।
उन्मदिष्णुः ।
रोचिष्णुः ।
अपत्रपिष्णुः ।
वर्तिष्णुः ।
वर्धिष्णुः ।
सहिष्णुः ।
चरिष्णुः ।
अलङ्कृञो मण्डनार्थाद्युचः पूर्वविप्रतिषेधेनेष्णुज्वक्तव्यः ।

---

1. <णेश्छन्दसि># । । PS_३,२.१३७ । ।

_______SठाR्ठ्JKव्_३,२.१३७ः

ण्यन्ताद्धातोः छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच्प्रत्ययो भवति ।
दृषदं धारयिष्णवः ।
वीरुधः पारयिष्णवः । ।

---

1. <भुवश्च># । । PS_३,२.१३८ । ।

_______SठाR्ठ्JKव्_३,२.१३८ः

भवतेर्धतोः छन्दसि विषये तच्छीलादिषु इष्णुच्प्रत्ययो भवति ।
भविष्णुः ।
योग-विभागः उत्तर-अर्थः ।
चकारोऽनुक्त-समुच्चय-अर्थः ।
भ्राजिष्णुना लोहित-चन्दनेन । ।

---

1. <ग्ला-जि-स्थश्च क्ष्नुः># । । PS_३,२.१३९ । ।

_______SठाR्ठ्JKव्_३,२.१३९ः

छन्दसि इति निवृत्तं ।
ग्ला जि स्था इत्येतेभ्यो धातुभ्यः, चकारात्भुवश्च तच्छीलादिषु क्ष्नुः प्रत्ययो भवति ।
ग्लास्नुः ।
जिष्णुः ।
स्थास्नुः ।
भूष्णुः ।
गिच्चायं प्रत्ययो न किथ् ।
तेन स्थः ईकारो न भवति ।
क्ङिति च (*१,१.५) इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति ।
श्र्युकः किति (*७,२.११) इत्यत्र अपि गकरो निर्दिश्यते, तेन भुव इड्न भवति ।

[#२४२]

क्ष्तोर्गित्त्वान्न स्थ ईकारः कङितोरीत्वशासनाथ् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः । ।

दंशेश्छन्दस्युपसङ्ख्यानं।
दंक्ष्णवः पशवः।

---

1. <त्रसि-गृधि-धृषि-क्षिपेः क्नुः>#।। PS_३,२.१४०।।

_______Sठा~ठ्JKव्_३,२.१४०ः

त्रस्-आदिभ्यो धतुभ्यः तच्छीलादिषु क्नुः प्रत्ययो भवति।
त्रस्नुः।
गृध्नुः।
धृष्णुः।
क्षिप्नुः।।

---

1. <शम्-इत्यष्टाभ्यो घिनुण्>#।। PS_३,२.१४१।।

_______Sठा~ठ्JKव्_३,२.१४१ः

इति शब्दः आद्य्-अर्थः।
शमादिभ्यो धातुभ्योऽष्टाभ्यः तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययो भवति।
शम उपशमे इत्यतः प्रभृति मदी हर्षे इत्येवं अन्तः शमादिर्दिवाद्यन्तर्गणः।
घकार उत्तरत्र कुत्व-अर्थः।
उकार उच्चारण-अर्थः।
णकारो वृद्ध्य्-अर्थः।
शमी।
तमी।
दमी।
श्रमी।
भ्रमी।
क्लमी।
प्रमादी।
उन्मादी।
अष्टाभ्यः इति किं? असिता।।

---

1. <संपृच-अनुरुध-आङ्यम-आङ्यस-परिसृ-संसृज-परिदेवि-संज्वर-परिक्षिप-परिरट-परिवद-परिदह-परिमुह-दुष-द्विष-द्रुह-दुह-युज-आक्रीड-विविच-त्यज-रज-भज-अतिचर-अपचर-आमुष-अभ्याहनश्च># ।। PS_३,२.१४२ ।।

______Sठा~ठJKव्_३,२.१४२ः

घिनुणनुवर्तते ।
संपृचादिभ्यो धातुभ्यो घिनुण्भवति तच्छीलादिषु ।
पृची सम्पर्के इति रुधादिर्गृह्यते नत्वदादिर्लुग्-विकरणत्वाथ् ।
परिदेविर्भ्वादिर्गृह्यते देवृ देवने इति ।
क्षिप प्रेरणे दिवादिस्तुदादिश्च सामानेन गृह्यते ।
युज समाधौ दिवादिः, युजिर्योगे रुधादिः द्वयोरपि ग्रहणं ।
रञ्ज रागे इत्यस्य निपातनादनुनासिक-लोपः ।
संपर्की ।
अनुरोधी ।
आयामी ।
आयासी ।
परिसारी ।
संसर्गी ।
परिदेवी ।
संज्वारी ।
परिक्षेपी ।
परिराटी ।
परिवादी ।
परिदाही ।
परिमोही ।
दोषी ।
द्वेषी ।
द्रोही ।
दोही ।
योगी ।
आक्रीडी ।
विवेकी ।
त्यागी ।
रागी ।
भागी ।
अतिचारी ।
अपचारी ।
आमोषी ।
अभ्याघाती ।।

---

1. <वौ कष-लस-कत्थ-स्रम्भः># ।। PS_३,२.१४३ ।।

______Sठा¬ठ्JKव्_३,२.१४३:

कष हिंस-अर्थः, लस श्लेषण-क्रीडनयोः, कत्थ श्लाघायाम्, स्रम्भु विश्वासे, एतेभ्यो धातुभ्यो वि-शब्दे उपपदे घिनुण्प्रत्ययो भवति।
विकाषी।
विलासी।
विकत्थी।
विस्रम्भी।।

---

[#२४३]

1. <अपे च लषः>#।। PS_३,२.१४४।।

______Sठा¬ठ्JKव्_३,२.१४४:

लष कान्तौ, अस्माद्धातोः अप उपपदे, चकाराद्वौ च घिनुण्भवति।
अपलाषी।
विलाषी।।

---

1. <प्रे लप-सृ-द्रु-मथ-वद-वसः>#।। PS_३,२.१४५।।

______Sठा¬ठ्JKव्_३,२.१४५:

प्रे उपपदे लपादिभ्यः घिनुण्भवति।
प्र-लपी।
प्रसारी।
प्रद्रावी।
प्रमाथी।
प्रवादी।
प्रवासी।
वसः इति वस निवासे इत्यस्य ग्रहणं नाच्छादन-अर्थस्य, लुग्विकरणत्वात्।।

---

1. <निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाष-असूयो वुञ्># । । PS_३,२.१४६ । ।

_______Sठाऽठ्JKव्_३,२.१४६ः

निन्द-आदिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु वुञ्प्रतयो भवति ।
पञ्चम्य्-अर्थे प्रथमा ।
क्लिश उपतापे, क्लिशू विबाधने ।
द्वयोरपि ग्रहणं ।
निन्दकः ।
हिंसकः ।
क्लेशकः ।
खादकः ।
विनाशकः ।
परिक्षेपकः ।
परिराटकः ।
परिवादकः ।
व्याभाषकः ।
असूयकः ।
ण्वुलैव सिद्ध वुञ्-विधानं ज्ञापन-अर्थं, ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्ति इति । ।

---

1. <देवि-क्रशोश्च+उपसर्गे># । । PS_३,२.१४७ । ।

_______Sठाऽठ्JKव्_३,२.१४७ः

देवयतेः क्रुशेश्च उपसर्गे उपपदे वुञ्पत्ययो भवति ।
आदेवकः ।
परिदेवकः ।
आक्रोशकः ।
परिक्रोशकः ।
उपसर्गे इति किं ? देवयिता ।
क्रोष्टा । ।

---

1. <चलन-शब्दार्थादकर्मकाद्युच्># । । PS_३,२.१४८ । ।

_______Sठाऽठ्JKव्_३,२.१४८ः

चलन-अर्थेभ्यः शब्द-अर्थेभ्यश्च अकर्मकेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु युच्प्रत्ययो भवति ।

चलनः ।
चोपनः ।
शब्द-अर्थभ्यः - शब्दनः ।
रवणः ।
अकर्मकातिति किं ? पठिता विद्यां । ।

---

1. <अनुदात्त-इतश्च हलादेः># । । PS_३,२.१४९ । ।

_______Sठा~ठ्JKव्_३,२.१४९ः

अनुदात्तेद्यो धतुः हलादिरकर्मकः, ततश्च युच्प्रत्ययो भवति ।
वर्तनः ।
वर्धनः ।
अनुदात्तेतः इति किं ? भविता ।
हलदेः इति किं ? एधिता ।
आदि-ग्रहनं किं ? जुगुप्सनः ।
मीमांसनः ।
अकर्मकातित्येव, वसिता वस्त्रं । ।

---

[#२४४]

1. <जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः># । । PS_३,२.१५० । ।

_______Sठा~ठ्JKव्_३,२.१५०ः

जु-प्रघृतिभ्यो धतुभ्यो युच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु ।
जु इति सौत्रो धतुः ।
जवनः ।
चङ्क्रमणः ।
दन्द्रमणः ।
सरणः ।
गर्धनः ।
ज्वलनः ।
शोचनः ।
लषणः ।
पतनः ।
पदनः ।
चलनार्थानां पदेश्च ग्रहणं सकर्मक-अर्थं इह ।

ज्ञापन-अर्थं च पदि-ग्रहणं अन्ये वर्णयन्ति, ताच्छीलिकेषु मिथो वा+असरूप-विधिर्न अस्ति इति ।
तेन अलङ्कृञः तृन्न भवति अलङ्कर्ता इति ।
तथा हि पदेरुकञा विशेष-विहितेन सामान्य-विहितस्य युचोऽसरूपत्वात्समावेशो भवेदेव, किं अनेन विधानेन ? ज्ञापन-अर्थं पुनर्विधीयते ।
प्रायिकं च+एतद्ज्ञापकं ।
क्वचित्समावेश इष्यत एव, गन्ता खेटं विकत्थनः । ।

---

1. <क्रुध-मण्ड-अर्थेभ्यश्च># । । PS_३,२.१५१ । ।

_______Sठा~ठ्JKव्_३,२.१५१ः

क्रुधकोपे, मडि भूषायां इत्येतदर्थेभ्यः च धतुभ्यो युच्प्रत्ययो भवति ।
क्रोधनः ।
रोषणः ।
मण्डनः ।
भूषणः । ।

---

1. <न यः># । । PS_३,२.१५२ । ।

_______Sठा~ठ्JKव्_३,२.१५२ः

यकारान्तात्धतोः युच्प्रत्ययो न भवति ।
पूर्वेण प्राप्तः प्रतिषिध्यते ।
क्नूयिता ।
क्ष्मायिता । ।

---

1. <सूद-दीप-दीक्षश्च># । । PS_३,२.१५३ । ।

_______Sठा~ठ्JKव्_३,२.१५३ः

सूद दीप दीक्ष इत्येतेभ्यश्च युच्प्रत्ययो न भवति ।
अनुदात्तेत्त्वात्प्राप्तः प्रतिषिध्यते ।
सूदिता ।

दीपिता।
दीक्षिता।
ननु च दीपेर्विशेष-विहितो र-प्रत्ययः दृश्यते, नमि-कम्पि-स्म्य्-अजस-कम-हिंस-दीपो रः (*३,२.१६७) इति, स एव वाधको भविष्यति, किं प्रतिषेधेन ? वाऽसरूपेण युजपि प्राप्नोति।
ताच्छीलिकेषु च वा+असरूप-विधिर्न अस्ति इति प्रायिकं एतदित्युक्तं।
तथा च समावेशो दृश्यते, कम्रा युवतिः, कमना युवतिः, इति योग-विभागाद्विज्ञायते।
अथवा मधुसूदनादयो नन्द्यादिषु द्रक्ष्यन्ते।
कृत्य-ल्युडो बहुलं (*३,३.११३) इति ल्युडन्ता वा।।

---

[#२४५]

1. <लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ्>#।। PS_३,२.१५४।।

_______Sठाञ्ठ्JKव्_३,२.१५४ः

लष-आदिभ्यो धातुभः तच्छीलादिषु कर्तृषु उकञ्प्रत्ययो भवति।
उपलाषुकं वृषलसङ्गतं।
प्रपातुका गर्भा भवन्ति।
उपपादुकं सत्त्वं।
उपस्थायुका एनं पशवो भवन्ति।
प्रभावुकमन्नं भवति।
प्रवर्षुकाः पर्जन्याः।
आघातुकं पाकलिकस्य मूत्रं।
कामुका एनं स्त्रियो भवन्ति।
आगामुकं वारान्सीं रक्ष आहुः।
किंशारुकं तीक्ष्णमाहुः।।

---

1. <जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन्>#।। PS_३,२.१५५।।

_______Sठाञ्ठ्JKव्_३,२.१५५ः

जल्प-आदिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु षाकन्प्रत्ययो भवति।
षकारो ङीषर्थः।
जल्पाकः।
भिक्षाकः।
कुट्टाकः।
लुण्टाकः।
वराकः।

वराकी । ।

---

1. <प्रजोरिनिः># । । PS_३,२.१५६ । ।

_______Sठाञ्ठJKव्_३,२.१५६ः

प्र-पूर्वाज्जवतेः तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति ।
प्रजवी, प्रजविनौ । ।

---

1. <जि-दृ-क्षि-विश्रि-इण्-वम-अव्यथ-अभ्यम-परिभू-प्रसूभ्यश्च># । । PS_३,२.१५७ । ।

_______Sठाञ्ठJKव्_३,२.१५७ः

जि जये ।
दृङादरे ।
क्षि क्षये, क्षि निवासगत्योः इति द्वयोरपि ग्रहणं ।
प्रसू इति षू प्रेरणे इत्यसय्ग्रहणं ।
जिप्रभृतिभ्यो धातुभ्यः इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु ।
जयी ।
दरी ।
क्षयी ।
विश्रयी ।
अत्ययी ।
वमी ।
अव्यथी ।
अभ्यमी ।
परिभवी ।
प्रसवी । ।

---

1. <स्पृहि-गृहि-पति-दयि-निद्रा-दन्द्रा-श्रद्धाभ्य आलुच्># । । PS_३,२.१५८ । ।

_______Sठाञ्ठJKव्_३,२.१५८ः

स्पृह ईप्सायाम्, ग्रह ग्रहने, पत गतौ, चुरादौ अदन्ताः पठ्यन्ते।
दय दानगतिरक्षणेषु।
द्रा कुत्सायां गतौ, निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते।
डुधाञ्श्रत्पूर्वः।
एतेभ्यस्तच्छीलादिषु कर्तृषु आलुच्प्रत्ययो भवति।
स्पृहयालुः।
गृहयालुः।
पतयालुः।
दयालुः।
निद्रालुः।
तन्द्रालुः।
श्रद्धालुः।
आलुचि शीङो ग्रहणं कर्तव्यं।
शयालुः।।

---

[#२४६]

1. <दा-धेट्-सि-शद-सदो रुः>#।। PS_३,२.१५९।।

_______Sठाऽठ्JKव्_३,२.१५९ः
दा धेट्सि शद सद इत्येतेभ्यः रुः प्रत्ययो भवति।
दरुः।
धारुर्वत्सो मातरं न ल-उक-अव्यय-निष्ठा-खलर्थ-तृनां (*२,३.६९) इति उकारप्रश्लेषात्षष्ठी न भवति।
सेरुः।
शद्रुः।
सद्रुः।।

---

1. <सृ-घस्य्-अदः क्मरच्>#।। PS_३,२.१६०।।

_______Sठाऽठ्JKव्_३,२.१६०ः

सृ घसि अद इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच्प्रत्ययो भवति।
सृमरः।
घस्मरः।
अद्मरः।।

---

1. <भञ्ज-भास-मिदो घुरच्># । । PS_३,२.१६१ । ।

_______Sठान्ठ्JKव्_३,२.१६१ः

भञ्ज भास मिद इत्येतेभ्यो घुरच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु भङ्गुरं काष्ठं ।
घित्वात कुत्वं ।
भासुरं ज्योतिः ।
मेदुरः पशुः ।
भञ्जेः कर्मकर्तरि प्रत्ययः स्वभावात् । ।

---

1. <विदि-भिदि-च्छिदेः कुरच्># । । PS_३,२.१६२ । ।

_______Sठान्ठ्JKव्_३,२.१६२ः

ज्ञान-अर्थस्य विदेः ग्रहणं न लाभाद्य्-अर्थस्य, स्वभावाथ् ।
विदादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु कुरच्प्रत्ययो भवति ।
विदुरः पण्डितः ।
भिदुरं काष्ठं ।
छिदुरा रज्जुः ।
भिदिच्छिद्योः कर्मकर्तरि प्रयोगः ।
व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः ।
विधुरः । ।

---

1. <इण्-नश्-जि-सर्तिभ्यः क्वरप्># । । PS_३,२.१६३ । ।

_______Sठान्ठ्JKव्_३,२.१६३ः

इण्नश्जि सर्ति इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्वरप्प्रत्ययो भवति ।
पकारस्तुग्-अर्थः इत्वरः ।
इत्वरी ।
नश्वरः ।
नश्वरी ।
जित्वरः ।
जित्वरी ।

सृट्वरः ।
सृत्वरी ।
नेड्वशि कृति (*७,२.८) इति इट्प्रतिषेधः । ।

---

[#२४७]

1. <गत्वरश्च># । । PS_३,२.१६४ । ।

_______Sठाऽठ्JKव्_३,२.१६४ः

गत्वरः इति निपात्यते ।
गमेरनुनासिकलोपः क्वरप्प्रत्ययश्च ।
गत्वरः ।
गत्वरी । ।

---

1. <जागुरूकः># । । PS_३,२.१६५ । ।

_______Sठाऽठ्JKव्_३,२.१६५ः

जागर्तेः ऊकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु ।
जागरूकः । ।

---

1. <यज-जप-दशां यङः># । । PS_३,२.१६६ । ।

_______Sठाऽठ्JKव्_३,२.१६६ः

यजादीनां यङन्तानां ऊकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु ।
यायजूकः ।
जञ्जपूकः ।
दन्दशूकः । ।

---

1. <नमि-कम्पि-स्म्य्-अजस-कम-हिंस-दीपो रः># । । PS_३,२.१६७ । ।

_______Sठाञ्ठJKव्_३,२.१६७ः

नम्यादिभ्यः धातुभ्यः तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति ।
नम्रं काष्ठं ।
कम्प्रा शाखा ।
स्मेरं मुखं ।
अजस्रं जुहोति ।
हिंस्रं रक्षः ।
दीप्रं काष्ठं ।
अजस्रं इति जसु मोक्षणे नञ्पूर्वो रप्रत्ययान्तः क्रयासातत्ये वर्तते । ।

---

1. <सन्-आशंस-भिक्ष उः># । । PS_३,२.१६८ । ।

_______Sठाञ्ठJKव्_३,२.१६८ः

सनिति सन्प्रत्ययान्तो गृह्यते न सनिर्धातुः, अनभिधानात्व्याप्तिन्यायाद्वा ।
सन्नन्तेभ्यो धातुभ्यः आशंसेर्भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति ।
चिकीर्षुः ।
जिहीर्षुः ।
आशंसुः ।
भिक्षुः ।
आङः शसि इच्छायां इत्यस्य ग्रहणं, न शंषेः स्तुत्य्-अर्थस्य । ।

---

1. <विन्दुरिच्छुः># । । PS_३,२.१६९ । ।

_______Sठाञ्ठJKव्_३,२.१६९ः

विदेर्नुम्-आगमः, इषेः छत्वं उकारश्च प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु ।
वेदनशीलो विन्दुः ।
एषणशील इच्छुः । ।

---

1. <क्याच्छन्दसि># । । PS_३,२.१७० । ।

_______Sठाञ्ठJKव्_३,२.१७०:

क्य इति क्यच्-क्यङ्-क्यषां सामान्येन ग्रहणं ।
क्य-प्रत्ययान्ताद्धातोः छन्दसि विषये तच्छीलादिषु कर्तृषु उकार-प्रत्ययो भवति ।
मित्रयुः ।
न छन्दस्यपुत्रस्य (*७,४.३५) इति प्रतिषेधादन् धीर्घः ।
सुम्नयुः ।
संस्वेदयुः छन्दसि इति किं ? मित्रीयिता । ।

---

[#२४८]

1. <आद्-ॠ-गम-हन-जनः कि-किनौ लिट्च># । । PS_३,२.१७१ । ।

_______Sठाञ्ठJKव्_३,२.१७१:

आ-कारान्तेभ्यः ॠ-वर्णान्तेभ्यः गम हन जन इत्येतेभ्यश्च छन्दसि विषये तच्छीलादिषु कि-किनौ प्रतयौ भवतः ।
लिङ्वच्च तौ भवतः ।
आतिति तकारो मुख-सुख-अर्थः, न त्वयं अपरः, मा भूत्तादपि परः तपरः इति ॠकारे तत्काल-ग्रहणं ।
पपिः सोमं ददिर्गाः ।
ददथुः मित्रावरुणा ततुरिं मित्रावरुणौ ततुरिः ।
दूरे ह्यध्वा जगुरिः ।
जग्मिर्युवा ।
जघ्निर्वृत्र ।
जज्ञि बिजं ।
अथ किमर्थं कित्त्वम्, यावता असंयोगाल्लिट्कित्(*१,२.५) इति कित्त्वं सिद्धं एव ? ॠच्छत्य्-ॠ-ॠतां (*७,४.११) इति लिटि गुणः प्रतिषेध-विषय आरभ्यते, तस्य अपि बाधन-अर्थं कित्त्वं ।
कि-किनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनाथ् ।
सेदिः ।
नेमिः ।
भाषायां धञ्कृञ्सृजनिगमिनमिभ्यः कि-किनौ वक्तव्यौ ।
दिधिः ।
चक्रिः ।
सस्त्रिः ।
जज्ञिः ।
जग्मिः ।
नेमिः ।

सहिवहिचलिपतिभ्यो यङ्-अन्तेभ्यः कि-किनौ वक्तव्यौ ।
दीर्घोऽकितः (*७,४.८३) सासहिः ।
वावहिः ।
चाचलिः ।
पापतिः । ।

---

1. <स्वपितृषोर्नजिङ्># । । PS_३,२.१७२ । ।

______Sठाऱ्ठ्JKव्_३,२.१७२ः

छन्दसि इति निवृत्तं ।
स्वपेः तृषेश्च तच्छीलादिषु कर्तृषु निजिङ्प्रत्ययो भवति ।
स्वप्नक् ।
तृष्णक् ।
धृषेश्चेति वक्तव्यं ।
धृष्णक् । ।

---

1. <श्é-वन्द्योरारुः># । । PS_३,२.१७३ । ।

______Sठाऱ्ठ्JKव्_३,२.१७३ः

श्é हिंसायाम्, वदि अभिवादनस्तुत्योः, एताभ्यां धातुभ्यां तच्छीलादिषु कर्तृषु आरुः प्रत्ययो भवति ।
शरारुः ।
वन्दारुः । ।

---

[#२४९]

1. <भियः क्रु-क्लुकनौ># । । PS_३,२.१७४ । ।

______Sठाऱ्ठ्JKव्_३,२.१७४ः

ञिभी भये, अस्माद्धातोः तच्छीलादिषु कर्तृषु क्रु-क्लुकनौ प्रत्ययु भवाः ।

भीरुः, भीलुकः ।
क्रुकन्नपि वक्तव्यः ।
भीरुकः । ।

---

1. <स्था-ईश-भास-पिस-कसो वरच्># । । PS_३,२.१७५ । ।

______Sठाऱ्ठ्JKव्_३,२.१७५ः

ष्ठा गति-निवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ, एतेभ्यस्तच्छीलादिषु कर्तृषु वरच्प्रत्ययो भवति ।
स्थावरः ।
ईश्वरः ।
भास्वरः ।
पेस्वरः ।
विकस्वरः । ।

---

1. <यश्च यङः># । । PS_३,२.१७६ । ।

______Sठाऱ्ठ्JKव्_३,२.१७६ः

या प्रापने, अस्माद्यङन्तात्तच्छीलादिषु कर्तृषु वरच्प्रत्ययो हवति ।
यायावरः । ।

---

1. <भ्राज-भास-धुर्वि-द्युत-उर्जि-प्é-जुग्रावस्तुवः क्विप्># । । PS_३,२.१७७ । ।

______Sठाऱ्ठ्JKव्_३,२.१७७ः

भ्राजादिभ्यः धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप्प्रत्ययो भवति ।
विभ्राट्, विभ्राजौ, विभ्राजः ।
भाः, भासौ, भसः ।
धूः, धुरौ, धुरः ।
विद्युत्, विद्युतौ, विद्युतः ।
ऊर्क्, ऊर्जौ, ऊर्जः ।

पूः, पुरौ, पुरः ।
जवतेर्दीर्घश्च निपात्यते ।
जूः जुवौ, जुवः ।
ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः ।
किमर्थं इदं उच्यते, यावता अन्येभ्योऽपि दृश्यन्ते (*३,२.७५), क्विप्च (*३,२.७६) इति क्विप्सिद्ध एव ? ताच्छीलिकैर्बाध्यते ।
वाऽसरूपविधिर्न अस्ति इत्युक्तं ।
अथ तु प्रायिकं एतथ् ।
ततस्तस्य+एव अयं प्रप्ञ्चः । ।

---

1. <अन्येभ्योऽपि दृश्यते># । । PS_३,२.१७८ । ।

______Sठाञ्ठJKव्_३,२.१७८ः

अन्येभ्योऽपि धातुभ्यः ताच्छीलिकेषु क्विप्प्रत्ययो दृश्यते ।
युक् ।
छिथ् ।
भिथ् ।
दृशि-ग्रहणं विध्य्-अन्तर-उपसङ्ग्रह-अर्थं ।
क्वचिद्दीर्घः, क्वचिद्द्विर्वचनम्, क्वचित्सम्प्रसारणं ।
तथा च आह -- क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ।
वाक् ।
शब्दप्राठ् ।
आयतस्तूः ।
कटप्रूः ।
जूः ।
श्रीः ।
जुग्रहनेन अत्र न अर्थः, भ्राजादि सूत्र एव गृहीतत्वाथ् ।
द्युति-गमि-जुहोतीनां द्वे च ।
दिद्युथ् ।
जगथ् ।
जुहोतेर्दीर्घश्च ।
जुहूः ।

[#२५०]

द्é भ्ये इत्यस्य ह्रस्वश्च द्वे च ।
ददृथ् ।
ध्यायतेः सम्प्रसारणं च ।
धीः । ।

---

1. <भुवः सञ्ज्ञा-अन्तरयोः># । । PS_३,२.१७९ । ।

_______Sठाञ्ठJKव्_३,२.१७९ः

भवतेर्धातोः सञ्ज्ञायां अन्तरे च गम्यमाने क्विप्प्रत्ययो भव्ति ।
विभूर्नाि कश्चित् ।
अन्तरे प्रतिभूः ।
धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूरुच्यते । ।

---

1. <वि-प्र-सम्भ्यो ड्व्-असञ्ज्ञायाम्># । । PS_३,२.१८० । ।

_______Sठाञ्ठJKव्_३,२.१८०ः

भुवः इति वर्तते ।
वि प्र सं इत्येवं पूर्वाद्भवतेर्धातोः डु-प्रतयो भवति, न चेत्सञ्ज्ञा गम्यते ।
विभुः सर्वगतः ।
प्रभुः स्वामी ।
सम्भुः जनिता ।
असञ्ज्ञायां इति किं ? विभूर्नाम कश्चित् ।
डु-प्रकरणे मितद्र्वादिभ्य उपसङ्ख्यनं ।
मितं द्रवति मितद्रुः ।
शम्भुः । ।

---

1. <धः करम्णि ष्ट्रन्># । । PS_३,२.१८१ । ।

_______Sठाञ्ठJKव्_३,२.१८१ः

धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन्प्रत्ययः भवति ।
षकारो डीषर्थः ।
धयन्ति तां दधति वा भैषज्यार्थं इति धात्री ।
स्तनदायिनी आमलकी च उच्यते । ।

---

1. <दाम्-नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे># । । PS_३,२.१८२ । ।

_______Sठाञ्ठ्JKव्_३,२.१८२ः

दाप्लवने, णीञ्प्रापणे, शसु हिंसायाम्, यु मिश्रणे, युजिर्योगे, ष्टुञ्स्तुतौ, तुद व्यथने, षिञ्बन्धने, षिचिर्क्षरणे, मिह सेचने, पतृगतौ, दंश दशने, णह बन्धने, एतेभ्यो धातुभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवति ।
दाति अनेन इति दात्रं ।
नेत्रं ।
शस्त्रं ।
योत्रं ।
योक्त्रं ।
स्तोत्रं ।
तोत्त्रं ।
सेत्रं ।
सेक्त्रं ।
मेढ्रं ।
पत्रं ।
दंष्ट्रा ।
अजादित्वात्टाप्, न ङीप् ।
दंशेरनुनासिकलोपेन निर्देशो ज्ञापनर्थः, क्ङितोऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद्भवति इति ।
तेन ल्युट्यपि भवति ।
दशनं ।
नद्ध्री । ।

---

[#२५१]

1. <हल-सूकरयोः पुवः># । । PS_३,२.१८३ । ।

_______Sठाञ्ठ्JKव्_३,२.१८३ः

पू इति पूङ्पूञोः सामान्येन ग्रहणं ।
अस्माद्धातोः करणे कारके ष्ट्रन्प्रत्ययो भवति, तच्चेत्करणं हल,सूकरयोरवयवो भवति ।
हलस्य पोत्रं ।
सूकरस्य पोत्रं ।
मुखं ।
उच्यते । ।

---

1. <अर्ति-लू-धू-सू-खन-सह-चर इत्रः># । । PS_३,२.१८४ । ।

_______Sठा~ठ्JKव्_३,२.१८४ः

ऋ गत्रौ, लूञ्छेदने, धू विधूनने, षू प्रेरणे, खनु अवदारने, षह मर्षणे, चर गतिभक्षणयोः, एतेभ्यो धातुभ्यः करणे कारके इत्रः पत्ययो भवति ।
अरित्रं ।
अवित्रं ।
धवित्रं ।
सवित्रं ।
खनित्रं ।
सहित्रं ।
चरित्रं । ।

---

1. <पुवः सञ्ज्ञायाम्># । । PS_३,२.१८५ । ।

_______Sठा~ठ्JKव्_३,२.१८५ः

पूङ्-पूञोः सामान्येन ग्रहणं ।
पवतेर्धतोः करणे कारके इत्र-प्रत्ययो भवति, समुदायेन चेत्सञ्ज्ञा गम्यते ।
दर्भः पवित्रं ।
बर्हिष्पवित्रं । ।

---

1. <कर्तरि चर्षिदेवतयोः># । । PS_३,२.१८६ । ।

_______Sठा~ठ्JKव्_३,२.१८६ः

पुवः इति वर्तते ।
पुवः करने कर्तरि च इत्र-प्रत्ययो भवति ।
ऋषिदेवतयोः यथासङ्ख्यं सम्बन्धः ।
ऋषौ करणे, देवतायां कर्तरि ।
पूयते अनेन इति पवित्रोऽयं ऋषिः ।
देवतायां - अग्निः पवित्रं स मा पुनातु ।
वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु । ।

---

1. <ञीतः क्तः># । । PS_३,२.१८७ । ।

______Sठा~ठ्JKव्_३,२.१८७ः

ञि इद्यस्य असौ ञीथ् ।
ञीतो धातोः वर्तमनेऽर्थे क्त-प्रत्ययो भवति ।
भूते निष्ठा विहिता, वर्तमने न प्राप्नोति इति विधीयते ।
ञिमिदा स्नेहने - मिन्नः ।
ञिक्ष्विदा - क्ष्विण्णः ।
ञिधृषा - धृष्टः । ।

---

[#२५२]

1. <मति-बुद्धि-पूजा-अर्थेभ्यश्च># । । PS_३,२.१८८ । ।

______Sठा~ठ्JKव्_३,२.१८८ः

मतिः इच्छा ।
बुद्धिः ज्ञानं ।
पूजा सकारः ।
एतदर्थेभ्यश्च धातुभ्यो वर्तमान-अर्थे क्त-प्रत्ययो भवति ।
राज्ञां मतः ।
राज्ञां इष्टः ।
राज्ञां बुद्धः ।
राज्ञां ज्ञातः ।
राज्ञां पूजितः ।
राज्ञां अर्चितः ।
अनुक्त-समुच्चय-अर्थश्चकारः ।
शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि । ।१ । ।

हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यति इत्याहुरमृतः पूर्ववत्समृतः । ।२ । ।

कष्टः इति भविष्यति काले ।
अमृतः इति पूर्ववथ् ।
वर्तमाने इत्यर्थः ।
तथा सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः इत्येवं आदयोऽपि वर्तमाने द्रष्टव्याः । ।
इतिश्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य द्वितीयः पादः । ।

---

तृतीयाध्यायस्य तृतीयः पदः ।

---

[#२५३]

1. <उणादयो बहुलम्># । । PS_३,३.१ । ।

_______Sठाञ्ठJKव्_३,३.१ः

वर्तमान इत्येव, सञ्ज्ञायां इति च ।
उणादयः प्रत्ययाः वर्तमानेऽर्थे सञ्ज्ञायां विषये बहुलं भवन्ति ।
यतो विहितास्ततोऽन्यत्र अपि भवन्ति ।
केचिदविहिता एव प्रयोगत उन्नीयन्ते ।
कृवापाजिमिस्वदिसाध्यशूभ्य उण् ।
कारुः ।
वायुः ।
पायुः ।
जायुः ।
मायुः ।
स्वादुः ।
साधुः ।
आशुः ।
बाहुलकं प्रकृतेस्तनुदृष्टेः प्राय-समुच्चयनादपि तेषां ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु । ।१ । ।

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकं ।
यन्न पदार्थ-विशेष-समुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यं । ।२ । ।

सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धं एतच्छास्त्रं उणादिषु । ।३ । ।

---

1. <भूतेऽपि दृश्यन्ते># । । PS_३,३.२ । ।

_______Sठाञ्ठJKव्_३,३.२ः

पूर्वत्र वर्तमान-अधिकाराद्भूतार्थं इदं वचनं ।
भूते काले उणादयः प्रत्यया दृश्यन्ते ।

वृत्तं इदं वर्त्म ।
चरितं तदिति चर्म ।
भसितं तदिति भस्म ।
दृशि-ग्रहणं प्रयोग-अनुसार-अर्थं । ।

---

1. <भविष्यति गम्यादयः># । । PS_३,३.३ । ।

_______Sठा-ठ्JKव्_३,३.३ः

भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति ।
प्रत्ययस्य+एव भविष्यत्कालता विधीयते न प्रकृतेः ।
गमी ग्रामं ।
आगामी ।
प्रस्थायी ।
प्रतिरोधी ।
प्रतिबोधी ।
प्रतियोधी ।
प्रतियोगी ।
प्रतियायी ।
आयावी ।
भावी ।
अनद्यतन उपसङ्ख्यानं ।
श्वो गमी ग्रामं । ।

---

1. <यावत्-पुरा-निपातयोर्लट्># । । PS_३,३.४ । ।

_______Sठा-ठ्JKव्_३,३.४ः

भविष्यति इत्येव ।
यावत्-पुरा-शब्दयोर्निपातयोरुपपदयोः भविष्यति काले धातोर्लट्प्रत्ययो भवति ।
यावद्भुङ्क्ते ।
पुरा भुङ्क्ते ।
निपातयोः इति किं ? यावद्दास्यति तावद्भोक्ष्यते ।
करणभूतया पुरा व्रजिष्यति । ।

---

[#२५४]

1. <विभाषा कदा-कर्ह्योः># । । PS_३,३.५ । ।

_______Sठा~ठ्JKव्_३,३.५ः

कदा कर्हि इत्येतयोः उपपदयोर्विभाषा भविष्यति काले धातोः लट्प्रत्ययो भवति ।
कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता ।
कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्टा । ।

---

1. <किंवृत्ते लिप्सायाम्># । । PS_३,३.६ । ।

_______Sठा~ठ्JKव्_३,३.६ः

विभाषा इति वर्तते ।
किमो वृत्तं किंवृत्तं ।
वृत्त-ग्रहणेन तद्विभक्त्यन्तं प्रतीयाथ् ।
डतरतमौ च इति परिसङ्ख्यानं स्मर्यते ।
किंवृत्ते उपपदे लिप्सायां भविष्यति काले धातोः विभाषा लट्प्रत्ययो भवति ।
लिप्सा लब्धुं इच्छा, प्रार्थनाभिलाषः ।
कं भवन्तो भोजयन्ति, कं भवन्तो भोजयितारः ।
लब्धुकामः पृच्छति कतरो भिक्षां दास्यति, ददाति, दाता वा ।
कतमो भिक्षां दास्यति, ददाति, दाता वा ।
लिप्सायां इति किं ? कः पाटलिपुत्रं गमिष्यति । ।

---

1. <लिप्स्यमान-सिद्धौ च># । । PS_३,३.७ । ।

_______Sठा~ठ्JKव्_३,३.७ः

विभाषा इत्येव ।
लिप्स्यमानात्सिद्धिः लिप्स्यमान-सिद्धिः ।
लिप्स्यमान-सिद्धौ गम्यमानायां भविष्यति काले धातोः विभाषा लट्प्रत्ययो भवति ।
अकिंवृत्त-अर्थोऽयं आरम्भः ।
यो भक्तं ददाति स स्वर्गं गच्छति, यो भक्तं दास्यति स स्वर्गं गमिष्यति, यो भक्तं दात स स्वर्गं गन्ता ।
लिप्स्यमानाद्भक्तात्स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति । ।

---

1. <लोड्-अर्थलक्षने च># । । PS_३,३.८ । ।

_______Sठाऱ्ठJKव्_३,३.८ः

लोड्-अर्थः प्रैषादिर्लक्ष्यते येन स लोड्-अर्थलक्षणो धात्व्-अर्थः ।
तत्र वर्तमानाद्धातोः भविष्यति काले विभाषा लट्प्रत्ययो भवति ।
उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणं अधीष्व ।
उपाध्यायागमनमध्ययनप्रैषस्य लक्षणं । ।

---

1. <लिङ्च+ऊर्ध्व-मौहूर्तिके># । । PS_३,३.९ । ।

_______Sठाऱ्ठJKव्_३,३.९ः

भविष्यति, विभाषा, लोड्-अर्थलक्षणे इति सर्वं अनुवर्तते ।
ऊर्ध्व-मौहूर्तिके भविष्यति काले लोड्-अर्थलक्षण-अर्थे वर्तमानात्धातोर्विभाषा लिङ्-प्रत्ययो भवति, चकाराल्लट्च ।
ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः ।
निपातनात समासः, उत्तरपद-वृद्धिश्च ।
भविस्यतश्च+एतद्विशेषणं ।
ऊर्ध्वं मुहूर्तातुपरि मुहूर्तस्य उपाध्यायश्चेदागच्छेत्, उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणं अधीष्व । ।

---

[#२५५]

1. <तुमुन्-ण्वुलौ क्रियायां क्रिय-अर्थायाम्># । । PS_३,३.१० । ।

_______Sठाऱ्ठJKव्_३,३.१०ः

भविष्यति इत्येव ।
क्रिय-अर्थायां क्रियायां उपपदे धातोर्भविस्यति कले तुमुन्-ण्वुलौ प्रत्ययौ भवतः ।
भोक्तुं व्रजति ।
भोजको व्रजति ।
भुजिक्रिय-अर्थः व्रजिरत्रोपपदं ।
क्रियायां इति किं ? भिक्षिष्य इत्यस्य जटाः ।

क्रिय-अर्थायां इति किं ? धावतस्ते पतिष्यति दण्डः ।
अथ किमर्थं ण्वुल्विधीयते यावता ण्वुल्-तृचौ (*३,१.१३३) इति सामान्येन विहित एव सोऽस्मिन्नपि विषये भविस्यति ? लृटा क्रियार्थ-उपपदेन बाध्येत ।
वाऽसरूप-विधिना सोऽपि भविस्यति ? एवं तर्हि एतद्ज्ञाप्यते, क्रियायां उपपदे क्रियार्थायां वाऽसरूपेण तृजादयो न भवन्ति इति ।
तेन कर्ता व्रजति, विक्षिपो व्रजति इत्येवं आदि निवर्त्यते । ।

---

1. <भाव-वचनाश्च># । । PS_३,३.११ । ।

_______Sठाऽ्ठJKव्_३,३.११ः

भविष्यति इत्येव ।
भावे (*३,३.१८) इति प्रकृत्य ये घञ्-आदयो विहितास्ते च भाव-वचनाः भविस्यति काले क्रियायां उपपदे क्रियार्थायां भवन्ति ।
किमर्थं इदं यावता विहिता एव ते ? क्रियर्थ-उपपदे विहितेन अस्मिन्विषये तुमुना बाध्येरन् ।
वाऽसरूप-विधिश्च अत्र न अस्ति इत्युक्तं ।
अथ वचन-ग्रहणं किमर्थं ? वाचका यथा स्युः ।
कथं च वाचका भवन्ति ? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिता यदि ताभ्यस्तथा+एव भवन्ति, नासामञ्जस्येन इति ।
पाकाय व्रजति ।
भूतये व्रजति ।
पुष्टये व्रजति । ।

---

1. <अण्कर्मणि च># । । PS_३,३.१२ । ।

_______Sठाऽ्ठJKव्_३,३.१२ः
भविस्यति इत्येव ।
चकारः सन्नियोग-अर्थः ।
धातोः अण्प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायां ।
कर्मण्यण्(*३,२.१) इति सामान्येन विहितो वाऽसरूप-विधेरभावाद्ण्वुला बाधितः पुनरण्विधीयते, सोऽपवादत्वाद्ण्वुलं बाधते, परत्वात्कादीन् ।
तेन अपवाद-विसयेऽपि भवत्येव ।
काण्डलावो व्रजति ।
अश्वदायो व्रजति ।
गोदायो व्रजति ।
कम्बलदायो व्रजति । ।

---

1. <लृट्शेषे च># । । PS_३,३.१३ । ।

_______Sठाऽठ्JKव्_३,३.१३ः

भविष्यति इत्येव ।
शेषः क्रियार्थ-उपपदादन्यः ।
शेषे शुद्धे भविष्यति काले, चकारात्क्रियायां च उपपदे क्रियार्थायां धातोः लृट्प्रत्ययो भवति ।
करिष्यामि इति व्रजति ।
हरिष्यामि इति व्रजति ।
शेषे खल्वपि करिष्यति ।
हरिष्यति । ।

---

[#२५६]

1. <लृटः सद्वा># । । PS_३,३.१४ । ।

_______Sठाऽठ्JKव्_३,३.१४ः

लृटः स्थाने सत्सञ्ज्ञौ शतृशानचौ वा भवतः ।
व्यवस्थित-विभाषा इयं ।
तेन यथा लटः शतृशानचौ तथा अस्य अपि भवतः ।
अप्रथमा-समानाधिकरण-आदिषु नित्यम्, अन्यत्र विकल्पः ।
करिष्यन्तं देवदत्तं पश्य ।
करिष्यमाणं देवदत्तं पश्य ।
हे करिष्यन् ।
हे करिस्यमाण ।
अर्जयिष्यमणो वसति ।
प्रथमा-समानाधिकरणे विकल्पः - करिष्यन्देवदत्तः ।
करिस्यमणो देवदत्तः ।
करिष्यति ।
करिस्यते । ।

---

1. <अनद्यतने लुट्># । । PS_३,३.१५ । ।

_______Sठाऽठ्JKव्_३,३.१५ः

भविष्यति इत्येव ।

भविष्यदनद्यतनेऽर्थे वर्तमानाद्धतोः लुट्प्रत्ययो भवति।
लृटोऽपवादः।
श्वः कर्ता।
श्वो भोक्ता।
अनद्यतने इति बहुव्रीहि-निर्देशः।
तेन व्यामिश्रे न भवति।
अद्य श्वो वा भविष्यति।।
परिदेवने श्वस्तनी भविष्यद्-अर्थे वक्तव्या।
इयं नु कदा गन्ता, या एवं पादौ निदधाति।
अयं नु कदाऽध्येता, य एवं अनभियुक्तः।।

---

1. <पद-रुज-विश-स्पृशो घञ्>#।। PS_३,३.१६।।

_______Sठाञ्ठJKव्_३,३.१६ः

भविष्यति इति निवृतं।
इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः।
पदादिभ्यो धातुभ्यो घञ्प्रत्ययो भवति।
पद्यतेऽसौ पादः।
रुजत्यसौ रोगः।
विशत्यसौ वेशः।
स्पृश उपताप इति वक्तव्यं।
स्पृशति इति स्पर्शः उपतापः।
ततोऽन्यत्र पचाद्यच्भवति।
स्पर्शो देवदत्तः।
स्वरे विशेषः।।

---

1. <सृ स्थिरे>#।। PS_३,३.१७।।

_______Sठाञ्ठJKव्_३,३.१७ः

सर्तेः धातोः स्थिरे कर्तरि घञ्प्रतयो भवति।
स्थिरः इति कालान्तरस्थायी पदार्थ उच्यते।
स चिरं तिष्ठन्कालन्तरं सरति इति धात्व्-अर्थस्य कर्ता युज्यते।
चन्दनसारः।
खदिरसारः।
स्थिरे इति किं? सर्ता।
सारकः।
व्याधिमत्स्यबलेष्विति वक्तव्यं।

अतीसारो व्याधिः ।
विसारो मत्स्यः ।
सारो बलं । ।

---

[#२५७]

1. <भावे># । । PS_३,३.१८ । ।

_______Sठाञ्ठJKव्_३,३.१८ः

भावे वाच्ये धातोः घञ्प्रत्ययो भवति ।
पाकः ।
त्यागः ।
रागः ।
क्रियासामान्यवाची भवतिः ।
तेन अर्थ-निर्देशः क्रियमाणः सर्वधातु-विषयः कृतो भवति ।
धात्व्-अर्थश्च धातुना+एव+उच्यते ।
यस्तस्य सिद्धता नाम धर्मः तत्र घञ्-आदयः प्रत्ययाः विधीयन्ते ।
पुंलिङ्ग-एकवचनं च अत्र न तन्त्रं, लिङ्गान्तरे वचनान्तरेऽपि च अत्र प्रत्यया भवन्त्येव ।
पक्तिः, पचनम्, पाकौ, पाकाः इति । ।

---

1. <अकर्तरि च कारके सञ्ज्ञायाम्># । । PS_३,३.१९ । ।

_______Sठाञ्ठJKव्_३,३.१९ः

कर्तृ-वर्जिते कारके सञ्ज्ञायां विषये धातोः घञ्भवति ।
प्रास्यन्ति तं प्रासः ।
प्रसीव्यन्ति तं प्रसेवः ।
आहरन्ति तस्माद्रसं इति आहारः ।
मधुराहारः ।
तक्षशिलाहारः ।
अकर्तरि इति किं ? मिषत्यसौ मेषः ।
सज्ञायां इति किं ? कर्तव्यः कटः ।
सञ्ज्ञा-व्यभिचार-अर्थश्चकारः ।
को भवता दायो दत्तः ।
को भवता लाभो लब्धः ।
कारक-ग्रहणं पर्युदासे न कर्तव्यं ।
तत्क्रियते प्रसज्य-प्रतिषेधेऽपि समासोऽस्ति इति ज्ञापन-अर्थम्, आद्-एच उपदेशेऽशिति (*६,१.४५) इति ।
इत उत्तरं भावे, अकर्तरि च कारके इति द्वयं अनुवर्तते । ।

---

1. <परिमाण-आख्यायां सर्वेभ्यः># । । PS_३,३.२० । ।

_______Sठाञ्ठJKव्_३,३.२०ः

परिमाण-आख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यः घञ्प्रत्ययो भवति ।
एकस्तण्डुल-निश्चायः ।
द्वौ शूर्पनिष्पावौ ।
क्é विक्षेपे -- द्वौ कारौ ।
क्रयः काराः ।
सर्व-ग्रहणं अपोऽपि बाधन-अर्थं ।
पुरस्तादपवाद-न्यायेन ह्यचं एव बाधेत, न अपं ।
परिमाण-आख्यायां इति किं ? निश्चयः ।
आख्या-ग्रहणं रूढिनिरास-अर्थं ।
तेन सङ्ख्याऽपि गृह्यते, न प्रस्थाद्येव ।
घञ्-अनुक्रमणं अजपोर्विषये, स्त्री-प्रत्ययास्तु न बाध्यन्ते ।
एका तिलोच्छित्तिः ।
द्वे प्रसृती ।
दारजारौ कर्तरि णिलुक्च ।
दारयन्ति इति दाराः ।
जरयन्ति इति जाराः । ।

---

1. <इङश्च># । । PS_३,३.२१ । ।

_______Sठाञ्ठJKव्_३,३.२१ः

इङो धातोः घञ्प्रत्ययो भवति ।
अचोऽपवादः ।
अध्यायः ।
उपेत्यास्मादधीते उपाध्यायः ।

[#२५८]

अपादाने स्त्रियां उपसङ्ख्यानं तदन्ताच्च वा ङीष् ।
उपाध्याया, उपाध्यायी ।
श्é वायुवर्णनिवृतेषु ।
शारो वायुः ।
शारो वर्णः ।
शारो निवृतं ।

गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । ।

---

1. <उपसर्गे रुवः># । । PS_३,३.२२ । ।

_______SठाAठJKव्_३,३.२२ः

उपसर्गे उपपदे रौतेर्धातोर्घञ्प्रत्ययो भवति ।
अपोऽपवादः ।
संरावः ।
उपरावः ।
उपसर्गे इति किं ? रवः । ।

---

1. <समि यु-द्रु-दुवः># । । PS_३,३.२३ । ।

_______SठाAठJKव्_३,३.२३ः

समि उपपदे यु द्रु दु इत्येतेभ्यः धातुभ्यः घञ्प्रत्ययो भवति ।
संयावः ।
संद्रावः ।
संदावः ।
समि इति किं ? प्रयवः । ।

---

1. <श्रि-णी-भुवोऽनुपसर्गे># । । PS_३,३.२४ । ।

_______SठाAठJKव्_३,३.२४ः

श्रि णी भू इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ्प्रत्ययो भवति ।
अजपोरपवादः ।
श्रायः ।
नायः ।
भावः ।
अनुपसर्गे इति किं ? प्रश्रयः ।
प्रणयः ।

प्रभवः ।
कथं प्रभावो राज्ञाः ? प्रकृष्टो भावः इति प्रादिसमासो भविष्यति ।
कथं च नयो राज्ञः ? कृत्य-ल्युटो बहुलं (*३,३.११३) इति अच्भविष्यति । ।

---

1. <वौ क्षु-श्रुवः># । । PS_३,३.२५ । ।

_______Sठा~ठ्JKव्_३,३.२५ः

वाव्-उपपदे क्षु श्रु इत्येताभ्यां धातुभ्यां घञ्प्रत्ययो भवति ।
अपोऽपवादः ।
विक्षावः ।
विश्रावः ।
वौ इति किं ? क्षवः ।
श्रवः । ।

---

1. <अव-उदोर्नियः># । । PS_३,३.२६ । ।

_______Sठा~ठ्JKव्_३,३.२६ः

अव उतित्येतयोरुपपदयोः नयतेर्धातोः घञ्प्रत्ययो भवति ।
अवनायः ।
उन्नायः ।
कथं उन्नयः पदार्थानां ? कृत्य-ल्युटो बहुलं (*३,३.११३) इति अच्भविष्यति । ।

---

[#२५९]

1. <प्रे द्रु-स्तु-स्रुवः># । । PS_३,३.२७ । ।

_______Sठा~ठ्JKव्_३,३.२७ः

प्र-शब्दे उपपदे द्रु स्तु स्रु इत्येतेभ्यो धातुभ्यो घञ्प्रत्ययो भवति ।
प्रद्रावः ।

प्रस्तावः ।
प्रस्रावः ।
प्र इति किं ? द्रवः ।
स्तवः ।
स्रवः । ।

---

1. <निर्-अभ्योः पू-ल्वोः># । । PS_३,३.२८ । ।

______Sठा~ठ्JKव्_३,३.२८ः

पू इति पूङ्पूञोः सामान्येन ग्रहणं ।
लूञ्छेदने ।
यथासङ्ख्यं उपसर्ग-सम्बन्धः ।
निरभिपूर्वयोः पू-ल्वोर्धात्वोः घञ्प्रत्ययो भवति ।
निष्पावः ।
अभिलावः ।
निरभ्योः इति किं ? पवः ।
लवः । ।

---

1. <उन्-न्योर्ग्रः># । । PS_३,३.२९ । ।

______Sठा~ठ्JKव्_३,३.२९ः

गॄ शब्दे, गॄ निगरणे, द्वयोरपि ग्रहणं ।
उन्न्योरुपपदयोः गॄ इत्येतस्माद्धातोः घञ्प्रत्ययो भवति ।
उद्गारः समुद्रस्य ।
निगारो देवदत्तस्य ।
उन्न्योः इति किं ? गरः । ।

---

1. <कॄ धान्ये># । । PS_३,३.३० । ।

______Sठा~ठ्JKव्_३,३.३०ः

उन्न्योः इति वर्तते ।
क्é इत्येतस्माद्धातोरुन्न्योः उपपदयोः घञ्प्रतयो भवति, धान्य-विषयश्चेद्धात्व्-अर्थो भवति ।
विक्षेप-अर्थस्य किरतेर्ग्रहणं, न हिंस-अर्थस्य, अनभिधानातुत्कारो धान्यस्य ।
निकारो धान्यस्य ।
धान्ये इति किं ? भैक्ष्योत्करः ।
पुष्पनिकरः । ।

---

1. <यज्ञे समि स्तुवः># । । PS_३,३.३१ । ।

______Sठाञ्ठ्JKव्_३,३.३१ः

यज्ञ-विषये प्रयोगे सम्पूर्वात्स्तौतेर्घञ्पत्र्ययो भवति ।
संरतावः छन्दोगानां ।
समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स देशः संस्तावः इत्युच्यते ।
यज्ञे इति किं ? संस्तवः छात्रयोः । ।

---

1. <प्रे स्त्रोऽयज्ञे># । । PS_३,३.३२ । ।

______Sठाञ्ठ्JKव्_३,३.३२ः

स्तृञाच्छादने, अस्माद्धातोः प्र-शब्दे उपपदे घञ्प्रत्ययो भवति न चेद्यज्ञ-विषयः प्रयोगो भवति ।
शङ्खप्रस्तारः ।
अयज्ञे इति किं ? बहिर्ष्प्रस्तरः । ।

---

[#२६०]

1. <प्रथने वावशब्दे># । । PS_३,३.३३ । ।

______Sठाञ्ठ्JKव्_३,३.३३ः

स्त्éञाच्छादने, अस्माद्धातोः वि-शब्दे उपपदे घञ्पत्ययो भवति प्रथने गम्यमाने, तच्चेत्प्रथनं शब्द-विषयं न भवति ।
प्रथनं विस्तीर्णता ।
पटस्य विस्तारः ।

प्रथने इति किं ? तृणविस्तरः ।
अशब्दे इति किं ? विस्तरो वचसां । ।

---

1. <छन्दोनाम्नि च># । । PS_३,३.३४ । ।

_______Sठाऱ्ठ्JKव्_३,३.३४ः

वौ स्त्रः इति वर्तते ।
विपूर्वात्स्तृनातेः छन्दोनाम्नि घञ्प्रत्ययो भवति ।
वृत्तं अत्र छन्दो गृह्यते यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्रह्मणं , नाम-ग्रहणाथ् ।
विष्टारपङ्क्तिः छन्दः ।
विष्टारबृहती छन्दः ।
विष्टारपङ्क्ति-शब्दोऽत्र छन्दोनाम, न घञनतं शब्द-रूपं ।
तत्र त्ववयवत्वेन तद्वर्तते ।
छन्दोनाम्नि इत्यधिकरण-सप्तम्येषा । ।

---

1. <उदि ग्रहः># । । PS_३,३.३५ । ।

_______Sठाऱ्ठ्JKव्_३,३.३५ः

उदि उपपदे ग्रहेर्धातोः घञ्प्रत्ययो भवति ।
अतोऽपवादः ।
उद्ग्राहः ।
छन्दसि निपूर्वादपि इष्यते स्रुगुद्यमन-निपतनयोः ।
हकारस्य भकारः ।
उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । ।

---

1. <समि मुष्टौ># । । PS_३,३.३६ । ।

_______Sठाऱ्ठ्JKव्_३,३.३६ः

ग्रहः इत्येव ।
समि उपपदे ग्रहेर्धातोः घञ्भवति, मुष्टिविषयश्चेद्धात्वर्थो भवति ।

मुष्टिः अङ्गुलिसन्निवेशः ।
अहो मल्लस्य सङ्ग्राहः ।
अहो मुष्टिकस्य सङ्ग्राहः ।
दृढमुष्टिता आख्यायते ।
मुष्टौ इति किं ? सङ्ग्रहो धान्यस्य । ।

---

1. <परि-न्योर्नी-णोर्द्यूत-अभ्रेषयोः># । । PS_३,३.३७ । ।

_______Sठाऽ्ठ्JKव्_३,३.३७ः

परि-शब्दे नि-शब्दे च उपपदे यथासङ्ख्यं नियः इणश्च धातोः घञ्प्रत्ययो भवति ।
अचोऽपवादः ।
द्यूताभ्रेषयोः, अत्र अपि यथासङ्ख्यं एव सम्बन्धः ।
द्यूत-विषयः चेन्नयतेरर्थः, अभ्रेष-विषयश्चेदिण्-अर्थः ।
पदार्थानां अनपचारो यथाप्राप्त-करणं अभ्रेषः ।
द्यूते तावत्- परिणायेन शारान्हन्ति ।
समन्तान्नयनेन ।
अभ्रेषे - एषोऽत्र न्यायः ।
द्यूत-अभ्रेषयोः इति किं ? परिणयः ।
न्ययं गतः पापः । ।

---

[#२६१]

1. <परावनुपात्यय इणः># । । PS_३,३.३८ । ।

_______Sठाऽ्ठ्JKव्_३,३.३८ः

परि-शब्दे उपपदे इणो धातोः घञ्प्रत्ययो भवति, अनुपत्यये गम्यमाने ।
क्रम-प्राप्तस्य अनतिपातोऽनुपात्ययः, परिपाटी ।
तव पर्यायः ।
मम पर्यायः ।
अनुपात्यये इति किं ? कालस्य पर्ययः ।
अतिपातः इत्यर्थः । ।

---

1. <व्य्-उपयोः शेतेः पर्याये># । । PS_३,३.३९ । ।

______Sठा~ठ्JKव्_३,३.३९ः

वि उप इत्येतयोः उपपदयोः शेतेर्धातोः घञ्भवति पर्याये गम्यमाने ।
तव विशायः ।
मम विशायः ।
तव राजोपशायः ।
तव राजानं उपशयितुं पर्यायः इत्यर्थः ।
पर्याये इति किं ? विशयः ।
उपशयः । ।

---

1. <हस्त-अदाने चेरस्तेये># । । PS_३,३.४० । ।

______Sठा~ठ्JKव्_३,३.४०ः

हस्तादाने गम्यमाने चिनोतेर्धातोः घञ्प्रत्ययो भवति, न चेत्स्तेयं चौर्यं भवति ।
हस्तादान-ग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते ।
पुष्पप्रचायः ।
फलप्रचायः ।
हस्तादने इति किं ? वृक्षशिखरे फलप्रचयं करोति ।
अस्तेये इति किं ? फलप्रचयश्चौर्येण ।
उच्चयस्य प्रतिषेधो वक्तव्यः । ।

---

1. <निवास-चिति-शरीर-उपसमाधानेष्वादेश्च कः># । । PS_३,३.४१ । ।

______Sठा~ठ्JKव्_३,३.४१ः

चेः इत्येव ।
निवसन्ति अस्मिनिति निवासः ।
चीयतेऽसौ चितिः ।
पाण्यादि-समुदायः शरीरं ।
राशीकरनं उपसमाधानं ।
एतेष्वर्थेषु चिनोतेः घञ्प्रत्ययः भवति, धातोरादेश्च ककार आदेशः ।
निवासे तावत्- चिखल्लिनिकायः ।
चितौ - आकायं अग्निं चिन्वीत ।
शरीरे - अनित्यकायः ।

उपसमाधाने - महान्गोमयनिकायः ।
एतेषु इति किं ? चयः ।
इह कस्मान्न भवति महान्काष्ठनिचयः ? बहुत्वं अत्र विवक्षितं न+उपसमाधानं । ।

---

1. <सङ्घे च अनौत्तराधर्ये># । । PS_३,३.४२ । ।

_______Sठाऽठ्JKव्_३,३.४२ः

चेः इत्येव ।
प्राणिनां समुदायः सङ्घः ।
स च द्वाभ्यां प्रकाराभ्यां भवति ।
एकधर्म-समावेशेन, औत्तराधर्येण वा ।
तत्र औत्तराधर्य-पर्युदासादितरो गृह्यते ।
सङ्घे वाच्ये चिनोतेर्धातोः घञ्प्रत्ययो भवति आदेश्च कः ।
भिक्षुकनिकायः ।
ब्राह्मणनिकायः ।
वैयाकरणनिकायः ।
अनौत्तराधर्ये इति किं ? सूकरनिचयः ।
प्राणिविषयत्वात्सङ्घस्य+इह न भवति ।
कृताकृतसमुच्चयः ।
प्रमाणसमुच्चयः । ।

---

[#२६२]

1. <कर्म-व्यतिहारे णच्स्त्रियाम्># । । PS_३,३.४३ । ।

_______Sठाऽठ्JKव्_३,३.४३ः

कर्म क्रिया ।
व्यतिहारः परस्पर-करणं ।
कर्म-व्यतिहारे गम्यमाने धातोः णच्पत्ययो भवति स्त्रीलिङ्गे वाच्ये ।
तच्च भावे ।
चकारो विशेषण-अर्थः णचः स्त्रियां अञ्(*५,४.१४) इति ।
व्यावक्रोशी ।
व्यावलेखी ।
व्यावहासी वर्तते ।
स्त्रियां इति किं ? व्यतिपाको वर्तते ।
बाधकविषयेऽपि क्वचिदिष्यते, व्यावचोरी, व्यावचर्ची ।
इह न भवति ।

व्यतीक्षा, व्यतीहा वर्तते ।
व्यात्युक्षी भवति ।
तदेतद्वैचित्र्यं कथं लभ्यते ? कृत्य-ल्युटो बहुलं (*३,३.११३) इति भवति । ।

---

1. <अभिविधौ भावे इनुण्># । । PS_३,३.४४ । ।

_______Sठाऱ्ठ्JKव्_३,३.४४ः

अभिविधिरभिव्याप्तिः, क्रियागुणाभ्यां कात्स्न्र्येन सम्बन्धः ।
अभिविधौ गम्यमाने धातोः भवे इनुणभवति ।
साङ्कूटिनं ।
सांराविणं ।
सान्द्राविणं वर्तते ।
अभिविधौ इति किं ? सङ्कोटः ।
सन्द्रावः ।
संरावः ।
भावे इति वर्तमने पुनर्भाव-ग्रहणं वासरूपनिरास-अर्थम्, तेन घञ्न भवति ।
ल्युटा तु समावेश इष्यते ।
सङ्कूटनं वर्तते ।
तत्कथं ? कृत्य-ल्युटो बहुलं (*३,३.११३) इति । ।

---

1. <आक्रोशेऽवन्योर्ग्रहः># । । PS_३,३.४५ । ।

_______Sठाऱ्ठ्JKव्_३,३.४५ः

दृष्ट-अनुवृत्ति-सामर्थ्याद्घञनुवर्तते, न अनन्तर इनुण् ।
अव नि इत्येतयोः उअपदयोः ग्रहेर्धातोः घञ्प्रत्ययो भवति आक्रोशे गम्यमने ।
आक्रोशः शपनं ।
अवग्राहो हन्त ते वृषल भूयथ् ।
निग्राहो हन्त ते वृषल भूयाथ् ।
आक्रोशे इति किं ? अवग्रहः पदस्य ।
निग्रहश्चोरस्य । ।

---

1. <प्रे लिप्सायाम्># । । PS_३,३.४६ । ।

_______Sठाऱ्ठ्JKव्_३,३.४६ः

ग्रहः इत्येव ।
प्र-शब्दे उपपदे ग्रहेर्धातो घञ्प्रत्ययो भवति लिप्सायां गम्यमानायां ।
पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी ।
स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी ।
लिप्सायां इति किं ? प्रग्रहो देवदत्तस्य । ।

---

1. <परौ यज्ञे># । । PS_३,३.४७ । ।

_______Sठाऱ्ठ्JKव्_३,३.४७ः

परि-शब्दे उपपदे ग्रहेः घञ्प्रत्ययो भवति, यज्ञविषयश्चेत्प्रत्ययान्त-अभिधेयः स्याथ् ।
उत्तरपरिग्राहः ।
अधर-परिग्राहः ।
यज्ञे इति किं ? परिग्रहो देवदत्तस्य । ।

---

[#२६३]

1. <नौ वृ धान्ये># । । PS_३,३.४८ । ।

_______Sठाऱ्ठ्JKव्_३,३.४८ः

वृ इति वृङ्वृञोः सामान्येन ग्रहणं ।
नि-शब्दे उपपदे वृ इत्येतस्माद्धातोः धान्य-विशेषेऽभिधेये घञ्प्रत्ययो भवति ।
अपोऽपवादः ।
नीवारा नाम व्रीहयो भवन्ति ।
धान्ये इति किं ? निवरा कन्या । ।

---

1. <उदि श्रयति-यौति-पू-द्रुवः># । । PS_३,३.४९ । ।

______Sठा~ठ्JKव्_३,३.४९ः

उच्-छब्दे उपपदे श्रयत्य्-आदिभ्यो घञ्प्रतययो भवति ।
अजपोरपवादः ।
उच्छ्रायः ।
उद्यावः ।
उत्पावः ।
उद्द्रावः ।
कथं पतनान्ताः समुच्छ्रयाः ? वक्ष्यमाणं विभाषा-ग्रहणं इह सिंहावलोकितन्यायेन सम्बध्यते । ।

---

1. <विभाषा+आङि रु-प्लुवोः># । । PS_३,३.५० । ।

______Sठा~ठ्JKव्_३,३.५०ः

आङि उपपदे रौतेः प्लवतेश्च विभाषा घञ्प्रत्ययो भवति ।
आरावः, आरवः ।
आप्लावः, आप्लवः । ।

---

1. <अवे ग्रहो वर्ष-प्रतिबन्धे># । । PS_३,३.५१ । ।

______Sठा~ठ्JKव्_३,३.५१ः

विभाषा इति वर्तते ।
अवे उपपदे ग्रहेः धातोः घञ्प्रत्ययो भवति विभाषा वर्षप्रतिबन्धेऽभिधेये ।
प्रप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावो वर्षप्रतिबन्धः ।
अवग्राहो देवस्य, अवग्रहो देवस्य ।
वर्षप्रतिबन्धे इति किं ? अवग्रहः पदस्य । ।

---

1. <प्रे वणिजाम्># । । PS_३,३.५२ । ।

______Sठा~ठ्JKव्_३,३.५२ः

ग्रहः इति वर्तते ।
विभाषा इत्येव ।
प्र-शब्दे उपपदे ग्रहेर्धातोः विभाषा घञ्प्रत्ययो भवति, प्रत्ययान्त-वाच्यश्चेद्वणिजां सम्बन्धी भवति ।
वणिक्-सम्बन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस्तन्त्रं ।
तुला प्रगृह्यते येन सूत्रेण स शब्द-अर्थः ।
तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा ।
वणिजां इति किं ? प्रग्रहो देवदत्तस्य । ।

---

1. <रश्मौ च># । । PS_३,३.५३ । ।

_______Sठाञ्ठJKव्_३,३.५३ः

ग्रहः विभाषा प्रे इति वर्तते ।
प्र-शब्दे उपपदे ग्रहेर्धातोः विभाषा घञ्प्रत्ययो भवति, रश्मिश्चेत्प्रत्ययान्तेन अभिधीयते ।
रथादियुक्तानां अश्वादीनां संयमन-अर्था रज्जू रश्मिरिह गृह्यते ।
प्रग्राः, प्रग्रहः । ।

---

[#२६४]

1. <वृणोतेराच्छादने># । । PS_३,३.५४ । ।

_______Sठाञ्ठJKव्_३,३.५४ः

विभाषा प्र इति वर्तते ।
प्रशब्दे उपपदे वृणोतेः धातोः विभाषा घञ्प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादन-विशेष उच्यते ।
प्रावारः, प्रवरः ।
आच्छादने इति किं ? प्रवरा गौः । ।

---

1. <प्रौ भुवोऽवज्ञाने># । । PS_३,३.५५ । ।

_______Sठाञ्ठJKव्_३,३.५५ः

विभाषा इत्येव ।
परिशब्दे उपपदे भवतेः धातोः विभाषा घञ्प्रत्ययो भवति अवज्ञाने गम्यमाने ।
अवज्ञानं असत्कारः ।
परिभावः, परिभवः ।
अवज्ञाने इति किं ? सर्वतः भवनं परिभवः । ।

---

1. <एरच्># । । PS_३,३.५६ । ।

_______Sठा~ठ्JKव्_३,३.५६ः

भावे, अकर्तरि च कारके इति प्रकृतं अनुवर्तते यावत्कृत्य-ल्युटो बहुलं (*३,३.११३) इति ।
इ-वर्णान्ताद्धातोः भावे, अकर्तरि च कारके सञ्ज्ञायां अच्प्रत्ययो भवति ।
घञो ऽपवादः ।
चकारो विशेषण-अर्थः, अन्तः (*६,२.१४३) थाऽथ-घञ्-क्त-अज्-अब्-इत्र-कणां (*६,२.१४४) इति ।
चयः ।
अयः ।
जयः ।
क्षयः ।
अज्-विधौ भयादीनां उपसङ्ख्यानं ।
नपुंसके क्तादि-निवृत्त्य्-अर्थं ।
भयं ।
वर्षं ।
जवसवौ छन्दसि वक्तव्यौ ।
ऊर्वोरस्तुं मे जवः ।
पञ्चौदनः सवः । ।

---

1. <éदोरप्># । । PS_३,३.५७ । ।

_______Sठा~ठ्JKव्_३,३.५७ः

é-कारान्तेभ्यः उ-वर्णान्तेभ्यः च अप्प्रत्ययो भवति ।
घञोऽपवादः ।
पित्करणं स्वर-अर्थं ।
करः गरः ।
शरः ।
उ-वर्णान्तेभ्यः - यवः ।
लवः ।
पवः ।

द-कारो मुख-सुख-अर्थः ।
मा भूत्तादपि परः तपरः । ।

---

[#२६५]

1. <ग्रह-वृ-दृ-निश्चिगमश्च># । । PS_३,३.५८ । ।

_______Sठा~ठ्JKव्_३,३.५८ः

ग्रहादिभ्यः धातुभ्यः अप्प्रत्ययो भवति ।
घञोऽपवादः ।
निश्चिनोतेः तु अचोऽपवादः ।
ग्रहः ।
वरः ।
दरः ।
निश्चयः ।
गमः ।
निश्चि-ग्रहनं स्वर-अर्थं ।
विशिरण्योरुपसङ्ख्यानं ।
वशः ।
रणः ।
घञ्-अर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थं ।
प्रतिष्ठन्तेऽस्मिनिति प्रस्थः पर्वतस्य ।
प्रस्नाति अस्मिन्प्रस्नः ।
प्रपिबन्ति अस्यां इति प्रपा ।
आविध्यन्ति तेन इति आविधः ।
विहन्यन्तेऽस्मिनिति विघ्नः ।
आयुध्यते अनेन इति आयुधं । ।

---

1. <उपसर्गेऽदः># । । PS_३,३.५९ । ।

_______Sठा~ठ्JKव्_३,३.५९ः

अपित्येव ।
उपसर्गे उपपदे अदेर्धातोः अप्प्रययो भवति ।
प्रघसः ।
विघसः ।
उपसर्गे इति किं ? घासः । ।

---

1. <नौ ण च># । । PS_३,३.६० । ।

______Sठा~ठ्JKव्_३,३.६०ः

नि-शब्दे उपपदे अदेः धातोः ण-प्रत्ययो भवति, चकारादप्च ।
न्यादः, निघसः । ।

---

1. <व्यध-जपोरनुपसर्गे># । । PS_३,३.६१ । ।

______Sठा~ठ्JKव्_३,३.६१ः

व्यध जप इत्येतयोः अनुपसर्गयोः अप्प्रत्ययो भवति ।
घञोऽपवादः ।
व्यधः ।
जपः ।
अनुपसर्गे इति किं ? आव्याधा ।
उपजापः । ।

---

[#२६६]

1. <स्वन-हसोर्वा># । । PS_३,३.६२ । ।

______Sठा~ठ्JKव्_३,३.६२ः

अनुपसर्गे इत्येव ।
स्वन-हसोः अनुपसर्गयोर्वा अप्प्रत्ययो भवति ।
स्वनः, स्वानः ।
हसः, हासः ।
अनुपसर्गे इति किं ? प्रस्वानः ।
प्रहसः । ।

---

1. <यमः सम्-उप-नि-विषु च># । । PS_३,३.६३ । ।

_______Sठा~ठ्JKव्_३,३.६३ः

अनुपसर्गे वा इति वर्तते ।
सं उप नि वि इत्येतेषु उपपदेषु अनुपसर्गेऽपि यमेर्वा अप्प्रत्ययो भवति ।
घञोऽपवादः ।
संयमः, संयामः ।
उपयमः, उपयामः ।
नियमः, नियामः ।
वियमः, वियामः ।
अनुपसर्गात्खल्वपि -- यमः, यामः । ।

---

1. <नौ गद-नद-पठ-स्वनः># । । PS_३,३.६४ । ।

_______Sठा~ठ्JKव्_३,३.६४ः

अपित्येव ।
नि-शब्दे उपपदे गद नद पठ स्वन इत्येतेभ्यः धतुभ्यः वा अप्प्रत्ययो भवति ।
घञोऽपवादः ।
निगदः, निगादः ।
निनदः, निनादः ।
निपठः, निपाठः ।
निस्वनः, निस्वानः । ।

---

1. <क्वणो वीणायां च># । । PS_३,३.६५ । ।

_______Sठा~ठ्JKव्_३,३.६५ः

नौ वा अनुपसर्गे इति वर्तते ।
क्वणतेः धातोः निपूर्वादनुपसर्गाच्च वीणायां वा अप्प्रत्ययो भवति ।
घञोऽपवादः ।
सोपसर्गार्थं वीणाया ग्रहणं ।
निक्वणः, निक्वाणः ।

अनुपसर्गात्-- क्वणः, क्वाणः ।
वीणायां खल्वपि -- कल्याण-प्रक्वणा वीणा ।
एतेषु इति किं ? अतिक्वाणो वर्तते । ।

---

1. <नित्यं पणः परिमाणे># । । PS_३,३.६६ । ।

______Sठाञ्ठ्JKव्_३,३.६६ः

पण व्यवहारे स्तुतौ च, अस्माद्धातोर्नित्यं अप्प्रत्ययो भवति परिमाणे गम्यमाने ।
नित्य-ग्रहणं विकल्प-निवृत्त्य्-अर्थं ।
मूलकपणः ।
शाकपणः ।
संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर्बध्यते, तस्य+इदं अभिधानं ।
परिमाणे इति किं ? पाणः । ।

---

1. <मदोऽनुपसर्गे># । । PS_३,३.६७ । ।

______Sठाञ्ठ्JKव्_३,३.६७ः

मदेः धातोः अनुपसर्गातप्प्रत्ययो भवति ।
घञोऽपवादः ।
विद्यामदः ।
धनमदः ।
कुलमदः ।
अनुपसर्गे इति किं ? उन्मादः ।
प्रमादः । ।

---

[#२६७]

1. <प्रमद-सम्मदौ हर्षे># । । PS_३,३.६८ । ।

______Sठाञ्ठ्JKव्_३,३.६८ः

प्रमद सम्मद इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये ।
कन्यानां प्रमदः ।
कोकिलानां सम्मदः ।
हर्षे इति किं ? प्रमादः ।
सम्मादः ।
प्रसंभ्यां इति न+उक्तं ।
निपातनं रूढ्य्-अर्थं । ।

---

1. <सम्-उदोरजः पशुषु># । । PS_३,३.६९ । ।

_______Sठा~ठ्JKव्_३,३.६९ः

समुदोरुपपदयोः अजएर्धातोः पशु-विषये धात्व्-अर्थे अप्प्रत्ययो भवति ।
घञोऽपवादः ।
अज गति-क्षेपणयोः इति पठ्यते ।
स सम्पूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे ।
संजः पशूनां ।
समुदायः इत्यर्थः ।
उदजः पशूनां ।
प्रेरणं इत्यर्थः ।
पशुषु इति किं ? समाजो ब्राह्मणानां ।
उदाजः क्षत्रियाणां । ।

---

1. <अक्षेषु ग्लहः># । । PS_३,३.७० । ।

_______Sठा~ठ्JKव्_३,३.७०ः

ग्लहः इति निपात्यते, अक्ष-विषयश्चेद्धात्व्-अर्थो भवति ।
ग्रहेरप्सिद्ध एव, लत्व-अर्थं निपातनं ।
अक्षस्य ग्लहः ।
अक्षेषु इति किं ? ग्रहः पादस्य ।
अन्ये ग्लहिं प्रकृत्यन्तरं आहुः ।
ते घञं प्रत्युदाहरन्ति ।
ग्लाहः । ।

---

1. <प्रजने सर्तेः># । । PS_३,३.७१ । ।

________Sठा~ठ्JKव्_३,३.७१ः
सर्तेः धातोः प्रजने विषये अप्प्रत्ययो भवति ।
घञोऽपवादः ।
प्रजनं प्रथमं गर्भ-ग्रहणं ।
गवां उपसरः ।
पशूनां उपसरः ।
स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथमं उपसरणं उच्यते । ।

---

1. <ह्वः सम्प्रसारणं च न्य्-अभ्य्-उप-विषु># । । PS_३,३.७२ । ।

________Sठा~ठ्JKव्_३,३.७२ः

नि अभि उप वि इत्येतेषु उपपदेषु ह्वयतेः धातोः सम्प्रसारणं अप्प्रत्ययः च ।
घञोऽपवादः ।
निहवः ।
अभिहवः ।
उपहवः ।
विहवः ।
एतेषु इति किं ? प्रह्वायः । ।

---

1. <आङि युद्धे># । । PS_३,३.७३ । ।

________Sठा~ठ्JKव्_३,३.७३ः

आङि उपपदे ह्वयतेर्धातोः सम्प्रसारणं अप्प्रत्ययश्च भवति युद्धेऽभिधेये ।
आहूयन्तेऽस्मिनित्याहवः ।
युद्धे इति किं ? आह्वायः । ।

---

[#२६८]

1. <निपानं आहावः># । । PS_३,३.७४ । ।

_______Sठा~ठJKव्_३,३.७४ः

आङ्पूर्वस्य ह्वयतेर्धातोः सम्प्रसारणम्, अप्-प्रत्ययो, वृद्धिश्च निपात्यते निपानं चेदभिधेयं भवति ।
निपिबन्त्यस्मिन्निति निपानं उदकाधार उच्यते ।
आहावः पशूनां ।
कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते ।
निपानं इति किं ? आह्वायः । ।

---

1. <भावेऽनुपसर्गस्य># । । PS_३,३.७५ । ।

_______Sठा~ठJKव्_३,३.७५ः

अनुपर्गस्य ह्वयतेः सम्प्रसारणं अप्प्रत्ययश्च भवति भावे अभिधेये ।
हवः ।
हवे हवे सुहवं शूरं इन्द्रं ।
अनुपसर्गस्य इति किं ? आह्वायः ।
भाव-ग्रहणं अकर्तरि च कारके सञ्ज्ञायां (*३,३.१९) इत्यस्य निरास-अर्थं । ।

---

1. <हनश्च वधः># । । PS_३,३.७६ । ।

_______Sठा~ठJKव्_३,३.७६ः

भावेऽनुपसर्गस्य इति वर्तते ।
हन्तेर्धातोः अनुपसर्गे भावे अप्प्रत्ययो भवति, तत्संनियोगेन च भधादेशः, स चान्तोदात्तः ।
तत्र+उदात्त-निव्éत्तिस्वरेण अप उदात्तत्वं भवति ।
वधश्चोराणां ।
वधो दस्यूनां ।
भावे इत्येव, घातः ।
अनुपसर्गस्य इत्येव, प्रघातः, विघातः ।
चकारो भिन्न-क्रमत्वान्नादेशेन सम्बध्यते ।
किं तर्थि ? प्रकृतेन प्रत्ययेन ।

अप्च, यश्च अपरः प्राप्नोति ।
तेन घञपि भवति ।
घातो वर्तते । ।

---

1. <मूर्तौ घनः># । । PS_३,३.७७ । ।

______Sठाऍ्ठ्JKव्_३,३.७७ः

हनः इत्येव ।
मूर्तिः काठिन्यं ।
मूर्तौ अभिधेयायां हन्तेः अप्प्रत्ययो भवति, घनश्चादेशः ।
अभ्रघनः ।
दधिघनः ।
कथं घनं दधि इति ? धर्म-शब्देन धर्मी भण्यते । ।

---

1. <अन्तर्घनो देशे># । । PS_३,३.७८ । ।

______Sठाऍ्ठ्JKव्_३,३.७८ः

अन्तः पूर्वात्हन्तेः अप्प्रत्ययो भवति, घनादेशश्च भवति देशेऽभिधेये ।
अन्तर्घनः ।
सञ्ज्ञीभूतो वाहीकेसु देशविशेष उच्यते ।
अन्ये णकारं पठन्ति अन्तर्घणो देशः इति ।
तदपि ग्राह्यं एव ।
देशे इति किं ? अन्तर्घातोऽन्यः । ।

---

[#२६९]

1. <अगार-एकदेशे प्रघणः प्रघाणाश्च># । । PS_३,३.७९ । ।

______Sठाऍ्ठ्JKव्_३,३.७९ः

प्र-पूर्वस्य हन्तेः प्रघणः प्रघाणः इत्येतौ शब्दौ निपात्येते अगारैकदेशे वाच्ये ।
प्रघणः, प्रघाणः ।
द्वारप्रकोष्ठो बाह्य उच्यते ।
अगारैकदेशे इति किं ? प्रघातः अन्यः । ।

---

1. <उद्घनोऽत्याधानम्># । । PS_३,३.८० । ।

_______Sठा-ठJKव्_३,३.८०ः

उत्-पूर्वात्हन्तेः उद्घनः इति निपात्यतेऽत्याधानं चेद्भवति ।
उद्घनः ।
यस्मिन्काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते ।
उद्घातोऽन्यः । ।

---

1. <अपघनोऽङ्गम्># । । PS_३,३.८१ । ।

_______Sठा-ठJKव्_३,३.८१ः

अप-पूर्वस्य हन्तेः अपघनः इति निपात्यते, अङ्गं चेत्तद्भवति ।
अपघनः अङ्गं ।
अवयवः एकदेशः, न सर्वः ।
किं तर्हि ? पाणिः पादश्च अभिधीयते ।
अपघातः अन्यः । ।

---

1. <करणेऽयो-विद्रुषु># । । PS_३,३.८२ । ।

_______Sठा-ठJKव्_३,३.८२ः

हनः इति वर्तते ।
अयस्वि द्रु इत्येतेषु उपपदेषु हन्तेः धातोः करणे कारके अप्प्रत्ययो भवति, घनादेशश्च ।
अयो हन्यते अनेन इति अयोघनः ।
विघनः ।
द्रुघनः ।

द्रुघणः इति केचिदुदाहरन्ति ।
कथं णत्वं ? अरीहणादिषु पाठाथ् ।
पूर्वपदात्सञ्ज्ञायां अगः (*८,४.३) इति वा । ।

---

1. <स्तम्बे क च># । । PS_३,३.८३ । ।

_______Sठाञ्ठ्JKव्_३,३.८३ः

करणे हनः इति वर्तते ।
स्तम्ब-शब्दे उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति ।
चकारातप्च, तत्र घनादेशः ।
स्तम्बघ्नः, स्तम्बघनः ।
स्त्रियां स्तम्बघ्ना, स्तम्बघना इति इष्यते ।
करणे इत्येव, स्तम्बघातः । ।

---

1. <परौ घः># । । PS_३,३.८४ । ।

_______Sठाञ्ठ्JKव्_३,३.८४ः

करणे हनः इत्येव ।
परि-शब्दे उपपदे अन्तेर्धातोः अप्प्रत्ययो बह्वति करणे कारके, घ-शब्दश्चादेशः ।
परिहन्यते अनेन इति परिघः ।
पलिघः । ।

---

1. <उपघ्न आश्रये># । । PS_३,३.८५ । ।

_______Sठाञ्ठ्JKव्_३,३.८५ः

उप-पूर्वात्हन्तेः अप्प्रत्ययः उपधा-लोपश्च निपात्यते आश्रयेऽभिधेये ।
आश्रय-शब्दः सामीप्यं प्रत्यासत्तिं लक्षयति ।
पर्वतोपघ्नः ।
ग्रामोपघ्नः ।
आश्रये इति किं ? पर्वतोपघात एव अन्यः । ।

---

[#२७०]

1. <सङ्घ-उद्घौ गण-प्रशंसयोः># । । PS_३,३.८६ । ।

_______SठाऽठJKव्_३,३.८६ः

समुदोः उपपदयोः हन्तेः धातोः अप्प्रत्ययो भवति, टि-लोपः घत्वं च निपात्यते, यथासङ्ख्यं गणेऽभिधेये, प्रशंसायां गम्यमानायां ।
सङ्घः पशूनां ।
उद्घो मनुष्यः ।
गण-प्रशंसयोः इति किं ? सङ्घातः । ।

---

1. <निघो निमितम्># । । PS_३,३.८७ । ।

_______SठाऽठJKव्_३,३.८७ः

निघः इति नि-पूर्वाद्हन्तेः अप्प्रत्ययः, टि-लोपो घत्वं च निपात्यते, निमितं चेदभिधेयं भवति ।
समन्तात्मितं निमितम्, समारोहपरिणाहं ।
निघाः वृक्षाः ।
निघाः शालयः ।
निमितं इति किं ? निघातः । ।

---

1. <ड्वितः क्त्रिः># । । PS_३,३.८८ । ।

_______SठाऽठJKव्_३,३.८८ः

भावेऽकर्तरि च कारके इति वर्तते ।
डु इत्यस्य तस्माद्ड्वितो धातोः क्त्रिः प्रत्ययो भवति ।
त्रेर्मं नित्यं (*४,४.२०) इति वचनात्केवलो न प्रयुज्यते ।
डुपचष्पाके - पक्त्रिमं ।
डुवप्बीजसन्ताने - उप्त्रिमं ।
डुकृञ्- कृत्रिमं । ।

---

1. <ट्वितोऽथुच्># ।। PS_३,३.८९ ।।

_______Sठा~ठ्JKव्_३,३.८९ः

टु इत्यस्य, तस्मात्ट्वितो धातोः अथुच्प्रत्ययो भवति भावादौ ।
टुवेपृ कम्पने - वेपथुः ।
टुओश्वि गतिवृद्ध्योः - श्वयथुः ।
टुक्षु शब्दे - क्षवथुः ।।

---

1. <यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्># ।। PS_३,३.९० ।।

_______Sठा~ठ्JKव्_३,३.९०ः

भावे अकर्तरि च कारके इति वर्तते ।
यज-आदिभ्यो धातुभ्यो नङ्प्रत्ययो भवति ।
ङकारो गुण-प्रतिषेध-अर्थः ।
यज्ञः ।
याच्ञा ।
यत्नः ।
विश्नः ।
प्रश्नः ।
रक्ष्णः ।
प्रच्छेः असम्प्रसारणं ज्ञापकात्प्रश्ने च आसन्न-काले (*३,२.११७) इति ।।

---

1. <स्वपो नन्># ।। PS_३,३.९१ ।।

_______Sठा~ठ्JKव्_३,३.९१ः

स्वपेर्धातोः नन्प्रत्ययो भवति ।
नकरः स्वर-अर्थः ।
स्वप्नः ।।

---

[#२७१]

1. <उपसर्गे घोः किः># । । PS_३,३.९२ । ।

_______Sठा~ठ्JKव्_३,३.९२ः

भावे अकर्तरि च कारके इति वर्तते ।
उपसर्गे उपपदे घु-सञ्ज्ञकेभ्यः धातुभ्यः किः प्रत्ययो भवति ।
कित्करणं आतो लोप-अर्थं ।
प्रदिः ।
प्रधिः ।
अन्तर्धिः । ।

---

1. <कर्मण्यधिकरणे च># । । PS_३,३.९३ । ।

_______Sठा~ठ्JKव्_३,३.९३ः

घोः इत्येव ।
कर्मण्युपपदे घु-सञ्ज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति अधिकरणे कारके ।
जलं धीयते अस्मिनिति जलधिः ।
शरधिः ।
अधिकरन-ग्रहणमर्थान्तरनिरास-अर्थं ।
चकारः प्रत्यय-अनुकर्षण-अर्थः । ।

---

1. <स्त्रियां क्तिन्># । । PS_३,३.९४ । ।

_______Sठा~ठ्JKव्_३,३.९४ः

भावे अकर्तरि च कारके ति वर्तते ।
स्त्रीलिङ्गे भावादौ धातोः क्तिन्प्रत्ययो भवति ।
घञजपामपवादः ।
कृतिः ।
चितिः ।
मतिः ।

क्तिन्नावादिभ्यश्च वक्तव्यः ।
आबादयः प्रयोगतोऽनुसर्तव्याः ।
आप्तिः ।
राद्धिः ।
दीप्तिः ।
स्रस्तिः ।
ध्वस्तिः ।
लब्धिः ।
श्रुयजिस्तुभ्यः करणे ।
श्रूयते अनया इति श्रुतिः ।
इष्टिः ।
स्तुतिः ।
ग्लाम्लाज्याहाभ्यो निः ।
ग्लानिः ।
म्लानिः ।
ज्यानिः ।
हानिः ।
éकारल्वादिभ्यः क्तिन्निष्ठावद्भवति इति वक्तव्यं ।
कीर्णिः ।
गीर्णिः ।
जीर्णिः ।
शीर्णिः ।
लूनिः ।
यूनिः ।
सम्पदादिभ्यः क्विप् ।
सम्पद् ।
विपद् ।
प्रतिपद् ।
क्तिन्नपि इष्यते ।
सम्पत्तिः ।
विपत्तिः । ।

---

[#२७२]

1. <स्था-गा-पापचो भावे># । । PS_३,३.९५ । ।

______Sठा~ठ्JKव्_३,३.९५ः

स्त्रियां इति वर्तते ।
स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन्प्रत्ययो भवति ।
अङोऽपवादस्य बाधकः ।
प्रस्थितिः ।
उद्गीतिः ।
सङ्गीतिः ।

प्रपीतिः ।
इति ज्ञापकात्नात्यन्ताय बाधा भवति इति । ।

---

1. <मन्त्रे वृष-इष-पच-मन-विद-भू-वी-रा उदात्तः># । । PS_३,३.९६ । ।

_______Sठार्ठJKव्_३,३.९६ः

भावे स्त्रियां इति वर्तते ।
मन्त्रे विषये वृषादिभ्यः धातुभ्यः क्तिन्प्रत्ययो भवति उदात्तः ।
प्रकृति-प्रत्यययोः विभक्ति-विपरिणामेन सम्बन्धः ।
कस्मादेवं कृतं ? वैचित्र्य-अर्थं ।
वृष्टिः ।
इष्टिः ।
पक्तिः ।
मतिः ।
वित्तिः ।
भूतिः ।
वीतिः ।
रातिः ।
सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन् ।
उदात्त-अर्थं वचनं ।
इषेस्तु इच्छा (*३,३.१०१) इति निपातनं वक्ष्यति, ततः क्तिन्नपि विधीयते ।
मन्त्रादन्यत्र आदिरुदात्तः । ।

---

1. <ऊति-यूति-जूति-साति-हेति-कीर्तयश्च># । । PS_३,३.९७ । ।

_______Sठार्ठJKव्_३,३.९७ः
मन्त्रे इति न अनुवर्तते ।
ऊत्यादयः शब्दा निपात्यन्ते ।
उदात्तः इति वर्तते ।
अवतेः ज्वर-त्वर-स्रिव्य्-अवि-मवां उपधायाश्च (*६,४.२०) इति ऊटः ।
ऊतिः ।
स्वरार्थं वचनं ।
यौतेर्जवतेश्च यूतिः, जूतिः ।
दीर्धात्वं च निपात्यते ।
सातिः ।
स्यतेः इत्वाभावो निपात्यते, सनोतेर्वा जन-सन-खनां सञ्झालोः (*६,४.४२) इत्यात्वे कृते स्वरार्थं निपातनं ।
हन्तेर्हिनोतेर्वा हेतिः ।

कीर्तयतेः कीर्तिः । ।

---

1. <व्रज-यजोर्भावे क्यप्># । । PS_३,३.९८ । ।

_______Sठाञ्ठ्JKव्_३,३.९८ः

उदात्तः इत्येव ।
व्रज-यजोः धात्वोः स्त्री-लिङ्गे भावे क्यप्प्रत्ययो भवति उदात्तः ।
क्तिनोऽपवादः ।
व्रज्या ।
इज्या ।
पित्करणं उत्तरत्र तुगर्थं । ।

---

1. <सञ्ज्ञायां सम्-अज-निषद-निपत-मन-विद-षुञ्-शीङ्-भृञ्-इणः># । । PS_३,३.९९ । ।

_______Sठाञ्ठ्JKव्_३,३.९९ः

भावे इति न स्वर्यते ।
पूर्व एव अत्र अर्थाधिकारः ।
समजादिभ्यो धातुभ्यः स्त्रियां क्यप्प्रत्ययो भवति उदात्तः सञ्ज्ञायां विषये ।
समजन्ति अस्यामिति समज्या ।

[#२७३]

निषद्या ।
निपत्या ।
मन्या ।
विद्या ।
सुत्या ।
शय्या ।
भृत्या ।
इत्या ।
कथं तदुक्तं स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति इति ? भावाधिकारो भावव्यापारः वाच्यत्वेन विवक्षितः, न तु शास्त्रीयोऽधिकारः । ।

---

1. <कृञः श च># । । PS_३,३.१०० । ।

______Sठा~ठ्JKव्_३,३.१००ः

करोतेर्धातोः स्त्रियां शः प्रत्ययो भवति ।
चकारात्क्यप्च ।
योगविभागोऽत्र कर्तव्यः, क्तिन्नपि यथा स्याथ् ।
क्रिया, कृत्या, कृतिः । ।

---

1. <इच्च्या># । । PS_३,३.१०१ । ।

______Sठा~ठ्JKव्_३,३.१०१ः

इषेः धातोः शः प्रत्ययो यगभावश्च निपात्यते ।
इच्छा ।
परिचर्यापरिसर्यामृगयाटाट्यानां उपसङ्ख्यानं ।
परिचर्या ।
परिसर्या ।
मृगया ।
अटाट्या ।
जागर्तेरकारो वा ।
जागरा, जागर्या । ।

---

1. <अ प्रत्ययात्># । । PS_३,३.१०२ । ।

______Sठा~ठ्JKव्_३,३.१०२ः

प्रत्ययान्तेभ्यो धातुभ्यः स्तिर्या अकारः प्रत्ययो भवति ।
क्तिनोऽपवादः ।
चिकीर्षा ।
जिहीर्षा ।
पुत्रीया ।
पुत्रकाम्या ।
लोलूया ।
कण्डूया । ।

---

1. <गुरोश्च हलः># । । PS_३,३.१०३ । ।

______Sठा-ठJKव्_३,३.१०३ः
हलन्तो यो धातुः गुरुमान्, ततः स्त्रियां अकारः प्रत्ययो भवति ।
क्तिनोऽपवादः ।
कुण्डा ।
हुण्डा ।
ईहा ।
ऊहा ।
गुरोः इति किं ? भक्तिः ।
हलः इति किं ? नीतिः । ।

---

1. <षिद्-भिदादिभ्योऽङ्># । । PS_३,३.१०४ । ।

______Sठा-ठJKव्_३,३.१०४ः

षिद्भ्यः भिदादिभ्यश्च स्त्रियां अङ्प्रत्ययो भवति ।
गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते ।
ज्éष्- जरा ।
त्रपूष्- त्रपा ।
भिदादिभ्यः खल्वपि - भिदा ।
छिदा ।
विदा ।
क्षिपा ।
गुहा गिर्योषध्योः ।
श्रद्धा ।
मेधा ।
गोधा ।
आरा ।
हारा ।
कारा ।
क्षिया ।
तारा ।
धारा ।
लेखा ।
रेखा ।
चूडा ।
पीड ।
वपा ।

वसा।
सृजा।
क्रपेः सम्प्रसारणं च - कृपा।
भिदा विदारणे।
भित्तिः अन्या।
छिदा द्वैधीकरणे।
छित्तिः अन्या।
आरा शस्त्र्यां।
आर्तिः अन्या।
धारा प्रपाते।
धृतिः अन्या।।

---

[#२७४]

1. <चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च>#।। PS_३,३.१०५।।

_______Sठाञ्ठJKव्_३,३.१०५ः

चिति स्मृत्याम्, पूज पूजायाम्, कथ वाक्यप्रबन्धे, कुबि आच्छादने, चर्च अध्ययने चुरादिः, एभ्यो धातुभ्यः युचि प्राप्ते स्त्रियां अङ्प्रत्ययो भवति।
चिन्ता।
पूजा।
कथा।
कुम्बा।
चर्चा।
चकारात्युचपि भवति।
चिन्तना।।

---

1. <आतश्च+उपसर्गे>#।। PS_३,३.१०६।।

_______Sठाञ्ठJKव्_३,३.१०६ः

आकारान्तेभ्यः उपसर्गे उपपदे स्त्रियं अङ्प्रत्ययो भवति।
क्तिनोऽपवादः।
प्रदा।
उपदा।
प्रधा।
उपधा श्रदन्तरोरुपसर्गवद्वृत्तिः।
श्रद्धा।

अन्तर्धा।।

---

1. <ण्य्-आस-श्रन्थो युच्>#।।PS_३,३.१०७।।

_______SठाFठJKव्_३,३.१०७:

ण्यन्तेभ्यो धातुभ्यः, आस श्रन्थ इत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवति।
अकारस्य अपवादः।
कारणा।
हारणा।
आसना।
श्रन्थना।
कथं आस्या? ऋ-हलोर्ण्यत्(*३,१.१२४) भविष्यति।
वासरूप-प्रतिषेधश्च स्त्रीप्रकरण-विषयस्य+एव+उत्सर्ग-अपवादस्य।
श्रन्थिः क्र्यादिर्गृह्यते श्रन्थ विमोचनप्रतिहर्षयोः इति , न चुरादिः श्रन्थ ग्रन्थ सन्दर्भे इति।
ण्यन्तत्वेन+एव सिद्धत्वाथ्।
घट्टिवन्दिविधिभ्य उपसङ्ख्यानं।
घट्टना।
वन्दना।
वेदना।
घट्टेः भौवादिकस्य ग्रहणं घट्ट चलने इति, न चुअरादिकस्य, तस्य णेः इत्येव सिद्धत्वाथ्।
इषेरनिच्छार्थस्य युज्वक्तव्यः।
अध्येषणा।
अन्वेषना।
परेर्वा।
पर्येषना, परीष्टिः।।

---

[#२७५]

1. <रोग-आख्यायां ण्वुल्बहुलम्>#।।PS_३,३.१०८।।

_______SठाFठJKव्_३,३.१०८:

रोगाख्यायां गम्यमानायां धातोः ण्वुल्प्रत्ययो बहुलं भवति।
क्तिन्नादीनां अपवादः।
आख्या-ग्रहणं रोगस्य चेत्प्रत्ययान्तेन सञ्ज्ञा भवति।
बहुल-ग्रहणं व्यभिचर-अर्थं।
प्रच्छर्दिका।

प्रवाहिका ।
विचर्चिका ।
न च भवति ।
शिरोर्तिः ।
धात्वर्थ-निर्देशे ण्वुल्वक्तव्यः ।
आशिका ।
शायिका वर्तते ।
इक्श्तिपौ धातु-निर्देशे ।
भिदिः ।
छिदिः ।
पचतिः ।
पठतिः ।
वर्णात्कारः ।
निर्देश इति प्रकृतं ।
अकारः ।
इकारः ।
रादिफः ।
रेफः ।
मत्वर्थाच्छः ।
अकारलोपः ।
मत्वर्थीयः ।
इणजादिभ्यः ।
आजिः ।
आतिः ।
आदिः ।
इक्कृष्यादिभ्यः ।
कृषिः ।
किरिः । ।

---

1. <सञ्ज्ञायाम्># । । PS_३,३.१०९ । ।

_______Sठा~ठ्JKव्_३,३.१०९ः

सञ्ज्ञायां विषये धातोः ण्वुल्प्रत्ययो भवति ।
उद्दालकपुष्पभञ्जिका ।
वरणपुष्पप्रचायिका ।
अभ्यूषखादिका ।
आचोषखादिका ।
शालभञ्जिका ।
तालभञ्जिका । ।

---

[#२७६]

1. <विभा-आषख्यान-परिप्रश्नयोरिञ्च># । । PS_३,३.११० । ।

_______Sठाञ्ठJKव्_३,३.११०ः

पूर्वं परिप्रश्नः, पश्चादाख्यानं ।
सूत्रेऽल्पाच्तरस्य पूर्वनिपातः ।
परिप्रश्ने आख्याने च गम्यमाने धतोः इञ्प्रत्ययो भवति, चकारात्ण्वुलपि ।
विभाष-ग्रहणात्परोऽपि यः प्राप्नोति, सोऽपि भवति ।
कां त्वं कारिमकार्षीः, कां कारिकां अकार्षीः, कां क्रियामकार्षीः, कां कृत्यामकार्षीः, का कृतिमकार्षीः ? सर्वां कारिमकार्षम्, सर्वां कारिकां अकार्षम्, सर्वां क्रियामकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षं ।
कां गणिमजीगणः, कां गणिकामजीगणः, कां गणनामजीगणः ? सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनां ।
एवं कां याजिम्, कां याजिकाम्, कां याचिम्, कां यचिकाम्, कां पाचिम्, कां पाचिकां कां पचाम्, कां पक्तिम्, कां पाठिम्, कां पाठिकाम्, कां पठितिं इति द्रष्टव्यं ।
आख्यानपरिप्रश्नयोः इति किं ? कृतिः ।
हृतिः । ।

---

1. <पर्याय-अर्ह-र्ण-उत्पत्तिषु ण्वुच्># । । PS_३,३.१११ । ।

_______Sठाञ्ठJKव्_३,३.१११ः

पर्यायः परिपाटीक्रमः ।
अर्हणमर्हः, तद्योग्यता ।
ऋणं तत्यत्परस्य धार्यते ।
उत्पत्तिः जन्म ।
एतेष्वर्थेषु धातोः ण्वुच्प्रत्ययो भवति ।
क्तिन्नादीनां अपवादः ।
पर्याये तावत्- भवतः शायिका ।
भवतोऽग्रग्रासिका ।
अर्हे - अर्हति भवानिक्षुभक्षिकां ।
ऋणे - इक्षुभक्षिकां मे धरयसि ।
ओदनभोजिकां ।
पयःपायिकां ।
उत्पत्तौ - इक्षुभक्षिका मे उदपादि ।
ओदनभोजिका ।
पयःपायिका ।
विभाषा इत्येव, चिकीर्षा उत्पद्यते ।
ण्वुलि प्रकृते प्रत्ययान्तरकरनं स्वर-अर्थं । ।

---

1. <आक्रोशे नञ्यतिः># । । PS_३,३.११२ । ।

______SठाऽठJKव्_३,३.११२ः

विभाषा इति निवृत्तं ।
आक्रोशः शपनं ।
आक्रोशे गम्यमाने नञि उपपदे धातोः अनिः प्रत्ययो भवति ।
क्तिन्नादीनां अपवादः ।
अकरणिस्ते वृषल भूयाथ् ।
आक्रोशे इति किं ? अकृतिस्तस्य कटस्य ।
नञि इति किं ? मृतिस्ते वृषल भूयात् । ।

---

1. <कृत्य-ल्युटो बहुलम्># । । PS_३,३.११३ । ।

______SठाऽठJKव्_३,३.११३ः

भावे, अकर्तरि च कारके इति निवृतं ।
कृत्य-सञ्ज्ञकाः प्रत्ययाः ल्युट्च भौलं अर्थेषु भवन्ति ।
यत्र विहितास्ततोऽन्यत्र अपि भवन्ति ।
भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति ।
स्नानीयं चूर्णं ।
दानीयो ब्राह्मणः ।
करण-अधिकरणयोः भावे च ल्युठ् ।
अन्यत्र अपि भवति ।
अपसेचनं ।
अवस्रावणं ।
राजभोजनाः शालयः ।
राजाच्छादनानि वासांसि ।
प्रस्कन्दनं ।
प्रपतनं ।
बहुल-ग्रहणादन्येऽपि कृतः यथाप्राप्तं अभिधेयं व्यभिचरन्ति ।
पादाभ्यां ह्रियते पादहारकः ।
गले चोप्यते गलेचोपकः । ।

---

[#२७७]

1. <नपुंसके भावे क्तः># । । PS_३,३.११४ । ।

_______Sठाञ्ठJKव्_३,३.११४ः

नपुंसक-लिङ्गे भावे धतोः क्तः प्रत्ययो भवति ।
हसितं ।
सहितं ।
जल्पितं । ।

---

1. <ल्युट्च># । । PS_३,३.११५ । ।

_______Sठाञ्ठJKव्_३,३.११५ः

नपुंसक-लिङ्गे भावे धातोः ल्युट्प्रत्ययो भवति ।
हसनं छात्रस्य ।
शोभनं ।
जोपनं ।
शयनं ।
आसनं ।
योगविभाग उत्तरार्थः । ।

---

1. <कर्मणि च येन संस्पर्शात्कर्तुः शरीर-सुखम्># । । PS_३,३.११६ । ।

_______Sठाञ्ठJKव्_३,३.११६ः

येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीर-सुखं उत्पद्यते, तस्मिन्कर्मणि उपपदे धतोः नपुंसक-लिङ्गे भावे ल्युट्प्रत्ययो भवति ।
पूर्वेण+एव सिद्धे प्रत्यये नित्यसमास-अर्थं वचनं ।
उपपद-समासो हि नित्यः समासः ।
पयःपानं सुखं ।
ओदनभोजनं सुखं ।
कर्मणि इति किं ? तूलिकाया उत्थानं सुखं ।
संस्पर्शातिति किं ? अग्निकुण्डस्य उपासनं सुखं ।
कर्तुः इति किं ? गुरोः स्नापनं सुखं ।
स्नापयतेः न गुरुः कर्ता, किं तर्हि, कर्म ।

शरीरग्रहणं किं ? पुत्रस्य परिष्वजनं सुखं ।
सुखं मानसी प्रीतिः ।
सुखं इति किं ? कण्ट्कानां मर्दनं दुःखं ।
सर्वत्रासमासः प्रत्युदाह्रियते । ।

---

1. <करण-अधिकरणयोश्च># । । PS_३,३.११७ । ।

_______Sठा-ठ्JKव्_३,३.११७ः

करणेऽधिकरणे च कारके धातोः ल्युट्प्रत्ययो भवति ।
इध्मप्रव्रश्चनः ।
पलाशशातनः ।
अधिकरने - गोदोहनी ।
सक्तुधानी । ।

---

1. <पुंसि सञ्ज्ञायां घः प्रायेण># । । PS_३,३.११८ । ।

_______Sठा-ठ्JKव्_३,३.११८ः

करन-अधिकरनयोः इत्येव ।
पुंलिङ्गयोः करण-अधिकरनयोरभिधेययोः धातोः घः प्रत्ययो भवति समुदायेन चेत्सञ्ज्ञा गम्यते ।
प्रायग्रहणं अकात्स्न्र्य-अर्थं ।
दन्तच्छदः ।
उरश्छदः पटः ।
अधिकरणे खल्वपि - एत्य तस्मिन्कुर्वन्ति इति आकरः ।
आलयः ।
पुंसि इति किं ? प्रसाधनं ।
सञ्ज्ञायां इति किं ? प्रहरणो दण्डः ।
घकारः छन्देर्घेऽद्व्य्-उपसर्गस्य (*६,४.९६) विशेषण-अर्थः । ।

---

[#२७८]

1. <गोचर-सञ्चर-वह-व्रज-व्यज-आपण-निगमाश्च># । । PS_३,३.११९ । ।

_______Sठा-ठ्JKव्_३,३.११९ः

गोचरादयः शब्दाः घ-प्रययान्ता निपात्यन्ते पूर्वस्मिन्नेव अर्थे ।
हलश्च (*३,३.१२१) ।
इति घञं वक्ष्यति, तस्य अयं अपवादः ।
गावश्चरन्ति अस्मिनिति गोचरः ।
सञ्चरन्ते अनेन इति सञ्चरः ।
वहन्ति तेन वहः ।
व्रजन्ति तेन व्रजः ।
व्यजन्ति तेन व्यजः ।
निपातनातजेर्व्यघञपोः (*२,४.५६) इति वीभावो न भवति ।
एत्य तस्मिन्नापणन्ते इत्यापणः ।
निगच्छन्ति तस्मिनिति निगमः ।
चकारोऽनुक्त्-असमुच्चय-अर्थः ।
कषः ।
निकषः । ।

---

1. <अवे तृ-स्त्रोर्घञ्># । । PS_३,३.१२० । ।

_______Sठा-ठ्JKव्_३,३.१२०ः

अवे उपपदे तरतेः स्तृणातेश्च धातोः करन-अधिकरणयोः सञ्ज्ञायां घञ्प्रत्ययो भवति ।
घस्यापवादः ।
ञकारो वृद्ध्य्-अर्थः स्वरार्थश्च ।
घकारः उत्तरत्र कुत्व-अर्थः ।
अवतारः ।
अवस्तारः ।
कथं अवतारो नद्याः, न हीयं सज्ञा ? प्राय-अनुवृत्तेः असञ्ज्ञायां अपि भवति । ।

---

1. <हलश्च># । । PS_३,३.१२१ । ।

_______Sठा-ठ्JKव्_३,३.१२१ः

पुंसि सञ्ज्ञायाम्, करण-अधिकरणयोश्च इति सर्वं अनुवर्तते ।
हलन्ताद्धातोः करण-अधिकरणयोः घञ्प्रत्ययो भवति ।
घस्य अपवादः ।
लेखः ।

वेदः।
वेष्टः।
वन्धः।
मार्गः।
अपामार्गः।
वीमार्गः।।

---

1. <अध्याय-न्याय-उद्याव-संहार-आधार-आवायाश्च>#।। PS_३,३.१२२।।

_______Sठाऽ्ठ्JKव्_३,३.१२२ः

अध्याय-आदयः शब्दाः घञन्ता निपात्यन्ते।
पुंसि सञ्ज्ञायां घे प्राप्ते घञ्विधीयते।
अहलन्त-अर्थ आरम्भः।
अधीयते अस्मिनिति अध्यायः।
नीयत अनेन इति न्यायः।
उद्युवन्ति अस्मिनिति उद्यावः।
संह्रियन्तेऽनेन इति संहारः।
आध्रियन्ते अस्मिनिति आधारः।
आवयन्ति अस्मिन्निति आवायः।
चकारोऽनुक्तस्-अमुच्चय-अर्थः।
अवहारः।।

---

[#२७९]

1. <उदङ्कोऽनुदके>#।। PS_३,३.१२३।।

_______Sठाऽ्ठ्JKव्_३,३.१२३ः

उदङ्क इति निपात्यते अनुदक-विषयश्चेद्धात्व्-अर्थो भवति।
उत्पूर्वादञ्चतेः घञ्निपात्यते।
ननु च हलश्च (*३,३.१२१)।
इति सिद्ध एव घञ्? उदके प्रतिषेध-अर्थं इदं वचनं।
तैलोदङ्कः।
अनुदके इति किं? उदकोदञ्चनः।
घः कस्मान्न प्रत्युदाह्रियते? विशेषाभावाथ्।
घञ्यपि थाथादिस्वरेन अन्तोदात्त एव।।

---

1. <जालं आनायः># । । PS_३,३.१२४ । ।

_______Sठा~ठ्JKव्_३,३.१२४ः

आनायः इति निपात्यते जालं चेत्तद्भवति ।
आङ्-पूर्वात्नयतेः करने घञ्निपात्यते ।
आनायो मत्स्यानां ।
आनायो मृगाणां । ।

---

1. <खनो घ च># । । PS_३,३.१२५ । ।

_______Sठा~ठ्JKव्_३,३.१२५ः

खनतेः धातोः करण-अधिकरणयोः घः प्रत्ययो भवति ।
चकारात्घञ्च ।
आखनः, आखानः ।
डो वक्तव्यः ।
आखः ।
डरो वक्तव्यः ।
आखरः ।
इको वक्तव्यः ।
आखनिकः ।
इकवको वक्तव्यः ।
आखनिकवकः । ।

---

1. <ईषद्-दुः-सुषु कृच्छ्र-अकृच्च्र-अर्थेषु खल्># । । PS_३,३.१२६ । ।

_______Sठा~ठ्JKव्_३,३.१२६ः

करण-अधिकरणयोः इति निवृत्तं ।
ईषत्दुस्सु इत्येतेषु उपपदेषु कृच्छ्राकृच्छ्र-अर्थेषु धतोः खल्प्रत्ययो भवति ।
कृच्छ्रं दुःखम्, तद्गुरो विशेषणं ।

अकृच्छ्रं सुखम्, तदितरयोः विशेषनम्, सम्भवाथ् ।
ईषत्करो भवता कटः ।
दुष्करः ।
सुकरः ।
ईषद्भोजः ।
दुर्भोजः ।
सुभोजः ।
ईषदादिषु इति किं ? कृच्छ्रेण कार्यः कटः ।
कृच्छ्राकृच्छ्र-अर्थेषु इति किं ? ईषत्कार्यः ।
लकारः स्वर-अर्थः ।
खित्-करणं उत्तरक्र मुमर्थं ।।

---

[#२८०]

1. <कर्तृ-कर्मणोश्च भू-कृञोः># ।। PS_३,३.१२७ ।।

_______Sठान्ठ्JKव्_३,३.१२७ः

भवतेः करोतेश्च धातोः यथासङ्ख्यं कर्तरि कर्मणि च+उपपदे, चकारादीषदादिषु च खल्प्रत्ययो भवति ।
ईषदाढ्यम्भवं भवता ।
दुराढ्यम्भवं ।
ईषदाढ्यङ्करः ।
स्वाढ्यङ्करो देवदत्तो भवता ।
कर्तृ-कर्मणोश्च्व्य्-अर्थयोरिति वक्तव्यं ।
इह मा भूत्, स्वाढ्येन भूयते ।।

---

1. <आतो युच्># ।। PS_३,३.१२८ ।।

_______Sठान्ठ्JKव्_३,३.१२८ः

ईषदादयोऽनुवर्तन्ते ।
कर्तृ-कर्मणोः इति न स्वर्यते ।
कृच्छ्राकृच्छ्र-अर्थेषु ईषदादिषु उपपदेषु आकारान्तेभ्यो धतुभ्यः युच्प्रत्ययो भवति ।
खलोऽपवादः ।
ईषत्पानः सोमो भवता ।
दुष्पानः ।
सुपानः ।
ईषद्दानो गौर्भवता ।
दुर्दानः ।

सुदानः । ।

---

1. <छन्दसि गत्य्-अर्थेभ्यः># । । PS_३,३.१२९ । ।

______Sठाञ्ठJKव्_३,३.१२९ः
ईषदादिसु कृच्छ्राकृच्छ्र-अर्थेषु उपपदेषु गत्य्-अर्थेभ्यो धातुभ्यः छन्दसि विषये युच्प्रत्ययो भवति ।
खलोऽपवादः ।
सूपसदनोऽग्निः ।
सूपसदनं अन्तरिक्षं । ।

---

1. <अन्येभ्योऽपि दृश्यते># । । PS_३,३.१३० । ।

______Sठाञ्ठJKव्_३,३.१३०ः

अन्येभ्योऽपि धातुभ्यः गत्य्-अर्थेभ्यः छन्दसि विषये युच्प्रत्ययो दृश्यते ।
सुदोहनामकृणोद्ब्रह्मणे गां ।
सुवेदनामकृणोर्ब्रह्मणे गां ।
भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः ।
दुःशासनः ।
दुर्योधनः ।
दुर्दर्शनः ।
दुर्धर्षणः ।
दुर्मर्षणः । ।

---

1. <वर्तमान-सामीप्ये वर्तमानवद्वा># । । PS_३,३.१३१ । ।

______Sठाञ्ठJKव्_३,३.१३१ः

समीपं एव सामीप्यं ।
ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादि-सिद्ध्य्-अर्थं ।
वर्तमान-समीपे भूते भविष्यति च वर्तमानाद्धातोः वर्तमानवत्प्रत्यया वा भवन्ति ।
वर्तमने लट्(*३,२.१२३) इत्यारभ्य यावदुणादयो बहुलं (*३,३.१) इति वर्तामाने प्रत्यया उक्ताः, ते भूत-भविष्यतोर्विधीयन्ते ।

[#२८१]

कदा देवदत्त आगतोऽसि ? अयं आगच्छामि ।
आगच्छन्तं एव मां विद्धि ।
अयं आगमं ।
एषोऽस्मि आगतः ।
कदा देवदत्त गमिष्यसि ? एष गच्छामि ।
गच्छन्तं एव मा विद्धि ।
एष गमिष्यामि ।
गन्तास्मि ।
वत्करणं सर्वसादृश्य-अर्थं ।
येन विशेषणेन वर्तमाने प्रत्ययाः विहिताः प्रकृत्योपपदोपाधिना तथा+एव अत्र भवन्ति ।
पवमानः ।
यजमानः ।
अलङ्करिष्णुः ।
सामीप्य-ग्रहणं किं ? विप्रकर्ष-विवक्षायां मा भूत्, परुदगच्छत्पाटलिपुत्रं ।
वर्षेण गमिष्यति ।
यो मन्यते गच्छामि इति पदं वर्तमाने काले एव वर्तते, कालान्तरगतिस्तु वाक्याद्भवति, न च वाक्यगम्यः कालः पदसंस्कारवेलायां उपयुज्यते इति तादृशं वाक्यार्थ-प्रतिपत्तारं प्रति प्रकरणं इदं नारभ्यते ।
तथा च श्वः करिष्यति, वर्षेण गमिष्यति इति सर्वं उपपद्यते । ।

---

1. <आशंसायां भूतवच्च># । । PS_३,३.१३२ । ।

______Sठा~ठ्JKव्_३,३.१३२ः

वा इत्येव ।
वर्तमान-समीप्ये इति न अनुवर्तते ।
आशंसनं आशंसा, अप्राप्तस्य प्रियार्थस्य प्राप्तुं इच्छा ।
तस्याश्च भविष्यत्कालो विषयः ।
तत्र भविष्यति काले आशंसायां गम्यमानायां धातोः वा भूतवत्प्रत्यया भवन्ति, चकाराद्वर्तमानवच्च ।
उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणं अध्यगीष्महि, एते व्याकरणं अधीतवन्तः, अधीमहे, अध्येष्यामहे ।
सामान्य-अतिदेशे विशेषानतिदेशाल्लङ्-लिटौ न भवतः ।
आशंसायां इति किं ? आगमिष्यति । ।

---

1. <क्षिप्र-वचने लृट्># । । PS_३,३.१३३ । ।

______Sठा~ठ्JKव्_३,३.१३३ः

आशंसायां इत्येव ।

क्षिप्रवचने उपपदे आशंसायां गम्यमानायां धातोः लृट्प्रत्ययो भवति ।
भूतवच्च इत्यस्य अयं अपवादः ।
उपाध्यायश्चेत्क्षिप्रं आगमिष्यति, क्षिप्रं व्याकरणं अध्येष्यामहे ।
वचन-ग्रहणं पर्याय-अर्थं ।
क्षिप्रम्, शीघ्रम्, आशु, त्वरितम्, अध्येष्यामहे ।
न इति वक्तव्ये लृड्-ग्रहणं लुटोऽपि विषये यथा स्याथ् ।
श्वः क्षिप्रं अध्येष्यमहे । ।

---

1. <आशंसा-वचने लिङ्># । । PS_३,३.१३४ । ।

_______Sठाऽठ्JKव्_३,३.१३४ः

आशंसा येन+उच्यते तदाशंसावचनं ।
तस्मिन्नुपपदे धातोर्लिङ्प्रत्ययो भवति भूतवच्च इत्यस्य अयं अपवादः ।
उपाध्यायश्चेदागच्छेत्, आशंसे युक्तोऽधीयीय ।
आशंसे अवकल्पये युक्तोऽधीयीय ।
आशंसे क्षिप्रं अधीयीय । ।

---

[#२८२]

1. <न अनद्यतनवत्क्रियाप्रबन्ध-सामीप्ययोः># । । PS_३,३.१३५ । ।

_______Sठाऽठ्JKव्_३,३.१३५ः

भूतानद्यतने भविष्यदनद्यतने च लङ्-लुटौ विहितौ, तयोरयं प्रतिषेधः ।
अनद्यतनवत्प्रत्यय-विधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने ।
क्रियाणां प्रबन्धः सातत्येनानुष्ठानं ।
कालानां सामीप्यं तुल्यजातीयेनाव्यवधानं ।
यावज्जीवं भृशमन्नमदाथ् ।
भृशमन्नं दास्यति ।
यावज्जीवं पुत्रानध्यापिपथ् ।
यावज्जीवमध्यापयिष्यति ।
सामीप्ये खल्वपि - येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित ।
येयममावास्या आगामिनी, एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते ।
द्वौ प्रतिषेधौ यथाप्राप्तस्य अभ्यनुज्ञापनाय । ।

1. <भविष्यति मर्यादा-वचनेऽवरस्मिन्># । । PS_३,३.१३६ । ।

_______Sठाञ्ठ्JKव्_३,३.१३६ः

नानद्यतनवतिति वर्तते ।
अक्रिय-प्रबन्ध-अर्थम्, असामीप्यार्थं च वचनं ।
भविष्यति काले मर्यादा-वचने सत्यवरस्मिन्प्रविभागेऽनद्यतनवत्प्रत्यय-विधिर्न भवति ।
योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून्पास्यामः ।
भविष्यति इति किं ? योऽयमध्वा गतः आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र युक्ता अध्यैमहि, तत्र द्विरोदनं अभुञ्ज्महि, तत्र सक्तूनपिबाम ।
मर्यादावचने इति किं ? योऽयमध्वा निरवधिको गन्तव्यः, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, सक्तून्पाता स्मः ।
अवरस्मिनिति किं ? योऽयमध्वा गन्तव्यः आपाटलिपुत्रात्, तस्य यत्परं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून्पातास्मः ।
इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता ।
तत्र च विशेषं वक्ष्यति । ।

---

1. <काल-विह्भागे च अनहोरात्राणाम्># । । PS_३,३.१३७ । ।

_______Sठाञ्ठ्JKव्_३,३.१३७ः

भविष्यति मर्यादा-वचनेऽवरस्मिनिति वर्तते ।
कालमर्यादाविभागे सत्यवर्स्मिन्प्रविभागे भविष्यति कालेऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहो-रात्र-सम्भन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः ।
पूर्वेण+एव सिद्धे वचनं इदं अहो-रात्र-निषेध-अर्थं ।
योग-विभाग उत्तरार्थः ।
योऽयं संवत्सर आगामी, तत्र यदवरमाग्रहायण्याः, तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे ।
भविष्यति इत्येव ।
योऽयं वत्सरोऽतीतः, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्जमहि ।
मर्यादावचने इत्येव ।
योऽयं निरवधिकः काल आगामी, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे ।
अवरस्मिनित्येव ।
परस्मिन्विभाषां वक्ष्यति ।
अहो-रात्राणां इति किं ? त्रिविधं उदाहरणं - योऽयं मास आगामी, तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी, तस्य योऽवरोऽर्धमासः, योऽयं त्रिंशदहोरात्र आगामी, तस्य योऽवरः पञ्चदश-रात्रः, तत्र युक्ता अध्येतासमहे, तत्र सक्तून्पातास्मः ।
सर्वथा अहोरात्रस्पर्शे प्रतिषेधः । ।

---

[#२८३]

1. <परस्मिन्विभाषा># । । PS_३,३.१३८ । ।

______Sठान्ठJKव्_३,३.१३८ः

भविष्यति मर्यादा-वचने कालविभागे च अनहोरात्राणां इति सर्वं अनुवर्तते ।
कालमर्यादाविभागे सति भविस्यति काले परस्मिन्प्रविभागे विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहो-रात्र-सम्बन्धी प्रविभागः ।
अवरस्मिन्वर्जं पूर्वं अनुवर्तते ।
अवरस्मिन्पूर्वेण प्रतिषेध उक्तः, सम्प्रति परस्मिन्नप्राप्त एव विकल्प उच्यते ।
योऽयं संवत्सर आगामी, तस्य यत्परमाग्रहायण्याः तत्र युक्ता अध्येष्यामहे, अध्येतास्महे, तत्र सक्तून्पास्यामः, तत्र सक्तून्पातास्मः ।
अनहोरात्राणां इत्येव ।
योऽयं त्रिंशद्रात्र आगामी, तस्य यः परः पञ्चदश-रात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून्पातास्मः ।
भविष्यति इत्येव ।
योऽयं संवत्सरोऽतीतः, तस्य यत्परमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि ।
मर्यादावचने इत्येव ।
योऽयं संवत्सरो निरवधिकः काल अगामी, तस्य यत्प्रमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून्पातास्मः ।
काल-विभागे इत्येव ।
योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यत्परं कौशाम्ब्याः, तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे ।
इति सर्वत्र अनद्यतनवत्प्रत्यया उदाहार्याः । ।

---

1. <लिङ्-निमित्ते लृङ्क्रिया-अतिपत्तौ># । । PS_३,३.१३९ । ।

______Sठान्ठJKव्_३,३.१३९ः

भविष्यति इत्यनुवर्तते ।
हेतु-हेतुमतोर्लिङ्(*३,३.१५६) इत्येवं आदिकं लिङो निमित्तं ।
तत्र लिङ्-निमित्ते भविष्यति काले लृङ्प्रत्ययो भवति क्रियातिपत्तौ सत्यां ।
कुतश्चिद्वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः ।
दक्षिणेन चेदायास्यन्न शकटं पर्यभविस्यथ् ।
यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यथ् ।
अभोक्ष्यत भवान्घृतेन यदि मत्समीपमागमिष्यथ् ।
भविष्यत्काल-विषयं एतद्वचनं ।
भविस्यदपर्याभवनं च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानं ।
लिङ्गिलिङ्गे बुद्ध्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते, यदि कमलकमाह्वास्यन्न शक्टं पर्याभविष्यतिति ।
हेतुहेतुमतोराह्वानापर्याभवनयोः भविष्यत्काल-विषययोः अतिपत्तिः इतो वाक्यादवगम्यते । ।

---

1. <भूते च># । । PS_३,३.१४० । ।

______Sठाऱ्ठ्JKव्_३,३.१४०ः

लिङ्-निमित्ते लृङ्क्रिय-अतिपत्तौ इति सर्वं अनुवर्तते ।
पूर्वेन भविष्यति विहितः सम्प्रति भूते विधीयते ।
भूते च काले लिङ्-निमित्ते क्रिय-अतिपत्तौ सत्यां लृङ्प्रत्ययो भवति ।
उत-अप्योः समर्थयोर्लिङ्(*३,३.१५२) इत्यारभ्य लिङ्-निमित्तेषु विधानं एतथ् ।
प्राक्ततो विकल्पं वक्ष्यति ।
दृष्टो मया भवत्पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टोऽभविष्यत्, तदा अभिक्ष्यत ।
न तु भुक्तवान्, अन्येन पथा स गतः । ।

---

[#२८४]

1. <वा-ऊ-उत-अप्योः># । । PS_३,३.१४१ । ।

______Sठाऱ्ठ्JKव्_३,३.१४१ः

भूते लिङ्-निमित्ते लृङ्क्रिय-अतिपत्तौ इति सर्वं अनुवर्तते ।
वा आ उत-अप्योः वोताप्योः ।
मर्यादायां अयं आङ्, न अभिविधौ ।
उत-अप्योः समर्थयोर्लिङ्(*३,३.१५२) इति वक्ष्यति ।
प्रागेतस्मात्सूत्रावधेः यदित ऊर्ध्वं अनुक्रमिष्यामः, तत्र भूते लिङ्-निमित्ते क्रिय-अतिपत्तौ लृङ्वा भवति इत्येतदधिकृतं वेदितव्यं ।
वक्ष्यति, विभाषा कथमि लिङ्च (*३,३.१४३) - कथं नाम तत्र भवान्वृषलं अयाजयिष्यथ् ।
यथाप्राप्तं च - याजयेत् । ।

---

1. <गर्हायां लड्-अपि-जात्वोः># । । PS_३,३.१४२ । ।

______Sठाऱ्ठ्JKव्_३,३.१४२ः

गर्हा कुत्सा इत्यनर्थान्तरं ।
गर्हायां गम्यमानायां अपि-जात्वोः उपपदयोः धातोः लट्प्रत्ययो भवति ।
वर्तमने लटुक्तः काल-सामान्ये न प्राप्नोति इति विधीयते ।
कालविशेष-विहितांश्च अपि प्रत्ययानयं परत्वादस्मिन्विषये वाधते ।
अपि तत्रभवान्वृषलं याजयति, जातु तत्रभवान्वृषलं याजयति, गर्गामहे, अहो अन्याय्यं एतद् ।
लिङ्-निमित्ताभावादिह क्रिय-अतिपत्तौ लृङ्न भवति । ।

---

1. <विभाष कथमि लिङ्च># । । PS_३,३.१४३ । ।

_______Sठाऽ्ठJKव्_३,३.१४३ः

गर्हायां इति वर्तते ।
कथमि उपपदे गर्हायां गम्यमानायं धातोः लिङ्प्रत्ययो भवति, चकाराल्लट्च ।
विभाषा-ग्रहणं यथास्वं काल-विषये विहितानां अबाधन-अर्थं ।
कथं नाम तत्रभवान्वृषलं याजयेत्, कथं नाम तत्रभवान्वृषलं याजयति ।
कथं नाम तत्रभवान्वृषलं याजयिष्यति ।
कथं नाम तत्रभवान्वृषलं याजयिता ।
कथं नाम तत्रभवान्वृषलं याजयेथ् ।
कथं नाम तत्रभवान्वृषलं अयाजयथ् ।
कथं नाम तत्रभवान्वृषलं यायजां चकार ।
अत्र लिङ्-निमित्तं अस्ति इति भूत-विवक्षायां क्रिय-अतिपत्तौ वा लृङ् ।
भविष्यद्विवक्षायां सर्वत्र नित्येन+एव लृङा भवितव्यं । ।

---

1. <किंवृत्ते लिङ्-लृटौ># । । PS_३,३.१४४ । ।

_______Sठाऽ्ठJKव्_३,३.१४४ः

गर्हायां इत्येव विभाषा न स्वर्यते ।
किंवृत्ते उपपदे गर्हायां गम्यमानायां धातोः लिङ्-लृटौ प्रत्ययौ भवतः ।
सर्वलकाराणां अपवादः ।
लिङ्-ग्रहणं लटोऽपरिग्रह-अर्थं ।
को नाम वृषलो यं तत्रभवान्याजयेत्, यं तत्रभवान्वृषलं याजयिष्यति ।
कतरो नाम, कतमो नाम यां तत्रभवान्वृषलं याजयेत्, याजयिष्यति ।
भूते क्रियातिपत्तौ वा लृङ् ।
भविष्यति तु नित्यं ।
को नाम वृषलो यं तत्रभवानयाजयिष्यत् । ।

---

[#२८५]

1. <अनवक्लृप्त्य्-अमर्षयोरकिंवृत्तेऽपि># । । PS_३,३.१४५ । ।

_______Sठा~ठ्JKव्_३,३.१४५ः

गर्हायां इति निवृत्तं ।
अनवक्लृप्तिः असम्भावना ।
अमर्षः अक्षमा ।
किंवृत्तेऽकिंवृत्ते च+उपपदे अनवक्लृप्त्य्-अमर्षयोः धातोः लिङ्-लृटौ प्रत्ययौ भवतः ।
सर्व-लकाराणां अपवादः ।
बह्वचः पूर्वनिपातो लक्षणव्यभिचारचिह्नं ।
तेन यथासङ्ख्यं न भवति ।
अनवक्लृप्तौ तावत्- न अवकल्पयामि, न सम्भावयामि, न श्रद्दधे तत्रभवान्नाम वृषलं याजयेत्, तत्रभवान्नाम वृषलं याजयिष्यति ।
को नाम वृषलो यं तत्रभवान्वृषलं याजयेत्, को नाम तत्रभवान्वृषलं याजयिष्यति ।
अमर्षे - न मर्षयामि तत्रभवान्वृषलं याजयेत्, याजयिष्यति ।
को नाम वृषलो यं तत्रभवान्याजयेत्, याजयिष्यति ।
भूत-विवक्षायां तु क्रिय-अतिपत्तौ वा लृङ्भवति ।
भविष्यति नित्यं ।
न अवकल्पयामि तत्रभवान्नाम वृषलं अयाजयिष्यत् । ।

---

1. <किंकिल-अस्त्य्-अर्थेषु लृट्># । । PS_३,३.१४६ । ।

_______Sठा~ठ्JKव्_३,३.१४६ः

अनवक्लृप्त्य्-अमर्षयोः इति वर्तते ।
किंकिल-शब्दः समुदाय एव उपपदं ।
अस्त्य्-अर्थाः अस्तिभवति - विद्यतयः ।
किंकिल-अस्त्य्-अर्थेषु उपपदेषु अनवक्लृप्त्य्-अमर्षयोः धातोः लृट्प्रत्ययो भवति ।
लिङोऽपवादः ।
किं - किल नाम तत्रभवन्वृषलं याजयिष्यति ।
अस्ति नाम तत्रभवान्वृषलं याजयिष्यति ।
भवति नाम तत्रभवान्वृषलं याजयिष्यति ।
विद्यते नाम तत्रभवान्वृषलं याजयिष्यति ।
न श्रद्दधे, न मर्षयामि ।
लिङ्-निमित्तं इह न अस्ति तेन लृङ्न भवति । ।

---

1. <जातु-यदोर्लिङ्># । । PS_३,३.१४७ । ।

_______Sठा~ठ्JKव्_३,३.१४७ः

अनवक्लृप्त्य्-अमर्षयोः इत्येव ।
जातु यदा इत्येतयोः उपपदयोः अनवक्लृप्त्य्-अमर्षयोः गम्यमानयोः धातोः लिङ्प्रत्ययो भवति ।
लृटोऽपवादः ।
जातु तत्रभवान्वृषलं याजयेत्, यन्नाम तत्रभवान्वृषलं याजयेत्, न श्रद्दधे, न मर्षयामि ।
जातु-यदोर्लिङ्-विधाने यदायद्योरुपसङ्ख्यानं ।
यदा भवद्-विधः क्षत्रियं याजयेत्, यदि भवद्-विधः क्षत्रियं याज्येत्, न श्रद्दधे, न मर्षयामि ।
क्रिय-अतिपत्तौ भूते वा लृङ् ।
भविष्यति नित्यं । ।

---

1. <यच्चयत्रयोः># । । PS_३,३.१४८ । ।

______Sठा-ठ्JKव्_३,३.१४८ः

अनवक्लृप्त्य्-अमर्षयोः इत्येव ।
यच्च यत्र इत्येतयोः उपपदयोरनवक्लृप्त्य्-अमर्षयोः गम्यमानयोः धातोः लिङ्प्रत्ययो भवति ।
लृटोऽपवादः ।
योग-विभाग उत्तरार्थः ।
यथासङ्ख्यं नेष्यते ।
यच्च तत्रभवान्वृषलं याजयेथ् ।
यत्र तत्रभवान्वृषलं याजयेथ् ।
क्रिय-अतिपत्तौ यथायथं लृङ्भवति । ।

---

[#२८६]

1. <गर्हायां च># । । PS_३,३.१४९ । ।

______Sठा-ठ्JKव्_३,३.१४९ः

अनवक्लृत्प्य्-अमर्षयोः इति निवृत्तं ।
गर्हा, निन्दा, कुत्सा इत्यनर्थान्तरं ।
यच्च यत्र इत्येतयोः उपपदयोर्धतोः लिङ्प्रत्ययो भवति गर्हायां गम्यमानायां ।
सर्वलकाराणां अपवादः ।
यच्च तत्रभवान्वृषलं याजयेत्, यत्र तत्रभवान्वृषलं याजयेद्द्धो वृद्धः सन्ब्राह्मणः, गर्हामहे, अहो अन्याय्यं एतथ् ।
क्रियातिपत्तौ यथायथं लृङ्भवति । ।

---

1. <चित्रीकरणे च># । । PS_३,३.१५० । ।

_______Sठा~ठ्JKव्_३,३.१५०ः
यच्चयत्रयोः इत्येव ।
चत्रीकरणं आश्चर्यम्, अद्भुतम्, विस्मयनीयं ।
यच्चयत्रयोः उपपदयोः चित्रीकरणे गम्यमाने धातोः लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
यच्च तत्रहबवान्वृषलं याजयेत्, यत्र तत्रभवान्वृषलं याजयेत्, आश्चर्यं एतथ् ।
क्रिय-अतिपत्तौ यथायथं लृङ्भवति । ।

---

1. <शेषे लृङ्-अयदौ># । । PS_३,३.१५१ । ।

_______Sठा~ठ्JKव्_३,३.१५१ः

यच्चयत्राभ्यां अन्यत्र चित्रीकरणं शेषः ।
शेषे उअपपदे चित्रीकरणे गम्यमाने धातोः लृट्प्रत्ययो भवति, यदि-शब्दश्चेन्न प्रयुज्यते ।
सर्वलकाराणां अपवादः ।
आश्चर्यम्, चित्रं अद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरनमध्येष्यते ।
अयदौ इति किं ? आश्चर्यं यदि स भुञ्जीत, यदि सोऽधीयीत ।
लिङ्- निमिताभावातिह लृङ्न भवति । ।

---

1. <उत-अप्योः समर्थयोर्लिङ्># । । PS_३,३.१५२ । ।

_______Sठा~ठ्JKव्_३,३.१५२ः

उत अपि इत्येतयोः समर्थयोः धातोः लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
बाढं इत्यस्मिन्नर्थे समानार्थत्वं अनयोः ।
उत कुर्याथ् ।
अपि कुर्याथ् ।
उताधीयीत ।
अप्यधीयीत ।
बाढमध्येष्यते इत्यर्थः ।
समर्थयोः इति किम्? उत दण्डः पतिष्यति ? अपि द्वारं धास्यति ।
प्रश्नः प्रच्छादनं च गम्यते ।
वा-आ-उताप्योः (*३,३.१४१) इति विकल्पो निवृत्तः ।
इतः प्रभृटि भूतेऽपि लिङ्-निमित्ते क्रिय-अतिपत्तौ नित्यं लृङ् ।

भविष्यति तु सर्वत्र+एव नित्यः । ।

---

1. <काम-प्रवेदनेऽकच्चिति># । । PS_३,३.१५३ । ।

_______Sठाऱ्ठ्JKव्_३,३.१५३ः

स्वाभिप्राया-विष्करणं काम-प्रवेदनं ।
कामः, इच्छा, अभिलाषः इत्यनर्थान्तरं ।
तस्य प्रवेदनं प्रकाशनं ।
तस्मिन्गम्यमाने अकच्चिति उपपदे धातोर्लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
कामो मे भुञ्जीत भवान् ।
अभिलाषो मे भुञ्जीत भवान् ।
अकच्चिति इति किं ? कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।
माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती । ।

---

[#२८७]

1. <सम्भावनेऽलं इति चेत्सिद्ध-अप्रयोगे># । । PS_३,३.१५४ । ।

_______Sठाऱ्ठ्JKव्_३,३.१५४ः

लिङित्येव ।
सम्भावनं क्रियासु योग्यताध्यवसानम्, शक्ति-श्रद्धानं ।
तदिदानीं अल्मर्थेन विशेष्यते ।
तच्चेत्सम्भावनं पर्याप्तमवितथं भवति ।
सिद्ध-अप्रयोगे इत्यलमो विशेषणं ।
सिद्धश्चे दलमोऽप्रयोगः ।
क्व च असौ सिद्धः ? यत्र गम्यते च-अर्थो न च असौ प्रयुज्यते ।
तदीदृशे सम्भावनोपाधिकेऽर्थे वर्तमानाद्धातोः लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
अपि पर्वतं शिरसा भन्द्याथ् ।
अपि द्रोणपाकं भुञ्जीत ।
अलं इति किं ? विदेशस्थायी देवदत्तः प्रायेन गमिष्यति ग्रामं ।
सिद्धाप्रयोगे इति किं ? अलं देवदत्तो हस्तिनं हनिष्यति ।
क्रियातिपत्तौ भूते भविष्यति च नित्यं लृङ्भवति । ।

---

1. <विभाषा धातौ सम्भावन-वचनेऽयदि># । । PS_३,३.१५५ । ।

_______Sठाञ्ठJKव्_३,३.१५५ः

सम्भावनेऽलं इति चेत्सिद्ध-अप्रयोगे इति सर्वं अनुवर्तते ।
अम्भावनं उच्यते येन स सम्भावन-वचनः ।
सम्भावन-वचने धातावुपपदे यच्छब्द-वर्जिते धातोर्विभाषा लिङ्भवति ।
पूर्वेण नित्य-प्राप्तौ विकल्प-अर्थं वचनं ।
सम्भावयामि भुञ्जीत भवान्, सम्भावयामि भोक्ष्यते भवान् ।
अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान् ।
श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान् ।
अयदि इति किं ? सम्भावयामि यद्भुञ्जीत भवान् । ।

---

1. <हेतु-हेतुमतोर्लिङ्># । । PS_३,३.१५६ । ।

_______Sठाञ्ठJKव्_३,३.१५६ः

तेहुः कारणं ।
हेतुमत्फलं ।
हेतुभूते हेतुमति चार्थे वर्तमानाद्धातोः लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
दक्षिणेन चेद्यायान्न शकटं पर्याभवेथ् ।
यदि कमलकमाह्वयेन्न शकटं पर्याभवेथ् ।
दक्षिणेन चेद्यास्यति न शकटं पर्याभविष्यति ।
तत्र विभाषाग्रहणं तावदनन्तरं एव अनुवर्तते ।
लिङिति वर्तमाने पुनर्लिङ्-ग्रहणं कालव्-इशेष-प्रतिपत्त्य्-अर्थं ।
तेन+इह न भवति, हन्ति इति पलायते, वर्षति इति धावति ।
क्रियातिपत्तौ लृङ्भवति । ।

---

1. <इच्छा-अर्थेषु लिङ्-लोटौ># । । PS_३,३.१५७ । ।

_______Sठाञ्ठJKव्_३,३.१५७ः

इच्छार्थेषु धतुषु उपपदेषु धतोः लिङ्-लोटौ प्रत्ययौ भवतः ।

सर्वलकाराणां अपवादः ।
इच्छामि भुञ्जीत भवान् ।
इच्छामि भुङ्क्तां भवान् ।
कामये ।
प्रार्थये ।
कामप्रवेदन इति वक्तव्यं ।
इह मा भूत्, इच्छन्करोति । ।

---

[#२८८]

1. <समान-कर्तृकेषु तुमुन्># । । PS_३,३.१५८ । ।

_______Sठा~ठ्JKव्_३,३.१५८ः

इच्छार्थेषु धातुषु समान-कर्तृकेषु उपपदेषु धातोः तुमुन्प्रत्ययो भवति ।
तुमुन्प्रकृत्य्-अपेक्षं एव समान-कर्तृट्वं ।
इच्छति भोक्तुं ।
कामयते भोक्तुं ।
विष्टि भोक्तुं ।
वाञ्छति बोक्तुं ।
समान-कर्तृकेषु इति किं ? देवदत्तं भुञ्जानं इच्छति यज्ञदत्तः ।
इह कस्मान्न भवति, इच्छन्करोति ? अनभिधानात् । ।

---

1. <लिङ्च># । । PS_३,३.१५९ । ।

_______Sठा~ठ्JKव्_३,३.१५९ः

इच्छार्थेषु समानकर्तृकेषु धातुषु उपपदेषु धातोः लिङ्प्रत्ययो भवति ।
भुञ्जीय इति इच्छति ।
अधीयीयेति इच्छति ।
क्रियातिपत्तौ लृङ्भवति ।
योगविभाग उत्तरार्थः । ।

---

1. <इच्छार्थेभ्यो विभाषा वर्तमाने># । । PS_३,३.१६० । ।

______Sठा~ठ्JKव्_३,३.१६०ः

इछार्थेभ्यो धतुभ्यो वर्तमाने काले विभाषा लिङ्प्रत्ययो भवति ।
लटि प्राप्ते वचनं ।
इच्छति, इच्छेथ् ।
वष्टि, उश्याथ् ।
कामयते, कामयेत । ।

---

1. <विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-संप्रश्न-प्रार्थनेषु लिङ्># । । PS_३,३.१६१ । ।

______Sठा~ठ्JKव्_३,३.१६१ः

विधिः प्रेरणं ।
निमन्त्रणं नियोगकरणं ।
आमन्त्रणं कामचारकरणं ।
अधीष्टः सत्कारपूर्वको व्यापारः ।
सम्प्रश्नः सम्प्रधारणं ।
प्रार्थनं याच्ञा ।
विध्यादिष्वर्थेषु धातोः लिङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
विध्यादयश्च प्रत्ययार्थ-विशेषणं ।
विध्यादि-विशिष्टेषु कर्त्रादिषु लिङ्प्रत्ययो भवति ।
विधौ तावत्- कटं कुर्याथ् ।
ग्रामं भवानागच्छेथ् ।
निमन्त्रणे - इह भवान्भुञ्जीत ।
इह भवानासीत ।
आमन्त्रणे - इह भवानासीत ।
इह भवान्भुञ्जीत ।
अधीष्टे - अधीछामो भवन्तं माणवकं भवानुपनयेथ् ।
सम्प्रश्ने - किं नु खलु भो व्याकरनं अधीयीय ।
प्रार्थने - भवति मे प्रार्थना व्याकरनं अधीयीय । ।

---

1. <लोट्च># । । PS_३,३.१६२ । ।

______Sठा~ठ्JKव्_३,३.१६२ः

लोट्प्रत्ययो भवति धातोः विध्यादिषु अर्थेषु ।

योगविभाग उत्तरार्थः ।
विधौ तावत्- कटं तावत्भवान्करोतु ।
ग्रामं भवानागच्छतु ।
निमन्त्रणे - अमुत्र भवानास्तां ।
अमुत्र भवान्भुङ्क्तां ।
आमन्त्रने - इह भवान्भुङ्क्तां ।
अधीष्टे - अधीच्छामो भवन्तं माणवकं भवानध्यापयतु, माणावकं भवानुपनयतां ।
सम्प्रश्ने - किं नु खलु भो व्याक्रनं अध्ययै ।
प्रार्थने - भवति मे प्रार्थना व्याकरणं अध्ययै, छन्दोऽध्ययै । ।

---

[#२८९]

1. <प्रैष-अतिसर्ग-प्राप्तकालेषु कऋत्याश्च># । । PS_३,३.१६३ । ।

_______Sठाऱ्ठJKव्_३,३.१६३ः

प्रेषणं प्रैषः ।
कामचार-अभ्यनुज्ञानं अतिसर्गः ।
निमित्त-भूतस्य कालस्य अवसरः प्राप्त-कालता ।
एतेष्वर्थेषु धातोः कृत्य-सञ्ज्ञकाः प्रत्ययाः भवन्ति, चकाराल्लोट्च ।
भवता कटः करणीयः, कर्तव्यः, कृत्यः, कार्यः ।
लोट्खल्वपि - करोतु कटं भवानिह प्रेषितः, भवानतिसृष्टह्, भवतः प्राप्त-कालः कटकरणे ।
किमर्थं प्रैषादिषु कृत्या विधीयन्ते न सामान्येन, भाव-कर्मणोर्विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेष-विहितेन अनेन लोटा बाद्यन्ते ।
वासरूप-विधिना भविस्यन्ति ? एवं तर्हि ज्ञापयति, स्त्र्य्-अधिकारात्परेण वासरूप-विधिर्नावष्यं भवति इति ।
विधिप्रैषयोः को विशेष ? केचिदाहुः, अज्ञातज्ञापनं विधिः, प्रेषणं प्रैषः इति । ।

---

1. <लिङ्च+ऊर्ध्व-मौहूर्तिके># । । PS_३,३.१६४ । ।

_______Sठाऱ्ठJKव्_३,३.१६४ः

प्रैषादयो वर्तन्ते ।
प्रैषादिषु गम्यमानेषु ऊर्ध्व-मौहूर्तिकेऽर्थे वर्तमानाद्धातोः लिङ्प्रत्ययो भवति, चकाराद्यथा प्राप्तं च ।
ऊर्ध्वं मुहूर्तात्, उपरि मुहूर्तस्य भवता खलु कटः कर्तव्यः, करणीयः, कार्यः ।
भवान्खलु कटं कुर्यात्, भवान्खलु करोतु ।
भवानिह प्रेषितः ।
भवानतिसृष्टः ।
भवान्प्राप्तकालः । ।

---

1. <स्मे लोट्># । । PS_३,३.१६५ । ।

_______Sठाऽठ्JKव्_३,३.१६५ः

प्रैषादिषु ऊर्ध्व-मौहूर्तिके इति वर्तते ।
सम्-शब्दे उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्व-मौहूर्तिकेऽर्थे वर्तमानाद्धातोः लोट्प्रत्ययो भवति ।
लिङ्-कृत्यानां अपवादः ।
ऊर्ध्वं मुहूर्ताद्भवान्कटं कओर्तु स्म, ग्रामं गच्छतु स्म, माणावकमध्यापयतु स्म । ।

---

1. <अधीष्टे च># । । PS_३,३.१६६ । ।

_______Sठाऽठ्JKव्_३,३.१६६ः
स्मे इति वर्तते ।
अधीष्टं व्याख्यातं ।
स्म-शब्दे उपपदेऽधीष्टे गम्यमाने धातोः लोट्प्रत्ययो भवति ।
लिङोऽपवादः ।
अङ्ग स्म राजन्माणवकमध्यापय ।
अङ्ग स्म राजन्नग्निहोत्रं जुहुधि । ।

---

1. <काल-समय-वेलासु तुमुन्># । । PS_३,३.१६७ । ।

_______Sठाऽठ्JKव्_३,३.१६७ः

कालादिषु उपपदेसु धातोः तुमुन्प्रत्ययो भवति ।
कालो भोक्तुं ।
वेला भोक्तुं ।
इह कस्मान्न भवति, कालः पचति भूतानि इति ? प्रैषादि-ग्रहणं इह अभिसम्बध्यते ।
इह कस्मान्न भवति,

[#२९०]

कालो भोजनस्य ? वासरूपेन ल्युडपि भवति ।
उक्तं इदम्, स्त्र्य्-अधिकारात्परत्र वासरूप-विधिरनित्यः इति ॥

---

1. <लिङ्यदि># ॥ PS_३,३.१६८ ॥

_______Sठाऱ्ठJKव्_३,३.१६८ः

कालादयोऽनुवर्तन्ते ।
यच्छब्दे उपपदे कालादिषु धातोः लिङ्प्रत्ययो भवति ।
तुमुनोऽपवादः ।
कालो यद्भुञ्जीत भवान् ।
सम्यो यद्भुञ्जीत भवान् ।
वेला यद्भुञ्जीत भवान् ॥

---

1. <अर्हे कृत्य-तृचश्च># ॥ PS_३,३.१६९ ॥

_______Sठाऱ्ठJKव्_३,३.१६९ः

अर्हति इति अर्हः, तद्योग्यः ।
अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्य-तृचः प्रत्यया भवन्ति, चकाराल्लिङ्च ।
भवता खलु कन्या वोढव्या, वाह्या, वहनीया ।
भवान्खलु कन्याया वोढा ।
भवान्खलु कन्यां वहेथ् ।
भवानेतदर्हेतिति ।
अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामानेन विहितत्वादर्हेऽपि भविस्यन्ति ? योऽयं इह लिङ्विधीयते, तेन बाधा मा भूतिति ।
वासरूपविधिश्च अनित्यः ॥

---

1. <आवश्यक-आधमर्ण्ययोर्णिनिः># ॥ PS_३,३.१७० ॥

_______Sठाऱ्ठJKव्_३,३.१७०ः

अवश्यं भावः आवश्यकं ।

उपाधिरयं, न+उपपदं ।
अवश्यं भावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोः णिनिः प्रत्ययो भवति ।
अवश्यंकारी ।
मयूरव्यंसकादित्वात्समासः ।
आधमर्ण्ये खल्वपि - शतं दायी सहस्रं दायी ।
निष्कं दायी । ।

---

1. <कृत्याश्च># । । PS_३,३.१७१ । ।

______Sठाऽ्ठ्JKव्_३,३.१७१ः

आवश्यक-आधमर्ण्ययोः इति वर्तते ।
कृत्य-सञ्जाकाश्च प्रत्यया आवश्यक-आधमर्ण्ययोरुपाधिभूतयोः धातोर्भवन्ति ।
भवता खलु अवश्यं कटः कर्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः ।
आधमर्ण्ये - भवताशतं दातव्यं ।
सहस्रं देयं ।
किमर्थं इदम्, यावता सामाग्येन विहिता अस्मिन्नपि विषये भविस्यन्ति ? विशेष-विहितेन णिनिना बाध्येरन् ।
कर्तरि णिनिः, भाव-कर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः ? तत्र केचिदाहुः, भव्यगेयादयः कर्तृ-वाचिनः कृत्याः, त इह+उदाहरणं इति । ।

---

[#२९१]

1. <शकि लिङ्च># । । PS_३,३.१७२ । ।

______Sठाऽ्ठ्JKव्_३,३.१७२ः

शकि इति प्रकृत्यर्थ-विशेषणं ।
शक्नोत्य्-अर्थोपाधिके धात्व्-अर्थे लिङ्प्रत्ययो भवति, चकारात्कृत्याश्च ।
भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः ।
भवान्खलु भारं वहेथ् ।
भवानिह शक्तः ।
सामान्य-विहितानां पुनर्वचनं लिङा बाधा मा भूतिति । ।

---

1. <आशिषि लिङ्लोटौ># । । PS_३,३.१७३ । ।

_______Sठा~ठ्JKव्_३,३.१७३ः

आशंसनं आशीः, अप्रप्तस्य+इष्टस्य अर्थस्य प्राप्तुं इच्छा ।
प्रकृत्यर्थ-विशेषणं च+एतथ् ।
अशीर्विशिष्टेऽर्थे वर्तमानाद्धातोः लिङ्-लोटौ प्रत्ययौ भवतः ।
चिरं जीव्याद्भवान् ।
चिरं जीवतु भवान् ।
आशिषि इति किं ? चिरं जीवति देवदत्तः । ।

---

1. <क्तिच्-क्तौ च सञ्ज्ञायाम्># । । PS_३,३.१७४ । ।

_______Sठा~ठ्JKव्_३,३.१७४ः

आशिषि इत्येव ।
आशिषि विषये धातोः क्तिच्-क्तौ प्रत्ययौ भवतः, समुदायेन चेत्सञ्ज्ञा गम्यते ।
तनुतात्तन्तिः ।
सनुतात्सातिः ।
भवतात्भूतिः ।
मनुतात्मन्तिः ।
क्तः खल्वपि - देवा एनं देयासुः देवदत्तः ।
सामान्येन विहितः क्तः पुनरुच्यते, क्तिचा बाधा मा भूतिति ।
चकारो विशेषण-अर्थः, न क्तिचि दीर्घश्च (*६,४.३९) इति । ।

---

1. <माङि लुङ्># । । PS_३,३.१७५ । ।

_______Sठा~ठ्JKव्_३,३.१७५ः

माङि उपपदे धातोः लुङ्प्रत्ययो भवति ।
सर्वलकाराणां अपवादः ।
मा कार्षीथ् ।
मा हार्षीथ् ।
कथं मा भवतु तस्य पापम्, मा भविष्यति इति ? असाधुरेव अयं ।
केचिदाहुः, अङिदपरो मा-शब्दो विद्यते, तस्य अयं प्रयोगः । ।

---

1. <स्म-उत्तरे लङ्च># । । PS_३,३.१७६ । ।

______Sठाऱ्ठJKव्_३,३.१७६ः

स्म-शब्द-उत्तरे माङि उपपदे धातोः लङ्प्रत्ययो भवति, चकाराल्लुग्च ।
मा स्म करोथ् ।
मा स्म कार्षीथ् । मा स्म हरथ् । मा स्म हार्षीत् । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य तृतीयः पादः । ।

---

तृतीयाध्यायस्य चतुर्थः पादः ।

---

[#२९२]

1. <धातु-सम्बन्धे प्रत्ययाः># । । PS_३,४.१ । ।

______Sठाऱ्ठJKव्_३,४.१ः

धात्व्-अर्थे धातु-शब्दः । धात्व्-अर्थानां सम्बन्धो धातु-सम्बन्धः विशेषणविशेष्य-भावः । तस्मिन्सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । अग्निष्टोमयाज्यसय पुत्रो जनिता । कृतः कटः श्वो भविता । भावि कृत्यं आसीथ् । अग्निष्टोमयाजी इति भूतकालः, जनिता इति भविष्यत्कालः । तत्र भूतः कालः भविष्यत्कालेन अभिसम्बध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यकालं अनुरुध्यते, तेन विपर्ययो न भवति । प्रत्ययाधिकारे पुनः प्रत्यय-ग्रहणं अधात्व्-अधिकार-विहिता अपि प्रत्ययाः तद्धिता धातु-सम्बन्धे सति कालभेदे साधवो
यथा स्युः इति ।
गोमानासीथ् ।
गोमान्भविता ।
गावो विद्यन्तेऽस्य इति वर्तमान-विहितो मतुप्, आसीत्भविता इति सम्बन्धाद्तीते भविष्यति च साधुर्भवति । ।

---

1. <क्रियासम्-अभिहारे लोट्लोटो हि-स्वौ वा च त-ध्वमोः># । । PS_३,४.२ । ।

______Sठाऱ्ठJKव्_३,४.२ः

धातु-सम्बधे इति वर्तते ।

पौनःपुन्यं भृशार्थो वा क्रिया-समभिहारः।
प्रकृत्यर्थ-विशेषणं च+एतथ्।
समभिहार-विशिष्ट-क्रियावचनाद्धातोः लोट्प्रत्ययो भवति सर्वेषु कालेषु।
सर्वलकाराणां अपवादः तस्य च लोटो हि स्व इत्येतावादेशौ भवतः।
तध्वंभाविनस्तु वा भवतः।
योग-विभागोऽत्र कर्तव्यः।
क्रिया-समभिहारे लोड्भवति, ततो लोटो हिस्वौ।
लोटित्येव, लोड्-धर्माणौ हिस्वौ भवतः इत्यर्थः।
तेन आत्मनेपद-परस्मैपदत्वं भेदेन अवतिष्ठते, तिङ्त्वं च द्वयोरपि भवति।
लुनीहि लुनीहि इत्येव अयं लुनाति, इमौ लुनीतः, इमे लुनन्ति।
लुनीहि लुनीहि इत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ।
अथ वा, लुनीत लुनीत+इत्येव यूयं लुनीथ।
लुनीहि लुनीहि इत्येव अहं लुनामि, आवां लुनीवः, वयं लुनीमः।
भूते - लुनीहि लुनीहि इत्येव अयं अलावीत्, अलाविष्टाम्, अलाविषुः।
एवं मध्यम-उत्तमयोरुदाहार्यं।
भविष्यति - लुनीहि लुनिहि इत्येव अयं लविष्यति, लविष्यतः, लविष्यन्ति।
एवं मध्यम-उत्तमयो रुदाहार्यं।
अधीष्वाधीष्वेत्येव अयं अधीते, इमावधीयते, इमेऽधीयते।
अधीष्वाधीष्वेत्येव त्वं अधीषे, युवां अधीयाथे, यूयं अधीध्वे।
अथ वा, अधीध्वं अधीध्वं इत्येव यूयं अधीध्वे।
अधीष्वाधीष्वेत्येव अहं अधीये, आवां अधीवहे, वयं अधीमहे।
एवं सर्वेष्वेव लकारेषु उदाहार्यं।
क्रिया-समभिहाराभिव्यक्तौ द्विर्वचनं अयं लोडपेक्षते, क्रिया-समभिहारे द्वे भवतः इति।
यङ्-प्रत्ययः पुनरस्मिन्नेव अर्थे विधीयमानः स्वयं एव शक्तत्वान्न अपेक्षते द्विर्वचनं।।

---

[#२९३]

1. <सयुच्चयेऽन्यतरस्याम्>#।। PS_३,४.३।।

_______Sठा॒ठJKव्_३,४.३ः

अनेकक्रियाध्याहारः समुच्चयः।
समुच्चीयमान-क्रियावचनाद्धातोरन्यतरस्यां लोट्प्रत्ययो भवति, तस्य लोटो हि-स्वौ आदेशौ भवतः।
तध्वंभाविनस्तु वा भवतः।
भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानं अट इत्येव अयं अटति, इमावटतः, इमेऽटन्ति।
भ्राष्ट्रमट, मठमट, खदूरं अट, स्थाल्यपिधानं अट+इत्येव त्वं अटसि, युवां अटथः, यूयं अटथ।
अथ वा, भ्राष्ट्रं अटत, मठं अटत, खदूरं अटत, स्थाल्युपिधानं अटत इत्येव यूयं अटथ।
भ्राष्ट्रं अट, मठं अट, खदूरं अट, स्थाल्युपिधानं अट इत्येव अहं अटामि, आवां अटावः, वयं अटामः।
अथ वा, भ्राष्ट्रं अटति, मठं अटति, खदूरं अटति, स्थाल्युपिधानं अटति इत्येव अयं अटति, इमा वटतः, इमेऽटन्ति।
भ्राष्ट्रं अटसि, मठं अटसि, खदूरं अटसि, स्थाल्युपिधानं अटसि, इत्येव त्वं अटसि, युवां अटथः, यूयं अटथ।
भ्राष्ट्रं अटामि, मठं अटामि, खदूरं अटामि, स्थाल्युपिधानं अटामि इत्येव अहं अटामि, आवां अटावः, वयं अटाअमः।
छन्दोऽधीष्व, व्याकरणं अधीष्व, निरुक्तं अधीष्व इत्येव अयं अधीते, इमावधीयाते, इमेऽधीयते।
छन्दोऽधीष्व, व्याकरणं अधीध्वं इत्येव यूयं अधीध्वे।
छन्दोऽधीष्व, व्याकरणं अधीष्व, निरुक्तं अधीष्व इत्येव अहं अधीये, आवां अधीवहे, वयं अधीमहे।

अथ वा, छन्दोऽधीते, व्याकरणं अधीते, निरुक्तमधीते, इत्येव अयं अधीते, इमावधीयाते, इमेऽधीयते।
छन्दोऽधीषे, व्याकरणं अधीषे, निरुक्तं अधीषे इत्येव त्वं अधीषे, युवां अधीयाथे, यूयं अधीध्वे।
छन्दोऽधीये, व्याकरणं अधीये, निरुक्तं अधीये इत्येव अहं अधीये, आवां अधीवहे, वयं अधीमहे।।

---

1. <यथाविध्य्-अनुप्रयोगः पूर्वस्मिन्>#।। PS_३,४.४।।

_______Sठाऱ्ठJKव्_३,४.४:

पूर्वस्मिन्लोड्-विधाने यथाविध्य्-अनुप्रयोगो भवति।
यस्माद्धातोः लोड्विहितः स एव धातुरनुप्रयोक्तव्यः।
धातु-सम्भन्धे प्रत्यय-विधानादनुप्रयोगः सिद्ध एव, यथाविध्य्-अर्थं तु वचनं।
तथा च+एव+उदाहृतं लुनीहि लुनीहि इत्येव अयं लुनीति इति।
छिनत्ति इति न अनुप्रयुज्यते।
अधीष्वाधीष्वेत्येव अयं अधीते।
पठति इति न अनुप्रयुज्यते।।

---

1. <समुच्चये सामान्य-वचनस्य>#।। PS_३,४.५।।

_______Sठाऱ्ठJKव्_३,४.५:

द्वितीये लोड्विधाने समुच्चये सामान्य-वचनस्य धातोरनुप्रयोगः कर्तव्यः।
ओदनं भुङ्क्ष्व, सक्तून्पिब, धानाः खाद इत्येव अयं अभ्यवहरति।
सर्वविशेष-अनुप्रयोग-निवृत्त्य्-अर्थं वचनं।
लाघवं च लौकिके शब्द-व्यवहारे न अद्रियते।
भ्राष्ट्रं अट, मठं अट, खदूरं अट, स्थाल्युपिधानं अट इत्येव अयं अटति इत्यत्र अपि कारक-भेदात्क्रियाभेदे सति सामान्य-वचनता सम्भवत्येव।।

---

1. <छन्दसि लुङ्-लङ्-लिटः>#।। PS_३,४.६।।

_______Sठाऱ्ठJKव्_३,४.६:

धातु-सम्बन्धे इत्येव।
छन्दसि विषये धातु-सम्बन्धे सर्वेषु लुङ्-लङ्-लिटः प्रत्यया भवन्ति।
अन्यतरस्यां इति वर्तते।

तेन अन्येऽपि लकारा यथायथं भवन्ति ।
लुङ्- शकलाङ्गुष्ठकोऽकरथ् ।
अहं तेभ्योऽकरं नमः ।
लङ्- अग्निं अद्य होतारं अवृणीतायं यजमानः ।
लिट्- अद्या ममार ।
अद्य म्रियते । ।

---

[#२९४]

1. <लिङ्-अर्थे लेट्># । । PS_३,४.७ । ।

______Sठा~ठ्JKव्_३,४.७ः

छन्दसि अन्यतरस्यां इति वर्तते ।
लिङ्-अर्थे, यत्र लिङ्विधीयते विध्यादिः, हेतुहेतुमतोर्लिङ्(*३,३.१५६) इत्येवं आदिः, तत्र छन्दसि विषयेऽन्यतरस्यां लेट्प्रत्ययो भवति ।
जोषिषत्तारिषथ् ।
मन्दिषथ् ।
नेता इन्द्रो नेषथ् ।
तक्षिषथ् ।
पताति दिद्युथ् ।
प्रजापतिरुदधिं च्यावयाति । ।

---

1. <उपसंवाद-आशङ्कयोश्च># । । PS_३,४.८ । ।

______Sठा~ठ्JKव्_३,४.८ः

उपसंवादः परिभाषणम्, कर्तव्ये पणबन्धः, यदि मे भवानिदं कुर्यादहं अपि भवते इदं दास्यामि इति ।
कारणतः कार्यानुसरणं तर्कः, उत्प्रेक्षा, आशङ्का ।
उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट्प्रत्ययो भवति ।
उपसंवादे - अहं एव पशूनामीशै ।
मदग्रा एव वो ग्रहा गृह्यान्तै इति ।
मद्देवत्यान्येव वः पात्राण्युच्यानतै ।
आशङ्कायां च - नेज्जिह्मायन्त्यो नरकं पताम ।
जिह्माचरणेन नरकपातः आशङ्क्यते ।
लिङ्-अर्थ एव अयम्, नित्य-अर्थं तु वचनं ।
पूर्वसूत्रे अन्यत्रस्यां इति वर्तते । ।

1. <तुमर्थे से-सेन्-असे-असेन्-क्से-कसेन्-अध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः># । । PS_३,४.९ । ।

_______Sठा~ठJKव्_३,४.९ः

छन्दसि इत्येव ।
तुमुनोऽर्थस्तुम्-अर्थः ।
तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति ।
तुमर्थो भावः ।
कथं ज्ञायते ? वचनसामर्थ्यात्तावदयं कर्तुरपकृष्यते ।
न च अयं अन्यस्मिन्नर्थे तुमुनादिश्यते ।
अनिर्दिष्ट-अर्थाश्च प्रत्ययाः स्वार्थे भवन्ति ।
स्वार्थश्च धातूनां भाव एव ।
से - वक्षे रायः ।
सेन्- ता वामेषे रथानां ।
असे, असेन्- क्रत्वे दक्षाय जीवसे ।
स्वरे विशेषः ।
क्से - प्रेषे भगाय कसेन्- श्रियसे ।
अध्यै, अध्यैन्- काममुपाचरध्यै ।
स्वरे विशेषः ।
कध्यै - इन्द्राग्नी आहुवध्यै ।
कध्यैन्- श्रियध्यै ।
शध्यै, शध्यैन्- वायवे पिबध्यै ।
राधसः सह मादयध्यै ।
तवै - सोममिन्द्राय पातवै ।
तवेङ्- दशमे मासि सूतवे ।
तवेन्- स्वर्देवेषु गन्तवे ।
कर्तवे ।
हर्तवे । ।

---

1. <प्रयै रोहिष्यै अव्यथिष्यै># । । PS_३,४.१० । ।

_______Sठा~ठJKव्_३,४.१०ः

तुमर्थे छन्दसि इत्येव ।
प्रयै रोहिष्यै अव्यथिष्यै इत्येते शब्दा निपात्यन्ते छन्दसि विषये ।
प्रपूर्वस्य यातेः कैप्रत्ययः - प्रयै देवेभ्यः ।
प्रयातुं ।
रुहेः इष्यै-प्रत्ययः - अपामोषधीनां रोहिष्यै ।
रोहणाय ।

व्यथेर्नञ्-पूर्वस्य इष्यै-प्रत्ययः - अव्यथिष्यै ।
अव्यथनाय । ।

---

[#२९५]

1. <दृशे विख्ये च># । । PS_३,४.११ । ।

_______Sठा~ठ्JKव्_३,४.११ः

तुमर्थे छन्दसि इत्येव ।
दृशे विख्ये इत्येतौ छन्दसि विषये निपात्येते ।
दृशेः के-प्रत्ययः - दृशे विश्वाय सूर्यं ।
द्रष्टुं ।
विख्ये त्वा हरामि ।
विख्यातुं । ।

---

1. <शकि णमुल्कमुलौ># । । PS_३,४.१२ । ।

_______Sठा~ठ्JKव्_३,४.१२ः

छन्दसि इत्येव ।
शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल्कमुलित्येतौ प्रत्ययु भवतः ।
णकारो वृद्ध्य्-अर्थः ।
ककारो गुण-वृद्धि-प्रतिषेध-अर्थः ।
लकारः स्वर-अर्थः ।
अग्निं वै देवा विभाजं नाशक्नुवन् ।
विभक्तुं इत्यर्थः ।
अपलुम्पं न अशक्नोथ् ।
अपलोप्तुं इत्यर्थः । ।

---

1. <ईश्वरे तोसुन्-कसुनौ># । । PS_३,४.१३ । ।

______Sठा~ठJKव्_३,४.१३ः

तुमर्थे छन्दसि इत्येव ।
ईश्वर-शब्द उपपदे छन्दसि विषये तुमर्थे धतोः तोसुन्-कसुन्-प्रत्ययौ भवतः ।
ईश्वरोऽभिचरितोः ।
अभिचरितुं इत्यर्थः ।
ईश्वरो विलिखः ।
विलिखितुं इत्यर्थः ।
ईश्वरो वितृदः ।
वितर्दितुं इत्यर्थः ।।

---

1. <कृत्य-अर्थे तवै-केन्-केन्य-त्वनः># ।। PS_३,४.१४ ।।

______Sठा~ठJKव्_३,४.१४ः

छन्दसि इत्येव ।
कृत्यानां अर्थो भावकर्मणी ।
तस्मिन्कृत्य-अर्थे छन्दसि विषये तवै केन्केन्य त्वनित्येते प्रत्यया भवन्ति ।
तवै - अन्वेतवै ।
अन्वेतव्यं ।
परिधातवै ।
परिधातव्यं ।
परिस्तरितवै ।
परिस्तरितव्यं ।
केन्- नावगाहे ।
नावगाहितव्यं ।
केन्य - दिदृक्षेण्यः ।
शुश्रूषेण्यः ।
दिदृक्षितव्यं ।
शुश्रूषितव्यं ।
त्वन्- कर्त्वं हविः ।
कर्तव्यं ।
तुमर्थे छन्दसि इति सयादि-सूत्रेऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्तव्यः ।।

---

1. <अवचक्षे च># ।। PS_३,४.१५ ।।

_______Sठा-ठ्JKव्_३,४.१५ः
कृत्य-अर्थे छन्दसि इत्येव ।
अवपूर्वात्चक्षिङः एश्प्रत्ययो निपात्यते ।
रिपुणा नावचक्षे ।
नावख्यातव्यं इत्यर्थः । ।

---

[#२९६]

1. <भावल्-अक्षने स्था-इण्-कृञ्-वदि-चरि-हु-तमि-जनिभ्यस्तोसुन्># । । PS_३,४.१६ । ।

_______Sठा-ठ्JKव्_३,४.१६ः

कृत्य-अर्थे इति निवृत्तं ।
तुमर्थे इति वर्तते ।
प्रकृत्यर्थ-विशेषणं भावलक्षण-ग्रहणं ।
भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यः छन्दसि विषये तुमर्थे तोसुन्प्रत्ययो भवति ।
आसंस्थातोर्वेद्यां शेरते ।
आ समाप्तेः सीदन्ति इत्यर्थः ।
इण्- पुरा सूर्यस्तोदेतोराधेयः ।
कृञ्- पुरा वत्सानामपाकर्तोः ।
वदि - पुरा प्रवदितोरग्नौ प्रहोतव्यं ।
चरि - पुरा प्रचरितोराग्नीध्रीये होतव्यं ।
हु - आहोतोरप्रमत्तस्तिष्थति ।
तमि - आ तमितोरासीत ।
जनि - काममा विजनितोः सम्भवामेति इति । ।

---

1. <सृपि-तृदोः कसुन्># । । PS_३,४.१७ । ।

_______Sठा-ठ्JKव्_३,४.१७ः
भाव-लक्षणे छन्दसि ति वर्तते ।
सृपि-तृदोर्धात्वोः भाव-लक्षणेऽर्थे वर्तमानयोः छन्दसि विषये तुम्-अर्थे कसुन्प्रत्ययो भवति ।
पुरा क्रूरस्य विसृपो विरप्शिन् ।
पुरा जत्रुभ्य आतृदः । ।

---

1. <अलं-खल्वोः प्रतिषेधयोः प्राचां क्त्वा># । । PS_३,४.१८ । ।

_______Sठा~ठ्JKव्_३,४.१८ः

छन्दसि भाव-लक्षणे इति सर्वं निवृत्तं ।
अलं खलु इत्येतयोः प्रतिषेध-वाचिनोरुपपदयोः धातोः क्त्वा प्रत्ययो भवति प्राचां आचार्याणां मतेन ।
अलं कृत्वा ।
खलु कृत्वा ।
अलं बाले रुदित्वा ।
अलं-खल्वोः इति किं ? मा कार्षीः ।
प्रतिषेधयोः इति किं ? अलङ्कारः ।
प्राचां-ग्रहणं विकल्प-अर्थं ।
अलं रोदनेन ।
वासरूपविधिश्चेत्पूज-अर्थं । ।

---

1. <उदीचां माङो व्यतीहारे># । । PS_३,४.१९ । ।

_______Sठा~ठ्JKव्_३,४.१९ः

क्त्वा तु वर्तते ।
माङो धातोः व्यतीहारे वर्तमानादुदीचां आचार्याणां मतेन क्त्वा प्रत्ययो भवति ।
अपमित्य याचते ।
अपमित्य हरति ।
अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते ।
उदीचां-ग्रहणात्तु यथाप्राप्तं अपि भवति ।
याचित्वाऽपमयते ।
गृत्वा+अपमयते ।
मेङः कृतात्वस्य अयं निर्देशः कृतो ज्ञापन-अर्थः, नानुबङ्धकृतमनेजन्तत्वं इति ।
तेन दा-धा घ्व्-अदाप्(*१,१.२०) इति दैपोऽपि प्रतिषेधो भवति । ।

---

[#२९७]

1. <पर-अवर-योगे च># । । PS_३,४.२० । ।

_______Sठा~ठ्JKव्_३,४.२०ः

पर-अवराभ्यां योगः प्रावरयोगः ।
परेण पूर्वस्य योगे गम्यमाने अवरेण च परस्य धातोः क्त्वा प्रत्ययो भवति ।
परेण तावत्- अप्राप्य नदीं पर्वतः स्थितः ।
परनदीयोगेन पर्वतो विशिष्यते ।
अवरयोगे - अतिक्रम्य तु पर्वतं नदी स्थिता ।
अवरपर्वतयोगेन नदी विशिस्यते । ।

---

1. <समान-कर्तृकयोः पूर्वकाले># । । PS_३,४.२१ । ।

_______Sठा~ठ्JKव्_३,४.२१ः

समानः कर्ता ययोः धात्व्-अर्थयोस्तत्र पूर्वकाले धात्व्-अर्थे वर्तमानाद्धातोः क्त्वा प्रत्ययो भवति ।
शक्तिशक्तिमतोः भेदस्य अविवक्षितत्वात्समानकर्तृकता ।
भुक्त्वा व्रजति ।
पीत्वा व्रजति ।
द्विवचनमतन्त्रं ।
स्नात्वा पीत्वा भुक्त्वा व्रजति ।
समान-कर्तृकयोः इति किं ? भुक्तवति ब्राह्मणे गच्छति देवदत्तः ।
पूर्वकाले इति किं ? व्रजति च जल्पति च ।
आस्यं व्यादाय स्वपिति चक्षुः संमील्य हस्ति इत्युपसंख्यानं अपूर्वकालत्वात् । ।

---

1. <आभीक्ष्ण्ये णमुल्च># । । PS_३,४.२२ । ।

_______Sठा~ठ्JKव्_३,४.२२ः

समानकर्तृकयोः पूर्वकाले इत्येव ।
आभीक्ष्णयं पौनःपुन्यं ।
प्रकृत्यर्थ-विशेषणं च+एतथ् ।
आभीक्ष्ण्य-विशिष्टेऽर्थे वर्तमानाद्धातोः णमुल्प्रत्ययो भवति, चकारात्क्त्व च ।
द्विर्वचन-सहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ ।
आभीक्ष्ण्ये द्वे भवतः इत्युपसङ्ख्यानाद्द्विर्वचनं ।
भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति ।
पायं पायं व्रजति, पीत्वा पीत्वा व्रजति । ।

---

1. <न यद्यनाकाङ्क्षे># । । PS_३,४.२३ । ।

_______Sठा~ठJKव्_३,४.२३ः

यच्छब्दे उपपदे धातोः क्त्वा-णमुलौ प्रत्ययौ न भवतोऽनाकाङ्क्षे वाच्ये ।
यत्र पूर्वोत्तरे क्रिये स्तः, तच्चेद्वाक्यं न परं किञ्चिदाकाङ्क्षते इति ।
णमुलनन्तरः, क्त्वा तु पूर्वसूत्र-विहितोऽपि प्रतिषिद्यते ।
यदयं भुङ्क्ते ततः पचति ।
यदयं अधीते ततः शेते ।
अनाकाङ्क्षे इति किं ? यदयं भुक्त्वा व्रजति अधीते एव ततः परं । ।

---

[#२९८]

1. <विभाषाऽग्रे प्रथम-पूर्वेषु># । । PS_३,४.२४ । ।

_______Sठा~ठJKव्_३,४.२४ः

अप्राप्त-विभाषेयं ।
आभीक्ष्ण्ये इति न अनुवर्तते ।
अग्रे प्रथम पूर्व इत्येतेषु उपपदेषु समानकर्तृकयोः पूर्वकाले धातोः क्त्वाणमुलौ प्रत्ययु विभाषा भवतः ।
अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति ।
प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति ।
पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति ।
विभाषाग्रहणं एताभ्यां मुक्ते लडादयोऽपि यथा स्युः ।
अग्रे भुङ्क्ते ततो व्रजति ।
ननु च वासरूप इति भविस्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्न अस्ति इत्येतदनेन ज्ञाप्यते, तेन आभीक्ष्ण्ये लडादयो न भवन्ति ।
उपपदसमासः कस्मान्न क्रियते ? उक्तं तत्र+एव कारस्य प्रयोजनम्, अमैव यत्तुल्य-विधानं उपपदं तत्समस्यते, न अन्यतिति । ।

---

1. <कर्मण्याक्रोशे कृञः खमुञ्># । । PS_३,४.२५ । ।

_______Sठा~ठJKव्_३,४.२५ः

कर्मण्य्-उपपदे कृजो धातोः खमुञ्प्रत्ययो भवति आक्रोशे गम्यमाने ।
चोरंकारं आक्रोशति ।
चोरोऽसि, दस्युरसि इत्याक्रोशति ।
चोरकरणं आक्रोशसं पादनार्थं एव, न त्वसौ चोरः क्रियते । ।

---

1. <स्वादुमि णमुल्># । । PS_३,४.२६ । ।

_______Sठा~ठ्JKव्_३,४.२६ः

समानकर्तृकयोः पूर्वकाले कृञः इति च अनुवर्तते ।
स्वादुमि इत्यर्थ-ग्रहणं ।
स्वादर्थेषु उपपदेषु कृञो णमुल्प्रत्ययो भवति ।
स्वादुङ्कारं भुङ्क्ते ।
सम्पन्नङ्कारं भुङ्क्ते ।
लवणङ्कारं ।
स्वादुमि इति मकारान्त-निपातनं ईकाराभाव-अर्थम्, च्व्यन्तस्य अपि मकार-अर्थं दीर्घाभाव-अर्थं च ।
अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्-कारं भुङ्क्ते ।
वासरूपेण क्त्वा अपि भवति, स्वादुं कृत्वा भुङ्क्ते ।
तुमर्थ-अधिकाराच्च सर्व एते भावे प्रत्ययाः ।
यद्येवम्, स्वादुङ्कारं भुङ्क्ते देवदत्तः इति णमुला कर्तुरनभिहितत्वात्कर्तरि कस्मात्तृतीया न भवति ? भुजिप्रत्ययेन अभिहितः कर्ता, न च अस्मिन्प्रकरणे शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृकत्वं हि विरुध्यते ।
प्रधानशक्त्य्-अभिधाने वा गुणशक्तिरभिहितवत्प्रकाशते । ।

---

1. <अन्यथा-एवं-कथम्-इत्थंसु सिद्ध-अप्रयोगश्-चेत्># । । PS_३,४.२७ । ।

_______Sठा~ठ्JKव्_३,४.२७ः

कृञः इत्येव ।
अन्यथादिषु उपपदेसु कृञो णमुल्प्रत्ययो भवति, सिद्धाप्रयोगश्चेत्करोतेर्भवति ।
कथं पुनरसौ सिद्धाप्रयोगः ? निरर्थकत्वान्न प्रयोगं अर्हति इति एवं एव प्रयुज्यते ।
अन्यथा भुङ्क्ते इति यवानर्थस्तावानेव अन्यथाकारं भुग्क्ते इति गम्यते ।
अन्यथाकारं भुङ्क्ते ।
एवङ्-कारं भुङ्क्ते ।
कथङ्-कारं भुङ्क्ते ।
इत्थं-कारं भुङ्क्ते ।
सिधाप्रयोगः इति किं ? अन्यथा कृत्वा शिरो भुङ्क्ते । ।

---

[#२९९]

1. <यथा-तथयोरसूया-प्रतिवचने># । । PS_३,४.२८ । ।

______Sठाञ्ठJKव्_३,४.२८ः

कृञः सिद्धाप्रयोगे इति वर्तते ।
यथातथ-शब्दयोरुपपदयोः कृञो णमुल्प्रत्ययो भवति असूयाप्रतिवचने गम्यमाने ।
यद्यसूयन्पृच्छति प्रतिवक्ति तत्र प्रतिवचनं , यथाकारं अहं भोक्ष्ये, तथाकारं अहं, किं तवानेन ? असूयाप्रतिवचने इति किं ? यथा कृत्वाऽहं भोक्ष्ये, तथा त्वं द्रक्ष्यसि ।
सिद्धाप्रयोगे इत्येव, यथा कृत्वाऽहं शिरो भोक्ष्ये, किं तवानेन । ।

---

1. <कर्मणि दृशि-विदोः साकल्ये># । । PS_३,४.२९ । ।

______Sठाञ्ठJKव्_३,४.२९ः

कर्मण्य्-उपपदे साकल्य-विशिष्तेऽर्थे दृशिविदोः धात्वोः णमुल्प्रत्ययो भवति ।
कन्यादर्शं वर्यति ।
याः याः कन्याः पश्यति तास्ताः वर्यति इत्यर्थः ।
ब्राह्मण-वेदं भोजयति ।
यं यं ब्राह्मणं जानाति लभते विचारयति वा तान्सर्वान्भोजयति इत्यर्थः ।
साकल्ये इति किं ? ब्राह्मणं दृष्ट्वा भोजयति । ।

---

1. <यावति विन्द-जीवोः># । । PS_३,४.३० । ।

______Sठाञ्ठJKव्_३,४.३०ः

यावच्-छब्द उपपदे विन्दतेर्जीवतेश्च णमुल्प्रत्ययो भवति ।
यावद्वेदं भुङ्क्ते ।
यावल्लभते तावद्भुङ्क्ते इत्यर्थः ।
यावज्जीवं अधीते ।
यावज्जीवति तावदधीते इत्यर्थः । ।

---

1. <चर्म-उदरयोः पूरेः># । । PS_३,४.३१ । ।

_______Sठा൤ठ्JKव्_३,४.३१ः

कर्मणि इत्येव ।
चर्मोदरयोः कर्मणोरुपपदयोः पूर्यतेः णमुल्प्रत्ययो भवति ।
चर्मपूरं स्तृणाति ।
उदरपूरं भुङ्क्ते । ।

---

1. <वर्ष-प्रमाण ऊलोपश्च अस्य अन्यत्रस्याम्># । । PS_३,४.३२ । ।

_______Sठा൤ठ्JKव्_३,४.३२ः

कर्मणि इत्येव ।
पूरयतेः धातोः णमुल्प्रत्यय्भवति, ऊलोपश्च अस्य पूरय्तेरन्यतरस्यां भवति, समुदायेन चेद्वर्षस्य प्रमाणं इयत्ता गम्यते ।
गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः ।
सीतापूरं वृष्टो देवः, सीताप्रं वृष्टो देवः ।
अस्य ग्रहणं किमर्थं ।
उपपदस्य मा भूथ् ।
मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रं । ।

---

1. <चेले क्नोपेः># । । PS_३,४.३३ । ।

_______Sठा൤ठ्JKव्_३,४.३३ः

कर्मणि इत्येव ।
क्नूयी शब्दे उन्दने च, अस्माण्ण्यन्ताद्धातोः चेल्-अर्थेषु कर्मसु उपपदेषु णमुल्प्रत्ययो भवति, वर्षप्रमाणे गम्यमाने ।
चेलक्नोपं वृष्टो देवः ।
वस्त्रक्नोपं ।
वसनक्नोपं । ।

---

[#३००]

1. <निमूल-समूलयोः कषः># । । PS_३,४.३४ । ।

_______Sठा॒ऽJKव्_३,४.३४ः

कर्मणि इत्येव ।
निमूल-समूल-शब्दयोः कर्मवाचिनोरुपपदयोः कषेः धातोः णमुल्प्रत्ययो भवति ।
निमूलकाषं कषति ।
समूलकाषं कषति ।
निमूलं समूलं कषति इत्यर्थः ।
इतः प्रभृति कषादीन्यान्वक्ष्यति तत्र कषादिषु यथा-विध्य्-अनुप्रयोगः (*३,४.४६) इति । ।

---

1. <शुष्क-चूर्ण-रूक्षेषु पिषः># । । PS_३,४.३५ । ।

_______Sठा॒ऽJKव्_३,४.३५ः

कर्मणि इत्येव ।
शुष्कादिषु कर्मवाचिषु उपपदेषु पिषेर्धातोः णमुल्प्रत्ययो भवति ।
शुष्कपेषं पिनष्टि ।
शुष्कं पिनष्टि इत्यर्थः ।
चूर्णपेषं पिनष्टि ।
चूर्णं पिनष्टि इत्यर्थः ।
रूक्षपेषं पिनष्टि ।
रूक्षं पिनष्टि इत्यर्थः । ।

---

1. <समूल-अकृत-जीवेषु हन्-कृञ्-ग्रहः># । । PS_३,४.३६ । ।

_______Sठा॒ऽJKव्_३,४.३६ः

कर्मणि इत्येव ।
समूल अकृत जीव इत्येतेषु शब्देषु कर्मसु उपपदेषु यथासङ्ख्यं हन्कृञ्ग्रह इत्येतेभ्यो धातुभ्यो णमुल्प्रत्ययो भवति ।
समूलघातं हन्ति ।

समूलं हन्ति इत्यर्थः ।
अकृतकारं करोति ।
जीवग्राहं गृह्णाति । ।

---

1. <करणे हनः># । । PS_३,४.३७ । ।

_______Sठा~ठ्JKव्_३,४.३७ः

करणे उपपदे हन्तेर्धातोः णमुल्प्रत्ययो भवति ।
पाणिघातं वेदिं हन्ति ।
पादघातं भूमिं हन्ति ।
हिंस-अर्थानां च समानकर्मकाणां (*३,४.४८) ।
इति णमुलं वक्ष्यति ।
अहिंस-अर्थोऽयं आरम्भः ।
नित्यसमास-अर्थो वा यथा विध्य्-अनुपर्योग-अर्थश्च ।
पूर्वविप्रतिषेधेन हन्तेः हिंसार्थस्य अपि प्रत्ययोऽनेन+एव+इष्यते ।
असिघातं हन्ति ।
शरघातं हन्ति । ।

---

1. <स्नेहने पिषः># । । PS_३,४.३८ । ।

_______Sठा~ठ्JKव्_३,४.३८ः

करने इत्येव ।
स्निह्यते येन तत्स्नेहनं ।
स्नेहन-वाचिनि करणे उपपदे पिषेर्धातोः णमुल्प्रत्ययो भवति ।
उदपेषं पिनष्टि ।
तैलपेषं पिनष्टि ।
तैलेन पितष्टि इत्यर्थः । ।

---

[#३०१]

1. <हस्ते वर्ति-ग्रहोः># । । PS_३,४.३९ । ।

_______Sठाञ्ठ्JKव्_३,४.३९ः

करणे इत्येव।
हस्ते इत्यर्थ-ग्रहणं।
वर्तिः ण्यन्तः।
हस्त-वाचिनि करणे उपपदे वर्तयतेः गृह्णातेश्च णमुल्प्रत्ययो भवति।
हस्तेन वर्तयति, हस्तवर्तं वर्तयति।
करवर्तं।
पाणिवर्तं।
ग्रहेः खल्वपि - हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति।
करग्राहं।
पाणिग्राहं।।

---

1. <स्वे पुषः>#।। PS_३,४.४०।।

_______Sठाञ्ठ्JKव्_३,४.४०ः

करणे इत्येव।
स्वे इत्यर्थ-ग्रहणं।
स्व-वाचिनि करणे उपपदे पुषेर्धातोः णमुल्प्रत्ययो भवति।
आत्मीयज्ञातिधन-वचनः स्व-शब्दः।
स्वपोषं पुष्णाति।
आत्मपोषं।
गोपोषं।
पितृपोषं।
मातृपोषं।
धनपोषं।
रैपोषं।।

---

1. <अधिकरणे वन्धः>#।। PS_३,४.४१।।

_______Sठाञ्ठ्JKव्_३,४.४१ः

अधिकरण-वाचिनि उपपदे बध्नातेः धातोः णमुल्प्रत्ययो भवति।
चक्रबन्धं बध्नाति।
कूटबन्धं बध्नाति।
मुष्टिबन्धं बध्नाति।

चोरकबन्धं बध्नाति।
चोरके बध्नाति इत्यर्थः।।

---

1. <सञ्ज्ञायाम्># ।। PS_३,४.४२ ।।

_______Sठाञ्ठ्JKव्_३,४.४२ः

सञ्ज्ञायां विषये बध्नातेः धातोः णमुल्प्रत्ययो भवति।
क्रौञ्चबन्धं बध्नाति।
मयूरिकाबन्धं बध्नाति।
मयूरिकाबन्धं बधः।
अट्टालिकाबन्धं बद्धः।
बन्ध-विशेषाणां नामधेयानि एतानि।।

---

1. <कर्तोर्जीव-पुरुषयोर्नशि-वहोः># ।। PS_३,४.४३ ।।

_______Sठाञ्ठ्JKव्_३,४.४३ः

जीव-पुरुषयोः कर्तृ-वाचिनोरुपपदयोः यथासङ्ख्यं नशि-वहोः धात्वोः णमुल्प्रत्ययो भवति।
जीवनाशं नश्यति।
जीवो नश्यति इत्यर्थः।
पुरुषवाहं वहति।
पुरुषः प्रेष्यो भूत्वा वहति इत्यर्थः।
कर्तरि इति किं? जीवेन नष्टः।
पुरुषेणोढः।।

---

1. <ऊर्ध्वे शुषि-पूरोः># ।। PS_३,४.४४ ।।

_______Sठाञ्ठ्JKव्_३,४.४४ः

कर्तृ-ग्रहणं अनुवर्तते।
ऊर्ध्व-शब्दे कर्तृ-वाचिनि उपपदे शुषिपुरोः धात्वोः णमुल्प्रत्ययो भवति।

ऊर्ध्वशोषं शुष्यति।
ऊर्ध्वं शुष्यति इत्यर्थः।
ऊर्ध्वपूरं पूर्यते।
ऊर्ध्वं पूर्यते इत्यर्थः।।

---

[#३०२]

1. <उपमाने कर्मणि च>#।। PS_३,४.४५।।

_______Sठाऽ्ठ्JKव्_३,४.४५ः

उपमीयतेऽनेन इत्युपमानं।
उप्माने कर्मणि उपपदे, चकारात्कर्तरि, धातोः णमुल्प्रत्ययो भवति।
घृतनिधायं निहितः।
घृतं इव निहितः इत्यर्थः।
सुवर्णनिधायं निहितः।
सुवर्णं इव निहितः इत्यर्थः।
कर्तरि खल्वपि - अजकनाशं नष्टः।
अजक इव नष्टः।
चूडकनाशं।
दन्तनाशं।।

---

1. <कषादिषु यथाविध्य्-अनुप्रयोगः>#।। PS_३,४.४६।।

_______Sठाऽ्ठ्JKव्_३,४.४६ः

निमूलसमूलयोः इत्येतदारभ्य कषादयः।
एतेषु यथाविध्य्-अनुप्रयोगो भवति।
यस्माद्धातोः णमुल्प्रत्ययो भवति स एव अनुप्रयोक्तव्यः।
ननु धातु-सम्बन्धे प्रत्यय-विधानादनुप्रयोगः सिद्ध एव ? यथाविधि इति नियम-अर्थं वचनम्, तथा च+एव+उदाहृतं।।

---

1. <उपदंशस्तृतीयायाम्>#।। PS_३,४.४७।।

_______Sठा~ठ्JKव्_३,४.४७ः

दंश दशने, अस्माद्धतोरुपपूर्वात्तृतीयान्ते उपपदे णमुल्प्रत्ययो भवति।
मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं।
आऋद्रकोपदंशम्, आर्द्रकेणोपदंशं।
अत्र विकल्पेन+उपपद-समासः तृतीयाप्रभृतीन्य्-अन्तरस्यां (*२,२.२१)।
मूलकादि चोपदंशेः कर्म।
भुजेः करणं।
सर्वस्मिन्नेव अत्र णमुल्-प्रकरणे क्रियाभेदे सति वासरूप-विधिना क्त्वापि भवति।
मूलकेनोपदश्य भुङ्क्ते।।

---

1. <हिंसा-अर्थानां च समानकर्मकाणाम्>#।। PS_३,४.४८।।

_______Sठा~ठ्JKव्_३,४.४८ः

तृतीयायां इत्येव।
हिंसा प्राण्य्-उपघातः।
तदर्थानां धातूनां अनुप्रयोग-धातुना समान-कर्मकाणां तृतीयान्ते उपपदे णमुल्प्रत्ययो भवति।
दण्डोपघातं गाः कालयति, दण्डेनोपघातं।
दण्डताडम्, दण्डेन ताडं।
समानकर्मकाणां इति किं? चोरं दण्डेनोपहत्य गोपालको गाः कालयति।।

---

1. <सप्तम्यां च+उपपीड-रुध-कर्षः>#।। PS_३,४.४९।।

_______Sठा~ठ्JKव्_३,४.४९ः

उपशब्दः प्रत्येकं अभिसम्बध्यते।
उपपूर्वेभ्यः पीड-रुध-कर्षेभ्यः सप्तम्यन्ते उपपदे, चकारात्तृतीयान्ते उपपदे, णमुल प्रत्ययो भवति।
पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्यां उपपीडं।
व्रजोपरोधं गाः स्थाप्यति, व्रजे उपरोधम्, व्रजेनोपरोधं।
पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षं।
कर्षतेरिदं ग्रहणं न कृषतेः।।

---

[#३०३]

1. <समासत्तौ># । । PS_३,४.५० । ।

______Sठाऽ्ठJKव्_३,४.५०ः

सप्तम्यां तृतीयायां इति वर्तते ।
समासत्तिः सन्निकर्षः ।
समासत्तौ गम्यमानायां तृतीया-सप्तम्योः उपपदयोः धातोः णमुल्प्रत्ययो भवति ।
केशग्राहं युध्यन्ते, केशेषु ग्राहम्, केशैर्ग्राहं ।
हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर्ग्राहं ।
युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः । ।

---

1. <प्रमाणे च># । । PS_३,४.५१ । ।

______Sठाऽ्ठJKव्_३,४.५१ः

तृतीया-सप्तम्योः इत्येव ।
प्रमाणं आयामः, दैर्घ्यं ।
प्रमाणे गम्यमने तृतीया-सप्तम्योः उपपदयोः धातोर्णमुल्प्रत्ययो भवति ।
द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षं ।
त्र्यङ्गुलोत्कर्षं । ।

---

1. <अपादाने परीप्सायाम्># । । PS_३,४.५२ । ।

______Sठाऽ्ठJKव्_३,४.५२ः

परीप्सा त्वरा ।
परीप्सायां गम्यमानायां अपादाने उपपदे धातोः णमुल्प्रत्ययो भवति ।
शय्योत्थायं धावति, शय्याया उत्थाय ।
एवं नाम त्वरते यदवश्यंकर्तव्यं अपि न अपेक्षते ।
शय्योत्थानमात्रं आद्रियते ।
रन्ध्रापकर्षं पयः पिवति ।
भ्राष्ट्रापकर्षमपूपान्भक्षयति ।
परीप्सायां इति किं ? आसनादुत्थाय गच्छति । ।

---

1. <द्वितियायां च># । । PS_३,४.५३ । ।

_______Sठाऩ्ठ्JKव्_३,४.५३ः

परीपसायां इत्येव ।
द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोः णमुल्प्रत्ययो भवति ।
यष्टिग्राहं युध्यन्ते, यष्टिं ग्राहं ।
लोष्टग्राहम्, लोष्टं ग्राहं ।
एवं नाम त्वरते यदायुध-ग्रहणं अपि न अद्रियते ।
लोष्तादिकं यत्किंचिदासन्नं तद्गृह्णाति । ।

---

1. <स्वाङ्गेऽध्रुवे># । । PS_३,४.५४ । ।

_______Sठाऩ्ठ्JKव्_३,४.५४ः

द्वितीयायां इत्येव ।
अग्रुवे स्वाङ्ग-वाचिनि द्वितीयान्त उपपदे धातोः णमुल्प्रत्ययो भवति ।
अक्षिनिकाणं जल्पति ।
भ्रूविक्षेपं कथयति ।
अघ्रुवे इति किं ? उत्क्षिप्य शिरः कथयति ।
यस्मिनङ्गे छिन्नेऽपि प्राणी न म्रियते तदघ्रुवं ।
अद्रवं मूर्तिमत्स्वाङ्गं । ।

---

[#३०४]

1. <परिक्लश्यमाने च># । । PS_३,४.५५ । ।

_______Sठाऩ्ठ्JKव्_३,४.५५ः

स्वाङ्गे, द्वितीयायां इत्येव ।
परिक्लिश्यमाने स्वाङ्ग-वाचिनि द्वितीयान्ते उपपदे धातोः णमुल्प्रत्ययो भवति ।

परिक्लेशः सर्वतो विबाधनम्, दुःखनं ।
उरःपेषं युध्यन्ते, उरःप्रतिपेषं युध्यन्ते ।
शिरःपेषम्, शिरःप्रतिपेषं ।
कृत्स्नमुरः पीडयन्तो युध्यन्ते ।
घ्रुवार्थोऽयं आरम्भः । ।

---

1. <विशि-पति-पदि-स्कन्दां व्याप्यमान-आसेव्यमानयोः># । । PS_३,४.५६ । ।

_______Sठा~ठJKव्_३,४.५६ः

द्वितीयायां इत्येव ।
द्वितीयान्ते उपपदे विश्यादिभ्यो धातुभ्यो णमुल्प्रत्ययो भवति, व्याप्यमाने आसेव्यमाने च अर्थे गम्यमाने ।
विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां सम्बन्धो व्याप्तिः ।
तात्पर्यं आसेवा ।
द्रव्ये व्याप्तिः, क्रियायामासेवा ।
गेह-अनुप्रविशं आस्ते ।
समासेन व्याप्त्यासेवयोरुक्तत्वात्नित्य-वीप्सयोः (*८,१.४) इति द्विर्वचनं न भवति ।
असमासपक्षे तु व्याप्यमानतायां द्रव्य-वचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रिया-वचनस्य ।
तथा च वक्ष्यति - सुप्सु वीप्स, तिङ्क्षु नित्यता इति ।
गेहं गेहं अनुप्रवेशं आस्ते ।
आसेवायां - गेहं अनुप्रवेशं अनुप्रवेशं आस्ते ।
पति - गेह-अनुप्रपातं आस्ते गेहं गेहं अनुप्रपातं आस्ते, गेहं अनुप्रपातं अनुप्रपातं आस्ते ।
पदि - गेह-अनुप्रपादं आस्ते, गेहं गेहं अनुप्रपादम्, गेहं अनुप्रपादं अनुप्रपादं ।
स्कन्दि - गेह-अवस्कन्दं आस्ते, गेहं गेहं अवस्कन्दम्, गेहं अवस्कन्दं अवस्कन्दं ।
व्याप्यं आनासेव्यमानयोः इति किं ? गेहं अनुप्रविश्य भुङ्क्ते ।
ननु आभीक्ष्ण्ये णमुल् विहित एव, आसेवा आभीक्ष्ण्यं एव, किं अर्थं पुनर् आसेवायां णमुलुच्यते ? क्त्वानिवृत्त्य्-अर्थं इति चेत्, न, इष्टत्वात्तस्य ।
द्वितीयोपपद-अर्थं तर्हि वचनम्, उपपदसमासः पक्षे यथा स्याथ् ।
तेन हि सति उपपदाभावः । ।

---

1. <अस्यति-तृषोः क्रियान्तरे कालेषु># । । PS_३,४.५७ । ।

_______Sठा~ठJKव्_३,४.५७ः

द्वितीयायां इत्येव ।
क्रियामन्तरयति क्रियान्तरः, क्रियाव्यवधायकः ।
क्रियान्तरे धात्वर्थे वर्तमानाभ्यां अस्यति-तृषिभ्यां द्वितीयान्तेषु काल-वाचिषु उपपदेषु णमुल्प्रत्ययो भवति ।
द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासं गाः पाययति ।

त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं गाः पाययति ।
द्व्यहतर्षं गाः पाययति, द्व्यहंतर्षं गाः पाययति ।
अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते विच्छिद्यते ।
अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययति इत्यर्थः ।
अस्यति-तृषोः इति किं ? द्व्यहमुपोष्य भुङ्क्ते ।
क्रियान्तरे इति किं ? अहरत्यस्य इषून्गतः ।

[#३०५]

न गतिर्व्यवधीयते ।
कालेषु इति किं ? योजनं अत्यस्य गाः पाययति ।
अध्वकर्मकं अत्यसनं व्यवधायकम्, न काल-कर्मकं । ।

---

1. <नाम्न्य्-आदिशि-ग्रहोः># । । PS_३,४.५८ । ।

_______Sठा~ठJKव्_३,४.५८ः

द्वितीयायां इत्येव ।
नाम-शब्दे द्वितीयान्ते उपपदे आदिशेर्ग्रहेश्च धातोः णमुल्प्रत्ययो भवति ।
देशं आचष्ते ।
नामग्राहं आचष्टे । ।

---

1. <अव्ययेऽयथाभिप्रेत-आख्याने कृञः क्त्वा-णमुलौ># । । PS_३,४.५९ । ।

_______Sठा~ठJKव्_३,४.५९ः

अव्यये उपपदे अयथभिप्रेत-आख्याने गम्यमाने करोतेः क्त्वा-णमुलौ भवतः ।
ब्राहमण, पुत्रस्ते जातः ।
किं तर्हि वृषल, नीचैः कृट्याचक्षे, नीचैः कृत्वा, नीचैः कारं ।
उच्चैर्नाम प्रियं आख्येयं ।
ब्राहमण, कन्या ते गर्भिणी ।
किं तर्हि वृषल, उच्चैः कृत्याचक्षे, उच्चैः कृत्वा, उच्चैः कारं ।
नीचैर्नामाप्रियं आख्येयं ।
अयथाभिप्रेत-आख्याने इति किं ? उच्चैः कृत्वाचष्टे पुत्रस्ते जातः इति ।
क्त्वा-ग्रहणं किम्, यावता सर्वस्मिन्नेव अत्र प्रकरणे वासरूपेण क्त्वा भवति इत्युक्तं ? समास-अर्थं वचनं ।
तथा च क्त्वा च (*२,२.२२) इत्यस्मिन्सूत्रे तृतीया-प्रभृतीन्य्-अन्यतरस्यां (*२,२.२१) इति वर्तते ।
णमुल्-अधिकारे पुनर्णमुल्-ग्रहणं तुल्यकक्षत्वज्ञापन-अर्थम्, तेन+उत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यति । ।

---

1. <तिर्यच्यपवर्गे># । । PS_३,४.६० । ।

_______Sठाव्ठJKव्_३,४.६०ः

तिर्यक्-शब्दे उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतः, अपवर्गे गम्यमाने ।
अपवर्गः समाप्तिः ।
तिर्यक्-कृत्य गतः, तिर्यक्-कृत्वा गतः, तिर्यक्-कारं गतः ।
समाप्य गतः इत्यर्थः ।
अपवर्गे इति किं ? तिर्यक्-कृत्वा काष्ठं गतः ।
तिर्यचि इति शब्द-अनुकरणं ।
न च प्रकृतिवद्-अनुकरणेन भवितव्यम्, अनुक्रियमाणरूपविनाशप्रसङ्गात्, एतदोऽश्, अदसो मात्(*१,१.१२) इति । ।

---

[#३०६]

1. <स्वाङ्गे तस्-प्रत्यये कृभ्वोः># । । PS_३,४.६१ । ।

_______Sठाव्ठJKव्_३,४.६१ः

तस्-प्रत्ययो यतः स्व-अङ्गात्तदेवं उच्यते ।
तस्-प्रत्यये स्वाङ्ग-वाचिनि उपपदे करोतेः भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः ।
यथा-सङ्ख्यं अत्र नेष्यते, अस्वरितत्वाथ् ।
मुखतः-कृत्य गतः, मुखतः कृत्वा गतः, मुखतः-कारं गतः ।
मुखतोभूय तिष्ठति, मुखतो भूत्वा तिष्ठति, मुखतोभावं तिष्ठति ।
पृष्ठतःकृत्य गतः, पृष्ठतः कृत्वा गतः, पृष्ठतः कारं गतः ।
पृष्ठतोभूय गतः, पृष्ठतो भूत्वा, पृष्ठतोभावं ।
स्वाङ्गे इति किं ? सर्वतः कृत्वा गतः ।
तस्-ग्रहणं किं ? मुखीकृत्य गतः ।
मुखीभूय गतः ।
प्रत्यय-ग्रहणं किं ? मुखे तस्यति इति मुखतः, मुखतः कृत्वा गतः । ।

---

1. <ना-धा-अर्थप्रत्यये च्व्य्-अर्थे># । । PS_३,४.६२ । ।

_______Sठाव्ठJKव्_३,४.६२ः

ना-अर्थो धा-अर्थश्च प्रत्ययो यस्मात्स एवं उच्यते ।
नाधार्थप्रत्यये शब्दे च्व्य्-अर्थे उपपदे कृभ्वोः धात्वोः क्त्वाणमुलौ प्रत्ययु भवतः ।
अनाना नाना कृत्वा गतः नानाकृत्य गतः, नाना कृत्वा गतः, नानाकारं गतः ।
विनाकृत्य गतः, विना कृत्वा गतः, विनाकारं गतः ।
नानाभूय गतः, नाना भूत्वा गतः, नानाभावं गतः ।
विनाभूय गतः, विना भूत्वा गतः, द्विनाभावं गतः ।
द्विधाकृत्य गतः, द्विधा कृत्वा गतः, द्विधाकारं गतः ।
द्विधाभूय गतः, द्विधा भूत्वा गतः, द्विधाभावं गतः ।
द्वैधंकृत्य गतः, द्वैधं कृत्वा गतः, द्वैधंकारं गतः ।
द्वैधंभूय गतः, द्वैधं भूत्वा गतः, द्वैधंभावं गतः ।
प्रत्यय-ग्रहणं किं ? हिरुक्कृत्वा ।
पृथक्कृत्वा ।
च्व्य्-अर्थे इति किं ? नाना कृत्वा काष्ठानि गतः ।
धार्थं अर्थ-ग्रहणम्, ना पुनरेक एव, विनञ्भ्यां नानाञौ इति । ।

---

1. <तूष्णीमि भुवः># । । PS_३,४.६३ । ।

______Sठाय्ठ्JKव्_३,४.६३ः

तूष्णीं-शब्दे उपपदे भवतेः धातोः क्त्वाणमुलौ प्रत्ययौ भवतः ।
तूष्णीं-भूय गतः, तूष्णीं भूत्वा, तूष्णीं-भावं ।
भू-ग्रहणं कृञो निव्हत्त्य्-अर्थं । ।

---

1. <अन्वच्यानुलोम्ये># । । PS_३,४.६४ । ।

______Sठाय्ठ्JKव्_३,४.६४ः

अन्वक्-शब्दे उपपदे भवतेर्धातोः आनुलोम्ये क्त्वाणमुलौ भवतः ।
आनुलोम्यं अनुलोमता, अनुकूलत्वम्, परिचित्तानुविधानं ।
अन्वग्भूय आस्ते, अन्वग्भूत्वा आस्ते, अन्वग्भावं आस्ते ।
आनुलोम्ये इति किं ? अन्वग्भूत्वा तिष्ठति । ।

---

[#३०७]

1. <शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सह-अर्ह-अस्त्य्-अर्थेषु तुमुन्># । । PS_३,४.६५ । ।

_______Sठा-ऌJKव्_३,४.६५ः

शक-आदिषु उपपदेषु अस्त्य्-अर्थेषु वा धातुमात्रात्तुमुन्प्रत्ययो भवति ।
अत्रियार्थोपपदार्थोऽयं आरम्भः ।
शक्नोति भोक्तुं ।
धृष्णोति भोक्तुं ।
जानाति भोक्तुं ।
ग्लायति भोक्तुं ।
घटते भोक्तुं ।
आरभते भोक्तुं ।
लभते भोक्तुं ।
प्रक्रमते भोक्तुं ।
सहते भोक्तुं ।
अर्हति भोक्तुं ।
अस्त्य्-अर्थेषु खल्वपि - अस्ति भोक्तुं ।
भवति भोक्तुं । ।

---

1. <पर्याप्ति-वचनेष्वलम्-अर्थेषु># । । PS_३,४.६६ । ।

_______Sठा-ऌJKव्_३,४.६६ः

पर्याप्तिः अन्यूनता ।
पर्याप्ति-वचनेषु अलमर्थेषु उपपदेषु धातोस्तुमुन्प्रत्यओ भवति ।
पर्याप्तो भोक्तुं ।
अलं भोक्तुं ।
भोक्तुं पारयति ।
पर्याप्ति-वचनेषु इति किं ? अलं कृत्वा ।
अलम्-अर्थेषु इति किं ? पर्याप्तं भुङ्क्ते ।
पूर्वसूत्रे शकिग्रहणं अनलमर्थम्, शक्यं एवं कर्तुं इति । ।

---

1. <कर्तरि कृत्># । । PS_३,४.६७ । ।

_______Sठान्ठ्JKव्_३,४.६७ः

कृत्-सञ्ज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति ।
कृद्-उत्पत्ति-वाक्यानां अयं शेषः ।
तत्र येषु अर्थ-निर्देशो नास्ति तत्र+इदं उपतिष्ठते, अर्थाकाङ्क्षत्वाथ् ।
न ख्युन्नादि-वाक्येषु, साक्षादर्थ-निर्देशे सति तेषां निराकाङ्क्षत्वाथ् ।
कारकः ।
कर्ता ।
नन्दनः ।
ग्राही ।
पचः । ।

---

1. <भव्य-गेय-प्रवचनीय-उपस्थानीय-जन्य-आप्लाव्य-आपात्या वा># । । PS_३,४.६८ । ।

_______Sठान्ठ्JKव्_३,४.६८ः

भव्यादयः शब्दाः कर्तरि वा निपात्यन्ते ।
तयोरेव कृत्य-क्त-खल्-अर्थः (*३,४.७०) ।
इति भाव-कर्मणोः प्राप्तयोः कर्ता च वाच्यः पक्षे उच्यते ।
भवत्यसौ भव्यः, भव्यं अनेन इति वा ।
गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानि इति वा ।
प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा ।
उपस्थानीयोऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः ।
जायतेऽसौ जन्यः, जन्यमनेन इति वा ।
आप्लवतेऽसावाप्लाव्यः, आप्लाव्यं अनेन इति वा ।
आपतति असावापात्यः, आपात्यं अनेन इति वा । ।

---

1. <लः कर्मणि च भावे च अक्रमकेभ्यः># । । PS_३,४.६९ । ।

_______Sठान्ठ्JKव्_३,४.६९ः

लः इत्युत्सृष्टानौबन्धं सामान्यं गृह्यते, प्रथमाबहुवचनान्तं चा+एअथ् ।
लकाराः कर्मणि कारके भवन्ति, चकारात्कर्तरि च अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात्कर्तरि च ।
गम्यते ग्रामो देवदत्तेन ।
गच्छति ग्रामं देवदत्तः ।
अकर्मकेभ्यः - आस्यते देवदत्तेन ।

आस्ते देवदत्तः ।
सक्रमकेभ्यो भावे न भवन्ति । ।

---

[#३०८]

1. <तयोरेव कृत्य-क्त-खल्-अर्थाः># । । PS_३,४.७० । ।

_______Sठान्ठ्JKव्_३,४.७०ः

तयोरेव भावकर्मणोः कृत्य-सञ्ज्ञाकाः क्त-खल्-अर्थाश्च प्रत्यया भवन्ति ।
एव-कारः कर्तुरपकर्शण-अर्थः ।
कृत्याः कर्मणि - कर्तव्यः कटो भवता ।
भोक्तव्य ओदनो भवता ।
भावे - आशितव्यं भवता ।
शयितव्यं भवता ।
क्तः कर्मणि - कृतः कटो भवता ।
भुक्त ओदनो भवता ।
भावे - आसितं भवता ।
शयितं भवता ।
खल्-अर्थाः कर्मणि ईषत्करः कटो भवता ।
सुकरः ।
दुष्करः ।
भावे - ईषदाढ्यंभवं भवता ।
स्वाढ्यंभवं भवता ।
भावो चाक्रमकेभ्यः इत्यनुवृत्तेः सकर्मकेभ्यो भावे न भवन्ति । ।

---

1. <आदिकर्मणि क्तः कर्तरि च># । । PS_३,४.७१ । ।

_______Sठान्ठ्JKव्_३,४.७१ः

आदिकर्मणि यः क्तो विहितः स कर्तरि भवति ।
चकाराद्यथाप्राप्तं भावकर्मणोः ।
आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितः, तस्य अयं अर्थ-निर्देशः ।
प्रकृतः कटं देवदत्तः, प्रकृतः क्तो देवदत्तेन, प्रकृतं देवदत्तेन ।
प्रभुक्त ओदनं देवदत्तः, प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन । ।

---

1. <गत्य्-अर्थ-अक्रमक-श्लिष-शीङ्-स्था-आस-वस-जन-रुह-जीर्यतिभ्यश्च># ।। PS_३,४.७२ ।।

_______Sठा~ठ्JKव्_३,४.७२ः

गत्य्-अर्थभ्यो धातुभ्योऽकर्मकेभ्य श्लिषादिभ्यश्च यः क्तः, स कर्तरि भवति ।
चकाराद्यथाप्राप्तं च भावकर्मणोः ।
गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामन्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन ।
अकर्मकेभ्यः - ग्लानो भवान्, ग्लानं भवता ।
आसितो भवान्, आसितं भवता ।
श्लिष - उपश्लिष्टो गुरुं भवान्, उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता ।
शीङ्- उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता ।
स्था - उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता ।
आस - उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं भवता ।
वस - अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता ।
जन - अनुजातो माणवको माण - विकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन ।
रुह - आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता ।
जीर्यति - अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृपली देवदत्तेन, अनुजीर्णं देवदत्तेन ।
श्लिषादयः सोपसर्गाः सकर्मका भवन्ति, तदर्थं एषां उपादानं ।।

---

1. <दाश-गोघ्नौ सम्प्रदाने># ।। PS_३,४.७३ ।।

_______Sठा~ठ्JKव्_३,४.७३ः

दाश-गोघ्नौ शब्दौ संप्रदाने कारके निपात्येते ।
दाशृ दाने, ततः पचाद्यछ् ।
स कृत्सञ्ज्ञकत्वात्कर्तरि प्राप्तः, सम्प्रदाने निपात्यते ।
दाशन्ति तस्मै इति दाशः ।
आगताय तस्मै दातुं गां हन्ति इति गोघ्नः, अर्घार्होऽतिथिः ।
टगत्र निपात्यते ।
निपातन-सामर्थ्यादेव गोघ्नः ऋत्विग्-आदिरुच्यते, न तु चण्डालादिः ।
असत्यपि च गोहनने तस्य योग्यतया गोघ्नः इत्यभिधीयते ।।

---

[#३०९]

1. <भीम-आदयोऽपादाने># ।। PS_३,४.७४ ।।

_______Sठा~ठ्JKव्_३,४.७४ः

भीमादयः शब्दा अपादाने निपात्यन्ते ।
उणादि-प्रत्ययान्ता एते, इषियुधीन्धिदसिश्याधूसूभ्यो मक्, भियष्षुक्ग्रस्वश्च इत्येवं आदयः ।
ताभ्यां अन्यत्र-उणादयः (*३,४.७५) इति पर्यदासे प्राप्ते निपातनं आरभ्यते ।
भीमः ।
भीष्मः ।
भयानकः ।
वरुः ।
भूमिः ।
रजः ।
संस्कारः ।
संक्रन्दनः ।
प्रपतनः ।
समुद्रः ।
स्रुचः ।
स्रुक् ।
खलतिः । ।

---

1. <ताभ्यां अन्यत्र-उणादयः># । । PS_३,४.७५ । ।

_______Sठा~ठ्JKव्_३,४.७५ः

उणादयः शब्दाः ताभ्यां अपादान-सम्प्रदानाभ्यां अन्यत्र कारके भवन्ति ।
कृत्त्वात्कर्तर्येव प्राप्ताः कर्मादिषु कथ्यन्ते ।
ताभ्यां इति सम्प्रदान-अर्थः प्रत्यवमर्शः, अन्यथा ह्यपादानं एव पर्युदस्येत, अनन्तरत्वाथ् ।
कृषितोऽसौ कृषिः ।
तनित इति तन्तुः ।
वृत्तं इति वर्त्म ।
चरितं चर्म । ।

---

1. <क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसान-अर्थेभ्यः># । । PS_३,४.७६ । ।

_______Sठा~ठ्JKव्_३,४.७६ः

द्रौव्य-अर्थाः अकर्मकाः, प्रत्यवसान-अर्थाः अभ्यवहार-अर्थाः इति स्वनिकाय-प्रसिद्धिः ।
ध्रौव्या-गति-प्रत्यवसान-अर्थेभ्यः यः क्तो विहितः सोऽधिकरणे भवति ।
चकाराद्यथाप्राप्तं च ।
ध्रौव्य-अर्थेभ्यः कर्तृभाव-अधिकरणेषु, गत्य्-अर्थेभ्यः कर्तृकर्मभाव-अधिकरनेषु, प्रत्यवसान-अर्थेभ्यः कर्मभाव-अधिकरणेसु ।

ध्रौव्य-अर्थेभ्यः तावत्- आसितो देवदत्तः, आसितं तेन, इदं एषां आसितं ।
गत्य्-अर्थेभ्यः - यातो देवदत्तो ग्रामम्, यातो देवदत्तेन ग्रामः, यातं देवदत्तेन, इदं एषां यातं ।
प्रत्यवसान-अर्थेभ्यः - भुक्तः ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदं एषां भुक्तं ।
कथं भुक्ता ब्राह्मणाः, पीता गावः इति ।
अकारो मत्वर्थीयः, भुक्तं एषां अस्ति, पीतं एषां अस्ति इति । ।

---

1. <लस्य># । । PS_३,४.७७ । ।

______Sठा-ठ्JKव्_३,४.७७ः

लस्य इत्ययं अधिकारः ।
अकार उच्चारन-अर्थः ।
लकारमात्रं स्थानित्वेन अधिक्रियते ।
यदिति ऊर्ध्वं अनुक्रमिष्यामः लस्य इत्येवं तद्वेदितव्यं ।
किं च+इदं लस्य इति ? दश लकारा अनुबन्ध-विशिष्टा विहिता अर्थ-विशेषे काल-विशेषे च ।
तेषां विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं तद्गृह्यते ।
षट्टितः, चत्वारः ङितः ।
अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते ।
लट् ।
लिट् ।
लुट् ।
लृट् ।
लेट् ।
लोट् ।
लङ् ।
लिङ् ।
लुङ् ।
लृङ् ।
इति ।
अथ लकारमात्रस्य ग्रहणं कस्मान्न भवति, लुनाति, चूडालः इति ? धात्व्-अधिकारोऽनुवर्तते, कर्त्रादयश्च विशेषकाः । ।

---

[#३१०]

1. <तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-त-आतां-झ-थास्-आथाम्-ध्वम्-इड्-वहि-महिङ्># । । PS_३,४.७८ । ।

______Sठा-ठ्JKव्_३,४.७८ः

लस्य तिब्-आद्य आदेशा भवन्ति ।

तिप्-सिप्-मिपां पकारः स्वर-अर्थः।
इटष्टकारः इटोऽत्(*३,४.१०६) इति विशेषण-अर्थः, तिब्-आदिभिरादेशैस्तुल्यत्वान्न देश-विध्यर्थः।
महिङो ङकारः तिङिति प्रत्याहार-ग्रहण-अर्थः।
पचति, पचतः, पचन्ति।
पचसि, पचथः, पचथ।
पचामि, पचावः, पचामः।
पचते, पचेते, पचन्ते।
पचसे, पचेथे, पचध्वे।
पचे, पचावहे, पचामहे।
एवं अन्येष्वपि लकरेषु उदाहार्यं।।

---

1. <टित आत्मनेपदानां टेरे>#।। PS_३,४.७९।।

_______Sठाञ्ठ्JKव्_३,४.७९ः

टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेः एकार-आदेशो भवति।
तथा च+एव+उदाहृतं।
इह कस्मान्न भवति पचमानः, यजमानः ? प्रकृतैस्तिबादिभिः आत्मनेपदानि विशेष्यन्ते।।

---

1. <थासः से>#।। PS_३,४.८०।।

_______Sठाञ्ठ्JKव्_३,४.८०ः

टितः इत्येव।
टितो लकारस्य यः थास्तस्य सेशब्द आदेशो भवति।
पचसे।
पेचिषे।
पक्तासे।
पक्ष्यसे।।

---

1. <लिटस्त-झयोरेश्-इरेच्>#।। PS_३,४.८१।।

_______Sठाञ्ठ्JKव्_३,४.८१ः

लिङ्-आदेशयोः त-झयोः यथासङ्ख्यं एशिरेचित्येतावादेशौ भवतः ।
शकारः सर्वादेश-अर्थः ।
चकारः स्वरार्थः ।
पेचे, पेचाते, पेचिरे ।
लेभे, लेभाते, लेभिरे । ।

---

1. <प्रस्मैपदानां णल्-अतुस्-उस्-थल्-थुस्-अणल्-व-माः># । । PS_३,४.८२ । ।

______Sठा~ठ्JKव्_३,४.८२ः

लिटः इत्येव ।
लिङ्-आदेशानां परस्मैपद-सञ्ज्ञाकानां यथासङ्ख्यं तिबादीनां णलादयो नव आदेशा भवन्ति ।
लकारः स्वरार्थः ।
णकारो वृद्ध्य्-अर्थः ।
पपाच, पेचतुः, पेचुः ।
पेचिथ, पपक्थ, पेचथुः, पेच ।
पपाच, पपच, पेचिव, पेचिम । ।

---

1. <विदो लटो वा># । । PS_३,४.८३ । ।

______Sठा~ठ्JKव्_३,४.८३ः

परस्मैपदानां इत्येव ।
विद ज्ञाने, अस्माद्धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेन आदेशा भवन्ति ।
वेद, विदतुः, विदुः ।
वेत्थ, विदथुः, विद ।
वेद, विद्व, विद्म ।
न च भवति ।
वेत्ति, वित्तः, विदन्ति ।
वेत्सि, वित्थः, वित्थ ।
वेद्मि, विद्वः, विद्मः । ।

---

[#३११]

1. <ब्रुवः पञ्चानां आदित आहो ब्रुवः># । । PS_३,४.८४ । ।

_______Sठाञ्ठJKव्_३,४.८४ः

परस्मैपदानां इत्येव, लटो वा इति च ।
ब्रुवः परस्य लटः परस्मैपदानां पञ्चानाम अदिभूतानां पञ्चैव णलादय आदेशा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति ।
आह, आहतुः, आहुः ।
आत्थ, आहथुः ।
न च भवति ।
ब्रवीति, ब्रूतः, ब्रुवन्ति ।
ब्रवीषि, ब्रूथः ।
पञ्चानां इति किं ? ब्रूथ ।
ब्रवीमि, ब्रूवः, ब्रूमः ।
आदितः इति किं ? परेषां मा भूथ् ।
ब्रुवः इति पुनर्वचनं स्थान्य्-अर्थम्, प्रस्मैपदानां एव हि स्यात् । ।

---

1. <लोटो लङ्वत्># । । PS_३,४.८५ । ।

_______Sठाञ्ठJKव्_३,४.८५ः

अतिदेशोऽयं ।
लोटो लङ्वत्कार्यं भवति ।
ताम्-आदयः, सलोपश्च ।
पचतां ।
पचतं ।
पचत ।
पचाव ।
पचाम ।
अडाटौ कस्मान्न भवतः, तथा झेर्जुस्-आदेशः लङः शाकटायनस्य+एव (*३,४.१११) इति वान्तु, यान्तु ? विदो लटो वा (*३,४.८३) इत्यतो वा-ग्रहणं अनुवर्तते, सा च व्यवस्थित-विभाषा भविष्यति । ।

---

1. <एरुः># । । PS_३,४.८६ । ।

_______Sठाञ्ठJKव्_३,४.८६ः

लोटः इत्येव ।
लोड्-आदेशानां इकारस्य उकारादेशो भवति ।
पचतु ।
पचन्तु ।
हिन्योरुत्वप्रतिषेधो वक्तव्यः ।
न वा उच्चारण-सामर्थ्याथ् ।
अथ वा वा इति वर्तते, सा च व्यवशित-विभाषा । ।

---

1. <सेह्र्यपिच्च># । । PS_३,४.८७ । ।

______Sठाऱ्ठ्JKव्_३,४.८७ः

लोटः इत्येव ।
लोड्-आदेशस्य सेः हि इत्ययं आदेशो भवति, अपिच्च भवति ।
स्थानिवद्भावात्पित्त्वं प्राप्तं प्रतिषिध्यते ।
लुनीहि ।
पुनीहि ।
राध्नुहि ।
तक्ष्णुहि । ।

---

1. <वा छन्दसि># । । PS_३,४.८८ । ।

______Sठाऱ्ठ्JKव्_३,४.८८ः

अपित्त्वं विकल्प्यते ।
ल-आदेशः छन्दसि विषये हि-शब्दो वा अपिद्भवति ।
युयोध्यस्मज्जुहुराणमेनः ।
प्रीणाहि ।
प्रीणीहि । ।

---

1. <मेर्निः># । । PS_३,४.८९ । ।

_______Sठाऽ्ठJKव्_३,४.८९ः

लोटः इत्येव।
लोड्-आदेशस्य मेः निः आदेशो भवति।
उत्वलोपयोरपवादः।
पचानि।
पठानि।।

---

[#३१२]

1. <आं एतः># ।। PS_३,४.९० ।।

_______Sठाऽ्ठJKव्_३,४.९०ः

लोटः इत्येव।
लोट्सम्बधिनः एकारस्य अं इत्ययं आदेशो भवति।
पचताम्, पचेताम्, पचन्तां।।

---

1. <स-वाभ्यां वामौ># ।। PS_३,४.९१ ।।

_______Sठाऽ्ठJKव्_३,४.९१ः

लोटः इत्येव।
सकार-वकाराभ्यां उत्तरस्य लोट्-सम्बन्धिन एकारस्य यथासङ्ख्यं च अं इत्येतावादेशौ भवतः।
आमोऽपवादः।
पचस्व।
पचध्वं।।

---

1. <आडुत्तमस्य पिच्च># ।। PS_३,४.९२ ।।

_______Sठाऽ्ठJKव्_३,४.९२ः

लोटः इत्येव।
लोट्-सम्बन्धिनः उत्तमपुरुषस्य आडागमो भवति, स च+उत्तमपुरुषः पिद्भवति।
करवाणि, करवाव, करवाम।
करवै, कर्वावहै, करवामहै।।

---

1. <एत ऐ># ।। PS_३,४.९३ ।।

______Sठाञ्ठ्JKव्_३,४.९३ः

लोट उत्तमस्य इति वर्तते।
लोडुत्तम-सम्भन्धिनः एकारस्य ऐकार-आदेशो भवति।
आमोऽपवादः।
करवैक्करवावहै, करवामहै।
इह कस्मान्न भवति, पचावेदम्, यजावेदं ? बहिरङ्ग-लक्षणत्वाद्गुणस्य।।

---

1. <लेटोऽड्-आटौ># ।। PS_३,४.९४ ।।

______Sठाञ्ठ्JKव्_३,४.९४ः

लेटोऽड्-आटावागमौ भवतः पर्यायेण।
जोषिषथ्।
तारिषथ्।
मन्दिषथ्।
पताति दिद्युथ्।
प्रजापतिरुदधिं च्यावयाति।।

---

1. <आत ऐ># ।। PS_३,४.९५ ।।

______Sठाञ्ठ्JKव्_३,४.९५ः

लेटः इत्येव।
लेट्सम्भन्धिनः आकारस्य ऐकार-आदेशो भवति।

प्रथमपुरुष-मध्यमपुरुष-आत्मनेपद-द्विवचनयोः ।
मन्त्रयैते ।
मन्त्रयैथे ।
करवैते ।
करवैथे ।
आटः कस्मान्न भवति ? विधानसामर्थ्यात् । ।

---

1. <वा-एतोऽन्यत्र># । । PS_३,४.९६ । ।

_______Sठा~ठ्JKव्_३,४.९६ः

लेटः इत्येव ।
लेट्-सम्भन्धिनः एकारस्य वा ऐकार-आदेशो भवति ।
अन्यत्र इत्यनन्तरो विधिरपेक्ष्यते ।
आत ऐ (*३,४.९५) इत्येतद्विषयं वर्जयित्वा एत ऐ भवति ।
सप्ताहानि शासै ।
अहं एव पशूनामीशै ।
मदग्रा एव वो ग्रहा गृह्यान्तै ।
मद्देवत्यान्येव वः पात्राण्युच्यान्तै ।
न च भवति ।
यत्र क्व च ते मनो दक्षं दधस उत्तरं ।
अन्यत्र इति किं ? मन्त्रयैते ।
मन्त्रयैथे । ।

---

[#३१३]

1. <इतश्च लोपः परस्मैपदेसु># । । PS_३,४.९७ । ।

_______Sठा~ठ्JKव्_३,४.९७ः

लेटः इत्येव ।
लेट्-सम्भन्धिनः इकारस्य परस्मैपद-विषयस्य लोपो भवति ।
वानुवृत्तेः पक्षे श्रवणं अपि भवति ।
जोषिषत्तारिषथ् ।
मन्दिषथ् ।
न च भवति ।
पताति दिद्युथ् ।
प्रजापतिरुदधिं च्यावयाति परस्मैपद-ग्रहणम्, इड्वहिमहिडां मा भूत् । ।

---

1. <स उत्तमस्य># । । PS_३,४.९८ । ।

______Sठा~ठ्JKव्_३,४.९८ः

लेटः इति वा इति च वर्तते ।
लेट्-सम्भन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति ।
करवाव, करवाम ।
न च भवति ।
करवावः, करवामः ।
उत्तमग्रहणम्, पुरुषान्तरे मा भूत् । ।

---

1. <नित्यं ङितः># । । PS_३,४.९९ । ।

______Sठा~ठ्JKव्_३,४.९९ः

लेतः इति निवृत्तं ।
ङितो लकारस्य य उत्तमः, तस्य नित्यं सकारस्य लोपो भवति ।
उपचाव, उपचाम ।
नित्य-ग्रहणं विकल्प-निवृत्त्य्-अर्थं । ।

---

1. <इतश्च># । । PS_३,४.१०० । ।

______Sठा~ठ्JKव्_३,४.१००ः

ङितः इत्येव ।
ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति ।
अपचथ् ।
अपाक्षीथ् ।
परस्मैपदेषु इत्येव, अपचावहि, अपचामहि । ।

---

1. <तस्-थस्-थ-मिपां तां-तं-त-अमः># । । PS_३,४.१०१ । ।

______Sठा~ठ्JKव्_३,४.१०१ः

ङितः इत्येव ।
ङिल्लकार-सम्बन्धिनां चतुर्णां यथासङ्ख्यं ताम्-आदयः अदेशा भवन्ति ।
अपचतां ।
अपचतं ।
अपचत ।
अपचं ।
अपाक्तां ।
अपाक्तं ।
अपाक्त ।
अपाक्षं । ।

---

1. <लिङः सीयुट्># । । PS_३,४.१०२ । ।

______Sठा~ठ्JKव्_३,४.१०२ः

लिङ्-आदेशानां सीयुड्-आगमो भवति ।
टकारो देशविध्य्-अर्थः ।
उकार उच्चारण-अर्थः ।
पचेत, पचेयाताम्, पचेरन् ।
पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् । ।

---

1. <यासुट्परस्मैपदेसु उदात्तो ङिच्च># । । PS_३,४.१०३ । ।

______Sठा~ठ्JKव्_३,४.१०३ः

लिङः इत्येव ।
परसमैपद-विषयस्य्लिङो यासुड्-आगमो भवति, स च+उदात्तो भवति ङिच्च ।
सीयुटोऽपवादः ।
आगम-अनुदात्ततवे प्राप्ते, ङित्त्वं तु लिङ एव विधीयते, तत्र तत्कार्याणां सम्भवाद्, न आगमस्य ।

कुर्यात्, कुर्याताम्, कुर्युः ।
स्थनिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटो ङिद्-वचनं ज्ञापन-अर्थम्, लकाराश्रयङित्त्वं आदेशानां न भवति इति ।
अचिनवं ।
अकरवं । ।

---

[#३१४]

1. <किदाशिसि># । । PS_३,४.१०४ । ।

______Sठा-ठ्JKव्_३,४.१०४ः

आशिषि यो लिङ्, तस्य यासुडागमो भवति, स च+उदात्तः किद्वद्भवति ।
प्रययस्य+एव+इदं कित्त्वम्, न आगमस्य, प्रयोजनाभावाथ् ।
ङित्त्वे प्राप्ते कित्त्वं विधीयते ।
गुणवृद्धि-प्रतिषेधः तुल्यः, सम्प्रसारणम्, जागर्तेर्गुणे च विशेषः ।
इष्यत्, इष्यास्ताम्, इस्यासुः ।
जागर्यात्, जागर्यास्ताम्, जागर्यासुः ।
आशिषि इति किं ? वच्याथ् ।
जागृयात् । ।

---

1. <झस्य रन्># । । PS_३,४.१०५ । ।

______Sठा-ठ्JKव्_३,४.१०५ः

लिङः इत्येव ।
झस्य लिङ्-आदेशस्य रनित्ययं आदेशो भवति ।
झोऽन्तापवादः ।
पचेरन् ।
यजेरन् ।
कृषीरन् । ।

---

1. <इटोऽत्># । । PS_३,४.१०६ । ।

_______Sठा~ठ्JKव्_३,४.१०६ः

लिङादेशस्य इअः अत इत्ययं आदेशो भवति ।
पचेय ।
यजेय ।
कृषीय ।
हृषीय ।
तकारस्य इत्सञ्ज्ञा-प्रतिषेधः प्राप्नोति, न विभक्तौ तुस्माः (*१,३.४) इति ? न+एव अयं आदेश-अवयवस्तकारः, किं तर्हि, मुखसुख-अर्थ उच्चार्यते ।
आगमस्य+इटो ग्रहणं न भवति, अर्थवद्-ग्रहणे नानार्थकस्य ग्रहणं इति । ।

---

1. <सुट्तिथोः># । । PS_३,४.१०७ । ।

_______Sठा~ठ्JKव्_३,४.१०७ः

लिङः इत्येव ।
लिङ्स्-अम्भन्धिनोः तकार-थकारयोः सुड्-आगमो भवति ।
तकर-थकारावागमिनौ, लिङ्तद्विशेषणं ।
सीयुटस्तु लिङेवागमी ।
तेन भिन्न-विषयत्वात्सुटा बाधनं न भवति ।
तकारे इकर उच्चारण-अर्थः ।
कृषीष्त ।
कृषीयास्तां ।
कृषीष्ठाः ।
कृषीयास्थां । ।

---

1. <झेर्जुसू># । । PS_३,४.१०८ । ।

_______Sठा~ठ्JKव्_३,४.१०८ः

लिङः इत्येव ।
लिङ्-आदेशस्य झेर्जुसादेशो भवति ।
झोऽन्तापवादः ।
पचेयुः ।
यजेयुः । ।

---

1. <सिज्-अभ्यस्त-विदिभ्यश्च># । । PS_३,४.१०९ । ।

_______Sठा~ठJKव्_३,४.१०९ः

अलिङ्-अर्थः आरम्भः ।
सिचः परस्य, अभ्यस्त-सञ्ज्ञकेभ्यो, वेत्तेश्च+उत्तरस्य झेर्जुस्, आदेशो भवति ।
अभ्यस्तविदि-ग्रहणं असिज्-अर्थं ।
ङित इति च अनुवर्तते ।
सिचस्तावत्- अकार्षुः ।
अहार्षुः ।
अभस्तात्- अबिभयुः ।
अजिह्रयुः ।
अजागरुः ।
विदेः - अविदुः । ।

---

[#३१५]

1. <आतः># । । PS_३,४.११० । ।

_______Sठा~ठJKव्_३,४.११०ः

सिज्-ग्रहणं अनुवर्तते ।
सिच आकारान्ताच्च परस्य झेः जुस्-आदेशो भवति ।
कथं आभ्यामानन्तर्यं ? सिचो लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या चाकारान्तादिति ।
अदुः ।
अधुः ।
अस्थुः ।
तकारो मुख-सुख-अर्थः ।
पूर्वेण+एव सिध्द्धे नियम-अर्थं वचनम्, आत एव सिज्लुगन्तात्, न अन्यस्मातिति ।
अभूवन् ।
प्रत्ययलक्षनेन जुस्प्राप्तः प्रतिषिध्यते, तुल्यजातीयापेक्षत्वान्नियमस्य ।
श्रूयमाने हि सिचि भवत्येव, अकार्षुः, अहार्षुः । ।

---

1. <लङः शाकटायनस्य+एव># । । PS_३,४.१११ । ।

_______Sठाऽ्ठJKव्_३,४.१११:

आतः इत्येव।
आकारान्तादुत्तरस्य लङादेशस्य झेः जुसादेशो भवति शाकटायनस्य आचार्यस्य मतेन।
अयुः।
अवुः।
अन्येषां मते - अयान्।
ननु ङितः इत्यनुवर्तते।
अत्र लङेव अकारान्तादनन्तरो ङित्सम्भवति न अन्यः, तत्किं लङ्-ग्रहणेन ? एवं तर्हि लङेव यो लङ्विहितः तस्य यथा स्यात्, लङ्वद्-भावेन यस्तस्य मा भूत्, लोटो लङ्वत्(*३,४.८५) इति।
यान्तु।
वान्तु।
सिज-भ्यस्त-विदिभ्यश्च (*३,४.१०९) इत्ययं अपि झेर्जुस्लोटो न भवति।
बिभ्यतु।
जाग्रतु।
विदन्तु।
जुस्भावमात्रं हि मुख्येन लङा विशेष्यते।
एव-कार उत्तर-अर्थः।।

---

1. <द्विषश्च>#।। PS_३,४.११२।।

_______Sठाऽ्ठJKव्_३,४.११२:

लङः शाकटायनस्य इत्येव।
द्विषः परस्य लङ्-आदेशस्य झेर्जुसादेशो भवति, शाकटायनस्य आचार्यस्य मतेन।
अद्विषुः।
अन्येषां मते - अद्विषन्।।

---

1. <तिङ्-शित्-सार्वधातुकम्>#।। PS_३,४.११३।।

_______Sठाऽ्ठJKव्_३,४.११३:

तिङः शितश्च प्रययाः सार्वधातुक-सञ्ज्ञा भवन्ति।
भवति।
नयति।
स्वपिति।
रोदिति।

पचमानः ।
यजमानः ।
सार्वधातुक-प्रदेशाः - सार्वधातुके यक्(*३,१.६७) इत्येवं आदयः । ।

---

1. <आर्धधातुकं शेषः># । । PS_३,४.११४ । ।

_______Sठा~ठ्JKव्_३,४.११४ः

तिङः शितश्च वर्जयित्वा अन्यः प्रत्ययः शेषो धातु-संशब्दनेन विहितः आर्धधातुक-सञ्ज्ञो भवति ।
लविता ।
लवितुं ।
लवितव्यं ।
धातोः (*३,१.९१) इत्येव ।
वृक्षत्वं ।
वृक्षता अस्ति ।
लूभ्यां ।
लूभिः ।
जुगुप्सते । ।

---

[#३१६]

1. <लिट्च># । । PS_३,४.११५ । ।

_______Sठा~ठ्JKव्_३,४.११५ः

लिड्-आदेशः तिङार्धधातुक-सञ्ज्ञो भवति ।
सार्वधातुक-सञ्ज्ञाया अपवादः ।
पेचिथ ।
शेकिथ ।
जग्ले ।
मम्ले ।
ननु च एकसञ्ज्ञ-अधिकारादन्यत्र समावेशो भवति ? सत्यं एतथ् ।
इह तु एवकारोऽनुवर्तते, स नियमं करिस्यति । ।

---

1. <लिङाशिषि># । । PS_३,४.११६ । ।

_______Sठा~ठ्JKव्_३,४.११६ः

आशिषि विषये यो लिङ्स आर्धधातुक-सञ्ज्ञो भवति ।
सार्वधातुक-सञ्ज्ञाया अपवादः ।
समावेशश्च+एवकार-अनुवृत्तेर्न भवति ।
लविषीष्ट ।
पविषीष्ट ।
आशिषि इति किं ? लुनीयाथ् ।
पुनीयात् । ।

---

1. <छन्दस्युभयथा># । । PS_३,४.११७ । ।

_______Sठा~ठ्JKव्_३,४.११७ः

छन्दसि विषये उभयथा भवति, सार्वधातुकं आर्धधातुकं च ।
किं लिङेव अनन्तरः सम्बध्यते ? न+एतदस्ति, सर्वं एव प्रकरणं अपेक्ष्यैतदुच्यते ।
तिङ्-शिद्-आदि छन्दस्युभयथा भवति ।
वर्धन्तु त्वा सुष्टुतयः ।
आर्धधातुकत्वाण्णि-लोपः ।
वर्धयन्तु इति प्राप्ते ।
शेषं च सार्वधातुकं - स्वस्तये नावमिवारुहेम ।
क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति ।
लिट्सार्वधातुकं - ससृवांसो विशृण्विरे ।
इम इन्द्राय सुन्विरे ।
लिङुभयथा भवति ।
उप स्थेयाम शरणा वृहन्ता ।
सार्वधातुकत्वात्लिङः स-लोपः, आर्धधातुकत्वातेत्वं ।
व्यत्ययो बहुलं (*३,१.८५) इत्यस्य+एव अयं प्रप्ञ्चः । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य चतुर्थः पादः । ।

---

---

1. <ङ्य्-आप्-प्रातिपदिकात्># । । PS_४,१.१ । ।

_______Sठा न्ठ्JKव्_४,१.१ः

अधिकारोऽयं ।
यदित ऊर्ध्वं अनुक्रमिष्यामः आअपञ्चमाध्याय-परिसमाप्तेः ङ्य्-आप्-प्रातिपदिकादित्येवं तद्वेदितव्यं ।
स्व-आदिषु कप्पर्यंतेषु प्रकृतिरधिक्रियते ।
ङीब्-ङीष्-ङीनां सामान्येन ग्रहणं ङी इति, टाब्-डाप्-चापां आपिति, प्रातिपदिकं उक्तं अर्थवत्, कृत्-तद्धित-समासाश्च (*१,२.४६) इति, तेषां समाहार-निर्देशो ङ्य्-आप्-प्रातिपदिकातिति ।
यद्यपि च प्रत्यय-परत्वेन पारिशेष्यादियं एव प्रकृतिर्लभ्यते, तथा अपि वृद्धावृद्धावर्णस्वरद्व्यज्-लक्षण-प्रत्यय-विधौ तत्-संप्रत्यय-अर्थं ङ्य्-आप्-प्रातिपदिक-ग्रहणं कर्तव्यम्, इतरथा हि समर्थ-विशेषणं एतत्स्याथ् ।
अथ ङ्य्-आप्-ग्रहणं किम्, न प्रातिपदिक-ग्रहणे लिङ्ग-विशिष्टस्य अपि ग्रहणं भवति इत्येव सिद्धं ? न+एतदस्ति ।
स्वरूपविधि-विषये परिभाषेयं प्रातिपदिक-स्वरूप-ग्रहणे सति लिङ्ग-विशिष्त-ग्रहणं भवति इति ।
तथा च युवा खलति-पलित-वलिन-जरतीभिः (*२,१.६७) इति ज्ञापकमस्यास्तादृशं एव ।
किं च तदन्तात्तद्धित-विधान-अर्थं ङ्य्-आब्-ग्रहणम्, कालितरा, हरिणितरा, खट्वातरा, मालातरा इति ।
विप्रतिषेधाद्धि तद्धित-बलीयस्त्वं स्यात् । ।

---

1. <स्व्-औ-जस्-अम्-औट्-छष्-टा-भ्यां-भिस्-ङेभ्याम्-भ्यस्-ङसि-भ्यां-भ्यस्-ङस्-ओस्-आम्-ङ्य्-ओस्-सुप्># । । PS_४,१.२ । ।

_______Sठा न्ठ्JKव्_४,१.२ः

ङ्य्-आप्-प्रातिपदिकात्(*४,१.१) इत्यधिकृतं ।
ङ्य्-आप्-प्रातिपदिकात्स्वादयः प्रत्यया भवन्ति ।
उकारादयोऽनुबन्धा यथायोगं उच्चारण-विशेषण-अर्थाः ।
औटः टकारः सुटिति प्रत्याहार-ग्रहण-अर्थः ।
पकारः सुपिति प्रत्याहार-अर्थः ।
सङ्ख्याकर्मादयश्च स्वादीनां अर्थाः शास्त्रान्तरेण विहितास्तेन सह अस्य+एकवाक्यता ।
ङ्य्-अन्तात्तावत्- कुमारी ।
गौरी ।
शार्ङ्गरवी ।
ङीब्-ङीष्-ङीनां क्रमेण उदाहरणं ।
कुमारी, कुमार्यौ, कुमार्यः ।
कुमारीम्, कुमार्यौ, कुमारीः ।
कुमार्या, कुमारीभ्याम्, कुमारीभिः ।
कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः ।
कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः ।
कुमार्याः, कुमार्योः, कुमारीणां ।
कुमार्याम्, कुमार्योः, कुमारीषु ।

एवं गौरी, शार्ङ्गरवी चोदाहार्ये ।
आपः खल्वपि - खट्वा ।
बहुराजा ।
कारीषगन्ध्या ।
टाब्-डाप्च्-आपां क्रमेण+उदाहरणं ।

[#३१८]

खट्वा, खट्वे, खट्वाः ।
खट्वाम्, खट्वे, खट्वाः ।
खट्वया, खट्वाभ्याम्, खट्वाभिः ।
खट्वायै, खट्वाभ्याम्, खट्वाभ्यः ।
खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः ।
खट्वायाः खट्वयोः, खट्वानां ।
खट्वायाम्, खट्वयोः, खट्वासु ।
एवं बहुराजाकारीषगन्ध्ये च+उदाहार्ये ।
एवं प्रातिपदिकात्- दृषद्, दृषदौ, दृषदः ।
दृषदम्, दृषदौ, दृषदः ।
दृषदा, दृषद्भ्याम्, दृषद्भिः ।
दृसदे, दृषद्भ्याम्, दृषद्भ्यः ।
दृषदः, दृषद्भ्याम्, दृषद्भ्यः ।
दृषदः, दृषदोः, दृषदां ।
दृषदि, दृषदोः, दृषत्सु । ।

---

1. <स्त्रियाम्># । । PS_४,१.३ । ।

______Sठाऱ्ठJKव्_४,१.३ः

अधिकारोऽयं ।
यदिति ऊर्ध्वं अनुक्रमिष्यामः स्त्रियां इत्येवं तद्वेदितव्यं ।
ङ्य्-आप्-प्रातिपदिकात्(*४,१.१) इति सर्वाधिकारेऽपि प्रातिपदिक-मात्रं अत्र प्रकरणे सम्बध्यते, ण्य्-आपोरनेन+एव विधानाथ् ।
स्त्रियां इत्युच्यते ।
केयं स्त्री नाम ? सामान्य-विशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः ।
क्वचिदाश्रय-विशेषाभावातुपदेश-व्यङ्गया एव भवन्ति, यथा ब्राह्मणत्वादयः ।
स्त्रीत्वं च प्रत्यय-अर्थः ।
प्रकृत्यर्थ-विशेषणं च इत्युभयथा अपि प्रयुज्यते, स्त्रियां अभिधेयायां स्त्रियां वा यत्प्रातिपदिकं वर्तते इति ।

---

वक्ष्यति -

1. <अजाद्य्-अतष्टाप्># । । PS_४,१.४ । ।

______Sठा-ठ्JKव्_४,१.४ः

अजा ।
देवदत्ता ।
स्त्रियां इति किं ? अजः ।
देवदत्तः । ।
अजाद्य्-अतष्टाप्(*४,१.४) ।
अजादिभ्यः प्रातिपदिकेभ्यः अकारान्ताच्च प्रातिपदिकात्स्त्रियां टाप्प्रत्ययो भवति ।
पकारः सामान्यग्रहण-अर्थः ।
टकारः सामान्यग्रहण-अविघातार्थः ।
अजा एडका ।
कोकिला ।
चटका ।
अश्वा ।
खट्वा ।
देवदत्ता ।
तपरकरणं तत्काल-अर्थं ।
शुभंयाः ।
कीलालपाः ब्राह्मणी ।
हल्-ङ्य्-आब्भ्यो दीर्घात्सु-ति-स्य्-अपृक्तं हल्(*६,१.६८) इति सु-लोपः स्याथ् ।
अजादि-ग्रहणं तु क्वचिज्जाति-लक्षणे ङीषि प्राप्ते, क्वचित्तु पुंयोग-लक्षणे, क्वचित्तु पुष्प-फल-उत्तरलक्षणे, क्वचित्तु वयो-लक्षणे ङीपि, क्वचिट्टिल्लक्षणे ।
हलन्तानां तवप्राप्त एव कस्मिंश्चिदाब्विधीयते ।
शूद्रा च अमहत्पूर्वा जातिः इति पठ्यते ।
तस्य अयं अर्थः ।
शूद्र-शब्दष्टापं उत्पादयति जातिश्चेद्भवति ।
शूद्रा ।
पुंयोगे ङीषैव भवितव्यं ।
शूद्रस्य भार्या शूद्री ।
महत्पूर्वस्य प्रतिषेधः ।
महाशूद्री ।
महाशूद्र-शब्दो ह्याभीरजातिवचनः, तत्र तदन्त-विधिना टाप्प्राप्तः प्रतिषिध्यते ।
ग्रहणवता प्रातिपदिकेन तदन्त-विधिर्न इति कथं तदन्त-विधिः ? एतदेव ज्ञापकं भवति अस्मिन्प्रकरणे तदन्त-विधिः इति ।
तेन अतिधीवरी, अतिपीवरी, अतिभवती, अतिमहती इति भवति ।

[#३१९]

अजा, एडका, चटका, अश्वा, मूसिका इति जातिः ।
बाला, होढा, पाका, वत्सा, मन्दा, विलाता इति वयः ।
पूर्वापहाणा, अपरापहाणा ।
टित्, निपतनाण्णत्वं ।
संभस्त्राजीनशणपिण्डेभ्यः फलाथ् ।
सम्फला ।
भस्त्रफला ।
अजिनफला ।
शणफला ।

पिण्डफला ।
त्रिफला द्विगौ ।
बहुव्रीहौ त्रिफली संहतिः ।
सदच्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पाथ् ।
सत्पुष्पा ।
प्राक्पुष्पा ।
कान्डपुष्पा ।
प्रान्तपुष्पा ।
शतपुष्पा ।
एकपुष्पा ।
पाककर्ण इति ङीषोऽपवादः ।
शूद्रा च अमहत्पूर्वा जातिः ।
क्रुञ्चा, उष्णिहा, देवविशा हलन्ताः ।
ज्येष्टा, कनिष्ता, मध्यमा पुंयोगः ।
कोकिला जातिः ।
मूलान्नञः ।
अमूला । ।

---

1. <ऋन्-नेभ्यो ङीप्># । । PS_४,१.५ । ।

______Sठाऱ्ठ्JKव्_४,१.५ः

ऋ-कारान्तेभ्यो न-कारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययो भवति ङ-कारः सामान्यग्रहण-अर्थः ।
कर्त्री ।
हर्त्री ।
दण्डिनी ।
छत्रिणी । ।

---

1. <उगितश्च># । । PS_४,१.६ । ।

______Sठाऱ्ठ्JKव्_४,१.६ः

उगिति यत्र सम्भवति यथाकथंचित्तदुगिच्-छाब्द-रूपं, तदन्तात्स्त्रियां ङीप्प्रत्ययो भवति ।
भवती ।
अतिभवती ।
पचन्ती ।
यजन्ती ।
धातोरुगितः प्रतिषेधो वक्तव्यः ।
उखास्रथ् ।

पर्णध्वत्ब्राह्मणी ।
अञ्चतेश्च+उपसङ्ख्यानं ।
प्राची ।
प्रतीची ।
उदीची । ।

---

1. <वनो र च># । । PS_४,१.७ । ।

_______Sठाञ्ठ्JKव्_४,१.७ः

वन्नन्तात्प्रातिपदिकात्स्त्रियां ङीप्प्रत्ययो भवति, रेफश्चान्तादेशः ।
धीवरी ।
पीवरी ।
शर्वरी ।
परलोकदृश्वरी ।
ऋन्-नेभ्यो ङीप्(*४,१.५) इत्येव ङीपि सिद्धे तत्-सन्नियोगेन रेफ-विधान-अर्थं वचनं ।
वनो न हशः ।
प्राप्तौ ङीव्रौ उभावपि प्रतिषिध्येते ।
सहयुध्वा ब्राह्मणी । ।

---

[#३२०]

1. <पादोऽन्यतरस्याम्># । । PS_४,१.८ । ।

_______Sठाञ्ठ्JKव्_४,१.८ः

पादः इति कृत-समासान्तः पाद-शब्दो निर्दिश्यते ।
पादन्तात्प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप्प्रत्ययो भवति ।
द्विपात्, द्विपदी ।
त्रिपाथ् ।
त्रिपदी ।
चतुष्पाद्, चतुष्पदी । ।

---

1. <टाबृचि># । । PS_४,१.९ । ।

_______Sठाऽ्ठJKव्_४,१.९ः

पादः इत्येव ।
ऋचि इत्यभिधेय-निर्देशः ।
ऋचि वाच्यायां पादन्तात्प्रातिपदिकात्स्त्रियां टाप्प्रत्ययो भवति ।
ङीपोऽपवादः ।
द्विपदा ऋक् ।
त्रिपदा ऋक् ।
चतुष्पदा ऋक् ।
ऋचि इति किं ? द्विपदी देवदत्ता । ।

---

1. <न षट्स्वस्रादिभ्यः># । । PS_४,१.१० । ।

_______Sठाऽ्ठJKव्_४,१.१०ः

षट्-सञ्ज्ञाकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्री-प्रत्ययो न भवति ।
यो यतः प्राप्नोति स सर्वः प्रतिषिध्यते ।
पञ्च ब्राह्मण्यः ।
सप्त ।
नव ।
दश ।
स्वस्रादिभ्यः - स्वसा ।
दुहिता ।
ननान्दा ।
याता ।
माता ।
तिस्रः ।
चतस्रः ।
षट्सञ्ज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यथ् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्त्वे तस्मान्न+उभौ । ।

---

1. <मनः># । । PS_४,१.११ । ।

_______Sठाऽ्ठJKव्_४,१.११ः

मन्नन्तात्प्रातिपदिकात्ङीप्प्रत्ययो न भवति ।

ऋन्-नेभ्यो ङीप्(*४,१.५) इति ङीप्प्राप्तो मनः इति सूत्रेण प्रतिषिध्यते।
दामा, दामानौ, दामानः।
पामा, पामानौ, पामानः।
अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति।
सीमा, सीमानौ, सीमानः।
अतिमहिमा, अतिमहिमानौ, अतिमहिमानः॥

---

1. <अनो बहुव्रीहेः># ॥ PS_४,१.१२ ॥

______Sठाऱ्ठ्JKव्_४,१.१२ः

अन्नन्ताद्बहुव्रीहेः स्त्रियां ङीप्प्रत्ययो न भवति।
अनुपधालोपी बहुव्रीहिरिह+उदाहरणं।
उपधालोपिनो हि विकल्पं वक्ष्यति।
सुपर्वा, सुपर्वाणौ, सुपर्वाणः।
सुशर्मा, सुशर्माणौ, सुशर्माणः।
बहुव्रीहेः इति किं? अतिक्रान्ता राजानं अतिराजी॥

---

[#३२१]

1. <डाबुभाभ्यां अन्यतरस्याम्># ॥ PS_४,१.१३ ॥

______Sठाऱ्ठ्JKव्_४,१.१३ः

डाप्प्रत्ययो भवति उभाभ्यां मन्नन्तात्प्रातिपदिकातनन्ताच्च बहुव्रीहेरन्यतरस्यां।
पामा, पामे, पामाः।
सीमा, सीमे, सीमाः।
न च भवति।
पामानः।
सीमानः।
बहुव्रीहौ - बहुराजा, बहुराजे, बहुराजाः।
बहुतक्षा, बहुतक्षे, बहुतक्षाः।
न च भवति।
बहुराजानः।
बहुतक्षाणः।
अन्यतरस्यां-ग्रहणं किमर्थं? बहुव्रीहौ, वनो र च (*४,१.७) इत्यस्य अपि विकओपो यथा याथ्।
बहुधीवा, बहुधीवरी।
बहुपीवा, बहुपीवरी॥

---

1. <अनुपसर्जनात्># । । PS_४,१.१४ । ।

______Sठाऱ्ठJKव्_४,१.१४ः

अधिकारोऽयं ।
उत्तरसूत्रेषु उपसर्जने प्रतिषेधं करोति ।
यदिति ऊर्ध्वं अनुक्रमिष्यामोऽनुपसर्जनातित्येवं तद्वेदितव्यं ।
टिड्-ढ-अण्-अञिति ङीप् ।
कुरुचरी ।
मद्रचरी ।
अनुपसर्जनातिति किं ? बहुकुरुचरा, बहुमद्रचरा मधुरा ।
जातेः इति ङीष् ।
कुक्कुटीइ ।
शूकरी ।
अनुपसर्जनातिति किं ? बहुकुक्कुटा, बहुशूकरा मधुरा ।
कथं पुनरुपसर्जनात्प्रत्ययप्रस्ङ्गः ? तदन्तविधिना ।
ज्ञापितं च+एतदस्त्यत्र प्रकरणे तदन्तविधिः इति ।
तथा च प्रधानेन तदनतविधिर्भवति ।
कुम्भकारी ।
नगरकारी ।
न च अणिति कृद्-ग्रहणं, तद्धितोऽप्यणस्ति । ।

---

1. <टिड्-ढ-अण्-अञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरप्ख्युनाम्># । । PS_४,१.१५ । ।

______Sठाऱ्ठJKव्_४,१.१५ः

अतः इति सर्वत्र अनुवरतते ।
तत्सति सम्भवे विशेषणं भवति ।
टिद्-आदिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययो भवति ।
टापोऽपवादः ।
टितस्तावत्- कुरुचरी ।
मद्रचरी ।
इह कस्मान्न भवति, पचमाना, यजमाना ? द्व्य्-अनुबन्धकत्वाल्लटः ।
ल्युड्-आदिषु कथं ? टित्-करण-सामर्थ्याथ् ।
इतरत्र तु टेरेत्वं फलं ।
पठिता विद्या इति ? आगमटित्त्वं अनिमित्तं, ट्युट्युलौ तुट्च इति लिङ्गाथ् ।
ढ - सौपर्णेयी ।
वैनतेयी ।
निरनुबन्धको ढ-शब्दः स्त्रियां न अस्ति इति निरनुबन्धक-परिभाषा न प्रवर्तते ।

अण्- कुम्भकारी ।
नगरकारी ।
औपगवी ।
णेऽपि क्वचिदण्कृतं कार्यं भवति ।
चौरी, तापसी ।
दाण्डा, मौष्टा इत्यत्र न भवति ।
अञ्- औत्सी ।
औदपानी ।
शार्ङ्गरव-आद्य्-अञो ङीन्(*४,१.७३) इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुं ।
द्वयसच्- ऊरुद्वयसी ।
जानुद्वयसी ।
दघ्नच्- ऊरुदघ्नी ।
जानुदघ्नी ।

[#३२२]

मात्रच्- ऊरुमात्री ।
जानुमात्री ।
तयप्- पञ्चतयी ।
दशतयी ।
ठक्- आक्षिकी ।
शालाकिकी ।
ठञ्- लावणिकी ।
ठक्ठञोर्भेदेन ग्रहणं ठनादि-निवृत्त्य्-अर्थं ।
कञ्- यादृशी ।
तादृशी ।
क्वरप्- इत्वरी ।
नश्वरी ।
ख्युन्- आढ्यङ्करणी ।
सुभगंकरणी ।
नञ्स्नञीकक्तरुणतलुनानां उपसङ्ख्यानं ।
स्त्रैणी ।
पऺुंस्नी ।
शाक्तीकी ।
याष्टीकी ।
तरुणी ।
तलुनी । ।

---

1. <यञश्च># । । PS_४,१.१६ । ।

______Sठाऱ्ठJKव्_४,१.१६ः

ङीपित्येव ।
यञन्ताच्च प्रातिपदिकात्स्त्रियां ङीप्प्रत्ययो भवति ।

गार्गी ।
वात्सी ।
अपत्यग्रहणं कर्तव्यं ।
इह मा भूत्, द्वीपादनुसमुद्रं यञ्(*४,३.१०) द्वैप्या ।
योग-विभागः उत्तर-अर्थः । ।

---

1. <प्राचां ष्फ तद्धितः># । । PS_४,१.१७ । ।

______Sठा~ठ्JKव्_४,१.१७ः

यञः इत्येव ।
प्राचां आचार्याणां मतेन यञन्तात्स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धित-सञ्ज्ञः ।
षकारो ङीष्-अर्थः ।
प्रत्ययद्वयेन+इह स्त्रीत्वं व्यज्यते ।
तद्धित-ग्रहणं प्रातिपदिकसञ्ज्ञ-अर्थं ।
गार्ग्यायणी ।
वात्स्यायनी ।
अन्येषां - गार्गी ।
वात्सी ।
सर्वत्र-ग्रहणं उत्तरसूत्रादिह अपकृष्यते बाधकबाधन-अर्थं ।
आवट्यात्चापं वक्ष्यति, तं अपि बाधित्वा प्राचां ष्फ एव यथा स्याथ् ।
आवट्यायनी । ।

---

1. <सर्वत्र लोहितादि-कतन्तेभ्यः># । । PS_४,१.१८ । ।

______Sठा~ठ्JKव्_४,१.१८ः

यञः इत्येव ।
पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनं ।
सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यः यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति ।
कतशब्दः स्वतन्त्रं यत्प्रातिपदिकं तदवधित्वेन परिगृह्यते कपि-शब्दात्परः कपि कत इति , न प्रतिपदिकावयवः कुरुकतेति ।
लौहित्यायनी ।
शांसित्यायनी बाभ्रव्यायणी ।
कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनं । ।
प्रातिपदिकेष्वन्यथा पाठः, स एवं व्यवस्थापयितव्यः इति मन्यते ।
कतन्तेभ्यः इति बहुव्रीहि-तत्पुरुषयोरेकशेषः, तथा कण्वादिभ्यो गोत्रे (*४,२.१११) इति ।
तत्र तत्पुरुष-वृत्त्या संगृहीतो मध्यपाती शकल-शब्दो यञन्तः प्रत्ययद्वयं अपि प्रतिपद्यते ।

शाकल्यायनी ।
शाकल्यस्य+इमे छात्राः शाकलाः ।।

---

[#३२३]

1. <कौरव्य-माण्डूकाभ्यां च># ।। PS_४,१.१९ ।।

______Sठा~ठ्JKव्_४,१.१९ः

कौरव्य माण्डूक इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति ।
कुर्वादिभ्यो ण्ये कृते, ढक्च म्ण्डूकात्(*४,१.११९) इत्यणि च ।
यथाक्रमं टाब्-ङीपोरपवादः ।
कौरव्यायणी ।
माण्डूकायनी ।
कथं कौरवी सेना ? तस्य+इदं विवक्षायां अणि कृते भविष्यति ।
कौरव्य-माण्डूकयोरासुरेरुपसङ्ख्यानं ।
आसुरायणी ।
शैषिकेष्वर्थेषु इञ्श्च (*४,२.११२) इत्यणि प्राप्ते छप्रत्यय इष्यते ।
आसुरीयः कल्पः ।।

---

1. <वयसि प्रथमे># ।। PS_४,१.२० ।।

______Sठा~ठ्JKव्_४,१.२०ः

कालकृतशसीरावस्था यौवनादिः वयः ।
प्रथमे वयसि यत्प्रातिपदिकं श्रुत्या वर्तते ततः स्त्रियां ङीप्प्रत्ययो भवति ।
कुमारी ।
किशोरी ।
बर्करी ।
प्रथमे इति किन्? स्थविरा ।
वृद्धा ।
अतः इत्येव, शिशुः ।
वयस्यचरम इति वक्तव्यं ।
वधूटी ।
चिरण्टी ।
द्वितीयवयोवचनावेतौ ।
प्राप्त-यौवना स्त्री अभिधीयते ।
कथं कन्या ? कन्यायाः कनीन च (*४,१.११६) इति ज्ञापकाथ् ।

उत्तानशया, लोहितपादिका इति ? नैताः वयःश्रुतयः । ।

---

1. <द्विगोः># । । PS_४,१.२१ । ।

_______Sठा~ठ्JKव्_४,१.२१ः

द्विगु-सञ्ज्ञकात्प्रातिपदिकात्स्त्रियां ङीप्प्रत्ययो भवति ।
पञ्चपूली ।
दशपूली ।
कथं त्रिफला ? अजादिषु दृश्यते । ।

---

1. <अपरिमाण-बिस्त-आचित-कम्बल्येभ्यो न तद्धितलुकि># । । PS_४,१.२२ । ।

_______Sठा~ठ्JKव्_४,१.२२ः

पूर्वेण ङीप्प्राप्तः प्रतिषिध्यते ।
अपरिमाण-अन्तात्द्विगोः बिस्त-आचितकम्बल्य्-आन्ताच्च तद्धितलुकि सति ङीप्प्रत्ययो न भवति ।
बस्तादीनां परिमाण-अर्थं ग्रहणं ।
सर्वतो मानं परिमाणं ।
अपरिमाण-अन्तात्तावत्- पञ्चभिरश्वैः क्रीता पञ्चाश्वा ।
दशाश्वा ।
कालः च सङ्ख्या न परिमाणं ।
द्विवर्षा त्रिवर्षा ।
द्वाभ्यां शताभ्यां क्रीता द्विशता ।
त्रिशता ।
बिस्तादिभ्यः - द्विबस्ता ।
त्रिबस्ता ।
द्व्याचिता ।
त्र्याचिता ।
द्विकम्बल्या ।
त्रिकम्बल्या ।
अपरिमाण+इति किं ? द्व्याढकी ।
त्र्याढकी ।
तद्धितलुकि इति किं ? समाहारे - पञ्चाश्वी ।
दशाश्वी । ।

---

[#३२४]

1. <काण्ड-अन्तात्क्षेत्रे># । । PS_४,१.२३ । ।

_______Sठा~ठ्JKव्_४,१.२३ः

काण्ड-शब्द-अन्तात्द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये ङीप्प्रत्ययो न भवति ।
द्वे कण्डे प्रमाणं अस्याः क्षेत्र-भक्तेः, प्रमणे द्वयसज्-दघ्नञ्-मात्रचः (*५,२.३७) इति विहितस्य तद्धितस्य प्रमाणे लो द्विगोर्नित्यं इति लुकि कृते, द्विकाण्डा क्षेत्र-भक्तिः ।
त्रिकाण्डा क्षेत्रभक्तिः ।
काण्ड-शब्दस्य अपरिमाणवाचित्वात्पूर्वेण+एव प्रतिषेधे सिद्धे क्षेत्रे नियम-अर्थं वचनं ।
इह मा भूत्, द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुः इति ।
प्रमाण-विशेषः काण्डं । ।

---

1. <पुरुषात्प्रमाणेऽन्यतरस्याम्># । । PS_४,१.२४ । ।

_______Sठा~ठ्JKव्_४,१.२४ः

द्विगोः तद्धितलुकि इत्येव ।
प्रमाणे यः पुरुष-शब्दः, तदन्ताद्द्विगोः तद्धितलुकि सति अन्यतरस्यां न ङीप्प्रत्ययो भवति ।
द्वौ पुरुषौ प्रमाणं अस्याः परिखायाः द्विपुरुषा, द्विपुरुषी ।
त्रिपुरुषा, त्रिपुरुषी ।
अपरिमाणान्तत्वान्नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनं ।
प्रमाणे इति किं ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा ।
क्रिपुरुषा ।
तद्धितलुकि इत्येव ।
समाहारे द्विपुरुषी ।
त्रिपुरुषी । ।

---

1. <बहुव्रीहेरूधसो ङीष्># । । PS_४,१.२५ । ।

_______Sठा~ठ्JKव्_४,१.२५ः

ऊधस्-शब्दान्ताद्बहुव्रीहेः स्त्रियां ङीष्प्रत्ययो भवति ।

ऊधसोऽनङ्(*५,४.१३१) इति समासान्ते कृते अनो बहुव्रीहेः (*४,१.१२) इति डाप्-प्रतिषेधयोः प्राप्तयोरिदं उच्यते।
घटोध्नी।
कुण्डोध्नी।
बहुव्रीहेः इति किं? प्राप्ता ऊधः प्राप्तोधाः।
अन उपधालोपिनोऽन्यतरस्यां (*४,१.२८) इत्यस्य अपि ङीपोऽयं उत्तरत्र अनुवृत्तेर्बाधक इष्यते।
समासान्तश्च स्त्रियां एव।
इह न भवति, महोधाः पर्जन्यः इति।।

---

1. <सङ्ख्याव्ययादेर्ङीप्># ।। PS_४,१.२६ ।।

______Sठा~ठ्JKव्_४,१.२६ः

पूर्वेण ङीषि प्राप्ते ङीब्वधीयते।
सङ्ख्यादेः अव्ययादेश्च बहुव्रीहेरूधस्-शब्दान्ताद्ङीप्प्रत्ययो भवति।
सङ्ख्यादेः तावत्- द्व्यूध्नी।
त्र्यूध्नी।
अव्ययादेः - अत्यूध्नी।
निरूध्नी।
आदि-ग्रहणं किं? द्विविधोध्नी, त्रिविधोध्नी इत्यत्र अपि यथा स्यात्।।

---

1. <दाम-हायन-अनाच्च># ।। PS_४,१.२७ ।।

______Sठा~ठ्JKव्_४,१.२७ः

ऊधसः इति निव्éत्तं।
सङ्ख्या-ग्रहणं अनुवर्तते, न अव्यय-ग्रहणं।
सङ्ख्यादेः बहुव्रीहेः दाम-शब्दान्तात्हायन-शब्दान्तात्च स्त्रियां ङीप्प्रत्ययो भवति।
दामान्तात्डाप्प्रतिषेधविकल्पेषु प्राप्तेषु नित्य-अर्थं वचनं।
द्विदाम्नी।
त्रिदाम्नी।
हायनान्ताट्टापि प्राप्ते।
द्विहायनी।
त्रिहायणी।
चतुर्हायणी।
हायनो वयसि स्मृतः।
तेन+इह न भवति, द्विहायना शाला।
त्रिहायना।
चतुर्हायना।

णत्वं अपि त्रिचतुर्भ्यां हायनस्य इति वयस्य+इव स्मर्यते । ।

---

[#३२५]

1. <अन उपधालोपिनोऽन्यतरस्याम्># । । PS_४,१.२८ । ।

_______Sठा-ठ्JKव्_४,१.२८ः

बहुव्रीहेरित्येव ।
अन्न्-अन्तो यो बहुव्रीहिः उपधालोपी, तस्मादन्यतरस्यां ङीप्प्रत्ययो भवति ।
ङीपा मुक्ते डाप्-प्रतिषेधौ भवतः ।
किमर्थं तर्हि इदं उच्यते, ननु सिद्धा एव डाप्-प्रतिषेधङीपः ? अनुपधालोपिनः ङीप्-प्रतिषेध-अर्थं वचनं ।
बहुराजा, बहुराज्ञी, बहुराजे ।
बहुतक्षा, बहुतक्ष्णी, बहुतक्षे ।
अनः इति किं ? बहुमत्स्या ।
उपधालोपिनः इति किं ? सुपर्वा, सुपर्वे, सुपर्वाः ।
सुपर्वाणौ, सुपर्वाणः ।
डाप्-प्रतिषेधावेव अत्र भवतः । ।

---

1. <नित्यं सञ्ज्ञा-छन्दसोः># । । PS_४,१.२९ । ।

_______Sठा-ठ्JKव्_४,१.२९ः

अन्नन्ताद्बहुव्रीहेरुपधा-लोपिनः सञ्ज्ञायां विषये छन्दसि च नित्यं ङीप्प्रत्ययो भवति ।
विकल्पस्य अपवादः ।
सुराज्ञी, अतिराज्ञी नामः ग्राम ।
छन्दसि - गौः पञ्चदाम्नी ।
एकदाम्नी ।
द्विदाम्नी ।
एकमूर्ध्नी ।
समानमूर्ध्नी । ।

---

1. <केवल-मामक-भागधेय-पाप-अपर-समान-आर्यकृत-सुमङ्गल-भेषजाच्च># । । PS_४,१.३० । ।

______Sठा~ठ्JKव्_४,१.३०ः

सञ्ज्ञा-छन्दसोः इत्येव ।
केवल-आदिभ्यः प्रातिपदिकेभ्यः सञ्ज्ञायां, छन्दसि विषये स्त्रियां ङीप्प्रत्ययो भवति ।
केवली ।
केवला इति भाषायां ।
मामकी ।
मामिका इति भाषायां ।
मित्रावरुणयोर्भागधेयीः स्थ ।
भागधेया इति भाषायां ।
सा पापी ।
पापा इति भाषायां ।
उता+अपरीभ्यो मघवा विजिग्ये ।
अपरा इति भाषायां ।
समानी प्रवाणी ।
समाना इति भाषायां ।
आर्यकृती ।
आर्यकृता इति भाषायां ।
सुमङ्गली ।
सुमङ्गला इति भाषायां ।
भेषजी ।
भेषजा इति भाषायां । ।

---

1. <रात्रेश्च अजसौ># । । PS_४,१.३१ । ।

______Sठा~ठ्JKव्_४,१.३१ः

जस्विषयादन्यत्र सञ्ज्ञायां छन्दसि च रात्रि-शब्दात्ङीप्प्रत्ययो भवति ।
या च रात्री सृष्टा ।
रात्रीभिः ।
अजसौ इति किं ? यास्ता रात्रयः ।
अजसादिष्विति वक्तव्यं ।
रात्रिं सहोषित्वा ।
कथं तिमिरपटलैरवगुण्ठिताश्च रत्र्यः ? ङीषयं बह्वादि-लक्षणः ।
तत्र हि पठ्यते कृदिकारादक्तिनः, सर्वतोऽक्तिन्न्-अर्थातित्येके इति । ।

---

[#३२६]

1. <अन्तर्वत्-पतिवतोर्नुक्># । । PS_४,१.३२ । ।

_______Sठाऱ्ठJKव्_४,१.३२ः

प्रकृतिर्निपात्यते, नुगागं अस्तु विधीयते ।
अन्तर्वत्-पतिवतोर्नुक्भवति ङीप्च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः ।
निपातन-सामर्थ्याच्च विशेषे वृत्तिर्भवति ।
अन्तर्वत्पतिवतिति गर्भ-भर्तृ-संयोगे ।
इह न भवति, अन्तरस्यां शालायां विद्यते ।
पतिमती पृथीवी ।
अन्तर्वतिति मतुब्निपात्यते, वत्वं सिद्धं ।
पतिवतिति वत्वं निपात्यते, मतुप्सिद्धः ।
अन्तर्वत्नी गर्भिणी ।
पतिवत्नी जीवपतिः ।
अन्तर्वत्-पतिवतोस्तु मतुब्वत्वे निपातनाथ् ।
गर्भिण्यां जीवपत्यां च वा छन्दसि तु नुग्-विधिः । ।
सान्तर्वत्नी देवानुपैथ् ।
सान्तर्वती देवानुपैत ।
पतिवत्नी तरुणवत्सा ।
पतिवती तरुणवत्सा । ।

---

1. <पत्युर्नो यज्ञसंयोगे># । । PS_४,१.३३ । ।

_______Sठाऱ्ठJKव्_४,१.३३ः

पतिशब्दस्य नकारादेशः स्त्रियां विधीयते, ङीप्प्रत्ययस्तु नकारान्तत्वादेव सिद्धः यज्ञसंयोगे ।
यज्ञेन संयोगः यज्ञसंयोगः ।
तत्साधनत्वात्फलग्रहीतृत्वात्वा यजमानस्य पत्नी ।
पत्नी वाचं यच्छ ।
यज्ञसंयोगे इति किं ? ग्रामस्य पतिरियं ब्राह्मणी कथं वृषलस्य पत्नी ? उपमानाद्भविष्यति । ।

---

1. <विभाषा सपूर्वस्य># । । PS_४,१.३४ । ।

_______Sठाऱ्ठJKव्_४,१.३४ः

पत्युर्नः इति वर्तते ।
पति-शब्द-अन्तस्य प्रातिपदिकस्य सपूर्वस्य अनुपसर्जनस्य स्त्रियां विभाषा नकार-आदेशो भवति, ङीप्तु लभ्यते एव ।

वृद्धप्त्नी, वृद्धपतिः ।
स्थूलपत्नी, स्थूलपतिः ।
अप्राप्तविभाषेयमयज्ञसंयोगत्वाथ् ।
सपूर्वस्य इति किं ? पतिरियं ब्राह्मणी ग्रामस्य । ।

---

1. <नित्यं सपत्न्यादिषु># । । PS_४,१.३५ । ।

______Sठा-ठ्JKव्_४,१.३५ः

सप्त्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप्तु लभ्यते एव ।
पूर्वेण विकल्पे प्राप्ते वचनं ।
नित्य-ग्रहणं वस्पष्ट-अर्थं ।
समानः पतिरस्याः सप्त्नी ।
एकप्त्नी ।
समानादिष्विति वक्तव्ये समानस्य सभाव-अर्थं वचनं ।
समान ।
एक ।
वीर ।
पिण्ड ।
भ्रातृ ।
पुत्र ।
दासाच्छन्दसि । ।

---

[#३२७]

1. <पूतक्रतोरै च># । । PS_४,१.३६ । ।

______Sठा-ठ्JKव्_४,१.३६ः

पूतक्रतु-शब्दस्य स्त्रियां ऐकारश्चान्तादेशो भवति, ङीप्प्रत्ययः ।
पूतक्रतोः स्त्री पूतक्रतायी ।
त्रय एते योगाः पुंयोग-प्रकरने द्रष्टव्याः ।
यया हि पूताः क्रतवः पूतक्रतुः सा भवति । ।

---

1. <वृषाकप्य्-अग्नि-कुसित-कुसिदानां उदात्तः># । । PS_४,१.३७ । ।

_______Sठाऽ्ठJKव्_४,१.३७ः

वृषाकप्य्-आदीनां उदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप्च प्रत्ययः ।
वृषाकपि-शब्दो मद्योदात्त उदात्तत्वं प्रयोजयति ।
अग्न्य्-आदिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धं ।
वृषाकपेः स्त्री वृषाकपायी ।
अग्नायी ।
कुसितायी ।
कुसिदायी ।
पुंयोगे इत्येव, वृषाकपिः स्त्री । ।

---

1. <मनोरौ वा># । । PS_४,१.३८ । ।

_______Sठाऽ्ठJKव्_४,१.३८ः

ऐ उदात्तः इति वर्तते ।
मनु-शब्दात्स्त्रियां ङीप्प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्च उदात्तः ।
वाग्रहणेन द्वावपि विकल्प्येते ।
तेन त्रैरूप्यं भवति ।
मनोः स्त्री मनायी ।
मनावी ।
मनुः ।
मनु-शब्दः आद्युदात्तः । ।

---

1. <वर्णादनुदात्तात्तोपधात्तो नः># । । PS_४,१.३९ । ।

_______Sठाऽ्ठJKव्_४,१.३९ः

वा इति वर्तते ।
वर्ण-वाचिनः प्रातिपदिकातनुदात्तान्तात्तकारोपधाद्वा ङीप्प्रत्ययो भवति, तकारस्य नकारादेशो भवति ।
एता, एनीं ।
श्येता, श्येनी ।
हरिता, हरिणी ।
सर्वे एते आद्युदात्ताः, वर्णानां तणतिनितान्तानां इति वचनाथ् ।
वर्णातिति किं ? प्रकृता ।

प्ररुता ।
गतिस्वरेणाद्युदात्तः ।
अनुदात्तातिति किं ? श्वेता ।
घृतादित्वादन्तोदात्तः ।
तोपधातिति किं ? अन्यतो ङीषं वक्ष्यति ।
अतः इत्येव, शितिर्ब्रह्मणी ।
पिशङ्गादुपसङ्ख्यानं ।
पिशङ्गी ।
असितपलितयोः प्रतिषेधः ।
असिता ।
पलिता ।
छन्दसि क्नं इत्येके ।
असिक्नी ।
पलिक्नी ।
भाषायां अपि इष्यते ।
गतो गणस्तूर्णमसिक्निकानां । ।

---

[#३२८]

1. <अन्यतो ङीष्># । । PS_४,१.४० । ।

______Sठाऽठ्JKव्_४,१.४०ः

वा इति निवृत्तं ।
वर्णादनुदात्तातिति वर्तते, तोपधापेक्षं अन्यत्वं ।
वर्ण-वाचिनः प्रातिपदिकादनुदात्तान्तात्स्त्रियां ङीष्प्रत्ययो भवति ।
स्वरे विशेषः ।
सारङ्गी ।
कल्माषी ।
शबली ।
वर्णातित्येव, खट्वा ।
अनुदात्तातित्येव, कृष्णा ।
कपिला । ।

---

1. <षिद्-गौरादिभ्यश्च># । । PS_४,१.४१ । ।

______Sठाऽठ्JKव्_४,१.४१ः

ङीषनुवर्तते ।
षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष्प्रत्ययो भवति ।
शिल्पिनि ष्वुन्(*३,१.१४५) - नर्तकी ।
खनकी ।
रजकी ।
गौरादिभ्यः - गौरी ।
मत्सी ।
गौर ।
मत्स्य ।
मनुष्य ।
शृङ्ग ।
हय ।
गवय ।
मुकय ।
ऋष्य ।
पुट ।
द्रुण ।
द्रोण ।
हरिण ।
कण ।
पटर ।
उकण ।
आमलक ।
कुवल ।
बदर ।
बम्ब ।
तर्कार ।
शर्कार ।
पुष्कर ।
शिखण्ड ।
सुषम ।
सलन्द ।
गडुज ।
आनन्द ।
सृपाट ।
सृगेठ ।
आढक ।
शष्कुल ।
सूर्म ।
सुब ।
सूर्य ।
पूष ।
मूष ।
घातक ।
सकलूक ।
सल्लक ।
मालक ।
मालत ।
साल्वक ।

वेतस ।
अतस ।
पृस ।
मह ।
मठ ।
छेद ।
श्वन् ।
तक्षन् ।
अनडुही ।
अनड्वाही ।
एषणः करणे ।
देह ।
काकादन ।
गवादन ।
तेजन ।
रजन ।
लवण ।
पान ।
मेध ।
गौतम ।
आयस्थूण ।
भौरि ।
भौलिकि ।
भौलिङ्गि ।
औद्गाहमानि ।
आलिङ्गि ।
आपिच्छिक ।
आरट ।
टोट ।
नट ।
नाट ।
मलाट ।
शातन ।
पातन ।
सवन ।
आस्तरन ।
आधिकरण ।
एत ।
अधिकार ।
आग्रहायणी ।
प्रत्यवरोहिणी ।
सेवन ।
सुमङ्गलात्सञ्ज्ञायां ।
सुन्दर ।
मण्डल ।
पिण्ड ।
विटक ।
कुर्द ।
गूर्द ।

पट ।
पाण्ट ।
लोफाण्ट ।
कन्दर ।
कन्दल ।
तरुण ।
तलुन ।
बृहथ् ।
महथ् ।
सौधर्म ।
रोहिणी नक्षत्रे ।
रेवती नक्षत्रे ।
विकल ।
निष्फल ।
पुष्कल ।
कटाच्छ्रोणिवचने ।
पिप्पल्यादयश्च ।
पिप्पली ।
हरीतकी ।
कोशातकी ।
शमी ।
करीरी ।
पृथिवी ।
क्रोष्ट्री ।
मातामह ।
पितामह ।
मातामह-पितामहयोः मातरि षिच्च (*४,२.३६) इति षित्त्वादेव सिद्धे ज्ञापन-अर्थं वचनम्, अनित्यः षिल्-लक्षणो ङीषिति, तेन दंष्ट्रा इत्युपपन्नं भवति । ।

---

1. <जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबराद्वृत्त्य्-अमत्र-आवपन-अकृत्रिमा-श्राणा-स्थौल्य-वर्ण-अनाच्छादन-अयोविकार-मैथुनेच्छा-केशवेशेषु># । । PS_४,१.४२ । ।

______Sठा-ठ्JKव्_४,१.४२ः

जानपद-आदिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासङ्ख्यं ङीष्प्रत्ययो भवति ।
जानपदी भवति,

[#३२९]

वृत्तिश्चेथ् ।
जानपदी अन्या ।
स्वरे विशेसः ।
उत्सादिपाठादञि कृते ङीपाद्य्-उदात्तत्वं भवति ।

कुण्डी भवति, अमत्रं चेथ् ।
कुण्डाऽन्या ।
गोणी भवति, आवपनं चेथ् ।
गोणा अन्या ।
स्थली भवति, अकृत्रिमा चेथ् ।
स्थला अन्या ।
भाजी भवति, श्राणा चेथ् ।
पक्वा इत्यर्थः ।
भाजा अन्या ।
नागी भवति, स्थौल्यं चेथ् ।
नागा अन्या ।
नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापं ।
जातिवचनात्तु जातिलक्षणो ङीषेव भवति ।
नागी ।
काली भवति, वर्णश्चेथ् ।
काला अन्या ।
नीली भवति, अनाच्छादनं चेथ् ।
नीला अन्या ।
न च सर्वस्मिन्ननाच्छादन इष्यते ।
किं तर्हि ? नीलादोषधौ प्राणिनि च ।
नीली ओषधिः ।
नीली गौः ।
नीली वडवा ।
सञ्ज्ञायां वा ।
नीली, नीला ।
कुशी भवति, अयोविकारश्चेथ् ।
कुशा अन्या ।
कामुकी भवति मैथुनेच्छा चेथ् ।
कामुका अन्या ।
मैथुनेच्छावती भण्यते, नेच्छामात्रं ।
कबरी भवति, केशवेशश्चेथ् ।
कबरा अन्या । ।

---

1. <शोणात्प्राचाम्># । । PS_४,१.४३ । ।

______Sठाऽ्ठJKव्_४,१.४३ः

शोण-शब्दात्प्राचां आचार्याणां मतेन स्त्रियां ङीष्प्रत्ययो भवति ।
शोणी, शोणा वडवा । ।

---

1. <वा+उतो गुणवचनात्># । । PS_४,१.४४ । ।

_______Sठा~ठ्JKव्_४,१.४४ः

गुणं उक्तवान्गुणवचनः ।
गुणवचनात्प्रातिपदिकादुकारान्तात्स्त्रियां वा ङीष्प्रत्ययो भवति ।
पट्वी, पटुः ।
मृद्वी, मृदुः ।
उतः इति किं ? शुचिरियं ब्राह्मणी ।
गुणवचनातिति किं ? आखुः ।
वसु-शब्दाद्गुणवचनाद्ङीबाद्य्-उदात्तार्थं ।
वस्वी ।
खरुसंयोगोपधात्प्रतिषेधो वक्तव्यः ।
खरुरियं ब्राह्मणी ।
पाण्डुरियं ब्राह्मणी ।
सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्च अक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः । ।

---

1. <बह्व-आदिभ्यश्च># । । PS_४,१.४५ । ।

_______Sठा~ठ्JKव्_४,१.४५ः

बहु इत्येवं आदिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष्प्रत्ययो भवति ।
बह्वी, बहुः ।
बहु ।
पद्धति ।
अङ्कति ।
अञ्चति ।
अंहति ।
वंहति ।
शकटि ।
शक्तिः शस्त्रे ।
शारि ।
वारि ।
गति ।
अहि ।
कपि ।
मुनि ।
यष्टि ।
इतः प्राण्यङ्गाथ् ।
कृदिकारादक्तिनः ।
सर्वतोऽक्तिन्नर्थादित्येके ।
चण्ड ।

अराल ।
कमल ।
कृपाण ।
विकट ।
विशाल ।
विशङ्कट ।
भरुज ।
ध्वज ।
चन्द्रभागान्नद्यां ।
कल्याण ।
उदार ।
पुराण ।
अहन् ।
बहुशब्दो गुणवचन एव ।
तस्य+इह पाठ उत्तरार्थः । ।

---

[#३३०]

1. <नित्यं छन्दसि># । । PS_४,१.४६ । ।

______Sठान्ठJKव्_४,१.४६ः

बह्व्-आदिभ्यः छन्दसि विषये नित्यं स्त्रियां ङीष्प्रत्ययो भवति ।
बह्वीषु हित्वा प्रपिबन् ।
बह्वी नाम ओषधी भवति ।
नित्य-ग्रहणं उत्तरार्थं । ।

---

1. <भुवश्च># । । PS_४,१.४७ । ।

______Sठान्ठJKव्_४,१.४७ः

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष्प्रत्ययो भवति ।
विभ्वी च ।
प्रभ्वी च ।
संभ्वी च ।
इह कस्मान्न भवति, स्वयम्भूः ? उतः इति तपरकरणं अनुवर्तते ।
ह्रस्वादेव+इयं पञ्चमी ।
भुवः इति सौत्रो निर्देशः । ।

---

1. <पुंयोगादाख्यायाम्># । । PS_४,१.४८ । ।

_______Sठान्ठ्JKव्_४,१.४८ः

पुंसा योगः पुंयोगः ।
पुंयोगाद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद्ङीष्प्रत्ययो भवति ।
गणकस्य स्त्री गणकी ।
महामात्री ।
प्रष्ठी ।
प्रचरी ।
पुंसि शब्दप्रवृत्ति-निमित्तस्य सम्भवात्पुंशब्दा एते, तद्योगात्स्त्रियां वर्तन्ते ।
पुंयोगातिति किं ? देवदत्ता ।
यज्ञदत्ता ।
आख्या-ग्रहणात्किं ? परिसृष्टा ।
प्रजाता ।
पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते ।
गोपालिकादीनां प्रतिषेधः ।
गोपालकस्य स्त्री गोपालिका ।
सूर्याद्देवतायां चाब्वक्तव्यः ।
सूर्यस्य स्त्री देवता सूर्या ।
देवतायां इति किं ? सुरी । ।

---

1. <इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिम-अरण्य-यव-यवन-मातुल-आचार्याणामानुक्># । । PS_४,१.४९ । ।

_______Sठान्ठ्JKव्_४,१.४९ः

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष्प्रत्ययो भवति, आनुक्च आगमः ।
येषां अत्र पुंयोग एव इष्यते, तेषां आनुगागममात्रं विधीयते ।
रत्ययस्तु पूर्वेण+एव सिद्धः ।
अन्येषां तूभयं विधीयते ।
इन्द्राणी ।
वरुणानी ।
भवानी ।
शर्वाणी ।
रुद्राणी ।
मृडानी ।
हिमारण्ययोर्महत्त्वे ।

महद्धिमं हिमानी ।
महदरण्यं अरण्यानी ।

[#३३१]

यवाद्दोषे ।
दुष्टो यवः यवानी ।
यवनाल्लिप्यां ।
यवनानी लिपिः ।
उपाध्यायमातुलाभ्यां वा ।
उपाध्यायानी, उपाध्यायी ।
मतुलानी, मतुली ।
आचार्यादणत्वं च ।
आचार्यानी, आचार्या ।
अर्यक्षत्रियाभ्यां वा ।
अर्याणी, अर्या ।
क्षत्रियाणी, क्षत्रिया ।
विना पुंयोगेन स्वार्थ एव अयं विधिः ।
पुंयोगे तु ङीषा एव भवितव्यं ।
अर्यी ।
क्षत्रियी ।
मुद्गलाच्छन्दसि लिच्च ।
रथीरभून्मुद्गलानी गविष्टौ । ।

---

1. <क्रीतात्करण-पूर्वात्># । । PS_४,१.५० । ।

______Sठाञ्ठJKव्_४,१.५०ः

करणं पूर्वं अस्मिन्निति करणपूर्वं प्रतिपदिकं ।
क्रीत-शब्दान्तात्प्रातिपदिकात्करण-पूर्वात्स्त्रियां ङीप्प्रत्ययो भवति ।
वस्त्रेण क्रियते सा वस्त्रक्रीती ।
वसनक्रीती ।
करणपूर्वातिति किं ? सुक्रीता ।
दुष्क्रीता ।
इह कस्मान्न भवति, सा ही तस्य धनक्रीती प्राणेभ्योऽपि गरीयसी इति ? टाबन्तेन समसः ।
अतः इति चातुवर्तते ।
गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः इति बहुलं तदुच्यते, कर्तृकरणे कृता बहुलं (*२,१.३२) इति । ।

---

1. <क्तादल्पाअख्यायाम्># । । PS_४,१.५१ । ।

_______Sठाञ्ठ्JKव्_४,१.५१ः

करणपूर्वातित्येव ।
करणपूर्वात्प्रातिपदिकात्क्तान्तादल्पाख्यायां ङीष्प्रत्ययो भव्ति ।
अल्पाख्यायां इति समुदायोपाधिः ।
अभ्रविलिप्ती ख्यौः ।
सूपविलिप्ती पात्री ।
अल्पसूपा इत्यर्थः ।
अल्पाख्यायां इति किं ? चन्दनानुलिप्ता ब्राह्मणी । ।

---

[#३३२]

1. <बहुव्रीहेश्च अन्तोदत्तात्># । । PS_४,१.५२ । ।

_______Sठाञ्ठ्JKव्_४,१.५२ः

क्तातित्येव ।
बहुव्रीहिर्योऽन्तोदात्तः, तस्मात्स्त्रियां ङीष्प्रत्ययो भवति ।
स्वाङ्ग-पूर्व-पदो बहुव्रीहिरिह+उदाहरणं ।
अस्वाङ्ग-पूर्वपदाद्विकल्पं वक्ष्यति ।
शङ्ख्यभिन्नी ।
ऊरुभिन्नी ।
गललोत्कृत्ती ।
केशलूनी ।
बहुव्रीहेः इति किं ? पादपतिता ।
अन्तोदात्ताज्जातप्रतिषेधः ।
दन्तजाता ।
स्तनजाता ।
पाणिगृहीत्यादीनां अर्थविशेषे ।
पाणिगृहीती भार्या ।
यस्य अस्तु कथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति ।
अबहुनञ्सुइआलसुखादि-पूर्वादिति वक्तव्यं ।
बहुकृता ।
नङ्- अकृता ।
सु - सुकृता ।
काल - मासजाता ।
संवत्सर-जाता ।
सुखादि - सुखजाता ।
दुःखजाता ।
जाति-काल-सुख-आदिभ्योऽनाच्छादनात्क्तोऽकृत-मित. प्रतिपन्नाः (*६,२.१७०) इत्येवं आदिना भौव्रीहेरन्तोदात्तत्वं । ।

---

1. <अस्वाङ्ग-पूर्वपदाद्वा># । । PS_४,१.५३ । ।

______Sठाञ्ठJKव्_४,१.५३ः

अन्तोदात्तात्क्तातिति अनुवर्तते ।
अस्वाङ्गपूर्वपदादन्तोदात्तात्क्तान्ताद्बहुव्रीहेः स्त्रियां वा ङीष्प्रत्ययो भवति ।
पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
शार्ङ्गजग्धी, शार्ङ्गजग्धा ।
पलाण्डुभक्षिती, पलाण्डुभक्षिता ।
सुरापीती, सुरापीता ।
अस्वाङ्गपूर्वपदातिति किं ? शङ्खभिन्नी ।
ऊरुभिन्नी ।
अन्तोदात्तातित्येव, वस्त्रच्छन्ना ।
वसनच्छन्न ।
बहुलं सञ्ज्ञाछन्दसोरिति वक्तव्यं ।
प्रवृद्धविलूनी, प्रवृद्धविलूना ।
प्रवृद्धा च असौ विलूना च इति ।
न अयं बहुव्रीहिः । ।

---

1. <स्वाङ्गाच्च+उपसर्जनादसंयोग-उपधात्># । । PS_४,१.५४ । ।

______Sठाञ्ठJKव्_४,१.५४ः

बहुव्रीहेः क्तान्तादन्तोदात्तातिति सर्वं निवृत्तं ।
वा-ग्रहणं अनुवर्तते ।
स्वाङ्गं यदुपसर्जनं असंयोगोपधं तदन्तात्प्रातिपदिकात्स्त्रियां वा ङीष्प्रत्ययो भवति ।
चन्द्रमुखी, चन्द्रमुखा ।
अतिक्रान्ता केशानतिकेशी, अतिकेशा माला ।
स्वाङ्गातिति किं ? बहुयवा ।
उपसर्जनातिति किं ? अशिखा ।
असंयोगोपधातिति किं ? सुगुल्फा ।
सुपार्श्वा ।

[#३३३]

अङ्गगात्रकण्ठेभ्य इति वक्तव्यं ।
मृद्वङ्गी, मृद्वङ्गा ।
सुगात्री, सुगात्रा ।
स्निग्धकण्ठी, स्निग्धकण्ठा ।

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजं ।
अतत्स्थं तत्र दृष्टं चेत्तेन चेत्तत्तथायुतं । ।

---

1. <नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च># । । PS_४,१.५५ । ।

_______Sठाऱ्ठ्JKव्_४,१.५५ः

स्वाङ्गाच्च+उपसर्जनातित्येव ।
बह्वज्-लक्षणे संयोगोपध-लक्षणे च प्रतिषेधे प्राप्ते वचनं ।
सहनञ्-विद्यमान-लक्षणस्तु प्रतिषेधो भवत्येव ।
नासिका-आद्यन्तात्प्रातिपदिकात्स्त्रियां वा ङीष्प्रत्ययो भवति ।
तुङ्गनासिकी, तुङ्गनासिका ।
तिलोदरी, तिलोदरा ।
बम्बोष्ठी, बम्बोष्ठा ।
दीर्घजङ्घी, दीर्घजङ्घा ।
समदन्ती, समदन्ता ।
चारुकर्णी, चारुकर्णा ।
तीक्षणशृङ्गी, तीक्ष्णशृङ्गा ।
पुच्छाच्च+इति वक्तवयं ।
कल्याणपुच्छी, कल्याणपुच्छा ।
कबर-मणि-विष-शरेभ्यो नित्यं ।
कबरपुच्छी ।
मणिपुच्छी ।
विषयुच्छी ।
शरपुच्छी ।
उपमानात्पक्षाच्च पुच्छात्च ।
उलूकपक्षीसेना ।
उलूकपुच्छी शाला । ।

---

1. <न क्रोडादि-बह्वचः># । । PS_४,१.५६ । ।

_______Sठाऱ्ठ्JKव्_४,१.५६ः

स्वाङ्गातिति ङिष्प्राप्तः प्रतिषेध्यते ।
क्रोडाद्यन्तात्बह्वजन्तात्प्रातिपदिकात्स्त्रियां ङीष्प्रत्ययो न भवति ।
कल्याणक्रोडा ।
कल्याणाखुरा ।
कल्याणोखा ।

कल्याणबाला ।
कल्याणशफा ।
कल्याणगुदा ।
कल्याणघोणा ।
कल्याणनखा ।
कल्याणमुखा ।
क्रोडादिराकृतिगणः ।
सुभगा ।
सुगला ।
बह्वचः खल्वपि - पृथुजघना ।
महाललाटा । ।

---

1. <सह-नञ्-विद्यमान-पूर्वाच्च># । । PS_४,१.५७ । ।

_______Sठाञ्ठJKव्_४,१.५७ः

स्वाङ्गाच्च+उपसर्जनातिति, नासिक-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण. शृग्गाच्च (*४,१.५५) इति च प्राप्तो ङीष्प्रतिषिध्यते ।
सह नञ्विद्यमान एवं पूर्वात्प्रातिपदिकात्स्त्रियां ङीष्प्रत्ययो न भवति ।
सकेशा ।
अकेशा ।
विद्यमानकेशा ।
सनासिका ।
अनासिका ।
विद्यमाननासिका । ।

---

[#३३४]

1. <नख-मुखात्सञ्ज्ञायाम्># । । PS_४,१.५८ । ।

_______Sठाञ्ठJKव्_४,१.५८ः

नख-मुखान्तात्प्रातिपदिकात्सञ्ज्ञायां विषये स्त्रियां ङीष्प्रत्ययो न भवति ।
शूर्पणखा ।
वज्रनखा ।
गौरमुखा ।
कालमुखा ।
सञ्ज्ञायां इति किं ? ताम्रनखी कन्या ।
चन्द्रमुखी । ।

---

1. <दीर्घजिह्वी च च्छन्दसि># । । PS_४,१.५९ । ।

______Sठा-ठ्JKव्_४,१.५९ः

दीर्घजिह्वी इति छन्दसि विषये निपात्यते ।
संयोगोपधत्वादप्राप्तो ङीष्विधीयते ।
दीर्घजिह्वी वै देवानां हव्यमवालेठ् ।
चकारः सञ्ज्ञ-अनुकर्षण-अर्थः ।
दीर्घजिह्वी इति निपातनं नित्य-अर्थं । ।

---

1. <दिक्-पूर्वपदान्ङीप्># । । PS_४,१.६० । ।

______Sठा-ठ्JKव्_४,१.६०ः

स्वाङ्गाच्च+उपसर्जनातित्येवं आदिविधि-प्रतिषेध-विषयः सर्वोऽप्यपेक्ष्यते ।
यत्र ङीष्विहितस्तत्र तदपवादः ।
दिक्-पूर्वपदात्प्रातिपदिकात्ङीप्प्रत्ययो भवति ।
स्वरे विशेषः ।
प्राङ्मुखी, प्राङ्मुखा ।
प्राङ्नासिकी, प्राङ्नासिका ।
इह न भवति, प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघना इति । ।

---

1. <वाहः># । । PS_४,१.६१ । ।

______Sठा-ठ्JKव्_४,१.६१ः

ङीषेव स्वर्यते, न ङीप् ।
वहेरयं ण्वि-प्रत्ययान्तस्य निर्देशः ।
सामार्थ्यात्तदन्तनिधेर्विज्ञानं ।
बहन्तात्प्रातिपदिकात्स्त्रियां ङीष्प्रत्ययो भवति ।
दित्यौही ।
प्रष्ठौही । ।

---

1. <सख्यशिश्वी इति भाषायाम्># । । PS_४,१.६२ । ।

______Sठा~ठJKव्_४,१.६२ः
सखी अशिश्वी इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते ।
सखीयं मे ब्राह्मणी ।
न अस्याः शिशुरस्ति इति अशिश्वी ।
भाषायां इति किं ? सखा सप्तपदी भव ।
अशिशुं इव मामयं शिशुरभिमन्यते । ।

---

1. <जातेरस्त्रीविषयादय-उपधात्># । । PS_४,१.६३ । ।

______Sठा~ठJKव्_४,१.६३ः

जातिवाचि यत्प्रातिपदिकं न च स्त्रियां एव नियतं अस्त्रीविषयं अयकारोपधं च तस्मात्स्त्रियां ङीष्प्रत्ययो भवति ।
आकृति-ग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्गाह्या गोत्रं च चरणैः सह । ।

[#३३५]

कुक्कुटी ।
सूकरी ।
ब्राह्मणी ।
वृषली ।
नाडायनी ।
चारायणी ।
कठी ।
बह्वृची ।
जातेः इति किं ? मुण्डा ।
अस्त्रीविषयातिति किं ? मक्षिका ।
अयोपधातिति किं ? क्षत्रिया ।
योपध-प्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणां अप्रतिषेधः ।
हयी ।
गवयी ।
मुकयी ।
मत्सी ।
मनुषी । ।

---

1. <पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वाल-उत्तरपदाच्च># । । PS_४,१.६४ । ।

_______Sठा९ठJKव्_४,१.६४ः

पाक-आद्य्-उत्तरपदात्जातिवाचिनः प्रातिपदिकात्स्त्रियां ङीष्प्रत्ययो भवति ।
स्त्री-विषयत्वादेतेषां पूर्वेण अप्राप्तः प्रत्ययो बिधीयते ।
ओदनपादी ।
शङ्कुकर्णी ।
शालपर्णी ।
शङ्खपुष्पी ।
दासीफली ।
दर्भमूली ।
गोबाली ।
पुष्प-फल-मूल-उत्तरपदात्तु यतो नेष्यते तदजादिषु पठ्यते, सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्, सम्भस्त्राजिनशणपिण्डेभ्यः फलात्, मूलान्नञः इति । ।

---

1. <इतो मनुस्य-जातेः># । । PS_४,१.६५ । ।

_______Sठा९ठJKव्_४,१.६५ः

इकारान्तात्प्रातिपदिकात्मनुष्यजाति-वाचिनः स्त्रियां ङीष्प्रत्ययो भवति ।
अवन्ती ।
कुन्ती ।
दीक्षी ।
प्लाक्षी ।
इतः इति किं ? विठ् ।
दरथ् ।
मनुष्य-ग्रहणं किं ? तित्तिरिः ।
जातेः इति वर्तमाने पुनर्जाति-ग्रहणं योपधादपि यथा स्याथ् ।
औदमेयी ।
इञ उपसङ्ख्यानं अजात्य्-अर्थं ।
सौतङ्गमी ।
मौनचित्ती ।
सुतङ्गमादिभ्यश्चातुरर्थिक इञ्न जातिः । ।

---

1. <ऊङुतः># । । PS_४,१.६६ । ।

______Sठाञ्ठ्JKव्_४,१.६६ः

मनुस्यजातेः इति वर्तते ।
उकारान्तात्मनुस्यजाति-वाचिनः प्रातिपदिकात्स्त्रियां ऊङ्प्रत्ययो भवति ।
कुरूः ।
बह्मबन्धूः ।
वीरबन्धूः ।
ङकारो नोङ्धात्वोः (*६,१.१७५) इति विशेषण-अर्थः ।
दीर्घोच्चारणं कपो बाधन-अर्थं ।
अयोपधातित्येतदत्र अपेक्ष्यते ।
अध्वर्युर्ब्राह्मणी ।
अप्राणिजातेश्चारज्ज्वादीनां इति वक्तव्यं ।
अलाबूः ।
कर्कन्धूः ।
अप्राणि-ग्रहणं किं ? कृकवाकुः ।
अरज्ज्वादीनां इति किं ? रज्जुः ।
हनुः । ।

---

1. <बाह्वन्तात्सञ्ज्ञायाम्># । । PS_४,१.६७ । ।

______Sठाञ्ठ्JKव्_४,१.६७ः

बाहु-शब्दान्तात्प्रातिपदिकात्सञ्ज्ञायां विषये स्त्रियां ऊङ्प्रत्ययो भवति ।
भद्रबाहूः ।
जालबाहूः ।
सञ्ज्ञायां इति किं ? वृत्तौ बाहू अस्याः वृत्तबाहुः । ।

---

[#३३६]

1. <पङ्गोश्च># । । PS_४,१.६८ । ।

______Sठाञ्ठ्JKव्_४,१.६८ः

पङ्गु-शब्दात्स्त्रियां ऊङ्प्रत्ययो भवति।
पङ्गूः।
श्वशुरस्य+उकाराकारलोपश्च वक्तव्यः।
श्वश्रूः।।

---

1. <ऊरु-उत्तरपदादौपम्ये>#।। PS_४,१.६९।।

_______Sठाञ्ठ्JKव्_४,१.६९ः

ऊरु-उत्तरपदात्प्रातिपदिकातौपम्ये गम्यमाने स्त्रियां ऊङ्प्रत्ययो भवति।
कदलीस्तम्भोरूः।
नागनासोरूः।
करभोरूः।
औपम्ये इति किं? वृत्तोरुः स्त्री।।

---

1. <संहित-शफ-लक्षण-वाम-आदेश्च>#।। PS_४,१.७०।।

_______Sठाञ्ठ्JKव्_४,१.७०ः

संहित शफ लक्षण वाम इत्येवं आदेः प्रातिपदिकादूरु-उत्तरपदात्स्त्रियां ऊङ्प्रत्ययो भवति।
अनौपम्य-अर्थ आरम्भः।
संहितोरूः।
शफोरूः।
लक्षणोरूः।
वामोरूः।
सहितसहाभ्यां च+इति वक्तव्यं।
सहितोरूः।
सहोरूः।।

---

1. <कद्रु-कमण्डल्वोश्छन्दसि>#।। PS_४,१.७१।।

_______Sठाञ्ठ्JKव्_४,१.७१ः

कद्रु-शब्दात्कमण्डलु-शब्दाच्च छन्दसि चिषये स्त्रियां ऊङ्प्रत्ययो भवति।
कद्रूश्च वै सुपर्णी अ।
मा स्म कमण्डलूं शूद्राय दद्याथ्।
छन्दसि इति किं? कद्रुः।
कमण्दलुः।
गुग्गुलुमधुजतुपतयालूनां इति वक्तव्यं।
गुगुलूः।
मधूः।
जतूः।
पतयालूः।।

---

1. <सञ्ज्ञायाम्>#।। PS_४,१.७२।।

_______Sठाऽठ्JKव्_४,१.७२ः

कद्रु-कमण्डलु-शब्दाभ्यां सञ्ज्ञायां विषये स्त्रियां ऊङ्प्रत्ययो भवति।
अच्छन्दोर्थं वचनं।
कद्रूः।
कमण्डलूः।
सञ्ज्ञायां इति किं? कद्रुः।
कमण्डलुः।।

---

[#३३७]

1. <शार्ङ्गरव-आद्य्-अञो ङीन्>#।। PS_४,१.७३।।

_______Sठाऽठ्JKव्_४,१.७३ः

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन्प्रत्ययो भवति।
शार्ङ्गरवी।
कापटवी।
अञनतेभ्यः - बैदी।
और्वी।
जातिग्रहणं अत्र अनुवर्तते।
तेन जाति-लक्षणो ङीषनेन बाध्यते, न पुंयोग-लक्षणः, बैदस्य स्त्री बैदी।
शार्ङ्गरव।
कापटव।
गौगुलव।

ब्राह्मण ।
गौतम ।
एतेऽणन्ताः ।
कामण्डलेय ।
ब्राहमकृतेय ।
आनिचेय ।
आनिधेय ।
आशोकेय ।
एते ढगन्ता ।
वात्स्यायन ।
मौञ्जायन ।
एतौ फगन्तौ जातिः ।
कैकसेयो ढगन्तः ।
काव्यशैव्यौ यञन्तौ ।
एहि, पर्येहि कृदिकारान्तौ ।
आश्मरथ्यो यञन्तः ।
औदपानः ।
उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति ।
अराल ।
चण्डाल ।
वतण्ड ।
जातिः ।
भोगवद्गौरिमतोः सञ्ज्ञायां घादिषु नित्यं ह्रस्वार्थं ।
नृनरयोर्वृद्धिश्च ।
अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन्विधीयते । ।

---

1. <यङश्चाप्># । । PS_४,१.७४ । ।

_______Sठाञ्ठJKव्_४,१.७४ः

यङन्तात्प्रातिपदिकात्स्त्रियां चाप्प्रत्ययो भवति ।
ञ्यङः ष्यङश्च सामान्य-ग्रहणं एतथ् ।
आम्बष्ठ्या ।
सौवीर्या ।
कौसल्या ।
ष्यङ्- कारीषगन्ध्या ।
वाराह्या ।
बालाक्या ।
षाच्च यञः ।
षात्परो यो यन्तदन्ताच्चाप्वक्तव्यः ।
शार्कराक्ष्या ।
अपुतिमाष्या ।
गौकक्ष्या ।
उत्तरसूत्रे चकारोऽनुक्त-समुच्चय-अर्थः, तेन वा भविष्यति । ।

---

1. <आवङ्याच्च># । । PS_४,१.७५ । ।

_______Sठान्ठ्JKव्_४,१.७५ः

अवट-शब्दो गर्गादिः, तस्माद्यञि कृते ङीपि प्राप्ते वचनं एतथ् ।
आवट्याच्च स्त्रियां चाप्प्रत्ययो भवति ।
आवट्या प्राचां ष्फ एव, सर्वत्र ग्रहणाथ् ।
आवट्यायनी । ।

---

1. <तद्धिताः># । । PS_४,१.७६ । ।

_______Sठान्ठ्JKव्_४,१.७६ः

अधिकारोऽयं ।
आपञ्चमाध्यायपरिसमाप्तेः यानित ऊर्ध्वं अनुक्रमिस्यामः तद्धितसञ्ज्ञास्ते वेदितव्याः ।
वक्ष्यति, यूनस्तिः (*४,१.७७) - युवतिः ।
बहुवचनं अनुक्त-तद्धित-परिग्रह-अर्थं ।
पृथिव्या ञाञौ (*४,१.८५), अग्रादिपश्चाड्डिमच्(*४,३.२३) इत्येवं आदि लब्धं भवति ।
तद्धित-प्रदेशाः - कृत्-तद्धित-समासाश्च (*१,२.४६) इत्येवं आदयः । ।

---

[#३३८]

1. <यूनस्तिः># । । PS_४,१.७७ । ।

_______Sठान्ठ्JKव्_४,१.७७ः

युवन्-शब्दात्प्रातिपदिकात्स्त्रियां तिः प्रत्ययो भवति ।
स च तद्धितसञ्ज्ञो भवति ।
ङीपोऽपवादः ।
युवतिः । ।

---

1. <अण्-इञोरनार्षयोर्गुरु-उपोत्तमयोः ष्यङ्गोत्रे># । । PS_४,१.७८ । ।

_______Sठाऽठ्JKव्_४,१.७८ः

गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति ।
निर्दिष्यमानस्य आदेशा भवन्ति इत्यणिञोरेव विज्ञायते, न तु समुदायस्य ।
ङकारः सामान्य-ग्रहण-अर्थः ।
षकारस्तदविघातार्थः, यङश्चाप्(*४,१.७४) इति ।
उत्तम-शब्दः स्वभावात्त्रिप्रभृतीनामन्त्यमक्षरमाह ।
उत्तमस्य समीपं उपोत्तमं ।
गुरु उपोत्तमं यस्य तद्गुरूपोत्तमं प्रातिपदिकं ।
करीषस्य+इव गन्धोऽस्य करीषगन्धिः ।
कुमुदगन्धिः ।
तस्यापत्यं इत्यण् ।
तस्य ष्यङादेशः ।
कारीषगन्ध्या ।
क्ॐउदगन्ध्या ।
वराहस्यापत्यं ।
अत इञ्(*४,१.९५) ।
वाराहिः ।
तस्य ष्यङादेशः ।
वाराह्या ।
बालाक्या ।
अणिञोः इति किं ? ऋतभागस्यापत्यं, बदादित्वादञ्, आर्तभागी ।
गुरूपोत्तमादिकं सर्वं अस्ति इति न स्तणिञौ ।
टिड्ढाणञ्(*४,१.१५) इति ङीबेव भवति ।
अनार्षयोः इति किं ? वासिष्ठी ।
वैश्वामित्री ।
गुरूपोत्तमयोः इति किं ? औपगवी ।
कापटवी ।
गोत्रे इति किं ? तत्र जाताः (*४,३.२५) - आहिच्छत्री ।
कान्यकुब्जी । ।

---

1. <गोर-अवयवात्># । । PS_४,१.७९ । ।

_______Sठाऽठ्JKव्_४,१.७९ः

अण्-इञोः इत्येव ।

गोत्र-अवयवाः गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः ।
ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति ।
अगुरूपोत्तमार्थ आरम्भः ।
पौणिक्या ।
भौणिक्या ।
मौखर्या ।
येषां स्वनन्तरापत्येऽपि इष्यते दैवदत्त्या, याज्ञादत्त्या इति , ते क्रौड्यादिषु द्रष्टव्याः । ।

---

1. <क्रौड्य्-आदिभ्यश्च># । । PS_४,१.८० । ।

______Sठान्ठ्JKव्_४,१.८०ः

क्रौडि इत्येवं आदिभ्यश्च स्त्रियां ष्यङ्प्रत्ययो भवति ।
अगुरूपोत्तम-अर्थ आरम्भः ।
अनणिञर्थश्च ।
कौड्या ।
लाड्या ।
कौडि ।
लाडि ।
व्याडि ।
आपिशलि ।
आपक्षिति ।
चौपयत ।
चैटयत ।
शैकयत ।
बैल्वयत ।
वैकल्पयत ।
सौधातकि ।
सूत युवत्यां ।
भोज क्षत्रिये भौरिकि ।
भौलिकि ।
शाल्मकि ।
शालास्थलि ।
कापिष्ठलि ।
गौलक्ष्य ।
गौकक्ष्य । ।

---

[#३३९]

1. <दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धिभ्योऽन्यतरस्याम्># । । PS_४,१.८१ । ।

______Sठा~ठ्JKव्_४,१.८१ः

दैवयज्ञि शौचिवृक्षि सात्यमुग्रि काण्ठेविद्धि इत्येतेषां अन्यतरस्यां ष्यङ्प्रत्ययो भवति ।
इञन्ता एते, गोत्र-ग्रहणं च न अनुवर्तते ।
तेन+उभयत्रविभाषेयं ।
गोत्रे पूर्वेण ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते ।
तेन मुक्ते इतो मनुस्यजाते (*४,१.६५) इति ङीषेव भवति ।
दैवयज्ञ्या, दैवयज्ञी ।
शौचिवृक्ष्या, शौचिवृक्षी ।
सात्यमुग्र्या, सात्यमुग्री ।
काण्ठेविद्ध्या, काण्ठेविद्धी । ।

---

1. <समर्थानां प्रथमाद्वा># । । PS_४,१.८२ । ।

______Sठा~ठ्JKव्_४,१.८२ः

त्रयं अप्यधिक्रियते समर्थानां इति च, प्रथमादिति च, वा इति च ।
स्वार्थिक-प्रत्ययावधिश्चायं अधिकारः, प्राग्दिशो विभक्तिः (*५,३.१) इति वावथ् ।
स्वार्थिकेषु ह्यस्य+उपयोगो न अस्ति, विकल्पोऽपि तत्र अनवस्थितः ।
केचिन्नित्यं एव भवन्ति ।
लक्षणवाक्यानि तस्य अपत्यं (*४,१.९२), तेन रक्तं रागात्(*४,२.१) तत्र भवः (*४,३.५३) इत्येवं आदीनि भविष्यन्ति ।
तेषु सामर्थ्ये सति प्रथम-निर्दिष्टादेव विकल्पेन प्रत्ययो भवति इति वेदितव्यं ।
समर्थानां इति विर्धारणे षष्ठी ।
समर्थानां मद्ये प्रथमः प्रत्यय-प्रकृतित्वेन निर्धार्यते ।
तस्य इति सामान्यं विशेषलक्षण-अर्थं ।
तदीयं प्राथम्यं विशेषाणां विज्ञायते ।
उपगोः अपत्यं औपगवः ।
समर्थानां इति किं ? कम्बल उपगोः, अपत्यं देवदत्तस्य ।
प्रथमातिति किं ? षष्ठ्यान्ताद्यथा स्यात्, प्रथमान्तान्मा भूथ् ।
वा इति किं ? वाक्यं अपि यथा स्यातुपगोरपत्यं इति ।
यद्येवं समास-वृत्तिः तद्धित-वृत्त्या बाध्येत उपग्वपत्यं इति ।
न+एष दोषः ।
पूर्वसूत्रादन्यतरस्यां ग्रहणं अनुवर्तते ।
तेन+एतदपि भविष्यति । ।

---

1. <प्राग्दीव्यतोऽण्># । । PS_४,१.८३ । ।

_______Sठाव्ठ्JKव्_४,१.८३ः

तेन दीव्यति इति वक्ष्यति ।
तदेकदेशो दीव्यच्छब्दो अवधित्वेन गृह्यते ।
प्राग्- दीव्यत्संशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यमः, अण्प्रत्ययस्तत्र भवति इति वेदितव्यं ।
अधिकारः, परिभाषा, चिधिर्वा इति त्रिष्वपि दर्शनेष्वपवादविषयं परिगृत्य अण्प्रवर्तते ।
वक्ष्यति, तस्य अपत्यं (*४,१.९२) - औपगवः ।
कापटवः । ।

---

1. <अश्वपत्यादिभ्यश्च># । । PS_४,१.८४ । ।

_______Sठाव्ठ्JKव्_४,१.८४ः

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेषु अण्प्रत्ययो भवति ।
पत्युत्तरपदाद्ण्यं वक्ष्यति, तस्य अपवादः ।
आश्वपतं ।
शातपतं ।
अश्वपति ।
शतपति ।
धनपति ।
गणपति ।
राष्ट्रपति ।
कुलपति ।
गृहपति ।
धान्यपति ।
पशुपति ।
धर्मपति ।
सभापति ।
प्राणपति ।
क्षेत्रपति । ।

---

[#३४०]

1. <दित्य्-अदित्य्-आदित्य-पत्य्-उत्तरपदाण्ण्यः># । । PS_४,१.८५ । ।

_______Sठाव्ठ्JKव्_४,१.८५ः

प्राग्दीव्यतः इत्येव ।
दिति अदिति आदित्य इत्येतेभ्यः, पत्युत्तरपदात्च प्रातिपदिकात्प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति ।
दैत्यः ।
आदित्यः ।
आदित्यं ।
पत्युत्तरपदात्- प्राजापत्यं ।
सैनापत्यं ।
यमाच्चेति वक्तव्यं ।
याम्यं ।
वाङ्मतिपितृमतां छन्दस्युपसंख्यानं ।
वाच्यः ।
मात्या ।
पैतृमत्यं ।
पृथिव्या ञाञौ ।
पार्थिवा ।
पार्थिवी ।
देवाद्यञञौ ।
दैव्यं ।
दैवं ।
बहिषष्टिलोपश्च ।
बाह्याः ।
ईकक्च ।
वाहीकः ।
ईकञ्छन्दसि ।
बाहीकः ।
स्वरे विशेषः ।
टिलोपवचनं अव्ययानां भमात्रे टिलोपस्य अनित्यत्वज्ञापनार्थं ।
आरातीयः ।
स्थाम्नोऽकारः ।
अश्वत्थामः ।
लोम्नोऽपत्येषु बहुषु ।
उडुलोमाः ।
शरलोमाः ।
बहुषु इति किं ? औडुलोमिः ।
शारलोमिः ।
सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यथ् ।
गव्यं ।
अजादि-प्रत्यय-प्रसङ्गे इति किं ? गोभ्यो हेतुभ्य आगतं गोरूप्यं ।
गोमयं ।
ण्यादयोऽर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेन ।
दितेरपत्यं दैत्यः ।
वनस्पतीनां समूहः वानस्पत्यं ।
कथं दैतेयः ? दिति-शब्दात्कृदिकारादक्तिनः, सर्वतोऽक्तिन्न्-अर्थादित्येके इति ङीषं कृत्वा स्त्रीभ्यो ढक्क्रियते ।
लिङ्गविशिष्ट-परिभाषा च अनित्या । ।

[#३४१]

1. <उत्स-आदिभ्योऽञ्># । । PS_४,१.८६ । ।

______SठाxठJKव्_४,१.८६ः
प्राग्दीव्यतः इत्येव ।
उत्सादिभ्यः प्राग्दीव्यतीयेषु अर्थेषु अञ्प्रत्ययो भवति ।
अणस्तदपवादानां च बाधकः ।
औत्सः ।
औदपानः ।
उत्स ।
उदपान ।
विकर ।
विनोद ।
महानद ।
महानस ।
महाप्राण ।
तरुण ।
तलुन ।
बष्कयाऽसे ।
धेनु ।
पृथिवी ।
पङ्क्ति ।
जगती ।
तिर्ष्टुप् ।
अनुष्टुप् ।
जनपद ।
भरत ।
उशीनर ।
ग्रीष्म ।
पीलु ।
कुल ।
उदस्थानात्देशे ।
पृषदंशे ।
भल्लकीय ।
रथान्तर ।
मध्यन्दिन ।
बृहथ् ।
महथ् ।
सत्त्वन्तु ।
सच्छब्दो मतुबन्त आगतनुङ्को गृह्यते सत्त्वन्तु इति ।
कुरु ।
पञ्चाल ।
इन्द्रावसान ।
उष्णिक् ।
ककुबः ।
सुवर्ण ।

देव ।
ग्रीष्माच्छन्दसि इति वक्तव्यं ।
इह मा भूथ् ।
ग्रैषंई त्रिष्टुप् ।
छन्दश्च+इह वृत्तं गृह्यते, न वेदः । ।

---

1. <स्त्री-पुंसाभ्यां नञ्-स्नञौ भवनात्># । । PS_४,१.८७ । ।

_______Sठा~ठ्JKव्_४,१.८७ः

धान्यानां भवने क्षेत्रे खञ्(*५,२.१) इति वक्ष्यति ।
तस्य प्रागित्यनेन+एव सम्बन्धः ।
प्राग्भवनसंशब्दनाद्येऽर्थास्तेषु स्त्री-शब्दात्पुंस्-शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययु भवतः ।
स्त्रीषु भवं स्त्रैणं ।
प्ॐस्नं ।
स्त्रिणां समूहः स्त्रैणं ।
प्ॐस्नं ।
स्त्रीभ्य आगतं स्त्रैणं ।
अपुंस्नं ।
स्त्रीभ्यो हितं स्त्रैणं ।
प्ॐस्नं ।
स्त्रियाः पुंवतिति ज्ञापकाद्वत्यर्थे न भवति ।
योग-अपेक्षं च ज्ञापकं इति स्त्रीवदित्यपि सिद्धं । ।

---

1. <द्विगोर्लुग्-अनपत्ये># । । PS_४,१.८८ । ।

_______Sठा~ठ्JKव्_४,१.८८ः

प्राग्दीव्यतः इति वर्तते, न भवनातिति ।
द्विगोः इति षष्ठी ।
द्विगोर्यः सम्बन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयोऽपत्य-प्रत्ययं वर्जयित्वा तस्य लुग्भवति ।
पज्चसु कपालेषु संस्कृतः पज्चकपालः ।
दशकपालः ।
द्वौ देवादधीते द्विवेदः ।
त्रिवेदः ।
अनपत्ये इति किं ? द्वैदेवदत्तिः ।
त्रैदेवदत्तिः ।
प्राग्दिव्यतः इत्येव, द्वैपारायणिकः ।
द्विगु-निमित्तविज्ञानादिह न भवति, पञ्चकपालस्य+इदं पाञ्चकपालं ।

अथ वा द्विगोरेव अयं लुग्विधीयते ।
द्विगोः इति स्थान-षष्ठी ।
ननु च प्रत्ययादर्शनस्य+एषा सञ्ज्ञा ? सत्यं एतथ् ।
उपचारेण तु लक्षणया द्विगु-निमित्त-भूतः प्रत्यय एव द्विगुः, तस्य लुग्भवति ।
द्विगु-निमित्तकोऽपि तर्हि गुणकल्पनया कस्मान्न द्विगुरुच्यते पाज्चकपालं इति ? न तस्य द्विगुत्वं निमित्तं ।
इतरस्तु द्विगुत्वस्य+एव निमित्तं इत्यस्ति विशेषः ।
यद्येवं इह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति ? न+एव अत्र तद्धित उत्पद्यते ।

[#३४२]

वाक्यं एव भवति ।
त्रैशब्द्यं हि साध्यं, पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति ।
तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः ।
अपरस्मादुत्पत्तिर्भविष्यति ।
अथ+इह कस्मान्न भवति, पञ्चभ्यो गर्गेभ्य आगतं पज्चगर्गरूपयम्, पञ्चगर्गं अयं इति वा इत्यनुवर्तते ।
सा च व्यवस्थित-विभाषा विज्ञायते । ।

---

1. <गोत्रेऽलुग्-अचि># । । PS_४,१.८९ । ।

______Sठान्ठ्JKव्_४,१.८९ः

प्राग्दीव्यतः इत्येव ।
यस्कादिभ्यो गोत्रे (*२,४.६३) ।
इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तः, तेषामजादौ प्राग्दीव्यतीये विशयभूते प्रतिषिध्यते ।
गर्गाणां छात्राः गार्गीयाः ।
वात्सीयाः ।
आत्रेयीयाः ।
खारपायणीयाः ।
गोत्रे इति किं ? कौबलं ।
बादरं ।
अचि इति किं ? गर्गेभ्य आगतं गर्गरूप्यं ।
गर्गमयं ।
प्राग्दीव्यतः इत्येव, गर्गेभ्यो हि तं गार्गीयं ।
गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ।
बिदानां अपत्यं युवा, युवानौ बैदः, बैदौ ।
वैद-शब्दाततः इञ्कृते तस्य च इञः ण्य-क्षत्रिय-आर्ष-ञितो यूनि लुग्-अण्-इञोः (*२,४.५८) इति लुकि रूपं ।
एकवचन-द्विवचन-अन्तस्य प्रवृत्तौ बहुषु लोपो यूनि, बैदस्य बैदयोर्वा अपत्यं बहवो माणवकाः बिदाः ।
नह्यत्राण्बहुषूत्पन्नः । ।

---

1. <यूनि लुक्># । । PS_४,१.९० । ।

_______Sठाऽ्ठJKव्_४,१.९०ः

प्राग्दीव्यतः इति वर्तते, अचि च ।
प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युव-प्रत्ययस्य लुग्भवति ।
तस्मन्निवृत्ते सति यो यतः प्राप्नोति स ततो भवति ।
फाण्टाहृतस्य अपत्यं फाण्टाहृतिः ।
तस्य अपत्यं युवा, फाण्टाहृति-मिमताभ्यां ण-फिञौ (*४,१.१५०), फाण्टागृतः ।
तस्य छाअत्राः इति विवक्षितेऽर्थे बुद्धिस्थे युव-प्रत्यय्स्य लुग्भवति ।
तस्मिन्निवृत्ते इञन्तं प्रकृति-रूपं सम्पन्नं ।
तस्मातिञश्च (*४,२.११२) इत्यण्भवति, फाण्टाहृताः ।
भागवित्तस्य अपत्यं भागवित्तिः ।
तस्य अपत्यं युवा, वृद्धाइक्सौवीरेषु बहुलं (*४,१.१४८) इति ठक्, भागवित्तिकः ।
तस्य छात्राः, पूर्ववद्युवप्रत्यये निवृत्ते, इञश्च (*४,२.११२) इत्यण्, भागवित्ताः ।
तिकस्य अपत्यं, तिकादिभ्यः फिञ्(*४,१.१५४), तैकायनिः ।
तस्य अपत्यं युवा, फेश्छ च (*४,१.१४९) इति छः, तैकायनीयः ।
तस्य छात्रः, युव-प्रत्यये निवृत्ते वृद्धाच्छः (*४,२.११४), तैकायनीयाः ।
कपिञ्जलादस्य अपत्यं कापिञ्जलादिः ।
तस्य अपत्यं युवा, कुर्वादिभ्यो ण्यः (*४,१.१५१), कापिञ्जलाद्यः ।
तस्य छात्राः, ण्ये निवृत्ते इञश्च (*४,२.११२) इत्यण्, कापिञ्जलादाः ।
ग्लुचुकस्य अपत्यं, प्राचां अवृद्धात्फिन्बहुलं (*४,१.१६०) इति ग्लुचुकायनिः ।
तस्य अपत्यं युवा, प्राग्दीव्यतोऽण्(*४,१.८३), ग्लौचुकायनः ।
तस्य छात्राः, युव-प्रत्यये निवृत्ते स एव अण्, ग्लौचुकायनाः ।
अचि इत्येव, फाण्टाहृतरूप्यं ।
फाण्टाहृतमयं ।
प्राग्दीव्यतः इत्येव, भागवित्तिकाय हितं भागवित्तिकीयं । ।

---

[#३४३]

1. <फक्-फिञोरन्यतरस्याम्># । । PS_४,१.९१ । ।

_______Sठाऽ्ठJKव्_४,१.९१ः

यूनि इत्येव ।
पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते ।
फक्फिञोर्युव-प्रत्यययोः प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग्भवति ।
गर्गादिभ्यो यञि कृते यञिञोश्च (*४,१.१०१) इति फक्, गार्ग्यायणः ।
तस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः ।
वात्सीयाः, वात्स्यायनीयाः ।
फिञः खल्वपि यस्कस्य अपत्यं, शिवादिभ्योऽण्(*४,१.११२), यास्कः ।
तस्य अपत्यं युवा, अणो द्व्यचः (*४,१.१५६) इति फिञ्, यास्कायनिः ।

तस्य छात्राः यास्कीयाः, यास्कायनीयाः । ।

---

1. <तस्य अपत्यम्># । । PS_४,१.९२ । ।

______Sठान्ठJKव्_४,१.९२ः

अर्थ-निर्देशोऽयं, पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बध्यते ।
तस्य इति षष्ठीसमर्थातपत्यं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
प्रकृत्यर्थ-विशिष्टः षष्ठ्यर्थोऽपत्यं आत्रञ्चेह गृह्यते ।
लिङ्गवचनादिकमन्यत्सर्वमविवक्षितं ।
उपगोरपत्यं औपगवः ।
आश्वपतः ।
दैत्यः ।
औत्सः ।
स्त्रैणः ।
प्ॐस्नः ।
तस्य+इदं अपत्येऽपि बाधन-अर्थं कृतं भवेथ् ।
उत्सर्गः शेष एव असौ वृद्धान्यस्य प्रयोजनं । ।
भानोरपत्यं भानवः ।
श्यामगवः । ।

---

1. <एको गोत्रे># । । PS_४,१.९३ । ।

______Sठान्ठJKव्_४,१.९३ः

अपत्यं पौत्र-प्रभृति गोत्रं (*४,१.१६२) ।
तस्मन्विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्ति-प्रस्ङ्गे नियमः क्रियते, गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते ।
अपतनादपत्यं ।
योऽपि व्यवहितेन जनितः, सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव ।
गर्गस्य अपत्यं गार्गिः ।
गार्गेरपत्यं गार्ग्यः ।
तत्पुत्रोऽपि व्यवहितेन जनितः, सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव ।
गर्गस्य अपत्यं गार्गिः ।
गार्गेरपत्यं गार्ग्यः ।
तत्पुत्रोऽपि गार्ग्यः ।
सर्वस्मिन्व्यवहितजनितेऽपि गोत्रापत्ये गर्ग-शब्दाद्यञेव भवति इति प्रत्ययो नियम्यते ।
अथवा गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययं उत्पादयति इति प्रकृतिर्नियम्यते ।
गार्ग्यः ।
नाडायनः । ।

---

1. <गोत्राद्यून्यस्त्रियां># । । PS_४,१.९४ । ।

______Sठाञ्ठ्JKव्_४,१.९४ः

अयं अपि नियमः ।
यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः ।
गार्ग्यस्य अपत्यं युवा गार्ग्यायणः ।
वात्स्यायनः ।
दाक्षायणः ।
प्लाक्षायणः ।
औपगविः ।
नाडायनिः ।
अस्त्रियां इति किं ? दाक्षी ।
प्लाक्षी ।
किं पुनरत्र प्रतिषिध्यते ? यदि नियमः, स्त्रियां अनियमः प्राप्नोति ।
अथ युवप्रत्ययः, स्त्रिया गोत्रप्रययेन अभिधानं न प्राप्नोति गोर-सञ्ज्ञायाः युव-सञ्ज्ञया बाधितत्वाथ् ।
तस्माद्योगविभागः कर्तव्यः ।
गोत्राद्यूनि प्रत्ययो भवति ।
ततोऽस्त्रियां ।
यूनि यदुक्तं तत्स्त्रियां न भवति ।
युवसञ्ज्ञा+एव प्रतिषिध्यते, तेन स्त्री गोत्रप्रत्ययेन अभिधास्यते । ।

---

[#३४४]

1. <अत इञ्># । । PS_४,१.९५ । ।

______Sठाञ्ठ्JKव्_४,१.९५ः

तस्य अपत्यं इत्येव ।
अकारान्तात्प्रातिपदिकातिञ्प्रत्ययो भवति ।
अणोऽपवादः ।
दक्षस्य अपत्यं दाक्षिः ।
तपरकरणं किं ? शुभंयाः, कीलालपाः इत्यतो मा भूथ् ।
कथं प्रदीयतां दाशरथाय मैथिलि ? शेषविवक्षया भविष्यति । ।

---

1. <बाह्व्-आदिभ्यश्च># । । PS_४,१.९६ । ।

______Sठाञ्ठ्JKव्_४,१.९६ः

बाहु इत्येवं आदिभ्यः शब्देभ्योऽपत्ये इञ्प्रत्ययो भवति ।
बाहविः ।
औपबाहविः ।
अनकारार्थ आरम्भः ।
क्वचिद्बाधकवाधनार्थः ।
बाहु ।
उपबाहु ।
विवाकु ।
शिवाकु ।
बटाकु ।
उपबिन्दु ।
वृक ।
चूडाला ।
मूषिका ।
बलाका ।
भगला ।
छगला ।
घ्रुवका ।
धुवका ।
सुमित्रा ।
दुर्मित्रा ।
पुष्करसथ् ।
अनुहरथ् ।
देवशर्मन् ।
अग्निशर्मन् ।
कुनामन् ।
सुनामन् ।
पञ्चन् ।
सप्तन् ।
अष्टन् ।
अमितौजसः सलोपश्च ।
उदञ्चु ।
शिरस् ।
शराविन् ।
क्षेमवृद्धिन् ।
शृङ्खलातोदिन् ।
खरनादिन् ।
नगरमर्दिन् ।
प्राकारमर्दिन् ।
लोमन् ।
अजीगर्त ।

कृष्ण ।
सलक ।
युधिष्ठिर ।
अर्जुन ।
साम्ब ।
गद ।
प्रद्युम्न ।
राम ।
उदङ्कः सञ्ज्ञायां ।
अम्भूयोऽम्भसोः सलोपश्च ।
बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ।
बाहुर्नाम कश्चित्, तस्य अपत्यं बाहवः ।
सम्बन्धिशब्दानां च तत्सदृशात्प्रतिषेधः ।
सञ्ज्ञा - श्वशुरस्य अपत्यं श्वाशुरिः ।
चकारोऽनुक्त-समुच्चय-अर्थः आकृतिगणतामस्य बोधयति ।
जाम्बिः ।
ऐन्द्रशर्मिः ।
आजधेनविः ।
आजबन्धविः ।
औडुलोमिः ।।

---

1. <सुधातुरकङ्च># ।। PS_४,१.९७ ।।

______Sठा~ठ्JKव्_४,१.९७ः

सुधातृ-शब्दादपत्ये इञ्प्रत्ययो भवति, तत्संनियोगेन च तस्य अकङदेशो भवति ।
सुधातुरपत्यं सौधातकिः ।
व्यासवरुडनिषादचण्डालबिम्बानां इति वक्तव्यं ।
वैयासकिः ।
बारुडकिः ।
नैषादकिः ।
चाण्डालकिः ।
बैम्बकिः ।।

---

[#३४५]

1. <गोत्रे कुञ्ज-आदिभ्यश्च्फञ्># ।। PS_४,१.९८ ।।

______Sठाऽठ्JKव्_४,१.९८ः

तस्य अपत्यं इत्येव ।
गोत्रसञ्ज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यः च्फञ्प्रत्ययो भवति ।
इञोऽपवादः ।
चकारो विशेषण-अर्थः व्रात-च्फञोरस्त्रियां (*५,३.११३) इति ।
ञकारो वृद्ध्य्-अर्थः ।
कौञ्जायन्यः, कौजायन्यौ, कौञ्जायनाः ।
ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः ।
गोत्रे इति किं ? कुञ्जस्य अपत्यं अनन्तरं कौञ्जिः ।
एकवचन-द्विवचनयोः सतिशिष्टत्वात्ञित्स्वरेण+एव भवितव्यं ।
बहुवचने तु कौञ्जायनाः इति, परं अपि ञित्स्वरं त्यक्त्वा चित्स्वर एव+इष्यते ।
गोत्र-अधिकारश्च शिवादिभ्योऽण्(*४,१.११२) इति यावथ् ।
कुञ्ज ।
ब्रध्न ।
शङ्ख ।
भस्मन् ।
गण ।
लोमन् ।
शठ ।
शाक ।
शाकट ।
शुण्डा ।
शुभ ।
विपाश ।
स्कन्द ।
स्तम्भ । ।

---

1. <नडादिभ्यः फक्># । । PS_४,१.९९ । ।

______Sठाऽठ्JKव्_४,१.९९ः

नडित्येवं आदिभ्यः प्रातिपदिकेभ्यः गोत्रापत्ये फक्प्रत्ययो भवति ।
नाडायनः ।
चारायणः ।
गोत्रे इत्येव, नाडिः ।
शलङ्कु शलङ्कं च इत्यत्र पठ्यते ।
शालङ्कायनः ।
पैलादिषु शालङ्कि-शब्दः पठ्यते ।
शालङ्किः पिता ।
शालङ्किः पुत्रः ।
तत्कथं ? गोत्र-विशेषे कौशिके फकं स्मरन्ति, इञेव अन्यत्र शालङ्किः इति ।

अथवा पैलादिपाठ एव ज्ञापकः इञो भावस्य ।
नड ।
चर ।
बक ।
मुञ्ज ।
इतिक ।
इतिश ।
उपक ।
लमक ।
शलङ्कु शलङ्कं च ।
सप्तल ।
वाजप्य ।
तिक ।
अग्निशर्मन्वृशगणे ।
प्राण ।
नर ।
सायक ।
दास ।
मित्र ।
द्वीप ।
पिङ्गर ।
पिङ्गल ।
किङ्कर ।
किङ्कल ।
कातर ।
कातल ।
काश्य ।
काश्यप ।
काव्य ।
अज ।
अमुष्य ।
कृष्णरणौ ब्राह्मणवासिष्ठयोः ।
अमित्र ।
लिगु ।
चित्र ।
कुमार ।
क्रोष्टु क्रोष्टं च ।
लोह ।
दुर्ग ।
स्तम्भ ।
शिंशिपा ।
अग्र ।
तृण ।
शकट ।
सुमनस् ।
सुमत ।
मिमत ।
ऋक् ।
जथ् ।

युगन्धर ।
हंसक ।
दण्डिन् ।
हस्तिन् ।
पञ्चाल ।
चमसिन् ।
सुकृत्य ।
स्थिरक ।
ब्राह्मण ।
चटक ।
बदर ।
अश्वक ।
खरप ।
कामुक ।
व्रह्मदत्त ।
उदुम्बर ।
शोण ।
अलोह ।
दण्ड । ।

---

1. <हरित-आदिभ्योऽञः># । । PS_४,१.१०० । ।

______Sठाꣳठ्JKव्_४,१.१००ः

हरितादिर्बिदाद्यन्तर्गणः ।
हरितादिभ्योऽञन्तेभ्योऽपत्ये फक्प्रत्ययो भवति ।
इञोऽपवादः ।
हरितस्य अपत्यं हारितायनः ।
कैन्दासायनः ।
ननु च गोत्रे इति वर्तते ।
न च गोत्रादपरो गोत्रप्रत्ययो भवति एको गोत्रे (*४,१.९३) इति वचनात्? सत्यं एतथ् ।

[#३४६]

इह तु गोत्राधिकारेऽपि सामर्थ्याद्यूनि प्रत्ययो विज्ञायते ।
गोत्राधिकारस्तु उत्तरार्थः । ।

---

1. <यञ्-इञोश्च># । । PS_४,१.१०१ । ।

_______SठाE्ठJKव्_४,१.१०१ः

यञन्तातिञन्ताच्च प्रातिपदिकादपत्ये फक्प्रत्ययो भवति ।
गार्ग्यायणः ।
वात्स्यायनः ।
इञन्तात्- दाक्षायणः ।
प्लाक्षायणः ।
द्वीपादनुसमुद्रं यञ्(*४,३.१०), सुतङ्-गमादिभ्य इञ्(*४,२.८०) इत्यतो न भवति ।
गोत्र-ग्रहणेन यञिञौ विशेष्येते ।
तदन्तात्तु यून्येव अयं प्रत्ययः, गोत्राद्यूनि प्रत्ययो भवति इति वचनात् । ।

---

1. <शरद्वच्-छुनक-दर्भाद्भृगु-वत्स-आग्रायणेषु># । । PS_४,१.१०२ । ।

_______SठाE्ठJKव्_४,१.१०२ः

गोत्रे इत्येव ।
शरद्वत्शुनक दर्भ इत्येतेभ्यो गोत्रापत्ये फक्प्रत्ययो भवति यथासङ्ख्यं भृगुवत्साग्रायणेषु अर्थेषु अपत्य-विशेषेषु ।
शारद्वतायनो भवति भार्गवश्चेथ् ।
शारद्वतोऽन्यः ।
शौनकायनो भवति वात्स्यश्चेथ् ।
शौनकोऽन्यः ।
दार्भायणो भवति आग्रायणश्चेथ् ।
दार्भिरन्यः ।
शरद्वच्-छुनक-शब्दौ बिदादी ।
ताभ्यां अञोऽपवादः फक् । ।

---

1. <द्रोण-पर्वत-जीवन्तादन्यतरस्याम्># । । PS_४,१.१०३ । ।

_______SठाE्ठJKव्_४,१.१०३ः

गोत्रे इत्येव ।
द्रोणादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्येऽन्यतरस्यां फक्प्रत्ययो भवति ।
इञोऽपवादः ।
द्रौणायनः, द्रौणिः ।
पार्वतायनः, पार्वतिः ।
जैवन्तायनः, जैवन्तिः ।
कथं अनन्तरः अश्वत्थामा द्रौणायनः इत्युच्यते ।

न+एव अत्र महाभारतद्रोणो गृह्यते ।
किं तर्हि ? अनादिः ।
तत इदं गोत्रे प्रत्ययविधानं ।
इदानींतनात्तु श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति । ।

---

1. <अनृष्य्-आनन्तर्ये बिद-आदिभ्योऽञ्># । । PS_४,१.१०४ । ।

______Sठा-ठ्JKव्_४,१.१०४ः

गोत्रे इत्येव ।
बिदादिभ्यो गोत्रापत्ये अञ्प्रत्ययो भवति ।
बैदः ।
और्वः ।
ये पुनरत्र अनृषि-शब्दाः पुत्रादयस्तेभ्योऽनन्तरापत्ये एव भवति ।
पौत्रः ।
दौहित्रः ।
अनृष्यानन्तर्यस्य अयं अर्थः, अनृषिभ्योऽनन्तरे भवति इति ।
यद्ययं अर्थः, ऋष्यपत्ये नैरन्तर्य-प्रतिषेधो न कृतः स्यात्? तत्र+इदं न सिध्यति, इन्द्रभूः सप्तमः काश्यपानां ।
अनन्तरापत्यरूपेण+एव ऋष्यणाभिधानं भविष्यति ।
अवश्यं च+एतदेवं विज्ञेयं ।
ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिको विश्वामित्रः इति दुष्यति ।
गोत्रे इत्येव, बैदिः ।
ननु च ऋष्यणा भवितव्यं ? बाह्वादिः आकृतिगणः, तेन इञेव भवति ।
बिद ।
उर्व ।
कश्यप ।
कुशिक ।
भरद्वाज ।
उपमन्यु ।
किलालप ।
किदर्भ ।
विश्वानर ऋष्टिषेण ।
ऋतभाग ।
हर्यश्व ।
प्रियक ।
आपस्तम्ब ।
कूचवार ।
शरद्वथ् ।
शुनक ।
धेनु ।
गोपवन ।
शिग्रु ।
बिन्दु ।
भाजन ।

अश्वावतान ।
श्यामाक ।
श्यमाक ।
श्यापर्ण ।
हरित ।
किन्दास ।
वह्यस्क ।
अर्कलूष ।
वध्योष ।
विष्णुवृद्ध ।
प्रतिबोध ।
रथान्तर ।
रथीतर ।
गविष्ठिर ।
निषाद ।
मठर ।
मृद ।
पुनर्भू ।
पुत्र ।
दुहितृ ।
ननान्दृ ।
परस्त्री परशुं च । ।

---

[#३४७]

1. <गर्ग-आदिभ्यो यञ्># । । PS_४,१.१०५ । ।

______Sठा~ठ्JKव्_४,१.१०५ः

गोत्रे इत्येव ।
गर्गादिभ्यो गोत्रापत्ये यञ्प्रत्ययो भवति ।
गार्ग्यः ।
वात्स्यः ।
मनु-शब्दोऽत्र पठ्यते ।
तत्र कथं मानवी प्रजा ? गोत्रे इत्युच्यते ।
अपत्यसामान्ये भविष्यति ।
कथं अनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्यः इति ? गोत्ररूपाध्यारोपेण भविष्यति ।
अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यं जामदग्नः, पाराशरः इति ।
गर्ग ।
वत्स ।
वाजाऽसे ।
संकृति ।
अज ।
व्याघ्रपाथ् ।

विदभृथ् ।
प्राचीनयोग ।
अगस्ति ।
पुलस्ति ।
रेभ ।
अग्निवेश ।
शङ्ख ।
शठ ।
घूम ।
अवट ।
चमस ।
धनञ्जय ।
मनस ।
वृक्ष ।
विश्वावसु ।
जनमान ।
लोहित ।
शंसित ।
बभ्रु ।
मण्डु ।
मक्षु ।
अलिगु ।
शङ्कु ।
लिगु ।
गुलु ।
मन्तु ।
जिगीषु ।
मनु ।
तन्तु ।
मनायी ।
भूत ।
कथक ।
कष ।
तण्ड ।
वतण्ड ।
कपि ।
कत ।
कुरुकत ।
अनडुः ।
कण्व ।
शकल ।
गोकक्ष ।
अगस्त्य ।
कुण्डिन ।
यज्ञवल्क ।
उभय ।
जात ।
विरोहित ।
वृषगण ।

रहूगण ।
शण्डिल ।
वण ।
कचुलुक ।
मुद्गल ।
मुसल ।
पराशर ।
जतूकर्ण ।
मान्त्रित ।
संहित ।
अश्मरथ ।
शर्कराक्ष ।
पूतिमाष ।
स्थूण ।
अररक ।
पिङ्गल ।
कृष्ण ।
गोलुन्द ।
उलूक ।
तितिक्ष ।
भिषज् ।
भडित ।
भण्डित ।
दल्भ ।
चिकित ।
देवहू ।
इन्द्रहू ।
एकलू ।
पिप्पलू ।
वृदग्नि ।
जमदग्नि ।
सुलोभिन् ।
उकत्थ ।
कुटीगु ।।

---

1. <मधु-बभ्व्रोर्ब्राह्मण-कौशिकयोः># ।। PS_४,१.१०६ ।।

______Sठाऽ्ठ्JKव्_४,१.१०६ः

मधु-शब्दाद्बभ्रु-शब्दाच्च गोत्रापत्ये यञ्प्रत्ययो भवति यथासङ्ख्यं ब्राह्मणे कौशिके वाच्ये ।
माध्व्यो भवति बाह्मणः चेथ् ।
माधव एव अन्यः ।
बाभ्रव्यो भवति कौशिकश्चेथ् ।
बाभ्रव एव अन्यः ।

बभ्रु-शब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके नियम-अर्थं वचनं।
गर्गादिषु पठोऽप्यन्तर्गणकार्यार्थः, सर्वत्र लोहितादि-कतन्तेभ्यः (*४,१.१८) इति।
बाभ्रव्यायणी॥

---

1. <कपि-बोधादाङ्गिरसे>#॥ PS_४,१.१०७॥

______Sठा~ठ्JKव्_४,१.१०७ः

कपि-बोध-शब्दाभ्यां आङ्गिरसेऽपत्य-विशेषे गोत्रे यञ्प्रत्ययो भवति।
काप्यः।
बौध्यः।
आङ्गिरसे इति किं? कापेयः।
बौधिः।
कपि-शब्दो गर्गादिषु पठ्यते।
तस्य नियमर्थं वचनम्, आङ्गिरसे यथा स्याथ्।
लोहितादिकार्यार्थं गणे पाठः।
काप्यायनी॥

---

1. <वतण्डाच्च>#॥ PS_४,१.१०८॥

______Sठा~ठ्JKव्_४,१.१०८ः

आङ्गिरसे इत्येव।
वतण्ड-शब्दादाङ्गिरसेऽपत्यविशेषे गोत्रे यञ्प्रत्ययो भवति।
वातण्ड्यः।
आङ्गिरसे इति किं? वातण्डः।
किं अर्थं इदं यावता गर्गादिष्वयं पठ्यते? शिवादिषु अपि अयं पठ्यते।
तत्र आङ्गिरसे शिवाद्यणोऽपवाद-अर्थं पुनर्वचनं।
अनाङ्गिरसे तु उभयत्र पाठसामर्थ्यात्प्रत्ययद्वयं अपि भवति।
वातण्ड्यः, वातण्डः॥

---

[#३४८]

1. <लुक्स्त्रियाम्># । । PS_४,१.१०९ । ।

______Sठाऽ्ठJKव्_४,१.१०९ः

आङ्गिरसे इत्येव ।
वतण्ड-शब्दादाङ्गिरस्यां स्त्रियां यप्रत्ययस्य लुक्भवति ।
लुकि कृते शार्ङ्गरवादिपाठान्ङीन्भवति ।
वतण्डी ।
आङ्गिरसे इति किं ? वातण्ड्यायनी ।
शिवाद्यणि तु वातण्डी । ।

---

1. <अश्वादिभ्यः फञ्># । । PS_४,१.११० । ।

______Sठाऽ्ठJKव्_४,१.११०ः

आङ्गिरस इति निवृत्तं ।
अश्वादिभ्यः गोत्रापत्ये फञ्प्रत्ययो भवति ।
आश्वायनः ।
आश्मायनः ।
ये त्वत्र प्रत्ययान्ताः पठ्यन्ते तेभ्यः सामार्थ्याद्यूनि प्रत्ययो विज्ञायते ।
अश्व ।
अश्मन् ।
शङ्ख ।
बिद ।
पुट ।
रोहिण ।
खर्जूर ।
खर्जूल ।
पिञ्जूर ।
भडिल ।
भण्डिल ।
भडित ।
भण्डित ।
भण्डिक ।
प्रहृत ।
रामोद ।
क्षत्र ।
ग्रीवा ।
काश ।
गोलाङ्क्य ।
अर्क ।
स्वन ।

ध्वन ।
पाद ।
चक्र ।
कुल ।
पवित्र ।
गोमिन् ।
श्याम ।
धूम ।
धूम्र ।
वाग्मिन् ।
विश्वानर ।
कुट ।
वेश ।
शप आत्रेये ।
नत्त ।
तड ।
नड ।
ग्रीष्म ।
अर्ह ।
विशम्य ।
विशाला ।
गिरि ।
चपल ।
चुनम ।
दासक ।
वैल्य ।
धर्म ।
आनडुह्य ।
पुंसिजात ।
अर्जुन ।
शूद्रक ।
सुमनस् ।
दुर्मनस् ।
क्षान्त ।
प्राच्य ।
कित ।
काण ।
चुम्प ।
श्रविष्ठा ।
वीक्ष्य ।
पविन्दा ।
आत्रेय भारद्वाजे ।
कुत्स ।
आतव ।
कितव ।
शिव ।
खदिर ।
भारद्वाज आत्रेये । ।

---

1. <भर्गात्त्रैगर्ते># । । PS_४,१.१११ । ।

_______Sठा~ठ्JKव्_४,१.१११ः

भर्ग-शब्दादपत्ये विशेषे त्रैगर्ते गोत्रे फञ्प्रत्ययो भवति ।
भार्गायणो भवति त्रैगर्तः चेथ् ।
भार्गिः अन्यः । ।

---

1. <शिव-आदिभ्योऽण्># । । PS_४,१.११२ । ।

_______Sठा~ठ्JKव्_४,१.११२ः

गोत्रे इति निवृत्तं ।
अतः प्रभृति सामान्येन प्रत्ययाः विज्ञायन्ते ।
शिवादिभ्योऽपत्ये अण्प्रत्ययो भवति ।
यथायथं इञादीनां अपवादः ।
शैवः ।
प्रौष्ठः ।
तक्षन्शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुं ।
ण्यत्प्रत्यय्स्य तु बाधो निष्यते ।
ताक्ष्णः, ताक्षण्यः ।
गङ्गा-शब्दः पठ्यते तिकादिफिञा शुभ्रादिढका च समावेश-अर्थं ।
तेन त्रैरूप्यं भवति ।
गाङ्गः, गाङ्गायनिः , गाङ्गेयः ।
विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेश-अर्थं ।
वैपाशः, वैपाशायन्यः ।
शिव ।
प्रौष्ठ ।
प्रौष्ठिक ।
चण्ड ।
जम्भ ।
मुनि ।
सन्धि ।
भूरि ।
कुठार ।
अनभिम्लान ।
ककुत्स्थ ।
कहोड ।

लेख ।
रोध ।
खञ्जन ।
कोहड ।
पिष्ट ।
हेहय ।
खञ्जार ।
खञ्जाल ।
सुरोहिका ।
पर्ण ।
कहूष ।
परिल ।
वतण्ड ।
तृण ।
कर्ण ।
क्षीरह्रद ।
जलह्रद ।
परिषिक ।
जटिलिक ।
गोफिलिक ।
बधिरिका ।
मञ्जीरक ।
वृष्णिक ।
रेख ।
आलेखन ।
विश्रवण ।
रवण ।
वर्तनाक्ष ।
पिटक ।
पिटाक ।
तृक्षाक ।
नभाक ।
ऊर्णनाभ ।
जरत्कारु ।
उत्क्षिपा ।
रोहितिक ।
आर्यश्वेत ।
सुपिष्ट ।
खर्जूरकर्ण ।
मसूरकर्ण ।
तूणकर्ण ।
मयूरकर्ण ।
खडरक ।
तक्षन् ।
ऋष्टिषेण ।
गङ्गा ।
विपाश ।
यस्क ।
लह्य ।

द्रुघ ।
अयःस्थूण ।
भलन्दन ।
विरूपाक्ष ।
भूमि ।
इला ।
सपत्नी ।
द्व्यचो नद्याः ।
त्रिवेणी त्रिवणं च ।।

---

[#३४९]

1. <अवृद्धाभ्यो नदी-मानुषीभ्यस्तन्नामिकाभ्यः># ।। PS_४,१.११३ ।।

_______Sठाञ्ठJKव्_४,१.११३ः

वृद्धिर्यस्य अचां आदिस्तद्वृद्धं (*१,१.७३) ।
अवृद्धाभ्यः इति शब्द-धर्मः, नदी-मानुषीभ्यः इति अर्थधर्मः, तेन अभेदात्प्रकृतयो निर्दिश्यन्ते ।
तन्नामिकाभ्यः इति सर्वनाम्ना प्रत्यय-प्रकृतेः परामर्शः ।
अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि, तेभ्योऽपत्ये अण्प्रत्ययो भवति ।
ढकोऽपवादः ।
यमुनाया अपत्यं यामुनः ।
इरावत्याः अपत्यं ऐरावतः ।
वैतस्तः ।
नार्मदः ।
मानुषीभ्यः खल्वपि - शिक्षितायाः अपत्यं शैक्षितः ।
चिन्तितायाः अपत्य चैन्तितः ।
अवृद्धाभ्यः इति किं ? चन्द्रभागायाः अपत्यं चान्द्रभागेयः ।
वासवदत्तेयः ।
नदीमानुषीभ्यः इति किं ? सौपर्णेयः ।
वैनतेयः ।
तन्नामिकाभ्यः इति किं ? शोभनायाः, शौभनेयः ।।

---

1. <ऋष्य्-अन्धक-वृष्णि-कुरुभ्यश्च># ।। PS_४,१.११४ ।।

_______Sठाञ्ठJKव्_४,१.११४ः

ऋषयः प्रसिद्धा वसिष्ठादयः ।

अन्धकाः वृष्णयः कुरवः इति वंशाख्याः ।
ऋष्यादि-कुर्वन्तेभ्यः प्रातिपदिकेभ्योऽपत्ये अण्प्रत्ययो भवति ।
इञो+आवादः ।
अत्र्यादिभ्यस्तु परत्वाड्ढगादिभिरेव भवितव्यं ।
ऋषिभ्यस्तावत्- वासिष्ठः ।
वैश्वामित्रः ।
अन्धकेभ्यः - श्वाफल्कः ।
रान्धसः ।
वृष्णिभ्यः - वासुदेवः ।
आनिरुद्धः ।
कुरुभ्यः - नाकुलः ।
साहदेवः ।
कथं पुनर्नित्यानां शब्दानामन्धकादिवंशसमाश्रयेण अन्वाख्यानं युज्यते ? केचिदाहुः कथं अपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेण+एव नकुलसहदेवादयः शब्दाः सुबहवः सङ्कलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धा इति ।
अथवान्धकवृष्णिकुरुवंशा अपि नित्या एव, तेषु ये शब्दाः प्रयुज्यन्ते नकुलसहदेवादयः, तत्र+इदं प्रत्ययविधानं इत्यदोषः । ।

---

1. <मातुरुत्सङ्ख्या-सं-भद्र-पूर्वायाः># । । PS_४,१.११५ । ।

_______Sठाऽ्ठJKव्_४,१.११५ः

मतृ-शब्दात्सङ्ख्या-पूर्वात्सं-पूर्वात्भद्र-पूर्वाच्च अपत्ये अण्प्रत्ययो भवति, उकारश्च अन्तादेशः ।
द्वयोर्मात्रोरपत्यं द्वैमातुरः ।
षाण्मातुरः ।
सांमातुरः ।
भाद्रमातुरः ।
उकार-अदेश-अर्थं वचनं, प्रत्ययः पुनरुत्सर्गेण+एव सिद्धः ।
स्त्रीलिङ्ग-निर्देशोऽर्थ-अपेक्षः, तेन धान्यमातुर्ग्रहणं न भवति ।
सङ्ख्या-सं-भद्र-पूर्वायाः इति किं ? स्ॐआत्रः । ।

---

1. <कन्यायाः कनीन च># । । PS_४,१.११६ । ।

_______Sठाऽ्ठJKव्_४,१.११६ः

कन्या-शब्दादपत्येऽण्प्रत्ययो भवति ।
ढकोऽपवादः ।
तत्सन्नियोगेन कनीन-शब्द आदेशो भवति ।
कन्यायाः अपत्यं कानीनः कर्णः ।
कानीनो व्यासः । ।

---

[#३५०]

1. <विकर्ण-शुङ्ग-छङ्गलाद्वत्स-भरद्वाज-अत्रिषु># । । PS_४,१.११७ । ।

______Sठा~ठ्JKव्_४,१.११७ः

विकर्ण्-अशुङ्ग-छङ्गल-शब्देभ्यः यथासङ्ख्यं वत्सभरद्वाजात्रिषु अपत्य-विशेषेषु अण्प्रत्ययो भवति ।
वैकर्णो भवति वात्स्यश्चेथ् ।
वैकर्णिः अन्यः ।
शौङ्गो भवति भारद्वाजश्चेथ् ।
शौङ्गिः अन्यः ।
छागलो भवति आत्रेयश्चेथ् ।
छागलिः अन्यः ।
शुङ्गा-शब्दं स्त्रीलिङ्ग-मन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति शौङ्गेयः इति ।
द्वयं अपि च+एतत्प्रमाणम्, उभयथा सूत्र-प्रणयनात् । ।

---

1. <पीलाया वा># । । PS_४,१.११८ । ।

______Sठा~ठ्JKव्_४,१.११८ः

तन्नामिकाणो बाधके द्व्यच इति ढकि प्राप्ते अण्प्रत्ययः पक्षे विधीयते ।
पीलायाः अपत्ये वा अण्प्रत्ययो भवति ।
पीलायाः अपत्यं पैलः, पैलेयः । ।

---

1. <ठक्च मण्डूकात्># । । PS_४,१.११९ । ।

______Sठा~ठ्JKव्_४,१.११९ः

मण्डूक-शब्दातपत्ये ढक्प्रत्ययो भवति ।
चकारातण्च वा ।
तेन त्रैरूप्यं भवति ।
माण्डूकेयः, माण्डूकः, माण्डूकिः । ।

---

1. <स्त्रीभ्यो ढक्># । । PS_४,१.१२० । ।

______Sठाञ्ठJKव्_४,१.१२०ः

स्त्री-ग्रहणेन टाबादि-प्रत्ययान्ताः शब्दा गृह्यन्ते ।
स्त्रीभ्योऽपत्ये ढक्प्रत्ययो भवति ।
सौपर्णेयः ।
वैनतेयः ।
स्त्रीप्रत्यय-विज्ञापनादसत्यर्थ-ग्रहणे इह न भवति, इडबिडोऽपत्यं ऐडविडः, दरदोऽपत्यं दारदः इति ।
वडवाया वृषे वाच्ये ।
वाडवेयो वृषः स्मृतः ।
अपत्ये प्राप्तः ततोऽपकृष्य विधीयते ।
तेन अपत्ये वाडवः इति ।
अण्क्रुञ्चाकोकिलात्स्मृतः ।
क्रुञ्चाया अपत्यं क्रौञ्चः ।
कौकिलः । ।

---

1. <द्व्यचः># । । PS_४,१.१२१ । ।

______Sठाञ्ठJKव्_४,१.१२१ः
स्त्रीभ्यः इत्येव ।
द्व्यचः स्त्री-प्रत्ययान्तादपत्ये ढक्प्रत्ययो भवति ।
तन्नामिकाणोऽपवादः ।
दत्ताया अपत्यं दात्तेयः ।
गौपेयः ।
द्व्यचः इति किं ? यामुनः । ।

---

1. <इतश्-च-अनिञः># । । PS_४,१.१२२ । ।

______Sठाञ्ठJKव्_४,१.१२२ः

स्त्री-ग्रहणं निवृत्तं ।

चकारो द्व्यचः इत्यस्य अनुकर्षण-अर्थः ।
इकारान्तात्प्रातिपदिकादनिञ्-अन्तादपत्ये ढक्प्रत्ययो भवति ।
आत्रेयः ।
नैधेयः ।
इतः इति किं ? दाक्षिः ।
प्लाक्षिः ।
अनिञः इति किं ? दाक्षायणः ।
प्लाक्षायणः ।
द्व्यचः इत्येव, मरीचेरप्त्यं मारीचः । ।

---

[#३५१]

1. <शुभ्र-आदिभ्यश्च># । । PS_४,१.१२३ । ।

______Sठा~ठ्JKव्_४,१.१२३:

शुभ्र इत्येवं आदिभ्यः प्रातिपदिकेभ्यः ढक्प्रत्ययो भवति ।
यथायोगं इञादीनां अपवादः ।
शौभ्रेयः ।
वैष्टपुरेयः ।
चकारोऽनुक्तसमुच्चय-अर्थः आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः, पाण्डवेयः इत्येवं आदि सिद्धं भवति ।
शुभ्र ।
विष्टपुर ।
ब्रह्मकृत ।
शतद्वार ।
शतावर ।
शतावर ।
शलाका ।
शालाचल ।
शलाकाभ्रू ।
लेखाभ्रू ।
विमातृ ।
विधवा ।
किंकसा ।
रोहिणी ।
रुक्मिणी ।
दिशा ।
शालूक ।
अजबस्ति ।
शकन्धि ।
लक्ष्मणश्यामयोर्वासिष्ठे ।
गोधा ।
कृकलास ।
अणीव ।

प्रवाहण ।
भरत ।
भारम ।
मुकण्डु ।
मघष्टु ।
मकष्टु ।
कर्पूर ।
इतर ।
अन्यतर ।
आलीढ सुदत्त ।
सुचक्षस् ।
सुनामन् ।
कद्रु ।
तुद ।
अकाशाप ।
कुमारीका ।
किशोरिका ।
कुवेणिका ।
जिह्माशिन् ।
परिधि ।
वायुदत्त ।
ककल ।
खट्वा ।
अम्बिका ।
अशोका ।
शुद्धपिङ्गला ।
खडोन्मत्ता ।
अनुदृष्टि ।
जरतिन् ।
बालवर्दिन् ।
विग्रज ।
वीज ।
श्वन् ।
अश्मन् ।
अश्व ।
अजिर । ।

---

1. <विकर्ण-कुषीतकात्काष्यपे># । । PS_४,१.१२४ । ।

______Sठा~ठ्JKव्_४,१.१२४ः

विकर्ण-शब्दात्कुषीतक-शब्दाच्च काष्यपेऽपत्य-विशेषे ढक्प्रत्ययो भवति ।
वैकर्णेयः ।
कौषीतकेयः ।

काश्यपे इति किं ? वैकर्णिः ।
कौषीतकिः । ।

---

1. <भ्रुवो वुक्च># । । PS_४,१.१२५ । ।

_______SठाKठJKव्_४,१.१२५ः

भ्रूशब्दादप्त्ये ढक्प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः ।
भ्रौवेयः । ।

---

1. <कल्याण्यादीनां इनङ्># । । PS_४,१.१२६ । ।

_______SठाKठJKव्_४,१.१२६ः

कल्याणी इत्येवं आदीनां शब्दानां अपत्ये ढक्प्रत्ययो भवति, तत्संनियोगेन च इनङ्-आदेशः ।
स्त्रीप्रत्यय-अन्तानां आदेश-अर्थं ग्रहणं, प्रत्ययस्य सिद्धत्वाद् ।
अन्येषां उभयार्थं ।
काल्याणिनेयः ।
सौभागिनेयः ।
दौर्भागिनेयः ।
हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (*७,३.१९) इत्युभयपदवृद्धिः ।
कल्याणी ।
सुभगा ।
दुर्भगा ।
बन्धकी ।
अनुदृष्टि ।
अनुसृष्टि ।
जरती ।
बलीवर्दी ।
ज्येष्ठा ।
कन्ष्ठा ।
मध्यमा ।
परस्त्री । ।

---

1. <कुलटाया># । । PS_४,१.१२७ । ।

______Sठाञ्ठJKव्_४,१.१२७ः

कुलान्यटति इति कुलता ।
पररूपं निपातनाथ् ।
कुलटायाः अपत्ये ढक्प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति ।
आदेश-अर्थं वचनं, प्रत्ययश्च पूर्वेण+एव सिद्धः ।
कौलटिनेयः, कौलटेयः ।
या तु कुलान्यटन्ती शीलं भिनत्ति, ततः क्षुद्राभ्यो वा (*४,१.१३१) इति परत्वाड्ढ्रका भवितव्यं ।
कौलटेरः । ।

---

[#३५२]

1. <चटकाया ऐरक्># । । PS_४,१.१२८ । ।

______Sठाञ्ठJKव्_४,१.१२८ः

चटकायाः अपत्ये ऐरक्प्रत्ययो भवति ।

[#३५१]
चाटकैरः ।
चटकाच्च+इति वक्तव्यं ।
चटकस्य अपत्यं चाटकैरः ।
स्त्रियां अपत्ये लुग्वक्तव्यः ।
चटकाया अपत्यं स्त्री चटका । ।

---

[#३५२]

1. <गोधाया ढ्रक्># । । PS_४,१.१२९ । ।

______Sठाञ्ठJKव्_४,१.१२९ः

गोधायाः अपत्ये ड्रक्प्रत्ययो भवति ।
गौधेरः ।
शुभ्रादिष्वयं पठ्यते, तेन गौधेयः अपि भवति । ।

---

1. <आरगुदीचाम्># । । PS_४,१.१३० । ।

_______Sठा~ठ्JKव्_४,१.१३०ः

गोधायाः अपत्ये उदीचां आचार्याणां मतेन आरक्प्रत्ययो भवति ।
गौधारः ।
आचार्य-ग्रहणं पूज-अर्थं, वचनसाम्र्थ्यादेव पूर्वेण समावेशो भवति ।
आरग्-वचनं अनर्थकं, रका सिद्धत्वात्? ज्ञापकं त्वयं अन्येभ्योऽपि भवति इति ।
जाडारः ।
पाण्डारः । ।

---

1. <क्षुद्राभ्यो वा># । । PS_४,१.१३१ । ।

_______Sठा~ठ्JKव्_४,१.१३१ः

ढ्रकनुवर्तते, न आरक् ।
क्षुद्राः अङ्गहीनाः शीलहीनाश्च ।
अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिष्यन्ते ।
क्षुद्राभ्यो वा अपत्ये ढ्रक्प्रत्ययो भवति ।
ढकोऽ पवादः ।
काणेरः, काणेयः ।
दासेरः, दासेयः । ।

---

1. <पितृष्वसुश्छण्># । । PS_४,१.१३२ । ।

_______Sठा~ठ्JKव्_४,१.१३२ः

पितृष्वसृ-शब्दातपत्ये छण्प्रत्ययो भवति ।
पैतृष्वस्त्रीयः । ।

---

1. <ठकि लोपः># । । PS_४,१.१३३ । ।

______Sठा~ठ्JKव्_४,१.१३३ः

पितृष्Vअसुः अपत्य-प्रत्यये ढकि परतो लोपो भवति ।
पैतृष्वसेयः ।
कथं पुनरिह ढक्प्रत्ययः ? एतदेव ज्ञापकं ढको भावस्य । ।

---

[#३५३]

1. <मातृ-ष्वसुश्च># । । PS_४,१.१३४ । ।

______Sठा~ठ्JKव्_४,१.१३४ः

पितृ-ष्वसुः इत्येतदपेक्षते ।
पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति, छण्-प्रत्ययो ढकि लोपश्च ।
मातृष्वस्त्रीयः ।
मातृष्वसेयः । ।

---

1. <चतुष्पाद्भ्यो ढञ्># । । PS_४,१.१३५ । ।

______Sठा~ठ्JKव्_४,१.१३५ः

चतुष्पादभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्-प्रत्ययो भवति ।
अणादीनां अपवादः ।
कामण्डलेयः ।
शौन्तिबाहेयः ।
जाम्बेयः । ।

---

1. <गृष्ट्य्-आदिभ्यश्च># । । PS_४,१.१३६ । ।

_______Sठा~ठ्JKव्_४,१.१३६ः

गृष्ट्यादिभ्यः शब्देभ्योऽपत्ये ढञ्प्रत्ययो भवति ।
अणादीनां अपवादः ।
गार्ष्टेयः ।
हार्ष्टेयः ।
गृष्टिशब्दो यश्चतुष्पादवचनः, ततः पूर्वेण+एव सिद्धः ।
अच्तुष्पाद्-अर्थं वचनं ।
गृष्टि ।
हृष्टि ।
हलि ।
बलि ।
विश्रि ।
कुद्रि ।
अजबस्ति ।
मित्रयु । ।

---

1. <राज-श्वशुराद्यत्># । । PS_४,१.१३७ । ।

_______Sठा~ठ्JKव्_४,१.१३७ः

राजन्-श्वशुर-शब्दाभ्यां अपत्ये यत्प्रत्ययो भवति ।
यथाक्रमं अणिञोरपवादः ।
राजन्यः ।
श्वशुर्यः ।
राज्ञोऽपत्ये जाति-ग्रहणं ।
राजन्यो भवति क्षत्रियश्चेथ् ।
राजनोऽन्यः । ।

---

1. <क्षत्राद्घः># । । PS_४,१.१३८ । ।

_______Sठा~ठ्JKव्_४,१.१३८ः

क्षत्र-शब्दादपत्ये घः प्रत्ययो भवति ।
क्षत्रियः ।

अयं अपि जाति-शब्द एव।
क्षात्रिरन्यः॥

---

1. <कुलात्खः># ॥ PS_४,१.१३९ ॥

_______Sठास्ठ्JKव्_४,१.१३९ः

उत्तर-सूत्रे पूर्व-प्रतिषेधादिह तदन्तः केवलश्च दृश्यते।
कुल-शब्द-अन्तात्प्रातिपदिकात्केवलाच्च अपत्ये खः प्रत्ययो भवति।
आढ्यकुलीनः।
श्रोत्रियकुलीनः।
कुलीनः॥

---

1. <अपूर्वपदादन्यत्रस्यां यङ्-ढकञौ># ॥ PS_४,१.१४० ॥

_______Sठास्ठ्JKव्_४,१.१४०ः

कुलादित्येव।
अविद्यमानं पूर्वपदं यस्य तदपूर्वपदं।
समाससम्बन्धि-पूर्वपदस्य अभावेन कुल-शब्दो विशेष्यते।
अपूर्वपदात्कुल-शब्दातन्यतरस्यां यत्ढकञित्येतौ प्रत्ययौ भवतः।
ताभ्यां मुक्ते क्योऽपि भवति।
कुल्यः, कौलेयकः, कुलीनः।
पद-ग्रहणं किं? बहुच्पूर्वादपि यथा स्याथ्।
बहुकुल्यः, बाहुकुलेयकः, बहुकुलीनः॥

---

[#३५४]

1. <महाकुलादञ्-खञौ># ॥ PS_४,१.१४१ ॥

_______Sठास्ठ्JKव्_४,१.१४१ः

अन्यतरस्यां इति अनुवर्तते ।
महाकुल-शब्दातञ्-खञौ प्रत्ययौ भवतः ।
पक्षे खः ।
माहाकुलः, माहाकुलीनः, माहाकुलीनः । ।

---

1. <दुष्कुलाड्ढक्># । । PS_४,१.१४२ । ।

_______Sठा~ठ्JKव्_४,१.१४२ः

दुष्कुल-शब्दातपत्ये ढक्प्रत्ययो भवति ।
अन्यत्रस्यां इत्यनुवृत्तेः खश्च ।
दौष्कुलेयः, दुष्क्लीनः । ।

---

1. <स्वसुश्छः># । । PS_४,१.१४३ । ।

_______Sठा~ठ्JKव्_४,१.१४३ः

स्वसृ-शब्दादपत्ये छनः प्रत्ययो भवति ।
अणोऽपवादः ।
स्वसुरपत्यं स्वस्रीयः । ।

---

1. <भ्रातुर्व्यच्च># । । PS_४,१.१४४ । ।

_______Sठा~ठ्JKव्_४,१.१४४ः

भ्रातृ-शब्दादपत्ये व्यत्प्रत्ययो भवति ।
चकाराच्छश्च ।
अणोऽपवादः ।
भ्रातृव्यः, भ्रात्रीयः ।
तकारः स्वरार्थः । ।

---

1. <व्यन्सपत्ने># । । PS_४,१.१४५ । ।

_______Sठा॑ऌJKव्_४,१.१४५ः

सपत्न-शब्दः शत्रुपर्यायः शब्द-अन्तर-व्युत्पन्नं एव ।
सप्त्नी-शब्दादपरेऽकारं इव अर्थे निपातयन्ति ।
सप्त्नीव सपत्नः ।
भ्रातृ-शब्दाद्व्यन्प्रत्ययो भवति समुदायेन च+इदं इत्रः सपत्न उच्यते ।
अपत्य-अर्थोऽत्र न अस्त्येव ।
पाप्मना भ्रातृव्येण ।
भ्रातृव्यः कण्टकः । ।

---

1. <रेवत्य्-आदिभ्यष्ठक्># । । PS_४,१.१४६ । ।

_______Sठा॑ऌJKव्_४,१.१४६ः

रेवती इत्येवं आदिभ्योऽपत्ये ठक्प्रत्ययो भवति ।
यथा योगं ढगादीनां अपवादः ।
रैवतिकः ।
आश्वपालिकः ।
रेवती ।
अश्वपाली ।
मणीपाली ।
द्वारपाली ।
वृकवञ्चिन् ।
वृकग्राह ।
कर्णग्राह ।
दण्डग्राह ।
कुक्कुटाक्ष । ।

---

1. <गोत्र-स्त्रियाः कुत्सने ण च># । । PS_४,१.१४७ । ।

_______Sठा॑ऌJKव्_४,१.१४७ः

अपत्यं पौत्रप्रभृति गोत्रं गृह्यते ।
गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति, चकाराट्ठक्च, कुत्सने गम्यमाने ।
पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा ।
गार्ग्याः अपत्यं गार्गः जाल्मः, गार्गिकः ।
ग्लुचुकायन्याः अपत्यं ग्लौचुकायनः, ग्लौचुकायनिकः ।
गोत्राद्यूनि इति यूनि प्रत्ययो भवति ।
गोत्रं इति किं ? कारिकेयो जाल्मः ।
स्त्रियाः इति किं ? औपगविर्जाल्मः ।
कुत्सने इति किं ? गार्गेयो माणवकः । ।

---

[#३५५]

1. <वृद्धाट्ठक्सौवीरेषु बहुलम्># । । PS_४,१.१४८ । ।

______Sठाञ्ठJKव्_४,१.१४८ः

कुत्सने इत्येव ।
सौवीरेषु इति प्रकृति-विशेषणं ।
वृद्धात्सौवीरगोत्रादपत्ये बहुलं ठक्प्रत्ययो भवति कुत्सने गम्यमने ।
भागवित्तेः भागवित्तिकः ।
तार्णबिन्दवस्य तार्णबिन्दविकः ।
पक्षे यथाप्राप्तं फक्, भागवित्तायनः ।
पक्षे तार्णबिन्दविः ।
अकशापः शुभ्रादिः, आकशापेयः ।
तस्य अपत्यं आकशापेयिकः ।
पक्षे आकशापेयिः ।
भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः ।
तृतीयस्त्वाकशापेयो गोत्राट्ठग्बहुलं ततः । ।
वृद्ध-ग्रहणं स्त्री-निवृत्त्य्-अर्थं ।
सौवीरेषु इति किं ? औपगविर्जाल्मः ।
कुत्सने इत्येव, भागवित्तायनो माणवकः ।
बहुल-ग्रहणं उपाधिवैचित्र्य-अर्थं ।
गोत्रस्त्रियाः इत्यारभ्य चत्वारो योगास्तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीरगोत्र एव, मध्यमौ द्वयोरपि ।
तदेतद्बहुल-ग्रहणाल्लभ्यते । ।

---

1. <फेश्छ च># । । PS_४,१.१४९ । ।

______Sठाञ्ठ्JKव्_४,१.१४९ः

कुत्सने इत्येव, सौवीरेषु इति च ।
फेः इति फिञो ग्रहणं न फिनः, वृद्ध-अधिकाराथ् ।
फिञन्तात्प्रातिपदिकात्सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट्ठक्, कुत्सने गम्यमाने ।
यमुन्दस्य अपत्यं, तिकादिभ्यः फिञ्(*४,१.१५४) ।
तस्यपत्यं यामुन्दायनीयः, यामुन्दायनिकः ।
कुत्सने इत्येव, यामुन्दायनिः ।
फिञन्तादौत्सर्गिकस्य अण आगतस्य ण्य-क्षत्रिय-अर्ष-ञितो यूनि लुगण्-इञोः (*२,४.५८) इति लुक् ।
सौवीरेसु इत्येव, तैकायनिः ।
यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित्समरेत् । ।

---

1. <फाण्डाहृति-मिमताभ्यां ण-फिञौ># । । PS_४,१.१५० । ।

______Sठाञ्ठ्JKव्_४,१.१५०ः

सौवीरेषु इत्येव ।
कुत्सने इति निवृत्तं ।
फाण्टाहृतिमिमतशब्दाभ्यां सौवीर-विषयाभ्यां अपत्ये ण-फिञौ प्रत्ययु भवतः ।
फकोऽपवादः ।
अल्पाच्तरस्य अपूर्वनिपातो लक्षण-व्यभिचार-चिह्नं, तेन यथासङ्ख्यं इह न भवति इति ।
फाण्टाहृतः, फाण्टाहृतायनिः ।
मैमतः, मैमतायनिः ।
सौवीरेषु इत्येव, फाण्टाहृतायनः ।
मैमतायनः ।
फाण्टाहृतेः यञ्-इञोश्च (*४,१.१०१) इति फक् ।
मिमत-शब्दोऽपि नडादिषु पठ्यते । ।

---

1. <कुर्वादिभ्यो ण्यः># । । PS_४,१.१५१ । ।

______Sठाञ्ठ्JKव्_४,१.१५१ः

सौवीरेषु बहुलं इति निवृत्तं ।
कुरु इत्येवं आदिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति ।
कौरव्यः ।

गार्ग्यः ।
कुरुनादिभ्यो ण्यः (*४,१.१७२) ।
इति कुरु-शब्दादपरो ण्यप्रत्ययो भविष्यति ।
स तु क्षत्रियात्तद्राजसञ्ज्ञकः ।
तस्य बहुषु लुका भवितव्यम्, अयं तु श्रूयत एव ।
कौरव्याः ।
कौरव्यशब्दस्य क्षत्रिय-वचनस्य तिकादिषु पाठात्फिञपि भवति, फौरव्यायणिः ।
रथकार-शब्दोऽत्र पठ्यते, स जाति-वचनः ।
त्रैवर्णिकेभ्यः किंचिन्न्यूना रथकारजातिः ।
कारिणस्तु रथकार-शब्दादुत्तरसूत्रेण+एव ण्यः सिद्धः ।
केशिनी-शब्दः पठ्यते, तस्य कैशिन्यः ।
पुंवद्भावो न भवति, स्त्रीप्रत्यय-निर्देशसामर्थ्याथ् ।

[#३५६]

वेनाच्छन्दसि इति पठ्यते ।
कथं भाषायां वैन्यो राजा इति ? छन्दस एव अयं प्रमादात्कविभिः प्रयुक्तः ।
वामरथ-शब्दः पठ्यते, तस्य कण्वादिवत्कार्यं इष्यते ।
स्वरं वर्जयित्वा लुग्-आदिकं अतिदिश्यते ।
बहुसु वामरथाः ।
स्त्री वामरथी ।
वामरथ्यायनी ।
युवा वामरथ्यायनः ।
वामरथ्यस्य छात्राः वामरथाः ।
वामरथानि सङ्घाङ्कलक्षणानि ।
स्वरस्तु ण्यप्रत्ययस्य+एव भवति, न अतिदेशिकमाद्युदात्तत्वं ।
कुरु ।
गर्ग ।
मङ्गुष ।
अजमारक ।
रथकार ।
वावदूक ।
सम्राजः क्षत्रिये ।
कवि ।
मति ।
वाक् ।
पितृमथ् ।
इन्द्रजालि ।
दामोष्णीषि ।
गणकारि ।
कैशोरि ।
कापिञ्जलादि ।
कुट ।
शलाका ।
मुर ।
एरक ।
अभ्र ।
दर्भ ।
केशिनी ।

वेनाच्छन्दसि ।
शूर्पणाय ।
श्यावनाय ।
श्यावरथ ।
श्यावपुत्र ।
सत्यङ्कार ।
बडभीकार ।
शङ्कु ।
शाक ।
पथिकारिन् ।
मूढ ।
शकन्धु ।
कर्तृ ।
हर्तृ ।
शाकिन् ।
इनपिण्डी ।
वामरथस्य कन्वादिवत्स्वरवर्जं । ।

---

1. <सेनान्त-लक्षण-कारिभ्यश्च># । । PS_४,१.१५२ । ।

______Sठा-ठ्JKव्_४,१.१५२ः

सेनान्तात्प्रातिपदिकात्लक्षण-शब्दात्कारि-वचनेभ्यश्च अपत्ये ण्यः प्रत्ययो भवति ।
कारि-शब्दः कारूणां तन्तुवायादीनां वाचकः ।
कारिषेण्यः ।
हारिषेण्यः ।
लाक्षण्यः ।
कारिभ्यः - तान्तुवाय्यः ।
क्ॐभकार्यः ।
नापित्यः । ।

---

1. <उदीचां इञ्># । । PS_४,१.१५३ । ।

______Sठा-ठ्JKव्_४,१.१५३ः

ण्ये प्राप्ते इञपरो विधीयते ।
सेनान्त-लक्षण-कारिभ्योऽपत्ये इञ्प्रत्ययो भवति उदीचां मतेन ।
कारिषेणिः ।
हारिषेणिः ।

लाक्षणिः ।
तान्तुवायिः ।
क्ॐभकारिः ।
वचनसामर्थ्यादेव प्रत्यय-समावेशे लब्धे आचार्य-ग्रहणं वैचित्र्य्-आर्थं ।
तक्षन्-शब्दः शिवादिः, तेन अणा अयं इञ्बाध्यते, न तु ण्यः ।
तक्ष्णोऽपत्यं ताक्ष्णः, ताक्षण्यः । ।

---

1. <तिकादिभ्यः फिञ्># । । PS_४,१.१५४ । ।

______Sठाऱ्ठ्JKव्_४,१.१५४ः

तिक इत्येवं आदिभ्यः शब्देभ्योऽपत्ये फिञ्प्रत्ययो भवति ।
तैकायनिः ।
कैतवायनिः ।
वृष-शब्दोऽत्र पठ्यते, तस्य प्रत्यय-सन्नियोगेन यकारन्तत्वं इष्यते ।
वार्ष्यायणिः ।
कौरव्य-शब्दः पठ्यते, स च क्षत्रय-वचनः, औरस-शब्देन क्षित्रय-प्रत्ययान्तेन साहचर्याथ् ।
यस्तु कुर्व्-आदिह्यो ण्यः (*४,१.१५१) , तदन्तादिञैव भवितव्यं ।
तथा च ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (*२,४.५८) इत्यत्र उदाहृतं कौरव्यः पित, कौरव्यः पुत्रः इति ।
तिक ।
कितव ।
सञ्ज्ञा ।
बाल ।
शिखा ।
उरस् ।
शाट्य ।
सैन्धव ।
यमुन्द ।
रूप्य ।
ग्राम्य ।
नील ।
अमित्र ।
गौकक्ष्य ।
कुरु ।
देवरथ ।
तैतिल ।
औरस ।
कुअरव्य ।
भैरिकि ।
भौलिकि ।
चौपयत ।
चैतयत ।
चैटयत ।
शैकयत ।

क्षैतयत ।
ध्वाजवत ।
चन्द्रमस् ।
षुभ ।
गङ्गा ।
वरेण्य ।
सुयामन् ।
आरद ।
वह्यका ।
खल्या ।
वृष ।
लोमका ।
उदन्य ।
यज्ञ । ।

---

[#३५७]

1. <कौशल्य-कार्मार्याभ्यां च># । । PS_४,१.१५५ । ।

______Sठाऽठ्JKव्_४,१.१५५ः

कौशल्य-कार्मार्य-शब्दाभ्यां अपत्ये फिञ्प्रत्ययो भवति ।
इञोऽपवादः ।
कौशल्यायनिः ।
कार्मार्यायणिः ।
परमप्रकृतेरेव अयं प्रतययः इष्यते, कौशलस्य अपत्यं, कर्मारस्य पत्यं इति ।
प्रत्ययसन्नियोगेन तु प्रकृति-रूपं निपात्यते ।
यथा च स्मृत्यन्तरम्, दगुकोसलकर्मारच्छागवृषाणां युट्वादिष्टस्य इति ।
दागव्यायनिः ।
कौसल्यायनिः ।
कार्मार्यायणिः ।
छाग्यायनिः ।
वार्ष्यायणिः । ।

---

1. <अणो द्व्यचः># । । PS_४,१.१५६ । ।

______Sठाऽठ्JKव्_४,१.१५६ः

अणन्ताद्व्यचः प्रातिपदिकादपत्ये फिञ्प्रत्ययो भवति ।
इञोऽपवादः ।
कार्त्रायणिः ।
हार्त्रायणिः ।
अणः इति किं ? दाक्षायणः ।
द्व्यचः इति किं ? औपगविः ।
त्यदादीनां वा फिञ्वक्तवयः ।
त्यादायनिः, त्यादः ।
यादायनिः, यादः ।
तादायनिः, तादः ।
अणत्र प्राप्तः । ।

---

1. <उदीचां वृद्धादगोत्रात्># । । PS_४,१.१५७ । ।

_______Sठाऽ्ठJKव्_४,१.१५७ः

वृद्धं यच्छब्द-रूपं अगोत्रं, तस्मादपत्ये फिञ्प्रत्ययो भवति उदीचां आचार्याणां मतेन ।
आम्रगुप्तायनिः ।
ग्रामरक्षायणिः ।
कारिशब्दादपि वृद्धादगोत्रात्परत्वादनेन+एव भवितव्यं ।
नापितायनिः ।
उदीचां इति किं ? आम्रगुप्तिः ।
वृद्धादिति किं ? याज्ञदत्तिः ।
अगोत्रादिति किं ? औपगविः । ।

---

1. <वाकिन-अदीनां कुक्च># । । PS_४,१.१५८ । ।

_______Sठाऽ्ठJKव्_४,१.१५८ः

वाकिन इत्येवं आदिभ्यः शब्देभ्योऽपत्ये फिञ्प्रत्ययो भवति, तत्संनियोगेन च+एषां कुग्-आगमः ।
यदिह वृद्धं अगोत्रं शब्दरूपं तस्य आगम-अर्थं एव ग्रहणम्, अन्येषां उभय-अर्थं ।
वाकिनकायनिः ।
गारेधकायनिः ।
इञाद्यपवादो योगः ।
उदीचां इत्यधिकारात्पक्षे तेऽपि भवन्ति ।
वाकिनिः ।
गारेधिः ।
वाकिन ।

गारेध ।
कार्कट्य ।
काक ।
लङ्का ।
चर्मिवर्मिणोर्नलोपश्च । ।

---

1. <पुत्रान्तादन्यतरस्याम्># । । PS_४,१.१५९ । ।

______Sठा~ठ्JKव्_४,१.१५९ः

उदीचां वृद्धातिति वर्तते ।
पुत्रान्तं अगोत्रं इति पूर्वेण+एव प्रत्ययः सिद्धः, तस्मिन्ननेन कुग्-आगमोऽन्यतरस्यां विधीयते ।
पुत्रान्तात्प्रातिप्दिकात्यः फिञ्प्रत्ययः, तस्मिन्परभूतेऽन्यतरस्यां कुग्-आगमो भवति पुत्रान्तस्य ।
तेन त्रैरूप्यं सम्पद्यते ।
गार्गीपुत्रकायणिः, गार्गीपुत्रायणीः, गार्गीपुत्रिः ।
वात्सीपुत्रकाय्णिः, वात्सीपुत्रायणिः, वात्सीपुत्रिः । ।

---

[#३५८]

1. <प्राचां अवृद्धात्फिन्बहुलम्># । । PS_४,१.१६० । ।

______Sठा~ठ्JKव्_४,१.१६०ः

अवृद्धाच्छब्दरूपादपत्ये फिन्प्रत्ययो भवति बहुलं प्राचां मतेन ।
ग्लुचुकायनिः ।
अहिचुम्बकायनिः ।
प्राचां इति किं ? ग्लौचुकिः ।
अवृद्धातिति किं ? राजदन्तिः ।
उदीचां प्राचां अन्यतरस्यां बहुलं इति सर्व एते विकल्प-अर्थस्तेषां एकेन+एव सिध्यति ।
तत्र आचार्य-ग्रहणं पूज-अर्थं ।
बहुल-ग्रहणं वैचित्र्य-अर्थं ।
कव्चिन्न भवत्येव, दाक्षिः ।
प्लाक्षिः । ।

---

1. <मनोर्जातावञ्-अयतौ षुक्च># । । PS_४,१.१६१ । ।

_______Sठा~ठ्JKव्_४,१.१६१ः

मनु-शब्दादञ्यतित्येतौ प्रत्यौ भवतः, तत्सन्नियोगेन षुग्-आगमः, समुदायेन चेज्जातिर्गम्यते ।
मानुषः, मनुष्यः ।
जाति-शब्दावेतौ ।
अपत्य-अर्थोऽत्र न अस्त्येव ।
तथा च मानुषाः इति बहुषु न लुग्भवति ।
अपत्य-विवक्षायां तु अणैव भवितव्यं ।
मानवी प्रजा ।
अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः । ।

---

1. <अपत्येअं पौत्रप्रभृति गोत्रम्># । । PS_४,१.१६२ । ।

_______Sठा~ठ्JKव्_४,१.१६२ः

पौत्रप्रभृति यदपत्यं तद्गोत्र-सञ्ज्ञं भवति ।
सम्बन्धि-शब्दत्वादपत्य-शब्दस्य यदपत्यं तदपेक्षया पौत्र-प्रभृतेर्गोत्र-सञ्ज्ञा विधीयते ।
गर्गस्य अपत्यं पौत्र-प्रभृति गार्ग्यः ।
वात्सयः ।
अपत्यं इति व्यपदेशोऽयं पौत्र-प्रभृतेः ।
पौत्र-प्रभृति इति किं ? अन्यस्य मा भूथ् ।
कौञ्जिः ।
गार्गिः ।
गोत्र-प्रदेशाः - एको गोत्रे (*४,१.९३) इत्येवं आदयः । ।

---

1. <जीवति तु वंश्ये युवा># । । PS_४,१.१६३ । ।

_______Sठा~ठ्JKव्_४,१.१६३ः

अभिजनप्रबन्धो वंशः ।
तत्र भवो वंश्यः पित्रादिः ।
तस्मिन्जीवति सति पौत्रप्रभृत्य्-अपत्यं युव-सञ्ज्ञं भवति ।
पौत्रप्रभृति इति च न सामानाअधिकरण्येन अपत्यं विशेषयति, किं तर्हि, षष्ठ्या विपरिणम्यते पौत्र-प्रभृतेर्यदपत्यं इति ।
तेन चतुर्थादारभ्य युव ।
सञ्ज्ञा विधीयते ।

गार्ग्यायणः ।
वात्स्यायनः ।
तु-शब्दोऽवधारण-अर्थो युव+एव न गोत्रं इति । ।

---

1. <भ्रातरि च ज्यायसि># । । PS_४,१.१६४ । ।

_______Sठा~ठ्JKव्_४,१.१६४ः

भ्रतरि ज्ययसि जीवति कनीयान्भ्राता युव-सञ्ज्ञो भवति पौत्र-प्रभृतेरपत्यं ।
गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान्मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युव-सञ्ज्ञो भवति ।
अवंश्य-अर्थोऽयं आरम्भः ।
पूर्वजाः पित्रादयो वंश्या इत्युच्यते ।
भ्राता तु न वंश्यः ।
अकारणत्वाथ् ।
गार्ग्ये जीवति, गार्ग्यायणो अस्य कनीयान्भ्राता ।
वात्स्यायनः ।
दाक्षायणः ।
प्लाक्षायणः । ।

---

[#३५९]

1. <वा अन्यस्मिन्सपिण्डे स्थविरतरे जिवति># । । PS_४,१.१६५ । ।

_______Sठा~ठ्JKव्_४,१.१६५ः

सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते ।
येषां उभयत्र दशाहानि कुलस्यन्नं न भुज्यते इत्येवं आदिकायां क्रियायां अनधिकारः ।
भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसञ्ज्ञं वा भवति ।
प्रकृतं जीवति-ग्रहणं सपिण्डस्य विशेषणम्, इदं तु सञ्ज्ञिनः ।
तरब्-निर्देश उभयोत्कर्षार्थः ।
स्थानेन वयसा च+उत्कृष्टे यथा स्यात्पितृव्ये पितामहे भ्रातरि वयसाधिके जिवति ।
गर्गस्य अपत्यं गार्ग्यायणः गार्ग्यो वा ।
वात्स्ययनः वात्स्यो वा ।
दक्षायणः दाक्षिर्वा ।
स्थविरतरे इति किं ? स्थानवयोनयूने गार्ग्य एव भवति ।
जीवति इति किं ? मृते मृतो वा गार्ग्य एव भवति । ।

---

1. <वृद्धस्य च पूजायाम्># । । PS_४,१.१६६ । ।

______Sठा~ठ्JKव्_४,१.१६६ः

अपत्यं अन्तर्हितं वृद्धं इति शास्त्रान्तरे परिभाषणाद्गोत्रं वृद्धं इत्युच्यते ।
वृद्धस्य युवसञ्ज्ञा वा भवति पूजायां गम्यमानायां ।
सञ्ज्ञसामर्थ्याद्गोत्रं युवप्रत्ययेन पुनरुच्यते ।
वृद्धस्य इति षष्ठी-निर्देशो विचित्रा सूत्रस्य कृतिः इति ।
तत्र भवान्गार्ग्यायणः गार्ग्यो वा ।
तत्र भवान्वात्स्यायनः वात्स्यो वा ।
तत्र भवान्दाक्षायणः दाक्षिर्वा ।
पूजायां इति किं ? गार्ग्यः ।
वात्स्यः । ।

---

1. <यूनश्च कुत्सायाम्># । । PS_४,१.१६७ । ।

______Sठा~ठ्JKव्_४,१.१६७ः

कुत्सायां गम्यमनायां यूनो वा युवसञ्ज्ञा भवति ।
निवृत्तिप्रधानो विकल्पः ।
युवसञ्ज्ञायां प्रतिषिद्धायां पक्षे गोत्रसञ्ज्ञा+एव भवति, प्रतिपक्षाभावाथ् ।
गार्ग्यो जाल्मः ।
गार्ग्यायणो वा ।
वात्स्यो जाल्मः वात्स्यायनो वा ।
दाक्षिर्जाल्मः दाक्षायणो वा ।
कुत्सायां इति किं ? गार्ग्यायणः । ।

---

1. <जनपद-शब्दात्क्षत्रियादञ्># । । PS_४,१.१६८ । ।

______Sठा~ठ्JKव्_४,१.१६८ः

जनपदशब्दो यः क्षत्रिय-वाची, तस्मादपत्ये अञ्प्रत्ययो भवति ।
पाञ्चालः ऐक्ष्वाकः ।

वैदेहः।
जनपदशब्दातिति किं? द्रुह्योरपत्यं द्रौह्यवः।
पुरवः।
क्षत्रियातिति किं? ब्राह्मणस्य पञ्चालस्य अपत्यं पाञ्चालिः।
वैदेहिः।
क्षत्रियसमानशब्दाज्जनपदशब्दात्तस्य राजन्यप्त्यवथ्।
पञ्चालानां राजा पाञ्चालः।
वैदेहः।
मागधः॥

---

1. <साल्वेय-गान्धारिभ्यां च>#॥ PS_४,१.१६९॥

_______Sठाऽ्ठJKव्_४,१.१६९ः

साल्वेय-गान्धारि-शब्दाभ्यां अपत्ये अञ्प्रत्ययो भवति।
जनपदशब्दावेतौ क्षत्रियाभिधायिनौ ताभ्यां अञपवादे वृद्धादिति ञ्यङि प्राते पुनरञ्विधीयते।
साल्वेयः।
गान्धारः।
तस्य राजनि इत्येव, साल्वेयो राजा।
गान्धारो राजा॥

---

[#३६०]

1. <द्व्य्-अञ्-मगध-कलिङ्ग्-असूरमसादण्>#॥ PS_४,१.१७०॥

_______Sठाऽ्ठJKव्_४,१.१७०ः

जनपदशब्दात्क्षत्रियाभिधायिनो द्व्य्-अचः, मगध कलिङ्ग सूरमस इति एतेभ्यश्च अपत्ये अण्प्रत्ययो भवति।
अञोऽपवादः।
आङ्गः।
वाङ्गः।
अपुण्ड्रः सौह्मः।
मगधः।
कालिङ्गः।
सौरमसः।
तस्य राजनि इत्येव, आङ्गो राजा॥

---

1. <वृद्ध-इत्-कोसल-अजादाञ्ञ्यङ्># । । PS_४,१.१७१ । ।

______Sठाञ्ठ्JKव्_४,१.१७१ः

जनपदशब्द्दत्क्षत्रियातित्येव ।
वृद्धात्प्रातिपदिकातिकारान्तात्च, कोसल-अजाद-शब्दाभ्यां च अप्त्य ञ्यङ्प्रत्ययो भवति ।
अञोऽपवादः ।
वृद्धात्तावत्- आम्बष्ठ्यः ।
सौवीर्यः ।
इकारान्तात्- आवन्त्यः ।
कौन्त्यः ।
कौसल-अजादयोरवृद्धार्थं वचनं ।
कौसल्यः ।
आजाद्यः ।
तपरकरनं किं ? कुमारी नाम जनपदसमानशब्दः क्षत्रियः, तस्य अपत्यं क्ॐआरः ।
पाण्डोर्जनपदाब्दात्क्षत्रियाड्ड्यण्वक्तव्यः ।
पाण्ड्यः ।
अन्यस्मात्पाण्डव एव ।
तस्य राजनि इत्येव, आम्बष्ठ्यो राजा ।
आवन्त्यः ।
कौन्त्यः ।
कुअसल्यः ।
आजाद्यः । ।

---

1. <कुरु-नादिभ्यो ण्यः># । । PS_४,१.१७२ । ।

______Sठाञ्ठ्JKव्_४,१.१७२ः

जनपदशब्दात्क्षत्रियातित्येव ।
कुरुशब्दात्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति ।
अणञोरपवादः ।
कौरव्यः ।
नकारादिभ्यः - नैषध्यः ।
नैपथ्यः ।
तस्य राजनि इत्येव, कौरव्यो राजा । ।

---

1. <साल्वावयव-प्रत्यग्रथ-कलकूट-अश्मकादिञ्># । । PS_४,१.१७३ । ।

______Sठाऩ्ड्‌JKव्_४,१.१७३:

जनपदशब्दात्क्षत्रियातित्येव ।
सल्वा नाम अक्षत्रिया तन्नामिका, तस्या अपत्यं, द्व्यचः (*४,२.१२१) इति ढक्, साल्वेयः ।
अणपीष्यते, साल्वः ।
तस्य निवासः साल्वो जनपदः ।
तदव्यवा उदुम्बरादयः, तेभ्यः क्षत्रिय-वृत्तिभ्य इदं प्रत्यय-विधानं ।
साल्वावयवेभ्यः प्रत्यग्रथ-कलकूट-अश्मक-शब्देभ्यश्चापत्ये इञ्प्रत्ययो भवति ।
अञोऽपवादः ।
औदुम्बरिः ।
तैलखलिः ।
माद्रकारिः ।
यौगन्धरिः ।
भौलिङ्गिः ।
शारदण्डिः ।
प्रत्यग्रथिः ।
कालकूटिः ।
आश्मकिः ।
तस्य राजनि इत्येव, औदुम्बरी राजा ।
उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिताः । ।

---

[#३६१]

1. <ते तद्राजाः># । । PS_४,१.१७४ । ।

______Sठाऩ्ड्‌JKव्_४,१.१७४:

जन्पदशब्दात्क्षत्रियादञ्(*४,१.१६८) इत्येवं आदयः प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे, गोत्रयुवसञ्ज्ञाकान्डेन व्यवहितत्वाथ् ।
तेऽञादयः तद्राजसञ्ज्ञा भवन्ति ।
तथा चोदाहृतं ।
तद्राजप्रदेशाः - तद्राजस्य बहुषु तेन+एव अस्त्रियां (*२,४.६२) इत्येवं आदयः । ।

---

1. <कम्बोजाल्लुक्># । । PS_४,१.१७५ । ।

______Sठाऩ्ड्‌JKव्_४,१.१७५:

जनपदशब्दात्क्षत्रियातित्यनेन विहितस्य अञो लुगुच्यते।
कम्बोजात्प्रत्ययस्य लुक्भवति।
कम्बोजः।
कम्बोजादिभ्यो लुग्-वचनं चोलाद्यर्थं।
चोलः।
केरलः।
शकः।
यवनः।
तस्य राजनि इत्येव, कम्बोजो राजा।।

---

1. <स्त्रियां अवन्ति-कुन्ति-कुरुभ्यश्च>#।। PS_४,१.१७६।।

______Sठा~ठ्JKव्_४,१.१७६ः

अवन्ति-कुन्ति-कुरु-शब्देभ्य उत्पन्नस्य तद्राजस्य स्तिर्यां अभिधेयायां लुग्भवति।
अवन्ति-कुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य।
अवन्ती।
क्न्ती।
कुरूः।
स्त्रियां इति किं? आवन्त्यः।
कौन्त्यः।
कौरव्यः।।

---

1. <अतश्च>#।। PS_४,१.१७७।।

______Sठा~ठ्JKव्_४,१.१७७ः

स्त्रियां इत्येव।
अकार-प्रत्ययस्य तद्राजस्य स्त्रियां अभिधेयायां लुग्भवति।
तकारो विस्पष्टार्थः।
शूरसेनी।
मद्री।
दरथ्।
अवन्त्यादिभ्यो लुग्वचनात्तदन्तविधिरत्र नास्ति, तेनेह न भवति, आम्बष्ठ्या।
सौवीर्या।।

1. <न प्राच्य-भर्ग-आदि-यौधेय-आदिभ्यः># । । PS_४,१.१७८ । ।

______Sठाञ्ठJKव्_४,१.१७८ः

प्राच्येभ्यः भर्गादिभ्यः यौधेयादिभ्यश्च उत्पन्नस्य लुग्न भवति ।
अतश्च (*४,१.१७७) इत्यनेन स्त्रियां लुक्प्राप्तः प्रतिषिध्यते ।
प्राच्येभ्यः क्षत्रियेभ्यस्तावत्- पाञ्चाली ।
वैदेही ।
आङ्गी ।
वाङ्गी ।
मगधी ।
भर्गादिभ्यः - भार्गी ।
कारूषी ।
कैकेयी ।
यौधेयादिभ्यः - यौधेयी ।
शौभ्रेयी ।
शौक्रेयी ।
कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक्प्राप्तः प्रतिषिध्यते ? पाञ्चमिकस्यञः, पर्श्वादियौधेयादिभ्यां अनञौ इत्येतस्य ।
कथं पुनस्तस्य भिन्नप्रकरणस्थस्य अनेन लुक्प्राप्नोति ? एतदेव विज्ञापयति पाश्चमिकस्य अपि तद्राजस्य अतश्च इत्यनेन लुग्भवति इति ।
किं एतस्य ज्ञापनेन प्रयोजनं ? पर्श्वाद्याणः स्त्रियां लुक्सिद्धो भवति ।
पर्शूः ।
रक्षाः ।
असुरी ।
तथा च+उक्तं यौधेयादि-प्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुकिति ।

[#३६२]

भर्ग ।
करूष ।
केकय ।
कश्मीर ।
साल्व ।
सुस्थाल ।
उरश ।
कौरव्य ।
इति भर्गादिः ।
यौधेय ।
शौभ्रेय ।
शौक्रेय ।
ज्याबानेय ।
धार्तेय ।
धार्तेय ।
त्रिगर्त ।
भरत ।
उशीनर ।
यौधेयादिः । ।

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य प्रथमः पादः । ।

---

चतुर्थाध्यायस्य द्वितीयः पादः ।

---

[#३६३]

1. <तेन रक्तं रागात्># । । PS_४,२.१ । ।

_______Sठाञ्ठJKव्_४,२.१ः

शुक्लस्य वर्णान्तरापादनं इह रञ्जेरर्थः ।
रज्यतेऽनेन इति रागः ।
तेन इति तृतीयासमर्थाद्रागविशेष-वाचिनः शब्दाद्रक्तं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
कषायेण रक्तं वस्त्रं काषायं ।
माञ्जिष्ठं ।
कौसुम्भं ।
रागातिति किं ? देवदत्तेन रक्तं वस्त्रं ।
कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पदौ इति ? उपमानाद्भविष्यति, काषायौ इव काषायौ, हारिद्राविव हारिद्रौ ।
द्वैप-वैयाघ्रादञ्(*४,२.१२) इति यावत्तृतीयासमर्थ-विभक्तिरनुवर्तते । ।

---

1. <लाक्षा-रोचना-शकल-कर्दमाट्ठक्># । । PS_४,२.२ । ।

_______Sठाञ्ठJKव्_४,२.२ः

लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यो रक्तं इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
अणोऽपवादः ।
लाक्षया रक्तं वस्त्रं लाक्षिकं ।
रौचनिकं ।
शाकलिकं ।
कार्दमिकं ।
शकलकर्दमाभ्यामणपीष्यते ।
शाकलं ।
कार्दं ।
नील्या अन्वक्तव्यः ।
नील्या रक्तं नीलं वस्त्रं ।

पीतात्कन्वक्तव्यः ।
पीतेन रक्तं पीतकं ।
हरिद्रामहारजनाभ्यामञ्वक्तव्यः ।
हारिद्रं ।
माहरजनं । ।

---

1. <नक्षत्रेण युक्तं कालः># । । PS_४,२.३ । ।

______SठाEठJKव्_४,२.३ः

तृतीयासमर्थ-विभक्तिः अनुवर्तते ।
तेन इति तृतीयासमर्थाद्नक्षत्रविशेष-वाचिनः शब्दाद्युक्तः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
योऽसौ युक्तः ।
कालश्चेत्स भवति ।
कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते ? पुष्यादि-समीपस्थे चन्द्रमसि वर्तमानाः पुष्यादि-शब्दाः प्रत्ययमुत्पादयन्ति पुष्येण युक्तः कालः ।
पुष्य-समीपस्थेन चन्द्रमसा युक्तः इत्यर्थः ।
पौषी रात्रिः ।
पौषमहः ।
माघी रात्रिः ।
माघमहः ।
नक्षत्रेण इति किं ? चन्द्रमसा युक्ता रात्रिः ।
कालः इति किं ? पुष्येण युक्तश्चन्द्रमाः । ।

---

[#३६४]

1. <लुबविशेषे># । । PS_४,२.४ । ।

______SठाEठJKव्_४,२.४ः

पूर्वेण विहितस्य प्रत्ययस्य लुब्भवति अविशेषे ।
न चेन्नक्षत्र-युक्तस्य कालस्य रात्र्यादि-विशेषोऽभिधीयते ।
यावन्काले नक्षत्रेण युज्यते अहोरात्रः, तस्य अविशेषे लुब्भवति ।
अद्य पुष्यः ।
अद्य कृत्तिकाः ।
अविशेषे इति किं ? पौषी रात्रिः ।
पौषमहः । ।

---

1. <सञ्ज्ञायां श्रवण-अश्वत्थाभ्याम्># । । PS_४,२.५ । ।

_______Sठाॅठ्JKव्_४,२.५ः

अविशेषे लुप्विहितः पूर्वेण, विशेष-अर्थोऽयं आरम्भः ।
श्रवन-शब्दादश्वत्थ-शब्दाच्च+उत्पन्नस्य प्रत्ययस्य लुब्भवति सञ्ज्ञायां विषये ।
श्रवणारात्रिः ।
अश्वत्थो मुहूर्तः ।
लुपि युक्तवद्-भावः कस्मान्न भवति ? निपातनात्विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः (*४,२.२३) इति ।
सञ्ज्ञायां इति किं ? श्रावणी, आश्वत्थी रात्रिः । ।

---

1. <द्वन्वाच्छः># । । PS_४,२.६ । ।

_______Sठाॅठ्JKव्_४,२.६ः

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः प्रत्ययो भवति, विशेषे च अविशेषे च ।
राधानुराधीया रात्रिः ।
तिष्यपुनर्वसवीयमहः ।
अविशेषे - राधानुराधीयं ।
अद्य तिष्यपुनर्वसवीयं ।
लुपं परत्वाद्बाधते । ।

---

1. <दृष्टं साम># । । PS_४,२.७ । ।

_______Sठाॅठ्JKव्_४,२.७ः

तेन इति तृतीयासमर्थाद्दृष्टं साम इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद्दृष्टं साम चेत्तद्भवति ।
क्रुञ्चेन दृष्तं कौञ्चं साम ।
वासिष्ठं ।
वैश्वामित्रं । ।

---

1. <कलेर्ढक्># । । PS_४,२.८ । ।

______Sठान्ठ्JKव्_४,२.८ः

कलि-शब्दात्तृतीयासमर्थाद्दृष्टं साम इत्येतस्मिन्नर्थे ढक्प्रत्ययो भवति ।
अणोऽपवादः ।
कलिना दृष्टं साम कालेयं ।
सर्वत्र अग्निकलिभ्यां ढग्वक्तव्यः ।
अग्निना दृष्टं आग्नेयं ।
एवं अग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वं इति सर्वत्र ढगेव भवति ।
आग्नेयं ।
तथा कालेयं अपि प्रतिपत्तव्यं ।
दृष्टे सामनि अण्वा डिद्भवति इति वक्तव्यं ।
उशनसा दृष्टं साम औशनसम्, औशनं ।
जाते च अर्थे योऽन्येन बाधितः पुनरण्विधीयते स वा डिद्भवति इति वक्तव्यं ।

[#३६५]

प्राग्दीव्यतोऽण्प्राप्तः कालठञा बाधितः संधिवेलाद्य्-ऋतु-नक्षत्रेभ्यः इति पुनर्विधियते स वा डिद्भवति इति वक्तव्यं ।
शतभिषजि जातः ।
शातभिषजः, शातभिषः ।
तीयादीकक्स्वार्थे वा वक्तव्यः ।
द्वैतीयीकं ।
तार्तीयीकं ।
द्वितीयकं ।
तृतीयकं ।
न विद्यायः ।
द्वितीया, तृतीया विद्या ।
गोत्रादङ्कवदिष्यते ।
दृष्टं साम इत्येतस्मिन्नर्थे ।
औपगवेन दृष्टं साम औपगवकं ।
कापटवकं ।
गोत्रचरणाद्वुञ्भवति ।
दृष्टे सामनि जाते च द्विरण्डिद्वा विधीयते ।
तीयादीकक्न विद्याया गोत्रादङ्कवदिष्यते । ।

---

1. <वामदेवाड्ड्यड्-ड्यौ># । । PS_४,२.९ । ।

______Sठान्ठ्JKव्_४,२.९ः

वामदेव-शब्दात्तृतीयासमर्थात्दृष्टं साम इत्येतस्मिन्नर्थे ड्यत्ड्य इत्येतौ प्रत्ययौ भवतः ।

अणोऽपवादः ।
वामदेवेन दृष्टं साम वामदेव्यं साम ।
तित्करणं स्वरार्थं ।
डित्करणं किं अर्थं ? य-यतोश्च अतदर्थे (*६,२.१५६) इति नञ उत्तरस्य अन्तोदात्तत्वे विधीयमानेऽन्योर्ग्रहणं मा भूथ् ।
अननुबन्धकग्रहण-परिभाषया एकानुबन्धकग्रहणपरिभाषया च अनयोर्निवृत्तिः क्रियते ।
अवामदेव्यं ।
सिद्धे यस्य+इति लोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे । ।

---

1. <परिवृतो रथः># । । PS_४,२.१० । ।

_______Sठाऽ्ठ्JKव्_४,२.१०ः

तेन इति तृतीयासमर्थात्परिवृतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतः रथश्चेत्स भवति ।
वस्त्रेण प्रतिवृतो रथः वास्त्रो रथः ।
काम्बलः ।
चार्मणः ।
रथः इति किं ? वस्त्रेण परिवृतः कायः ।
समन्तात्वेष्टितः परिवृत उच्यते ।
यस्य कश्चिदवयवो वस्त्रादिभिरवेष्टितः, तत्र न भवति ।
तेन+इह न, छात्रैः परिवृतो रथः । ।

---

[#३६६]

1. <पाण्डुकम्बलादिनिः># । । PS_४,२.११ । ।

_______Sठाऽ्ठ्JKव्_४,२.११ः

पाण्डुकम्बल-शब्दात्तृतीयासमर्थात्परिवृतो रथः इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति ।
अणोऽपवादः ।
पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः ।
पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः ।
मत्वर्थीयेन+एव सिद्धे वचनमणो निवृत्त्यर्थं । ।

---

1. <द्वैप-वैयाघ्रादञ्># । । PS_४,२.१२ । ।

_______Sठा~ठ्JKव्_४,२.१२ः

द्वीपि-व्याघ्रयोर्विकरभूते चर्मणो द्वैप-वैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्यां परिवृतो रथः इत्येतस्मिन्नर्थे अञ्प्रत्ययो भवति ।
अणोऽपवादः ।
स्वरे विशेषः ।
द्वैपेन परिवृतो रथः द्वैपः ।
वैयाघ्रः । ।

---

1. <क्ॐआर-अपूर्ववचने># । । PS_४,२.१३ । ।

_______Sठा~ठ्JKव्_४,२.१३ः

क्ॐआर इत्येतदण्प्रत्ययन्तं निपात्यतेऽपूर्ववचने ।
पाणिग्रहणस्य अपूर्ववचनं ।
उभ्यतः स्त्रियाः अपूर्वत्वे निपातनं एतथ् ।
अपूर्वपतिं कुमारीं पतिरुपपन्नः क्ॐआरः पतिः ।
कुमारी-शब्दाद्द्वितीयासमर्थादुपयन्तरि प्रत्ययः ।
अपूर्वपतिः कुमारी पतिं उपपन्ना क्ॐआरी भार्या ।
प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ।
क्ॐआरापूर्ववचने कुमार्या अण्विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्या भवति इति वा । ।
कुमार्यां भवः क्ॐआरः पतिः, तस्य स्त्री क्ॐआरी भार्या इति सिद्धं । ।

---

1. <तत्र+उद्धृतं अमत्रेभ्यः># । । PS_४,२.१४ । ।

_______Sठा~ठ्JKव्_४,२.१४ः

तत्र इति सप्तमीसमर्थादमत्र-वाचिनः शब्दादुद्धृतं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
भुक्तोच्छिष्टं उद्धृतं उच्यते, यस्य+उद्धरणं इति प्रसिद्धिः ।
अमत्रं भाजनं पात्रं उच्यते ।
शरावेषु उद्धृतः शाराव ओदनः ।
माल्लिकः ।
कार्परः ।
अमत्रेभ्यः इति किं ? पाणावुद्धृत ओदनः ।
तत्र इति सप्तमी समर्थविभक्तिः क्षीराड्ढञ्(*४,२.२०) इति यावदनुवर्तते । ।

---

1. <स्थण्डिलाच्छयितरि व्रते># । । PS_४,२.१५ । ।

_______Sठा~ठ्JKव्_४,२.१५ः

स्थण्डिल-शब्दात्सप्तमीसमर्थात्शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेत्व्रतं गम्यते ।
व्रतं इति शास्त्रितो नियमः उच्यते ।
स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः ।
स्थाण्डिलो ब्रह्मचारी ।
व्रते इति किं ? स्थाण्डिले शेते ब्रह्मदत्तः । ।

---

[#३६७]

1. <संस्कृतं भक्षाः># । । PS_४,२.१६ । ।

_______Sठा~ठ्JKव्_४,२.१६ः

तत्र इति सप्तमीसमर्थात्संस्कृतं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्संस्कृतं भक्षाः चेत्ते भवन्ति ।
खरविशदं अभ्यवहारार्थं भक्षं इत्युच्यते ।
सतुत्कर्षाधानं संस्कारः ।
भ्राष्ट्रे संस्कृता भक्षाः भ्राष्ट्रा अपूपाः ।
कालशाः ।
क्ॐभाः ।
भक्षाः इति किं ? पुष्पपुटे संस्कृतो मालागुणः । ।

---

1. <शूल-उखाद्यत्># । । PS_४,२.१७ । ।

_______Sठा~ठ्JKव्_४,२.१७ः

शूल-शब्दादुखा-शब्दाच्च सप्तमीसमर्थात्संस्कृतं भक्षाः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
अणोऽपवादः ।
शूले संस्कृतं शूल्यं मांसं ।

उख्यं । ।

---

1. <दध्नष्ठक्># । । PS_४,२.१८ । ।

______Sठा~ठ्JKव्_४,२.१८ः

दधि-शब्दात्सप्तमीसमर्थात्संस्कृतं भक्षाः इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
दधनि संस्कृतं दाधिकं ।
ननु च संस्कृत-अर्थे प्राग्वहतेः ठकं वक्ष्यति, तेन+एव सिद्धं ? न सिध्यति ।
दध्ना हि तत्संस्कृतं यस्य दधिकृतं एव+उत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं, द्रव्यान्तरेण लवणादिना संस्कारः क्रियते । ।

---

1. <उदश्वितोऽन्यतरस्याम्># । । PS_४,२.१९ । ।

______Sठा~ठ्JKव्_४,२.१९ः

उदश्विच्-छब्दात्सप्तमीसमर्थात्संस्कृतं भक्षाः इत्येतस्मिन्नर्थे अन्यतरस्यां ठक्प्रत्ययो भवति, पक्षे यथाप्राप्तमण्भवति ।
औदश्वित्कम्, औदश्वितं । ।

---

1. <क्षीराड्ढञ्># । । PS_४,२.२० । ।

______Sठा~ठ्JKव्_४,२.२०ः

क्षीर-शब्दात्सप्तमीसमर्थात्संस्कृतं भक्षाः इत्येतस्मिन्नर्थे ढञ्प्रत्ययो भवति ।
अणोऽपवादः ।
क्षीरे संस्कृता क्षैरेयी यवागूः । ।

---

1. <साऽस्मिन्पौर्णमासी इति सञ्ज्ञायाम्># । । PS_४,२.२१ । ।

______Sठाञ्ठ्JKव्_४,२.२१ः

सा इति प्रथमासमर्थादस्मिन्निति सप्तम्य्-अर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति ।
इति-करणः ततश्चेद्विवक्षा भवति ।
सञ्ज्ञायां इति समुदायोपाधिः, प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यते इति ।
मासार्धमाससंवत्सराणां एषा सञ्ज्ञा ।
पौषी पौर्णमासी अस्मिन्पौषो मासः ।
पौषोऽर्धमासः ।

[#३६८]

पौषः संवत्सरः ।
इह न भवति, पौषी पौर्णमासी अस्मिन्दशरात्रे इति ।
भृतकमासे च न भवति ।
इतिकरणस्य सञ्ज्ञाशब्दस्य च तुल्यं एव फलं प्रयोग-अनुसरणं, तत्र किमर्थं द्वयं उपादीयते ? सञ्ज्ञाशब्देन तुल्यतां इति करणस्य ज्ञापयितुं, न ह्ययं लोके तथा प्रसिद्धः ।
सञ्ज्ञार्थत्वे तु सम्प्रति ज्ञापिते यत्तत्र तत्र+उच्यते इतिकरणस्ततश्चेद्विवक्षा इति तदुपपन्नं भवति ।
अथ पौर्णमासी इति कोऽयं शब्दः ।
पूर्णमासादण्पौर्णमासी ।
अथवा पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी ।
मा इति चन्द्र उच्यते । ।

---

1. <आग्रहायण्य्-अश्वत्थाट्ठक्># । । PS_४,२.२२ । ।

______Sठाञ्ठ्JKव्_४,२.२२ः

सा अस्मिन्पौर्णमासी इति सर्वं अनुवर्तते ।
आग्रहायणी-शब्दादश्वत्थ-शब्दाच्च प्रथमसमर्थात्पौर्णमास्य्-उपाधिकादस्मिन्निति सप्तम्यर्थे ठक्प्रत्ययो भवति ।
अणोऽपवादः ।
आग्रहायणिको मासः, सर्धमासः, संवत्सरः ।
एवं आश्वत्थिकः । ।

---

1. <विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः># । । PS_४,२.२३ । ।

______Sठाञ्ठ्JKव्_४,२.२३ः

फल्गुन्य्-आदयः पौर्णमासी-शब्दाः तेभ्यो विभाषा ठक्प्रत्ययो भवति, साऽस्मिन्पौर्णमासी इति सञ्ज्ञायां (*४,२.२१) इत्येतस्मिन्विषये ।
नित्यं अणि प्राप्ते पक्षे ठग्विधीयते ।
फाल्गुनो मासः, फाल्गुनिकः ।
श्रावणः, श्रावणिकः ।
कार्तिकः, कार्तिकिकः ।
चैत्रः, चैत्रिकः । ।

---

1. <साऽस्य देवता># । । PS_४,२.२४ । ।

______Sठा~ठ्JKव्_४,२.२४ः

सा इति प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत्सा भवति ।
यागसंप्रदानं देवता, देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः ।
इन्द्रो देवता अस्य ऐन्द्रं हविः ।
आदित्यं ।
बार्हस्पत्यं ।
प्राजापत्यं ।
देवता इति किं ? कन्या देवता अस्य ।
कथं ऐन्द्रो मन्त्रः ? मन्त्रस्तुत्यं अपि देवता इत्युपचरन्ति ।
कथं आग्नेयो वै ब्राह्मणो देवता इति ? उपमानाद्भविष्यति ।
महाराजप्रोष्ठपदाट्ठञ्(*४,२.३५) इति यावत्साऽस्य देवता इत्यधिकारः ।
सा इति प्रकृते पुनः समर्थ-विभक्ति निर्देशः सञ्ज्ञा-निवृत्त्य्-अर्थः । ।

---

1. <कस्य+इत्># । । PS_४,२.२५ । ।

______Sठा~ठ्JKव्_४,२.२५ः

क-शब्दो देवतायां प्रजापतेर्वाचकः, ततः पूर्वेन+एव अण्प्रत्ययः सिद्धः, इ-कारादेश-अर्थं वचनं ।
कस्य इ-कारादेशो भवति प्रत्यय-सन्नियोगेन ।
कायं हविः ।
कायं एककपालं निर्वपेत् । ।

---

1. <शुक्राद्घन्># । । PS_४,२.२६ । ।

______Sठा~ठ्JKव्_४,२.२६ः

शुक्र-शब्दात्साऽस्य देवता इत्यसिन्न्नर्थे घन्प्रत्ययो भवति ।
अणोऽपवादः ।
शुक्रियं हविः ।
शुक्रियोऽध्यायः । ।

---

[#३६९]

1. <अपोनप्त्-अपांनप्तृभ्यां घः># । । PS_४,२.२७ । ।

______Sठा~ठ्JKव्_४,२.२७ः
अपोनप्तृ अपांनप्तृ इत्येताभ्यां घः प्रत्ययो भवति साऽस्य देवता इत्यस्मिन्विषये ।
अणोऽपवादः ।
अपोनप्त्रियं हविः, अपांनप्त्रियं ।
अपोनपादपांनपादिति देवताया नामधेये एते ।
तयोस्तु पत्ययसन्नियोगेन रूपं इदं निपत्यते । ।

---

1. <छ च># । । PS_४,२.२८ । ।

______Sठा~ठ्JKव्_४,२.२८ः

अपोनप्तृ अपांनप्तृ इत्येताभ्यां छ-कारः प्रत्ययो भवति सा अस्य देवता इति यस्मिन्विषये ।
अणोऽपवादः ।
अपोनप्त्रीयं हविः, अपांनप्त्रीयं ।
योगविभागः सङ्ख्यातानुदेशपरिहारार्थः ।
छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानं ।
पैङ्गाक्षीपुत्रीयं ।
तार्णबिन्दवीयं ।
शतरुद्राच्छश्च घश्च ।
शतरुद्रीयम्, शतरुद्रियं । ।

---

1. <महेन्द्राद्घाणौ च># । । PS_४,२.२९ । ।

______Sठा~ठ्JKव्_४,२.२९ः

महेन्द्र-शब्दात्घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, साऽस्य देवता इत्यस्मिन्विषये ।
महेन्द्रो देवता अस्य महेन्द्रियं हविः, माहेन्द्रम्, महेन्द्रीयं । ।

---

1. <सोमाट्ट्यण्># । । PS_४,२.३० । ।

______Sठा~ठ्JKव्_४,२.३०ः

सोम-शब्दात्ट्यण्प्रत्ययो भवति साऽस्य देवता इत्यस्मिन्विषये ।
अणोऽपवादः ।
ण-कारो वृद्ध्य्-अर्थः ।
ट-कारो ङीब्-अर्थः ।
सोमो देवता अस्य स्ॐयं हविः ।
स्ॐयं सूक्तं ।
स्ॐयी ऋक् । ।

---

1. <वाय्व्-ऋतु-पित्र्-उषसो यत्># । । PS_४,२.३१ । ।

______Sठा~ठ्JKव्_४,२.३१ः

वाय्व्-आदिभ्यः शब्देभ्यः यत्प्रत्ययो भवत्साऽस्य देवता इत्येतस्मिन्विषये ।
अणोऽपवादः ।
वायुः देवता अस्य वायव्यं ।
ऋतव्यं ।
पित्र्यं ।
उषस्यं । ।

---

1. <द्यावापृथिवी-शुनासीर-मरुत्वद्-अग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च># । । PS_४,२.३२ । ।

_______Sठा-ठ्JKव्_४,२.३२ः

द्यावापृथिव्य्-आदिभ्यः छः प्रत्ययो भवति साऽस्य देवता इत्यस्मिन्विषये, चकाराद्यच्च ।
अणो ण्यस्य च अपवादः ।
द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम्, द्यावापृथिव्यम्, ।
शुनश्च सीरश्च तौ देवते अस्य इति शुनासीरीयम्, शौनासीर्यं ।
शुनो वायुः ।
सीरः आदित्यः ।
मरुत्वान्देवता अस्य मरुत्वतीयम्, मरुत्वत्यं ।
अग्नीषोमीयम्, अग्नीशोम्यं ।
वास्तोष्पतीयम्, वास्तोष्पत्यं ।
गृहमेधीयम्, गृहमेध्यं । ।

---

1. <अग्नेर्ढक्># । । PS_४,२.३३ । ।

_______Sठा-ठ्JKव्_४,२.३३ः

अग्नि-शब्दाद्ढक्प्रत्ययो भवति सा+अस्य देवता इत्यस्मिन्विषये ।
अणोऽपवादः ।
अग्निर्देवता अस्य आग्नेयोऽष्टाकपालः ।
प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः ।

---

1. <कालेभ्यो भववत्># । । PS_४,२.३४ । ।

_______Sठा-ठ्JKव्_४,२.३४ः
कालविशेष-वाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति साऽस्य देवता इत्यस्मिन्विषये ।
कालाट्ठञ्(*४,३.११) इति प्रकरणे भवे प्रत्यया विधास्यन्ते ते साऽस्य देवता इत्यस्मिनर्थे तथा+एव+इष्यन्ते, तदर्थं इदं उच्यते ।
वत्-करणं सर्वसादृश्य-परिग्रह-अर्थं ।
मासे भवं मासिकं ।
आर्धमासिकं ।
सांवत्सरिकं ।
वासन्तं ।
प्रावृषेण्यं ।
तथा मासो देवताऽस्य मासिकं ।
आर्धमासिकं ।

सांवत्सरिकं ।
वासन्तं ।
प्रावृषेण्यं । ।

---

1. <महाराज-प्रोष्ठपदाट्ठञ्># । । PS_४,२.३५ । ।

_______Sठाऩ्ढ्JKव्_४,२.३५ः

महाराज-शब्दात्प्रोष्ठपद-शब्दाच्च ठञ्प्रययो भवति साऽस्य देवता इत्यस्मिन्विषये ।
महाराजो देवता अस्य माहाराजिकं ।
प्रौष्ठपदिकं ।

[#३७१]

ठञ्-प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानं ।
नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः कालः ।
पाकयज्ञैकः ।
पूर्णमासादण् ।
पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः । ।

---

1. <पितृव्य-मातुल-मातामह-पितामहाः># । । PS_४,२.३६ । ।

_______Sठाऩ्ढ्JKव्_४,२.३६ः

पितृव्यादयो निपात्यन्ते ।
समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्धः इति सर्वं निपातनाद्विज्ञेयं ।
पितृमातृभ्यां भ्रातर्यभिधेये व्यत्डुलचित्येतौ प्रत्ययु निपात्येते ।
पित्रुर्भ्राता पितृव्यः ।
मातुर्भ्राता मातुलः ।
ताभ्यां पितरि डामहच्मातरि षिच्च ।
ताभ्यां एव पितरि डामहच्प्रत्ययो भवति ।
पितुः पिता पितामहः ।
मातुः पिता मातामहः ।
मातरि षिच्च ।
पितामही ।
मातामही ।
अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः ।
अवेर्दुग्धं अविसोढम्, अविदूसम्, अविमरीसं ।
तिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौ ।

निष्फलस्तिलः तिलपिञ्जः, तिलपेजः ।
पिञ्जश्छन्दसि डिच्च ।
तिल्पिञ्जं दण्डनं नडं । ।

---

1. <तस्य समूहः># । । PS_४,२.३७ । ।

______Sठाऽठ्JKव्_४,२.३७ः

तस्य इति षष्ठीसमर्थात्समूहः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
किं इह+उदाहरणं ? चित्तवदद्युदात्तमगोत्रं यस्य च न अन्यत्प्रतिपदं ग्रहणं ।
अचित्तात्ठकं वक्ष्यति, अनुदात्तादेरञ्(*४,२.४४), गोत्राद्वुञ्, प्रतिपदं च केदाराद्यञ्च (*४,२.४०) इत्येवं आदि, तत्परिहारेण अत्र+उदाहरणं द्रष्टव्यं ।
काकानां समूहः काकं ।
बाकं ।
इनि-त्र-कट्यचश्च (*४,२.५१) इति यावत्समूहाधिकारः ।
गुणादिभ्यो ग्रामज्वक्तव्यः ।
गुणग्रामः ।
करणग्रामः ।
गुण ।
करण ।
तत्त्व ।
शब्द ।
इन्द्रिय ।
आकृतिगनः । ।

---

[#३७२]

1. <भिक्षा-आदिभ्योऽण्># । । PS_४,२.३८ । ।

______Sठाऽठ्JKव्_४,२.३८ः

भिक्षा इत्येवं आदिभ्यः शब्देभ्योऽण्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
अण्-ग्रहनं बाधक-बाधन-अर्थं ।
भिक्षाणां समूहः भैक्षं ।
गार्भिणं युवति-शब्दोऽत्र पठ्यते, तस्य ग्रहण-सामर्थ्यादपुम्बद्भावो न भवति भस्याढे तद्धिते (*६,३.३५) इति ।
युवतीनां समूहो यौवतं ।
भैक्षा ।
गर्भिणी ।

क्षेत्र ।
करीष ।
अङ्गार ।
चर्मिन् ।
धर्मिन् ।
सहस्र ।
युवति ।
पदाति ।
पद्धति ।
अथर्वन् ।
दक्षिणा ।
भूत । ।

---

1. <गोत्र-उक्ष-उष्ट्र-उरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्य-अजाद्वुञ्># । । PS_४,२.३९ । ।

_______Sठाञ्ठJKव्_४,२.३९ः

गोत्रादिभ्यो वुञ्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
अपत्य-अधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं, न तु पौत्रप्रभृत्येव ।
औपगवानां समूहः औपगवकं ।
कापटवकं ।
उक्षन्- औक्षकं ।
उष्ट्र - औष्ट्रकं ।
उरभ्र - औरभ्रकं ।
राजन्- राजकं ।
राजन्य - राजन्यकं ।
राजपुत्र - राजपुत्रकं ।
वत्स - वात्सकं ।
मनुष्य - मानुष्यकं ।
अज - आजकं ।
प्रकृत्याऽके राजन्यमनुष्ययुवानः इति यलोपो न भवति, आपत्यसय्च तद्धितेऽनाति (*६,४.१५१) इति ।
वृद्धाच्चेति वक्तव्यं ।
वृद्धानां समूहो वार्धकं । ।

---

1. <केदाराद्यञ्च># । । PS_४,२.४० । ।

_______Sठाञ्ठJKव्_४,२.४०ः
केदार-शब्दाद्यञ्प्रत्ययो भवति, च-कारादवुञ्च, तस्य समूहः इत्येतस्मिन्विषये ।

अचित्त-लक्षनस्य ठकः अपवादः ।
केदाराणां समूहः कैदार्यम्, कैदारकं ।
गणिकायाश्च यञ्वक्तव्यः ।
गनिकानां समूहः गाणिक्यं । ।

---

1. <ठञ्कवचिनश्च># । । PS_४,२.४१ । ।

_______Sठा~ठ्JKव्_४,२.४१ः

कवचिन्शब्दात्ठञ्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
कवचिनां समूहः कावचिकं ।
चकारः केदारातित्यस्य अनुकर्षण-अर्थः ।
केदाराणां समूहः कैदारिकं । ।

---

[#३७३]

1. <ब्राह्मण-माणव-वाडवाद्यन्># । । PS_४,२.४२ । ।

_______Sठा~ठ्JKव्_४,२.४२ः

ब्राह्मणादिभ्यः शब्देभ्यो यन्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
नकारः स्वरार्थः ।
ब्राह्मणानां समूहः ब्राह्मण्यं ।
माणव्यं ।
वाडव्यं ।
यन्-प्रकरणे पृष्ठादुपसङ्ख्यानं ।
पृष्ठानां समूहः पृष्ठ्यः ।
अह्नः खः क्रतौ ।
अह्णां समूहः अहीनः क्रतुः ।
क्रतौ इति किं ? आह्नः ।
खण्डिकादिषु दर्शनादञ्भवति ।
पर्श्वा णस्वक्तव्यः ।
पर्शूनां समूहः पार्श्वं ।
पदसञ्ज्ञकत्वाद्गुणो न भवति ।
वातादूलः ।
वातानां समूहः वातूलः । ।

---

1. <ग्राम-जन-बन्धु-सहायेभ्यस्तल्># । । PS_४,२.४३ । ।

_______SठाSठJKव्_४,२.४३ः

ग्रामादिभ्यः तल्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
ग्रामाणां समूहः ग्रामता ।
जनता ।
बन्धुता ।
सहायता ।
गजाच्चेति वक्तव्यं ।
गजानां समूहः गजता । ।

---

1. <अनुदात्तादेरञ्># । । PS_४,२.४४ । ।

_______SठाSठJKव्_४,२.४४ः

अनुदात्तादेः शब्दादञ्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
कपोतानां समूहः कापोतं ।
मायूरं ।
तैत्तिरं । ।

---

[#३७४]

1. <खण्डिक-आदिभ्यश्च># । । PS_४,२.४५ । ।

_______SठाSठJKव्_४,२.४५ः

खण्दिका इत्येवं आदिभ्यः शब्देभ्योऽञ्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
आद्य्-उदात्त-अर्थं अचित्तार्थं च वचनं ।
खण्दिकानां ममूहः खाण्डिकं ।
वाडवं ।
क्षुद्रक-मालव-शब्दोत्र पठ्यते ।
क्षुद्रकाश्च मालवाश्च इति क्षत्रिय-द्वन्द्वः ।

ततः पूर्वेण+एव अञि सिद्धे वचनं गोत्रवुञ्बाधन-अर्थं ।
ननु च परत्वादञा वुञ्बाधिष्यते, न च गोत्रसमुदायो गोत्रं, न च तदन्तविधिरत्र अस्ति ? एवं तर्हि एतज्ज्ञापयति वुञि पूर्वविप्रतिषेधः, समूहिकेषु च तदन्तविधिरस्ति इति ।
प्रत्योजनं औपगवकं कापटवकं इति वुञ्भवति, वानहस्तिकं गौधेनुकं इति च तदन्तविधिः ।
क्षुद्रकमालवातित्येतावता योगविभागेन पूर्वविप्रतेषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्या+एव नियमार्थं उच्यते सेनासञ्ज्ञायां इति ।
क्षुद्रकमालवात्सेनासंज्ञायां एव अञ्भवति ।
क्षौद्रकमालवी सेना ।
क्षौद्रकमालवमन्यथ् ।
अञ्सिद्धिरनुदातादेः कोऽर्थः क्षुद्रकमालवाथ् ।
गोत्राद्वुञ्न च तद्गोत्रं तदन्तान्न च सर्वतः । ।
ज्ञापकं स्यात्तदन्तत्वे तथा च अपि शलिएर्विधिः ।
सेनायां नियम-अर्थं च यथा बध्येत चाञ्वुञा । ।
खण्दिका ।
वडवा ।
क्षुद्रकमालवात्सेनासञ्ज्ञायां ।
भिक्षुक ।
शुक ।
उलूक ।
श्वन् ।
युग ।
अहन् ।
वरत्रा ।
हलबन्ध । ।

---

1. <चरणेभ्यो धर्मवत्># । । PS_४,२.४६ । ।

______Sठाञ्ठJKव्_४,२.४६ः

चरण-शब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत्प्रत्यया भवन्ति ।
गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्ते, तत्र चेदमुच्यते चरणाद्धर्माम्नाययोः इति, तेन धर्मवतित्यतिदेशः क्रियते ।
वतिः सर्वसादृश्यार्थः ।
कठानां धर्मः काठकं ।
कालापकं ।
छन्दोग्यं ।
औक्थिक्यं ।
आथर्वणं ।
तथा समूहेऽपि - काठकं ।
कालापकं ।
छन्दोग्यं ।
औक्थिक्यं ।
आथर्वणं । ।

---

1. <अचित्त-हस्ति-धेनोष्ठक्># । । PS_४,२.४७ । ।

_______Sठाॅ्ठJKव्_४,२.४७ः

अचित्त-अर्थेभ्यो हस्ति-धेनु-शब्दाभ्यां च ठक्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
अणञोरपवादः ।
अपूपानां समूहः आपूपिकं ।
शाष्कुलिकं ।
हास्तिकं ।
धैनुकं ।
धेनोरनञ इति वक्तव्यं ।
आधेनवं । ।

---

[#३७५]

1. <केश-अश्वाभ्यां यञ्-छावन्यतरस्याम्># । । PS_४,२.४८ । ।

_______Sठाॅ्ठJKव्_४,२.४८ः

केश अश्व इत्येत्याभ्यां यथासङ्ख्यं यञ्छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्यां तस्य समूहः इत्येतस्मिन्विषये ।
केशानां समूहः कैश्यम्, कैशिकं ।
अश्वानां समूहः अश्वीयम्, आश्वं । ।

---

1. <पाशादिभ्यो यः># । । PS_४,२.४९ । ।

_______Sठाॅ्ठJKव्_४,२.४९ः

पाशदिभ्यः यः प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्विषये ।
पाशानां समूहः पाश्या ।
तृण्या ।
पाश ।
तृण ।
धूम ।

वात ।
अङ्गार ।
पोत ।
बालक ।
पिटक ।
पिटाक ।
शकट ।
हल ।
नड ।
वन । ।

---

1. <खल-गो-रथात्># । । PS_४,२.५० । ।

______Sठा~ठ्JKव्_४,२.५०ः

खल-गो-रथ-शब्देभ्यः यः प्रत्यय भवत्तस्य समूहः इत्येतस्मिन्विषये ।
खलानां समूहः खल्या ।
गव्या ।
रथ्या ।
पाशादिष्वपाठः उत्तरार्थः । ।

---

1. <इनि-त्र-कट्यचश्च># । । PS_४,२.५१ । ।

______Sठा~ठ्JKव्_४,२.५१ः

खल-गो-रथ-शब्देभ्यो यथासङ्ख्यं इनि त्र कट्यचित्येते प्रत्यया भवन्ति तस्य समूहः इत्येतस्मिन्विषये ।
खलिनी ।
गोत्रा ।
रथाकट्या ।
खलादिभ्य इनिर्वक्तव्यः ।
डाकिनी ।
कुण्डलिनी ।
कुटुम्बिनी ।
कमलादिभ्यः खण्डच्प्रत्ययो भवति ।
कमलखण्डं ।
अम्भोजखण्डं ।
कमल ।
अम्भोज ।

पद्मिनी।
कुमुद।
सरोज।
पद्म।
नलिनी।
कैरविणी।
कमलादिराकृतिगणः।
नरकरितुरङ्गाणां स्कन्धच्प्रत्ययः।
नरस्कन्धः।
करिस्कन्धः।
तुरङ्गस्कन्धः।
पूर्वादिभ्यः काण्डः प्रत्ययो भवति।
पूर्वकाण्डं।
तृणकाण्डं।
कर्मकाण्डं।।

---

[#३७६]

1. <विषयो देशे>#।। PS_४,२.५२।।

______Sठाऱ्ठ्JKव्_४,२.५२ः

समूहः इति निव्ŕत्तं।
षष्ठी समर्थविभक्तिरनुवर्तते।
तस्य इति षष्ठीसमर्थाद्विषयः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयः देशश्चेत्स भवति।
विषय-शब्दो बह्वर्थः।
क्वचिद्ग्रामसमुदाये वर्तते, विषयो लब्धः इति।
क्वचिदिन्द्रियग्राह्ये, चक्षुर्विषयो रूपं इति।
क्वचिदत्यन्तशीलिते ज्ञेये, देवदत्तस्य विषयोऽनुवाकः इति।
क्वाचिदन्यत्र अभावे, मत्स्यानां विषयो जलं इति।
तत्र देश-ग्रहणं ग्रामसमुदाय-प्रतिपत्त्य्-अर्थं।
शिबीनां विषयो देशः शैबः।
औष्ट्रः।
देशे इति किं? देवदत्तस्य विषयोऽनुवाकः।।

---

1. <राजन्यादिभ्यो वुञ्>#।। PS_४,२.५३।।

______Sठाऱ्ठ्JKव्_४,२.५३ः

राजन्यादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति विषयो देशे इत्येतस्मिन्नर्थे।
अणोऽपवादः।
राजन्यानां विषयो देशः राजन्यकः।
दैवयानकः।
आकृतिगणश्च अयं।
मालवानां विषयो देशः मालवकः।
वैराटकः।
त्रैगर्तकः।
राजन्य।
देवयान।
शालङ्कायन।
जालन्धरायण।
आत्मकामेय।
अम्बरीषपुत्र।
वसाति।
बैल्ववन।
शैलूष।
उदुम्बर।
बैल्वत।
आर्जुनायन।
संप्रिय।
दाक्षि।
ऊर्णनाभ।।

---

1. <भौरिक्याद्य्-ऐषुकार्यादिभ्यो विधल्भक्तलौ>#।। PS_४,२.५४।।

_______Sठा~ठJKव्_४,२.५४ः

भैरिक्यादिभ्यः ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल्भक्तलित्येतौ प्रत्ययौ भवतः विषयो देशे इत्येतस्मिन्विषये।
अणोऽपवादः।
भौरिकिविधः।
वैपेयविधः।
ऐषुकार्यादिभ्यः - ऐषुकारिभक्तः।
सारस्यायनभक्तः।
भौरिकि।
वैपेय।
भौलिकि।
चैटयत।
काणेय।
वाणिजक।
वालिज।
वालिज्यक।
शैकयत।

वैकयत ।
ऐषुकारि ।
सारस्यायन ।
चान्द्रायण ।
द्व्याक्षायण ।
त्र्याक्षायण ।
औडायन ।
जौलायन ।
खाडायन ।
सौवीर ।
दासमित्रि ।
दासमित्रायण ।
शौद्राण ।
दाक्षायण ।
शयण्ड ।
ताक्ष्यायण ।
शौभ्रायण ।
सायण्डि ।
शौण्दि ।
वैश्वमाणव ।
वैश्वधेनव ।
नद ।
तुण्डदेव ।
विशदेव । ।

---

1. <सोऽस्य-आदिरिति च्छन्दसः प्रगाथेषु># । । PS_४,२.५५ । ।

_______Sठाऽ्ठJKव्_४,२.५५ः

स इति समर्थविभक्तिः ।
अस्य इति प्रत्यय-अर्थः ।
आदिः इति प्रकृतिविशेषनं ।
इति-करणो विवक्षार्थः ।
छन्दसः इति प्रकृतिनिर्देशः ।
प्रगाथेषु इति प्रत्ययार्थविशेषणं ।
स इति प्रथमासमर्थादस्य ति षष्ट्यार्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्य इति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति, इति-करणस्ततश्चेद्विवक्षा ।

[#३७७]

पङ्क्तिरादिरस्य पाङ्कतः प्रगाथः ।
आनुष्टुभः ।
जागतः ।
आदिः इति किं ? अनुष्टुबः मध्यं अस्य प्रगाथस्य ।

छन्दसः इति किं ? उदुत्य-शब्द आदिरस्य प्रगाथस्य ।
प्रगाथेषु इति किं ? पङ्क्तिरादिरस्य अनुवाकस्य ।
प्रगाथ-शब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते ।
यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, स प्रग्रथनात्प्रकर्षगानाद्वा प्रगाथः इत्युच्यते ।
छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानं ।
त्रिष्टुबेव त्रैष्टुभं ।
जागतं । ।

---

1. <सङ्ग्रामे प्रयोजन-योद्धृभ्यः># । । PS_४,२.५६ । ।

_______Sठा~ठ्JKव्_४,२.५६ः

सोऽस्य इति समर्थविभक्तिः, प्रत्ययार्थश्च अनुवर्तते ।
प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च ।
प्रत्ययार्थविशेषनं सङ्ग्रामः ।
प्रयोजनवाचिभ्यः योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्यः अस्य इति षष्ठ्यर्थे सङ्ग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति ।
भद्रा प्रयोजनं अस्य सङ्ग्रामस्य भद्रः सङ्ग्रामः ।
सौभद्रः ।
गौरिमित्रः ।
योद्धृभ्यः - आहिमाला योद्धारोऽस्य सङ्ग्रामस्य आहिमालः ।
स्यान्दनाश्वः ।
भारतः ।
सङ्ग्रामे इति किं ? सुभद्रा प्रयोजनं अस्य दानस्य ।
प्रयोजन-योद्धृभ्यः इति किं ? सुभद्रा प्रेक्षिकाऽस्य सङ्ग्रामस्य । ।

---

1. <तदस्यां प्रहरणं इति क्रीडायां णः># । । PS_४,२.५७ । ।

_______Sठा~ठ्JKव्_४,२.५७ः

ततिति प्रथमासमर्थादस्यां इति सप्तम्य्-अर्थे णः प्रत्ययो भवति, यत्ततिति निर्दिष्टं प्रहरणं चेत्भवति ।
यदस्यां इति निर्दिष्टं क्रीडा तद्चेत्सा भवति ।
इतिकरणस्ततश्चेद्विवक्षा ।
दण्डः प्रहरणं अस्यां क्रीडायां दाण्डा ।
मौष्टा ।
प्रहरणं इति किं ? माला भूषणं अस्यां क्रीडायां ।
क्रीडायां इति किं ? खड्गः प्रहरणं अस्यां सेनायां । ।

---

1. <घञः सास्यां क्रियेति ञः># । । PS_४,२.५८ । ।

_______Sठा~ठ्JKव्_४,२.५८ः

सा इति समर्थविभक्तिः ।
अस्यां इति प्रत्ययार्थः स्त्रीलिङ्गः ।
क्रिया इति प्रकृत्यर्थ-विशेषणं ।
घञः इति प्रकृतिनिर्देशः ।
इति करणो विवक्षार्थः ।
घञन्तात्क्रियावाचिनः प्रथमासमर्थादस्यां इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रययो भवति ।
घञः इति कृद्-ग्रहणम्, तत्र गतिकारक-पूर्वं अपि गृह्यते ।
श्येनपातोऽस्यां वर्तते श्यैनंपाता ।
तैलंपाता घञः इति किं ? श्येनपतनं अस्यां वर्तते ।
क्रिया इति किं ? प्राकारोऽस्यां वर्तते ।
अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात्पुनरुपादियते, यावता द्वयं अपि प्रकृतं एव ? क्रीडायां इत्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत ।
सामान्येन च+इदं विधानं ।
दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः ।
मौसलपाता तिथिः । ।

---

1. <तदधीते तद्वेद># । । PS_४,२.५९ । ।

_______Sठा~ठ्JKव्_४,२.५९ः

तितिति द्वितीयासमर्थातधीते वेद इत्येतयोः अर्थयोः यथाविहितं प्रत्ययो भवति ।
छन्दोऽधीते छान्दसः ।
वैयाकरणः ।
नैरुक्तः ।
निमित्तानि वेद नैमित्तः ।
मौहूर्तः ।
औत्पातः ।
द्विस्तद्-ग्रहणं अधीयानविदुषोः पृथग्-निधान-अर्थं । ।

---

[#३७८]

1. <क्रतु-उक्थादि-सूत्रान्ताट्ठक्># । । PS_४,२.६० । ।

______Sठा~ठ्JKव्_४,२.६०ः

क्रतुविशेष-वाचिभ्यः उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन्विषये ।
अणोऽपवादः ।
अग्निष्टोमं अधीते वेद वा आग्निष्टोमिकः ।
वाजपेयिकः ।
उक्थादिभ्यः - औक्थिकः ।
लौकायतिकः ।
सूत्रान्तात्- वार्त्तिकसूत्रिकः ।
साङ्ग्रहसूत्रिकः ।
सूत्रान्तादकल्पादेरिष्यते ।
कल्पसूत्रं अधीते काल्पसूत्रः ।
अणेव भवति ।
उक्थ-शब्दः केषुचिदेव सामसु रूढः ।
यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि, सामलक्षणे औक्थिक्ये वर्तमानः उक्थ-शब्दः प्रत्ययं उत्पादयति ।
उक्थं अधीते औक्थिकः ।
औक्थिक्यं अधीते इत्यर्थः ।
औक्थिक्य-शब्दाच्च प्रत्ययो न भवत्येव, अनभिधानाथ् ।
विद्यालक्षण-कल्पसूत्रान्तादिति वक्तव्यं ।
वायसविद्यिकः ।
सार्पविद्यिकः ।
गौलक्षणिकः ।
आश्वलक्षणिकः ।
मातृकल्पिकः ।
पाराशरकल्पिकः ।
विद्या च न अङ्ग-क्षत्र-धर्म-संसर्ग-त्रि-पूर्वा ।
अङ्गविद्यां अधीते आङ्गविद्यः ।
क्षात्रविद्यः ।
धार्मविद्यः ।
सांसर्गविद्यः ।
त्रैविद्यः ।
आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः ।
आख्यानाख्यायीकयोरर्थ-ग्रहणम्, इतिहास-पुराणयोः स्वरूप-ग्रहणं यावक्रीतिकः ।
प्रैयङ्गविकः ।
वासवदत्तिकः ।
स्ॐअनोत्तरिकः ।
ऐतिहासिकः ।
पौराणिकः ।
सर्वसादेर्द्विगोश्च लः ।
सर्ववेदः ।
सर्वतन्त्रः ।
सादेः - सवार्त्तिकः ।
ससङ्ग्रहः ।
द्विगोः - द्विवेदः ।
पञ्चव्याकरणः ।
अनुसूर्लक्ष्यलक्षणे च ।

अनुसूर्नामग्रन्थः, तं अधीते आनुसुकः ।
लाक्षिकः ।
लाक्षणिकः ।
इकन्बहुलं पदोत्तरपदाथ् ।
पूर्वपदिकः ।
शतषष्टेः षिकन्पथो बहुलं ।
शतपथिकः ।
शतपथिकी ।
षष्टिपथिकः ।
षष्टिपथिकी ।
बहुल-ग्रहणादणपि भवति ।
शातपथः ।
षाष्टिपथः ।
उक्थ ।
लोकायत ।
न्याय ।
न्यास ।
निमित्त ।
पुनरुक्त ।
निरुक्त ।
यज्ञ ।
चर्चा ।
धर्म ।
क्रमेतर ।
श्लक्ष्ण ।
संहिता ।
पद ।
क्रम ।
सङ्घात ।
वृत्ति ।
सङ्ग्रह ।
गुणागुण ।
आयुर्वेद ।
सूत्रान्तादकल्पादेः ।
विद्यालक्षणकल्पान्ताथ् ।
विद्याचानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा ।
आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् ।
सर्वसादेर्द्विगोश्च लः ।
अनुसूर्लक्ष्यलक्षणे च ।
द्विपदि ज्योतिषि ।
अनुपद ।
अनुकल्प ।
अनुगुण ।
इकन्बहुलं पदोत्तरपदाथ् ।
शतषष्टेः षिकन् ।
पथो बहुलं ।।

---

1. <क्रमादिभ्यो वुन्># । । PS_४,२.६१ । ।

_______Sठाऽठ्JKव्_४,२.६१ः

क्रम इत्येवं आदिभ्यः शब्देभ्यः वुन्प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन्विषये ।
अणोऽपवादः ।
क्रमकः ।
पदकः ।
क्रम ।
पद ।
शिक्षा ।
मीमंसा ।
सामन् । ।

---

[#३७९]

1. < अनुब्राह्मणादिनिः># । । PS_४,२.६२ । ।

_______Sठाऽठ्JKव्_४,२.६२ः

अनुब्राह्मण-शब्दातिनिः प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन्विषये ।
अणोऽपवादः ।
ब्राह्मण-सदृशोऽयं ग्रन्थः अनुब्राह्मणं ।
तदधीते अनुब्राह्मणी ।
अनुब्राह्मणिनौ, अनुब्राह्मणिनः ।
मत्त्वर्थेन अत इनि-ठनौ (*५,२.११५) इति इनिना सिद्धं ? तत्र+एतस्माड्डन्नपि प्राप्नोति ।
अनभिधानान्न भविष्यति ? अणो निवृत्त्य्-अर्थं तर्हि वचनं । ।

---

1. < वसन्तादिभ्यष्ठक्># । । PS_४,२.६३ । ।

_______Sठाऽठ्JKव्_४,२.६३ः

वसन्त इत्येवं आदिभ्यः ठक्प्रत्ययो भवति तदधीते तद्वेद इत्यस्मिन्विषये ।
अणोऽपवादः ।

वसन्त-सहचरितोऽयं ग्रन्थः वसन्तः ।
तं अधीते वासन्तिकः ।
वार्षिकः ।
वसन्त ।
वर्षाशरदं ।
हेमन्त ।
शिशिर ।
प्रथम ।
गुण ।
चरम ।
अनुगुण ।
अपर्वन् ।
अथर्वन् । ।

---

1. <प्रोक्ताल्लुक्># । । PS_४,२.६४ । ।

______Sठा~ठ्JKव्_४,२.६४ः

प्रोक्त-सहचरितः प्रत्ययः प्रोक्तः ।
प्रोक्त-प्रत्ययान्तादध्येतृवेदित्रोः उत्पन्नस्य लुग्भवति ।
पाणिनिना प्रोक्तं पाणिनीयं ।
तदधीते पाणिनीयः ।
आपिशलः ।
स्त्रियां स्वरे च विशेषः ।
पाणिनीया ब्राह्मणी । ।

---

1. < सूत्राच्च क+उपधात्># । । PS_४,२.६५ । ।

______Sठा~ठ्JKव्_४,२.६५ः

सूत्र-वाचिनः क-कार+उपधादुपन्नस्य प्रत्ययस्य लुग्भवति ।
अप्रोक्त-अर्थ आरम्भः ।
पाणिनीयं अष्टकं सूत्रं ।
तदधीयते अष्टकाः पाणिनीयाः ।
दशका वैयघ्रपदीयाः ।
त्रिकाः काशकृत्स्नाः ।
सङ्ख्याप्रकृतेरिति वक्तव्यं ।
इह मा भूत्, महावार्त्तिकं सूत्रं अधीते माहावार्त्तिकः ।

कालापकं अधीते कालापकः ।
कोपधातिति किं ? चतुष्टयं अधीते चातुष्टयः । ।

---

1. < छन्दो-ब्राह्मणानि च तद्-विषयाणि># । । PS_४,२.६६ । ।

_______Sठान्ठ्JKव्_४,२.६६ः

प्रोक्त-ग्रहणं अनुवर्तते ।
छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति ।
अध्येतृवेदितृत्ययविषयाणि ।
अनन्यभावो विषय-अर्थः ।
तेन स्वातन्त्र्यं उपाध्यान्तरयोगो वक्यं च निवर्तते ।

[#३८०]

कठेन प्रोक्तं अधीयते कठाः ।
मौदाः ।
पैप्पलादाः ।
आर्चाभिनः ।
वाजसनेयिनः ।
ब्राह्मणानि खल्वपि - ताण्डिनः ।
भाल्लविनः ।
शाट्यायनिनः ।
ऐतरेयिणः ।
ब्राह्मण-ग्रहणं किं, यावता छन्द एव तद्? ब्राह्मणविशेष-प्रतिपत्त्य्-अर्थं ।
इह तद्विषयता मा भूत्, याज्ञवल्क्येन प्रोक्तानि ब्राह्मन्णानि याज्ञवल्क्यानि ।
सौलभानि ।
चकारोऽनुक्त-समुच्चय-अर्थः ।
कल्पे - काश्यपिनः ।
कौशिकिनः ।
सूत्रे - पाराशरिणो भिक्षवः ।
शैलालिनो नटाः ।
कर्मन्दिनः ।
कृशाश्विनः ।
छन्दो-ब्राह्मणानि इति किं ? पाणिनीयं व्याकरणं ।
पैङ्गी कल्पः । ।

---

1. <तदस्मिन्नस्ति इति देशे तन्नाम्नि># । । PS_४,२.६७ । ।

_______Sठा-ठ्JKव्_४,२.६७ः

ततिति प्रथमा समर्थविभक्तिः ।
अस्मिनिति प्रत्ययार्थः ।
अस्ति ईत्प्रकृत्यर्थ-विशेषणं ।
इति-करणो विवक्ष-अर्थः ।
देशे तन्नम्नि इति प्रत्ययार्थ-विशेषणं ।
ततिति रथमासमर्थादस्मिनिति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं अस्ति चेत्तद्भवति यदस्मिनिति निर्दिष्टं देशश्चेत्स तन्नामा भवति, प्रत्ययान्तनामा, इति-करणस्ततश्चेद्विवक्षा ।
उदुम्बरा अस्मिन्देशे सन्ति औदुम्बरः ।
बाल्बजः ।
पार्वतः ।
मत्वर्थीयापवादो योगः । ।

---

1. <तेन निर्वृत्तम्># । । PS_४,२.६८ । ।

_______Sठा-ठ्JKव्_४,२.६८ः

तेन इति तृतीयासमर्थात्निर्वृत्तं इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने ।
देशे तन्नम्नि इति चतुर्ष्वपि योगेषु सम्बध्यते ।
सहस्रेण निर्वृत्ता साहस्री परिखा ।
कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ।
हेतौ कर्तरि च यथायोगं तृतीया समर्थ-विभक्तिः । ।

---

1. <तस्य निवासः># । । PS_४,२.६९ । ।

_______Sठा-ठ्JKव्_४,२.६९ः

तस्य इति षष्ठीसमर्थान्निवासः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने ।
निवसन्त्यस्मिन्निति निवासः ।
ऋजुनावां निवासो देशः आर्जुनावो देशः ।
शैबः ।
शुदिष्ठः । ।

---

1. <अदूरभवश्च># । । PS_४,२.७० । ।

______Sठाञ्ठJKव्_४,२.७०ः

पूर्वा समर्थविभक्तिरनुवर्तते ।
तस्य इति षष्ठीसमर्थातदूरभवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
विदिशायाः अदूरभवं नगरं वैदिशं ।
हैमवतं ।
चकारः पूर्वेषां त्रयाणां अर्थानां इह सन्निधान-अर्थः ।
तेन+उत्तरेषु ।
चत्वारोऽप्यर्थाः सम्बध्यन्ते । ।

---

[#३८१]

1. <ओरञ्># । । PS_४,२.७१ । ।

______Sठाञ्ठJKव्_४,२.७१ः

चत्वारोऽर्थाः अनुवर्तन्ते ।
उ-वर्णान्तात्प्रातिपदिकात्यथविहितं समर्थविभक्ति-युक्तातञ्प्रत्ययो भवति तदस्मिन्नस्ति इत्येवं आदिष्वर्थेषु ।
अणोऽपवादः ।
अरडु - आरडवं ।
कक्षतु - काक्षतवं ।
कर्कटेलु - कार्कटेलवं ।
नद्यां तु परत्वान्मतुब्भवति ।
इक्षुमती ।
अञ्रधिकारः प्राक्सुबास्त्वादिभ्योऽणः । ।

---

1. <मतोश्च बह्व्-अज्-अङ्गात्># । । PS_४,२.७२ । ।

______Sठाञ्ठJKव्_४,२.७२ः

बह्वचङ्गं यस्य असौ बह्वजङ्गओ मतुप्, तदन्तात्प्रातिपदिकातञ्प्रत्ययो भवति चातुरर्थिकः ।
अणोऽपवादः ।

ऐषुकावतं।
सैध्राकावतं।
बह्वजङ्गातिति किं? आहिमतं।
यावमतं।
अङ्ग-ग्रहणं बह्वजिति तद्विशेषणं यथा विज्ञायते, मत्वन्त-विशेषणं मा विज्ञायि इति।
मालावतां निवासो मालावतं॥

---

1. <बह्व्-अचः कूपेषु># ॥ PS_४,२.७३ ॥

_______Sठाऺठ्JKव्_४,२.७३ः

बह्वचः प्रातिपदिकातञ्प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेसु।
अणोऽपवादः।
यथासम्भवमर्थाः सम्बध्यन्ते।
दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः।
कापिलवरत्रः॥

---

1. <उदक्च विपाशः># ॥ PS_४,२.७४ ॥

_______Sठाऺठ्JKव्_४,२.७४ः

विपाशः उत्तरे कूले ये कूपास्तेष्वभिधेयेषु अञ्प्रत्ययो भवति चातुरर्थिकः।
अणोऽपवादः।
अबह्वज्-अर्थ आरम्भः।
दत्तेन निर्वृतः कूपः दात्तः।
गौप्तः।
उदकिति किं? दक्षिणतो विपाशः कूपेषु अणेव दात्तः।
गौप्तः।
स्वरे विशेषः।
महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य॥

---

1. <सङ्कलादिभ्यश्च># ॥ PS_४,२.७५ ॥

_______Sठा~ठ्JKव्_४,२.७५ः

कूपेषु इति निवृत्तं ।
सङ्कल इत्येवं आदिभ्यः अञ्प्रत्ययो भवति चातुरर्थिकः ।
अणोऽपवादः ।
यथासम्भवं अर्थसम्बन्धः ।
सङ्गतः कलः सङ्कलः ।
सङ्क्लेन निर्वृत्तः साङ्कलः ।
पौष्कलः ।

[#३८२]

सङ्कल ।
पुष्कल ।
उद्वप ।
उडुप ।
उत्पुट ।
कुम्भ ।
विधान ।
सुदक्ष ।
सुदत्त ।
सुभूत ।
सुनेत्र ।
सुपिङ्गल ।
सिकता ।
पूतीकी ।
पूलस ।
कूलास ।
पलाश ।
निवेश ।
गवेष ।
गम्भीर ।
इतर ।
शर्मन् ।
अहन् ।
लोमन् ।
वेमन् ।
वरुण ।
बहुल ।
सद्योज ।
अभिषिक्त ।
गोभृथ् ।
राजभृथ् ।
गृह ।
भृत ।
भल्ल ।
माल ।

वृत् ।।

---

1. <स्त्रीषु सौवीर-साल्व-प्राक्षु># ।। PS_४,२.७६ ।।

_______Sठाञ्ठJKव्_४,२.७६ः
देशे तन्नम्नि इत्यस्य विशेषनं सौवीरादयः, स्त्रीत्वं च ।
ङ्याप्प्रातिपदिकातञ्प्रत्ययो भवति चातुरर्थिकः, अणोऽपवादः, सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि ।
सौवीरे तावत्- दत्तमित्रेण निर्वृत्ता नगरी दात्तामित्री ।
साल्वे - विधूमाग्निना निर्वृत्ता वैधूमाग्नी ।
प्राचि खल्वपि - ककन्देन निर्वृत्ता काकन्दी ।
माकन्दी ।
मणिचरी ।
जारुषी ।।

---

1. <सुवास्त्व्-आदिभ्योऽण्># ।। PS_४,२.७७ ।।

_______Sठाञ्ठJKव्_४,२.७७ः

सुबास्तु इत्येवं आदिभ्यः अण्प्रत्ययो भवति चातुरर्थिकः ।
अत्र उ-वर्णान्त-लक्षणस्य कूप-लक्षणस्य च अपवादः ।
सुवास्तोः अदूरभवं नगरं सौवास्तवं ।
वार्णवं ।
अण्ग्रहणं नद्यां मतुपो बाधन-अर्थं ।
सौवास्तवी नदी ।
सुवास्तु ।
वर्णु ।
भण्डु ।
खण्डु ।
सेचालिन् ।
कर्पूरिन् ।
शिखण्डिन् ।
गर्त ।
कर्कश ।
शटीकर्ण ।
कृष्ण ।
कर्क ।
कर्ङ्कधू मती ।
गोह्य ।

अहिसक्थ ।
वृत् । ।

---

1. <रोणी># । । PS_४,२.७८ । ।

_______Sठाऽ्ठJKव्_४,२.७८ः

रोणीशब्दादन्प्रत्ययो भवति चातुरर्थिकः ।
यथासम्भवं अर्थसम्बन्धः ।
कूपलक्षणस्य अञोऽपवादः ।
रोणी इति कोऽयं निर्देशो, यावता प्रत्ययविधौ पञ्चमी युक्ता ? सर्वावस्थप्रतिपत्त्यर्थं एवं उच्यते ।
रोणी-शब्दः सर्ववस्थोऽण्-प्रत्ययं उत्पादयति, केवलस्तदन्तश्च ।
रौणः ।
आजकरोणः ।
सैहिकरोणः । ।

---

[#३८३]

1. <क-उपधाच्च># । । PS_४,२.७९ । ।

_______Sठाऽ्ठJKव्_४,२.७९ः

क-कार-उपधात्च प्रातिपदिकातन्प्रत्ययो भवति चातुरर्थिकः ।
यथासम्भवं अर्थसम्बन्धः ।
कूप-लक्षणस्य+उवर्नल्-अक्षणस्य च अञोऽपवादः ।
कार्णच्छिद्रिकः कूपः ।
कार्णवेष्टकः ।
कृकवाकुना निर्वृत्तं कार्कवाकवं ।
त्रैशङ्कवं । ।

---

1. <वुञ्-छण्-क-ठज्-इल-स-इनि-र-ढ ण्य-य-फक्-फिञ्-इञ्-ञ्य-कक्-ठकोऽरीहण-कृशाश्व-र्श्य-कुमुद-काश-तृण-प्रेक्षा-अश्म-सखि-सङ्काश-बल-पक्ष-कर्ण-सुतङ्गम-प्रगदिन्-वराह-कुमुद-आदिभ्यः># । । PS_४,२.८० । ।

______Sठा\ठ्JKव्_४,२.८०ः

वुञादयः स्पतदश प्रत्ययाः, अरीहणादयोऽपि सप्तदश+एव प्रातिपदिकगणाः ।
आदि-शब्दः प्रत्येकं अभिसम्बध्यते ।
तत्र यथासङ्ख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्ययाः भवन्ति चातुरर्थिकाः ।
अणोऽपवादः ।
यथासम्भवमर्थसम्बन्धः ।
अरीहणादिभ्यो वुञ्प्रत्ययो भवति ।
आरीहणकं ।
द्रौघणकं ।
अरीहण ।
द्रुघण ।
खदिर ।
सार ।
भगल ।
उलन्द ।
साम्परायण ।
क्रौष्ट्रायण ।
भास्त्रयण ।
मैत्रायण ।
त्रैगर्तायन ।
रायस्पोष ।
विपथ ।
उद्दण्ड ।
उदञ्चन ।
खाडायन ।
खण्ड ।
वीरण ।
काशकृत्स्न ।
जाम्बवन्त ।
शिंशिपा ।
किरण ।
रैवत ।
बैल्व ।
वैमतायन ।
सौसायन ।
शाण्दिल्यायन ।
शिरीष ।
बधिर ।
अरीहणादिः ।
कृशाश्वादिभ्यः छण्प्रत्ययो भवति ।
कार्शाश्वीयः ।
आरिष्टीयः ।
कृशाश्व ।
अरिष्ट ।
अरीश्व ।
वेश्मन् ।

विशाल ।
रोमक ।
शबल ।
कूट ।
रोमन् ।
वर्वर ।
सुकर ।
सूकर ।
प्रतर ।
सुदृश ।
पुरग ।
सुख ।
धूम ।
अजिन ।
विनता ।
अवनत ।
विकुघास ।
अरुस् ।
अवयास ।
मौद्गल्य ।
कृशाश्वादिः ।
ऋश्यादिभ्यः कः प्रत्ययो भवति ।
ऋश्यकः ।
न्यग्रोधकः ।
ऋश्य ।
न्यग्रोध ।
शिरा ।
निलीन ।
निवास ।
निधान ।
निवात ।
निबद्ध ।
विबद्ध ।
परिगूढ ।
उपगूढ ।
उत्तराश्मन् ।
स्थूलबाहु ।
खदिर ।
शर्करा ।
अनडुः ।
परिवंश ।
वेणु ।
वीरण ।
ऋश्यादिः ।
कुमुदादिभ्यः ठच्प्रत्ययो भवति ।
कुमुदिकं ।
शर्करिकं ।
कुमुद ।
शर्करा ।

न्यग्रोध ।
इत्कट ।
गर्त ।
बीज ।
अश्वत्थ ।
बल्वज ।
परिवाप ।
शिरीष ।
यवाष ।
कूप ।
विकङ्कत ।
कुमुदादिः ।

[#३८४]

काशादिभ्य इलः प्रत्ययो भवति ।
काशिलं ।
वाशिलं ।
काश ।
वाश ।
अश्वत्थ पलाश ।
पीयूष ।
विश ।
तृण ।
नर ।
चरण ।
कर्दम ।
कर्पूर ।
कण्टक ।
गृह ।
काशादिः ।
तृणादिभ्यः शः प्रत्ययो भवति ।
तृणशः ।
नडशः ।
तृण ।
नड ।
बुस ।
पर्ण ।
वर्ण ।
चरण ।
अर्ण ।
जन ।
बल ।
लव ।
वन ।
तृणादिः ।
प्रेक्षादिभ्य इनि-प्रत्ययो भवति ।
प्रेक्षी ।
हलकी ।

प्रेक्षा ।
हलका ।
बन्धुका ।
ध्रुवका ।
क्षिपका ।
न्यग्रोध ।
इर्कुट ।
प्रेक्षादिः ।
अश्मादिभ्यो रप्रत्ययो भवति ।
अश्मरः ।
अश्मन् ।
यूष ।
रूष ।
मीन ।
दर्भ ।
वृन्द ।
गुड ।
खण्ड ।
नग ।
शिखा ।
अश्मादिः ।
सख्यादिभ्यो ढञ्प्रत्ययो भवति ।
साखेयं ।
साखिदत्तेयं ।
सखि ।
सखिदत्त ।
वायुदत्त ।
गोहित ।
भल्ल ।
पाल ।
चक्रपाल ।
चक्रवाल ।
छङ्गल ।
अशोक ।
करवीर ।
सीकर ।
सकर ।
सरस ।
समल ।
सख्यादिः ।
संकाशादिभ्यो ण्यप्रत्ययो भवति ।
सांकाश्यं ।
कम्पिल्यं ।
संकाश ।
काम्पिल्य ।
समीर ।
कश्मर ।
शूरसेन ।
सुपथिन् ।

सक्थच ।
यूप ।
अंश ।
एग ।
अश्मन् ।
कूट ।
मलिन ।
तीर्थ ।
अगस्ति ।
विरत ।
चिकार ।
विरह ।
नासिका ।
संकाशादिः ।
बलादिभ्यो यः प्रत्ययो भवति ।
बल्यः ।
कुल्यं ।
बल ।
वुल ।
तुल ।
उल ।
डुल ।
कवल ।
वन ।
कुल ।
बलादिः ।
पक्षादिभ्यः फक्प्रत्ययो भवति ।
पाक्षायणः ।
तौषायनः ।
पक्ष ।
तुष ।
अण्ड ।
कम्बलिक ।
चित्र ।
अश्मन् ।
अतिस्वन् ।
पथिन्पन्थ च ।
पक्षादिः ।
कर्णादिभ्यः फिञ्प्रत्ययो भवति ।
कार्णायनिः ।
वासिष्ठायनिः ।

[#३८५]

कर्ण ।
वसिष्ठ ।
अलुश ।
शल ।
डुपद ।

अनडुह्य ।
पाञ्चजन्य ।
स्थिरा ।
कुलिश ।
कुम्भी ।
जीवन्ती ।
जित्व ।
अण्डीवथ् ।
कर्णादिः ।
सुतङ्गमादिभ्य इञ्प्रत्ययो भवति ।
सौतङ्गमिः ।
मौनिचित्तिः ।
सुतङ्गम ।
मुनिचित्त ।
विप्रचित्त ।
महापुत्र ।
श्वेत ।
गडिक ।
शुक्र ।
विग्र ।
बीजवापिन् ।
श्वन् ।
अर्जुन ।
अजिर ।
जीव ।
सुतङ्गमादिः ।
प्रगदिन्नादिभ्यः ञ्यः प्रत्ययो भवति ।
प्रागद्यं ।
प्रगदिन् ।
मगदिन् ।
शरदिन् ।
कलिव ।
खडिव ।
गडिव ।
चूडार ।
मार्जार ।
कोविदार ।
प्रगद्यादिः ।
वराहादिभ्यः कक्प्रत्ययो भवति ।
वाराहकं ।
पालाशकं ।
वराह ।
पलाश ।
शिरीष ।
पिनद्ध ।
स्थूण ।
विदग्ध ।
विजग्ध ।
विभग्न ।

बाहु ।
खदिर ।
शर्करा ।
वराहादिः ।
कुमुदादिभ्यः ठक्प्रत्ययो भवति ।
क्ॐउदिकं ।
कुमुद ।
गोमथ ।
रथकार ।
दशग्राम ।
अश्वत्थ ।
शाल्मली ।
कुण्डल ।
मुनिस्थूल ।
कूट ।
मुचुकर्ण ।
कुमुदादिः ।
शिरीष-शब्दोऽरीहणादिषु, कुमुदादिषु, वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल्लुब्भवति ।
तथा च+उक्तम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनं इति । ।

---

1. <जनपदे लुप्># । । PS_४,२.८१ । ।

______Sठा~ठ्JKव्_४,२.८१ः

देशे तन्नाम्नि यश्चातुरर्थिकः प्रत्ययः भवति, तस्य देशविशेषे अनपदेऽभिधेये लुब्भवति ।
ग्रामसमुदायो जनपदः ।
पञ्चालानां निवासो जनपदः पञ्चालाः ।
कुरवः ।
मत्स्याः ।
अङ्गाः ।
बङ्गाः ।
मगधाः ।
सुह्माः ।
पुण्ड्राः ।
इह कस्मान्न भवति, उदुम्बराः अस्मिन्सन्ति औदुम्बरो जनपदः, वैदिशो जनपदः इति ? तन्नाम्नि इति वर्तते ।
न च अत्र लुबन्तं तन्नामधेयं भवति । ।

---

1. <वरण-आदिभ्यश्च># । । PS_४,२.८२ । ।

______Sठाञ्ठ्JKव्_४,२.८२ः

वरण इत्येवं आदिभ्यः उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुप्भवति ।
अजनपदार्थ आरम्भः ।
वरणानां अदूरभवं नगरं वरणाः ।
शृङ्गी ।
शाल्मलयः ।
चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति ।
कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी ।
शिरीषाः ।
काञ्ची ।
वरणाः ।
पूर्वौ गोदौ ।
आलिङ्ग्यायन ।
पर्णी ।
शृङ्गी ।
शाल्मलयः ।
सदाण्वी ।
वणिकि ।
वणिक ।
जालपद ।
मथुरा ।
उज्जयिनी ।
गया ।
तक्षशिला ।
उरशा ।
अकृत्या । ।

---

[#३८६]

1. <शर्कराया वा># । । PS_४,२.८३ । ।

______Sठाञ्ठ्JKव्_४,२.८३ः

शर्करा-शब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति ।
वा-ग्रहणं किम्, यावता शर्करा-शब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसमर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति ? एवं तर्ह्येतज्ज्ञापयति, शर्करा-शब्दादौत्सर्गिको भवति, तस्य अयं विकल्पितो लुपिति ।
शर्करा ।
शार्करं ।
गणपाठाच्च श्रवणं उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ, तदेवं षड्रूपाणि भवन्ति ।
शर्करा, शार्करम्, शर्करिकम्, शार्करकं , शार्करिकम्, शर्करीयं इति । ।

---

1. <ठक्-छौ च># ।। PS_४,२.८४ ।।

_______Sठा~ठ्JKव्_४,२.८४ः

शर्करा-शब्दात्ठक्छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ ।
यथासम्भवं अर्थसम्बन्धः ।
शार्करिकं ।
शर्करीयं ।।

---

1. <नद्यां मतुप्># ।। PS_४,२.८५ ।।

_______Sठा~ठ्JKव्_४,२.८५ः

नद्यां अभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः ।
तन्नाम्नो देशस्य विशेषणं नदी ।
उदुम्बरा यस्यां सन्ति उदुम्बरवती ।
मशकावती ।
वीरणावती ।
पुष्करावति ।
इक्षुमती ।
द्रुमती ।
इह कस्मान्न भवति, भागीरथी, भैमरथी ? मतुबन्तस्य अतन्नामधेयत्वात् ।।

---

1. <मध्वादिभ्यश्च># ।। PS_४,२.८६ ।।

_______Sठा~ठ्JKव्_४,२.८६ः

मधु इत्येवं आदिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः ।
अनद्यर्थ आरम्भः ।
मधुमान् ।
बिसवान् ।
मधु ।
बिस ।

स्थाणु ।
मुष्टि ।
इक्षु ।
वेणु ।
रम्य ।
ऋक्ष ।
कर्कन्धु ।
शमी ।
किरीर ।
हिम ।
किशरा ।
शर्पणा ।
मरुथ् ।
मरुव ।
दार्वाघाट ।
शर ।
इष्टका ।
तक्षशिला ।
शक्ति ।
आसन्दी ।
आसुति ।
शलाका ।
आमिधी ।
खडा ।
वेटा ।
मध्वादिः । ।

---

1. <कुमुद-नड-वेतसेभ्यो ड्मतुप्># । । PS_४,२.८७ । ।

_______Sठाऽ्ठJKव्_४,२.८७ः

कुमुद नड वेतस इत्येतेभ्यः शब्देभ्यः ड्मतुप्प्रत्ययो भवति चातुरर्थिकः ।
कुमुद्वान् ।
नड्वान् ।
वेतस्वान् ।
महिषाच्च+इति वक्तव्यं ।
महिष्मान्नाम देशः । ।

---

1. <नड-शादाड्ड्वलच्># । । PS_४,२.८८ । ।

_______Sठा~ठ्JKव्_४,२.८८ः

नड-शाद-शब्दाभ्यां ड्वलच्प्रत्ययो भवति चातुरर्थिकः ।
यथासम्भवं अर्थसम्बन्धः ।
नड्वलं ।
शाद्वलं । ।

---

1. <शिखाया वलच्># । । PS_४,२.८९ । ।

_______Sठा~ठ्JKव्_४,२.८९ः

शिखा-शब्दात्वलच्प्रत्ययो भवति चातुरर्थिकः ।
यथासम्भवं अर्थसम्बन्धः ।
शिखावलं नाम नगरं ।
मतुप्-प्रकरणेऽपि शिखाया वलचं वक्ष्यति, तददेशार्थं वचनं । ।

---

1. <उत्करादिभ्यश्छः># । । PS_४,२.९० । ।

_______Sठा~ठ्JKव्_४,२.९०ः

उत्कर इत्येवं आदिभ्यः छः प्रत्ययो भवति चातुरर्थिकः ।
यथासम्भवं अर्थसम्बन्धः ।
उत्करीयं ।
शफरीयं ।
उत्कर ।
संफल ।
शफर ।
पिप्पल ।
पिप्पलीमूल ।
अश्मन् ।
अर्क ।
पर्ण ।
सुपर्ण ।
खलाजिन ।
इडा ।

अग्नि ।
तिक ।
कितव ।
आतप ।
अनेक ।
पलाश ।
तृणव ।
पिचुक ।
अश्वत्थ ।
शकाक्षुद्र ।
भस्त्रा ।
विशाला ।
अवरोहित ।
गर्त ।
शाल ।
अन्य ।
जन्य ।
अजिन ।
मञ्च ।
चर्मन् ।
उत्क्रोश ।
शान्त ।
खदिर ।
शूर्पणाय ।
श्यावनाय ।
नैव ।
बक ।
नितान्त ।
वृक्ष ।
इन्द्रवृक्ष ।
आर्द्रवृक्ष ।
अर्जुनवृक्ष ।
उत्करादिः । ।

---

1. <नडादीनां कुक्च># । । PS_४,२.९१ । ।

______Sठाऱ्ठ्JKव्_४,२.९१ः

नड इत्येवं आदीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः ।
यथासम्भवमर्थसम्बन्धः ।
नडकीयं ।
प्लक्षदीयं ।
नड ।
प्लक्ष ।
बिल्व ।

वेणु ।
वेत्र ।
वेतस ।
तृण ।
इक्षु ।
काष्ठ ।
कपोत ।
क्रुञ्चायां ह्रस्वत्वं च ।
तक्षन्नलोपश्च । ।

---

1. <शेषे># । । PS_४,२.९२ । ।

______Sठाऍ्ठJKव्_४,२.९२ः

शेषे इत्यधिकारोऽयं ।
यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः ।
उपयुक्तादन्यः शेषः ।
अपत्यादिभ्यश्चतुरर्थ-पर्यन्तेभ्योऽन्योऽर्थः ।
शेषः ।
तस्य इदं विशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवनिति शेषाधिकारः क्रियते ।
किं च सर्वेषु जातादिषु घादयो यथा स्युः अनन्तरेण+एवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायि इति साकल्यार्थं शेष-वचनं ।

---

वक्ष्यति -

1. <राष्ट्र-अवारपाराद्घ-खौ># । । PS_४,२.९३ । ।

______Sठाऍ्ठJKव्_४,२.९३ः

राष्ट्रियः ।
अवारपारीणः ।

[#३८८]

शेषे इति लक्षणं च अधिकारश्च ।
चक्षुषा गृह्यते चाक्षुषं रूपं ।
श्रावणः शब्दः ।
दृषदि पिष्टाः दार्षदाः सक्तवः ।
उलूखले क्षुण्णः औलूखलो यावकः ।

अश्वैरुह्यते आश्वो रथः।
चतुर्भिरुह्यते चातुरं शकटं।
चतुर्दश्यां दृश्यते चातुर्दशं रक्षः इति।।

---

1. <राष्ट्र-अवारपाराद्घ-खौ>#।। PS_४,२.९४।।

______Sठा~ठ्JKव्_४,२.९४ः

राष्ट्र अवारपार इत्येताभ्यां यथासङ्ख्यं घ-खौ इत्येतौ प्रत्ययौ भवतः।
राष्ट्रियः।
अवारपारीणः।
विगृहीतादपि इष्यते।
अवारीणः।
पारीणः।
विपरीताच्च।
पारावारीणः।
प्रकृति-विशेष+उपादान-मात्रेण तावत्प्रत्यया विधीयन्ते।
तेषां तु जातादयोऽर्थाः समर्थ-विभक्तयश्च पुरस्ताद्वक्ष्यन्ते।।
ग्रामाद्यखञौ (*४,२.९३)।
ग्राम-शब्दात्य खञित्येतौ प्रत्ययौ भवतः।
ग्राम्यः, ग्रामीणः।।

---

1. <कत्र्य्-आदिभ्यो ढकञ्>#।। PS_४,२.९५।।

______Sठा~ठ्JKव्_४,२.९५ः

कत्रि इत्येवं आदिभ्यो ढकञ्प्रत्ययो भवति।
कात्रेयकः।
ॐभेयकः।
कत्रि।
उम्भि।
पुष्कर।
मोदन।
कुम्भी।
कुण्डिन।
नगर।
वञ्जी।
भक्ति।
माहिष्मती।

चर्मण्वती ।
ग्राम ।
उख्या ।
कुड्याया यलोपश्च ।
कत्र्यादिः । ।

---

1. <कुल-कुक्षि-ग्रीवाभ्यः श्व-अस्य्-अलङ्कारेषु># । । PS_४,२.९६ । ।

______Sठा~ठ्JKव्_४,२.९६ः

कुल-कुक्षि-ग्रीवा-शब्देभ्यो यथासङ्ख्यं श्वनसि अलङ्कार इत्येतेषु जतादिष्वर्थेषु ढकञ्प्रत्ययो भवति ।
कौलेयको भवति श्वा चेथ् ।
कौलोऽन्यः ।
कौक्षेयको भवति असिश्चेथ् ।
कौक्षोऽन्यः ।
ग्रैवेयको भवति अलङ्कारश्चेथ् ।
ग्रैवोऽन्यः । ।

---

[#३८९]

1. <नद्य्-आदिभ्यो ढक्># । । PS_४,२.९७ । ।

______Sठा~ठ्JKव्_४,२.९७ः

नदी इत्येवं आदिभ्यो ढक्प्रत्ययो भवति ।
नादेयं ।
माहेयं ।
पूर्वनगरी-शब्दोऽत्र पठ्यते ।
पौर्वनगरेयं ।
केचित्तु पूर्वनगिरी इति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति, पौरेयम्, वानेयम्, गैरेयं इति ।
तदुभयं अपि दर्शनं प्रमाणं ।
नदी ।
मही ।
वाराणसी ।
श्रावस्ती ।
कौशाम्बी ।
नवकौशाम्बी ।
काशफरी ।

खादिरी ।
पूर्वनगरी ।
पावा ।
मावा ।
साल्वा ।
दार्वा ।
दाल्वा ।
वासेनकी ।
वडवाया वृषे । ।

---

1. <दक्षिणा-पश्चात्-पुरसस्त्यक्># । । PS_४,२.९८ । ।

______Sठा~ठJKव्_४,२.९८ः

दक्षिणा पश्चात्पुरसित्येतेभ्यः त्यक्प्रययो भवति शैषिकः ।
दाक्षिणात्यः ।
पाश्चात्यः ।
पौरस्त्यः । ।

---

1. <कापिश्याः ष्फक्># । । PS_४,२.९९ । ।

______Sठा~ठJKव्_४,२.९९ः

कापिशी-शब्दात्ष्फक्प्रत्ययो भवति शैषिकः ।
षकारो ङीष्-अर्थः ।
कापिशायनं मधु ।
कापिशायनी द्राक्षा ।
बाह्ल्युर्दिपर्दिभ्यश्च+इति वक्तव्यं ।
बाह्लायनी ।
और्दायनी ।
पार्दायनी । ।

---

1. <रङ्कोरमनुष्येऽण्च># । । PS_४,२.१०० । ।

______Sठा~ठ्JKव्_४,२.१००:

रङ्कु-शब्दादण्प्रत्ययो भवति, चकारात्ष्फक्च शैषिकोऽमनुस्येऽभिधेये।
राङ्कवो गौः, राङ्कवायणो गौः।
अमनुस्ये इति किं? राङ्कवको मनुस्यः।
ननु च रङ्कु-शब्दः कच्छादिषु पठ्यते, तत्र च मनुष्य-तस्थयोर्वुञ्(*४,२.१३४) इति मनुस्ये परत्वादवुञैव भवितव्यं, कच्छादिपाठादमनुस्ये अणपि सिद्धः, किं इह मनुस्य-प्रतिषेधेन अण्ग्रहनेन च? तदुच्यते, न+एव अयं मनुस्यप्रतिषेधः, किं तर्हि, नञिवयक्तन्यायेन मनुस्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते।
तेन राङ्कवः कम्बलः इति ष्फक्न भवति।
विशेषविहितेन च ष्फका अणो बाधा मा भूतित्यण्-ग्रहणं अपि क्रियते।।

---

1. <द्यु-प्राग्-अपाग्-उदक्-प्रतीचो यत्>#।। PS_४,२.१०१।।

______Sठा~ठ्JKव्_४,२.१०१:
दिव्प्राचपाचुदचप्रत्यचित्येतेभ्यो यत्प्रत्ययो भवति शैसिकः।
दिव्यं।
प्राच्यं।
अपाच्यं।
उदीच्यं।
प्रतीच्यं।
अव्ययात्तु कालवाचिनः परत्वाट्ट्युट्युलौ भवतः।
प्राक्तनं।।

---

[#३९०]

1. <कन्थायाष्ठक्>#।। PS_४,२.१०२।।

______Sठा~ठ्JKव्_४,२.१०२:

कन्था-शब्दात्ठक्प्रत्ययो भवति शैषिकः।
कान्थिकः।।

---

1. <वर्णौ वुक्># । । PS_४,२.१०३ । ।

_______Sठा~ठ्JKव्_४,२.१०३ः

कन्थायाः इत्येव ।
वर्णौ या कन्था तस्या वुक्प्रत्ययो भवति शैषिकः ।
ठकोऽपवादः ।
वर्णुर्नाम नदः, तत्समीपो देशो वर्णुः ।
तद्विषयार्थ-वाचिनः कन्था-शब्दादयं प्रत्ययः ।
तथा हि - जातं हिमवत्सु कान्थकं । ।

---

1. <अव्ययात्त्यप्># । । PS_४,२.१०४ । ।

_______Sठा~ठ्JKव्_४,२.१०४ः

अव्ययात्त्यप्प्रत्ययो भवति शैषिकः ।
अमेहक्वतसित्रेभ्यस्त्यद्विधिर्योऽव्ययात्स्मृतः ।
निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा । ।
अमात्यः ।
इहत्यः ।
क्वत्यः ।
इतस्त्यः ।
तत्रत्यः ।
यत्रत्यः ।
परिगणनं किं ? औपरिष्टः पौरस्तः ।
पारस्तः ।
वृद्धात्तुधो भवति ।
आरातीयः ।
त्यब्नेर्ध्रुवे ।
नियतं ध्रुवं नित्यं ।
निसो गते ।
निर्गतो वर्णाश्रमेभ्यः निष्ट्यः चण्डालादिः ।
आविसश्छन्दसि ।
आविस्शब्दाच्छन्दसि त्यप्प्रत्ययो भवति ।
आविष्ट्यो वर्धते चारुरासु ।
अरण्याण्णो वक्तव्यः ।
आरण्याः सुमनसः ।
दूरादेत्यः ।
दूरेत्यः पथिकः ।
उत्तरादाहञ् ।
औत्तराहं । ।

---

[#३९१]

1. <ऐषमेओ-ह्यः-श्वसोऽन्यतरस्याम्># । । PS_४,२.१०५ । ।

_______Sठाञ्ठ्JKव्_४,२.१०५ः

ऐषमश्यस्श्वसित्येतेभ्योऽन्यतरस्यां त्यप्पत्ययो भवति शैषिकः ।
ऐषमस्त्यम्, ऐषमस्तनं ।
ह्यस्त्यम्, ह्यस्तनं ।
श्वस्त्यम्, श्वस्तनं ।
श्वसस्तुट्च (*४,३.१५) इति ठञपि तृतीयो भवति ।
शौवस्तिकं । ।

---

1. <तीर-रूप्य-उत्तरपदादञ्-ञौ># । । PS_४,२.१०६ । ।

_______Sठाञ्ठ्JKव्_४,२.१०६ः

तीर-उत्तरपदात्रूप्य-उत्तरपदाच्च प्रातिपदिकाद्यथासङ्ख्यं अञ्ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ ।
अणोऽपवादौ ।
काकतीरं ।
पाल्वलतीरं ।
रूप्योत्तरपदात्- वार्करूप्यं ।
शैवरूप्यं ।
तीररूप्यान्तातिति नोक्तं बहुच्-प्रत्यय-पूर्वान्मा भूतिति ।
बाहुरूप्यं ।
अणेव भवति । ।

---

1. <दिक्-पूर्वपदादसञ्ज्ञायां ञः># । । PS_४,२.१०७ । ।

_______Sठाञ्ठ्JKव्_४,२.१०७ः

असञ्ज्ञायां इति प्रकृति-विशेषणं ।
दिक्-पूर्वपदात्प्रातिपदिकातसञ्ज्ञा-विषयात्ञः पत्ययो हबवति शैषिकः ।
अणोऽपवदः ।

पौर्वशालः ।
दाक्षिणशालः ।
आपरशालः ।
असञ्ज्ञायां इति किं ? पूर्वैषुकामशमः ।
अपरैषुकामशमः ।
दिक्षङ्ख्ये सञ्ज्ञायां (*२,१.५०) इति समासः ।
प्राचां ग्रामनगराणां इति उत्तरपद-वृद्धिः ।
पद-ग्रहणं स्वरूपविधिनिरासार्थं । ।

---

1. <मद्रेभ्योऽञ्># । । PS_४,२.१०८ । ।

______Sठाञ्ठJKव्_४,२.१०८ः

दिक्-पूर्वपदातित्येव ।
दिक्-पूर्वपदात्मद्र-शब्दादञ्प्रत्ययो भवति शैषिकः ।
पौर्वमद्रः ।
आपरमद्रः ।
दिशोऽमद्राणां (*७,३.१३) इति पर्युदासादादिवृद्धिरेव । ।

---

1. <उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्># । । PS_४,२.१०९ । ।

______Sठाञ्ठJKव्_४,२.१०९ः

दिग्-ग्रहणं निवृत्तं ।
उदीच्यग्रामवाचिनः प्रातिपदिकाद्बह्वचोऽन्तोदात्तादञ्प्रत्ययो भवति शैषिकः ।
अणोऽपवादः ।
शैवपुरं ।
माण्डवपुरं ।
उदीच्यग्रामातिति किं ? माथुरं ।
बह्वचः इति किं ? ध्वजी ।
ध्वाजं ।
अन्तोदात्तातिति किं ? शार्करीधानं ।
शर्करीधान-शब्दे लित्-स्वरेण धान-शब्द उदात्तः । ।

---

[#३९२]

1. <प्रस्थ-उत्तरपद-पलद्यादि-क-उपधादण्># । । PS_४,२.११० । ।

_______Sठाञ्ठJKव्_४,२.११०:

प्रस्थोत्तरपदात पलद्यादिभ्यः ककारोपधात्च प्रातिपदिकादण्प्रत्ययो भवति शैसिकः ।
उदीच्यग्रामलक्षणस्य अञोऽपवादः ।
माद्रीप्रस्थः ।
माहकीरस्थः ।
पलद्यादिभ्यः - पालदः ।
पारिषदः ।
ककारोपधात्- नैलीनकः ।
चैयातकः ।
पलद्यादिषु यो वाहीकग्रामः, ततः ठञ्ञिठयोः अपवादः ।
यथा - गौष्ठी, नैतकी इति ।
गोमती-शब्दः पठ्यते, ततो रोपधेतोः प्राचां (*४,२.१२३) इति वुञोऽपवादः ।
वाहीक-शब्दः कोपधोऽपि पुनः पठ्यते परं छं (*४,२.११४) बाधितुं ।
अण्ग्रहणं बाधकबाधनार्थं ।
पलदी ।
परिषथ् ।
यकृल्लोमन् ।
रोमक ।
कालकूट ।
पटच्चर ।
वाहीक ।
कलकीट ।
मलकीट ।
कमलकीट ।
कमलभिदा ।
गोष्ठी ।
कमलकीर ।
बाहुकीत ।
नैतकी ।
परिखा ।
शूरसेन ।
गोमती ।
उदयान ।
पलद्यादिः । ।

---

1. <कण्व-आदिभ्यो गोत्रे># । । PS_४,२.१११ । ।

_______Sठा~ठ्JKव्_४,२.१११ः

गोत्रं इह न प्रत्यय-अर्थो न च प्रकृतिविशेषणं।
तर्ह्येवं सम्बध्यते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितः, तदन्तेभ्य एव अण्प्रत्ययो भवति शैषिकः।
छस्य अपवादः।
काण्वाः छात्राः।
गौकक्षाः।।

---

1. <इञश्च>#।। PS_४,२.११२।।

_______Sठा~ठ्JKव्_४,२.११२ः

गोत्रे इत्येव।
गोत्रे य इञ्विहितः तदन्तात्प्रातिप्दिकातण्प्रत्ययो भवति शैषिकः।
छस्य अपवादः।
दाक्षाः।
प्लाक्षाः।
माहकाः।
गोरे इत्येव, सौतङ्गमेरिदं सौतङ्गमीयं।।

---

1. <न द्व्य्-अचः प्राच्य-भरतेसु>#।। PS_४,२.११३।।

_______Sठा~ठ्JKव्_४,२.११३ः

द्व्य्-अचः प्रातिपदिकात्प्राच्य-भरत-गोत्रादिञन्तादण्प्रत्ययो न भवति।
पूर्वेण प्राप्तः प्रतिषिध्यते।
पैङ्गीयाः।
पौष्ठीयाः।
चैदीयाः।
पौष्कीयाः।
काशीयाः।
पाशीयाः।
द्व्यचः इति किं? पान्नागाराः।
प्राच्यभरतेषु इति किं? दाक्षाः।
काशीयाः इति कथं उदाहृतं, यावता काश्यादिभ्यष्ठञ्- ञिठाभ्यां भवितव्यं? न+एतदस्ति।
देशवाचिनः काशिशब्दस्य तत्र ग्रहणं चैदि-शब्देन साहचर्यात्।
गोत्रात्तु वृद्धाच्छः एव भवति।

ज्ञापकादन्यत्र प्राच्य-ग्रहणेन भरत-ग्रहणं न भवति इति स्व-शब्देन भरतानां उपादानं कृतं । ।

---

[#३९३]

1. <वृद्धाच्छः># । । PS_४,२.११४ । ।

_______Sठा~ठ्JKव्_४,२.११४ः

गोत्रे इति न अनुवर्तते ।
सामान्येन विधानं ।
वृद्धात्प्रातिपदिकात्छः प्रत्ययो भवति शैषिकः ।
अणोऽपवादः ।
गार्गीयः ।
वात्सीयः ।
शालीयः ।
मालीयः ।
अव्यय-तीर-रूप्य-उत्तरपद-उदीच्य-ग्राम. क-उपध-विधीन्तु परत्वाद्बाधते । ।

---

1. <भवतष्ठक्-छसौ># । । PS_४,२.११५ । ।

_______Sठा~ठ्JKव्_४,२.११५ः

वृद्धातित्येव ।
भवच्-छब्दाद्वृद्धात्ठक्-छसौ प्रत्ययौ भवतः शैषिकौ ।
छस्य अपवादौ सकारः पदसञ्ज्ञ-अर्थः ।
भवतस्त्यदादित्वाद्वृद्ध-सञ्ज्ञा ।
भावत्कः ।
भवदीयः ।
अवृद्धात्तु भवतः शतुरणेव भवति ।
भावतः । ।

---

1. <काश्यादिभ्यष्ठञ्-ञिठौ># । । PS_४,२.११६ । ।

_______Sठाञ्ठJKव्_४,२.११६ः

काशि इत्येवं आदिभ्यः ठञ्ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ।
इकार उच्चारनार्थः।
ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः।
स्त्रीप्रत्यये विशेषः।
काशिकी।
काशिका।
बैदिकी।
बैदिका।
वृद्धातित्यत्र अनुवर्तते।
ये तु अवृद्धाः पठ्यन्ते, वचनप्रामाण्यात्तेभ्यः प्रत्यय-विधिः।
देवदत्त-शब्दः पठ्यते, तस्य एङ्प्राचां देशे (*१,१.७५) इति वृद्धसञ्ज्ञा।
दैवदत्तिकः।
वाहीकग्रामस्य तु न अस्ति वृद्धसञ्ज्ञा।
दैवदत्तः।
कथं भाष्ये उदाहृतं वा नामधेयस्य वृद्धसञ्ज्ञा वेदितव्या देवदत्तीयाः, दैवदत्ताः इति, यावता वृद्धसञ्ज्ञा-अपक्षे काश्यादित्वात्ठञ्ञिठाभ्यां भवितव्यं? तत्र+एवं वर्णयन्ति, वा नामधेयस्य इति व्यवस्थित-विभाषेयम्, सा छे कर्तव्ये भवति, ठञ्ञिठयोर्न भवति इति।
काशि।
चेति।
सञ्ज्ञा।
संवाह।
अच्युत।
मोहमान।
शकुलाद।
हस्तिकर्षू।
कुदामन्।
हिरण्य।
करण।
गोधाशन।
भौरिकि।
भौलिङ्गि।
अरिन्दम।
सर्वमित्र।
देवदत्त।
साधुमित्र।
दासमित्र।
दासग्राम।
सौधावतान।
युवराज।
उपराज।
सिन्धुमित्र।
देवराज।
आपदादिपूर्वपदात्कालाथ्।
आपत्कालिकी, आपत्कालिका।
और्ध्वकालिकी, और्ध्वकालिका।
तात्कालिकी, तात्कालिका।।

---

1. <वाहीकग्रामेभ्यश्च># । । PS_४,२.११७ । ।

_______Sठान्ठ्JKव्_४,२.११७ः

वृद्धातित्येव ।
वाहीकग्राम-वाचिभ्यः वृद्धेभ्यः ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ ।
छस्य अपवादौ ।
शाकलिकी, शाकलिका ।
मान्थविकी, मान्थविका । ।

---

[#३९४]

1. <विभाषा+उशीनरेषु># । । PS_४,२.११८ । ।

_______Sठान्ठ्JKव्_४,२.११८ः

वृद्धातिति वर्तते, वाहीकग्रामेभ्यः इति च ।
उशीनरेसु ये वाहीकग्रामाः, तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यः विभाषा ठञ्ञिठौ प्रत्ययौ भवतः ।
आह्वजालिकी, आह्वजालिका, आह्वजालीया ।
सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया । ।

---

1. <ओर्देशे ठञ्># । । PS_४,२.११९ । ।

_______Sठान्ठ्JKव्_४,२.११९ः

वृद्धातेति नावुवर्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणाथ् ।
उ-वर्णान्तात्देशवाचिनः प्रातिपदिकात्ठञ्प्रत्ययो भवति शैषिकः ।
नैषादकर्षुकः ।
शावरजम्बुकः ।
देशे इति किं ? पटोश्छात्राः पाटवाः ।
ठञ्ञिठयोः प्रकरणे ठञः केवलस्य अनुवृत्तिः न लभ्यते इति ठञ्-ग्रहणं कृतं । ।

---

1. <वृद्धत्प्राचाम्># । । PS_४,२.१२० । ।

_______Sठान्ठ्JKव्_४,२.१२०ः

ओर्देशे इत्येव ।
उ-वर्णान्तात्वृद्धात्प्राग्देशब्-वाचिनः ।
प्रातिपदिकात्ठञ्प्रत्ययो भवति शैषिकः ।
आढकजम्बुकः ।
शाकजम्बुकः ।
नापितवास्तुकः ।
पूर्वेण+एव ठञि सिद्धे नियमार्थं वचनम्, वृद्धादेव प्राचां अवृद्धान्न भवति इति ।
मल्लवास्तु - माल्लवास्तवः । ।

---

1. <धन्व-य-उपधाद्वुञ्># । । PS_४,२.१२१ । ।

_______Sठान्ठ्JKव्_४,२.१२१ः

वृद्धातिति वर्तते, देशे इति च ।
धन्व-वाचिनो य-कार-उपधाच्च देश-अभिधायिनो वृद्धात्प्रातिपदिकात्वुञ्प्रत्ययो भवति शैषिकः ।
धन्व-शब्दो मरुदेश-वचनः ।
पारेधन्वकः ।
ऐरावतकः ।
योपधात्- सांकाश्यकः ।
कम्पिल्यकः । ।

---

1. <प्रस्थ-पुर-वहान्ताच्च># । । PS_४,२.१२२ । ।

_______Sठान्ठ्JKव्_४,२.१२२ः

वृद्धातित्येव, देशे इति च ।
अन्त-शब्दः प्रत्येकं अभिसम्बध्यते ।
प्रस्थपुर वह इत्येवं अन्तात्देश-वाचिनः प्रातिपदिकाद्वृद्धाद्वुञ्प्रत्ययो भवति शैषिकः ।

छस्य अपवादः ।
मालाप्रस्थकः ।
नान्दीपुरकः ।
कान्तीपुरकः ।
पैलुवहकः ।
फाल्गुनीवहकः ।
पुरान्तो रोपधस्ततः उत्तरसूत्रैणैव सिद्धं अप्रागर्थं इह ग्रहणं । ।

---

1. <र-उपध-इतोः प्राचाम्># । । PS_४,२.१२३ । ।

______SठJKव्_४,२.१२३ः

वृद्धतित्येव, देशे इति च ।
तद्विशेसणं प्राग्ग्रहणं ।
र-उपधातीकारान्ताच्च प्रग्देश-वाचिनो वृद्धाद्वुञ्प्रत्ययो भवति शैषिकः ।
छस्य अपवादः ।
पाटलिपुत्रकाः ऐकचक्रकाः ।
ईतः खल्वपि - काकन्दी ।
काकन्दकः ।
माकन्दी ।
माक्नदकः ।
प्राचां इति किं ? दात्तामित्रीयः ।
तपरकराणं विस्पष्टार्थं । ।

---

[#३९५]

1. <जनपद-तदवध्योश्च># । । PS_४,२.१२४ । ।

______SठJKव्_४,२.१२४ः

वृद्धातित्येव, देशे इति च ।
तद्विशेषनं जनपद-तदवधी ।
वृद्धाज्जनपद-वाचिनः तदवधि-वाचिनश्च प्रातिपदिकात्वुञ्प्रत्ययो भवति शैसिकः ।
छस्य अपवादः ।
आभिसारकः ।
आदर्शकः ।
जनपदावधेः खल्वपि औपुष्टकः ।
श्यामायनकः ।

तदवधेरपि जनपा एव गृह्यते न ग्रामः ।
किं अर्थं तर्हि ग्रहणं ? बाधकबाधन-अर्थं ।
गर्तोत्तरपदाच्छं बाधित्वा वुञेव जनपद-अवधेर्भवति ।
त्रैगर्तकः । ।

---

1. <अवृद्धादपि बहुवचन-विषयात्># । । PS_४,२.१२५ । ।

_______Sठाऱ्ठ्JKव्_४,२.१२५ः

जनपद-तदवध्योः इत्येव ।
अवृद्धाद्वृद्धाच्च जनपदात्तदवधि-वाचिनश्च बहुवनच-विषयात्प्रातिपदिकाद्वुञ्प्रत्ययो भवति शैसिकः ।
अण्छयोरपवादः ।
अवृद्धाज्जनपदात्तावत्- अङ्गाः ।
वङ्गाः ।
कलिङ्गाः ।
आङ्गकः ।
वाङ्गकः ।
कालिङ्गकः ।
अवृद्धाज्जनपद-अवधेः - अजमीढाः ।
अजक्रन्द्राः ।
आजमीढकः ।
आजक्रन्दकः ।
वृद्धाज्जनपदात्- दार्वाः ।
जाम्ब्वाः ।
दार्वकः ।
जाम्ब्वकः ।
वृद्धाज्जनपदावधेः - कालञ्जराः ।
वैकुलिशाः ।
कालञ्जरकः ।
वैकुलिशकः ।
विषय-ग्रहणमनयत्र भावार्थं ।
जनपद-एकशेष-बहुत्वे मा भूथ् ।
वर्तन्यः ।
वार्तनः ।
अपिग्रहणं किं यावता वृद्धात पूर्वेण+एव सिद्धं ? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायि इति समुच्चीयते । ।

---

1. <कच्छ-अग्नि-वक्त्र-गर्त-उत्तरपदात्># । । PS_४,२.१२६ । ।

_______Sठाऱ्ठ्JKव्_४,२.१२६ः

देशे इत्येव उत्तरपद-शब्दः प्रत्येकं अभिसम्बध्यते।
कच्छ-अद्य्-उत्तरपदाद्देशवाचिनः।
प्रातिपदिकाच्च अवृद्धाद्वृद्धाच्च वुञ्प्रत्ययो भवति शैषिकः।
छणोरपवादः।
दारुकच्छकः।
पैप्पलीकच्छकः।
काण्डाग्नकः।
वैभुजाग्नकः।
ऐन्द्रवक्त्रकः।
सैन्धुवक्त्रकः।
बाहुगर्तकः।
चाक्रगर्तकः।।

---

1. <धूमादिभ्यश्च>#।। PS_४,२.१२७।।

______Sठाञ्ठJKव्_४,२.१२७ः

धूमादिभ्यो देशवचिभ्यः प्रातिपदिकेभ्यः वुञ्प्रत्ययो भवति शैषिकः।
अणादेरपवादः।
धॐअकः।
खाण्डकः।
पाथेय-शब्दः पठ्यते, तस्य योपधात्वादेव वुञ्ि सिद्धे सामर्थ्याददेशार्थं ग्रहणं।
तथा विदेह-अनर्तशब्दयोः जनपद-लक्षणे वुञ्ि सिद्धेऽदेशार्थः पाठः।
विदेहानां क्षत्रियाणां स्वं वैदेहकं।
आनर्तकं।
समुद्र-शब्दः पठ्यते, तस्य नावि मनुष्ये च वुञ्ष्यते।
सामुद्रिका नौः।
सामुद्रको मनुस्यः।
अन्यत्र न भवति, सामुद्रं जलं इति।
धूम।
खण्ड।
शशादन।
आर्जुनाद।
दाण्डायनस्थली।
माहकस्थली।
घोषस्थली।
माषस्थली।
राजस्थली।
राजगृह।
सत्रासाह।
भक्षास्थली।
मद्रकूल।
गर्तकूल।

आञ्जीकूल ।
द्व्याहाव ।
त्र्याहाव ।
संहीय ।
वर्वर ।
वर्चगर्त ।
विदेह ।
आनर्त ।
माठर ।
पाथेय ।
घोष ।
शिष्य ।
मित्र ।
वल ।
आराज्ञी ।
धर्तराज्ञी ।
अवयात ।
तीर्थ ।
कूलात्सौवीरेषु ।
समुद्रान्नावि मनुस्ये च ।
कुक्षि ।
अन्तरीप ।
द्वीप ।
अरुण ।
उज्जयिनी ।
दक्षिणापथ ।
साकेत ।।

---

[#३९६]

1. <नगरात्कुत्सन-प्रावीण्ययोः># ।। PS_४,२.१२८ ।।

_______Sठाञ्ठ्JKव्_४,२.१२८ः

नगर-शब्दात्वुञ्प्रत्ययो भवति शैसिकः कुत्सने प्रावीण्ये च गम्यमाने ।
प्रत्ययार्थ-विशेषणं च+एतत्, कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति ।
कुत्सनं निन्दनं ।
प्रावीण्यं नैपुण्यं ।
केन अयं मुषितः पन्था गात्रे पक्ष्मालिधूसरः ।
इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण ।
चोरा हि नागरका भवन्ति ।
केन+इदं लिखितं चित्रं मनोनेत्रविकाशि यथ् ।
इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण ।
प्रवीणा हि नागरका भवन्ति ।

कुत्सनप्रावीण्ययोः इति किं ? नागरा ब्राह्मणाः ।
कत्र्यादिषु तु सञ्ज्ञाशब्देन साहचर्यात्सञ्ज्ञानागरं पठ्यते, तस्मिन्नागरेयकं इति प्रत्युदाहार्यं । ।

---

1. <अरण्यान्मनुस्ये># । । PS_४,२.१२९ । ।

______Sठा-ऌJKव्_४,२.१२९ः

अरण्य-शब्दाद्वुञ्प्रत्ययो भवति शैसिको मनुस्येऽभिधेये ।
औपसङ्ख्यानिकस्य णस्य अपवादः ।
आरण्यको मनुस्यः ।
पथ्याध्यायन्यायविहारमनुस्यहस्तिषु इति वक्तव्यं ।
आरण्यकः पन्थाः ।
आरण्यकोऽध्यायः ।
आरण्यको न्यायः ।
आरण्यको विहारः ।
आरण्यको मनुष्यः ।
आरण्यको हस्ती ।
वा गोमयेसु ।
आरण्याः, आरण्यका गोमयाः ।
एतेसु इति किं ? आरण्याः पशवः । ।

---

1. <विभाषा कुरु-युगन्धराभ्याम्># । । PS_४,२.१३० । ।

______Sठा-ऌJKव्_४,२.१३०ः

कुरु युगन्धर इत्येताभ्यां विभाषा वुञ्प्रत्ययो भवति शैषिकः ।
कौरवकः, कौरवः ।
यौगन्धरकः , यौगन्धरः ।
जनपद-शब्दावेतौ, ताभ्यां अवृद्धादपि इति नित्ये वुञि प्राप्ते विकल्प उच्यते ।
कुरु-शब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति ।
सैषा युगन्धर-अर्था विभाष ।
मनुष्यतत्स्थयोः तु कुरु-शब्दान्नित्य एव वुञ्प्रत्ययो भवति, कौरवको मनुस्यः, कौरवकमस्य हसितं इति । ।

---

1. <मद्र-वृज्योः कन्># । । PS_४,२.१३१ । ।

______Sठाञ्ठJKव्_४,२.१३१ः

मद्र-वृजि-शब्दाभ्यां कन्प्रत्ययो भवति शैषिकः ।
जनपदवुञोऽपवादः ।
मद्रेसु जातः मद्रकः ।
वृजिकः । ।

---

[#३९७]

1. <कोपधादण्># । । PS_४,२.१३२ । ।

______Sठाञ्ठJKव्_४,२.१३२ः

देशे इत्येव ।
क-कार-उपधात्प्रातिपदिकादण्प्रत्ययो भवति शैसिकः ।
जनपदवुञोऽपवादः ।
अन्यत्र जनपदं मुक्त्वा पूर्वेण+एव कोपधादणि सिद्धं ।
ऋषिकेषु जातः आर्षिकः ।
माहिषिकः ।
अण्-ग्रहणं उ-वर्णान्तादपि यथा स्यात्, इक्ष्वाकुषु जातः ऐक्ष्वाकः । ।

---

1. <कच्छ-आदिभ्यश्च># । । PS_४,२.१३३ । ।

______Sठाञ्ठJKव्_४,२.१३३ः

देशे इत्येव ।
कच्छ इत्येवं आदिभ्यो देशवाचिभ्यः अण्प्रत्ययो भवति शैसिकः ।
वुञादेरपवादः ।
काच्छः ।
सैन्धवः ।
वार्णवः ।
कच्छ-शब्दो न बहुवचन-विषयः, तस्य मनुस्य-तत्स्थयोर्वुञर्थः पाठः ।
विजापक-शब्दः पठ्यते, तस्य कोपधत्वादेव अणि सिद्धे ग्रहनं उत्तरार्थं ।
कच्छ ।
सिन्धु ।

वर्णु ।
गन्धार ।
मधुमथ् ।
कम्बोज ।
कश्मीर ।
साल्व ।
कुरु ।
रङ्कु ।
अणु ।
खण्ड ।
द्वीप ।
अनूप ।
अजवाह ।
विजापकः ।
कुलून ।
कच्छादिः । ।

---

1. <मनुस्य-तत्स्थयोर्वुञ्># । । PS_४,२.१३४ । ।

______Sठा¬ठ्JKव्_४,२.१३४ः

कच्छादिभ्यः इत्येव ।
मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ्प्रत्ययो भवति ।
अणोऽपवादः ।
काछको मनुस्यः ।
काच्छकं अस्य हसितं, जल्पितं ।
काच्छिका चूडा ।
सैन्धवको मनुस्यः ।
सैन्धवनस्य हसितं, जल्पितं ।
सैन्धविका चूडा ।
मनुष्य-तत्स्थयोः इति किं ? काच्छो गौः ।
सैन्धवो वार्णवः । ।

---

1. <अपदातौ साल्वात्># । । PS_४,२.१३५ । ।

______Sठा¬ठ्JKव्_४,२.१३५ः

साल्व-शब्दः कच्छादिसु पठ्यते, ततः पूर्वेण+एव मनुस्य-तत्स्थयोः वुञ्ञि सिद्धे नियमार्थं वचनं ।
अपदातावेव मनुस्ये मनष्यस्थे च साल्व-शब्दाद्वुञ्प्रत्ययो भवति ।

साल्वको मनुस्यः ।
सल्वकं अस्य हसितम्, जल्पितं ।
अपदातौ इति किं ? साल्वः पदातिर्व्रजति । ।

---

1. <गो-यवग्वोश्च># । । PS_४,२.१३६ । ।

_______Sठाञ्ठ्JKव्_४,२.१३६ः

गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्व-शब्दाद्वुञ्प्रत्ययो भवति शैसिकः ।
कच्छाद्यणोऽपवादः ।
साल्वको गौः ।
साल्विका यवागूः ।
साल्वमन्यत् । ।

---

[#३९८]

1. <गर्त-उत्तरपदाच्छः># । । PS_४,२.१३७ । ।

_______Sठाञ्ठ्JKव्_४,२.१३७ः

देशे इत्येव ।
गर्त-उत्तरपदात्देश-वाचिनः प्रातिपदिकात्छः प्रत्ययो भवति शैसिकः ।
अणोऽपवादः ।
वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद्बाधते ।
वृकगर्तीयं ।
शृगालगर्तीयं ।
श्वाविद्गर्तीयं ।
उत्तरपद-ग्रहणं बहुच्पूर्वनिरासार्थं ।
बाहुगर्तं । ।

---

1. <गह-आदिभ्यश्च># । । PS_४,२.१३८ । ।

_______Sठाञ्ठ्JKव्_४,२.१३८ः

गह इत्येवं आदिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति शैसिकः ।
अणादेरपवादः ।
गहीयः ।
अन्तःस्थीयः ।
देशाधिकारेऽपि संभव-अपेक्षं विशेषणं, न सर्वेषां ।
मध्यमध्यमं चाण्चरणे इति पठ्यते, तस्यायमर्थः ।
मध्य-शब्दः प्रत्ययसंनियोगेन मध्यमं आपद्यते ।
मध्यमीयाः ।
चरणे तु प्रत्ययर्थे अण्भवति, माध्यमाः इति ।
तदेतद्विशेष एव स्मर्यते ।
पृथिवीमध्यस्य मध्यमभावः ।
चरणसम्बन्धेन निवासलक्षणोऽणिति च ।
मुखपार्श्वतसोर्लोपश्च ।
मुखतीयं ।
पार्श्वतीयं ।
कुग्जनस्य परस्य च ।
जनकीयं ।
परकीयं ।
देवस्य च+इति वक्तव्यं ।
देवकीयं ।
वेणुकादिभ्यश्छण्वक्तव्यः ।
आकृतिगणोऽयं ।
वैणुकीयं ।
वैत्रकीयं ।
औत्तरपदकीयं ।
प्रास्थकीयं ।
माध्यमकीयं ।
गह ।
अन्तःस्थ ।
सम ।
विषम ।
मध्यमध्यमं चाण्चरणे ।
उत्तम ।
अङ्ग ।
वङ्ग ।
मगध ।
पूर्वप्क्ष ।
अपरपक्ष ।
अधमशाख ।
उत्तमशाख ।
समानशाख ।
एकग्राम ।
एकवृक्ष ।
एकपलाश ।
एष्वग्र ।
इष्वनी ।
अवस्यन्दी ।
कामप्रस्थ ।

खाडायनि ।
कावेरणि शैशिरि ।
शौङ्गि ।
आसुरि ।
आहिंसि ।
आमित्रि ।
व्याडि ।
वैदजि ।
भौजि ।
आढ्यश्वि ।
आनृशंसि ।
सौवि ।
पारकि ।
अग्निशर्मन् ।
देवशर्मन् ।
श्रौति ।
आरटकि ।
वाल्मीकि ।
क्षेमवृद्धिन् ।
उत्तर ।
अन्तर ।
मुखपार्श्वतसोर्लोपः ।
जनपरयोः कुक्च ।
देवस्य च ।
वेणुकादिभ्यश्छण् ।
गहादिः । ।

---

1. <प्राचां कटादेः># । । PS_४,२.१३९ । ।

_______SठाE्ठJKव्_४,२.१३९ः

देशे इत्येव ।
तद्विशेषनं प्राग्-ग्रहणं ।
प्राग्देश-वाचिनः कटादेः प्रातिपदिकात्छः प्रत्ययो भवति शैसिकः ।
अणोऽपवादः ।
कटनगरीयं ।
कठघोषीयं ।
कटपल्वलीयं । ।

---

1. <राज्ञः क च># । । PS_४,२.१४० । ।

_______Sठाऱ्ठJKव्_४,२.१४०ः

असंभवाद्देशाधिकारो न विशेषणं ।
राज्ञः ककारश्च अन्तादेशो भव्ति छश्च प्रत्ययः ।
राजकीयं ।
आदेशमात्रं इह विधेयं, प्रत्यय्स्तु वृद्धाच्छः (*४,२.११४) इत्येव सिद्धः । ।

---

[#३९९]

1. <वृद्धादक-इक-अन्त-ख-उपधात्># । । PS_४,२.१४१ । ।

_______Sठाऱ्ठJKव्_४,२.१४१ः

देशे इत्येव ।
वृद्धाद्देश-वाचिनः अक इक इत्येवं अन्तात्खकारोपधाच्च प्रातिपदिकात्छः प्रत्ययो भवति शैसिकः ।
कोपध-लक्षणस्य अणोऽपवादः ।
वाहीकग्राम-लक्षणस्य च प्रत्ययस्य, रोपधेतोः प्राचां (*४,२.१२३) इति च ।
अकान्तात्तावत्- आरीहणकीयं ।
द्रौघणकीयं ।
इकान्तात्- आश्वपथिकीयं ।
शाल्मलिकीयं ।
खोपधात्- कौटिशिखीयं ।
आयोमुखीयं ।
अकेकान्त-ग्रहणे कोपध-ग्रहणं सौसुकाद्यर्थं ।
सौसुकीयं ।
मौसुकीयं ।
ऐन्द्रवेणुकीयं । ।

---

1. <कन्था-पलद-नगर-ग्राम-ह्रद-उत्तरपदात्># । । PS_४,२.१४२ । ।

_______Sठाऱ्ठJKव्_४,२.१४२ः

देशे इत्येव, वृद्धातिति च ।
कन्थाद्य्-उत्तरपदाद्देश-वाचिनो वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः ।
वाहीकग्रमादि-लक्षणस्य प्रत्ययस्य अपवादः ।
दाक्षिकन्थीयं ।

माहिकिकन्थीयं ।
दाक्षिपलदीयं ।
माहिकिपलदीयं ।
दाक्षिनगरीयं ।
माहिकिनगरीयं ।
दाक्षिग्रामीयं ।
माहिकिग्रामीयं ।
दाक्षिह्रदीयं ।
माहिकिह्रदीयं । ।

---

1. <पर्वताच्च># । । PS_४,२.१४३ । ।

______Sठा~ठ्JKव्_४,२.१४३ः

पर्वत-शब्दाच्छः प्रत्ययो भवति शैषिकः ।
अणोऽपवदः ।
पर्वतीयो राजा ।
पर्वतीयः पुरुषः । ।

---

1. <विभाषाऽमनुष्ये># । । PS_४,२.१४४ । ।

______Sठा~ठ्JKव्_४,२.१४४ः

पर्वतशब्दाच्छः प्रत्ययो भवति वा अमनुष्ये वाच्ये ।
पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
पर्वतीयानि फलानि, पार्वतानि फलानि ।
पर्वतीयमुदकम्, पार्वतमुदकं ।
अमनुष्ये इति किं ? पर्वतीयो मनुष्यः । ।

---

1. <कृकण-पर्णाद्भरद्वाजे># । । PS_४,२.१४५ । ।

______Sठा~ठ्JKव्_४,२.१४५ः

देशे इत्येव ।
भारद्वाज-शब्दोऽपि देश-वचन एव, न गोत्र-शब्दः ।
प्रकृति-विशेषणं च+एतन्, न प्रत्ययार्थः ।
कृकणपर्ण-शब्दाभ्यां भारद्वाजदेश-वाचिभ्यां छः प्रत्ययो भवति शैषिकः ।
कृकणीयं ।
पर्णीयं ।
भारद्वाजे इति किं ? कार्कणं ।
पार्णं ।।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः ।।

---

चतुर्थाध्यायस्य तृतीयः पादः ।

---

[#४००]

1. <युष्मद्-अस्मदोरन्यतरस्यां खञ्च># ।। PS_४,३.१ ।।

_______Sठाऩ्ठJKव्_४,३.१ः

देशाधिकारो निवृत्तः ।
युष्मद्-अस्मदोः खञ्प्रत्ययो भवति शैषिकः ।
चकाराच्छः च ।
अन्यतरस्यां-ग्रहणाद्यथाप्राप्तं ।
तदेते त्रयः प्रत्ययाः भवन्ति, तत्र वैषम्याद्यथासङ्ख्यं न भवति ।
त्यदादित्वाद्वृद्ध-सञ्ज्ञकयोर्युष्मद्-अस्मदोः छे प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते ।
यौष्माकीणः ।
आस्माकीनः ।
युष्मदीयः ।
अस्मदीयः ।
यौष्माकः ।
आस्माकः ।

---

1. <तस्मिन्नणि च युष्माक-अस्माकौ># ।। PS_४,३.२ ।।

_______Sठाऩ्ठJKव्_४,३.२ः

तस्मिनिति साक्षाद्विहितः खञ्निर्दिष्यते, न चकार-अनुकृष्टः छः।
तस्मिन्खञि अणि च युष्मद्-अस्मदोर्यथासङ्ख्यं युष्माक अस्माक इत्येतावादेशौ भवतः।
निमित्तयोरादेशौ प्रति यथासङ्खं कस्मान्न भवति ? योगविभागः करिष्यते, तस्मिन्खञि युष्मद्-अस्मदोः युष्माक-अस्माकौ भवतः, ततोऽणि च इति।
यौष्माकीणः।
आस्माकीनः।
यौष्माकः।
आस्माकः।
तस्मिनणि च इति किं ? युष्मदीयः।
अस्मदीयः।।

---

1. <तवक-ममकावेकवचने># । । PS_४,३.३ । ।

_______Sठाञ्ठJKव्_४,३.३ः

एकवचन-परयोर्युष्मद्-अस्मदोः तवक ममक इत्येतावादेशौ भवतः यथासङ्ख्यं तस्मिन्खञि अणि च परतः।
निमित्तयोस्तु यथासङ्ख्यं पूर्ववदेव न भवति।
ननु च न लुमता अङ्गस्य (*१,१.६३) इति प्रत्ययलक्षण-प्रतिषेधादेकवचन-परता युष्मद्-अस्मदोर्न सम्भवति ? वचनात्प्रत्ययलक्षणं भविष्यति।
अथ वा न+एव+इदं प्रत्ययलक्षणं, किं तर्ह्यन्वर्थ-ग्रहणं।
एकवचने युष्मद्-असमादी एकस्य अर्थस्य वाचके तवक-ममकावादेशौ प्रतिपद्येते इति सूत्र-अर्थः।
तावकीनः।
मामकीनः।
तावकः।
मामकः।
तस्मिन्नणि च इत्येव, त्वदीयः।
मदियः।।

---

1. <अर्धाद्यत्># । । PS_४,३.४ । ।

_______Sठाञ्ठJKव्_४,३.४ः

अर्ध-शब्दात्यत्प्रत्ययो भवति शैषिकः।
अणोऽपवादः।
अर्ध्यं।
सपूर्वपदाट्ठञ्वक्तव्यः।
बालेयार्धिकं।
गौतमार्धिकं।।

---

[#४०१]

1. <पर-अवर-अधम-उत्तम-पूर्वाच्च># । । PS_४,३.५ । ।

_______Sठाञ्ठJKव्_४,३.५ः

पर अवर अधम उत्तम इत्येवं पूर्वाच्च अर्धात्यत्प्रत्ययो भवति शैषिकः ।
परार्ध्यं ।
अवरार्ध्यं ।
अधमार्ध्यं ।
उत्तमार्ध्यं ।
पूर्व-ग्रहणं किं ? पर-अवर-अधम-उत्तमेभ्यः इत्येव+उच्यते, अर्धातिति वर्तते, तस्य तत्पूर्वता विज्ञास्यते ? पर-अवर-शब्दावदिग्-ग्रहणावपि स्तः परं सुखम्, अवरं सुखं इति ।
तत्र कृत-अर्थत्वाद्दिक्-शब्दपक्षे परेण ठञ्यतौ स्यातां ।
अस्मात्पूर्व-ग्रहणाद्यत्प्रत्ययो भवति परार्ध्यम्, अवरार्ध्यं इति । ।

---

1. <दिक्-पूर्वपदाट्ठञ्च># । । PS_४,३.६ । ।

_______Sठाञ्ठJKव्_४,३.६ः

दिक्-पूर्वपदादर्धान्तात्प्रातिपदिकात्ठञ्प्रत्ययो भवति, चकाराद्यत्च शैषिकः ।
अणोऽपवादः ।
पौर्वार्धिकं ।
पूर्वार्ध्यं ।
दाक्षिणार्धिकम्, दक्षिणार्ध्यं ।
पद-ग्रहणं स्वरूप-विधिनिवारण-अर्थं । ।

---

1. <ग्राम-जनपद+एकदेशादञ्-ठञौ># । । PS_४,३.७ । ।

_______Sठाञ्ठJKव्_४,३.७ः

दिक्-पूर्वपदातित्येव ।
ग्राम-एकदेश-वाचिनो जनपद-एकदेशवाचिनश्च प्रातिपदिकाद्दिक्-पूर्वपदादर्धान्तादञ्-ठञौ प्रत्ययौ भवतः शैषिकौ ।
यतोऽपवदौ ।
इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धः, पौर्वार्धिकाः ।
दाक्षिणार्धाः, दाक्षिणार्धिकाः । ।

---

1. <मध्यान्मः># । । PS_४,३.८ । ।

_______Sठा५ठ्JKव्_४,३.८ः

मध्य-शब्दान्मः प्रत्ययो भवति शैषिकः ।
अणोऽपवादः ।
मध्यमः ।
आदेश्च+इति वक्तव्यं ।
आदिमः ।
अवोऽधसोर्लोपश्च ।
अवमं ।
अधमं । ।

---

1. <अ साम्प्रतिके># । । PS_४,३.९ । ।

_______Sठा५ठ्JKव्_४,३.९ः

अ-कारः प्रत्ययो भवति मध्य-शब्दात्साम्प्रतिके जातादौ प्रत्यय-अर्थे ।
मस्य अपवादः ।
साम्प्रतिकं न्याय्यं, युक्तं उचितं, सममुच्यते ।
नातिदीर्घं नातिह्रस्वं मध्यं काष्ठं ।
नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः ।
मध्या स्त्री । ।

---

[#४०२]

1. <द्वीपादनुसमुद्रं यञ्># । । PS_४,३.१० । ।

_______Sठा~ठ्JKव्_४,३.१०ः

समुद्र-समीपे यो द्वीपः, तस्माद्यञ्प्रत्ययो भवति शैषिकः ।
कच्छादिपाठातणो, मनुष्यवुञः चापवादः ।
द्वैप्यं ।
द्वैप्यं भवन्तोऽनुचरन्ति चक्रं ।
अनुसमुद्रं इति किं ? द्वैपकं ।
द्वैपमन्यत् । ।

---

1. <कालाट्ठञ्># । । PS_४,३.११ । ।

_______Sठा~ठ्JKव्_४,३.११ः

काल-विशेष-वाचिनः प्रातिपदिकात्ठञ्प्रत्ययो भवति शैषिकः ।
अणोऽपवादः ।
वृद्धात्तु छं परत्वाद्बाधते ।
मासिकः ।
आर्धमासिकः ।
सांवत्सरिकः ।
यथाकथञ्चिद्गुण-वृत्त्या अपि काले वर्तमानात्प्रत्यय इष्यते ।
कादम्बपुष्पिकं ।
व्रैहिपलालिकं ।
तत्र जातः (*४,३.२५) इति प्रागतः कालाधिकारः । ।

---

1. <श्राद्धे शरदः># । । PS_४,३.१२ । ।

_______Sठा~ठ्JKव्_४,३.१२ः

शरच्-छब्दात्ठञ्प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः ।
ऋत्वणः अपवादः ।
श्राद्धे इति च कर्म गृहयते, न श्रद्धावान्पुरुषः, अनभिधानाथ् ।
शारदिकं श्राद्धं ।
शारदं अन्यत् । ।

---

1. <विभाषा रोग-आतपयोः># । । PS_४,३.१३ । ।

______Sठाञ्ठ्JKव्_४,३.१३ः

शरदः इत्येव ।
रोगे आतपे च अभिधेये शरच्-छब्दाट्ठञ्प्रत्ययो वा भवति शैषिकः ।
ऋत्वणोऽपवादः ।
शारदिको रोगः ।
शारदिकः आतपः ।
शारदो रोगः ।
शारदः आतपः ।
रोगातपयोः इति किं ? शारदं दधि । ।

---

1. <निशा-प्रदोषाभ्यां च># । । PS_४,३.१४ । ।

______Sठाञ्ठ्JKव्_४,३.१४ः

निशा-प्रदोष-शब्दाभ्यां च विभाषा ठञ्प्रत्ययो भवति शैषिकः ।
कालाट्ठञ्(*४,३.११) इति नित्ये ठञि प्राप्ते विकल्प उच्यते ।
नैशिकम्, नैशं ।
प्रादोषिकम्, प्रादोषं । ।

---

1. <श्वसस्तुट्च># । । PS_४,३.१५ । ।

______Sठाञ्ठ्JKव्_४,३.१५ः

विभाषा इत्येव ।
श्वः-शब्दाद्विभाष ठञ्प्रत्ययो हबवति, तस्य च तुड्-आगमो भवति ।
त्यप्-प्रत्ययोऽप्यतो विहितः, ऐषमोह्यः श्वसोऽन्यत्रस्यां (*४,२.१०५) इति ।
एताभ्यां मुक्ते ट्युट्युलावपि भवतः ।
शैवस्तिकः, श्वस्त्यः, श्वस्तनः । ।

---

[#४०३]

1. <सन्धिवेल-आद्य्-ऋतु-नक्षत्रेभ्योऽण्># । । PS_४,३.१६ । ।

_______Sठा~ठJKव्_४,३.१६:

कालातित्येव ।
सन्धिवेल-आदिभ्यः ऋतुभ्यो नक्षत्रेभ्यश्च काल-वृत्तिभ्योऽण्प्रत्ययो भवति शैषिकः ।
ठञोऽपवादः ।
अण्-ग्रहणं वृद्धाच्छस्य (*४,२.११४) बाधन-अर्थं ।
सन्धिवेलादिभ्यस्तावत्- सान्धिवेलं ।
सांध्यं ।
ऋतुभ्यः - ग्रैष्मं ।
शैशिरं ।
नक्षत्रेभ्यः - तैषं ।
पौषं ।
सन्धिवेला ।
सन्ध्या ।
अमावास्या ।
त्रयोदशी ।
चतुर्दशी ।
पञ्चदशी ।
पौर्णमसी ।
प्रतिपद् ।
संवत्सरात्फलपर्वणोः - सांवत्सरं फलं ।
सांवत्सरं पर्व । ।

---

1. <प्रावृष एण्यः># । । PS_४,३.१७ । ।

_______Sठा~ठJKव्_४,३.१७:

प्रावृष्-शब्दादेण्यः प्रत्ययो भवति शैषिकः ।
ऋत्वणोऽपवादः ।
प्रावृषेण्यः बलाहकः । ।

---

1. <वर्षाभ्यष्ठक्># । । PS_४,३.१८ । ।

_______Sठाऽ्ठJKव्_४,३.१८ः

वर्ष-शब्दाट्ठक्प्रत्ययो भवति शैषिकः ऋत्वणोऽपवादः ।
वार्षिकं वासः ।
वार्षिकमनुलेपनं । ।

---

1. <छन्दसि ठञ्># । । PS_४,३.१९ । ।

_______Sठाऽ्ठJKव्_४,३.१९ः

वर्ष-शब्दात्छन्दसि विषये ठञ्प्रत्ययो भवति शैषिकः ।
ठकोऽपवादः ।
स्वरे भेदः ।
नभश्च अभस्यश्च वार्षिकावृतू । ।

---

1. <वसन्ताच्च># । । PS_४,३.२० । ।

_______Sठाऽ्ठJKव्_४,३.२०ः

छन्दसि इत्येव ।
वसन्त-शब्दाच्छन्दसि विषये ठञ्प्रत्ययो भवति शैषिकः ।
ऋत्वणोऽपवादः ।
मधुश्च माधवश्च वासन्तिकावृतू । ।

---

1. <हेमन्ताच्च># । । PS_४,३.२१ । ।

_______Sठाऽ्ठJKव्_४,३.२१ः

छन्दसि इत्येव ।

हेमन्त-शब्दाच्छन्दसि विषये ठञ्प्रत्ययो भवति शैषिकः ।
ऋत्वणोऽपवादः ।
सहश्च सहस्यश्च हैमन्तिकावृतू ।
योगविभागः उत्तरार्थः । ।

---

1. <सर्वत्र अण्च तलोपश्च># । । PS_४,३.२२ । ।

______Sठा~ठ्JKव्_४,३.२२ः

हेमन्त-शब्दादण्प्रत्ययो भवति, तत्संनियोगेन च अस्य तकार-लोपः ।
हैमनं वासः ।
हेइमनं उपलेपनं ।
सर्वत्र-ग्रहणं छन्दोऽधिकारनिवृत्त्य्-अर्थं ।
छन्दसि भाषायां च सर्वत्र+एतद्भवति ।
ननु च छन्दसि इति न अनुवर्तिष्यते ? सैवाननुवृत्तिः शब्देन अख्यायते प्रत्यत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्ध-अर्थं ।

[#४०४]

हैमन्तिकं इति भाषायां अपि ठञं स्मरन्ति ।
अथ अण्च इति चकारः किं अर्थः ? अण्, यथाप्राप्तं च ऋत्वणिति ।
कः पुनरनयोर्विशेषः ? ऋत्वणि हि तकारलोपो न अस्ति हैमन्ति पङ्क्ती पङ्क्तिः इति ।
तदेवं त्रीणि रूपाणि भवन्ति, हैमन्तिकम्, हैमन्तम्, हैमनं इति । ।

---

1. <सायं-चिरं-प्राह्णे-प्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ तुट्च># । । PS_४,३.२३ । ।

______Sठा~ठ्JKव्_४,३.२३ः

कालातित्येव ।
सायं चिरं प्राह्णे प्रगे इत्येतेभ्यः अव्ययेभ्यश्च कालवाचिभ्यः ट्यु-ट्युलौ प्रत्ययौ भवतः, तयोश्च अदिष्टयोः तुडागमो भवति ।
सायन्तनं ।
चिरन्तनं ।
प्राह्णेतनं ।
प्रगेतनं ।
अव्ययेभ्यः - दोषातनं ।
दिवातनं ।
सायं इति मकारान्तं पदं अव्ययम्, ततोऽव्ययादेव सिद्धः प्रत्ययः ।
यस्तु स्यतेरन्तकर्मणो घञि साय-शब्दस्तस्य+इदं मकारान्तत्वं प्रत्यय-सन्नियोगेन निपात्यते ।
दिवसावसानं सायः ।
चिर-शब्दस्य अपि मकारान्तत्वं निपात्यते ।

प्राह्णे, प्रगे इत्येकारान्तत्वं ।
चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ।
चिरत्नं ।
परुत्नं ।
परारित्नं ।
प्रगस्य छन्दसि गलोपश्च ।
प्रत्नं ।
अग्रपश्चाड्डिमछ् ।
अग्रिमं ।
पश्चिमं ।
अन्ताच्च+इति वक्तव्यं ।
अन्तिमं । ।

---

1. <विभाषा पूर्वाह्ण-अपराह्णाभ्याम्># । । PS_४,३.२४ । ।

______Sठा~ठJKव्_४,३.२४ः

पूर्वाह्ण-अपराह्णा-शब्दाभ्यां विभाषा ट्यु-ट्युलौ प्रत्ययौ भवतः, तुट्च तयोरागमः ।
कालाट्ठञ्(*४,३.११) इति ठञि प्राप्ते वचनं, पक्षे सोऽपि भवति ।
पूर्वाह्णेतनं ।
अपराह्णेतनं ।
पौर्वाह्णिकं ।
आपराह्णिकं ।
घकालतनेषु कालनाम्नः (*६,३.१७) इति सप्तम्या अलुक् ।
यदा तु न सप्तमी समर्थ-विभक्तिः पूर्वाह्णः सोढः अस्य इति तदा पूर्वाह्णतनः इति भवितव्यं । ।

---

[#४०५]

1. <तत्र जातः># । । PS_४,३.२५ । ।

______Sठा~ठJKव्_४,३.२५ः

अण्-आदयो घादयश्च प्रत्ययाः प्रकृताः, तेषां अतः प्रभृति अर्थाः समर्थ-विभक्तयः च निर्दिश्यन्ते ।
तत्र इति सप्तमीसमर्थात्जातः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
स्रुघ्ने जातः स्त्रौघ्नः ।
माथुरः ।
औत्सः ।
औदपानः ।

राष्ट्रियः ।
अवारपारीणः ।
शाकलिकः ।
माकलिकः ।
ग्राम्यः ।
ग्रामीणः ।
कात्रेयकः ।
ॐभेयकः । ।

---

1. <प्रावृषष्ठप्># । । PS_४,३.२६ । ।

_______Sठा~ठ्JKव्_४,३.२६ः

प्रावृट्-शब्दात्सप्तमीसमर्थाज्जातः इत्येतस्मिन्नर्थे ठप्प्रत्ययो भवति ।
एण्यस्य अपवादः ।
पकारः स्वरार्थः ।
प्रावृषि जातः प्रावृषिकः । ।

---

1. <सञ्ज्ञायां शरदो वुञ्># । । PS_४,३.२७ । ।

_______Sठा~ठ्JKव्_४,३.२७ः

शरच्-छब्दात्सप्तमी-समर्थाज्जातः इत्येतस्मिन्नर्थे वुञ्प्रत्ययो भवति ऋत्वणः अपवादः, समुदायेन चेत्सञ्ज्ञा गम्यते ।
शारदका दर्भाः ।
शारदका मुद्गाः ।
दर्भ-विशेषस्य मुद्ग-विशेषस्य च+इयं सञ्ज्ञा ।
सञ्ज्ञायां इति किं ? शारदं सस्यं ।
सञ्ज्ञाधिकारं केचित्कृतलब्धक्रीतकुशलाः (*४,३.३८) इति यावदनुवर्तयन्ति । ।

---

1. <पूर्वाह्ण-अपराह्ण-आर्द्रा-मूल-प्रदोष-अवस्कराद्वुन्># । । PS_४,३.२८ । ।

_______Sठा~ठ्JKव्_४,३.२८ः

पूर्वाह्ण-आदिभ्यः शब्देभ्यः वुन्प्रत्ययो भवति तत्र जातः (*४,३.२५) इत्येतस्मिन्विषये सञ्ज्ञायां गम्यमानायां ।
पूर्वाह्णकः ।
अपराह्णकः ।
विभाषा पूर्वाह्ण-अपरह्णाभ्यां (*४,३.२४) इत्यस्य अपवादः ।
आर्द्रकः ।
मूलकः ।
नक्षत्राणः अपवादः ।
प्रदोषकः ।
निशाप्रदोषाभ्यं च (*४,३.१४) इत्यस्य अपवादः ।
अवस्करकः ।
औत्सर्गिकस्याणः (*४,१.७३) अपवादः ।
असञ्ज्ञायां तु यथाप्राप्तं ठञादयः एव भवन्ति । ।

---

1. <पथः पन्थ च># । । PS_४,३.२९ । ।

_______Sठाऽठ्JKव्_४,३.२९ः

पथि-शब्दादवुन्प्रत्ययो भवति, तत्र जातः इत्येतस्मिन्विषयेऽणोऽपवादः ।
प्रत्यय. संनियोगेन च पथः पन्थ इत्ययं आदेशः भवति ।
पथि जातः पन्थकः । ।

---

[#४०६]

1. <अमावास्याया वा># । । PS_४,३.३० । ।

_______Sठाऽठ्JKव्_४,३.३०ः

अमावास्या-शब्दादवुन्प्रत्ययो भवति वा तत्र जातः इत्येतस्मिन्विषये ।
सन्दिवेलद्य्-ऋतु-नक्षत्रेभ्योऽण्(*४,३.१६) इत्यादिषु पाठातणोऽपवादः ।
अमावस्यकः, आमावास्यः ।
एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति ।
अमावस्यकः, आमावस्यः । ।

---

1. <अ च># । । PS_४,३.३१ । ।

_______Sठा~ठ्JKव्_४,३.३१ः

अमावास्या-शब्दातकारः प्रत्ययो भवति तत्र जातः (*४,३.२५) इत्येतस्मिन्विषये ।
पूर्वेण वुन्नणोः प्राप्तयोः अयं तृतीयः विधीयते ।
अमावास्यः, अमावास्यकः, अमावास्यः ।
अमावस्यः, अमावस्यकः, आमावस्यः । ।

---

1. <सिन्ध्व्-अपकराभ्यां कन्># । । PS_४,३.३२ । ।

_______Sठा~ठ्JKव्_४,३.३२ः

सिन्धु-शब्दादपकर-शब्दाच्च कन्प्रत्ययो भवति तत्र जात (*४,३.२५) इत्येतस्मिन्विषये ।
सिन्धु-शब्दः कच्छादिः, ततोऽणि मनुष्यवुञि च प्राप्ते विधानं ।
अपकर-शब्दादपि औत्सर्गिकेऽणि ।
सिन्धुकः ।
अपकरकः । ।

---

1. <अणञौ च># । । PS_४,३.३३ । ।

_______Sठा~ठ्JKव्_४,३.३३ः

सिन्ध्व्-अपकर-शब्दाभ्यां यथासङ्ख्यं अणञौ प्रत्ययौ भवतः तत्र जातः (*४,३.२५) इत्येतस्मिन्विषये ।
पूर्वेण कनि प्राप्ते वचनं ।
सैन्धवः ।
आपकरः । ।

---

1. <श्रविष्ठा-फल्गुन्य्-अनुराधा-स्वाति-तिष्य-पुनर्वसु-हस्त-विशाखा-अषाढा-बहुलाल्लुक्># । । PS_४,३.३४ । ।

_______Sठा~ठ्JKव्_४,३.३४ः

श्रविष्ठा-आदिभ्यः शब्देभ्यः नक्षत्रेभ्यः आगतस्य जातार्थे लुग्भवति ।
तस्मिन्स्त्रीप्रत्ययस्य अपि लुक्तद्धितलुकि (*१,२.४९) इति भवति ।
श्रविष्ठासु जातः श्रविष्ठः ।
फल्गुनः ।
अनुराधः ।
स्वातिः ।
तिष्यः ।
पुनर्वसुः ।
हस्तः ।
विशाखः ।
अषाढः ।
बहुलः ।
लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियां उपसङ्ख्यानं ।
चित्रायां जाता चित्रा ।
रेवती ।
रोहिणी ।
स्त्रीपर्त्ययस्य लुकि कृते गौरादित्वात्ङीष् ।
फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ।
फल्गुनी ।
अषाढा ।
श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः ।
श्राविष्ठीयः ।
आषाढीयः ।।

---

[#४०७]

1. <स्थानानत-गोशाल-खरशालाच्च># ।। PS_४,३.३५ ।।

_______Sठा्ठJKव्_४,३.३५ः

स्थानान्तात्प्रातिपदिकात्गोशाल-शब्दात्खरशाल-शब्दात्च जात-अर्थे प्रत्ययस्य लुग्भवति ।
गोस्थाने जातः गोस्थानः ।
अश्वस्थानः ।
गोशालः ।
खरशालः ।।

---

1. <वत्सशाला-अभिजिद्-अश्वयुक्-छतभिषजो वा># ।। PS_४,३.३६ ।।

_______Sठाऽठ्JKव्_४,३.३६ः

वत्सशालादिभ्यः परस्य जात-अर्थे प्रत्ययस्य लुग्वा भवति ।
वत्सशालायां जातः वत्सशालः, वात्सशालः ।
अभिजित्, आभिजितः ।
अश्वयुक्, आश्वयुजः ।
शतभिषक्, शातभिषजः ।
बहुल-ग्रहणस्य अयं प्रपञ्चः । ।

---

1. <नक्षत्रेभ्यो बहुलम्># । । PS_४,३.३७ । ।

_______Sठाऽठ्JKव्_४,३.३७ः

नक्षत्रेभ्यः उत्तरस्य जात-अर्थे प्रत्ययस्य बहुलं लुग्भवति ।
रोहिणः, रौहिणः ।
मृगशिराः, मार्गशीर्षः । ।

---

1. <कृत-लब्ध-क्रीत-कुशलाः># । । PS_४,३.३८ । ।

_______Sठाऽठ्JKव्_४,३.३८ः

तत्र इत्येव ।
सप्तमी-समार्थात्कृतादिष्वर्थेषु यथाविहितं प्रत्ययः भवति ।
स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघनः ।
माथुरः ।
राष्ट्रियः ।
ननु च यद्यत्र कृतं जातं अपि तत्र भवति, यच्च यत्र क्रीतं लब्धं अपि तत्र+एव भवति किमर्थं भेदेन+उपादानं क्रियते, शब्द-अर्थस्य अभिन्नत्वात्? वस्तुमात्रेण क्रीतं लब्धं भवति, शब्द-अर्थस्तु भिद्यते एव । ।

---

1. <प्रायभवः># । । PS_४,३.३९ । ।

_______Sठा०ठ्JKव्_४,३.३९ः

तत्र इत्येव ।
सप्तमी-समर्थात्ङ्य्-आप्-प्रातिपदिकात्प्रायभवः इत्येतस्मिन्विषये यथा-विहितं प्रत्ययो भवति ।
प्राय-शब्दः साकल्यस्य किंचिन्नयूनतां आह ।
स्रुघ्ने प्रायेण बहुल्येन भवति स्रौघनः ।
माथुरः ।
राष्ट्रियः ।
प्रायभव-ग्रहणं अनर्थकं तत्र भवेन कृतत्वाथ् ।
अनित्यभवः प्रायभवः इति चेद्, मुक्त-संशयेन तुल्यं ।।

---

[#४०८]

1. <उपजानु-उपकर्ण-उपनीवेष्ठक्># ।। PS_४,३.४० ।।

_______Sठा०ठ्JKव्_४,३.४०ः

उपजान्व्-आदिभ्यः शब्देभ्यः सप्तमी-समर्थेभ्यः प्रायभव इत्येतस्मिन्विषये ठक्प्रत्ययो भवति ।
अणोऽपवादः ।
औपजानुकः ।
औपक्रिणकः ।
औपनीविकः ।।

---

1. <सम्भूते># ।। PS_४,३.४१ ।।

_______Sठा०ठ्JKव्_४,३.४१ः

तत्र इत्येव ।
सप्तमी-समर्थाद्ङ्य्-आप्-प्रातिपदिकात्सम्भूते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
अवक्लृप्तिः प्रमाणानतिरेकश्च सम्भवत्यर्थः इह गृह्यते, न+उत्पत्तिः सत्ता वा, जातभवाभ्यां गतत्वाथ् ।
स्रुघ्ने सम्भवति स्रौघनः ।
माथुरः ।
राष्ट्रियः ।।

---

1. <कोशाड्ढञ्># । । PS_४,३.४२ । ।

_______Sठाञ्ठ्JKव्_४,३.४२ः

कोश-शब्दात्ठञ्प्रत्ययो भवति तत्र सम्भूते इत्यस्मिन्विषये ।
अणोऽपवादः ।
कोशे सम्भूतं कौशेयं वस्त्रं ।
रूढिरेषा, तेन क्रिमौ न भवति, खड्गकोशाच्च । ।

---

1. <कालात्साधु-पुष्प्यत्-पच्यमानेषु># । । PS_४,३.४३ । ।

_______Sठाञ्ठ्JKव्_४,३.४३ः

तत्र इत्येव काल-विशेष-वाचिभ्यः सप्तमी-समार्थेभ्यः साध्व्-आदिष्वर्थेषु यथाविहितं प्रत्ययो भवति ।
हेमन्ते साधुः हैमन्तः प्राकारः ।
शैशिरमनुलेपनं ।
वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः ।
ग्रैष्म्यः पाटलाः ।
शरदि पच्यन्ते शारदाः शालयः ।
ग्रैष्म यवाः । ।

---

1. <उप्ते च># । । PS_४,३.४४ । ।

_______Sठाञ्ठ्JKव्_४,३.४४ः

तत्र इत्येव, कालातिति च ।
सप्तमी-समर्थात्कालवाचिनः प्रातिपदिकातुप्तेऽर्थे यथाविहितं प्रत्ययो भवति ।
हेमन्ते उप्यन्ते हैमन्ता यवाः ।
ग्रैष्माः व्रीहयः ।
योगविभाग उत्तरार्थः । ।

---

1. <आश्वयुज्या वुञ्># । । PS_४,३.४५ । ।

______Sठा~ठ्JKव्_४,३.४५ः

आश्वयुजी-शब्दात्वुञ्प्रत्ययो भवति उप्तेऽर्थे ।
ठञोऽपवादः ।
आश्वयुज्यामुप्ताः आश्वयुजकाः माषाः ।
अश्विनीभ्यां युक्ता पौर्णमासी आश्वयुजी ।
अश्विनीपर्यायोऽश्वयुक्-शब्दः । ।

---

[#४०९]

1. <ग्रीष्म-वसन्तादन्यत्रस्याम्># । । PS_४,३.४६ । ।

______Sठा~ठ्JKव्_४,३.४६ः

ग्रीष्म-वसन्त-शब्दाभ्यां अन्यतरस्यां वुञ्प्रत्ययो भवति उप्तेऽर्थे ।
ऋत्वणोऽपवादः ।
ग्रीष्मं सस्यम्, ग्रैष्मकं ।
वासन्तम्, वासन्तकं । ।

---

1. <देयं ऋणे># । । PS_४,३.४७ । ।

______Sठा~ठ्JKव्_४,३.४७ः

तत्र इत्येव, कालातिति च ।
सप्तमी-समार्थात्कालवाचिनः प्रातिपदिकात्देयं इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद्देयं ऋणं चेत्तद्भवति ।
मासे देयं ऋणं मासिकं ।
आर्धमासिकं ।
सांवत्सरिकं ।
ऋणे इति किं ? मासे देया भिक्षा । ।

---

1. <कलाप्य्-अश्वत्थ-यवबुसाद्वुन्># । । PS_४,३.४८ । ।

_______Sठा~ठ्JKव्_४,३.४८ः

कालातित्येव ।
कलापिनश्वत्थ यवबुस इत्येतेभ्यः कालवाचिभ्यः सप्तमी-समर्थेभ्यो देयं ऋणं इत्येतस्मिन्नर्थे वुन्प्रत्ययो भवति ।
कलाप्यादयः शब्दाः साहचर्यात्काले वर्तन्ते ।
यस्मिन्काले मयूशः कलापिनो भवन्ति स कलापी ।
यस्मिनश्वत्थाः फलन्ति सोऽश्वत्थः ।
यस्मिन्यवबुसं सम्पद्यते स यवबुस-शब्देन+उच्यते ।
कलापिनि काले देयं ऋणं कलापकं ।
अश्वत्थकं ।
यवबुसकं । ।

---

1. <ग्रीष्म-अवरसमाद्वुञ्># । । PS_४,३.४९ । ।

_______Sठा~ठ्JKव्_४,३.४९ः

ग्रीष्म अवरसम-शब्दाभ्यां वुञ्प्रत्ययो भवति देयं ऋणं इत्येतस्मिन्नर्थे ।
अण्ठञोरपवादः ।
ग्रीष्मे देयं ऋणं ग्रैष्मकं ।
आवरसमकं ।
प्रत्ययान्तरकरणं वृद्ध्य्-अर्थं ।
समा-शब्दो वर्षपर्यायः । ।

---

1. <संवत्सर-आग्रहायणीभ्यां ठञ्च># । । PS_४,३.५० । ।

_______Sठा~ठ्JKव्_४,३.५०ः

संवत्सर-आग्रहायणी-शब्दाभ्यां ठञ्प्रत्ययो भवति, चकाराद्वुञ्च देयं ऋणं इत्येतस्मिन्नर्थे संवत्सरे देयं ऋणं सांवत्सरिकम्, सांवत्सरकं ।
आग्रहयणिकम्, आग्रहायणकं ।
वा इति वक्तव्ये ठञ्-ग्रहणं सन्धिवेलादिषु संवत्सरात्फलपर्वणोः इति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यातिति । ।

---

[#४१०]

1. <व्याहरति मृगः># । । PS_४,३.५१ । ।

_______Sठाञ्ठ्JKव्_४,३.५१ः

तत्र इत्येव, कालातिति च ।
कालवाचिनः सप्तमी-समर्थात्प्रातिपदिकात्व्याहरति मृगः इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति ।
निशायां व्याहरति मृगः वैशः, नैशिकः ।
प्रादोषः, प्रादोसिकः ।
मृगः इति किं ? निशायां व्याहरति उलूकः । ।

---

1. <तदस्य सोढम्># । । PS_४,३.५२ । ।

_______Sठाञ्ठ्JKव्_४,३.५२ः

कालातित्येव ।
तदिति प्रथमा-समर्थात्कालवाचिनः प्रातिपदिकातस्य इति षष्ठ्य्-अर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमा-समर्थं सोढं चेत्तद्भवति ।
सोढं जितमभ्यस्तं इत्यर्थः ।
निशासहचरितं अध्ययनं निशा, तत्सोढं अस्य छात्रस्य नैशः, वैशिकः ।
प्रादोषः, प्रदोषिकः । ।

---

1. <तत्र भवः># । । PS_४,३.५३ । ।

_______Sठाञ्ठ्JKव्_४,३.५३ः

कालातिति निवृत्तं ।
तत्र इति सप्तमी-समर्थात्ङ्य्-आप्-प्रातिपदिकात्भवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
सत्ता भवत्यर्थो गृह्यते, न जन्म, तत्र जातः (*४,३.२५) इति गतार्थत्वाथ् ।
स्रुघ्ने भवः स्रौघ्नः ।
माथुरः ।
राष्ट्रियः ।
पुनस्तत्र-ग्रहणं तदस्य इति निवृत्त्य्-अर्थं । ।

1. <दिग्-आदिभ्यो यत्># । । PS_४,३.५४ । ।

_______Sठान्ठJKव्_४,३.५४ः

दिशित्येवं आदिभ्यः प्रातिपदिकेभ्यः यत्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणश्छस्य च अपवादः ।
दिशि भवं दिश्यं ।
वर्ग्यं ।
मुख-जघन-शब्दयोरशरीर-अवयव-अर्थः पाठः, सेनामुख्यम्, सेनाजघन्यं इति ।
दिश् ।
वर्ग ।
पूग ।
गण ।
पक्ष ।
धाय्या ।
मित्र ।
मेधा ।
अन्तर ।
पथिन् ।
रहस् ।
अलीक ।
उखा ।
साक्षिन् ।
आदि ।
अन्त ।
मुख ।
जघ्न ।
मेघ ।
यूथ ।
उदकात्सञ्ज्ञयां ।
न्याय ।
वंश ।
अनुवंश ।
विश ।
काल ।
अप् ।
आकाश ।
दिगादिः । ।

1. <शरीर-अवयवाच्च># । । PS_४,३.५५ । ।

_______Sठाऱ्ठ्JKव्_४,३.५५ः

शरीरं प्राणिकायः शरीर-अवयव-वाचिनः प्रातिपदिकाद्यत्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
दन्तेषु भवं दन्त्यं ।
कर्ण्यं ।
ओष्ठ्यं । ।

---

[#४११]

1. <दृति-कुक्षि-कलशि-वस्त्य्-अस्त्य्-अहेर्ढञ्># । । PS_४,३.५६ । ।

_______Sठाऱ्ठ्JKव्_४,३.५६ः

दृत्यादिभ्यः प्रातिपदिकेभ्यः ढञ्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
दृतौ भवं दार्तेयं ।
कौक्षेयं ।
कालशेयं ।
वास्तेयं ।
आस्तेयं ।
आहेयं अजरं विषं ।
अस्ति-शब्दः प्रातिपदिकं, न तिङ्-अन्तः । ।

---

1. <ग्रीवाभ्योऽण्च># । । PS_४,३.५७ । ।

_______Sठाऱ्ठ्JKव्_४,३.५७ः

ग्रीवा-शब्दादण्प्रत्ययो भवति, चकाराड्ढञ्च, तत्र भवः इत्येतस्मिन्विषये ।
शरीर-अवयवाद्यतोऽपवादः ।
ग्रीवासु भवं ग्रैवम्, ग्रैवेयं ।
ग्रीवा-शब्दो धमनीवचनस्तासां बहुत्वाद्बहुवचनं कृतं । ।

---

1. <गम्भीराञ्ञ्यः># । । PS_४,३.५८ । ।

_______Sठाञ्ठJKव्_४,३.५८ः

गम्भीर-शब्दाद्ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
गम्भीरे भवं गाम्भीर्यं ।
बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यं ।
बाह्यं ।
दैव्यं ।
पाञ्चजन्यं । ।

---

1. <अव्ययीभावाच्च># । । PS_४,३.५९ । ।

_______Sठाञ्ठJKव्_४,३.५९ः

अव्ययीभाव-सञ्ज्ञाकात्प्रातिपदिकाच्च ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
न च सर्वस्मादव्ययीभावाद्भवति, किं तर्हि, परिमुखादेः ।
परिमुखादीनां च गणपाठस्य एतदेव प्रयोजनं ।
तेषां विशेषणं अव्ययीभाव-ग्रहणं ।
परिमुखं भवं पारिमुखं ।
पारिहनव्यं ।
परिमुखादेरन्यत्र न भवति, औपकूलं ।
परिमुख ।
परिहनु ।
पर्योष्ठ ।
पर्युलूखल ।
परिसीर ।
अनुसीर ।
उपसीर ।
उपस्थल ।
उपकलाप ।
अनुपथ ।
अनुखड्ग ।
अनुतिल ।
अनुशीत ।
अनुमाष ।
अनुयव ।

अनुयूप ।
अनुवंश । ।

---

1. <अन्तः-पूर्वपदाट्ठञ्># । । PS_४,३.६० । ।

_______Sठा~ठ्JKव्_४,३.६०:

अव्ययीभावातित्येव ।
अन्य्तः-शब्दो विभक्त्य्-अर्थे समस्यते ।
अतपूर्वपदातव्ययीभावाट्ठञ्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
आन्तर्वेश्मिकं ।
आन्तर्गेहिकं ।

[#४१२]

समानशब्दाद्ठञ्वक्तव्यः ।
समाने भवं सामानिकं ।
तदादेश्च ।
सामानग्रामिकं ।
सामानदेशिकं ।
अध्यात्मादिभ्यश्च ।
आध्यात्मिकं ।
आधिदैविकं ।
आधिभौतिकं ।
अध्यात्मादिराकृतिगणः ।
ऊर्ध्वन्दमाच्च ठञ्वक्तव्यः ।
और्ध्वन्दमिकः ।
ऊर्ध्व-शब्देन समानार्थ ऊर्ध्वन्दम-शब्दः ।
ऊर्ध्वदेहाच्च ।
और्ध्वदेहित्कं ।
लोकोत्तरपदाच्च ।
ऐहलौकिकं ।
पारलौकिकं ।
मुखपार्श्व-शब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः ।
मुखतीयं ।
पार्श्वतीयं ।
जनपरयोः कुक्च ।
जनकीयं ।
परकीयं ।
मध्यशब्दादीयः ।
मध्यीयः मण्मीयौ च प्रत्ययौ वक्तव्यौ ।
माध्यमं ।
ंध्यमीयं ।

मध्यो मध्यं दिनण्च अस्माथ् ।
मध्ये भवं माध्यन्दिनं ।
स्थम्नो लुग्वक्तव्यः ।
अश्वत्थामा ।
अजिनान्ताच्च ।
वृकाजिनः ।
सिंहाजिहः ।

[#४१३]

समानस्य तदादेश्च अध्यात्मादिषु च+इष्यते ।
ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च । ।
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा । ।
मध्यो मध्यं दिनण्च अस्मात्स्थाम्नो लुगजिनात्तथा । ।

---

1. <ग्रामात्पर्य्-अनु-पूर्वात्># । । PS_४,३.६१ । ।

_______Sठाऽ्ठ्JKव्_४,३.६१ः

अव्ययीभवातित्येव ।
ग्राम-शब्दान्तादव्ययीभावात्परि अनु इत्येवं पूर्वात्ठञ्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
पारिग्रामिकः ।
आनुग्रामिकः । ।

---

1. <जिह्वामूल-अङ्गुलेश्छः># । । PS_४,३.६२ । ।

_______Sठाऽ्ठ्JKव्_४,३.६२ः

जिह्वामूल-शब्दादङ्गुलि-शब्दात्च छनः प्रतयो भवति तत्र भवः इत्येतस्मिन्विषये ।
यतोऽपवादः ।
जिह्वामूलीयं ।
अङ्गुलीयं । ।

---

1. <वर्गान्ताच्च># । । PS_४,३.६३ । ।

_______Sठाञ्ठ्JKव्_४,३.६३ः
वर्ग-शब्दान्तात्च प्रातिपदिकाच्छः प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
क-वर्गीयं ।
च-वर्गीयं । ।

---

1. <अशब्दे यत्-खावन्यतरस्याम्># । । PS_४,३.६४ । ।

_______Sठाञ्ठ्JKव्_४,३.६४ः

वर्गान्तातित्येव ।
शब्दादन्यस्मिन्प्रत्यय-अर्थे वर्गान्तात्प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः तत्र भवः इत्येतस्मिन्विषये ।
छे प्राप्ते वचनं ।
पक्षे सोऽपि भवति ।
वासुदेववर्ग्यः, वासुदेववर्गीणः, वासुदेववर्गीयः ।
युधिष्ठिरवर्ग्यः, युधिष्ठिरवर्गीणः, युधिष्ठिरवर्गीयः ।
अशब्दे इति किं ? कवर्गीयो वर्णः । ।

---

1. <कर्ण-ललाटात्कनलङ्कारे># । । PS_४,३.६५ । ।

_______Sठाञ्ठ्JKव्_४,३.६५ः

कर्णललाट-शब्दाभ्यां कन्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषयेऽलङ्कारेऽभिधेये ।
यतोऽपवादः ।
कर्णिका ।
ललाटिका ।
अलङ्कारे इति किं ? कर्ण्यं ।
ललाट्यं । ।

---

1. <तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः># । । PS_४,३.६६ । ।

_______Sठाञ्ठJKव्_४,३.६६ः

व्याख्यायतेऽनेन इति व्याख्यानं, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम ।
तस्य इति षष्ठीसमर्थात्व्याखयातव्यनाम्नः प्रातिपदिकाद्व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति तत्र भवे च ।
वाक्यार्थसमीपे चकारः श्रूयमाणः पूर्ववाख्य-अर्थं एव समुच्चिनोति तत्र भव (*४,३.५३) इति ।

[#४१४]

सुपां व्याख्यानः सौपो ग्रन्थः ।
तैङः ।
कार्त्तः ।
सुप्सु भवं सौपं ।
तैङं ।
कार्तं ।
व्याख्यातव्यनाम्नः इति किं ? पातलिपुत्रस्य व्याख्यानी सुकोशला, पाटलिपुत्रः सुकोशलया व्याख्यायते, एवं संनिवेशं पाटलिपुत्रं इति, न तु पाटलिपुत्रो व्याख्यातव्यनाम ।
भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः ।
कृत-निर्देशौ हि तौ । ।

---

1. <बह्वचोऽन्तोदात्ताट ठञ्># । । PS_४,३.६७ । ।

_______Sठाञ्ठJKव्_४,३.६७ः

बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद्भवव्याख्यानयोः ठञ्प्रत्ययो भवति ।
अणोऽपवादः ।
षात्वणत्विकं ।
नातानतिकं ।
समासस्वरेण अन्तोदात्ताः प्रकृतयः ।
बह्वचः इति किं ? द्व्यचः ठकं वक्ष्यति ।
एकाच्प्रयुदाह्रियते ।
सौपं ।
तैङं ।
कार्तं ।
अन्योदात्तातिति किं ? संहितायाः सांहितं ।
संहिताशब्दो हि गतिस्वरेण अद्युदात्तः । ।

---

1. <क्रतु-यज्ञेभ्यश्च># । । PS_४,३.६८ । ।

_______Sठा्ञ्ठJKव्_४,३.६८ः

क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनमभ्यः प्रातिपदिकेभ्यः भवव्याख्यानयोरर्थयोः ठञ्प्रत्ययो भवति ।
अणोऽपवादः ।
क्रतुभ्यस्तावत्- अग्निष्टोमस्य व्याख्यानः, तत्र भवः आग्निष्टोमिकः ।
वाजपेयिकः ।
राजसूयिकः ।
यज्ञेभ्यः - पाकयज्ञिकः ।
नावयज्ञिकः ।
अनन्तोदात्तार्थ आरम्भः ।
क्रतुभ्यः इत्येव सिद्धे यज्ञ-ग्रहणं असोमयागेभ्योऽपि यथा स्याथ् ।
पाञ्चौदनिकः ।
दाशौदनिकः ।
बहुवचनं स्वरूपविधिनिरासार्थं । ।

---

1. <अध्यायेष्वेव र्षेः># । । PS_४,३.६९ । ।

_______Sठा्ञ्ठJKव्_४,३.६९ः

ऋषि-शब्दाः प्रवर्नामधेयानि, तेभ्यः ऋषि-शब्देभ्यो भवव्याख्यानयोः अर्थयोः ठञ्प्रतयो भवति अणोऽपवादः अध्यायेष्वेव प्रत्ययार्थे विशेषणेषु ।
व्याख्यातव्यनाम्नः इत्यनुवर्तते, तत्साहचर्यादृषिशब्दैर्ग्रन्थ उच्यते ।
वसिष्ठस्य व्याख्यानः तत्र भवो वा वासिष्ठिकोऽध्यायः ।
वैश्वामित्रिकः ।
अध्यायेषु इति किं ? वासिष्ठी ऋक् । ।

---

1. <पौराडाश-पुरोडाशात्ष्ठन्># । । PS_४,३.७० । ।

_______Sठा्ञ्ठJKव्_४,३.७०ः

पौराडाश-शब्दात्पुरोडाश-शब्दाच्च भवव्याख्यानयोरर्थयोः ष्ठन्प्रत्ययो भवति ।
पुरोडाशाः पिष्टपिण्डाः, तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानः तत्र भवो वा पौरोडाशिकः, पौरोडाशिकी ।

पुरोडाशसहचरितो ग्रन्थः पुरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः, पुरोडाशिकी ।
षकारो ङीषर्थः । ।

---

[#४१५]

1. <छन्दसो यदणौ># । । PS_४,३.७१ । ।

______Sठा-ठ्JKव्_४,३.७१ः

छन्दः-शब्दाद्भवव्याख्यानयोरर्थयोः यदणौ प्रत्ययौ भवतः ।
द्व्यचः इति ठकि प्राप्ते वचनं ।
छन्दस्यः छान्दसः । ।

---

1. <द्व्यज्-ऋद्-ब्राह्मण-र्क्-प्रथम-अध्वर-पुरश्चरण-नामाख्याताट्ठक्># । । PS_४,३.७२ । ।

______Sठा-ठ्JKव्_४,३.७२ः

द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोः ठक्प्रत्ययो भवति ।
अणादेरपवादः ।
द्व्यचस्तावत्- ऐष्टिकः ।
पाशुकः ।
ऋकारान्तात्- चातुर्होतृकः ।
पाञ्चहोतृकः ।
ब्राह्मण - ब्राह्मणिकः ।
ऋक्- आर्चिकः ।
प्रथम - प्राथमिकः ।
अध्वर - आध्वरिकः ।
पुरश्चरण - पौरश्चरणिकः ।
नामाख्यात-ग्रहणं सङ्घातविगृहीतार्थं ।
नामिकः ।
आख्यातिकः ।
नामख्यातिकः । ।

---

1. <अणृगयन-आदिभ्यः># । । PS_४,३.७३ । ।

_______Sठा~ठ्JKव्_४,३.७३ः

ऋगयन-आदिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोः अण्प्रत्ययो भवति ।
ठञादेरपवादः ।
आर्गयनः ।
पादव्याख्यानः ।
अण्-ग्रहणं बाधकबाधन-अर्थं ।
वास्तुविद्यः ।
ऋगयन ।
पदव्याख्यान ।
छन्दोमान ।
छग्दोभाषा ।
छन्दोविचिति ।
न्याय ।
पुनरुक्त ।
व्याकरण ।
निगम ।
वास्तुविद्या ।
अङ्गविद्या ।
क्षत्रविद्या ।
उत्पात ।
उत्पाद ।
संवत्सर ।
मुहूर्त ।
निमित्त ।
उपनिषथ् ।
शिक्षा ।
ऋगयनादिः । ।

---

1. <तत आगतः># । । PS_४,३.७४ । ।

_______Sठा~ठ्JKव्_४,३.७४ः

ततः इति पञ्चमी-समर्थादागतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
स्रुघ्नातागतः स्रौघनः ।
माथुरः ।
राष्ट्रियः ।
ततः इति मुख्यं अपादानं विवक्षितं यत्तदिह गृह्यते, न नान्तरीयकं ।
स्रुघ्नादाग्च्छन्वृक्षमूलादागतः इति । ।

---

1. <ठगायस्थानेभ्यः># । । PS_४,३.७५ । ।

_______Sठा~ठJKव्_४,३.७५ः

आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानं ।
आयस्थनवाचिभ्यः प्रातिपदिकेभ्यः ठक्प्रत्ययो भवति तत आगतः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
छं तु परत्वाद्बाधते ।
शुल्कशालाया आगतः शौल्कशालिकः ।
आकरिकं ।
बहुवचनं स्वरूपविधिनिरासार्थं । ।

---

[#४१६]

1. <शुण्डिकादिभ्योऽण्># । । PS_४,३.७६ । ।

_______Sठा~ठJKव्_४,३.७६ः

शुण्डिक इत्येवं आदिभ्यः प्रातिपदिकेभ्यः अण्प्रत्ययो भवति ततः आगतः इत्येतस्मिन्विषये ।
आयस्थानठकोऽपवादः ।
शुण्डिकादागतः शौण्डिकः ।
कार्कणः ।
अण्-ग्रहणं बाधकबाधनार्थं ।
औदपानः ।
शुण्डिक ।
कृकण ।
स्थण्डिल ।
उदपान ।
उपल ।
तीर्थ ।
भूमि ।
तृण ।
पर्ण ।
शुण्दिकादिः । ।

---

1. <विद्या-योनि-सम्बन्धेभ्यो वुञ्># । । PS_४,३.७७ । ।

_______Sठा~ठ्JKव्_४,३.७७ः

विद्या-योनि-कृतः सम्बन्धो येषां ते विद्या-योनि-सम्बन्धाः ।
तद्वाचिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति तत आगतः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
छं तु परत्वाद्बाधते ।
विद्या-सम्बन्धेभ्यस्तावत्- उपाध्यायादागतं औपाध्यायकं ।
शौष्यकं ।
आचार्यकं ।
योनि-सम्बन्धेभ्यः - मातामहकः ।
पैतामहकः ।
मातुलकः । ।

---

1. <ऋतष्-ठञ्># । । PS_४,३.७८ । ।

_______Sठा~ठ्JKव्_४,३.७८ः
विद्या-योनि-सम्बन्धेभ्यः इत्येव ।
ऋ-कारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसम्बन्ध-वाचिभ्यः ठञ्प्रत्ययो भवति तत आगतः इत्येतस्मिन्विषये ।
वुञोऽपवादः ।
विद्या-सम्बन्ध-वाचिभ्यस्तावत्- होतुरागतं हौतृकं ।
पौतृकं ।
योनि-सम्बन्ध-वाचिभ्यः - भ्रातृकं ।
स्वासृकं ।
मातृकं ।
तपरकरणं मुखसुख-अर्थं ।
विद्यायोनिभ्यां अन्यत्र, सावित्रं । ।

---

1. <पितुर्यच्च># । । PS_४,३.७९ । ।

_______Sठा~ठ्JKव्_४,३.७९ः

पितृ-शब्दाद्यत्प्रत्ययो भवति, च-काराद्ठञ्च ततागतः इत्येतस्मिन्विषये।
पितुरागतं पित्र्यम्, पैतृकं॥

---

1. <गोत्रादङ्कवत्># ॥ PS_४,३.८० ॥

_______Sठा‌ऽठ्JKव्_४,३.८०:

अपत्याधिकारादन्यत्र लौकिकं गोत्रं अपत्यमात्रं गृह्यते।
गोत्र-प्रत्ययान्तात्प्रातिपदिकादङ्कवत्प्रत्यय-विधिर्भवति ततः आगतः इत्येतस्मिन्विषये।
अङ्क-ग्रहणेन तस्य+इदं अर्थसामान्यं लक्ष्यते।
तस्माद्वुञतिदिष्यते, न अण्, सङ्घ-अङ्क-लक्षणेष्वञ्-यञ्-इञां अण्(*४,३.१२७) इति।
औपगवानां अङ्कः औपगवकः।
कापटवकः।
नाडायनकः।
चारायणकः।
एवं औपगवेभ्य आगतं औपगवकं।
कापटवकं।
नाडायनकं।
चारायणकं॥

---

[#४१७]

1. <हेतु-मनुष्येभ्योऽन्यतरस्यां रूप्यः># ॥ PS_४,३.८१ ॥

_______Sठा‌ऽठ्JKव्_४,३.८१:

हेतुभ्यो मनुस्येभ्यश्च अन्यतरस्यां रुप्यः प्रत्ययो भवति तत आगतः इत्येतस्मिन्विषये।
मनुष्य-ग्रहणं अहेत्वर्थं।
हेतुः कारणं।
हेतुभ्यस्तावत्- समादागतं समरूप्यम्, समीयं।
विषमरूप्यम्, विषमीयं।
गहादित्य्वाच्छः।
मनुस्येभ्यः - देवदत्तरूप्यं।
यज्ञदत्तरूप्यं दैवदत्तं।
याज्ञदत्तं।
बहुवचनं स्वरूपविधिनिरासार्थं॥

---

1. <मयट्च># । । PS_४,३.८२ । ।

_______SठJKव्_४,३.८२ः

हेतुभ्यो मनुष्येभ्यः च मयट्प्रत्ययो भवति ततः आगतः इत्येतस्मिन्विषये ।
सममयं ।
विषममयं ।
मनुस्येभ्यः - देवदत्तमयं ।
यज्ञदत्तमयं ।
ट-कारो ङीब्-अर्थः ।
सममयी ।
योगविभागो यथासङ्ख्यनिरासार्थः । ।

---

1. <प्रभवति># । । PS_४,३.८३ । ।

_______SठJKव्_४,३.८३ः

ततः इत्येव ।
पञ्चमी-समर्थात्ङ्याप्-प्रातिपदिकात्प्रभवति इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति ।
प्रभवति प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः ।
हिमवतः प्रभवति गैमवती गङ्गा ।
दारदी सिन्धुः । ।

---

1. <विदूराञ्ञ्यः># । । PS_४,३.८४ । ।

_______SठJKव्_४,३.८४ः

विदूर-शब्दात्ञ्यः प्रत्ययो भवति ततः प्रभवति इत्येतस्मिन्विषये ।
अणोऽपवादः ।
विदूरात्प्रभवति वैदूर्यो मणिः ।
ननु च वालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते ? एवं तर्हि - वालवायो विदूरं च प्रकृत्यनतरं एव वा ।
न वै तत्र इति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् । ।

---

1. <तद्गच्छति पथि-दूतयोः># । । PS_४,३.८५ । ।

_______Sठाऱ्ठJKव्_४,३.८५ः

तदिति द्वितीया-समर्थाद्गच्छति इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत्स भवति दूतो वा ।
स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ।
माथुरः ।
तत्स्थेषु गच्छत्सु पन्था गच्छति इत्युच्यते ।
अथ वा स्रुघ्न-प्राप्तिः पथो गमनं ।
पथिदूतयोः इति किं ? स्रुघ्नं गच्छति सार्थः । ।

---

[#४१८]

1. <अभिनिष्क्रामति द्वारम्># । । PS_४,३.८६ । ।

_______Sठाऱ्ठJKव्_४,३.८६ः

तदित्येव ।
तदिति द्वितीया-समर्थादभिनिष्क्रामति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यतभिनिष्क्रामति द्वारं चेद्तद्भवति ।
आभिमुख्येन निष्क्रामति अभिनिष्क्रामति ।
स्रुघ्नं अभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नं ।
माथुरं ।
राष्ट्रियं ।
द्वारं अभिनिष्क्रमणक्रियायां करणं प्रसिद्धं, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा साध्वसिश्छिनत्ति इति ।
द्वारं इति किं ? स्रुघ्नं अभिनिष्क्रामति पुरुषः । ।

---

1. <अधिकृत्य कृते ग्रन्थे># । । PS_४,३.८७ । ।

_______Sठाऱ्ठJKव्_४,३.८७ः

तदित्येव ।
अधिकृत्य+एतदपेक्ष्य द्वितीया ।
अधिकृत्य प्रस्तुत्य, आगूर्य इत्यर्थः ।
तदिति द्वितीयासमर्थादधिकृत्य कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति ।

सुभद्रामधित्य कृतो ग्रन्थः सौभद्रः ।
गैरिमित्रः ।
यायातः ।
ग्रन्थे इति किं ? सुभ्द्रां अधिकृत्य कृतः प्रासादः ।
लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलं ।
वासवदत्तां अधिकृत्य कृता आख्यायिका वासवदत्ता ।
सुमनोत्तरा ।
उर्वशी ।
न च भवति ।
भिमरथी । ।

---

1. <शिशुक्रन्द-यमसभ-द्वन्द्व-इन्द्रजनन-आदिभ्यश्छः># । । PS_४,३.८८ । ।

_______Sठाञ्ठJKव्_४,३.८८ः

तदित्येव, अधिकृत्य कृते ग्रन्थे इति च ।
शिशुक्रन्द-आदिभ्यो द्वितिया-समर्थेभ्यः छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे ।
अणोऽपवादः ।
शिशूनां क्रन्दनं शिशुक्रन्दः, तं अधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः ।
यमस्य सभा यमसभम्, यमसभीयः ।
द्वन्द्वात्- इन्द्रजननीयं ।
प्रद्युम्नागमनीयं ।
इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्तव्यः, प्रातिपदिकेषु न पठ्यते ।
द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ।
दैवासुरं ।
राक्षोऽसुरं ।
गौणमुख्यं ।
इन्द्रजनादेराकृतिगणत्वात्शिशुक्रन्दादयोऽपि तत्र+एव द्रष्टव्याः ।
प्रपञ्च-अर्थं एषां ग्रहणं ।
एवं सति देवासुरादि-प्रतिषेधोऽपि न वक्तव्यः, ततश्छ-प्रत्ययस्य अदर्शनात् । ।

---

[#४१९]

1. <सोऽस्य निवासः># । । PS_४,३.८९ । ।

_______Sठाञ्ठJKव्_४,३.८९ः

सः इति प्रथमा-समर्थातस्य इति षष्ठ्य्-अर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमा-समर्थं निवासः चेत्स भवति ।

निवसन्त्यस्मिन्निवासो देश उच्यते ।
स्रुघ्नो निवासोऽस्य स्रौघ्नः ।
माथुरः ।
राष्ट्रियः । ।

---

1. <अभिजनश्च># । । PS_४,३.९० । ।

_______Sठा~ठ्JKव्_४,३.९०ः

सोऽस्य इत्येव ।
स इति प्रथमा-समर्थादस्य+इति षष्ठ्य्-अर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमा-समर्थं अभिजनश्चेत्स भवति ।
अभिजनः पूर्वबान्धवः ।
तत्सम्बन्धाद्देशोऽपि अभिजनः इति उच्यते, यस्मिन्पूर्वबान्ध-वैरुषितं ।
तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यो, निवासप्रत्यासत्तेः ।
स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः ।
माथुरः ।
राष्टियः ।
निवासाभिजनयोः को विशेषः ? यत्र संप्रत्युष्यते स निवासः, यत्र पूर्वैरुषितं सोऽभिजनः ।
योगविभाग उत्तरार्थः । ।

---

1. <आयुधजीविभ्यश्छः पर्वते># । । PS_४,३.९१ । ।

_______Sठा~ठ्JKव्_४,३.९१ः

सोऽस्य अभिजनः इति वर्तते ।
आयुधजीविभ्यः इति तादर्थ्ये चतुर्थी, पर्वते इति प्रकृति-विशेषणं ।
पर्वतवाचिनः प्रथमा-समर्थादभिजनादस्य+इति षष्ठ्यर्थे छनः प्रत्ययो भवति ।
आयुधजीविभ्यः आयुधजीव्यर्थं आयुधजीविनोऽभिधातुं प्रत्ययो भवति इत्यर्थः ।
हृद्गोलः पर्वतोऽभिजनः एषां आयुधजीविनां हृद्गोलीयाः ।
अन्धकवर्तीयाः ।
रोहितगिरीयाः ।
आयुधजीविभ्यः इति किं ? ऋक्षोदः पर्वतोऽभिजनः एशां ब्रह्मणानां आर्क्षोदा ब्राह्मणाः ।
पर्वते इति किं ? सांकाश्यका आयुधजीविनः । ।

---

1. <शण्दिक-आदिभ्यो ञ्यः># । । PS_४,३.९२ । ।

_______Sठाऱ्ठ्JKव्_४,३.९२ः

शण्डिक इत्येवं आदिभ्यः प्रातिपदिकेभ्यः ञ्यः प्रत्ययो भवति सोऽस्य अभिजनः इत्येतस्मिन्विषये ।
अणादेरपवादः ।
शाण्डिक्यः ।
सार्वसेन्यः ।
शण्डिक ।
सर्वसेन ।
सर्वकेश ।
शक ।
सट ।
रक ।
शङ्ख ।
बोध ।
शण्डिकादिः । ।

---

1. <सिन्धु-तक्षशिला-आदिभ्योऽण्-अञौ># । । PS_४,३.९३ । ।

_______Sठाऱ्ठ्JKव्_४,३.९३ः

आदि-शब्दः प्रत्येकं अभिसम्बध्यते ।
सिन्ध्व्-आदिभ्यः प्रातिपदिकेभ्यः तक्षशिलादिभ्यश्च यथासङ्ख्यं अण्-अञौ प्रत्ययौ भवतः सोऽस्य अभिजनः इत्येतस्मिन्विषये ।
सैन्धवः ।
वार्णवः ।

[#४२०]

सिन्धु ।
वर्णु ।
गन्धार ।
मधुमथ् ।
कम्बोज ।
कश्मीर ।
साल्व ।
किष्किन्धा ।
गदिका ।
उरस ।
दरथ् ।
ये तु कच्छादिषु पठ्यन्ते सिन्धु-वर्णु-प्रभृतयः, तेभ्यस्तत एव अणि सिद्धे मनुष्यवुञो बाधनार्थं वचनं ।
तक्षशिलादिभ्यः खल्वपि - ताक्षशिलः ।

वात्सोद्धरणः ।
तक्षशिला ।
वत्सोद्धरण ।
क्ॐएदुर ।
कण्डवारण ।
ग्रामणी ।
सरालक ।
कंस ।
किन्नर ।
संकुचित ।
सिंहकोष्ठ ।
कर्णकोष्ठ ।
बर्बर ।
अवसान । ।

---

1. <तूदी-शलातुर-वर्मती-कूचवाराड्ठक्-छण्-ढञ्-यकः># । । PS_४,३.९४ । ।

______Sठा˜ठ्JKव्_४,३.९४ः

तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासङ्ख्यं चत्वार एव ढक्छण्ढञ्यकित्येते प्रत्यया भवन्ति सोऽस्य अभिजनः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
तौदेयः ।
शालातुरियः ।
वार्मतेयः ।
कौचवार्यः । ।

---

1. <भक्तिः># । । PS_४,३.९५ । ।

______Sठा˜ठ्JKव्_४,३.९५ः

समर्थ-विभक्तिः प्रत्ययार्थश्च अनुवर्तते ।
अभिजन इति निवृत्तं ।
स इति प्रथमा-समर्थातस्य इति षष्ठ्य्-अर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमा-समर्थं भक्तिश्चेद्तद्भवति ।
भज्यते सेव्यते इति भक्तिः ।
स्रुघ्नो भक्तिरस्य स्रौघ्नः ।
माथुरः ।
राष्ट्रियः । ।

---

1. <अचित्तागददेश-कालाट्ठक्># । । PS_४,३.९६ । ।

_______Sठाञ्ठ्JKव्_४,३.९६ः

देश-काल-व्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट्ठक्प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन्विषये ।
अणोऽपवादः ।
वृद्धाच्छं परत्वाद्बाधते ।
अपूपो भक्तिरस्य आपूपिकः ।
पायसिकः ।
शाष्कुलिकः ।
अचित्तादिति किं ? दैवदत्तः ।
अदेशादिति किं ? स्रौघ्नः ।
अकालातिति किं ? ग्रैष्मः । ।

---

1. <महाराजाट्ठञ्># । । PS_४,३.९७ । ।

_______Sठाञ्ठ्JKव्_४,३.९७ः
महाराज-शब्दात्ठञ्प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
महाराजो भक्तिरस्य माहाराजिकः ।
प्रत्ययान्तरकरणं स्वरार्थं । ।

---

[#४२१]

1. <वासुदेव-अर्जुनाभ्यां वुन्># । । PS_४,३.९८ । ।

_______Sठाञ्ठ्JKव्_४,३.९८ः

वासुदेव-अर्जुन-शब्दाभ्यां वुन्प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन्विषये ।
छाणोरपवादः ।
वासुदेवो भक्तिरस्य वासुदेवकः ।
अर्जुनकः ।
ननु च वासुदेव-शब्दाद्गोत्र-क्षत्रिय-आख्येभ्यः इति वुञस्त्येव, न च अत्र वुन्-वुञोर्विशेषो विद्यते, किमर्थं वासुदेव-ग्रहणं ? सञ्ज्ञैषा देवता-

विशेषस्य न क्षत्रियाख्या ।
अल्प-अच्तर (*२,२.३४), अजाद्य्-अदन्तं (*२,२.३३) इति च अर्जुन-शब्दस्य पूर्व-निपातं अकुर्वन्ज्ञापयति अभ्यर्हितं पूर्वं निपतति इति ।।

---

1. <गोत्र-क्षत्रिय-आख्येभ्यो बहुलं वुञ्># ।। PS_४,३.९९ ।।

_______Sठाऩ्ठ्JKव्_४,३.९९ः

गोत्र-आख्येभ्यः क्षत्रिय-आख्येभ्यश्च प्रातिपदिकेभ्यः बहुलं वुञ्प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
वृद्धाच्छां परत्वाद्बाधते ।
ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः ।
औपगवकः ।
कापटवकः ।
क्षत्रिय-आख्येभ्यः - नाकुलकः ।
साहदेवकः ।
साम्बकः ।
आख्या-ग्रहणं प्रसिद्ध-क्षत्रिय-शब्द-परिग्रह-अर्थं, यथाकथंचित्क्षत्रिय-वृत्तिभ्यो मा भूथ् ।
बहुल-ग्रहणात्क्वचिदप्रवृत्तिरेव ।
पाणिनो भक्तिरस्य पाणिनीयः ।
पौरवीयः ।।

---

1. <जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने># ।। PS_४,३.१०० ।।

_______Sठाऩ्ठ्JKव्_४,३.१००ः

जनपदिनो ये बहुवचने जनपदेन समानशब्दास्तेषां जनपदवत्सर्वं भवति, प्रत्ययः प्रकृतिश्च सोऽस्य भक्तिः इत्येतस्मिन्विषये ।
जनपदतदवध्योश्च इत्यत्र प्रकरणे ये प्रत्यया विहिताः, ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते ।
जनपदिनो जनपदस्वामिनः क्षत्रियाः ।
अङ्गा जनपदो भक्तिरस्य आङ्गकः ।
वाङ्गकः ।
सौह्मकः ।
पौण्ड्रकः ।
तद्वतङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः ।
वाङ्गकः ।
सौह्मकः ।
पौण्ड्रकः ।
जनपदिनां इति किं ? पञ्चालाः ब्राह्मणा भक्तिरस्य पाञ्चालः ।
सर्व-ग्रहणं प्रकृत्य्-अतिदेश-अर्थं, स च द्व्येकयोः प्रयोजयति, वृद्धि-निमित्तेषु च वुञादिषु विशेषो न अस्ति इति ।
मद्रवृज्योः कनि विशेषः ।

मद्रस्यापत्यं, द्व्यञ्-मगध-कलिङ्ग-सूरमसादण्(*४,१.१७०), माद्रः ।
वृजि-शब्दादपि, वृद्ध-इत्-कोसल-अजादाञ्ञ्यङ्(*४,१.१७१), वार्ज्यः ।
स भक्तिरस्य इति प्रकृतिनिर्ह्रासे कृते, मद्रकः ।
वृजिकः ।
जनपदेन समानशब्दानां इति किं ? अनुष्ण्डो जनपदः पौरवो राजा, स भक्तिरस्य, पौरवीयः ।
बहुवचन-ग्रहणं समानशब्दताविषयलक्षणार्थं ।
अन्यथा हि यत्र+एव समानशब्दता तत्र+एव अतिदेशः स्यात्, एकवचन्-अद्विवचनयोर्न स्यात्, वाङ्गो वङ्गौ वा भक्तिरस्य इति ।
बहुवचने तु, बहुवचने समानशब्दानां एकवचन-द्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति ।
वाङ्गः वाङ्गौ वा भक्तिरस्य वाङ्गक ।।

---

[#४२२]

1. <तेन प्रोक्तम्># ।। PS_४,३.१०१ ।।

_______Sठाऽठ्JKव्_४,३.१०१ः

तेन इति तृतीया-समर्थात्प्रोक्तं इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
प्रकर्षेण+उक्तं प्रोक्तं इत्युच्यते, न तु कृतम्, कृते ग्रन्थे (*४,३.११६) इत्यनेन गतार्थत्वाथ् ।
अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः ।
पाणिनीयं ।
आपिशलं ।
काशकृत्स्नं ।।

---

1. <तित्तिरि-वरतन्तु-खण्डिक-उखाच्छण्># ।। PS_४,३.१०२ ।।

_______Sठाऽठ्JKव्_४,३.१०२ः

तित्तिर्यादिभ्यः शब्देभ्यः छण्प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये ।
अणोऽपवादः ।
तित्तिरिणा प्रोक्तं अधीयते तैत्तिरीयाः ।
वारतन्तवीयाः ।
खाण्डिकीयाः ।
औखीयाः ।
छन्दसि च अयं इष्यते ।
तित्तिरिणा प्रोक्तः श्लोकः इत्यत्र न भवति ।
शौनकादिभ्यश्छन्दसि (*४,३.१०६) इत्यत्र अस्य अनुवृत्तेः छन्दोऽधिकार-विहितानां च तद्विषयता इष्यते ।।

---

1. <काश्यप-कौशिकाभ्यां ऋषिभ्यां णिनिः># । । PS_४,३.१०३ । ।

_______Sठाऍ्ठJKव्_४,३.१०३ः

काश्यप-कौशिकाभ्यां ऋषिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
णकार उत्तरत्र वृद्ध्य्-अर्थः ।
कल्पस्ताभ्यां प्रोक्तः इति स्मर्यते ।
तस्य अपि तद्विषयता भवत्येव ।
शौनकादिभ्यश्छन्दसि (*४,३.१०६) इत्यत्र अनुवृत्तेः छन्दोऽधिकार-विहितानां च तत्र तद्विषयता इष्यते ।
काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः ।
कौशिकिनः ।
ऋषिभ्यां इति किं ? इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयं । ।

---

1. <कलापि-वैशम्पायन-अन्तेवासिभ्यश्च># । । PS_४,३.१०४ । ।

_______Sठाऍ्ठJKव्_४,३.१०४ः

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दास्तेभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये ।
अणोऽपवादः ।
छं तु परत्वाद्बाधते ।
तत्र कलाप्यन्तेवासिनश्चत्वारः - हरिद्रुः, छगली, तुम्बुरुः, उलपः इति ।
वैशम्पायनान्तेवसिनः नव - आलम्बिः, पलङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी इति ।
प्रत्यक्ष-कारिणो गृह्यन्ते न तु व्यवहिताः शैष्यशिष्याः ।
कुतः ? कलापिखाण्डायन-ग्रहणाथ् ।
तथा हि वैशम्पायनान्तेवासी कलापी, तदन्तेवासिनो वैशम्पायनान्तेवासिन एव भवन्ति, किं कलापि-ग्रहणेन ? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी खाण्डायनः, तस्य किं शौनकादिसु पाठेन ? तदेतत्प्रत्यक्षकारि-ग्रहणस्य लिङ्गं ।
कलाप्यनतेवासिभ्यः तावत्- हरिद्रुणा प्रोक्तं अधीयते हारिद्रविणः ।
त्ॐबुरविणः ।
औलपिनः ।
छङ्गलिनः ढिनुकं वक्ष्यति ।
वैशम्पायनान्तेवासिभ्यः - आलम्बिनः ।
पालङ्गिनः ।
कामलिनः ।
आर्चाभिनः ।
आरुणिनः ।
ताण्डिनः ।
श्यामायनिनः ।
कठाल्लुकं वक्ष्यति, कलापिनश्चाणं ।

[#४२३]

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू ।
उलपेन चतुर्थेन कालापकं इह+उच्यते । ।
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ ।
ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे । ।
श्यामायन उदिच्येषु उक्तः कठकलापिनोः ।
चरकः इति वैशम्पायनस्याख्या, तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरकाः इत्युच्यन्ते । ।

---

1. <पुराण-प्रोक्तेषु ब्राह्मण-कल्पेषु># । । PS_४,३.१०५ । ।

_______Sठा¬ठ्JKव्_४,३.१०५ः

प्रत्ययार्थ-विशेषणं एतथ् ।
तृतीया-समर्थात्प्रोक्ते णिनिः प्रत्ययो भवति यत्प्रोक्तं पुराण-प्रोक्ताश्चेद्ब्राह्मण-कल्पास्ते भवन्ति ।
पुराणेन चिरन्तनेन मुनिना प्रोक्ताः ।
ब्राह्मणेषु तावत्- भाल्लविनः ।
शाट्यायनिनः ।
ऐतरेयिणः ।
कल्पेषु - पैङ्गी कल्पः ।
आरुणपराजी ।
पुराण-प्रोक्तेषु इति किं ? याज्ञवल्कानि ब्राह्मणानि ।
आश्मरथः कल्पः याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्ता ।
तथा व्यवहरति सूत्रकारः ।
तद्विषयता कस्मान्न भवति ? प्रतिपदं ब्राह्मणेसु यः प्रत्ययस्तस्य तद्विषयता विधीयते णिनेः ।
अयं तु याज्ञवल्क्य-शब्दस्य कण्वादिषु पाठादण् ।
न वाऽयं योगश्छन्दोऽधिकारं अनुवर्तयति, तेन कल्पेष्वपि न भवति ।
पुराण इति निपातनात्तुडभावः ।
न वा+अत्यन्तबाधैव, तेन पुरातनं इत्यपि भवति । ।

---

1. <शौनक-आदिभ्यश्छन्दसि># । । PS_४,३.१०६ । ।

_______Sठा¬ठ्JKव्_४,३.१०६ः

शौनक इत्येवं आदिभ्यः णिनिः प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये छन्दस्यभिधेये ।
छाणोरपवादः ।
शौनकेन प्रोक्तं अधीयते शौनकिनः ।

वाजसनेयिनः ।
छन्दसि इति किं ? शौनकीया शिक्षा ।
कठशाठ इत्यत्र पठ्यते तत्संहतार्थं, केवलाद्धि लुकं वक्ष्यति ।
कटशाठाभ्यां प्रोक्तं अधीयते काठशाठिनः ।
शौनक ।
वाजसनेय ।
साङ्गरव ।
शाअर्ङ्गरव ।
साम्पेय ।
शाखेय ।
खाण्डायन ।
स्कन्ध ।
स्कन्द ।
देवदत्तशठ ।
रज्जुकण्ठ ।
रज्जुभार ।
कठशाठ ।
कशाय ।
तलवकार ।
पुरुषांसक ।
अश्ववपेय ।
शौनकादिः । ।

---

[#४२४]

1. <कठ-चरकाल्लुक्># । । PS_४,३.१०७ । ।

_______Sठाञ्ठ्JKव्_४,३.१०७ः

कठ-चरक-शब्दाभ्यां परस्यप्रोक्त-प्रत्ययस्य लुग्भवति ।
कठ-शब्दाद्वैशम्पायन-अन्तेवासिभ्यः इति णिनेः, चरक-शब्दादप्यणः ।
कठेन प्रोक्तं अधीयते कठाः ।
चरकाः ।
छन्दसि इत्येव ।
काठाः ।
चारकाः । ।

---

1. <कलापिनोऽण्># । । PS_४,३.१०८ । ।

______Sठा~ठ्JKव्_४,३.१०८ः

कलापि-शब्दादण्प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये।
वैशम्पायनान्तेवासित्वाण्णिनेरपवादः।
कलापिना प्रोक्तं अधीयते कालापाः।
इनण्यनपत्ये (*६,४.१६४) इति प्रकृतिभावे प्राप्ते, न अन्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिजाङ्गलि. लाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणां उपसङ्ख्यानं।
इति टिलोपः।
अथाण्-ग्रहणं किम्, यथाप्राप्तं इत्येव सिद्धं ? अधिकविधानार्थं, तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानि इत्येवं आदि सिद्धं।।

---

1. <छगलिनो ढिनुक्>#।। PS_४,३.१०९।।

______Sठा~ठ्JKव्_४,३.१०९ः

छङ्गलिन्-शब्दात्ढिनुक्प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये।
कलाप्यन्तेवासित्वाण्णिनेरपवादः।
छङ्गलिना प्रोक्तं अधीयते छागलेयिनः।।

---

1. <पाराशर्य-शिलालिभ्यां भिक्षु-नटसूत्रयोः>#।। PS_४,३.११०।।

______Sठा~ठ्JKव्_४,३.११०ः

णिनिरिह अनुवर्तते, न ढिनुक्।
पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये।
भिक्षु-नटसूत्रयोः इति यथासङ्ख्यं प्रत्ययार्थ-विशेषणं।
सूत्र-शब्दः प्रत्येकं अभिसम्बध्यते।
तद्विषयता चात्रेष्यते, तदर्थं छन्दो-ग्रहणं अनुवर्त्यं, गुणकल्पनया च भिक्षु-नटसूत्रयोः छन्दस्त्वं।
पाराशर्येण प्रोक्तं अधीयते पराशरिणो भिक्षवः।
शैलालिनो नटाः।
भिक्षुनटसूत्रयोः इति किं ? पाराशरं।
शैलालं।।

---

1. <कर्मन्द-कृशाश्वादिनिः>#।। PS_४,३.१११।।

_______Sठा~ठ्JKव्_४,३.१११ः

भिक्षु-नटसूत्रयोः इत्येव ।
कर्मन्द-कृशाश्व-शब्दाभ्यां इनिः प्रत्ययो भवति तेन प्रोक्तं इत्येतस्मिन्विषये यथासङ्ख्यं भिक्षु-नटसूत्रयोरभिधेययोः ।
अणोऽपवादः ।
अत्र अपि तद्विषयतार्थं छन्दो-ग्रहणं अनुवर्त्यं ।
कर्मन्देन प्रोक्तं अधीयते कर्मन्दिनो भिक्षवः ।
कृशाश्विनो नटाः ।
भिक्षु-नटसूत्रयोः इत्येव, कार्मन्दं ।
कार्शाश्वं । ।

---

[#४२५]

1. <तेन+एकदिक्># । । PS_४,३.११२ । ।

_______Sठा~ठ्JKव्_४,३.११२ः

तेन इति तृतीया-समर्थादेकदिकित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
एकदिक्तुल्यदिक्समानदिकित्यर्थः ।
सुदाम्ना एकदिक्सौदामनी विद्युथ् ।
हैमवती ।
त्रैककुदि ।
पैलुमूली ।
तेन इति प्रकृते पुनः समर्थविभक्ति-ग्रहणं छन्दोऽधिकारनिवृत्त्य्-अर्थं ।
पूर्वत्र हि छन्दोऽधिकारात्तद्विषयता साध्यते । ।

---

1. <तसिश्च># । । PS_४,३.११३ । ।

_______Sठा~ठ्JKव्_४,३.११३ः

तसिश्च प्रत्ययो भवति तेन+एकदिकित्येतस्मिन्विषये ।
पूर्वेण्घादिसु अणादिषु च प्राप्तेषु अयं अपरः प्रत्ययो विधीयते ।
स्वरादि-पाठादव्ययत्वं ।
सुदामतः ।
हिमवत्तः ।
पिलुमूलतः । ।

---

1. <उरसो यच्च># । । PS_४,३.११४ । ।

_______Sठाञ्ठ्JKव्_४,३.११४ः

उरस्-शब्दात्यत्प्रत्ययो भवति, चकारात्तसिश्च, तेन एकदिकित्येतस्मिन्विषये ।
अणोऽपवादः ।
उरसा एकदिगुरस्यः, उरस्तः । ।

---

1. <उपज्ञाते># । । PS_४,३.११५ । ।

_______Sठाञ्ठ्JKव्_४,३.११५ः

तेन इत्येव ।
तृतीया-समर्थातुपज्ञाते इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति ।
विना उपदेशेन ज्ञातमौपज्ञातं, स्वयं अभिसम्बद्धं इत्यर्थः ।
पाणिनिना उपज्ञातं पाणिनीयं अकालकं व्याकरणं ।
काशकृत्स्नं गुरुलाघवं ।
आपिशलं दुष्करणं । ।

---

1. <कृते ग्रन्थे># । । PS_४,३.११६ । ।

_______Sठाञ्ठ्JKव्_४,३.११६ः

तेन इत्येव ।
तृतीया-समर्थात्कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति ।
वररुचिना कृताः वाररुचाः श्लोकाः ।
हैकुपादो ग्रन्थः ।
भैकुराटो ग्रन्थः ।
जालूकः ।
ग्रन्थे इति किं ? तक्षकृतः प्रासादः ।
उत्पादितं कृतं, विद्यामानां एव ज्ञातं औपज्ञातं इत्ययं अनयोर्विशेषः । ।

---

1. <सञ्ज्ञायाम्># । । PS_४,३.११७ । ।

_______Sठान्ढ्JKव्_४,३.११७ः

तृतीया-समर्थात्कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत्सञ्ज्ञा ज्ञायते ।
मक्षिकाभि कृतं माक्षिकं ।
कार्मुकं ।
सारघं ।
पौत्तिकं ।
मधुनः सञ्ज्ञाः एताः । ।

---

[#४२६]

1. <कुलाल-आदिभ्यो वुञ्># । । PS_४,३.११८ । ।

_______Sठान्ढ्JKव्_४,३.११८ः

तेन, कृते, सञ्ज्ञायां इति च+एतत्सर्वं अनुवर्तते ।
कुलालादिभ्यः वुञ्प्रत्ययो भवति तेन कृतं इत्येतस्मिन्नर्थे सञ्ज्ञायां गम्यमानायां ।
कौलालकं ।
वारुडकं ।
कुलाल ।
वरुद ।
चण्डाल ।
निषाद ।
कर्मार ।
सेना ।
सिरघ्र ।
सेन्द्रिय ।
देवराज ।
परिषथ् ।
वधू ।
रुरु ।
ध्रुव ।
रुद्र ।
अनडुः ।
ब्रह्मन् ।
कुम्भकार ।

श्वपाक ।
कुलालादिः । ।

---

1. <क्षुद्रा-भ्रमर-वटर-पादपादञ्># । । PS_४,३.११९ । ।

______Sठा~ठ्JKव्_४,३.११९ः

तेन, कृते, सञ्ज्ञायां इति सर्वं अनुवर्तते ।
क्षुद्रादिभ्यः अञ्प्रत्ययो भवति तेन कृते इत्येतस्मिन्विषये सञ्ज्ञायां गम्यमानायां ।
अणोऽपवादः ।
स्वरे विशेषः ।
क्षुद्रादिभिः कृतं क्षौद्रं ।
भ्रामरं ।
वाटरं ।
पादपं । ।

---

1. <तस्य+इदम्># । । PS_४,३.१२० । ।

______Sठा~ठ्JKव्_४,३.१२०ः

तस्य इति षष्ठी-समर्थादिदं इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति ।
अणादयः पञ्च महोत्सर्गाः ।
घादयश्च प्रत्यया यथाविहितं विधीयन्ते ।
प्रकृतिप्रत्यय-अर्थयोः षष्ठ्य्-अर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितं, यदपरं लिङ्ग-सङ्ख्या-प्रत्यक्ष-परोक्षादिकं तत्सर्वं अविवक्षितं ।
उपगोरिदं औपगवं ।
कापटवं ।
राष्ट्रियं ।
अवारपारीणं ।
अनन्तरादिष्वनभिधानान्न भवति, देवदत्तस्य अनन्तरं इति ।
संवहेस्तुरणिट्च ।
संवोढुः स्वं सांवहित्रं ।
सिद्धः एवात्राण्, इडर्थं उपसङ्ख्यानं ।
आग्नीधः शरणे रण्भं च ।
आग्नीध्रं ।
समिधामाधाने षेण्यण् ।
सामिधेन्यो मन्त्रः ।
सामिधेनी ऋक् । ।

---

1. <रथाद्यत्># । । PS_४,३.१२१ । ।

______Sठा~ठ्JKव्_४,३.१२१ः

रथ-शब्दात्यत्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
अणोऽपवादः ।
रथस्य इदं रथ्यं, चक्रं वा युगं वा ।
रथाङ्ग एव+इष्यते, न अन्यत्र अनभिधानाथ् ।
रथसीताहलेभ्यो यद्विधाविति तदन्तविधिरुपसङ्ख्यायते ।
परमरथ्यं ।
उत्तमरथ्यं । ।

---

[#४२७]

1. <पत्रपूर्वा दञ्># । । PS_४,३.१२२ । ।

______Sठा~ठ्JKव्_४,३.१२२ः

पतन्ति तेन इति पत्रं अश्वादिकं वाहनं उच्यते ।
तत्पूर्वाद्रथ-शब्दातञ्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
पूर्वस्य यतोऽपवादः ।
आश्वरथं चक्रं ।
औष्ट्ररथं ।
गार्दभरथं । ।

---

1. <पत्र-अध्वर्यु-परिषदश्च># । । PS_४,३.१२३ । ।

______Sठा~ठ्JKव्_४,३.१२३ः

पत्रं वाहनम्, तद्वाचिनः प्रातिपदिकातध्वर्यु-परिषच्-छब्दाभ्यां च अञ्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
अणोऽपवादः ।
पत्राद्वाह्ये ।
अश्वस्य इदं वहनीयं आश्वं ।

औष्ट्रं ।
गार्दभं ।
आध्वर्यवं ।
पारिषदं । ।

---

1. <हल-सीराट्ठक्># । । PS_४,३.१२४ । ।

_______Sठा-ठ्JKव्_४,३.१२४ः

हल-सीर-शब्दाभ्यां ठक्प्रत्ययो भवति तस्य+इदं इत्यस्मिन्विषये ।
अणोऽपवादः ।
हलस्य इदं हालिकं ।
सैरिकं । ।

---

1. <द्वन्द्वाद्वुन्वैर-मैथुनिकयोः># । । PS_४,३.१२५ । ।

_______Sठा-ठ्JKव्_४,३.१२५ः

द्वन्द्व-सञ्ज्ञाकात्वुन्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये, वैर-मैथुनिकयोः प्रत्ययार्थ-विशषणयोः ।
अणोऽपवादः ।
छं तु परत्वाद्बाधते ।
वैरे तवत्- बाभ्रव्यशालङ्कायनिका ।
काकोलूकिका ।
मैथुनिकायां - अत्रिभरद्वाजिका ।
कुत्सकुशिकिका ।
विवहनमैथुनिका ।
वैरस्य नपुंसकत्वेऽप्यमी स्वभावतः स्त्रीलिङ्गाः ।
वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः ।
दैवासुरं ।
राक्षोऽसुरं वैरं । ।

---

1. <गोत्र-चरणाद्वुञ्># । । PS_४,३.१२६ । ।

_______Sठा~ठ्JKव्_४,३.१२६ः

गोत्र-वाचिभ्यः चरण-वाचिभ्यः च प्रातिपदिकेभ्यो वुञ्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये अणोऽपवादः ।
छं तु प्रत्वाद्बाधते ।
गोत्रात्तावद्- ग्लौचुकायनकं ।
औपगवकं ।
चरणाद्धर्माम्नाययोरिष्यते ।
काठकं ।
कालापकं ।
मौदकं ।
पैप्पलादकं । ।

---

[#४२८]

1. <सङ्घ-अङ्क-लक्षणेष्वञ्-यञ्-इञां अण्># । । PS_४,३.१२७ । ।

_______Sठा~ठ्JKव्_४,३.१२७ः

सङ्घ-आदिषु प्रतयार्थ-विशेषणेषु अञनताद्, यञन्ताद्, इञन्ताच्च प्रातिपदिकादण्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
पूर्वस्य वुञोऽपवादः ।
घोष-ग्रहणं अत्र कर्तव्यं ।
तेन वैषम्याद्यथासङ्ख्यं न भवति ।
अञनतात्बैदः सङ्घः ।
बैदाऽङ्कः ।
बैदं लक्षणं ।
बैदो घोषः ।
यञन्तात्गार्गः सङ्घः ।
गार्गोऽङ्कः ।
गार्गं लक्षणं ।
गार्गो घोषः ।
इञन्तात्दाक्षः सङ्घः ।
दाक्षोऽङ्कः ।
दाक्षं लक्षणं ।
दाक्षो घोषः ।
अङ्कलक्षणयोः को विशेषः ? लक्षणं लक्ष्यभूतस्य+एव चिह्नभूतं स्वं यथा विद्या बिदानाम्, अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति ।
णित्करणं ङीबर्थं पुंवद्भाव-प्रतिषेध-अर्थं च ।
वैदी विद्या अस्य वैदीविद्यः । ।

---

1. <शाकलाद्वा># । । PS_४,३.१२८ । ।

_______Sठा~ठ्JKव्_४,३.१२८:

शाकल-शब्दात्सङ्घादिषु प्रत्ययार्थ-विशेषनेषु वा अण्-प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
वुञोऽपवादः ।
शाकलेन प्रोक्तं अधीयते शाकलाः ।
तेषां सङ्घः शाकलः, शाकलकः ।
शाकलोऽङ्कः, शाकलकोऽङ्कः ।
शाकलं लक्षणम्, शाकलकं लक्षणं ।
शाकलो घोषः, शाकलको घोषः । ।

---

1. <छन्दोग-औक्थिक-याज्ञिक-बह्वृच-नटाञ्यः># । । PS_४,३.१२९ । ।

_______Sठा~ठ्JKव्_४,३.१२९:

सङ्घादयो निवृत्ताः, सामान्येन विवानं ।
छन्दोग-आदिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
वुञणोरपवादः ।
चरणाद्धर्माम्नाययोः, तत्साहचर्यान्नटशब्दादपि धर्माम्नाययोरेव भवति ।
छन्दोगानां धर्मो वा आम्नायो वा छन्दोग्यं ।
औक्थिक्यं ।
याज्ञिक्यं ।
बाह्वृच्यं ।
नाट्यं ।
अन्यत्र छान्दोगं कुलं इत्यादिः । ।

---

1. <न दण्डमाणव-अन्तेवासिषु># । । PS_४,३.१३० । ।

_______Sठा~ठ्JKव्_४,३.१३०:

दण्ड-प्रधाना मानवाः दण्ड-माणवाः, अन्तेवासिनः शिष्याः ।
तेष्वभिधेयेषु वुञ्प्रत्ययो न भवति ।
गोत्र-ग्रहणं इह अनुवर्तते, तेन वुञ्-प्रतिषेधो विज्ञायते ।
गौकक्षाः दण्डमाणवाः अन्तेवासिनो वा ।
दाक्षाः ।
माहकाः । ।

---

1. <रैवतिक-आदिभ्यश्छः># । । PS_४,३.१३१ । ।

______Sठाञ्ठ्JKव्_४,३.१३१ः

दैवतिक-आदिभ्यः छः प्रतयो भवति तस्य+इदं इत्येतस्मिन्विषये ।
गोत्र-प्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छ-विधान-अर्थं वचनं ।
रैवतिकीयः ।
स्वपिशीयः ।
रैवतिक ।
स्वापिशि ।
क्षैमवृद्धि ।
गौरग्रीवि ।
औदमेयि ।
औदवाहि ।
बैजवापि । ।

---

[#४२९]

1. <कौपिञ्जल-हासितपदादण्># । । PS_४,३.१३२ । ।

______Sठाञ्ठ्JKव्_४,३.१३२ः

कौपिञ्जल-हास्तिपद-शब्दाभ्यं अण्प्रत्ययो भवति तस्य+इदं इत्येतस्मिन्विषये ।
गोत्र-वुञोऽपवादः, गोत्र-अधिकाराथ् ।
कौपिञ्जलः ।
हास्तिपदः । ।

---

1. <आथर्वणिकस्य+इक-लोपश्च># । । PS_४,३.१३३ । ।

______Sठाञ्ठ्JKव्_४,३.१३३ः

अणित्येव ।
आथर्वणिक-शब्दादणप्रत्ययो भवति, तत्संनिहोगेन च इक-लोपः, तस्य+इदं इत्येतस्मिन्विषये ।
चरनवुञोऽपवादः ।
आथर्वणिकस्यायं आथर्वणो धर्मः आम्नायो वा ।
चरणाद्धर्माम्नाययोः । ।

---

1. <तस्य विकारः># । । PS_४,३.१३४ । ।

_______Sठाऽठ्JKव्_४,३.१३४ः

तस्य इति षष्ठी-समर्थाद्विकारः इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति ।
प्रकृतेरवस्थान्तरं विकारः ।
किं इह+उदाहरणं ? अप्राण्याद्य्-उदात्तं अवृद्धं, यस्य च न अन्यत्प्रतिपदं विधानं ।
अश्मनो विकारः आश्मनः, आश्मः ।
अश्मनो विकारे ।
इति टिलोपः पाक्षिकः ।
भास्मनः ।
मार्त्तिकः ।
नित्स्वरेणाद्युदात्ता एते ।
तस्य प्रकरणे तस्य इति पुनर्वचनं शैषिक-निवृत्त्य्-अर्थं ।
विकारावयवयोर्धादयो न भवन्ति ।
हालः ।
सैरः । ।

---

1. <अवयवे च प्राण्य्-ओषधि-वृक्षेभ्यः># । । PS_४,३.१३५ । ।

_______Sठाऽठ्JKव्_४,३.१३५ः

प्राण्-योषधि-वृक्ष-वाचिभ्यः शब्देभ्यः षष्ठी-समर्थेभ्यः अवयवे यथाविहितं प्रत्ययो भवति, चकाराद्विकारे च ।
तत्र प्राणिभ्यः अञं वक्ष्यति ।
कपोतस्य विकारो अवयवो वा कापोतः ।
मायूरः ।
तैत्तिरः ।
ओषधिभ्यः -- मौर्वं काण्डं ।
मौर्वं भस्म ।
वृक्षेभ्यः -- कारीरं काण्डं ।
कारीरं भस्म ।
इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यः विकारावयवयोः भवन्ति ।

अन्येभ्यस्तु विकारमात्रे ।
कथं द्वयं अप्यधिक्रियते तस्य विकारः, अवयवे च प्राण्य्-ओषधि-वृक्षेभ्यः इति ? विकारावयवयोर्युगपदधिकारोऽपवाद ।
विधान-अर्थः ।
कृत-निर्देशौ हि तौ । ।

---

1. <बिल्व-आदिभ्योऽण्># । । PS_४,३.१३६ । ।

_______Sठाऱ्ठJKव्_४,३.१३६ः

बिल्व इत्येवं आदिभ्योऽण्प्रत्ययो भवति विकार-अवयवयोरर्थयोः ।
यथायोगं अञ्मयटोरपवादः ।
बिल्वस्य विकारोऽवयवो वा बैल्वः ।
गवेधुका-शब्दोऽत्र पठ्यते, ततः कोपधातेव सिद्धे मयड्बाधनार्थं ग्रहणं ।
विल्व ।
व्रीहि ।
काण्ड ।
मुदङ् ।
मसूर ।
गोधूम ।
इक्षु ।
वेणु ।
गवेधुका ।
कर्पासी ।
पाटली ।
कर्कन्धू ।
कुटीर ।
बिल्वादिः । ।

---

[#४३०]

1. <क-उपाधाच्च># । । PS_४,३.१३७ । ।

_______Sठाऱ्ठJKव्_४,३.१३७ः

क-कार-उपधात्प्रातिपदिकादण्प्रत्ययो भवति यथायोगं विकार-अवयवयोरर्थयोः ।
अञोऽपवादः ।
तर्कु - तार्कवं ।
तित्तिडीक-तैत्तिडीकं ।

माण्डूकं ।
दार्दुरूकं ।
माधूकं ।।

---

1. <त्रपु-जतुनोः षुक्># ।। PS_४,३.१३८ ।।

_______Sठाऱ्ठ्JKव्_४,३.१३८ः

त्रपु-जतु-शब्दाभ्यां अण्प्रत्ययो भवति विकरे, तत्सन्नियोगेन तयोः षुगागमो भवति ।
ओरञोऽपवादः ।
त्रपुणो विकारः त्रापुषं ।
जातुषं ।
अप्राण्यादित्वान्न अवयवे ।।

---

1. <ओरञ्># ।। PS_४,३.१३९ ।।

_______Sठाऱ्ठ्JKव्_४,३.१३९ः

उ-वर्णान्तात्प्रातिपदिकातञ्प्रतयो भवति विकार-अवयवयोरर्थयोः ।
अणोऽपवादः ।
अनुदात्तादेरन्यदिहोदाहरणं ।
दैवदारं ।
भाद्रदारवं ।।

---

1. <अनुदात्त-आदेश्च># ।। PS_४,३.१४० ।।

_______Sठाऱ्ठ्JKव्_४,३.१४०ः

अनुदात्तादेः प्रातिपदिकातञ्प्रत्ययो भवति विकार-अवयवयोरर्थयोः ।
अणोऽपवादः ।
दाधित्थं ।
कापित्थं ।
माहित्थं ।।

---

1. <पलाश-आदिभ्यो वा># । । PS_४,३.१४१ । ।

_______Sठा~ठ्JKव्_४,३.१४१ः

पलाश-आदिभ्यः प्रातिपदिकेभ्यः वा अञ्प्रत्ययो भवति विकार-अवयवयोरर्थयोः ।
पालाशं ।
खादिरं ।
यवासं ।
उभयत्र विभाषेयं ।
पलाशखदिरशिंशिपास्पन्दनानां अनुदत्तादित्वात्प्राप्ते अन्येषां अप्राप्ते ।
पलाश ।
खदिर ।
शिंशिपा ।
स्पन्दन ।
करीर ।
शिरीष ।
यवास ।
विकङ्कत ।
पलाशादिः । ।

---

1. <शम्याष्ट्लञ्># । । PS_४,३.१४२ । ।

_______Sठा~ठ्JKव्_४,३.१४२ः

शमी-शब्दाट्ट्लञ्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
अञोऽपवादः ।
शामीलं भस्म ।
शामीलीस्रुक् । ।

---

[#४३१]

1. <मयड्वऽ+एतयोर्भाषायां अभक्ष्य आच्छादनयोः># । । PS_४,३.१४३ । ।

_______Sठाऽठ्JKव्_४,३.१४३:

प्रकृतिमात्राद्वा मयट्प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोः विकारावयवयोरर्थयोर्भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु ।
अश्ममयम्, आश्मनं ।
मूर्वामयम्, मौर्वां ।
भाषायां इति किं ? बैल्वः खादिरो वा यूपः स्याथ् ।
अभक्ष्याच्छादनयोः इति किं ? मौद्गः सूपः ।
कार्पासमाच्छादनं ।
एतयोः इत्यनेन किं यावता विकार-अवयवौ प्रकृतावेव ? ये विशेष-प्रत्ययाः प्राणिरजतादिभ्योऽञ्(*४,३.१५४) इत्येवं आदयस्तद्विषयेऽपि यथा स्यात्, कपोतमयम्, कापोतम्, लोहमयम्, लौहं इति ।।

---

1. <नित्यं वृद्ध-शर-आदिभ्यः># ।। PS_४,३.१४४ ।।

_______Sठाऽठ्JKव्_४,३.१४४:

भाषायां अभक्ष्याच्छादनयोः इत्येव ।
वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्च अभक्ष्याच्छादनयोः विकारावयवयोः भाषायां विषये नित्यं मयट्प्रत्ययो भवति ।
वृद्धेभ्यस्तावत्- आम्रमयं ।
शालमयं ।
शाकमयं ।
शरादिभ्यः - शरमयं ।
दर्भमयं ।
मृन्मयं ।
नित्य-ग्रहणं किं यावता आरम्भ-सामर्थ्यादेव नित्यं भविस्यति ? एक-अचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते, त्वङ्मयम्, स्रङ्मयं , वाङ्मयं इति ।
शर ।
दर्भ ।
मृथ् ।
कुटी ।
तृण ।
सोम ।
बल्वज ।
शरादिः ।।

---

1. <गोश्च पुरीषे># ।। PS_४,३.१४५ ।।

______Sठा~ठ्JKव्_४,३.१४५ः

गो-शब्दात्पुरीषेऽभिधेये मयट्प्रत्ययो भवति ।
गोमयं ।
पुरीषे इति किं ? गव्यं पयः ।
पुरीषं न विकारो न च अवयवः, तस्य+इदं विषये विधानं ।
विकारावयवयोस्तु गोपयसोर्यतं वक्ष्यति । ।

---

1. <पिष्टाच्च># । । PS_४,३.१४६ । ।

______Sठा~ठ्JKव्_४,३.१४६ः

पिष्ट-शब्दान्नित्यं मयट्प्रत्ययो भवति तस्य विकारः इत्येतस्मिन्विषये ।
अणोऽपवादः ।
पिष्टमयं भस्म । ।

---

1. <सञ्ज्ञायां कन्># । । PS_४,३.१४७ । ।

______Sठा~ठ्JKव्_४,३.१४७ः

पिष्ट-शब्दात्कन्प्रत्ययो भवति विकारे सञ्ज्ञायां विषये ।
मयटोऽपवादः ।
पिष्टकः । ।

---

1. <व्रीहेः पुरोडाशे># । । PS_४,३.१४८ । ।

______Sठा~ठ्JKव्_४,३.१४८ः

व्रीहि-शब्दान्मयट्प्रत्ययो भवति पुरोडशे विकारे ।
बिल्वाद्यणोऽपवादः ।

व्रीहिमयः पुरोडाशः।
व्रैहं अन्यत्।।

---

[#४३२]

1. <असञ्ज्ञायां तिल-यवाभ्याम्>#।। PS_४,३.१४९।।

_______Sठाञ्ठ्JKव्_४,३.१४९ः

तिल-यव-शब्दाभ्यां असञ्ज्ञाविषये मयट्प्रत्ययो भवति विकारावयवयोरर्थयोः।
तिलमयं।
यवमयं।
असञ्ज्ञायां इति किं? तैलं।
यावकः।
यावादिभ्यः कन्(*५,४.२९)।।

---

1. <द्व्यचश्छन्दसि>#।। PS_४,३.१५०।।

_______Sठाञ्ठ्JKव्_४,३.१५०ः

द्व्यचः प्रातिपदिकात्छन्दसि विषये मयट्प्रत्ययो भवति विकारावयवयोरर्थयोः।
भाषायां मयड्उक्तः, छन्दस्यप्राप्तो विधीयते।
यस्य पर्णमयी जुहूर्भवति।
दर्भमयं वासो भवति।
शरमयं बहिर्भवति।।

---

1. <न+उत्त्वद्-वर्ध्र-बिल्वात्>#।। PS_४,३.१५१।।

_______Sठाञ्ठ्JKव्_४,३.१५१ः

उत्वतः प्रातिपदिकाद्वर्ध्र-बिल्व-शब्दाभ्यां च मयट्प्रत्ययओ न भवति।
द्व्यचश्छन्दसि (*४,३.१५०) इति प्राप्तः प्रतिषिध्यते।
मौञ्जं शिक्यं।

गार्मुतं चरुं ।
वार्ध्री बालप्रग्रथिता भवति ।
बैल्वो ब्रह्मवर्चसकामेन कार्यः ।
तपरकरणं तत्कालार्थं धूममयानि अभ्राणि ।
मतुब्-निर्देशस्तदन्तविधिनिरासार्थः ।
इह+एव स्यात्वैणवी यष्टिः इति । ।

---

1. <ताल-आदिभ्योऽण्># । । PS_४,३.१५२ । ।

_______Sठा-ठ्JKव्_४,३.१५२ः

ताल-आदिभ्यः प्रातिपदिकेभ्यः अण्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
मयडादीनां अपवादः ।
तालं धनुः ।
बार्हिणं ।
ऐन्द्रालिशं ।
तालाद्धनुषि ।
बार्हिण ।
इन्द्रालिश ।
इन्द्रादृश ।
इन्द्रायुध ।
चाप ।
श्यामाक ।
पीयुक्षा ।
तालादिः । ।

---

1. <जातरूपेभ्यः परिमाणे># । । PS_४,३.१५३ । ।

_______Sठा-ठ्JKव्_४,३.१५३ः

जातरूपं सुवर्णं ।
बहुवचन-निर्देशात्तद्वाचिनः सर्वे गृह्यन्ते ।
जातरूप-वाचिभ्यः प्रातिपदिकेभ्यः अण्प्रत्ययो भवति परिमाणे विकारे ।
मयडादीनं अपवादः ।
हाटको निष्कः ।
हाटकं कार्षापणं ।
जातरूपं ।
तापनीयं ।

परिमाणे इति किं ? यष्टिरियं हाटकमयी । ।

---

[#४३३]

1. <प्राणि-रजत-आदिभ्योऽञ्># । । PS_४,३.१५४ । ।

______Sठा–ठ्JKव्_४,३.१५४ः

प्राणि-वाचिभ्यः प्रातिपदिकेभ्यो रजतदिभ्यश्च अञ्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
अणादिनां अपवादः ।
अनुदात्तादेः अञ्विहित एव परिशिष्टं इह+उदाहरणं ।
प्राणिभ्यस्तावत्- कापोतं ।
मायूरं ।
तैत्तिरं ।
रजतादिभ्यः - राजतं ।
सैसं ।
लौहं ।
रजतादिषु येऽनुदात्तादयः पट्यन्ते रजतकण्डकरप्रभृतयस्तेभ्योऽञि सिद्धे पुनर्वचनं मयड्वाधनार्थं ।
रजत ।
सीस ।
लोह ।
उदुम्बर ।
नीलदारु ।
रोहितक ।
बिभीतक ।
पीतदास ।
तीव्रदारु ।
त्रिकण्टक ।
कण्टकार ।
रजतादिः । ।

---

1. <ञितश्च तत्प्रत्ययात्># । । PS_४,३.१५५ । ।

______Sठा–ठ्JKव्_४,३.१५५ः

अञित्येव ।
तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः ।
ञिद्यो विकारावयवप्रत्ययस्तदन्तात्प्रातिपदिकातञ्प्रत्ययो भवति विकारवयवयोः एव ।

मयटोऽपवादः ।
ओरञ्(*४,२.७१), शम्याष्ट्लञ्(*४,३.१४२), प्राणिरजतादिभ्योऽञ्(*४,३.१५४), उष्ट्राद्वुञ्(*४,३.१५७), एण्या ढञ्(*४,३.१५९), कंसीय-परशव्ययोर्यञ्-अञौ लुक्च (*४,३.१६८) इत्येते प्रत्ययाः गृह्यन्ते ।
दैवदारवस्य विकारोऽवयवो वा दैवदारवं ।
दाधित्थस्य दाधित्थं ।
पालाशस्य पालाशं ।
शामीलस्य शामीलं ।
कापोतस्य कापोतं ।
औष्ट्रकस्य औष्ट्रकं ।
ऐणेयस्य ऐणेयं ।
कांस्यस्य कांस्यं ।
पारशवस्य पारशवं ।
ञितः इति किं ? बैल्वमयं ।
तत्प्रत्ययातिति किं ? बैदमयं । ।

---

1. <क्रीतवत्प्रैमाणात्># । । PS_४,३.१५६ । ।

_______Sठा~ठJKव्_४,३.१५६ः

प्राग्वतेष्ठञ्(*४,१.१८) इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद्विहिताः, ते विकारेऽतिदिश्यन्ते ।
परिमाणात्क्रीत इव प्रत्यया भवन्ति तस्य विकारः इत्येतस्मिन्विषये ।
अणादीनां अपवादः ।
सङ्ख्या अपि परिमाण-ग्रहणेन गृह्यते, न रूढिपरिमाणं एव ।
निष्केण क्रीतं नैष्किकं ।
एवं निष्कस्य विकारो नैष्किकः ।
शतेन क्रीतं शत्यम्, शतिकं ।
शतस्य विकारः शत्यः, शतिकः ।
साहस्रः ।
वतिः सर्वसादृश्यार्थः ।
अध्यर्धपूर्वाद्द्विगोर्लुगसञ्ज्ञायां (*५,१.२८) इत्येवं आदिकं अप्यतिदिश्यते ।
द्विसहस्रः, द्विसाहस्रः ।
द्विनिष्कः, द्विनैष्किकः । ।

---

1. <उष्ट्राद्वुञ्># । । PS_४,३.१५७ । ।

_______Sठा~ठJKव्_४,३.१५७ः

उष्ट्र-शब्दाद्वुञ्प्रत्ययो विकारावयवयोरर्थ्योः ।
प्राण्यञोऽपवादः ।

उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः । ।

---

[#४३४]

1. <उमा-ऊर्णयोर्वा># । । PS_४,३.१५८ । ।

______Sठा~ठ्JKव्_४,३.१५८ः

उमा-शब्दादूर्णा-शदच्च वा वुञ्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
ॐअकम्, ॐअं ।
और्णकं और्णं । ।

---

1. <एण्या ढञ्># । । PS_४,३.१५९ । ।

______Sठा~ठ्JKव्_४,३.१५९ः

एणी-शब्दाद्ढञ्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
प्राण्यञोऽपवादः ।
ऐणेयं मांसं ।
पुंसस्तु अञेव भवति ।
एणस्य मांसं ऐणं । ।

---

1. <गोपयसोर्यत्># । । PS_४,३.१६० । ।

______Sठा~ठ्JKव्_४,३.१६०ः

गोपयस्-शब्दाभ्यां यत्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
गव्यं ।
पयस्यं ।
सर्वत्र गोरजादि-प्रसङ्गे यदस्त्येव, मय्ड्विषये तु विधीयते । ।

---

1. <द्रोश्च># । । PS_४,३.१६१ । ।

_______Sठा~ठ्JKव्_४,३.१६१ः
द्रु-शब्दाद्यत्प्रत्ययो भवति विकारावयवयोरर्थयोः ।
ओरञोऽपवादः ।
द्रव्यं । ।

---

1. <माने वयः># । । PS_४,३.१६२ । ।

_______Sठा~ठ्JKव्_४,३.१६२ः

द्र-शब्दान्माने विकार-विशेषे वयः प्रत्ययो भवति ।
यतोऽपवादः ।
द्रुवयं । ।

---

1. <फले लुक्># । । PS_४,३.१६३ । ।

_______Sठा~ठ्JKव्_४,३.१६३ः

विकारावयवयोरुत्पन्नस्य फले तद्विषये विवक्षिते लुग्भवति ।
आमलक्याः फलं आमलकं ।
कुवलं ।
वदरं ।
फलितस्य वृक्षास्य फलं अवयवो भवति विकारश्च, पल्लवितस्य+इव पल्लवः । ।

---

1. <प्लक्ष-आदि-भ्योऽण्># । । PS_४,३.१६४ । ।

______Sठा~ठ्JKव्_४,३.१६४:

फले इत्येव ।
प्लक्ष-आदिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षिते अण्प्रत्ययो भवति ।
अञोऽपवादः ।
विधान-सामर्थ्यात्तस्य न लुग्भवति ।
प्लाक्षं ।
नैयग्रोधं ।
प्लक्ष ।
न्यग्रोध ।
अश्वत्थ ।
इङ्गुदी ।
शिग्रु ।
ककर्न्धु ।
वुहती ।
प्लक्ष-आदिः । ।

---

[#४३५]

1. <जम्ब्वा वा># । । PS_४,३.१६५ । ।

______Sठा~ठ्JKव्_४,३.१६५:

फले इत्येव ।
जम्बू-शब्दात्फलेऽभिधेये वा अण्प्रत्ययो भवति ।
अञोऽपवादः ।
अत्र अणो विधान - समार्थ्याल्लुग्न भवति, अञस्तु भवत्येव ।
जाम्बवानि फलानि, जम्बूनि वा । ।

---

1. <लुप्च># । । PS_४,३.१६६ । ।

______Sठा~ठ्JKव्_४,३.१६६:

वा इत्येव ।
जम्ब्वाः फलेऽभिधेये प्रत्ययस्य वा लुप्भवति ।
युक्तवद्भावे विशेषः ।

जम्ब्वाः फलं जम्बूः फलम्, जम्बु फलम्, जाम्बवं इति वा ।
लुप्-प्रकरणे पह्ल-पाकशुषां उपसङ्ख्यानं ।
व्रीहयः ।
यवाः ।
माषाः ।
मुद्गाः ।
तिलाः ।
पुष्पमूलेसु बहुलं ।
मल्लिकायाः पुष्पं मल्लिका ।
नवमल्लिका जातिः ।
बिदार्याः मूलं बिदारी ।
अंशुमती ।
बृहती ।
न च भवति ।
पाटलानि पुष्पाणि ।
शाल्वानि मूलनि ।
बहुलवचनात्क्वचिदन्यदपि भवति, कदम्बं पुष्पम्, अशोकम्, करवीरम्, बैल्वानि फलानि इति । ।

---

1. <हरीतक्य्-आदिभ्य श्च># । । PS_४,३.१६७ । ।

_______Sठा०्ठ्JKव्_४,३.१६७ः

हरीतकी इत्येवं आदिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब्भवति ।
लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्री-प्रत्ययश्रवणे च विशेषः ।
हरीतक्याः फलं हरीतकी ।
कोशातकी ।
नखरजनी ।
अत्र च व्यक्तिर्युक्तवद्भावेन+इष्यते, वचनं त्वभिधेयवदेव भवति ।
हरीतक्याः फलानि हरीतक्यः ।
हरीतकी ।
कोशातकी ।
नखरजनी ।
शष्कण्डी ।
दाडी ।
दोडी ।
दीडी ।
श्वेतपाकी ।
अर्जुनपाकी ।
काला ।
द्राक्षा ।
ध्वङ्क्षा ।
गर्गरिका ।
कण्टकारिका ।
शेफालिका ।
येषां च फलपाक-निमित्तः शोषः ।

पुष्पमुलेषु बहुलं ।
हरीतक्यादिः । ।

---

1. <कंसीय-परशव्ययोर्यञ्-अञौ लुक्च># । । PS_४,३.१६८ । ।

______Sठाऱ्ठ्JKव्_४,३.१६८ः

प्राक्क्रीताच्छः (*५,१.१), कंसीयः ।
उ-गव्-आदिभ्यो यत्(*५,१.२), परशव्यः ।
कंसीय-परशव्य-शब्दाभ्यां यथासङ्ख्यं यञ्-अञौ प्रत्ययौ भवतः तस्य विकारः इत्येतस्मिन्विषये, तत्संनियोगेन च कंसीय-परशव्ययोः लुग्भवति ।

[#४३६]

कंसीयस्य विकारः कांस्यः ।
परशव्यस्य विकारः पारशवः ।
प्रातिपदिक-अधिकाराद्धातुप्रत्ययस्य न लुग्भवति ।
परशव्य-शब्दादनुदात्त-आदित्वादेव अञि सिद्धे लुग्-अर्थं वचनं ।
ननु च यस्य+इति च (*६,४.१४८) इति लोपे कृते हलस्तद्धितस्य (*६,४.१५०) इति य-लोपो भविष्यति ? ना+एअदस्ति, ईति इति तत्र वर्तते । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पादः

---

[#४३७]

चतुर्थाध्यायस्य चतुर्थः पादः ।

---

1. <प्राग्वहतेष्ठक्># । । PS_४,४.१ । ।

______Sठाऱ्ठ्JKव्_४,४.१ः

तद्वहति रथ-युग-प्रासङ्गं (*४,४.७६) इति वक्ष्यति ।
प्रागेतस्माद्वहतिसंशब्दनाद्यानर्थाननुक्रममिष्यामः, ठक्प्रत्ययस्तेष्वधिकृतो वेदितव्यः ।
वक्ष्यति - तेन दीव्यति खनति जयति जितं (*४,४.२) इति ।
अक्षैर्दीव्यति आक्षिकः ।
ठक्-प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानं ।
माशब्दः इत्याह माशब्दिकः ।
नैत्यशब्दिकः कार्यशब्दिकः ।

वाक्यादेतत्प्रत्ययविधानं।
आहौ प्रभूतादिभ्यः।
प्रभूतं आह प्राभूतिकः।
पार्याप्तिकः।
क्रियाविशेषणत्प्रत्ययः।
पृच्छतौ सुस्नातादिभ्यः।
सुस्नतं पृच्छति सौस्नातिकः।
सौखरात्रिकः।
सौखशायनिकः।
गच्छति परदारादिभ्यः।
परदारान्गच्छति पारदारिकः।
गौरुतल्पिकः।।

---

1. <तेन दीव्यति खनति जयति जितम्>#।। PS_४,४.२।।

_______Sठान्ठ्JKव्_४,४.२ः

तेन इति तृतीया-समर्थाद्दीव्यति खनति जयति जितं इत्येतेष्वर्थेषु ठक्प्रत्ययो भवति।
अक्षैर्दीव्यति आक्षिकः।
शालाकिकः।
अभ्र्या खनति आभ्रिकः।
कौद्दालिकः।
अक्षैर्जयति आक्षिकः।
अक्षैर्जितं आक्षिकं।
शालाकिकं।
सर्वत्र करणे तृतीया समर्थविभक्तिः।
देवदत्तेन जितं इति प्रत्ययो न भवति, अनभिधानाथ्।
अङ्गुल्या खनति इति च।
प्रत्ययार्थे सङ्ख्याकालयोरविवक्षा।
क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः स्वभावात्साधनप्रधानः।।

---

[#४३८]

1. <संस्कृतम्>#।। PS_४,४.३।।

_______Sठान्ठ्JKव्_४,४.३ः

तेन इति तृतीया-समर्थात्संस्कृतं इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति।

सत उत्कर्षाधानं संस्कारः ।
दध्ना संस्कृतं दाधिकं ।
शार्ङ्गवेरिकं ।
मारीचिकं ।
योगविभाग उत्तरार्थः । ।

---

1. <कुलत्थ-क-उपधादण्># । । PS_४,४.४ । ।

_______Sठा-ठ्JKव्_४,४.४ः

कुलत्थ-शब्दात्क-कारोपधात्शब्दाच्च प्रातिपदिकादण्प्रत्ययो ह्बवति संस्कृतं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
कुलत्थैः संस्कृतं कौलत्थं ।
ककारोपधात्- तैत्तिडीकं ।
दार्दभकं । ।

---

1. <तरति># । । PS_४,४.५ । ।

_______Sठा-ठ्JKव्_४,४.५ः

तेन इति तृतीयासमर्थात्तरति इत्येतस्मिन्नर्थे ठक्प्रत्ययो ह्बवति ।
तरति प्लवते इत्यर्थः ।
काण्डप्लवेन तरति काण्डप्लविकः ।
औडुपिकः । ।

---

1. <गोपुच्छाड्ढञ्># । । PS_४,४.६ । ।

_______Sठा-ठ्JKव्_४,४.६ः

गोपुच्छ-शब्दाड्ढञ्प्रत्ययो भवति तरति इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।
स्वरे विशेषः ।

गौपुच्छिकः । ।

---

1. <नौ-द्व्यचष्ठन्># । । PS_४,४.७ । ।

_______Sठा-ठ्JKव्_४,४.७ः

नौ-शब्दाद्द्व्यचश्च प्रातिपदिकाट्ठन्प्रत्ययो ह्बवति तरति इत्येतस्मिनर्थे ।
ठकोऽपवादः ।
नावा तरति नाविकः ।
द्व्यचः खल्वपि - घटिकः ।
प्लविकः ।
बाहुकः ।
षकारः सांहितिको नानुबन्धः ।
बाहुका स्त्री ।
आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीद-सूत्राच्च ।
आवसथात्किशरादेः षितः षडेते ठग्-अधिकारे । ।
विधिवाक्यापेक्षं च षट्त्वं, प्रत्ययास्तु सप्त । ।

---

1. <परति># । । PS_४,४.८ । ।

_______Sठा-ठ्JKव्_४,४.८ः

तेन इति तृतीयासमर्थाच्चरति इत्येतस्मिन्नर्थे ठक्पत्ययो भवति ।
चरतिर्भक्षणे गतौ च वर्तते ।
दध्ना चरति दधिकः ।
हास्तिकः ।
शाकटिकः । ।

---

[#४३९]

1. <आकर्षात्ष्ठल्># । । PS_४,४.९ । ।

_______Sठा-ठ्JKव्_४,४.९ः

आकर्ष-शब्दाद्ष्थल्प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।
लकारः स्वरार्थः ।
षकारो ङीषर्थः ।
आकर्षेण चरति आकर्षिकः ।
आकर्षिकी ।
आकर्षः इति सुवर्ण-परीक्षार्थो निकषोपलः उच्यते । ।

---

1. <पर्प-आदिभ्यः ष्ठन्># । । PS_४,४.१० । ।

_______Sठा~ठ्JKव्_४,४.१०ः

पर्प इत्येवं आदिभ्यः ष्ठन्प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।
नकारः स्वरार्थः ।
षकारो ङीषर्थः ।
पर्पिकः ।
पर्पिकी ।
अश्विकः ।
अश्विकी ।
पर्प ।
अश्व ।
अश्वत्थ ।
रथ ।
जाल ।
न्यास ।
व्याल ।
पाद ।
पञ्च ।
पदिक ।
पर्पादिः । ।

---

1. <श्वगणाट्ठञ्च># । । PS_४,४.११ । ।

_______Sठा~ठ्JKव्_४,४.११ः

श्वगण-शब्दात्ठञ्प्रत्ययो भवति, चकारात्ष्ठन्, चरति इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।

श्वगणेन चरति श्वागणिकः ।
श्वागणिकी ।
ठन्- श्वगणिकः ।
श्वगणिका ।
श्व-आदेरिञि (*७,३.८) इत्यत्र वक्ष्यति, इकारादि-ग्रहणं च कर्तव्यं श्वागणिकाद्य्-अर्थं (*७,३.८) इति ।
तेन थत्रि द्वरादिकार्यं न भवति । ।

---

1. <वेतन-आदिभ्यो जीवति># । । PS_४,४.१२ । ।

______Sठा-ठ्JKव्_४,४.१२ः

तेन इति तृतीयासमर्थेभ्यः वेतनादिभ्यः शब्देभ्यः जीवति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
वेतनेन जीवति वैतनिकः कर्मकरः ।
धनुर्दण्डग्रहणं अत्र सङ्घातविगृहीतार्थं ।
धनुर्दण्डिकः ।
धानुष्कः ।
दाण्डिकः ।
वेतन ।
वाह ।
अर्धवाह ।
धनुर्दण्ड ।
जाल ।
वेस ।
उपवेस ।
प्रेषन ।
उपस्ति ।
सुख ।
शय्या ।
शक्ति ।
उपनिषथ् ।
उपवेष ।
स्रक् ।
पाद ।
उपस्थान ।
वेतनादिः । ।

---

1. <वस्न-क्रय-विक्रयाट्ठन्># । । PS_४,४.१३ । ।

______Sठा~ठ्JKव्_४,४.१३ः

वस्न-क्रयविक्रय-शब्दाभ्यां तृतीयासमर्थाभ्यां ठन्प्रत्ययो भवति जीवति इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
वस्नेन जीवति वस्निकः ।
क्रय-विक्रय-ग्रहणं सङ्घातविगृहीत-अर्थं ।
क्रयविक्रयीकः ।
क्रयिकः ।
विक्रयिकः । ।

---

[#४४०]

1. <आयुधच्छ च># । । PS_४,४.१४ । ।

______Sठा~ठ्JKव्_४,४.१४ः

आयुध-शब्दात्छ प्रत्ययो भवति, चकाराड्ंश्च, जीवति इत्येतस्मिन्विषये ।
आयुधेन जीर्वात आयुधीयः, आयुधिकः । ।

---

1. <हरत्युत्सङ्ग-आदिभ्यः># । । PS_४,४.१५ । ।

______Sठा~ठ्JKव्_४,४.१५ः
तेन इत्येव ।
उत्सङ्गादिभ्यस्तृतियासमर्थेभ्यो हरति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
हरतिर्देशान्तरप्रापणे वर्तते ।
उत्सङ्गेन हरति औत्सङ्गिकः ।
औडुपिकः ।
उत्सङ्ग ।
उडुप ।
उत्पत ।
पिटक ।
उत्सङ्गादिः । ।

---

1. <भस्त्रादिभ्यः ष्ठन्># । । PS_४,४.१६ । ।

_______Sठाऱ्ठJKव्_४,४.१६ः

भस्त्रा इत्येवं आदिभ्यः तृतीयासम्र्थेभ्यः हरति तियेतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति ।
भस्त्रया हरति भस्त्रिकः ।
भस्त्रिकी ।
भरटिकः ।
भरटिकी ।
भस्त्रा ।
भरट ।
भरण ।
शीर्षभार ।
शीर्षेभार ।
अंसभार ।
अंसेभार ।
भस्त्रादिः । ।

---

1. <विभाषा विवध-वीवधात्># । । PS_४,४.१७ । ।

_______Sठाऱ्ठJKव्_४,४.१७ः

हरति इत्येव ।
विवध-वीवध-शब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन्प्रत्ययो भवति ।
तेन मुक्ते प्रकृतः ठग्भवति ।
विवधेन हरति विवधिकः ।
विवधिकी ।
वीवधिकः ।
विवधिकी ।
ठक्खल्वपि - वैवधिकः ।
वैवधिकी ।
विवध-वीवध-शब्दौ समानार्थौ पथि पर्याहारे च वर्तेते । ।

---

1. <अण्कुटिलिकायाः># । । PS_४,४.१८ । ।

_______Sठाऽ्ठJKव्_४,४.१८ः

हरति इत्येव ।
कुटिलिका-शब्दात्तृतीयासमर्थादण्प्रत्ययो हबवति हरति इत्येतस्मिन्नर्थे ।
कुटिलिकाया हरति मृगो व्याधं कौटिलिको मृगः ।
कुटिलिकया हरत्यङ्गारात्कौटिलिकः कर्मारः ।
कुटिलिका वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्च+उच्यते । ।

---

[#४४१]

1. <निर्वृत्तेऽक्षद्यूत-आदिभ्यः># । । PS_४,४.१९ । ।

_______Sठाऽ्ठJKव्_४,४.१९ः

तेन इत्येव ।
अक्षद्यूतादिभ्यः तृतीयासमर्थेभ्यो निर्वृत्ते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरं ।
जानुप्रहृतिकं ।
अक्षद्यूत ।
जानुप्रहृत ।
जङ्घाप्रहृत ।
पादस्वेदन ।
कण्टकमर्दन ।
गतागत ।
यातोपयात ।
अनुगत ।
अक्षद्यूतादिः । ।

---

1. <त्रेर्मं नित्यम्># । । PS_४,४.२० । ।

_______Sठाऽ्ठJKव्_४,४.२०ः

निर्वृत्त इत्येव ।
ड्वितः क्त्रिः (*३,३.८८) इत्ययं त्रिशब्दो गृह्यते ।
त्र्यन्तान्नित्यं मप्प्रत्ययो भवति तेन विर्वृत्ते इत्येतस्मिन्नर्थे ।
डुपचष्पाके - पक्त्रिमं ।
डुवप्- उप्त्रिमं ।

डुकृञ्- कृत्रिमं ।
नित्य-ग्रहणं स्वातन्त्र्यनिवृत्त्य्-अर्थम्, तेन त्र्यन्तं नित्यं मप्-प्रत्ययान्तं एव भवति, विषयान्तरे न प्रयोक्तव्यं इति ।
भाव-प्रत्ययान्तादिं अब्वक्तव्यः ।
पाकेन निर्वृत्तं पाकिमं ।
त्यागिमं ।
सेकिमं ।
कुट्टिमं । ।

---

1. <अपमित्य-याचिताभ्यां कक्कनौ># । । PS_४,४.२१ । ।

______Sठा-ठ्JKव्_४,४.२१ः

निर्वृत्त इत्येव ।
अपमित्य-याचित-शब्दाभ्यां यथासङ्ख्यं कक्कनित्येतौ प्रत्ययौ भवतः निर्वृत्ते इत्येतस्मिन्नर्थे ।
आपमित्यकं ।
याचितकं । ।

---

1. <संसृष्टे># । । PS_४,४.२२ । ।

______Sठा-ठ्JKव्_४,४.२२ः

तेन इत्येव ।
तृतीयासमर्थात्संसृष्टे इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
संसृष्टं एकीभूतं अभिन्नं इत्यर्थः ।
दध्ना संसृष्टं दाधिकं ।
मारिचिकं ।
शार्ङ्गवेरिकं ।
पैप्पलिकं । ।

---

1. <चूर्णादिनिः># । । PS_४,४.२३ । ।

______Sठा-ठ्JKव्_४,४.२३ः

चूर्ण-शब्दादिनिः प्रत्ययो भवति संसृष्ते ।
ठकोऽपवादः ।
चूर्णैः संसृष्टाः चूर्णिनोऽपूपाः ।
चूर्णिनो धानाः ।।

---

[#४४२]

1. <लवणाल्लुक्># ।। PS_४,४.२४ ।।

_______Sठाऽ्ठ्JKव्_४,४.२४ः

संसृष्ते (*४,३.२२) इत्यनेन+उत्पन्नस्य ठको लवण-शब्दाल्लुक्भवति ।
लवणः सूपः ।
लवणं शाकं ।
लवणा यवागूः ।
द्रव्य-वाची लवण-शब्दो लुकं प्रयोजयति, न गुणवाची ।।

---

1. <मुद्गादण्># ।। PS_४,४.२५ ।।

_______Sठाऽ्ठ्JKव्_४,४.२५ः

मुद्ग-शब्दादण्प्रत्ययो भवति संसृष्टे इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
मौद्ग ओदनः ।
मौद्गी यवागूः ।।

---

1. <व्यञ्जनैरुपसिक्ते># ।। PS_४,४.२६ ।।

_______Sठाऽ्ठ्JKव्_४,४.२६ः

तेन इत्येव ।
व्यञ्जन-वाचिभ्यः प्रातिपदिकेभ्यः तृतीयासमर्थेभ्यः उपसिक्ते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
दध्ना उपसिक्तं दाधिकं ।

सौपिकं ।
खारिकं ।
व्यञ्जनैः इति किं ? उदकेन+उपसिक्त ओदनः । ।

---

1. <ओजःसहोऽम्भसा वर्तते># । । PS_४,४.२७ । ।

_______Sठाञ्ठJKव्_४,४.२७ः

ओजस्सहसम्भसित्येतेभ्यः तृतीयासमर्थेभ्यो वर्तते इत्यर्थे ठक्प्रत्ययो भवति ।
ओजसा वर्तते औजसिकः शूरः ।
साहसिकश्चौरः ।
आम्भसिको मत्स्यः । ।

---

1. <तत्प्रत्य्-अनु-पूर्वं ईप-लोम-कूलम्># । । PS_४,४.२८ । ।

_______Sठाञ्ठJKव्_४,४.२८ः

तदिति द्वितीयासमर्थ-विभक्तिः ।
प्रति अनु इत्येवं पूर्वेभ्यः ईप-लोम-कूल-शब्देभ्यो द्वितियासमर्थेभ्यो वर्तते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः ? क्रियाविश्षणं अकर्मकाणां अपि कर्म भवति ।
प्रतीपं वर्तते प्रातीपिकः ।
आन्वीपिकः ।
प्रातिलोमिकः ।
आनुलोमिकः ।
प्रातिकूलिकः ।
आनुकूलिकः । ।

---

1. <परिमुखं च># । । PS_४,४.२९ । ।

_______Sठाञ्ठJKव्_४,४.२९ः

परिमुख-शब्दाद्द्वितीयासमर्थाद्वर्तते इत्येअस्मिन्नर्थे ठक्प्रत्ययो भवति ।

परिमुखं वर्तते पारिमुखिकः ।
चकारोऽनुक्त-समुच्चयार्थः ।
पारिपार्श्विकः । ।

---

[#४४३]

1. <प्रयच्छति गर्ह्यम्># । । PS_४,४.३० । ।

______Sठा-ठ्JKव्_४,४.३०ः

ततिति द्वितीयासमर्थात्प्रयच्छति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, यत्तद्द्वितीयासमर्थं गर्ह्यं चेत्तद्भवति ।
द्विगुणार्थं द्विगुणं, तादर्थ्यात्ताच्छब्द्यं ।
द्विगुणं प्रयच्छति द्वैगुणिकः ।
त्रिगुणिकः ।
वृद्धेर्वृधुशिभावो वक्तव्यः ।
वार्धुषिकः ।
प्रकृत्यनतरं वा वृद्धिपर्यायो वृधुषिशब्दः ।
गर्ह्यं इति किं ? द्विगुणं प्रयच्छत्यधमर्णः । ।

---

1. <कुसीद-दश-एकादशात्ष्ठन्ष्ठचौ># । । PS_४,४.३१ । ।

______Sठा-ठ्JKव्_४,४.३१ः

प्रयच्छति गर्ह्यं इत्येव ।
कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसिदं ।
एकादशार्था दश दशैकादशशब्देन+उच्यन्ते ।
कुसीद-दश-एकादशशब्दाभ्यां यथासङ्ख्यं ष्ठन्ष्ठचित्येतौ प्रत्ययौ भवतः प्रयच्छति गर्ह्यं इत्येतस्मिन्विषये ।
ठकोऽपवादौ ।
कुसिदं प्रयच्छति कुसीदिकः ।
कुसीदिकी ।
दशैकादशिकः ।
दशैकादशिकी । ।

---

1. <उच्छति># । । PS_४,४.३२ । ।

_______Sठा~ठ्JKव्_४,४.३२ः

तदिति द्वितीयासमर्थादुच्छति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
बदराणि उच्छति बादरिकः ।
श्यामाकिकः ।
भूमौ पतितस्यैकैकस्य कणस्योपादानमुञ्छः ।
कणानुञ्छति काणिकः । ।

---

1. <रक्षति># । । PS_४,४.३३ । ।

_______Sठा~ठ्JKव्_४,४.३३ः

तदिति द्वितीयासमर्थाद्रक्षति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
समाजं रक्षति सामाजिकः ।
सांनिवेशिकः । ।

---

1. <शब्द-दर्दुरं करोति># । । PS_४,४.३४ । ।

_______Sठा~ठ्JKव्_४,४.३४ः

तदिति द्वितीयासमर्थाभ्यां शब्द-दर्दुर-शब्दाभ्यां करोति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
शब्दं करोति शाब्दिको वैयाकरणः ।
दार्दुरिकः कुम्भकारः । ।

---

1. <पक्षि-मत्स्य-मृगान्हन्ति># । । PS_४,४.३५ । ।

_______Sठा~ठ्JKव्_४,४.३५ः

तदित्येव ।

पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो हन्ति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणं इह+इस्यते ।
पक्षिणो हन्ति पाक्षिकः ।
शाकुनिकः ।
मायूरिकः ।
तैत्तिरिकः ।
मत्स्य - मात्स्यिकः ।
मैनिकः ।
शाफरिकः ।
शाकुलिकः ।
मृग - मार्गिकः ।
हारिणिकः ।
सौकरिकः ।
सारङ्गिकः । ।

---

[#४४४]

1. <परिपन्थं च तिष्ठति># । । PS_४,४.३६ । ।

_______Sठाञ्ठ्JKव्_४,४.३६ः

परिपन्थ-शब्दात्तदिति द्वितीयासमर्थात्तिष्ठति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
परिपन्थं तिष्ठति पारिपन्थिकश्चौरः ।
चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति ।
परिपन्थं हन्ति पारिपन्थिकः ।
समर्थविभक्तिप्रकरणे पुनर्द्वितियोच्चारणं लौकिकवाक्य-प्रदर्शन-अर्थं ।
परिपथशब्द-पर्यायः परिपन्थ-शब्दोऽस्ति इति ज्ञापयति ।
स विषयान्तरेऽपि प्रयोक्तव्यः । ।

---

1. <माथ-उत्तरपद-पदव्य्-अनुपदं धावति># । । PS_४,४.३७ । ।

_______Sठाञ्ठ्JKव्_४,४.३७ः

माथ-शब्द-उत्तरपदात्प्रातिपैकात्पदवी अनुपद इत्येताभ्यां च धावति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
दण्डमाथं धावति दाण्डमाथिकः ।
शौल्कमाथिकः ।
पादविकः ।
आनुपदिकः ।

मथशब्दः पथिपर्यायः । ।

---

1. <आक्रन्दाट्ठञ्च># । । PS_४,४.३८ । ।

_______Sठा~ठ्JKव्_४,४.३८ः

आक्रन्दन्ति एतस्मिन्नित्याक्रन्दो देशः ।
अथ वा आक्रन्द्यते इत्याक्रन्दः आर्तायनं उच्यते ।
विशेषाभावाद्द्वयोरपि ग्रहणं ।
आक्रन्द-शब्दात्तदिति द्वितीयासमर्थाद्धावति इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति, चकाराट्ठक्च ।
स्वरे विशेषः ।
आक्रन्दं धावति आक्रन्दिकः ।
आक्रन्दिकी । ।

---

1. <पद-उत्तरपदं गृह्णाति># । । PS_४,४.३९ । ।

_______Sठा~ठ्JKव्_४,४.३९ः

पदशब्दः उत्तरपदं यस्य तस्मात्पदोत्तरपद-शब्दात्तदिति द्वितीयासमर्थाद्गृह्णाति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
पूर्वपदं गृह्णाति पौर्वपदिकः ।
औत्तरपदिकः ।
पदानताततिति न+उक्तं, बहुच्पूर्वान्मा भूतिति । ।

---

1. <प्रतिकण्ठ-अर्थ-ललामं च># । । PS_४,४.४० । ।

_______Sठा~ठ्JKव्_४,४.४०ः

प्रतिकण्ठ-अर्थ-ललाम-शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः गृह्णाति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः ।
आर्थिकः ।
लालामिकः । ।

---

1. <धर्मं चरति># । । PS_४,४.४१ । ।

_______Sठाञ्ठ्JKव्_४,४.४१ः

धर्म-शब्दात्तदिति द्वितीयासमर्थाच्चरति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
चरतिरासेबायां नानुष्ठानमात्रे ।
धर्मं चरति धार्मिकः ।
अधर्माच्च+इति वक्तव्यं ।
आधर्मिकः । ।

---

[#४४५]

1. <प्रतिपथं एति ठंश्च># । । PS_४,४.४२ । ।

_______Sठाञ्ठ्JKव्_४,४.४२ः

प्रतिपथ-शब्दाद्द्वितीयासमर्थादेति इत्यस्मिन्नर्थे ठन्प्रत्ययो भवति, चकाराट्ठक्च ।
प्रतिपथं एति प्रतिपथिकः, प्रातिपथिकः । ।

---

1. <समवायान्समवैति># । । PS_४,४.४३ । ।

_______Sठाञ्ठ्JKव्_४,४.४३ः

समवाया-वाचिभ्यः शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः समवैति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
समवायः समूहः उच्यते, न संप्रधारणा ।
समवायानिति बहुवचनं सरूपविधिनिरासार्थं ।
समवैति आगत्य तदेकदेशी भवति इत्यर्थः ।
समवायान्समवैति सामवायिकः ।
सामाजिकः ।
सामूहिकः ।
सान्निवेशिकः । ।

---

1. <परिषदो ण्यः># । । PS_४,४.४४ । ।

_______Sठा~ठ्JKव्_४,४.४४ः

परिषदः ण्यः प्रत्ययो भवति समवायान्समवैति इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
परिषदं समवैति पारिषद्यः । ।

---

1. <सेनाया वा># । । PS_४,४.४५ । ।

_______Sठा~ठ्JKव्_४,४.४५ः

सेना-शब्दाद्वा ण्यः प्रत्ययो भवति समवायान्समवैति इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।
पक्षे सोऽपि भवति ।
सेनां समवैति सैन्यः, सैनिकः । ।

---

1. <सञ्ज्ञायां ललाट-कुक्कुट्यौ पश्यति># । । PS_४,४.४६ । ।

_______Sठा~ठ्JKव्_४,४.४६ः

ललाट-कुक्कुटी-शब्दाभ्यां तदिति द्वितीयासमर्थाभ्यां पश्यति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति सञ्ज्ञायां विषये ।
सञ्ज्ञा-ग्रहणं अभिधेय-नियम-अर्थं, न तु रूढ्यर्थं ।
ललाटं पश्यति लालाटिकः सेवकः ।
कौक्कुटिको भिक्षुः ।
सर्वावयवेभ्यो ललाटं दूरे दृश्यते ।
तदनेन ललाट-दर्शनेन सेवकस्य स्वामिनं प्रति अनुपश्लेषः कार्येषु अनुपस्थायित्वं लक्ष्यते ।
लालाटिकः सेवकः ।
स्वामिनः कार्येषु न+उपतिष्ठते इत्यर्थः ।
कुक्कुटी-शब्देन अपि कुक्कुटीपातो लक्ष्यते ।
देशस्य अल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिकः इति । ।

[#४४६]

1. <तस्य धर्म्यम्># । । PS_४,४.४७ । ।

_______Sठा~ठ्JKव्_४,४.४७ः

तस्य इति षष्ठीसमर्थाद्धर्म्यं इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
धर्म्यं न्याय्यं ।
आचारयुक्तं इत्यर्थः ।
शुल्कशालायाः धर्म्यं शौल्कशालिकं ।
आकरिकं ।
आपणिकं ।
गौल्मिकं । ।

---

1. <अण्महिष्य्-आदिभ्यः># । । PS_४,४.४८ । ।

_______Sठा~ठ्JKव्_४,४.४८ः

महिषी इत्येवं आदिभ्यः अण्प्रत्ययो भवति तस्य धर्म्यं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
महिस्याः धर्म्यं माहिषं ।
प्राजावतं ।
महिषी ।
प्रजावती ।
प्रलेपिका ।
विलेपिका ।
अनुलेपिका ।
पुरोहित ।
मणिपाली ।
अनुचारक ।
होतृ ।
यजमान ।
महिष्यादिः । ।

---

1. <ऋतोऽञ्># । । PS_४,४.४९ । ।

_______Sठा-ठ्JKव्_४,४.४९ः

ऋकारान्तात्प्रातिपदिकातञ्प्रत्ययो भवति तस्य धर्म्यं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
पोतुर्धर्म्यं पौत्रं ।
औद्गात्रं ।
नरच्च+एति वक्तव्यं ।
नरस्य धर्म्या नारी ।
विशसितुरिड्लोपश्च ।
विशसितुः धर्म्यं वैशस्त्रं ।
विभाजयितुर्णिलोपश्च ।
विभाजयितुर्धर्म्यं वैभाजित्रं । ।

---

1. <अवक्रयः># । । PS_४,४.५० । ।

_______Sठा-ठ्JKव्_४,४.५०ः

तस्य इत्येव ।
षष्ठीसमर्थातवक्रय इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
अवक्रीणितेऽनेन इति अवक्रयः पिण्डकः उच्यते ।
शुल्कशालायाः अवक्रयः औल्कशालिकः ।
आकरिकः ।
आपणिकः ।
गौल्मिकः ।
ननु अवक्रयोऽपि धर्म्यं एव ? न+एतदस्ति ।
लोकपीडया धर्मतिक्रमेण अप्यवक्रयो भवति । ।

---

[#४४७]

1. <तदस्य पण्यम्># । । PS_४,४.५१ । ।

_______Sठा-ठ्JKव्_४,४.५१ः

तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत्तद्भवति ।
अपूपाः पण्यं अस्य आपूपिकः ।

शाष्कुलिकः ।
मौदकिकः ।
पण्यं इति विशेषनं तद्धितवृत्तावन्तर्भूतं अतः पण्य-शब्दो न प्रयुज्यते । ।

---

1. <लवणाट्ठञ्># । । PS_४,४.५२ । ।

_______Sठा~ठ्JKव्_४,४.५२ः

लवण-शब्दाट्ठञ्प्रत्ययो भवति तदस्य पण्यं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
स्वरे विशेषः ।
लवणं पण्यं अस्य लावणिकः । ।

---

1. <किशरादिभ्यः ष्ठन्># । । PS_४,४.५३ । ।

_______Sठा~ठ्JKव्_४,४.५३ः

किशर इत्येवं आदिभ्यः ष्ठन्प्रत्ययो तदस्य पण्यं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
किशरादयो गन्धविशेष-वचनाः ।
किशराः पण्यं अस्य किशरिकः ।
किशरिकी ।
निरदिकः ।
नरदिकी ।
किशर ।
नरद ।
नलद ।
सुमङ्गल ।
तगर ।
गुग्गुलु ।
उशीर ।
हरिद्रा ।
हरिद्रायणी ।
किशरादिः । ।

---

1. <शलालुनोऽन्यतरस्याम्># । । PS_४,४.७४ । ।

______Sठा~ठ्JKव्_४,४.७४ः

शलालु-शब्दादन्यतरस्यां ष्ठन्प्रत्ययो भवति तदस्य पण्यं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
पक्षे सोऽपि भवति ।
शलालु-शब्दो गन्धविशेष-वचनः ।
शलालु पण्यं अस्य शलालुकः ।
शलालुकी ।
शालालुकः ।
शालालुकी । ।

---

1. <शिल्पम्># । । PS_४,४.७५ । ।

______Sठा~ठ्JKव्_४,४.७५ः

तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति ।
शिल्पं कौशलं ।
मृदङ्गवादनं शिल्पं अस्य मार्दङ्गिकः ।
पाणविकः ।
वैणिकः ।
मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययं उत्पादयति ।
शिल्पं तद्धितवृत्तावन्तर्भवति । ।

---

[#४४८]

1. <मड्डुक-झर्झरादणन्यतरस्याम्># । । PS_४,४.७६ । ।

______Sठा~ठ्JKव्_४,४.७६ः

मड्डुक-झर्झर-शब्दाभ्यां अन्यतरस्यां अण्प्रत्ययो भवति तदस्य शिल्पं इत्येतस्मिन्विषये ।
पक्षे सोऽपि भवति ।

मड्डुकवादनं शिल्पमस्थ माड्डुकः, माड्डुकिकः ।
झार्झरः, झार्झरिकः । ।

---

1. <प्रहरणम्># । । PS_४,४.५७ । ।

______Sठाञ्ठ्JKव्_४,४.५७ः

तदस्य इत्येव ।
तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति ।
असिः प्रहरणं अस्य आसिकः ।
प्रासिकः ।
चाक्रिकः धानुष्कः । ।

---

1. <परश्वधाट्ठञ्च># । । PS_४,४.५८ । ।

______Sठाञ्ठ्JKव्_४,४.५८ः

परश्वध-शब्दात्ठञ्प्रत्ययो भवति, चकारात्ठक् ।
स्वरे विशेषः ।
परश्वधः प्रहरणं अस्य पारश्वधिकः । ।

---

1. <शक्ति-यष्ट्योरीकक्># । । PS_४,४.५९ । ।

______Sठाञ्ठ्JKव्_४,४.५९ः

शक्ति-यष्टि-शब्दाभ्यां ईकक्प्रत्ययो भवति तदस्य प्रहरणं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
शक्तिः प्रहरणं अस्य शाक्तीकः ।
याष्टीकः । ।

---

1. <अस्ति-नास्ति-दिष्टं मतिः># । । PS_४,४.६० । ।

______Sठा~ठ्JKव्_४,४.६०ः

तदस्य इत्येव ।
तदिति प्रथमासमर्थेभ्यः अस्ति नास्ति दिष्ट इत्येतेभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं मतिश्चेत्तद्भवति ।
अस्ति मतिः अस्य आस्तिकः ।
नास्ति मतिः अस्य नास्तिकः ।
दैष्टिकः ।
न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि, परलोकोऽस्ति इति यस्य मतिः स आस्तिकः ।
तद्विपरीतो नास्तिकः ।
प्रमाण-अनुपातिनी यस्य मतिः स दैष्टिकः ।
तदेतदभिधान-शक्ति-स्वभावाल्लभ्यते ।
अस्ति-नास्ति-शब्दौ निपातौ, वचनसामर्थ्याद्वा आख्यातादवाक्याच्च प्रत्ययः । ।

---

1. <शीलं># । । PS_४,४.६१ । ।

______Sठा~ठ्JKव्_४,४.६१ः

तदस्य इत्येव ।
तदिति प्रथमासमर्थादस्य इति षष्ट्यर्थे ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं शीलं चेद्तद्भवति ।
शीलं स्वभावः ।
अपूपभक्षणं शीलं अस्य आपूपिकः ।
शाष्कुलिकः ।
मौदकिकः ।
भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति । ।

---

[#४४९]

1. <छत्रादिभ्यो णः># । । PS_४,४.६२ । ।

______Sठा~ठ्JKव्_४,४.६२ः

छत्र इत्येवं आदिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति तदस्य शीलं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
छत्रं शीलं अस्य छात्रः ।
छादनादावरणाच्छत्रं ।
गुरुकार्येष्वहितः तच्छिद्रावरणप्रवृत्तः छत्रशीलः शीष्यः छात्रः ।
स्था-शब्दोऽत्र पठ्यते, स उपसर्ग-पूर्वोऽत्र गृह्यते आस्था संस्था अवस्था इति ।
छत्र ।
बुभुक्षा ।
शिक्षा ।
पुरोह ।
स्था ।
चुरा ।
उपस्थान ।
ऋषि ।
कर्मन् ।
विश्वधा ।
तपस् ।
सत्य ।
अनृत ।
शिबिका ।
छत्रादिः । ।

---

1. <कर्माध्ययने वृत्तम्># । । PS_४,४.६३ । ।

______Sठाऽठ्JKव्_४,४.६३ः

तदस्य इत्येव ।
तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति, यत्तत्प्रथमास्मर्थं कर्म चेत्तद्वृत्तं अध्ययनविषयं भवति ।
एकमन्यदध्ययने कर्म वृत्तं अस्य ऐकान्यिकः ।
द्वैयन्यिकः ।
त्रैयन्यिकः ।
एकमन्यतिति विगृह्य तद्धितार्थ इति समासः ।
ततश्च ठक्प्रत्ययः ।
अध्ययने कर्म वृत्तं इत्येतत्सर्वं तद्धितवृत्तावन्तर्भवति ।
यस्य अध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितं अपपाठरूपं एकं जातं स उच्यते ऐकान्यिकः इति ।
एवं द्वैयन्यिकः त्रैयन्यिक इति । ।

---

1. <बह्व्-अच्-पूर्वपदाट्टच्># । । PS_४,४.६४ । ।

_______Sठाऻठ्JKव्_४,४.६४ः

बह्वच्पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकात्ठच्प्रत्ययो भवति तदस्य कर्माध्ययने वृत्तं इत्येतस्मिन्नर्थे ठकोऽपवादः।
द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः।
त्रयोदशान्यिकः।
चतुर्दशान्यिकः।
चतुर्दशापपाठा अस्य जाता इत्यर्थः।
उदात्ते कर्तव्ये योऽनुदात्तं करोति स उच्यते अन्यत्त्वं करोषि इति।।

---

1. <हितं भक्षाः>#।। PS_४,४.६५।।

_______Sठाऻठ्JKव्_४,४.६५ः

तदस्य इत्येव।
तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः।
ननु च हितयोगे चतुर्थ्या भवितव्यं, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति।
अपूपभक्षणं हितं अस्मै आपूपिकः।
शाष्कुलिकः।
मौदकिकः।
हितार्थक्रिया च तद्धितवृतावन्तर्भवति।।

---

[#४५०]

1. <त दस्मै दीयते नियुक्तम्>#।। PS_४,४.६६।।

_______Sठाऻठ्JKव्_४,४.६६ः

ततिति प्रथमासमर्थादस्मा इति चतुर्थ्यर्थ ठक्प्रत्ययो भवति यत्तत्प्रथमासमर्थं तच्चेद्दीयते नियुक्तं।
नियोगेन अव्यभिचारेण दीयते इत्यर्थः।
अव्यभिचारो नियोगः।
अग्रे भोजनं अस्मै नियुक्तं दीयते आग्रभोजनिकः।
आपूपिकः।
शाष्कुलिकः।
केचित्तु नियुक्तं नित्यं आहुः।
अपूपा नित्यं अस्मै दीयन्ते आपूपिकः।।

---

1. <श्राणा-मांस-ओदनाट्टिठन्># । । PS_४,४.६७ । ।

_______Sठा~ठ्JKव्_४,४.६७ः

श्राणा-मांस-ओदन-शब्दाभ्यां टिठन्प्रत्ययो भवति तदस्मै दीयते नियुक्तं इत्येतस्मिन्नर्थे ।
ठकोऽपवादः ।
इकार उच्चारण-अर्थः ।
टकारो ङीब्-अर्थः ।
श्राणा नियुक्तं अस्मै दीयते श्राणिकः ।
श्राणिकी ।
मांसौदनिकः ।
मांसौदनिकी ।
अथ ठञेव कस्मान्न+उक्तः, न ह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदन-ग्रहणं सङ्घातविगृहीत-अर्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः ।
ओदनिकः ।
ओदनिकी । ।

---

1. <भक्टादणान्यतरस्याम्># । । PS_४,४.६८ । ।

_______Sठा~ठ्JKव्_४,४.६८ः

भक्त-शब्दादण्प्रत्ययो भवति अन्यत्रस्यां तदसमि दीयते नियुक्तं इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
पक्षे सोऽपि भवति ।
भक्तं अस्मै दीयते नियुक्तं भाक्तः, भक्तिकः । ।

---

1. <तत्र नियुक्तः># । । PS_४,४.६९ । ।

_______Sठा~ठ्JKव्_४,४.६९ः

तत्र इति सप्तमीसमर्थान्नियुक्त इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति ।
नियुक्तः आधिकृतो व्यापारितः इत्यर्थः ।
शुल्कशालायां नियुक्तः शौल्कशालिकः ।

आकरिकः ।
आपणिकः ।
गौल्मिकः ।
दौवारिकः । ।

---

1. <अगार-अन्ताट्ठन्># । । PS_४,४.७० । ।

_______Sठा-ठ्JKव्_४,४.७०ः

अगार-शब्दान्तात्प्रातिपदिकात्ठन्प्रत्ययो भवति तत्र नियुक्तः इत्येतस्मिन्विषये ।
ठकोऽपवादः ।
देवागारे नियुक्तः देवागारिकः ।
कोष्ठागारिकः ।
भाण्डागारिकः । ।

---

[#४५१]

1. <अध्यायिन्यदेश-कालात्># । । PS_४,४.७१ । ।

_______Sठा-ठ्JKव्_४,४.७१ः

तत्र इत्येव ।
सप्तमीसमर्थाददेश-वाचिनः परतिपदिकादकाल-वाचिनः च अध्यायिन्यभिधेये ठक्प्रत्ययो भवति ।
अध्ययनस्य यौ देशकालौ शास्त्रण प्रतिषिद्धौ तावदेशकाल-शब्देन+उच्येते, तत इदं प्रत्ययविधानं ।
श्माशानेऽधीते श्माशानिकः ।
चातुष्पथिकः ।
अकालात्- चतुरदश्यमधीते चातुर्दशिकः ।
आमावास्यिकः ।
अदेशकालातिति किं ? स्रुघ्नेऽधीते ।
पूर्वाह्णेऽधीते । ।

---

1. <कठिनान्त-प्रस्तार-संस्थानेषु व्यवहरति># । । PS_४,४.७२ । ।

_______Sठाऽ्ठ्JKव्_४,४.७२ः

तत्र इत्येव।
कठिन-शब्दान्तात्सप्तमीसमर्थात्प्रस्तार-संस्थान-शब्दाभ्यां च ठक्प्रत्ययो भवति व्यवहरति इत्येतस्म्न्नर्थे।
व्यवहारः क्रियातत्त्वं यथा लौकिकव्यवहारः इति।
वंशकठिने व्यवहरति वांशकठिनिकः चक्रचरः।
वार्ध्रकठिनिकः।
प्रास्तारिकः।
सांस्थानिकः।।

---

1. <निकटे वसति>#।। PS_४,४.७३।।

_______Sठाऽ्ठ्JKव्_४,४.७३ः

निकट-शाब्दात्सप्तमीस्मर्थात्वसति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति।
यस्य शास्त्रतो निकटवासस्तत्र अयं विधिः।
आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यं इति शास्त्रं।
निकटे वसति नैकटिको भिक्षुः।।

---

1. <आवसथात्ष्ठल्>#।। PS_४,४.७४।।

_______Sठाऽ्ठ्JKव्_४,४.७४ः

तत्र इत्येव।
आवसथ-शब्दात्सप्तमीसमर्थात्वसति इत्येतस्मिन्नर्थे ष्ठल्प्रत्ययो भवति।
लकारः स्वरार्थः।
षकारो ङीषर्थः।
आवसथे वसति आवसथिकः।
आवसथिकी।
ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो विधीयते।।

---

1. <प्राग्घिताद्यत्>#।। PS_४,४.७५।।

_______Sठा~ठ्JKव्_४,४.७५ः

तस्मै हितं (*५,१.५) इति वक्ष्यति ।
प्रागेतस्माद्धितसंशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः ।

---

वक्ष्यति -

1. <तद्वहति रथयुगप्रासङ्गम्># । । PS_४,४.७६ । ।

_______Sठा~ठ्JKव्_४,४.७६ः

रथ्यः ।
युग्यः ।
प्रासङ्ग्यः । ।
तद्वहति रथयुगप्रासङ्गं (*४,४.७६) ।
तदिति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यो वहति इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
रथं वहति रथ्यः ।
युग्यः ।
प्रासङ्ग्यः ।
रथसीताहलेभ्यो यद्विधौ इति तदनतविध्य्-उपसङ्ख्यानात्परमरथ्यः इत्यपि भवति । ।

---

[#४५२]

1. <धुरो यड्-ढकौ># । । PS_४,४.७७ । ।

_______Sठा~ठ्JKव्_४,४.७७ः

तद्वहति इत्येव ।
धुरित्येतस्माद्द्वितीयासमर्थाद्वहति इत्येतस्मिन्नर्थे यत्ढकित्येतौ प्रत्ययौ भवतः ।
धुरं वहति धुर्यः, धौरेयः । ।

---

1. <खः सर्वधुरात्># । । PS_४,४.७८ । ।

______Sठा-ठ्JKव्_४,४.७८ः

तद्वहति इत्येव ।
सर्वधुरा-शब्दाद्द्वितीयासमर्थात्वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति ।
सर्वधुरां वहति सर्वधुरीणः ।
स्त्रीलिङ्गे न्याय्ये सर्वधुरातिति प्रातिपदिकमात्र-अपेक्षो निर्देशः ।
खः इति योगविभागः कर्तव्यः इष्टसङ्ग्रहार्थः ।
उत्तरधुरीणः ।
दक्षिणधुरीणः । ।

---

1. <एकधुराल्लुक्च># । । PS_४,४.७९ । ।

______Sठा-ठ्JKव्_४,४.७९ः

तद्वहति इत्येव ।
एकधुरा-शब्दाद्द्वितीयासमर्थाद्वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति, तस्य च लुग्भवति ।
वचनसमार्थ्यात्पक्षे लुग्विधीयते ।
एकधुरां वहति एकधुरीणः, एकधुरः । ।

---

1. <शकटादण्># । । PS_४,४.८० । ।

______Sठा-ठ्JKव्_४,४.८०ः

तद्वहति इत्येव ।
शकट-शब्दाद्द्वितीयासमर्थाद्वहति इत्येतस्मिन्नर्थे अण्प्रत्ययो भवति ।
शकटं वहति शाकटो गौः । ।

---

1. <हलसीराट्ठक्># । । PS_४,४.८१ । ।

______Sठा-ठ्JKव्_४,४.८१ः
तद्वहति इत्येव।
हल-सीर-शब्दाभ्यां द्वितीयास्मर्थाभ्यां वहति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति।
हलं वहति हालिकः।
सैरिकः॥

---

1. <सञ्ज्ञायां जन्याः>#॥ PS_४,४.८२॥

______Sठा-ठ्JKव्_४,४.८२ः

तद्वहति इत्येव।
जनी-शब्दाद्द्वितीयासमर्थाद्वहति इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, समुदायेन चेत्सञ्ज्ञागम्यते।
जनीं वहति जन्या, जामातुर्वयस्या।
सा हि विहारादिषु जमातृसमीपं प्रापयति।
जनी वधूरुच्यते॥

---

[#४५३]

1. <विध्यत्यधनुषा>#॥ PS_४,४.८३॥

______Sठा-ठ्JKव्_४,४.८३ः

ततिति द्वितीयासमर्थाद्विध्यति इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, न चेद्धनुष्करणं भवति।
पादौ विध्यन्ति पद्याः शर्कराः।
ऊरव्याः कण्टकाः।
अधनुषा इति किं? पादौ विध्यति धनुषा।
ननु असमर्थत्वादनभिधानाच्च प्रत्ययो न भवति, न हि धनुषा पद्य इति विवक्षितोऽर्थः प्रतीयते? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्यां धनुष्करणं न सम्भाव्यते इति।
तेन इह न भवति, चौरं विध्यति, शत्रुं विध्यति देवदत्तः इति॥

---

1. <धन-गणं लब्धा>#॥ PS_४,४.८४॥

_______Sठा~ठ्JKव्_४,४.८४ः

तदित्येव ।
धनगण-शब्दाभ्यां द्वितीयासमर्थाभ्यां लब्धा इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
धन्यः ।
गण्यः ।
लब्धा इति तृन्नन्तं, तेन द्वितीया समर्था विभक्तिर्युज्यते । ।

---

1. <अन्नाण्णः># । । PS_४,४.८५ । ।

_______Sठा~ठ्JKव्_४,४.८५ः

अन्न-शब्दात्तदिति द्वितीयासमर्थात्लब्धा इत्येतस्मिनर्थे णः प्रत्ययो भवति ।
अन्नं लब्धा आन्नः । ।

---

1. <वशं गतः># । । PS_४,४.८६ । ।

_______Sठा~ठ्JKव्_४,४.८६ः

वश-शब्दात्तदिति द्वितीयासमर्थाद्गतः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
वशं गतः वश्यः ।
कामप्राप्तो विधेयः इत्यर्थः । ।

---

1. <पदं अस्मिन्दृश्यम्># । । PS_४,४.८७ । ।

_______Sठा~ठ्JKव्_४,४.८७ः

निर्देशातेव प्रथमा समर्थविभक्तिः ।
पदशब्दात्प्रथमासमर्थाद्दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्प्रत्ययो भवति ।
पदं दृश्यं अस्मिन्पद्यः कर्दमः ।
पद्याः पांसवः ।

शक्यार्थे कृत्यः ।
शक्यते यस्मिन्पदं मूल्याः, सुष्ठु द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः ।
कर्दमस्य अवस्था+उच्यते नातिद्रवो नातिशुष्क इति । ।

---

1. <मूलं अस्य आवर्हि># । । PS_४,४.८८ । ।

______Sठा-ठ्JKव्_४,४.८८ः

मुल-शब्दात्प्रथमासमर्थादावर्हि इत्येवं उपाधिकादस्य+इति षष्ठ्यर्थे यत्प्रत्ययो भवति ।
मूलं एषां आवर्हि मूल्या माषाः ।
मूल्या मुद्गाः ।
वृहू उद्यमने ।
येषां मूलं आवृह्यते उत्पाट्यते ते मूल्याः, सुष्ठु निष्पन्नाः ।
मूलोत्पाटनेन विना सङ्ग्रहीतुं न शक्यन्ते इत्यर्थः । ।

---

[#४५४]

1. <सञ्ज्ञायां धेनुष्या># । । PS_४,४.८९ । ।

______Sठा-ठ्JKव्_४,४.८९ः

धेनुष्या इति निपात्यते सञ्ज्ञायां विषये ।
सञ्ज्ञा-ग्रहणं अभिधेयनियम-अर्थं ।
धेनोः सुगागमो यश्च प्रत्ययः निपात्यते ।
अन्तोदात्तोऽपि ह्ययं इष्यते ।
या धेनुरुत्तमर्णाय ऋणप्रदानाद्दोहनार्थं दीयते सा धेनुष्या ।
पीतदुग्धा इति यस्याः प्रसिद्धिः ।
धेनुस्यां भवति ददाअमि । ।

---

1. <गृहपतिना संयुक्ते ञ्यः># । । PS_४,४.९० । ।

______Sठा-ठ्JKव्_४,४.९०ः

निर्देशादेव तृतीया समर्थविभक्तिः ।
गृहपति-शब्दात्तृतीयासमर्थात्संयुक्ते इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति ।
गृहपतिना संयुक्तः गार्हपत्योऽग्निः ।
अन्यस्य अपि गृहपतिना संयोगोऽस्ति, तत्र सञ्ज्ञाधिकारादतिप्रसङ्ग-निवृत्तिः । ।

---

1. <नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्य-आनाम्य-सम-समित-संमितेषु># । । PS_४,४.९१ । ।

______Sठा~ठ्JKव्_४,४.९१ः

नावाधिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासङ्ख्यं यत्प्रत्ययो भवति ।
प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते ।
नावा तार्यं नव्यं उदकं ।
नव्या नदी ।
शक्यार्थे कृत्यः ।
वयसा तुल्यः वयस्यः सखा ।
सञ्ज्ञाधिकारोऽभिधेयनियमार्थः ।
तेन वयसा तुल्ये शत्रौ न भवति ।
धर्मेण प्राप्यं धर्म्यं ।
ननु च धर्मादनपेते इति वक्ष्यमाणेन+एव सिद्धं ? न+एतदस्ति ।
धर्मं यदनुवर्तते तद्धर्मादनपेतं इत्युच्यते ।
फलं तु धर्मादपेत्येव, कार्यविरोधित्वाद्धर्मस्य ।
विषेण वध्यः विष्यः ।
विषेण वधं अर्हति इत्यर्थः ।
मूलेन आनाम्यं मूल्यं ।
आनाम्यं अभिभवनीयं ।
पटादीनां उत्पत्तिकारणं मूलं तेन तदभिभूयते शेषीक्रियते ।
मूलं हि सगुणं मुल्यं करोति ।
पोरदुपधात्(*३,१.९८) इति यति प्राप्ते आनाम्यं इति निपातनात्ण्यथ् ।
मूलेन समः मूल्यः पटः ।
उपदानेन समानफलः इत्यर्थः ।
सीतया समितं सीत्यं क्षेत्रं ।
समितं सङ्गतं इत्यर्थः ।
रथसीताहलेभ्यो यद्विधौ इति तदन्तविधिरपि इष्यते ।
परमसीत्यं ।
उत्तरसीत्यं ।
द्विसीत्यं ।
त्रिसीत्यं ।
तुल्या संमितं तुल्यं ।
संमितं समानं, सदृशं इत्यर्थः ।
यथा तुला परिच्छिनत्ति परं एवं तदपि इति । ।

---

1. <धर्म-पथ्य्-अर्थ-न्यायादनपेते># । । PS_४,४.९२ । ।

______Sठाञ्ठ्JKव्_४,४.९२ः
निर्देशादेव पञ्चमी समर्थविभक्तिः ।
धर्मादिभ्यः पञ्चमीसमर्थेभ्योऽनपेतः इत्यर्थे यत्प्रत्ययो भवति ।
धर्मातनपेतं धर्म्यं ।
पथ्यं ।
अर्थ्यं ।
न्याय्यं ।
सञ्ज्ञाधिकारादभिधेयनियमः । ।

---

[#४५५]

1. <छन्दसो निर्मिते># । । PS_४,४.९३ । ।

______Sठाञ्ठ्JKव्_४,४.९३ः

प्रत्ययार्थसामर्थ्यलभ्या समर्थ-विभक्तिः ।
छन्दः-शब्दात्तृतीयासमर्थान्निर्मिते इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
निर्मितः उत्पादितः ।
छन्दसा निर्मितः छन्दस्यः ।
छन्दसा इच्छया कृतः इत्यर्थः ।
इच्छा-पर्याय छन्दः-शब्दः इह गृह्यते । ।

---

1. <उरसोऽण्च># । । PS_४,४.९४ । ।

______Sठाञ्ठ्JKव्_४,४.९४ः

उरःशब्दात्तृतीयासमर्थान्निर्मिते इत्येतस्मिन्नर्थेऽण्प्रत्ययो भवति, चकारात्यत्च ।
उरसा निर्मितः औरसः पुत्रः, उरस्यः पुत्रः ।
सञ्ज्ञाधिकारादभिधेयनियमः । ।

---

1. <हृदयस्य प्रियः># । । PS_४,४.९५ । ।

_______Sठाञ्ठJKव्_४,४.९५ः

निर्देशादेव समर्थविभक्तिः ।
हृदय-शब्दात्षष्ठीसमर्थात्प्रियः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
हृदयस्य प्रियः हृद्यः देशः ।
हृद्यं वनं ।
सञ्ज्ञाधिकारादभिधेयनियमः ।
इह न भवति, हृदयस्य प्रियः पुत्रः इति । ।

---

1. <बन्धने चर्षौ># । । PS_४,४.९६ । ।

_______Sठाञ्ठJKव्_४,४.९६ः

हृदयस्य इत्येव ।
बन्धने इति प्रत्ययार्थः ।
तद्विशेषणं ऋषिग्रहनं ।
वध्यते येन तद्बन्धनं ।
हृदय-शब्दात्षष्ठीसमर्थाद्बन्धने ऋषावभिधेये यत्प्रत्ययो भवति ।
ऋषिर्वेदो गृह्यते ।
हृदयस्य बन्धनं ऋषिः हृद्यः ।
परहृदयं येन बध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्यः इत्युच्यते । ।

---

1. <मतजनहलात्करणजल्पकर्षेषु># । । PS_४,४.९७ । ।

_______Sठाञ्ठJKव्_४,४.९७ः

मतादिभ्यः त्रिभ्यः शब्देभ्यः त्रिष्वेव करणादिष्वर्थेषु यथासङ्ख्यं यत्प्रत्ययो भवति ।
प्रत्ययार्थसामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः ।
मतं ज्ञानं तस्य करणं मत्यं ।
भावसाधनं वा ।
जनस्य जल्पः जन्यः ।

हलस्यः कर्षः हल्यः ।
द्विहल्यः ।
त्रिहल्यः ।
कर्षणं कर्षः, भावसाधनं वा । ।

---

1. <तत्र साधुः># । । PS_४,४.९८ । ।

______Sठा-ठJKव्_४,४.९८ः

तत्र इति सप्तमीसमर्थात्साधुः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
सामसु साधुः सामन्यः ।
वेमन्यः ।
कर्मण्यः ।
शरण्यः ।
साधुः इह प्रवीणो योग्यो वा गृह्यते, न+उपकारकः ।
तत्र हि परत्वात्तस्मै हितं (*५,१.५) इत्यनेन विधिना भवितव्यं । ।

---

[#४५६]

1. <प्रतिजन-आदिभ्यः खञ्># । । PS_४,४.९९ । ।

______Sठा-ठJKव्_४,४.९९ः

प्रतिजनादिभ्यः शब्देभ्यः खञ्प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्नर्थे ।
यतोऽपवादः ।
प्रतिजने साधुः प्रातिजनीनः ।
जने जने साधुः इत्यर्थः ।
ऐदंयुगीनः ।
सांयुगीनः ।
प्रतिजन ।
इदंयुग ।
संयुग ।
समयुग ।
परयुग ।
परकुल ।
परस्यकुल ।
अमुष्यकुल ।
सर्वजन ।

विश्वजन।
पञ्चजन।
महाजन।
प्रतिजनादिः।
यत्र हितार्थ एव साध्वर्थस्तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते। ।

---

1. <भक्ताण्णः># । । PS_४,४.१०० । ।

______Sठाञ्ठ्JKव्_४,४.१००ः

भक्त-शब्दात्णः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये।
यतोऽपवादः।
भक्ते साधुः भक्तः शालिः।
भाक्ताः तण्डुलाः। ।

---

1. <परिषदो ण्यः># । । PS_४,४.१०१ । ।

______Sठाञ्ठ्JKव्_४,४.१०१ः

परिषच्-छब्दाद्ण्यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये।
यतोऽपवादः।
परिषदि साधुः पारिषद्यः।
ण-प्रत्ययोऽप्यत्र+इष्यते।
तदर्थं योगविभागः क्रियते।
परिषदः णो भवति, परिषदि साधुः पारिषदः।
ततः ण्यः।
परिषदः इत्येव। ।

---

1. <कथादिभ्यष्ठक्># । । PS_४,४.१०२ । ।

______Sठाञ्ठ्JKव्_४,४.१०२ः

कथादिभ्यः शब्देभ्यः ठक्प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये।

यतोऽपवादः ।
कथायां साधुः काथिकः ।
वैकथिकः ।
कथा ।
विकथा ।
वितण्डा ।
कुष्टचित् ।
जनवाद ।
जनेवाद ।
वृत्ति ।
सद्गृह ।
गुण ।
गण ।
आयुर्वेद ।
कथादिः । ।

---

1. <गुड-आदिभ्यष्ठञ्># । । PS_४,४.१०३ । ।

_______Sठा-ठ्JKव्_४,४.१०३ः

गुड-आदिभ्यः शब्देभ्यः ठञ्प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये ।
यतोऽपवादः ।
गुडे साधुः गौदिकः इक्षुः ।
कौल्माषिको मुद्गः ।
साक्तुको यवः ।
गुड ।
कुल्माष ।
सक्तु ।
अपूप ।
मांसौदन ।
इअक्षु ।
वेणु सङ्ग्राम ।
सङ्घात ।
प्रवास ।
निवास ।
उपवास ।
गुडादिः । ।

---

1. <पथ्य्-अतिथि-वसति-स्वपतेर्ढञ्># । । PS_४,४.१०४ । ।

_______Sठा-ठ्JKव्_४,४.१०४:

पथ्य्-आदिभ्यः शब्देभ्यः ढञ्प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये।
यतोऽपवादः।
पथि साधु पाथेयं।
आतिथेयं।
वासतेयं।
स्वापतेयं।।

---

[#४५७]

1. <सभायाः यः>#।। PS_४,४.१०५।।

_______Sठा-ठ्JKव्_४,४.१०५:

सभा-शब्दाद्यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये।
यतोऽपवादः।
स्वरे विशेषः।
सभायां साधुः सभ्यः।।

---

1. <ढश्छन्दसि>#।। PS_४,४.१०६।।

_______Sठा-ठ्JKव्_४,४.१०६:

सभा-शब्दाड्ढः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्विषये छन्दसि।
यस्य अपवादः।
सभेयो युवाऽस्य यजमानस्य वीरो जायतां।।

---

1. <समानातीर्थे वासी>#।। PS_४,४.१०७।।

______Sठाञ्ठJKव्_४,४.१०७ः

साधुः इति निवृत्तं ।
वासी इति प्रत्ययार्थः ।
समाअनतीर्थ-शब्दात्तत्र इति सप्तमीसमर्थाद्वासि इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
समानतीर्थे वासी इति सतीर्थ्यः ।
समनोपध्यायः इत्यर्थः ।
तीर्थश्-अब्देन+इह गुरुरुच्यते ।।

---

1. <समान-उदरे शयित ओ चोदात्तः># ।। PS_४,४.१०८ ।।

______Sठाञ्ठJKव्_४,४.१०८ः

समानोदर-शब्दात्सप्तमीसमर्थात्शयितः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, ओकारश्च+उदात्तः ।
शयितः स्थितः इत्यर्थः ।
समानोदरे शयितः समानोदर्यः भ्राता ।।

---

1. <सोदराद्यः># ।। PS_४,४.१०९ ।।

______Sठाञ्ठJKव्_४,४.१०९ः

सोदर-शब्दात्सप्तमीसमर्थात्शयितः इत्येत्स्मिन्नर्थे यः प्रत्ययो भवति ।
विभाषोदरे (*६,३.८८) ।
इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः ।
समानोदरे शयितः सोदर्यः भ्राता ।
ओ च+उदात्तः इति न अनुवर्तते ।
यकारे स्वरः ।।

---

1. <भवे छन्दसि># ।। PS_४,४.११० ।।

______Sठाञ्ठJKव्_४,४.११०ः

तत्र इत्येव ।
स्प्तमीसमर्थात्भव इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति ।
अणादीनां घादीनां चापवादः ।
सति दर्शने तेऽपि भवन्ति, सर्वविधीनां छन्दसि व्यभिचाराथ् ।
नमो मेध्याय च विद्युत्याय च नमः ।
आपादपरिसमाप्तेः छन्दोऽधिकारः ।
भवाधिकारश्च समुद्र-अभ्राद्धः (*४,४.११८) इति यावत् । ।

---

[#४५८]

1. <पाथो-नदीभ्यां ड्यण्># । । PS_४,४.१११ । ।

_______Sठाऱ्ठJKव्_४,४.१११ः

पाथः-शब्दान्नदी-शब्दाच्च ड्यणप्रत्ययो भवति तत्र भवः इत्येतस्मिन्नर्थे ।
यतोऽपवादः ।
पाथसि भवः पाथ्यो वृषा ।
च नो दधीत नाद्यो गिरो मे ।
पाथः अन्तरिक्षं । ।

---

1. <वेशन्त-हिमवद्भ्यां अण्># । । PS_४,४.११२ । ।

_______Sठाऱ्ठJKव्_४,४.११२ः

वेशन्त-शब्दाद्धिमवच्छ-शब्दाच्च अणप्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
यतोऽपवादः वैशन्तीभ्यः स्वाहा ।
हैमवतीभ्यः स्वाहा । ।

---

1. <स्रोतसो विभाषा ड्यड्-ड्यौ># । । PS_४,४.११३ । ।

_______Sठाऱ्ठJKव्_४,४.११३ः

स्रोतः-शब्दाद्विभाषा ड्यत्ड्य इत्येतौ प्रत्ययौ भवतः तत्र भवः इत्येतस्मिन्विषये ।
यतोऽपवादः ।
पक्षे सोऽपि भवति ।
स्रोतसि भवः स्रोत्यः ।
स्रोतस्यः ।
ड्यड्-ड्ययोः स्वरे विशेषः । ।

---

1. <सगर्भ-सयूथ-सनुताद्यन्># । । PS_४,४.११४ । ।

______Sठा~ठ्JKव्_४,४.११४ः

सगर्भ-सयूथ-सनुत-शब्देभ्यो यन्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
यतोऽपवादः ।
स्वरे विशेषः ।
अनु भ्राता सगर्भ्यः ।
अनु सहा सयूथ्यः ।
यो नः सनुत्यः ।
सर्वत्र समानस्य छन्दसि इति सभावः । ।

---

1. <तुग्राद्घन्># । । PS_४,४.११५ । ।

______Sठा~ठ्JKव्_४,४.११५ः

तुग्र-शब्दाद्घन्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
यतोऽपवादः ।
त्वमग्ने वृषभस्तुग्रियाणां ।
अन्नाकाशयज्ञविरिष्ठेषु तुग्रशब्दः । ।

---

1. <अग्राद्यत्># । । PS_४,४.११६ । ।

______Sठा~ठ्JKव्_४,४.११६ः

अग्र-शब्दात्यत्प्रत्ययो भवति तत्र भवः इत्येतस्मिन्विषये ।
अग्रे भवं अग्र्यं ।
किं अर्थं इदं यावता सामान्येन यद्विहित एव ? घच्छौ च (*४,४.११७) इति वक्ष्यति ताभ्यां बाधा मा भूतिति पुनर्विधीयते । ।

---

1. <घ-च्छौ च># । । PS_४,४.११७ । ।

_______Sठा~ठ्JKव्_४,४.११७ः

अग्र-शब्दात्यत्घ-च्छौ च प्रत्यया भवन्ति तत्र भवः इत्येतस्मिन्विषये ।
अग्र्यम्, अग्रियम्, अग्रीयं ।
चकारः तुग्राद्घन्(*४,४.११५) इत्यस्य अनुकर्षण-अर्थः ।
अग्रियं ।
स्वरे विशेषः । ।

---

[#४५९]

1. <समुद्र-अभ्राद्घः># । । PS_४,४.११८ । ।

_______Sठा~ठ्JKव्_४,४.११८ः

समुद्र-शब्दातभ्र-शब्दाच्च घः प्रत्ययो भवति तत्र भवः इत्येतस्मिन्नर्थे ।
यतोऽपवादः ।
समुद्रिया नदीनां ।
अभ्रियस्येव घोषाः ।
अभ्र ।
शब्दस्य अपूर्वनिपातः, तस्य लक्षणस्य व्यभिचारित्वात् । ।

---

1. <बर्हिषि दत्तम्># । । PS_४,४.११९ । ।

_______Sठा~ठ्JKव्_४,४.११९ः

भवः इति निवृत्तं ।

बर्हिः-शब्दात्सप्तमीसमर्थात्दत्तं इत्येतस्मिनर्थे यत्प्रत्ययो भवति।
बर्हिष्येषु निधिसु प्रियेषु।।

---

1. <दुतस्य भाग-कर्मणी># ।। PS_४,४.१२० ।।

_______Sठाञ्ठ्JKव्_४,४.१२०ः

निर्देशादेव समर्थविभक्तिः।
दूत-शब्दात्षष्ठीसमर्थाद्भागे कर्मणि च अभिधेये यत्प्रत्ययो भवति।
भागः अंशः।
कर्म क्रिया।
यदग्ने यासि दूत्यं।
दूतभागः दूतकक्र्म वा।।

---

1. <रक्षो-यातूनां हननी># ।। PS_४,४.१२१ ।।

_______Sठाञ्ठ्JKव्_४,४.१२१ः

निर्देशादेव समर्थविभक्तिः।
रक्षः-शब्दाद्यातु-शब्दाच्च षष्ठीसमर्थाद्हननी इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति।
हन्यतेऽन्या इति हननी।
या वां मित्रावरुणौ रक्षस्या तनू यातव्या।
रक्षसां हननी।
यातूनां हननी।
बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थं।
बहुनां रक्षसां हननेन तनूः स्तूयते।।

---

1. <रेवती-जगती-हविष्याभ्यः प्रशस्ये># ।। PS_४,४.१२२ ।।

_______Sठाञ्ठ्JKव्_४,४.१२२ः

रेवत्य्-आदिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति।

प्रशंसनं प्रशस्यम्, भावे क्यप्प्रत्ययो भवति ।
यद्वो रेवती रेवत्यं ।
यद्वो जगती जगत्यं ।
यद्वो हविष्या हविष्यं ।
हविषे हिता हविष्याः, तासां प्रशंस्नं हविष्यं ।
यस्य+इति च (*६,४.१४८) इति लोपे कृते हलो यमां यमि लोपः (*८,४.६४) इति लोपः । ।

---

1. <असुरस्य स्वम्># । । PS_४,४.१२३ । ।

______Sठा-ठ्JKव्_४,४.१२३ः

असुर-शब्दात्षष्ठीसमर्थात्स्वं इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
अणोऽपवादः ।
असुर्यं वा एतत्पात्रं यत्कुलालकृतं चक्रवृत्तं । ।

---

[#४६०]

1. <मायायां अण्># । । PS_४,४.१२४ । ।

______Sठा-ठ्JKव्_४,४.१२४ः

असुर-शब्दात्षष्ठीसमर्थात्मायायां स्वविशेषे अण्प्रत्ययो भवति ।
पूर्वस्य यतोऽपवादः ।
आसुरी माया स्वधया कृतासि । ।

---

1. <तद्वानासां उपधानो मन्त्र इति इष्टकासु लुक्च मतोः># । । PS_४,४.१२५ । ।

______Sठा-ठ्JKव्_४,४.१२५ः

तद्वानिति निर्देशादेव समर्थविभक्तिः ।
मतुब्-अन्तात्प्रातिपदिकात्प्रथमासमर्थादासां इति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्प्रथमासमर्थं उपधानो मन्त्रश्चेत्स भवति, यत्तदासां इति निर्दिष्टं इष्टकाश्चेत्ता भवन्ति ।
लुक्च मतोः इति प्रकृतिनिर्ह्रासः ।

इतिकरणस्ततश्चेद्विवक्षा ।
तद्वानित्यवयवेन समुदायो व्यपदिश्यते ।
वर्चः-शब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् ।
उपधीयते येन स उपधानः ।
चयनवचनः इत्यर्थः ।
वर्चस्वानुपधानमन्त्रः आसां इष्टकानां इति विगृह्य यति विहिते मतोर्लुकि कृते, वर्चस्या उपदधाति, तेजस्या उपदधाति ।
पयस्याः ।
रेतस्याः ।
तद्वानिति किं ? मन्त्रसमुदायादेव मा भूथ् ।
उपधानः इति किं ? वर्चस्वानुपस्थानमन्त्रः आसां इत्यत्र मा भूथ् ।
मन्त्रः इति किं ? अङ्गुलिमानुपधानो हस्तः आसां इत्यत्र मा भूथ् ।
इष्टकासु इति किं ? अङ्गुलिमानुपधानो हस्त आसां इत्यत्र मा भूथ् ।
इति-करणो नियमार्थः ।
अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते, न सर्वेण । ।

---

1. <अश्विमानण्># । । PS_४,४.१२६ । ।

______Sठा-ठ्JKव्_४,४.१२६ः

अश्वि-शब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान् ।
अश्विमच्छब्दादण्प्रत्ययो भवति ।
पूर्वस्य यतोऽपवादः ।
अश्विमानुपधानो मन्त्रः आसामि ष्टकानां इति विगृह्याण्विधीयते, तत्र मतुपो लुकि कृते इनण्यनपत्ये (*६,४.१६४) इति प्रकृतिभावः ।
आश्विनीरुपदधाति । ।

---

1. <वयस्यासु मूर्ध्नो मतुप्># । । PS_४,४.१२७ । ।

______Sठा-ठ्JKव्_४,४.१२७ः

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप्प्रत्ययो भवति ।
पूर्वस्य यतोऽपवादः ।
यस्मिन्मन्त्रे वयः-शब्दो मूर्धन्-शब्दश्च विद्यते स वयस्वानपि भवति मूर्धन्वानपि, यथा मूर्धा वयः प्रजापतिश्छन्दः इति ।
तत्र वयस्वच्छब्दादिव मूर्धवच्छब्दादपि यति प्राप्ते मतुप्विधास्यते ।
मूर्धन्वतीर्भवन्ति ।
वयस्या एव मूर्धन्वत्यः ।
वयस्यासु इति किं ? यत्र मूर्धन्-शब्द एव केवलो न वयः-शब्दस्न्तत्र मा भूथ् ।
मूर्धन्वतः इति वक्तव्ये मूर्ध्नः इत्युक्तं, मतुपो लुकं भाविनं चित्ते कृत्वा । ।

---

[#४६१]

1. < मत्व्-अर्हे मास-तन्वोः># । । PS_४,४.१२८ । ।

______Sठाग्ठ्JKव्_४,४.१२८ः

यस्मिन्नर्थे मतुब्विहितः, तस्मिन्श्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः प्रत्ययार्थ-विशेषणयोः ।
प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यार्थे सप्तम्यर्थे च यत्प्रत्ययो भवति ।
मत्वर्थीयानां अपवादः ।
नभांसि विद्यन्ते अस्मिन्मासे अभस्यो मासः ।
सहस्यः ।
तपस्यः ।
मधव्यः ।
नभःशदोऽभ्रेषु वर्तते ।
तन्वा खल्वपि - ओजोऽस्यां विद्यते ओजस्या तनूः ।
रक्षस्या तनूः ।
मासतन्वोः इति किं ? मधुमता पात्रेण चरति मासतन्वोरनन्तरार्थे वा ।
मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरं इति वा मध्व्यो मासः ।
लुगकारेकाररेफाश्च वक्तव्याः ।
लुक्तावत्- तपश्च तपस्यश्च ।
नभश्च नभस्यश्च ।
सहश्च सहस्यश्च ।
नपुंसकलिङ्गं छन्दसत्वाथ् ।
अकारः - इषो मासः ।
ऊर्जो मासः ।
इकारः - शुचिर्मासः ।
रेफः - शुक्रो मासः । ।

---

1. <मधोर्ञ च># । । PS_४,४.१२९ । ।

______Sठाग्ठ्JKव्_४,४.१२९ः

मधु-शब्दान्मत्वर्थे ञः प्रत्ययो भवति, चकाराद्यत्च ।
उअप्सङ्ख्यानाल्लुक्च ।
माधवः, मधव्यः, मधुः ।
तन्वां खल्वपि माधवा, मधव्या, मधुः तनूः । ।

---

1. <ओजसोऽहनि यत्खौ># । । PS_४,४.१३० । ।

_______SठाFठJKव्_४,४.१३०ः

मत्वर्थे इत्येव ।
ओजः-शदान्मत्वयर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये ।
ओजस्यमहः ।
ओजसीनमहः । ।

---

1. <वेशो-यश-आदेर्भगाद्यल्># । । PS_४,४.१३१ । ।

_______SठाFठJKव्_४,४.१३१ः

मत्वर्थे इत्येव वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद्वेशोयशाअदेर्भगान्तात्प्रातिपदिकात्मत्वर्थे यल्प्रत्ययो भवति ।
लकारः स्वरार्थः वेशोभगो विद्यते यस्य स वेशोभग्यः ।
यशोभग्यः ।
वेशः इति वलं उच्यते ।
श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः ।
वेशश्च असौ भगश्च श्रीप्रभृतिर्वेशोभगः, सोऽस्य अस्ति इति वेशोभग्यः । ।

---

[#४६२]

1. <ख च># । । PS_४,४.१३२ । ।

_______SठाFठJKव्_४,४.१३२ः

वेशोयशाअदेर्भगान्तात्प्रातिपदिकात्मत्वर्थे खः प्रत्ययो भवति ।
योगविभागो यथासङ्ख्यनिरासार्थः उत्तरार्थश्च ।
चकारात्यथ् ।
वेशोभगीनः, वेशोभग्यः ।
यशोभगीनः, यशोभग्यः । ।

1. <पूर्वैः कृतं इन-यौ च># । । PS_४,४.१३३ । ।

_______Sठाऱ्ठJKव्_४,४.१३३ः

मत्वर्थे इति निवृत्तं ।
निर्देशादेव समर्थविभक्तिः ।
पूर्वशब्दात्तृतीयासमर्थात्कृतं इत्येतस्मिन्नर्थे इन य इत्येतौ प्रत्ययौ भवतः ।
चकारात्ख च ।
गम्भीरेभिः प्रथिभिः पूर्विणेभिः ।
पूर्व्यैः ।
पूर्वीणैः ।
पूर्वैः इति बहुवचनान्तेन पूर्वपुरुषाः उच्यन्ते ।
तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा । ।

---

1. <अद्भिः संस्कृतम्># । । PS_४,४.१३४ । ।

_______Sठाऱ्ठJKव्_४,४.१३४ः
निर्देशादेव समर्थविभक्तिः ।
अप्-शब्दात्तृतीयासमर्थात्संस्कृतं इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ।
यस्य+इदं अप्यं हविः ।
अद्भिः संस्कृतं इति । ।

---

1. <सहस्रेण संमितौ घः># । । PS_४,४.१३५ । ।

_______Sठाऱ्ठJKव्_४,४.१३५ः

निर्देशादेव समर्थविभक्तिअः ।
सहस्र-शब्दात्तृतीयासमर्थात्सम्मित इत्येतस्मिन्नर्थे घः प्रत्ययो भवति ।
सम्मितः तुल्यः, सदृशः ।
अयम ग्निः सहस्रियः ।
सहस्रतुल्यः इत्यर्थः ।
केचित्तु समितौ इति पठन्ति ।
तत्र अपि समित्या सम्मितः एव लक्षयितव्यः ।

तत्र छन्दसि प्रयोगदर्शनात् । ।

---

1. <मतौ च># । । PS_४,४.१३६ । ।

_______Sठान्ठ्JKव्_४,४.१३६ः

मत्वर्थे च सहस्र-शब्दात्घः प्रत्ययो भवति ।
सहस्रं अस्य विद्यते सहस्रियः ।
तपः-सहस्राभ्यां विनि-इनी (*५,२.१०२), अण्च (*५,२.१०३) इत्यस्य अपवादः । ।

---

1. <सोमं अर्हति यः># । । PS_४,४.१३७ । ।

_______Sठान्ठ्JKव्_४,४.१३७ः

निर्देशादेव समर्थविभक्तिः ।
सोम-शब्दात्द्वितीयासमर्थातर्हति इत्येतस्मिन्नर्थे यः प्रत्ययो भवति ।
सोमं अर्हन्ति सोम्या ब्राह्मणाः ।
यज्ञार्हाः इत्यर्थः ।
यति प्रकृते य-ग्रहणं ।
स्वरे विशेषः । ।

---

[#४६३]

1. <मये च># । । PS_४,४.१३८ । ।

_______Sठान्ठ्JKव्_४,४.१३८ः

सोम-ग्रहणं यश्च अनुवर्तते ।
मय इति मयडर्थो लक्ष्यते ।
सोम-शब्दान्मयडर्थे यः प्रत्ययो भवति ।
आगतविकारावयवप्रकृता मयडर्थाः ।
हेतुं अनुष्येभ्योऽन्यत्रस्यां रूप्यः (*४,३.८१) मयट्च (*४,३.८२), मयड्-वा+एतयोर्भाषायां अभक्ष्य आच्छादनयोः (*४,३.१४३), तत्प्रकृतवचने मयट्(*५,४.२१) इति ।

तत्र यथायोगं समर्थविभक्तिः ।
पिबाति सोम्यं मधु ।
सोमं अयं इत्यर्थः । ।

---

1. <मधोः># । । PS_४,४.१३९ । ।

______Sठाङ्JKव्_४,४.१३९ः

यशब्दो निवृत्तः ।
मधु-शब्दान्मयडर्थे यत्प्रत्ययो भवति ।
मधव्यान्स्तोकान् ।
मधुमयानित्यर्थः । ।

---

1. <वसोः समूहे च># । । PS_४,४.१४० । ।

______Sठाङ्JKव्_४,४.१४०ः

वसु-शब्दात्समूहे वाच्ये यत्प्रत्ययो भवति, चकारान्मयडर्थे च ।
यथायोगं समर्थविभक्तिः ।
वसव्यः समूहः ।
मयडर्थो वा ।
अक्षरसमूहे छन्दसः स्वार्थ उपसङ्ख्यानं ।
ओ श्रावय इति चतुरक्षरं ।
अस्तु श्रौषटिति चतुरक्षरं ।
यज इति द्व्यक्षरं ।
ये यजामहे इति पञ्चाक्षरं ।
द्व्यक्षरो वषट्कारः ।
एश वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिरंर्यज्ञो मन्त्रे विहितः ।
सप्तदशाक्षराण्येव छन्दस्यः इत्यर्थः ।
छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यत्प्रत्ययः ।
वसुशब्दादपि यद्वक्तव्यः ।
हस्तो पृणस्व बहुभिर्वसव्यैः ।
वसुभिः इत्यर्थः ।
आग्निराशे वसव्यस्य ।
वसोः इत्यर्थः । ।

---

1. <नक्षत्राद्घः># । । PS_४,४.१४१ । ।

______Sठाञ्ठ्JKव्_४,४.१४१ः

नक्षत्र-शब्दाद्घः प्रत्ययो भवति स्वार्थे ।
समूहे इति न अनुवर्तते ।
नक्षत्रियेभ्यः स्वाहा । ।

---

1. <सर्वदेवात्तातिल्># । । PS_४,४.१४२ । ।

______Sठाञ्ठ्JKव्_४,४.१४२ः

सर्वदेव-शब्दाभ्यां तातिल्प्रत्ययो भवति छन्दसि विषये स्वार्थिकः ।
सर्वतातिं ।
देवतातिं । ।

---

[#४६४]

1. <शिव-शम्-अरिष्टस्य करे># । । PS_४,४.१४३ । ।

______Sठाञ्ठ्JKव्_४,४.१४३ः

करोति इति करः प्रत्ययार्थः ।
तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः ।
शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः करे इत्येतस्मिन्नर्थे तातिल्प्रत्ययो भवति ।
शिवं करोति इति शिवतातिः ।
शंतातिः ।
अरिष्टतातिः । ।

---

1. <भावे च># । । PS_४,४.१४४ । ।

_______Sठाञ्ठ्JKव्_४,४.१४४ः

भावे चार्थे छन्दसि विषये शिवादिभ्यः तातिल्प्रत्ययो भवति ।
शिवस्य भावः शिवतातिः ।
शंतातिः ।
श्रिष्टतातिः ।
यतः पूर्णोऽवधिः ।
अतः परमन्यः प्रत्ययोऽधिक्रियते ।।
इति श्रिजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ।।
प्रथमो भागः समाप्तः

पञ्चमोऽध्यायः प्रथमः पादः ।

---

1. <प्राक्-क्रीताच्छः># । । PS_५,१.१ । ।

_______Sठा~ठ्JKव्_५,१.१ः

तेन क्रीतं (*५,१.३७) इति वक्ष्यति ।
प्रागेतस्मात्क्रीत-संशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः छ-प्रत्ययस्तेष्वधिकृतो वेदितव्यः ।
वक्ष्यति तस्मै हितं (*५,१.५) इति ।
वत्सेभ्यो हितः वत्सीयो गोधुक् ।
करभीयः उष्ट्रः ।
अकरभीयः ।
अवत्सीयः ।
अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः ।
तेन प्राक्ठञः छनः इति नोक्तं । ।

---

1. <उ-गवादिभ्यो यत्># । । PS_५,१.२ । ।

_______Sठा~ठ्JKव्_५,१.२ः

प्राक्क्रीतातित्येव ।
उ-वर्णान्तात्प्रातिपदिकात्गव-आदिभ्यश्च यत्प्रत्ययो भवति प्राक्-क्रीतियेष्वर्थेषु ।
छस्य अपवादः ।
शङ्कव्यं दारु ।
पिचव्यः कार्पासः ।
कमण्डलव्या मृत्तिका ।
गवादिभ्यः खल्वपि - गव्यं ।
हविष्यं ।
सनङ्गुर्नाम चर्मविकारः ।
ततः परत्वात्चर्मणोऽञ्(*५,१.१५) इत्येष विधिः प्राप्नोति ।
तथा चरुर्नाम हविः, सक्तुरन्नविकारः ।
अपूपादिषु अन्नविकारेभ्यश्च इति पठ्यते ।
ततो विभाषा हविर्-अपूप-आदिभ्यश्च (*५,१.३) इत्येष विधिः प्राप्नोति ।
तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्-प्रत्ययेव+इष्यते, सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धानाः इति ।
गवादिषु नाभि नभ च इति पठ्यते ।
तस्य अयं अर्थः ।
नाभि-शब्दो यत्-प्रत्ययं उत्पादयति नभं चादेशं आपद्यते इति ।

नाभये हितः नभ्योऽक्षः ।
नभ्यमञ्जनं ।
यस्तु शरीर-अवयवाद्यत्(*५,१.६) इति यति कृते, नाभये हितं नाभ्यं तैलं इति भवितव्यं ।
गव-आदिषु यता सन्नियुक्तो नभभावोऽत्र न भवति ।
गो ।
हविस् ।
वर्हिष् ।
खट ।
अष्टका ।
युग ।
मेधा ।
स्रक् ।
नाभि नभं च ।
शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सनियोगेन चान्तोदात्तत्वं ।
शुन्यं, शून्यं ।
चकारस्य अनुक्त-समुच्चय-अर्थत्वात्नस्तद्धिते इति लोपो न स्याथ् ।
ऊधसोऽनङ्च ।
ऊधन्यः कूपः ।
खर ।
स्खद ।
अक्षर ।
विष ।
गवादिः । ।

---

[#४६६]

1. <कंवलाच्च सञ्ज्ञायाम्># । । PS_५,१.३ । ।

_______Sठाञ्ठJKव्_५,१.३ः

कम्बलात्प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति सञ्ज्ञायां विषये ।
छस्य अपवादः ।
कम्बल्यं ऊर्णापलशतं ।
सञ्ज्ञायां इति किं ? कम्बलीया ऊर्णा । ।

---

1. <विभाषा हविर्-अपूप-आदिभ्यः># । । PS_५,१.४ । ।

_______Sठाञ्ठJKव्_५,१.४ः

हविर्-विशेष-वाचिभ्योऽपूप-आदिभ्यश्च प्रातिपदिकेभ्यः प्रक्क्रीतीयेष्वर्थेषु विभाषा यत्प्रत्ययो भवति।
आमिक्ष्यं दधि, आमिक्षीयं दधि।
पुरोडाश्यास्तण्डुलाः, पूरोडाशीयाः।
हविश्शब्दात्तु गवादिषु पठान्नित्यं एव भवति।
अपूपादिभ्यः - अपूप्यम्, अपूपीयं।
तण्डुल्यम्, तण्डुलीयं।
अपूप।
तण्डुल।
अभ्यूष।
अभ्योष।
पृथुक।
अभ्येष।
अर्गल।
मुसल।
सूप।
कटक।
कर्णवेष्टक।
किण्व।
अन्नविकारेभ्यः।
पूप।
स्थूणा।
पीप।
अश्व।
पत्र।
अपूपादिः।।

---

1. <तस्मै हितम्>#।। PS_५,१.५।।

_______Sठान्ठJKव्_५,१.५ः

तस्मै इति चतुर्थी-समर्थाद्हतं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति।
वत्सेभ्यो हितो गोधुक्वत्सीयः।
अवत्सीयः।
पटव्यं।
गव्यं।
हविष्यं।
अपूप्यं।
अपूपीयं।।

---

1. <शरीर-अवयवाद्यत्># । । PS_५,१.६ । ।

______Sठा~ठ्JKव्_५,१.६ः

शरीर प्राणिकायः ।
शरीर-अवयव-वाचिनः प्रातिपदिकात्यत्प्रत्ययो भवति तस्मै हितं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
दन्त्यं ।
कण्ठ्यं ।
ओष्ठ्यं ।
नाभ्यं ।
नस्यं । ।

---

1. <खल-यव-माष-तिल-वृष-ब्रह्मणश्च># । । PS_५,१.७ । ।

______Sठा~ठ्JKव्_५,१.७ः

खल-आदिभ्यो यत्प्रत्ययो भवति तस्मै हितं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
खलाय हितं खल्यं ।
यव्यं ।
माष्यं ।
तिल्यं ।
वृष्यं ।
ब्रह्मण्यं ।
वृष्णे हितम्, ब्राह्मणेभ्यो हितं इति वाक्यं एव भवति ।
छ-प्रत्ययोऽपि न भवति, अनभिधानाथ् ।
चकारोऽनुक्त-समुच्चय-अर्थः ।
रथाय हिता रथ्या । ।

---

[#४६७]

1. <अजाविभ्यां थ्यन्># । । PS_५,१.८ । ।

______Sठा~ठ्JKव्_५,१.८ः

अज अवि इत्येताभ्यां थ्यन्प्रत्ययो भवति तस्मै हितं इत्येतस्मिन्विषये ।

छस्य अपवादः ।

[#४६९]

अजथ्या यूथिः ।
अविथ्या । ।

---

[#४६७]

1. <आत्मन्-विश्वजन-भोग-उत्तरपदात्खः># । । PS_५,१.९ । ।

______Sठाञ्ठJKव्_५,१.९ः

आत्मन्विश्वजन इत्येताभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्खः प्रत्ययो भवति तस्मै हितं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
आत्मन्निति नलोपो न कृतः प्रकृति-परिमाण-ज्ञापन-अर्थं ।
तेन+उत्तरपद-ग्रहणं भोग-शब्देन+एव सम्बध्यते, न तु प्रत्येकं ।
आत्मने हितं आत्मनीनं ।
आत्म-अध्वानौ खे (*६,४.१६९) इति प्रकृतिभावः ।
विश्वजनेभ्यो हितं विश्वजनीनं ।
कर्मधारयादेव+इष्यते ।
षष्ठी-समासाद्बहुव्रीहेश्च छ एव भवति ।
विश्वजनाय हितं विश्वजनीयं ।
पञ्चजनादुपसङ्ख्यानं ।
पञ्चजनाच्च खः ।
अत्र अपि कर्मधारयादिष्यते ।
पञ्चजनीनं ।
अन्यत्र पञ्चजनीयं ।
सर्वजानाट्ठञ्खश्च ।
सार्वजनिकम्, सर्वजनीनं ।
अत्र अपि कर्मधारयादेव ।
सर्वजनीयं अन्यत्र ।
महाजनान्नित्यं ठञ्वक्तव्यः ।
महाजनाय हितं माहाजनिकं ।
तत्पुरुषादेव ।
बहुव्रीहेस्तु छ एव भवति ।
महाजनीयं ।
भोगोत्तरपदात्खल्वपि - मातृभोगीणः ।
पितृभोगीणः ।
भोग-शब्दः शरीर-वाची ।
केवलेभ्यो मात्रादिभ्यः छ एव भवति ।
मात्रीयं ।
पितिरियं ।
राजाचार्याभ्यां तु नित्यं ।

भोगोत्तरपदाभ्यं एव खः प्रत्ययः इष्यते, न केवलाभ्यां ।
राजभोगीनः ।
आचार्यादणत्वं च ।
आचार्यभोगीनः ।
केवलाभ्यां वाक्यं एव भवति, राज्ञे हितम्, आचार्याय हितं इति । ।

---

[#४६८]

1. <सर्व-पुरुषाभ्यां ण-ढञौ># । । PS_५,१.१० । ।

_______Sठाऽठ्JKव्_५,१.१०:

सर्व-पुरुषाभ्यां यथासङ्ख्यं णडञौ प्रत्ययौ भवतः तस्मै हितं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
सर्वस्मै हितं सार्वं ।
पौरुषेयं ।
सर्वाण्णस्य वा वचनं ।
सार्वम्, सर्वीयं ।
पुरुषाद्वधविकारसमूहतेन कृतेष्विति वक्तव्यं ।
पौरुषेयो वधः, पौरुषेयो विकारः, पौरुषेयः समूहो वा ।
तेन कृते पौरुषेयो ग्रन्थः । ।

---

1. <माणव-चरकाभ्यां खञ्># । । PS_५,१.११ । ।

_______Sठाऽठ्JKव्_५,१.११:

माणवचरक-शब्दाभ्यां खञ्प्रत्ययो भवति तस्मै हितं इत्येतस्मिन्विषये ।
छस्य अपवादः ।
माणवाय हितं माणवीनं ।
चारकीणं । ।

---

1. <तद्-अर्थं विकृतेः प्रकृतौ># । । PS_५,१.१२ । ।

______Sठाऽ्ठJKव्_५,१.१२ः

प्रकृतिः उपादानकारणं, तस्य+एव उत्तरं अवस्थान्तरं विकृतिः ।
विकृति-वाचिनः प्रातिपादिकात्प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति ।
तदर्थं इति प्रत्ययार्थ-विशेषणं ।
तदिति सर्वनाम्ना विकृतिः परामृश्यते ।
विकृत्यर्थायां प्रकृतौ प्रत्ययः ।
तदर्थ-ग्रहणेन प्रकृतेरनन्यार्थता आख्यायते ।
न प्रकृतिविकार-सम्भवं आत्रे प्रत्ययः, किं तर्हि, प्रकृतेरनन्यार्थत्वे विवक्षिते ।
प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः ।
केचित्तु तस्मै हितं (*५,१.५) इत्यनुवर्तयन्ति ।
अङ्गारेभ्यो हितानि एतानि काष्ठानि अङ्गारीयाणि काष्ठानि ।
प्राकारीया इष्टकाः ।
शङ्कव्यं दारु ।
पिचव्यः कार्पासः ।
तदर्थं इति किं ? यवानां धानाः ।
धानानां सक्तवः ।
प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता न तादर्थ्यं धानानां सक्तवः, न लाजानां इति ।
विकृतेः इति किं ? उदकार्थः कूपः ।
विकृति-ग्रहणेऽक्रियमाणे या काचित्प्रक्रितिर्गृह्यते, न+उपादानकारणं एव ।
भवति च कूप उदकस्य प्रकृतिः, तत्र+उत्पादनाथ् ।
न तु उदकं तस्यः विकृतिः, अत्यन्तभेदात्प्रकृतौ इति किं ? अस्यर्था कोशी ।
असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृतिर्भवति ।
द्वयोरपि प्रकृति-विकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते । ।

---

[#४६९]

1. <छदिर्-उपधि-बलेर्ढञ्># । । PS_५,१.१३ । ।

______Sठाऽ्ठJKव्_५,१.१३ः

छदिर्-आदिभ्यः शब्देभ्यः ढञ्प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ (*५,१.१२) इत्येतस्मिन्विषये ।
छस्य अपवादः ।
छादिषेयाणि तृणानि ।
औपधेयं दारु ।
बालेयास्तण्डुलाः ।
उपधि-शब्दात्स्वार्थे प्रत्ययः ।
उपधीयते इति उपधिः रथाङ्गं औपधेयं अपि तदेव दारु । ।

---

1. <ऋषभ-उपानहोर्ञ्यः># । । PS_५,१.१४ । ।

_______Sठाञ्ठJKव्_५,१.१४ः

ऋषभ उपानः इत्य्रथाङ्गं औपधेयं अपि एताभ्यां ञ्यः प्रत्ययो भवति तदर्थं विकृटेः प्रकृतौ (*५,१.१२) इत्येतस्मिन्विषये ।
छस्य अपवादः ।
आर्षभ्यो वत्सः ।
औपानह्यो मुञ्जः ।
चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयं एव+इष्यते ।
औपानह्यं चर्म । ।

---

1. <चर्मणोऽञ्># । । PS_५,१.१५ । ।

_______Sठाञ्ठJKव्_५,१.१५ः

चर्मणः इति षष्ठी ।
चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकातञ्प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ (*५,१.१२) इत्येतस्मिन्विषये ।
छस्य अपवादः ।
वार्ध्रं चर्म ।
वारत्रं चर्म । ।

---

1. <तदस्य तदस्मिन्स्यादिति># । । PS_५,१.१६ । ।

_______Sठाञ्ठJKव्_५,१.१६ः

तदिति प्रथमा समर्थविभक्तिः, अस्य इति प्रत्ययार्थः, स्यातिति प्रकृतिविशेषणं ।
इति-करणो विवक्षार्थः ।
एवं द्वितीयेऽपि वाक्ये ।
सप्तम्य्-अर्थे तु प्रत्यय इत्येतावान्विशेषः ।
प्रथमासमर्थात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं स्याच्चेत्तद्भवति ।
इति-करणः ततश्चेद्विवक्षा ।
प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः ।
प्रासादीयं दारु ।

सप्तम्यर्थे खल्वपि - प्राकारोऽस्मिन्देशे स्यात्प्राकारीयो देशः ।
प्रासादीया भूमिः ।
स्यादिति सम्भावनायां लिङ्, सम्भावनेऽलं इति चेदित्यादिना ।
इष्टकानां वहुत्वेन तत्सम्भाव्यते प्राकार आसामिष्टकानां स्यातिति ।
देशस्य च गुणेन सम्भाव्यते प्रासादोऽस्मिन्देशे स्यातिति ।
प्रकृतिविकारभावस्तादर्थ्यं च+इह न विवक्षितं ।
किं तर्हि, योग्यतामात्रं ।
तेन पूर्वस्य अयं अविषयः ।
द्विस्तद्-ग्रहणं न्याय-प्रदर्शनार्थम्, अनेकस्मिन्प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीया इति ।
अथ+इह कस्मान्न भवति, प्रासादो देवदत्तस्य स्यातिति ? गुणवानयं सम्भाव्यते प्रासादलाभोऽस्य इति ।
इति-करणो विवक्षार्थः इत्युक्तं । ।

---

[#४७०]

1. <परिखाया ठञ्># । । PS_५,१.१७ । ।

_______Sठाऽठ्JKव्_५,१.१७:

परिखाश्-अब्दात्ढञ्प्रत्ययो भवति तदस्य तदस्मिन्स्यात्(*५,१.१६) इत्येतस्मिन्नर्थे ।
छस्य अपवादः ।
पारिखेयी भूमिः ।
छयतोः पूर्णोऽवधिः ।
इतः परमन्यः प्रत्ययो विधीयते । ।

---

1. <प्राग्-वतेष्ठञ्># । । PS_५,१.१८ । ।

_______Sठाऽठ्JKव्_५,१.१८:

तेन तुल्यं क्रिया चेद्वतिः (*५,१.११५) इति वक्ष्यति ।
प्रागेतस्माद्वतिसं-शब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः ठञ्प्रत्ययस्तेष्वधिकृतो विदितव्यः ।
वक्ष्यति - पारायणतुरायणचान्द्रायणं वर्तयति ।
पारायणिकः ।
तौरायणिकः ।
चान्द्रायणिकः । ।

---

1. <आ-अर्हाद-गोपुच्छ-सङ्ख्या-परिमाणाट्ठक्># । । PS_५,१.१९ । ।

______Sठा~ठ्JKव्_५,१.१९ः

तदर्हति (*५,१.६३) इति वक्ष्यति ।
आ एतस्मादर्हसंशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः ठक्प्रत्ययस्तेष्वधिकृतो वेदितव्यः, गोपुच्छादीन्वर्जयित्वा ।
अभिविधावयं आकारः, तेन अर्हत्यर्थोऽपि ठक्भवत्येव ।
ठञ्-अधिकारं अध्ये तदपवादः ठग्विधीयते ।
वक्ष्यति - तेन क्रीतं (*५,१.३७) ।
नैष्किकं ।
पाणिकं ।
अगोपुच्छसङ्ख्यापरिमाणातिति किं ? गोपुच्छेन क्रीतं गौपुच्छिकं ।
सङ्ख्या - षाष्टिकं ।
परिमाण - प्रास्थिकं ।
कौडविकं ।
ठञ्प्रत्युदाह्रियते ।
सङ्ख्यापरिमाणयोः को विशेषः ? भेदगणनं सङ्ख्या एकत्वादिः ।
गुरुत्वमानं उन्मानं पलादि ।
आयाममानं प्रमाणं वितस्त्यादि ।
आरोहपरिणाहमानं परिमाणं प्रस्थादि ।
ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्या तु सर्वतः । ।

---

1. <असमासे निष्क-आदिभ्यः># । । PS_५,१.२० । ।

______Sठा~ठ्JKव्_५,१.२०ः

आर्हातित्येव ।
विष्कादिभ्यः शब्देभ्योऽसमासे ठक्प्रत्ययो भवति आर्हीयेष्वर्थेषु ।
ठञोऽपवादः ।
नैष्किकं ।
पाणिकं ।
पादिकं ।
माषिकं ।
असमासे इति किं ? परमनैष्किकं ।
उत्तमनैष्किकं ।
ठजेव भवति, अरिमाणान्तस्य इत्युत्तरपदवृद्धिः ।
अथ किमर्थं असमासे इत्युच्यते यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ? निष्कादिष्वसमास-ग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य ।
उगवादिभ्यो यत्(*५,१.२) - गव्यम्, सुगव्यम्, अतिसुगव्यं विभाषा हविर्-अपूपादिभ्यः (*५,१.४) - अपूप्यम्, अपूपीयम्, यवापूप्यम्, यवापूपीयं ।

[#४७१]

शरीर-अवयवाद्यत्(*५,२.६) - दन्त्यम्, राजदन्त्यं इत्येवमादि सिध्दं भवति ।
इत उत्तरं च सङ्ख्यापूर्वपदानां तदन्तविधिरिष्यते ।
पारायण-तुरायण-चान्द्रायणं वर्तयति (*५,१.७२) - द्वैपारायणिकः, त्रैपारायणिकः ।
लुगन्तायाः तु प्रकृतेर्न+इष्यते ।
द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं ।
त्रिशूर्पं ।
द्विशूर्पेण क्रीतं इति तदन्तविधि-प्रतिषेधात्शूर्पादञन्यत्रस्यां (*५,१.२६) इति अञ्न भवति ।
सामान्यविहितष्ठञेव भवति ।
द्विशौर्पिकं ।
ठञो द्विगुं प्रत्यनिमित्ताल्लुगभावः ।
तथा च+उक्तम्, प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्त्-अग्रहणं अलुकि इति ।
निष्क ।
पण ।
पाद ।
माष ।
वाह ।
द्रोण ।
षष्ति ।
निष्कादिः । ।

---

1. <शताच्च ठन्यतावशते># । । PS_५,१.२१ । ।

______Sठा~ठ्JKव्_५,१.२१ः

आर्हातित्येव ।
शत-शब्दात्ठन्यतौ प्रत्ययौ भवतः अशतेऽधिधेये आर्हीयेष्वर्थेषु ।
कनोऽपवादः ।
शतेन क्रीतं शतिकम्, शत्यं ।
अशते इति किं ? शतं परिमाणं अस्य शतकं निदानं ।
प्रत्ययार्थोऽत्र सङ्घः ।
शतं एव वस्तुतः प्रकृत्यर्थान्न भिद्यते ।
इह तु न भवति, शतेन क्रीतं शत्यं शाटकशतम्, शतिकं शाटकशतं इति ।
वाक्येन ह्यत्र प्रत्यय-अर्थस्य तत्त्वं गम्यते, न श्रुत्या ।
तथा च+उक्तम्, शतप्रतिशेधेऽन्यशतत्वेऽप्रतिषेधः इति ।
चकारोऽसमास इत्यनुकर्षण-अर्थः ।
द्वौ च शतं च द्विशतं, द्विशतेन क्रीतं द्विशतकं ।
त्रिशतकं ।
प्राग्वतेः सङ्ख्या-पूर्वपदानां तदन्तग्रहणं अलुकि इत्यनया इष्ट्या समासादपि प्राप्नोति । ।

---

1. <सङ्ख्याया अति-शद्-अन्तायाः कन्># । । PS_५,१.२२ । ।

_______Sठाञ्ठJKव्_५,१.२२ः

आर्हातित्येव ।
सङ्ख्याया अत्य्-अन्ताया अशद्-अन्तायाश्च कन्प्रत्ययो भवति आर्हीयेषु अर्थेषु ।
ठञोऽपवादः ।
पञ्चभिः क्रीतः पञ्चकः पटः ।
बहुकः ।
गणकः ।
अतिशदन्तायाः इति किं ? साप्ततिकः ।
चात्वारिंशत्कः ।
अर्थवतस्तिशब्दस्य ग्रहणाड्डतेः पर्युदासो न भवति, कतिकः । ।

---

1. <वतोरिड्वा># । । PS_५,१.२३ । ।

_______Sठाञ्ठJKव्_५,१.२३ः

वत्वन्तस्य सङ्ख्यात्वात्कन्सिद्ध एव, तस्य त्वनेन वा इड्-आगमो विधीयते ।
वतोः परस्य अनो वा इड्-आगमो भवति आर्हीयेष्वर्थेषु ।
तावतिकः, तावत्कः ।
यावतिकः, यावत्कः । ।

---

[#४७२]

1. <विंशति-त्रिंशद्भ्यां ड्वुनसञ्ज्ञायाम्># । । PS_५,१.२४ । ।

_______Sठाञ्ठJKव्_५,१.२४ः

विंशति-त्रिंशद्भ्यां ड्वुन्प्रत्ययो भवति असञ्ज्ञायां विषये आर्हीयेष्वर्थेषु ।
विंशकः ।
त्रिंशकः ।
ति विंशतेर्डिति (*६,४.१४२) इति तिलोपः ।
असञ्ज्ञायां इति किं ? विंशतिकः ।
त्रिंशत्कः ।
कथं पुनरत्र कन्, यावता अतिशदन्तायाः इति पर्युदासेन भवितव्यं ? योगविभागः करिष्यते, विंशति-त्रिंशद्भ्यां कन्प्रत्ययो भवति, ततो ड्वुनसञ्ज्ञायां इति । ।

---

1. <कंसाट्टिठण्># । । PS_५,१.२५ । ।

_______Sठा~ठ्JKव्_५,१.२५ः

कंसाट्टिठन्प्रत्ययो भवति आर्हीयेष्वर्थेषु ।
ठञोऽपवादः ।
टकारो ङीब्-अर्थः ।
इकार उच्चारण-अर्थः ।
नकारः स्वर-अर्थः ।
कंसिकः ।
कंसिकी ।
अर्धाच्च+इति वक्तव्यं ।
अर्धिकः ।
अर्धिकी ।
कार्षापणाट्टिठन्वक्तव्यः ।
कार्षापणिकः ।
कार्षापणिकी ।
प्रतिशब्दश्च अस्य आदेशो वा वक्तव्यः ।
प्रतिकः ।
प्रतिकी । ।

---

1. <शूर्पादञन्यतरस्याम्># । । PS_५,१.२६ । ।

_______Sठा~ठ्JKव्_५,१.२६ः

शूर्प-शब्दादन्यतरस्यां अञ्प्रत्ययो भवति आर्हीयेष्वर्थेषु ।
ठञोऽपवादः ।
पक्षे सोऽपि भवति ।
शूर्पेण क्रीतं शौर्पम्, शौर्पिकं । ।

---

1. <शतमान-विंशतिक-सहस्र-वसनादण्># । । PS_५,१.२७ । ।

_______Sठा~ठ्JKव्_५,१.२७ः

शतमानादिभ्यः शब्देभ्यः अण्प्रत्ययो भवति आर्हीयेष्वर्थेषु।
ठक्-ठञोरपवादः।
शतमानेन क्रीतं शातमानं शतं।
वैशतिकं।
साहस्रं।
वासनं।।

---

[#४७३]

1. <अध्यर्धपूर्व-द्विगोर्लुगसञ्ज्ञायाम्>#।। PS_५,१.२८।।

_______Sठा~ठ्JKव्_५,१.२८ः

आर्हातित्येव।
अध्यर्ध-शब्दः पूर्वो यस्मिन्तस्मादध्यर्धपूर्वात्प्रातिपदिकद्द्विगोश्च परस्य आर्हीयस्य लुग्भवति असञ्ज्ञायां इति किं? पाञ्चलोहितिकं।
पाञ्चकलापिकं।
लोहिनी-शब्दस्य भस्याढे तद्धिते इति पुंवद्भावः।
प्रत्ययान्तस्य विशेषणं असञ्ज्ञा-ग्रहणं न चेत्प्रत्ययान्तं सञ्ज्ञा इति।
अध्यर्ध-शब्दः सङ्ख्या+एव, किमर्थं भेदेन+उपादीयते? ज्ञापकार्थं, क्वचिदस्य सङ्ख्याकार्यं न भवति, सङ्ख्यायाः क्रिया-अभ्यावृत्तिगणने कृत्वसुच्(*५,४.१७) इति।।

---

1. <विभाषा कार्षापण-सहस्राभ्याम्>#।। PS_५,१.२९।।

_______Sठा~ठ्JKव्_५,१.२९ः

अध्यर्धपूर्वाद्द्विगोश्च कार्षापण-सहस्रान्तातुत्तरस्य आर्हीय-प्रत्ययस्य विभाषा लुग्भवति।
पूर्वेण लुकि नित्य प्राप्ते विकल्प्यते।
अध्यर्धकार्षापणम्, अध्यर्धकार्शापणिकं।
द्विकार्षापणम्, द्विकार्षापणिकं।
औपसङ्ख्यानिकस्य टिठनो लुक्।
अलुक्पक्षे च प्रतिरादेशो विकल्पितः।
अध्यर्धप्रतिकं।
द्विप्रतिकं।
त्रिप्रतिकं।

सहस्रात्- अध्यर्धसहस्रम्, अध्यर्धसाहस्रं ।
द्विसहस्रम्, द्विसाहस्रं ।
अलुक्पक्षे सङ्ख्यायाः संवत्सर-सङ्ख्यस्य च इत्युत्तरपदवृद्धिः ।
सौवर्णशतमानयोरुपसङ्ख्यानं ।
अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकं ।
द्विसुवर्णम्, द्विसौवर्णिकं ।
अध्यर्धशतमानम्, अध्यर्धशातमानं ।
द्विशतमानम्, द्विशातमानं ।
परिमाणान्तस्य इत्युत्तरपदवृद्धिः ।।

---

1. <द्वि-त्रि-पूर्वान्निष्कात्># ।। PS_५,१.३० ।।

______Sठाऽ्JKव्_५,१.३०ः

द्विगोः इत्येव ।
द्वित्रिपूर्वाद्द्विगोर्निष्कान्तातार्हीय-प्रत्ययस्य विभाषा लुग्भवति ।
द्विनिष्कम्, द्विनैष्किकं ।
त्रिनिष्कम्, त्रिनैष्किकं ।
बहुपूर्वाच्च+इति वक्तव्यं ।
बहुनिष्कम्, बहुनैष्किकं ।
परिमाणान्तस्य इत्युत्तरपद-वृद्धिः ।।

---

1. <बिस्ताच्च># ।। PS_५,१.३१ ।।

______Sठाऽ्JKव्_५,१.३१ः

द्वि-त्रि-पूर्वातिति चकारेण अनुकृष्यते ।
द्वि-त्रि-पूर्वाद्बिस्तान्ताद्द्विगोः परस्य आर्हीय-प्रत्ययस्य विभाषा लुग्भवति ।
द्विबिस्तम्, द्विबैस्तिकं ।
त्रिबिस्तम्, त्रिबैस्तिकं ।
बहुविस्तम्, बहुबैस्तिकं ।।

---

[#४७४]

1. <विंशतिकात्खः># । । PS_५,१.३२ । ।

_______Sठाञ्ठJKव्_५,१.३२ः

अध्यर्धपूर्वात्प्रातिपदिकाद्द्विगोश्च विंशतिक-शब्दान्तातार्हीयेष्वर्थेषु खः प्रत्ययो भवति ।
अध्यर्धविंशैकीनं ।
द्विविंशतिकीनं ।
त्रिविंशतिकीनं ।
विधानसामर्थ्यातस्य लुक्न भवति । ।

---

1. <खार्या ईकन्># । । PS_५,१.३३ । ।

_______Sठाञ्ठJKव्_५,१.३३ः

अध्यर्धपूर्वद्द्विगोः इत्येव अध्यर्धपूर्वात्प्रातिपदिकाद्द्विगोश्च खारी-शब्दानतातार्हीयेष्वर्थेषु ईकन्प्रत्ययो भवति ।
अध्यर्धखारीकं ।
द्विखारीकं ।
केवलायाश्च+इति वक्तव्यं ।
खारीकं ।
काकिण्याश्च+उपसङ्ख्यानं ।
अध्यर्धकाकिणीकं ।
द्विकाकिणीकं ।
त्रिकाकिणीकं ।
केवलायाश्च ।
काकिणीकं । ।

---

1. <पण-पाद-माष-शताद्यत्># । । PS_५,१.३४ । ।

_______Sठाञ्ठJKव्_५,१.३४ः

अध्यर्धपूर्वाद्द्विगोः इत्येव ।
अध्यर्धपूर्वाद्द्विगोश्च पण्-अपाद-माष-शत-शब्दान्तातार्हीयेष्वर्थेषु यत्प्रत्ययो भवति ।
अव्यर्धपण्यं ।
द्विपण्यं ।
त्रिपण्यं ।
पाद - अध्यर्धपाद्यं ।
द्विपाद्यं ।
त्रिपाद्यं ।

पद्भावो न भवति पद्यत्य्-अतदर्थे (*६,३.५३) इति ।
प्राण्य्-अङ्गस्य स इष्यते ।
इदं तु परिमाणं ।
माष - अध्यर्धमाष्यं ।
द्विमास्यं ।
त्रिमास्यं ।
शत - अध्यर्धशत्यं ।
द्विशत्यं ।
त्रिशत्यं । ।

---

1. <शाणाद्वा># । । PS_५,१.३५ । ।

______Sठाऽठ्JKव्_५,१.३५ः

अध्यर्धपूर्वात्द्विगोः इत्येव ।
शाण-शब्दादध्यर्धपूर्वाद्द्विगोरार्हीयेष्वर्थेषु वा यत्प्रत्ययो भवति ।
ठञोऽपवादः ।
पक्षे सोऽपि भवति, तस्य च लुक् ।
अध्यर्धशाण्यम्, अध्यर्धशाणं ।
द्विशाण्यम्, द्विशाणं ।
त्रिशाण्यम्, त्रिशाणं ।
शताच्च+इति वक्तव्यं ।
अध्यर्धशत्यम्, ध्यर्धशतं ।
द्विशत्यम्, द्विशतं ।
त्रिशत्यम्, त्रिशतं । ।

---

[#४७५]

1. <द्वि-त्रि-पूर्वादण्च># । । PS_५,१.३६ । ।

______Sठाऽठ्JKव्_५,१.३६ः

शाणाद्वा (*५,१.३५) इत्येव ।
द्वि-त्रि-पूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण्प्रत्ययो भवति, चकाराद्यच्च वा ।
तेन त्रैरूप्यं समद्यते ।
द्वैशाणम्, द्विशाण्यम्, द्विशाणं ।
त्रैशाणम्, त्रिशाण्यम्, त्रिशाणं ।
परिमाणान्तस्य असञ्ज्ञाशाणयोः (*७,३.१७) इति पर्युदासादिवृद्धिरेव भवति । ।

---

1. <तेन क्रीतम्># । । PS_५,१.३७ । ।

_______Sठाञ्ठJKव्_५,१.३७ः

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः ।
तेषां इतः प्रभृति समर्थ-विभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते तेन इति तृतीयासमर्थात्क्रीतं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
सप्तत्या क्रीतं साप्ततिकं ।
आशीतिकं ।
नैष्किकं ।
पाणिकं ।
पादिकं ।
माषिकं ।
शत्यं ।
शतिकं ।
द्विकं ।
त्रिकं ।
तेन इति मूल्यात्करणे तृतीया समर्थ-विभक्तिः ।
अन्यत्रानभिधानान्न भवति, देवदत्तेन क्रीतम्, पाणिना क्रीतं इति ।
द्विवचन-बहुवचन-अन्तात्प्रतययो न भवति, प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतं इति, अनभिधानादेव ।
यत्र तु प्रकृत्यर्थस्य सङ्ख्याभेदावगमे प्रमाणं अस्ति तत्र द्विवचन-बहुवचन-अन्तादपि प्रत्ययो भवति ।
द्वाभ्यां क्रीतं द्विकं ।
त्रिकं ।
पञ्चकं ।
तथा मुद्गैः क्रीतं मौद्गिकं ।
माषिकं ।
न ह्येकेन मुद्गेन क्रयः सम्भवति । ।

---

1. <तस्य निमित्तं संयोग-उत्पातौ># । । PS_५,१.३८ । ।

_______Sठाञ्ठJKव्_५,१.३८ः

तस्य इति षष्ठीसमर्थात्निमित्तं इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत्स भवति उत्पातो वा संयोगः सम्बन्धः प्राणिनां शुभाशुभसूचकः ।
महाभूत-परिणामः उत्पातः शतस्य निमित्त धनपतिना संयोगः शत्यः, शतिकः ।
साहस्रः ।
उत्पतः खल्वपि - शतस्य निमित्तं उत्पातः दक्षिणाक्षिस्पन्दनं शत्यम्, शतिकं ।
साहस्रं ।
तस्य निमित्त-प्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानं ।
वातस्य शमनं कोपनं वा वातिकं ।

पैत्तिकं ।
श्लैष्मिकं ।
सन्निपाताच्च+इति वक्तव्यं ।
सान्निपातिकं । ।

---

1. <गोद्व्यचोऽसङ्ख्या-परिमाण-अश्व-अदेर्यत्># । । PS_५,१.३९ । ।

_______Sठा~ठ्JKव्_५,१.३९:

गोशब्दाद्द्व्यचश्च प्रातिपदिकात्सङ्ख्या-परिमाण-अश्वादिविवर्जितात्यत्प्रत्ययो भवति तस्य निमित्तं संयोग-उत्पातौ (*५,१.३८) इत्येतस्मिन्नर्थे ।
ठञादीनां अपवादः ।
गोः निमित्तं संयोगः उत्पातो वा गव्यः ।

[#४७६]

द्व्यचः खल्वपि - धन्यं ।
स्वर्ग्यं ।
यशस्यं ।
आयुष्यं ।
असङ्ख्या-परिमाण-अश्वादेरिति किं ? पञ्चानां निमित्तं पञ्चकं ।
सप्तकं ।
अष्टकं ।
परिमाण - प्रास्थिकं ।
खारीकं ।
अश्वादि - आश्विकः ।
ब्रह्मवर्चसादुपसङ्ख्यानं ।
ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यं ।
अश्व ।
अश्मन् ।
गण ।
ऊर्णा ।
उमा ।
वसु ।
वर्ष ।
भङ्ग ।
अश्वादिः । ।

---

1. <पुत्राच्छ च># । । PS_५,१.४० । ।

______Sठा--ठ्JKव्_५,१.४०ः

पुत्र-शब्दाच्छः प्रत्ययो भवति, चकाराद्यत्च तस्य निमित्तं संयोग+उत्पातौ (*५,१.३८) इत्येतस्मिन्विषये ।
द्व्यचः इति नित्ये यति प्राप्ते वचनं ।
पुत्रस्य निमित्तं संयोगः उत्पातो वा पुत्रीयम्, पुत्र्यं । ।

---

1. <सर्वभूमि-पृथिवीभ्यां अणञौ># । । PS_५,१.४१ । ।

______Sठा--ठ्JKव्_५,१.४१ः

सर्वभूमि-पृथिवी-शब्दाभ्यां यथासङ्ख्यं अणञौ प्रत्ययु भवतः तस्य निमित्तं संयोग-उत्पातौ (*५,१.३८) इत्येतस्मिन्विषये ।
ठकोऽपवादौ ।
सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभ्ॐअः ।
पार्थिवः ।
सर्वभूमेः अनुशतिकादि पाठादुभयपद-वृद्धिः । ।

---

1. <तस्य+ईश्वरः># । । PS_५,१.४२ । ।

______Sठा--ठ्JKव्_५,१.४२ः

तस्य इति षष्ठीसमर्थाभ्यां सर्वभूमि-पृथिवी-शब्दाभ्यां यथासङ्ख्यं अण्-अञौ प्रत्ययौ भवतः ईश्वरः इत्येतस्मिन्विषये ।
सर्वभूमेः ईश्वरः सार्वभ्ॐअः ।
पार्थिवः ।
षष्ठीप्रकरणे पुनः षष्ठीसमर्थ-विभक्ति-निर्देशः प्रत्ययार्थस्य निवृत्तये ।
अन्यथा संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत । ।

---

1. <तत्र विदित इति च># । । PS_५,१.४३ । ।

______Sठा--ठ्JKव्_५,१.४३ः

तत्र इति सप्तमीसमर्थाभ्यां सर्वभूमि-पृथिवी-शब्दाभ्यां यथासङ्ख्यं अण्-अञौ प्रत्ययौ भवतः विदितः इत्येतस्मिन्नर्थे ।

विदितो ज्ञातः प्रकाशितः इत्यर्थः ।
सर्वभूमौ विदितः सार्वभ्उँअः ।
पार्थिवः । ।

---

1. <लोक-सर्वलोकाट्ठञ्># । । PS_५,१.४४ । ।

_______SठJKव्_५,१.४४ः

लोक-सर्वलोक-शब्दाभ्यां तत्र इति सप्तमीसमर्थाभ्यां विदितः इत्येतस्मिन्विषये ठञ्प्रत्ययो भवति ।
लोके विदितः लौकिकः ।
सार्वलौकिकः ।
अनुशतिकादित्वातुभयपद-वृद्धिः । ।

---

[#४७७]

1. <तस्य वापः># । । PS_५,१.४५ । ।

_______SठJKव्_५,१.४५ः

तस्य इति षष्ठीसमर्थाद्वापः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
उप्यतेऽस्मिन्वापः क्षेत्रं उच्यते ।
प्रस्थस्य वापः क्षेत्रं प्रास्थिकं ।
द्रौणिकं ।
खारीकं । ।

---

1. <पात्रात्ष्ठन्># । । PS_५,१.४६ । ।

_______SठJKव्_५,१.४६ः

पात्र-शब्दात्ष्ठन्प्रत्ययो भवति तस्य वापः (*५,१.४५) इत्येतस्मिन्विषये ।
ठञोऽपवादः ।
नकारः स्वरार्थः ।
षकारो ङीष्-अर्थः ।

पात्र-शब्दः परिमाणवाची ।
पात्रस्य वापः पात्रिकं क्षेत्रं ।
पात्रिकी क्षेत्रभक्तिः । ।

---

1. <तदस्मिन्वृद्ध्य्-आय-लाभ-शुल्क-उपदा दीयते># । । PS_५,१.४७ । ।

_______Sठान्ठ्JKव्_५,१.४७ः

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं वृद्ध्यादि चेत्तद्दीयते ।
दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकं अभिसम्बध्यते ।
तत्र यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद्वृद्धिः ।
ग्रामादिषु स्वामिग्राह्यो भागः आयः ।
पटादीनां उपादानमूलादतिरिक्तं द्रव्यं लाभः ।
रक्षानिर्वेशो राजभागः शुल्कः ।
उत्कोचौपदा ।
पञ्च अस्मिन्वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः ।
सप्तकः ।
शत्यः, शतिकः ।
साहस्रः । ।
चतुर्थ्यर्थ उपसङ्ख्यानं ।
पञ्च अस्मै वृद्धिर्वा आयो वा लाभो वा उपदा वा दीयते पज्चको देवदत्तः ।
सिद्धं त्वधिकरणत्वेन विवक्षितत्वाथ् ।
सममब्राह्मणे दानं इति यथा । ।

---

1. <पूरण-अर्धाठ्ठन्># । । PS_५,१.४८ । ।

_______Sठान्ठ्JKव्_५,१.४८ः

पूरण-वाचिनः शब्दातर्ध-शब्दाच्च ठन्प्रत्ययो भवति तदस्मिन्वृद्ध्य्-आय. लाभशुल्क-उपदा दीयते (*५,१.४७) इत्येतस्मिन्नर्थे ।
यथायथं ठक्टिठनोरपवादः ।
द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः ।
तृतीयिकः ।
पञ्चमिकः ।
सप्तमिकः ।
अर्धिकः ।
अर्ध-शब्दो रुपकार्धस्य रूढिः । ।

---

1. <भागाद्यच्च># । । PS_५,१.४९ । ।

________Sठा-ठ्JKव्_५,१.४९ः

भाग-शदाद्यत्प्रत्ययो भवति, चकारात्ठन्च, तदस्मिन्वृद्ध्य्-आय-लाभशुल्क-उपदा दीयते (*५,१.४७) इत्येतस्मिन्नर्थे ।
ठञोऽपवादः ।
भागो ।
वृद्ध्यादिरस्मिन्दीयते भाग्यं, भागिकं शतं ।
भाग्या, भागिका विंशतिः ।
भाग-शब्दोऽपि रूपकार्धस्य वाचकः । ।

---

[#४७८]

1. <तद्धरति वहव्त्यावहति भाराद्वंशादिभ्यः># । । PS_५,१.५० । ।

________Sठा-ठ्JKव्_५,१.५०ः

तदिति द्वितीयासमर्थाद्धरत्य्-आदिष्वर्थेषु यथाविहितं प्रत्ययो भवति ।
प्रकृति-विशेषणं भाराद्वंशादिभ्यः इति ।
वंशादिभ्यः परो यो भार-शब्दः तदन्तात्प्रातिपदिकातिति ।
वंशभारं हरति वहति आवहति वा वांशभारिकः ।
कौटजभारिकः ।
बाल्वजभारिकः ।
भारातिति किं ? वंशं हरति ।
वंशादिभ्यः इति किं ? व्रीहिभारं हरति ।
अपरा वृत्तिः - भाराद्वंशादिभ्यः इति, भारभूतेभ्यो वंशादिभ्यः इत्यर्थः ।
भार-शब्दोऽर्थद्वारेण वंशादीनां विशेषणं ।
भारभूतान्वंशान्हरति वांशिकः ।
कौटजिकः ।
बाल्वजिकः ।
भारातिति किं ? वंशं हरति ।
वंशादिभ्याः इति किं ? भारभूतान्व्रीहीन्वहति ।
सूत्रार्थद्वयं अपि च+एतदाचार्येण शिष्याः प्रतिपादिताः ।
तदुभयं अपि ग्राहयं ।
हरति देशान्तरं प्रापयति चोरयति वा ।
वहत्युत्क्षिप्य धारयति इत्यर्थः ।
आवहति उत्पादयति इत्यर्थः ।
वंश ।
कुटज ।

बल्वज ।
मूल ।
अक्ष ।
स्थूणा ।
अश्मन् ।
अश्व ।
इक्षु ।
खट्वा ।
वंशादिः । ।

---

1. <वस्न-द्रव्याभ्यां ठन्-कनौ># । । PS_५,१.५१ । ।

_______Sठा~ठ्JKव्_५,१.५१ः

वस्न-द्रव्य-शब्दाभ्यां द्वितीयासमर्थाभ्यां यथासङ्ख्यं ठन्कनित्यैतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु ।
वस्नं हरति वहति वा वस्निकः ।
द्रव्यकः । ।

---

1. <सम्भवत्यवहरति पचति># । । PS_५,१.५२ । ।

_______Sठा~ठ्JKव्_५,१.५२ः

ततिति द्वितीया समर्थ-विभक्तिरनुवर्तते ।
तदिति द्वितियासमर्थात्सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति ।
तत्र अधेयस्य प्रमाणानतिरेकः सम्भवः ।
उपसंहरणं अवहारः ।
विक्लेदनं पाकः ।
प्रस्थं सम्भवति अवहरति पचति वा प्रास्थिकः ।
कौडविकः ।
खारीकः ।
ननु च पाके च सम्भवोऽस्ति ? न अस्त्यत्र नियोगः ।
प्रस्थं पचति ब्राह्मणी प्रास्थिकी ।
तत्पचति इति द्रोणादण्च ।
द्रोणं पचति द्रौणी, द्रौणिकी । ।

---

[#४७९]

1. <आढक-आचित-पात्रात्खोऽन्यतरस्याम्># । । PS_५,१.५३ । ।

______Sठा~ठ्JKव्_५,१.५३ः

आढक-आचित-पात्र-शदेभ्यो द्वितीयासमर्थभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः भवति ।
ठञोऽपवादः ।
पक्षे सोऽपि भवति ।
आढकं संभवति अवहरति पचति वा आढकीना, आढकिकी ।
आचितीना, आचितिकी ।
पात्रीणा, पात्रिकी । ।

---

1. <द्विगोः ष्ठंश्च># । । PS_५,१.५४ । ।

______Sठा~ठ्JKव्_५,१.५४ः

आढकाचितपात्रातित्येव ।
आढक-आचित-पात्र-अन्ताद्द्विगोः संभवत्यादिष्वर्थेषु ष्ठन्प्रत्ययो भवति, चकारात्खः, अन्यतरस्यां ।
विधानसामर्थ्यादेव अनयोर्लुक्न भवति ।
ठञस्तु पक्षेऽनुज्ञातस्य अध्यर्ध-पूर्व-द्विगोः इति लुग्भवत्येव ।
नकारः स्वरार्थः ।
षकारो ङीष्-अर्थः ।
द्व्याढकिकी, द्व्याढकीना, द्व्याढकी ।
द्व्याचितिकी, द्व्याचितीना, द्व्याचिता ।
अपरिमाण-विब्स्त-आचितेति ङीपः प्रतिषेधः ।
द्विपात्रिकी, द्विपात्रीणा, द्विपात्री । ।

---

1. <कुलिजाल्लुक्खौ च># । । PS_५,१.५५ । ।

______Sठा~ठ्JKव्_५,१.५५ः

द्विगोः इत्येव ।
कुलिज-शब्दानताद्द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः ।
चकारात्ष्ठन्च ।

अन्यतरस्यां ग्रहण-अनुवृत्त्या लुगपि विकल्प्यते ।
ठञः पक्षे श्रवणं भवति ।
तेन चातूरूप्यं संपद्यते ।
द्वे कुलिजे संभवति अवहरति पचति वा द्विकुलिजिकि, द्विकुलिजीना, द्विकुलिजी, द्वैकुलिजिकि ।
परिमाणान्तस्य असंज्ञाशाणयोः (*७,३.१७) इत्यत्र कुलिज-ग्रहणं अपीष्यते, तेन+उत्तरपद-वृद्धिरपि न भवति । ।

---

1. <सोऽस्य अंश-वस्न-भृतयः># । । PS_५,१.५६ । ।

_______Sठा~ठ्JKव्_५,१.५६ः

स इति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं अंशवस्नभृतयश्चेत्ता भवति ।
अंशो भागः ।
वस्नं मूल्यं ।
भृतिर्वेतनं ।
पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः ।
सप्तकः ।
साहस्रः । ।

---

1. <तदस्य परिमाणम्># । । PS_५,१.५७ । ।

_______Sठा~ठ्JKव्_५,१.५७ः

ततिति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं परिमाणं चेत्तद्भवति ।
प्रस्थः परिमाणं अस्य प्रास्थिको राशिः ।
खारशतिकः ।
शत्यः, शतिकः ।
साहस्रः ।
द्रौणिकः ।
कौडविकः ।
वर्षशतं परिमाणमस्य वार्षशतिकः ।
वार्षसहस्रिकः ।
षष्टिर्जीवितपरिमाणं अस्य इति षाष्टिकः ।
साप्ततिकः ।
समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेव अनुवर्तिष्यते, किं अर्थं पुनरनयोरुपादानं ? पुनर्विधानार्थं ।
द्वे षष्टी जीवितपरिमाणं अस्य द्विषाष्टिकः ।
द्विसाप्ततिकः ।
पुनर्विधान-सामर्थ्यादध्यर्ध-पूर्वद्विगोर्लुक्न भवति । ।

[#४८०]

1. <सङ्ख्यायाः सञ्ज्ञा-सङ्घ-सूत्र-अध्ययनेषु># । । PS_५,१.५८ । ।

_______Sठाञ्ठJKव्_५,१.५८ः

तदस्य परिमाणं (*५,१.५७) इति वर्तते ।
सङ्ख्या-वाचिनः प्रातिपदिकात्परिमाणोपाधिकात्प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति ।
सञ्ज्ञा-सङ्घ-सूत्र-अध्ययनेषु इति प्रत्ययार्थ-विशेषणं ।
तत्र सञ्ज्ञायां स्वार्थे प्रत्ययो वाच्यः ।
पञ्चैव पञ्चकाः शकुनयः ।
त्रिकाः शालङ्कायनाः ।
सङ्घ - पञ्च परिमाणं अस्य पञ्चकः सङ्घः ।
अष्टकः ।
सूत्र - अष्टौ अध्यायाः परिमाणं अस्य सूत्रस्य अष्टकं पाणिनीयं ।
दशकं वैयाघ्रपदीयं ।
त्रिकं काशकृत्स्नं ।
ननु च अध्यायसमूहः सूत्रसङ्घ एव भवति ? न+एतदस्ति ।
प्राणिसमूहे सङ्घ-शब्दो रूढः ।
अध्ययन - पञ्चकोऽधीतः ।
सप्तकोऽधीतः ।
अष्टकः ।
अनवकः ।
अधीतिरध्ययनं ।
तस्य सङ्ख्यापरिमाणं पञ्चावृत्तयः पञ्चवाराः पञ्च रूपाणि अस्य अध्ययनस्य पञ्चकं अध्ययनं ।
स्तोमे डविधिः पञ्चदशाद्य्-अर्थः ।
पञ्चदश मन्त्राः परिमाणं अस्य पञ्चदशः स्तोमः ।
सप्तदशः ।
एकविंशः ।
शन्शतोर्डिनिश्छन्दसि ।
पञ्चदशिनोऽर्धमासाः त्रिंशिनो मासाः ।
विंशतेश्च+इति वक्तव्यं ।
विंशिनोऽङ्गिरसः । ।

---

1. <पङ्क्ति-विंशति-त्रिंशच्-चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तत्य्-अशीति-नवति-शतम्># । । PS_५,१.५९ । ।

_______Sठाञ्ठJKव्_५,१.५९ः

तदस्य परिमाणं (*५,१.४७) इति वर्तते ।
पङ्क्त्यादयः शब्दा निपात्यन्ते ।
यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धं ।
पञ्चाना टिलोपः तिश्च प्रत्ययः ।
पञ्च परिमाणं अस्य पङ्क्तिश्छन्दः ।
द्वयोर्दशतोः विन्भावः शतिश्च प्रत्ययः द्वौ दशतौ प्रैमाणं अस्य सङ्घस्य विंशतिः ।
त्रयाणां दशतां त्रिन्भावः शत्च प्रत्ययः ।
त्रयो दशतः परिमाणं अस्य त्रिंशथ् ।
चतुर्णां दशतां चत्वारिन्भावः शत्च प्रत्ययः ।
चत्वारो दशतः परिमाअणस्य चत्वारिंशथ् ।
पञ्चानां दशतां पञ्चाभावः शत्च प्रत्ययः ।
पञ्च दशतः परिमाणां अस्य पञ्चाशथ् ।
षण्णां दशतां षड्भावः, तिः प्रत्ययोऽपदत्वं च ।
षड्दशतः परिमाणं अस्य षष्टिः ।
सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च ।
सप्त दशतः परिमाणं अस्य सप्ततिः ।

[#४८१]

अष्टानां दशतां अशीभावः तिः प्रत्ययश्च ।

[#४८०]

अष्टौ दशतः परिमाणं अस्य अशीतिः ।
नवानां दशतां नवभावः तिः प्रत्ययश्च ।
नव दशतः परिमाणं अस्य नवतिः ।
दशनां दशतां शभावः तश्च प्रत्ययः ।
दश दशतः परिमाणं अस्य सङ्घस्य शतं ।
विंशत्यादयो गुण-शब्दाः, ते यथा कथंचिद्व्युत्पाद्याः ।
न अत्र अवयवार्थेऽभिनिवेष्टव्यं ।
तथा हि - पङ्क्तिः इति क्रमसम्निवेशेऽपि वर्तते, ब्राह्मणपङ्क्तिः, पपीलिकापङ्क्तिः इति ।
न च अत्र अवयवार्थः कश्चिदस्ति ।
या च+एषां विषयभेदेन गुण-मात्रे गुणिनि च वृत्तिः, स्वलिङ्ग-सङ्ख्य-अनुविधानं च, एतदपि सर्वं स्वाभाविकं एव ।
सहस्रादयोऽप्येवं जातियकाः तद्वदेव द्रष्टव्याः ।
उदाहरणमात्रं एतदिति । ।

---

[#४८१]

1. <पञ्चद्-दशतौ वर्गे वा># । । PS_५,१.६० । ।

_______Sठाञ्ठJKव्_५,१.६०ः

पञ्चत्दशतित्येतौ निपात्येते तदस्य अप्रिमाणं इत्यस्मिन्विषये वर्गेऽभिधेये ।
सङ्ख्यायाः इति कनि प्राप्ते डतिर्निपात्यते ।

वावचनात्पक्षे सोऽपि भवति ।
पञ्च परिमाणस्य पञ्चद्वर्गः ।
दशद्वर्गः ।
पञ्चको वर्गः ।
दशको वर्गः । ।

---

1. <सप्तनोऽञ्छन्दसि># । । PS_५,१.६१ । ।

______Sठाऱ्ठ्JKव्_५,१.६१ः
वर्गे इत्येव, तदस्य परिमानं इति च ।
सप्तन्शब्दाच्छन्दसि विषयेऽञ्प्रत्ययो भवति वर्गेऽभिधेये ।
सप्त साप्तानि असृजत् । ।

---

1. <त्रिंशच्-चत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डण्># । । PS_५,१.६२ । ।

______Sठाऱ्ठ्JKव्_५,१.६२ः

तदस्य परिमाणं इत्येव ।
वर्गे इति निवृत्तं ।
त्रिंशच्-चत्वरिंशच्-छब्दाभ्यां सञ्ज्ञायां विषये डण्प्रत्ययो भवति तदस्य परिमाणं इत्येतस्मिन्विषये ब्राह्मणेऽभिधेये ।
अभिधेयसप्तमी एषा, न विषयसप्तमी ।
तेन मन्त्रभाषयोरपि भवति ।
त्रिंशद्-अध्यायाः परिमाणं एषां ब्राह्मणानां त्रैशानि ब्राह्मणानि ।
चात्वारिंशानि ब्राह्मणानि ।
कानिचिदेव ब्राह्मणान्युच्यन्ते । ।

---

1. <तदर्हति># । । PS_५,१.६३ । ।

______Sठाऱ्ठ्JKव्_५,१.६३ः

ततिति द्वितीयासमर्थादर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
श्वेतच्छत्रं अर्हति श्वैतछत्रिकः ।

वास्त्रयुग्मिकः ।
शत्यः, शतिकः ।
साहस्रः । ।

---

[#४८२]

1. <छेद-आदिभ्यो नित्यम्># । । PS_५,१.६४ । ।

______Sठाञ्ठ्JKव्_५,१.६४ः

नित्य-ग्रहणं प्रत्ययार्थ-विशेषणं ।
छेद-आदिभ्यो द्वितीयासमर्थेभ्यो नित्यं अर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
छेदं नित्यं अर्हति छैदिकः ।
भैदिकः ।
छेद ।
भेद ।
द्रोह ।
दोह ।
वर्त ।
कर्ष ।
संप्रयोग ।
विप्रयोग ।
प्रेषण ।
संप्रश्न ।
विप्रकर्ष ।
विराग विरङ्गं च ।
वैरङ्गिकः । ।

---

1. <शीर्षच्छेदाद्यच्च># । । PS_५,१.६५ । ।

______Sठाञ्ठ्JKव्_५,१.६५ः

शीर्षच्छेद-शब्दाद्द्वितीयासमर्थान्नित्यं अर्हति इत्यस्मिन्नर्थे यत्प्रत्ययो भवति ।
चकाराद्यथाविहितं च ।
शिरश्छेदं नित्यं अर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः ।
प्रत्ययसंनियोगेन शिरसः शीर्षभावो निपात्यते । ।

---

1. <दण्डादिभ्यः># । । PS_५,१.६६ । ।

_______Sठान्ठ्JKव्_५,१.६६ः

नित्यं इति निवृत्तं ।
दण्डादिभ्यो द्वितियासमर्थेभ्यः अर्हति इत्यस्मिन्नर्थे यत्प्रत्ययो भवति ।
ठकोऽपवादः ।
दण्डं अर्हति दण्ड्यः ।
मुसल्यः ।
दण्ड ।
मुसल ।
मधुपर्क ।
कशा ।
अर्घ ।
मेधा ।
मेघ ।
युग ।
उदक ।
वध ।
गुहा ।
भाग ।
इभ ।
दण्डादिः । ।

---

1. <छन्दसि च># । । PS_५,१.६७ । ।

_______Sठान्ठ्JKव्_५,१.६७ः

प्रातिपदिकमात्राच्छन्दसि विषये तदर्हति इत्यस्मिन्नर्थे यत्प्रत्ययो भवति ।
ठञादीनां अपवादः ।
उदक्या वृत्तयः ।
यूप्यः पलाशः ।
गर्त्यो देशः । ।

---

1. <पात्राद्घंश्च># । । PS_५,१.६८ । ।

_______Sठा~ठ्JKव्_५,१.६८ः

पात्र-शब्दाद्घन्प्रत्ययो भवति चकाराद्यत्च, तदर्हति इत्यस्मिन्नर्थे ।
ठक्ठञोरपवादः ।
पात्रं परिमाणं अप्यस्ति ।
पात्रं अर्हति पात्रियः ।
पात्र्यः । ।

---

1. <कडङ्करदक्षिणाच्छ च># । । PS_५,१.६९ । ।

_______Sठा~ठ्JKव्_५,१.६९ः

कडङ्करदक्षिणा-शब्दाभ्यां छः प्रत्ययो भवति, चकाराद्यत्च, तदर्हति इत्यस्मिन्विषये ।
ठकोऽपवादः ।
कडङ्करं अर्हति कडङ्करीयो गौः, कडङ्कर्यः ।
दक्षिणां अर्हति दक्षिणीयो भिक्षुः, दक्षिण्यो ब्राह्मणः ।
दक्षिणशब्दस्य अल्पाच्तरस्य अपूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासङ्ख्याभावं सूचयति । ।

---

[#४८३]

1. <स्थालीबिलात्># । । PS_५,१.७० । ।

_______Sठा~ठ्JKव्_५,१.७०ः

छयतौ अनुवर्त्तेते स्थालीबिल-शब्दाच्छयतौ प्रत्ययौ भवतः तदर्हति इत्यस्मिन्नर्थे ।
ठकोऽपवादौ ।
स्थालीबिमलर्हन्ति स्थालीबिलीयाः तण्डुलाः, स्थालीबिल्याः ।
पाक्योग्याः इत्यर्थः । ।

---

1. <यज्ञ-र्त्विग्भ्यां घ-खञौ># । । PS_५,१.७१ । ।

_______Sठाऽठ्JKव्_५,१.७१ः

यज्ञ-शब्दादृत्विक्-शब्दाच्च यथासङ्ख्यं घ-खञौ प्रत्ययौ भवतः तदर्हति इत्यस्मिन्विषये।
ठकोऽपवादौ।
यज्ञियो ब्राह्मणः।
आर्त्विजीनो ब्राह्मणः।
यज्ञ-र्त्विग्भ्यां तत्कर्मार्हति इत्युपसङ्ख्यानं।
यज्ञकर्म अर्हति यज्ञियो देशः।
ऋत्विक्कर्म अर्हति आर्त्विजीनं ब्राह्मणकुलं।
अर्हीयाणां ठगादीनां पूर्णोऽवधिः।
अतः परं प्राग्वतीयः ठञेव भवति।।

---

1. <पारायण-तुरायण-चाद्न्रायणं वर्तयति>#।। PS_५,१.७२।।

_______Sठाऽठ्JKव्_५,१.७२ः

समर्थविभक्तिरनुवर्तते।
अर्हति इति निवृत्तं।
पारायण-अदिभ्यो द्वितीयासमर्थेभ्यः वर्तयति इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति।
पारायणं वर्तयति अधीते पारायणिकश्छात्रः।
तौरायणिको यजमानः।
चान्द्रायणिकस्तपस्वी।।

---

1. <संशयमापन्नः>#।। PS_५,१.७३।।

_______Sठाऽठ्JKव्_५,१.७३ः

संशय-शब्दाद्द्वितीयासमर्थातापन्नः इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति।
संशयं आपन्नः प्राप्तः सांशयिकः स्थाणुः।।

---

1. <योजनं गच्छति>#।। PS_५,१.७४।।

_______Sठाऽठ्JKव्_५,१.७४ः

योजन-शब्दात्द्वितीयासमर्थाद्गच्छति इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति ।
योजनं गच्छति यौजनिकः ।
क्रोशशतयोजनशतयोरुपसङ्ख्यानं ।
क्रोशशतं गच्छति क्रौशशतिकः ।
यौजनशतिकः ।
ततोऽभिगमनं अर्हति इति च क्रोशशतयोजनशतयोरुपसङ्ख्यानं ।
क्रोशशतादभिगमनं अर्हति क्रौशशतिको भिक्षुः ।
यौजनशतिक आचार्यः । ।

---

[#४८४]

1. <पथः ष्कन्># । । PS_५,१.७५ । ।

_______Sठाऽठ्JKव्_५,१.७५ः

पथिन्-शब्दाद्द्वितीयासमर्थाद्गच्छति इत्यस्मिन्नर्थे ष्कन्प्रत्ययो भवति ।
नकारः स्वरार्थः ।
षकारो ङीष्-अर्थः ।
पन्थानं गच्छति पथिकः ।
पथिकी । ।

---

1. <पन्थो ण नित्यम्># । । PS_५,१.७६ । ।

_______Sठाऽठ्JKव्_५,१.७६ः

नित्य्-अग्रहणं प्रत्ययार्थ-विशेषणं ।
पथः पन्थ इत्ययं आदेशो भवति णश्च प्रत्ययो नित्यं गच्छति इत्यस्मिन्विषये ।
पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते ।
नित्यं इति किं ? पथिकः । ।

---

1. <उत्तरपथेनाहृतं च># । । PS_५,१.७७ । ।

_______Sठा~ठ्JKव्_५,१.७७ः

निर्देशादेव समर्थविभक्तिः ।
उत्तरपथ-शब्दाद्तृतीयासमर्थाताहृतं इत्येतस्मिन्विषये ठञ्प्रत्ययो भवति ।
चकारः प्रत्ययार्थसं उच्चये, गच्छति इति च ।
अत्र अपि तृतीया+एव समर्थविभक्तिः ।
उत्तरपथेन-आहृतं औत्तरपथिकं ।
उत्तरपथेन गच्छति औत्तरपथिकः ।
आहृत-प्रकरणे वारिजङ्गलस्थल्कान्तारपूर्वपदादुपसङ्ख्यानं ।
वारिपथेन आहृतं वारिपथिकं ।
वारिपथेन गच्छति वारिपथिकः ।
जङ्गलपथेन आहृतं जाङ्गलपथिकं ।
जङ्गलपथेन गच्छति जाङ्गलपथिकः ।
स्थलपथेन आहृतं स्थालपथिकं ।
स्थलपथेनगच्छति स्थालपथिकः ।
कान्तारपथेन आहृतं कान्तारपथिकं ।
कान्तारपथेन गच्छति कान्तारपथिकः ।
अजपथशङ्कुपथाभ्यां च+उपसङ्ख्यानं ।
अजपथेन आहृतं आजपथिकम्, गच्छति वा आजपथिकः ।
शङ्कुपथेन आहृतं शाङ्कुपथिकं ।
गच्छति वा शाङ्कुपथिकः ।
मधुकमरिचयोरण्स्थलाथ् ।
स्थलपथेन आहृतं स्थालपथं मधुकं । ।

---

1. <कालात्># । । PS_५,१.७८ । ।

_______Sठा~ठ्JKव्_५,१.७८ः

कालातित्यधिकारः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः कालातित्येवं तद्वेदितव्यं ।

---

वक्ष्यति - #<तेन विर्वृत्तम्># । । PS_५,१.७९ । ।

_______Sठा~ठ्JKव्_५,१.७९ः

मासेन निर्वृत्तं मासिकं ।

आर्धमासिकं ।
सांवत्सरिकं ।
कालातित्यधिकारः व्युष्ट-आदिभ्योऽण्(*५,१.९७) इति यावत् । ।

[#४८५]

तेन निर्वृत्तं (*५,१.७९) ।
तेन इति तृतीयासमर्थात्काल-वाचिनः प्रातिपदिकात्विर्वृत्तं इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति ।
अह्ना विर्वृत्तं आह्निकं ।
आर्धमासिकं ।
सांवत्सरिकं । ।

---

1. <तं अधीष्टो भृतो भूतो भावी># । । PS_५,१.८० । ।

_______Sठाञ्ठ्JKव्_५,१.८०ः

तं इति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकातधीष्टो भृतो भूतो भावी वा इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ।
अधीष्टः सत्कृत्य व्यापादितः ।
भृतः वेतनेन क्रीतः ।
भूतः स्वसत्तया व्याप्तकालः ।
भावी तादृश एवानागतः ।
कालाध्वनोरत्यन्तसंयोगे (*२,३.५) इति द्वितीया ।
मासमधीष्टः मासिकोऽध्यापकः ।
मासं भृतः मासिकः कर्मकरः ।
मासं भूतः मासिको व्याधिः ।
मासं भावी मासिकः उत्सवः ।
ननु चाध्येषणं भरणं च मुहूर्तं क्रियते तेन कथं मासो व्याप्यते ? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यां एव व्याप्तः इत्युच्यते । ।

---

1. <मासाद्वयसि यत्खञौ># । । PS_५,१.८१ । ।

_______Sठाञ्ठ्JKव्_५,१.८१ः

मास-शब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः ।
ठञोऽपवादौ ।
अधीष्टादीनां चतुर्णां अधिकारेऽपि सामर्थ्याद्भूत एव अत्र अभिसम्बध्यते ।
मासं भूतः मास्यः, मासीनः ।

वयसि ति किं ? मासिकं । ।

---

1. <द्विगोर्यप्># । । PS_५,१.८२ । ।

______Sठा~ठ्JKव्_५,१.८२ः

मासाद्वयसि ति वर्तते ।
मासान्ताद्द्विगोर्यप्प्रत्ययो भवति वयस्यभिधेये ।
द्व्ॐआसौ भूतः द्विमास्यः ।
त्रिमास्यः । ।

---

1. <षण्मासाण्ण्यच्च># । । PS_५,१.८३ । ।

______Sठा~ठ्JKव्_५,१.८३ः

वयसि इत्येव ।
षण्मास-शब्दाद्वयस्यभिधेये ण्यत्प्रत्ययो भवति, यप्च ।
औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः ।
स्वरितत्वाच्चानन्तरोऽनुवर्तिष्यते ।
तेन त्रैॠऊप्यं भवति ।
षाण्मासयः, षण्मास्यः, षाण्मासिकः । ।

---

1. <अवयसि ठंश्च># । । PS_५,१.८४ । ।

______Sठा~ठ्JKव्_५,१.८४ः

षण्मास-शब्दाद्वयस्यभिधेये ठण्प्रत्ययो भवति ।
चकारेण अनन्तरस्य ण्यतः समुच्चयः क्रियते ।
षण्मासिको रोगः, षाण्मास्यः । ।

---

[#४८६]

1. <समायाः खः># । । PS_५,१.८५ । ।

_______Sठाञ्ठ्JKव्_५,१.८५ः

अधीष्ट-आदयश्चत्वारोऽर्था अनुवर्तन्ते ।
समा-शब्दाद्द्वितीयास्मार्थादधीष्टादिषु अर्थेषु खः प्रत्ययो भवति ।
ठञोऽपवादः समामधीष्टो भृतो भूतो भावी वा समीनः ।
केचित्तु तेन निर्वृत्तं (*५,१.७९) इति सर्वत्र अनुवर्तयन्ति ।
समया निर्वृत्तः समीनः । ।

---

1. <द्विगोर्वा># । । PS_५,१.८६ । ।

_______Sठाञ्ठ्JKव्_५,१.८६ः

समायाः खः (*५,१.८५) इत्येव ।
समा-शब्दान्ताद्द्विगोः निर्वृत्तादिसु अर्थेषु पञ्चसु वा खः प्रत्ययो भवति ।
पूर्वेण नित्यःप्राप्तो विकल्प्यते ।
प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्त-ग्रहणं अलुकि (*७,३.१७) इति प्राप्तिरस्त्येव ।
खेन मुक्ते पक्षे ठञपि भवति ।
द्विसमिनः, द्वैसमिकः ।
त्रिसमीनः, त्रैसमिकः । ।

---

1. <रात्र्य्-अहः-संवत्सराच्च># । । PS_५,१.८७ । ।

_______Sठाञ्ठ्JKव्_५,१.८७ः

रात्रि अहः संवत्सर इत्येवं अन्ताद्द्विगोः निर्वृत्तादिषु अर्थेषु वा खः प्रत्ययो भवति ।
खेन मुक्ते पक्षे ठञपि भवति ।
द्विरात्रीणः, द्वैरात्रिकः ।
त्रिरात्रीणः, त्रैरात्रिकः ।
द्व्यहीनः, द्वैयह्निकः ।
त्र्यहीणः, त्रैयह्निकः ।
द्विसंवत्सरीणः, द्विसांवत्सरिकः ।

त्रिसंवत्सरीणः, त्रिसांवत्सरिकः ।
सङ्ख्यायाः संवत्सरसङ्ख्यस्य च इत्युत्तरपद-वृद्धिः । ।

---

1. <वर्षाल्लुक्च># । । PS_५,१.८८ । ।

______Sठाङ्ठ्JKव्_५,१.८८ः

द्विगोः इत्येव ।
वर्षान्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति ।
पक्षे ठञ् ।
तयोश्च वा लुग्भवति ।
एवं त्रीणि रूपाणि भवन्ति ।
द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः ।
त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः ।
वर्षस्य अभविष्यति (*७,३.१६) इत्युत्तरपद-वृद्धिः ।
भाविनि तु त्रैवर्षिकः । ।

---

1. <चित्तवति नित्यम्># । । PS_५,१.८९ । ।

______Sठाङ्ठ्JKव्_५,१.८९ः

चित्तवति प्रत्यय-अर्थेऽभिधेये वर्ष-शब्दान्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु उत्पन्नस्य प्रत्ययस्य नित्यं लुग्भवति ।
पूर्वेण विकल्पे प्राप्ते वचनं ।
द्विवर्षो दारकः ।
चित्तवति इति किं ? द्विवर्षीणो व्याधिः । ।

---

1. <षष्टिकाः षष्टिरात्रेण पच्यन्ते># । । PS_५,१.९० । ।

______Sठाङ्ठ्JKव्_५,१.९०ः

षष्टिक-शब्दो निपात्यते ।
बहुवचनं अतन्त्रं ।
षष्टिरात्र-शब्दात्तृतीयासमर्थात्कन्प्रत्ययो निपात्यते पच्यन्ते इत्येतस्मिन्नर्थे, रात्रि-शब्दस्य च लोपः ।

षष्टिरात्रेण पच्यन्ते षष्टिकाः।
सञ्ज्ञा एषा धान्यचिशेषस्य।
तेन मुद्गादिष्वतिप्रसङ्गो न भवति॥

---

[#४८७]

1. <वत्सरान्ताच्छश्छन्दसि># ॥ PS_५,१.९१ ॥

______Sठा~ठ्JKव्_५,१.९१ः

वत्सरान्तात्प्रातिपदिकात्निवृत्तादिष्वर्थेषु छन्दसि विषये छनः प्रत्ययो भवति।
ठञोऽपवादः।
इद्वत्सरीयः।
इदावत्सरीयः॥

---

1. <संपरिपूर्वात्ख च># ॥ PS_५,१.९२ ॥

______Sठा~ठ्JKव्_५,१.९२ः

संपरिपूर्वात्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये।
निर्वृत्तादिष्वर्थेसु खः प्रत्ययो भवति, चकाराच्छश्च।
संवत्सरीणाः, संवत्सरीया।
परिवत्सरीणम्, परिवत्सरीया॥

---

1. <तेन परिजय्य-लभ्य-कार्य-सुकरम्># ॥ PS_५,१.९३ ॥

______Sठा~ठ्JKव्_५,१.९३ः

तेन इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात्परिजय्य, लभ्य, काय, सुकर इत्येतेष्वर्थेषु ठञ्प्रत्ययो भवति।
मासेन परिजय्यः, शक्यते जेतुं, मासिको व्याधिः।
सांवत्सरिकः।
मासेन लभ्यः मासिकः पटः।

मासेन कार्यं मासिकं चान्द्रायणं ।
मासेन सुकरः मासिकः प्रासादः । ।

---

1. <तदस्य ब्रह्मचर्यम्># । । PS_५,१.९४ । ।

_______SठाऽठJKव्_५,१.९४ः

तदिति द्वितियासमर्थ-विभक्तिः ।
सा च अत्यन्तसंयोगे ।
अस्य इति प्रत्ययार्थः ।
ब्रह्मचर्यं इति द्वाभ्यां अपि सम्बध्यते ।
कालस्य व्यापकं, प्रत्ययार्थस्य च स्वं इति ।
तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकादस्य इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, ब्रह्मचर्यं चेद्गम्यते ।
मासं ब्रह्मचर्यमस्य मासिकः ब्रह्मचारी ।
आर्धमासिकः ।
सांवत्सरिकः ।
अपरा वृत्तिः - तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, यत्तदस्य इति निर्दिष्टं ब्रह्मचर्यं चेद्तद्भवति ।
मासोऽस्य ब्रह्मचर्यसय्मासिकं ब्रह्मचर्यं ।
आर्धमासिकं ।
सांवत्सरिकं ।
पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यं एव ।
उभयं अपि प्रमाणम्, उभयथा सूत्रप्रणयनाथ् ।
महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसङ्ख्यानं ।
माहानामिकं ।
गौदानिकं ।
आदित्यव्रतिकं ।
[#४८८]

तच्चरति इति च ।
महानाम्न्य ऋचः, तत्सहचरितं व्रतं तच्छब्देन+उच्यते ।
महानाम्नीश्चरति माहानामिकः ।
आदित्यव्रतिकः ।
गौदानिकः ।
भस्याढे इति पुंबद्भावेन ङीपि निवृत्ते नस्तद्धिते (*६,४.१४४) इति टिलोपः ।
अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः ।
अवान्तरदीक्षां चरति अवान्तरदीक्षी ।
तिलव्रती ।
अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः ।
अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः, अष्टाचत्वरिंशी ।
चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः ।
चातुर्मास्यानि चरति चातुर्मासकः, चातुरमासी ।
चतुर्मास्याण्ण्यो यज्ञे तत्र भवे ।
चतुर्षु मासेषु भवानि चातुर्मास्यानि ।
सञ्ज्ञायामण्वक्तव्यः ।

चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी ।
आषाढी ।
कार्तिकी ।
फाल्गुनी ।।

---

1. <तस्य च दक्षिणा यज्ञाख्येभ्यः># ।। PS_५,१.९५ ।।

_______Sठाऱ्ठJKव्_५,१.९५ः

तस्य इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणा इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति ।
अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी ।
वाजपेयिकी ।
राजसूयिकी ।
आख्या-ग्रहणं अकालादपि यज्ञवाचिनो यथा सयातिति ।
इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन् ।
प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणं अलुकि (*७,३.१७) इति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः ।।

---

[#४८९]

1. <तत्र च दीयते कार्यं भववत्># ।। PS_५,१.९६ ।।

_______Sठाऱ्ठJKव्_५,१.९६ः

तत्र इति सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद्दीयते, कार्यं इत्येतयोरर्थयोर्भववत्प्रत्ययो भवति ।
यथा - मासे भवं मासिकं ।
सांवत्सरिकं ।
प्रावृषेण्यं ।
वासन्तिकं ।
वासन्तं ।
हैमनं ।
हैमन्तं ।
हैमन्तिकं ।
शारदं ।
वतिः सर्वसादृश्यार्थः ।
योगविभागश्च अत्र कर्तव्यः, तत्र च दीयते, यज्ञाख्येभ्यः इति ।
आग्निष्टेमिकं भक्तं ।
राजसूयिकं ।
वाजपेयिकं ।

कालाधिकारस्य पूर्णोऽवधिः ।
अतः परं सामान्येन प्रत्ययविधानं । ।

---

1. <व्युष्ट-आदिभ्योऽण्># । । PS_५,१.९७ । ।

_______Sठार्ठJKव्_५,१.९७ः

तत्र इति सप्तमीसमर्थेभ्यः व्युष्टादिभ्यः दीयते, कार्यं इत्येतयोरण्प्रत्ययो भवति ।
व्युष्टे दीयते कार्यं वा वैयुष्टं ।
नैत्यं ।
अण्प्रकरणेऽग्निपदादिभ्य उपसङ्ख्यानं ।
आग्निपदं ।
पैलुमूलं ।
किं वक्तव्यम्? न वक्तव्यं ।
अत्र+एव ते पठितव्याः ।
व्युष्ट ।
नित्य ।
निष्क्रमण ।
प्रवेशन ।
तीर्थ ।
सम्भ्रम ।
आस्तरण ।
सङ्ग्राम ।
सङ्घात ।
अग्निपद ।
पीलुमूल ।
प्रवास ।
उपसङ्क्रमण ।
व्युष्टादिः । ।

---

1. <तेन यथाकथाच-हस्ताभ्यां ण-यतौ># । । PS_५,१.९८ । ।

_______Sठार्ठJKव्_५,१.९८ः

दीयते, कार्यं इति वर्तते ।
तेन इति तृतीयासमर्थाभ्यां यथाकथाच-हस्त-शब्दाभ्यां यथासङ्ख्यं ण-यतौ प्रत्ययौ भवतः ।
दीयते, कार्यं इत्येतयोरर्थयोः प्रत्येकं अभिसम्बधः, यथासङ्ख्यं न+इष्यते ।
यथाकथाच-शब्दोऽव्ययसमुदायोऽनादरे वर्तते ।
तृतीयार्थमात्रं च अत्र संभवति, न तु तृतीया समर्थविभक्तिः ।

यथाकथाच दीयते कार्यं वा याथाकथाचं ।
हस्तेन दीयते कार्यं वा हस्त्यं । ।

---

1. <सम्पादिनि># । । PS_५,१.९९ । ।

_______Sठाऽ्ठJKव्_५,१.९९ः

तेन इत्येव ।
तृतीयासमर्थात्सम्पादिन्यभिधेये ठञ्प्रत्ययो भवति ।
गुणोत्कर्षः सम्पत्तिः ।
आवश्यके णिनिः ।
कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखं ।
वास्त्रयुगिकं शरीरं ।
वस्त्रयुगेन विशेषतः शोभते इत्यर्थः । ।

---

[#४९०]

1. <कर्म-वेषाद्यत्># । । PS_५,१.१०० । ।

_______Sठाऽ्ठJKव्_५,१.१००ः

कर्म-वेष-शब्दाभ्यां तृतीयासमर्थाभ्यां यत्प्रत्ययो भवति सम्पादिनि इत्येतस्मिन्विषये ।
ठञोऽपवादः ।
कर्मणा सम्पद्यते कर्मण्यं शरीरं ।
वेषेण संपद्यते वेष्यो नटः । ।

---

1. <तस्मै प्रथवति सन्ताप-आदिभ्याः># । । PS_५,१.१०१ । ।

_______Sठाऽ्ठJKव्_५,१.१०१ः

तस्मै इति चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः प्रभवति इत्यस्मिन्विषये ठञ्प्रत्ययो भवति ।
समर्थः, शक्त प्रभवति इत्युच्यते ।
अलमर्थे चतुर्थी ।

संतापाय प्रभवति सान्तापिकः।
सान्नाहिकः।
सन्ताप।
सन्नाह।
सङ्ग्राम।
संयोग।
संपराय।
संपेष।
निष्पेष।
निसर्ग।
असर्ग।
विसर्ग।
उपसर्ग।
उपवास।
प्रवास।
सङ्घात।
संमोदन।
सक्तुमांसौदनाद्विगृहीतादपि॥

---

1. <योगाद्यच्च># ॥ PS_५,१.१०२ ॥

______Sठा~ठ्JKव्_५,१.१०२ः

योग-शब्दात्यत्प्रत्ययो भवति, चकारात्ठञ्, तस्मै प्रभवति इत्यस्मिन्विषये।
योगाय प्रभवति योग्यः, यौगिकः॥

---

1. <कर्मण उकञ्># ॥ PS_५,१.१०३ ॥

______Sठा~ठ्JKव्_५,१.१०३ः

कर्मन्-शब्दा उकञ्प्रत्ययो भवति तस्मै प्रभवति इत्येतस्मिन्नर्थे।
ठञोऽपवादः।
कर्मणे प्रभवति कार्मुकं धनुः।
धनुषोऽन्यत्र न भवति, अनभिधानात्॥

---

1. <समयस्तदस्य प्राप्तम्># । । PS_५,१.१०४ । ।

______Sठा~ठ्JKव्_५,१.१०४ः

समय-शब्दात्ततिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्राप्तं चेद्तद्भवति ।
समयः प्राप्तोऽस्य सामयिकं कार्यं ।
उपनतकालं इत्यर्थः ।
समर्थविभक्ति-निर्देश उत्तरार्थः । ।

---

1. <ऋतोरण्># । । PS_५,१.१०५ । ।

______Sठा~ठ्JKव्_५,१.१०५ः

तदस्य प्राप्तं इत्यनुवर्तते ।
ऋतु-शब्दात्तदिति प्रथमासमर्थातस्य इति षष्ठ्यर्थे अण्प्रत्ययो भवति तदस्य प्राप्तं इत्येतस्मिन्विषये ।
ऋतुः प्राप्तोऽस्य आर्तवं पुष्पं ।
तदस्य प्रकरणे उपवस्त्रादिभ्यः उपसङ्ख्यानं ।
उपवस्ता प्राप्तोऽस्य औपवस्त्रं ।
प्राशिता प्राप्तोऽस्य प्राशित्रं । ।

---

[#४९१]

1. <छन्दसि घस्># । । PS_५,१.१०६ । ।

______Sठा~ठ्JKव्_५,१.१०६ः

ऋतु-शब्दाच्छन्दसि विषये घस्प्रत्ययो भवति तदस्य प्राप्तं इत्यस्मिन्विसये ।
अणोऽपवादः ।
अयं ते योनिरृत्वियः । ।

---

1. <कालाद्यत्># । । PS_५,१.१०७ । ।

_______Sठा-ठ्JKव्_५,१.१०७:

काल-शब्दात्यत्प्रत्ययो भवति तदस्य प्राप्तं इत्यस्मिन्विषये।
कालः प्राप्तोऽस्य काल्यः तापः।
काल्यं शीतं॥

---

1. <प्रकृष्टे ठञ्>#॥ PS_५,१.१०८॥

_______Sठा-ठ्JKव्_५,१.१०८:

कालातित्येव, तदस्य इति च।
प्राप्तं इति निवृत्तं।
प्रकर्षेण कालो विशेष्यते।
प्रकर्षे वर्तमानात्कालात्प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति।
प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणं।
कालिकं वैरं।
ठञ्-ग्रहणं विस्पष्ट-अर्थं॥

---

1. <प्रयोजनम्>#॥ PS_५,१.१०९॥

_______Sठा-ठ्JKव्_५,१.१०९:

तदस्य इत्येव।
तदिति प्रथमसमर्थातस्य इति षष्ठ्यर्थे ठञ्प्रययो भवति, यत्तत्प्रथमासमर्थं प्रयोजनं चेद्तद्भवति।
इन्द्रमहः प्रयोजनं अस्य ऐन्द्रमहिकं।
गाङ्गामहिकं॥

---

1. <विशाखा-अषाढादण्मन्थ-दण्डयोः>#॥ PS_५,१.११०॥

_______Sठा-ठ्JKव्_५,१.११०:

विशाखा-षढा-शब्दाभ्यां अण्प्रत्ययो भवति तदस्य प्रयोजनं इत्येतस्मिन्विषये यथासङ्ख्यं मन्थ-दण्डयोरभिधेययोः।

विशाखा प्रयोजनं अस्य वैशाखो मन्थः ।
आषाढो दण्डः ।
चूडादिभ्य उपसङ्ख्यानं ।
चूडा प्रयोजनं अस्य चौडं ।
श्रद्धा प्रयोजनं अस्य श्राद्धं । ।

---

1. <अनुप्रवचन-आदिभ्यश्छः># । । PS_५,१.१११ । ।

_______Sठा~ठ्JKव्_५,१.१११ः

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति तदस्य प्रयोजनं इत्यस्मिन्विषये ठञोऽपवादः ।
अनुप्रवचनं प्रयोजनं अस्य अनुप्रवचनीयं ।
उत्थापनीयं ।
विशिपूरिपतिरुहिप्रकृतेरनात्सपूर्वपदादुपसङ्ख्यानं ।
गृहप्रवेशनं प्रयोजनं अस्य गृहप्रवेशनीयं ।
प्रपापूरणीयं ।
अश्वप्रपतिनीयं ।
प्रासादारोहणीयं ।
स्वर्गादिभ्यो यद्वक्तव्यः ।
स्वर्गः प्रयोजनं अस्य स्वर्ग्यं ।
यशस्यं ।
आयुष्यं ।
काम्यं ।
धन्यं ।
[#४९२]

पुण्याहवाचनादीभ्यो लुग्वक्तव्यः ।
पुण्याहवाचनं प्रयोजनं अस्य पुण्याहवाचनं ।
स्वस्तिवाचनं ।
शान्तिवाचनं ।
अनुप्रवचन ।
उत्थापन ।
प्रवेशन ।
अनुप्रवेशन ।
उपस्थापन ।
संवेषन ।
अनुवेशन ।
अनुवचन ।
अनुवादन ।
अनुवासन ।
आरम्भण ।
आरोहण ।
प्ररोहण ।
अन्वारोहण ।

अनुप्रवचनादिः । ।

---

1. <समापनात्सपूर्वपदात्># । । PS_५,१.११२ । ।

_______Sठा~ठ्JKव्_५,१.११२ः

समापन-शब्दात्सपूर्वपदात्विद्यमानपूर्वपदाच्छः प्रत्ययो भवति तदस्य प्रयोजनं इत्येतस्मिन्विषये ।
ठञोऽपवादः ।
छन्दःसमापनं प्रयोजनमस्य छन्दःसमापनीयं ।
व्याकरणसमापनीयं ।
पद-ग्रहणं बहुच्पूर्वनिरासार्थं । ।

---

1. <ऐकागारिकट्चौरे># । । PS_५,१.११३ । ।

_______Sठा~ठ्JKव्_५,१.११३ः

ऐकागारिकटिति निपात्यते चौरेऽभिधेये ।
एकागारं प्रयोजनं अस्य ऐकागारिकः चौरः ।
ऐकागारिकी ।
किं अर्थं इदं निपात्यते, यावता प्रयोजनं इत्येव सिद्धष्ठञ्? चौरे नियमार्थं वचनं ।
इह मा भूत्, एकागारं प्रयोजनं अस्य भिक्षोः इति ।
ठकारः कार्यावधारण-अर्थः, ङीबेव भवति न ञित्स्वरः इति ।
अपरे पुनरिकट्प्रत्ययं वृद्धिं च निपातयन्ति । ।

---

1. <आकालिकड्-आद्यन्तवचने># । । PS_५,१.११४ । ।

_______Sठा~ठ्JKव्_५,१.११४ः

आकालिकटिति निपात्यते आद्यन्तवचने ।
समानकाल-शब्दस्य आकाल-शब्द आदेशः ।
आद्यन्तयोश्च+एतद्विशेषणं ।
इकट्प्रत्ययश्च निपात्यते ।

समानकालौ आद्यन्तौ अस्य आकालिकः स्तनयित्नुः ।
आकालिकी विद्युथ् ।
जन्मना तुल्यकालविनाशा ।
उत्पादानन्तरं विनाशिनीत्यर्थः ।
आकालाट्ठंश्च ।
चात्ठञ्च ।
आकालिका विद्युथ् ।
ठञः पूर्णोऽवधिः । ।

---

1. <तेन तुल्यं क्रिया चेद्वतिः># । । PS_५,१.११५ । ।

______Sठाॅठ्JKव्_५,१.११५ः

तेन इति तृतीयासमर्थात्तुल्यं इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति, यत्तुल्यं क्रिया चेत्सा भवति ।
ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवथ् ।
राजवथ् ।
क्रिया-ग्रहणं किं ? गुणतुल्ये मा भूथ् ।
पुत्रेण तुल्यः स्थूलः ।
पुत्रेण तुल्यो गोमान् । ।

---

[#४९३]

1. <तत्र तस्य+इव># । । PS_५,१.११६ । ।

______Sठाॅठ्JKव्_५,१.११६ः

तत्र इति सप्तमीसमर्थात्तस्य इति षष्ठीसमर्थाच्च इव-अर्थे वतिः प्रत्ययो भवति ।
मथुरायां इव मथुरावत्स्रुघ्ने प्राकारः ।
पाटलिपुत्रवत्साकेते परिखा ।
षष्थीसमर्थात्- देवदत्तस्य इव देवदत्तवत्यज्ञादत्तस्य गावः ।
यज्ञदत्तस्य इव यज्ञदत्तवत्देवदत्तस्य दन्ताः । ।

---

1. <तदर्हम्># । । PS_५,१.११७ । ।

______Sठा~ठ्JKव्_५,१.११७ः

ततिति द्वितीयासमर्थातर्हं इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति ।
राजानं अर्हति राजवत्पालनं ।
ब्राह्मणवतृषिवथ् ।
क्षत्रियवत् । ।

---

1. <उपसर्गाच्छन्दसि धात्व्-अर्थे># । । PS_५,१.११८ । ।

______Sठा~ठ्JKव्_५,१.११८ः

उपसर्गात्ससाधने धात्वर्थे वर्तमानात्स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये ।
यदुद्वतो निवतो यासि वप्सद् ।
उद्गतानि निगतानि च । ।

---

1. <तस्य भावस्त्व-तलौ># । । PS_५,१.११९ । ।

______Sठा~ठ्JKव्_५,१.११९ः

तस्य इति षष्थीसमर्थाद्भावः इत्येतस्म्निन्नर्थे तवतलौ प्रत्ययौ भवतः ।
भवतोऽस्मादभिधानप्रत्ययौ इति भावः ।
शब्दस्य प्रवृत्ति-निमित्तं भाव-शब्देन+उच्यते ।
अश्वस्य भावः अश्वत्वम्, अश्वता ।
गोत्वम्, गोता । ।

---

1. <आ च त्वात्># । । PS_५,१.१२० । ।

______Sठा~ठ्JKव्_५,१.१२०ः

ब्रह्मणस्त्वः (*५,१.१३६) इति वक्ष्यति ।
आ एतस्मात्त्वसंशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः, तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ ।
वक्ष्यति - पृथ्वादिभ्य इमनिज्वा (*५,१.१२२) इति ।
प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता ।

म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता ।
अपवादैः सह समावेशार्थं वचनं ।
कर्मणि च विधानार्थं गुणवचन-ब्राह्मणादिभ्यः कर्मणि च (*५,१.१२४) इति ।
चकारो नञ्स्नञ्भ्यां अपि समावेश-अर्थः ।
स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता ।
पुंसो भावः पुंस्त्वम्, पुंस्ता, प्ऒंस्नं । ।

---

1. <न नञ्पूर्वात्तत्पुरुषादचतुर-सङ्गतल्-अवण-वट-बुध-कत-रस-लसेभ्यः># । । PS_५,१.१२१ । ।

______Sठाऽठ्JKव्_५,१.१२१ः

इत उत्तरे ये भाव. प्रत्ययाः, ते नञ्-पूर्वात्तत्पुरुषात्न भवन्ति चतुरादीन्वर्जयित्वा ।
वक्ष्यति - पत्यन्तपुरोहितादिभ्यो यक्(*५,१.१२८) इति ।
अपतित्वम्, अपतिता ।
अपटुत्वम्, अपटुता ।
अरमणीयत्वम्, अरमणीयता ।
नञ्-पूर्वातिति किं ? बार्हस्पत्यं ।
प्राजापत्यं ।
तत्पुरुषातिति किं ? न अस्य पटवः सन्ति इति अपटुः, तस्य भावः आपटवं ।
आलघवं ।
अचतुरादिभ्यः इति किं ? आचतुर्यं ।
आसङ्गत्यं ।
आलवण्यं ।
आवट्यं ।
आबुध्यं ।
आकत्यं ।
आरस्यं ।
आलस्यं । ।

---

[#४९४]

1. <पृथ्व्-आदिभ्य इमनिज्वा># । । PS_५,१.१२२ । ।

______Sठाऽठ्JKव्_५,१.१२२ः

पृथु इत्येवं आदिभ्यः प्रातिपदिकेभ्यः इमनिच्प्रत्ययो भवति वा तस्य भावः इत्येतस्मिन्नर्थे ।
वावचनं अणादेः समावेश-अर्थं ।
पृथोर्भावः प्रथिमा, पार्थवं ।

म्रदिमा, मार्दवं ।
तुरिष्ठ-इम-ईयःसु (*६,४.१५४), टेः (*६,४.१५५) इति टिलोपः ।
र ऋतो हलदेर्लघोः (*६,४.१६१) इति रेफादेशः ।
त्वतलौ सर्वत्र भवत एव ।
पृथुत्वम्, पृथुता ।
मृदुत्वम्, मुदुता ।
पृथु ।
मृदु ।
महथ् ।
पटु ।
तनु ।
ल्घु ।
बहु ।
साधु ।
वेणु ।
आशु ।
बहुल ।
गुरु ।
दण्ड ।
ऊरु ।
खण्ड ।
चण्ड ।
बाल ।
अकिंचन ।
होड ।
पाक ।
वत्स ।
मन्द ।
स्वादु ।
ह्रस्व ।
दीर्घ ।
प्रिय ।
वृष ।
ऋजु ।
क्षिप्र ।
क्षुप्र ।
क्षुद्र ।
पृथ्वादिः । ।

---

1. <वर्ण-दृढ-आदिभ्यः ष्यञ्च># । । PS_५,१.१२३ । ।

_______Sठा~ठJKव्_५,१.१२३ः

वर्णविशेष-वाचिभ्यः प्रातिपदिकेभ्यो दृढ-आदिभ्यश्च ष्यञ्प्रत्ययो भवति, चकारातिमनिच्च, तस्य भावः इत्येतस्मिन्विषये ।

शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता ।
कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता ।
दृढादिभ्यः - दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता ।
षकारो ङीषर्थः ।
औचिती ।
याथाकामी ।
दृढ ।
परिवृढ ।
भृश ।
कृश ।
चक्र ।
आम्र ।
लवण ।
ताम्र ।
अम्ल ।
शीत ।
उष्ण ।
जड ।
बधिर ।
पण्डित ।
मधुर ।
मूर्ख ।
मूक ।
वेर्यातलाभमतिमनः शारदानां ।
समो मतिमनसोः । ।

---

1. <गुणवचन-ब्राह्मणादिभ्यः कर्मणि च># । । PS_५,१.१२४ । ।

_______Sठा^ठ्JKव्_५,१.१२४ः

गुणं उक्तवन्तो गुणवचनाः ।
गुणवचनेध्यो ब्राह्मणादिभ्यश्च तस्य इति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति ।
चकाराद्भावे च ।
कर्म-शब्दः क्रियावचनः ।
जडस्य भावः कर्म वा जाड्यं ।
ब्राह्मणादिभ्यः खल्वपि - ब्राह्मण्यं ।
माणव्यं ।
आपादपरिसमाप्तेर्भावकर्माधिकारः ।
ब्राह्मणादिराकृतिगणः ।
आदि-शब्दः प्रकारवचनः ।
चतुर्वर्ण्यादिभ्यः स्वार्थे उपसङ्ख्यानं ।
चत्वार एव वर्णाः चातुर्वर्ण्यं ।
चातुराश्रम्यं ।
त्रैलोक्यं ।

त्रैस्वर्यं ।
षाड्गुण्यं ।
सैन्यं ।
सान्निध्यं ।
सामीप्यं ।
औपम्यं ।
सौख्यं ।
ब्राह्मण ।
वाडव ।
माणव ।
चोर ।
मूक ।
आराधय ।
विराधय ।
अपराधय ।
उपराधय ।
एकभाव ।
द्विभाव ।
त्रिभाव ।
अन्यभाव ।
समस्थ ।
विषमस्थ ।
परमस्थ ।
मध्यमस्थ ।
अनीश्वर ।
कुशल ।
कपि ।
चपल ।
अक्षेत्रज्ञ ।
निपुण ।
अर्हतो नुं च आर्हन्त्यं ।
संवादिन् ।
संवेशिन् ।
बहुभाषिन् ।
बालिश ।
दुष्पुरुष ।
कापुरुष ।
दायाद् ।
विशसि ।
धूर्त ।
राजन् ।
संभाषिन् ।
शीर्षपातिन् ।
अधिपति ।
अलस ।
पिशाच ।
पिशुन ।
विशाल ।
गणपति ।

धनपति ।
नरपति ।
गड्डुल ।
निव ।
निधान ।
विष ।
सर्ववेदादिभ्यः स्वार्थे ।
चतुर्वेदस्य+उभयपद-वृद्धिश्च ।
चातुर्वैद्यं ।
इति ब्राह्मणादिः । ।

---

[#४९५]

1. <स्तोनाद्यन्नलोपश्च># । । PS_५,१.१२५ । ।

_______Sठाञ्ठJKव्_५,१.१२५ः

स्तोन-शब्दात्षष्ठीसमर्थाद्भावकर्मणोः यत्प्रत्ययो भवति, न-शब्दस्य लोपश्च भवति ।
स्तोनस्य भावः कर्म वा स्तोयं ।
स्तोनातिति केचिद्योगविभागं कुर्वन्ति ।
स्तोनात्ष्यञ्भवति ।
स्तौन्यं ।
ततो यन्नलोपश्च ।
स्तोयं । ।

---

1. <सख्युर्यः># । । PS_५,१.१२६ । ।

_______Sठाञ्ठJKव्_५,१.१२६ः

सखिशब्दात्यः प्रत्ययो भवति भावकर्मणोरर्थयोः ।
सख्युः भावः कर्म वा सख्यं ।
दूतवणिग्भ्यां च+इति वक्तव्यं ।
दूत्यं ।
वणिज्यं ।
कथं वाणिज्यं ? ब्राह्मणादित्वात् । ।

---

1. <कपि-ज्ञात्योर्ढक्># । । PS_५,१.१२७ । ।

_______Sठाञ्ठJKव्_५,१.१२७ः

कपि-ज्ञाति-शब्दाभ्यां ढक्प्रययो भवति भावकर्मणोरर्थयोः ।
कपेर्भावः कर्म वा कापेयं ।
ज्ञातेयं ।
यथासङ्ख्यं अर्थयोः सर्वत्र+एव अत्र प्रकरणे न+इष्यते । ।

---

1. <पत्यन्तपुरोहितादिभ्यो यक्># । । PS_५,१.१२८ । ।

_______Sठाञ्ठJKव्_५,१.१२८ः

पत्यन्तात्प्रातिपदिकात्पुरोहितादिभ्यश्च यक्प्रत्ययो भवति भावकर्मणोरर्थयोः ।
सेनापतेः भावः कर्म वा सैनापत्यं ।
गार्हपत्यं ।
प्राजापत्यं ।
पौरोहित्यं ।
राज्यं ।
पुरोहित ।
राजन् ।
संग्रामिक ।
एषिक ।
वर्मित ।
खण्डिक ।
दण्डिक ।
छत्रिक ।
मिलिक ।
पिण्डिक ।
बाल ।
मन्द ।
स्तनिक ।
चूडितिक ।
कृषिक ।
पूतिक ।
पत्रिक ।
प्रतिक ।
अजानिक ।
सलनिक ।
सूचिक ।

शाक्वर ।
सूचक ।
पक्षिक ।
सारथिक ।
जलिक ।
सूतिक ।
अञ्जलिक ।
राजासे ।
पुरोहितादिः । ।

---

1. <प्राणभृज्जाति-वयोवचन-उद्गात्रादिभ्योऽञ्># । । PS_५,१.१२९ । ।

_______Sठा~ठJKव्_५,१.१२९ः

प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्च अञ्प्रत्ययो भवति भावक्रमणोरर्थयोः ।
अश्वस्य भावः कर्म वा आश्वं ।
औष्ट्रं ।
वयोवचनेभ्यः क्ॐआरं ।
कैशोरं ।
उद्गात्रादिभ्यः - औद्गात्रं ।
औन्नेत्रं ।
उद्गातृ ।
उन्नेतृ ।
प्रतिहर्तृ ।
रथगणक ।
पक्षिगणक ।
सुष्ठु ।
दुष्ठु ।
अध्वर्यु ।
वधू ।
सुभग मन्त्रे ।
उद्गात्रादिः । ।

---

[#४९६]

1. <हायनान्त-युवादिभ्योऽण्># । । PS_५,१.१३० । ।

_______Sठा~ठJKव्_५,१.१३०ः

हायनान्तेभ्यः प्रातिपदिकेभ्यः युवादिभश्च अण्प्रत्ययो भवति भावकर्मणोरर्थयोः ।
द्विहायनस्य भावः कर्म ना द्वैहायनं ।
त्रैहायनं ।
युवादिभ्यः - यौवनं स्थाविरं ।
श्रोत्रियस्य यलोपश्च वाच्यः ।
श्रोत्रियस्य भावः कर्म वा श्रौत्रं ।
युवन् ।
स्थविर ।
होतृ ।
यजमान ।
कमण्डलु ।
पुरुषासे ।
सुहृथ् ।
यातृ ।
श्रवण ।
कुस्त्री ।
सुस्त्रि ।
मुहृदय ।
सुभ्रातृ ।
वृषल ।
दुर्भ्रातृ ।
हृदयासे ।
क्षेत्रज्ञ ।
कृतक ।
परिव्राजक ।
कुशल ।
चपल ।
निपुण ।
पिशुन ।
सब्रह्मचारिन् ।
कुतूहल ।
अनृशंस ।
युवादिः । ।

---

1. <इग्-अन्ताश्च लघु-पूर्वात्># । । PS_५,१.१३१ । ।

_______Sठाऱ्ठ्JKव्_५,१.१३१ः

इगन्ताच्च लघुपूर्वातण्प्रत्ययो भवति भावकर्मणोः ।
लघुपूर्व-ग्रहणेन प्रातिपदिक-समुदायो विशेष्यते ।
लघुः पूर्वोऽवयवोऽस्य इति लघुपूर्वः ।
कुतः पुनरसौ लघुः पूर्वः ।
इक्-सन्निधानादिकः इति वज्ञायते ।
लघुः पूर्वो यस्मादिकः तदन्तान्प्रातिपदिकादित्ययं अर्थो विवक्षितः ।
अपरे तत्पुरुष-कर्मधारयं वर्णयन्ति ।

इक्चासावन्तश्च इति इगन्तः ।
लघुपूर्व-ग्रहनेन स एव विशेष्यते, पश्चात्तेन प्रातिपदिकस्य तदन्तविधिः इति ।
अस्मिन्व्याख्यानेऽन्त-ग्रहणं अतिरिच्यते ।
लघुपुर्वादिकः इत्येतावदेव वाच्यं स्याथ् ।
शुचेर्भावः कर्म वा शौचं ।
मौनं ।
नागरं हारीतकं ।
पाटवं ।
लाघवं ।
इगन्तातिति किं ? पटत्वं ।
घटत्वं ।
लघुपूर्वातिति किं ? कण्डूत्वं ।
पाण्डुत्वं ।
कथं काव्यं इति ? ब्राह्मणादिषु कविशब्दो द्रष्तव्यः । ।

---

1. <य-उपधाद्गुरु-उपोत्तमाद्वुञ्># । । PS_५,१.१३२ । ।

_______Sठाञ्ठJKव्_५,१.१३२ः

त्रिप्रभृतीनां अन्तस्य समीपं उपोत्तमं ।
गुरुः उपोत्तमं यस्य तद्गुरूपोत्तमं ।
यकारोपधात्गुरूपोत्तमाद्वुञ्प्रत्ययो भवति भावकर्मणोः ।
रमणीयस्य भावः कर्म वा रामणीयकं ।
वासनीयकं ।
योपधातिति किं ? विमानत्वं ।
गुरूपोत्तमातिति किं ? क्षत्रियत्वं ।
सहायाद्वेति वक्तव्यं ।
साहायकम्, साहाय्यं । ।

---

[#४९७]

1. <द्वन्द्व-मनोज्ञ-आदिभ्यश्च># । । PS_५,१.१३३ । ।

_______Sठाञ्ठJKव्_५,१.१३३ः

द्वन्द्व-सञ्ज्ञकेभ्यः मनोज्ञ-आदिभ्यश्च वुञ्प्रत्ययो भवति भावकर्मणोः ।
गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका ।
शैष्योपाध्यायिका ।

कौत्सकुशिकिका।
मनोज्ञाद्भ्यः - मानोज्ञकं।
काल्याणकं।
मनोज्ञ।
कल्याण।
प्रियरूप।
छान्दस।
छात्र।
मेधाविन्।
अभिरूप।
आढ्य।
कुलपुत्र।
श्रोत्रिय।
चोर।
धूर्त।
वैश्वदेव।
युवन्।
ग्रामपुत्र।
ग्रामखण्ड।
ग्रामकुमार।
अमुष्यपुत्र।
अमुष्यकुल।
शतपत्र।
कुशल।
मनोज्ञादिः।।

---

1. <गोत्रचरणाच्छलाघा-अत्याकार-तदवेतेषु>#।। PS_५,१.१३४।।

_______Sठाञ्ठJKव्_५,१.१३४ः

गोत्रवाचिनः चरनवाचिनः च प्रातिपदिकात्वुञ्प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु।
तत्र श्लाघा विकत्थनं।
अत्याकारः पराधिक्षेपः।
तदवेतः तत्प्राप्तः तज्ज्ञो वा।
तदिति गोत्रचरणयोः भावकर्मणी निर्दिश्येते।
तत्प्राप्तः तदवगतवान्दवेत इत्युच्यते।
श्लाघायां तावत्- गार्गिकया श्लाघते।
काठिकया श्लाघते।
गार्ग्यत्वेन कठत्वेन च विकत्थते इत्यर्थः।
अत्याकारे - गार्गिकया अत्याकुरुते।
काठिकया अत्याकुरुते।
गार्ग्यत्वेन कठत्वेन च परानधिक्षिपति इत्यर्थः।
तद्वेतः - गार्गिकामवेतः।
काठिकामवेतः।

गार्ग्यत्वं कठत्वं च प्राप्तः इत्यर्थः ।
तद्वा अवगतवानित्यर्थः ।
श्लाघादिषु इति किं ? गार्ग्यत्वं ।
कठत्वं । ।

---

1. <होत्राभ्यश्छः># । । PS_५,१.१३५ । ।

_______Sठा~ठ्JKव्_५,१.१३५ः

गोत्रा-शब्दः ऋत्विग्विशेष-वचनः ।
ऋत्विग्विशेष-वाचिभ्यः छः प्रत्ययो भवति भावकर्मणोः ।
अच्छावाकस्य भावः कर्म वा अच्छावादीयं ।
मित्रावरुणीयं ।
ब्राह्मणाच्छंसीयं ।
आग्नीध्रीयं ।
प्रतिप्रस्थीत्रियं ।
त्वष्ट्रीयं ।
पोत्रीयं ।
बहुवचनं स्वरूपविधिनिरासार्थं । ।

---

1. <ब्रह्मणस्त्वः># । । PS_५,१.१३६ । ।

_______Sठा~ठ्JKव्_५,१.१३६ः

होत्राभ्यः इत्यनुवर्तते ।
ब्रह्मन्-शब्दाद्होत्रावाचिनः त्वः प्रत्ययो भवति भावकर्मणोः ।
छस्य अपवादः ।
ब्रह्मणो भावः कर्म वा ब्रह्मत्वं ।
न इति वक्तव्ये त्ववचनं तलो बाधनार्थं ।
यस्तु जाति-शब्दो ब्राह्मणपर्यायो ब्रह्मन्-शब्दः, ततः त्वतलौ भवत एव ।
ब्रह्मत्वम्, ब्रह्मता ।
भवनावधिकयोर्नञ्स्तञोरधिकारः समाप्तः । ।
इति काशिकायां वृत्तौ पञ्चमाध्यायस्य प्रथमः पादः

---

पञ्चमाध्यायस्य द्वितीयः पादः ।

---

[#४९८]

1. <धान्यानां भवने क्षेत्रे खञ्># । । PS_५,२.१ । ।

_______Sठा~ठ्JKव्_५,२.१ः

निर्देशादेव समर्थविभक्तिः ।
धान्यविशेष-वाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ्प्रत्ययो भवति, तच्चेद्भवनं क्षेत्रं भवति ।
भवनं इति भवन्ति जायन्तेऽस्मिन्निति भवनं ।
मुद्गानां भवनं क्षेत्रं मौद्गीनं ।
कौद्रवीणं ।
कौलत्थीनं ।
धान्यानां इति किं ? तृणानां भवनं क्षेत्रं इत्यत्र न भवति ।
क्षेत्रं इति किं ? मुद्गानां भवनं कुसूलं ।
बहुवचनं स्वरूपविधिनिरासार्थं । ।

---

1. <व्रीहि-शाल्योर्ढक्># । । PS_५,२.२ । ।

_______Sठा~ठ्JKव्_५,२.२ः

व्रीहि-शालि-शब्दाभ्यां ढक्प्रत्ययो भवति भवने क्षेत्रे अभिधेये खञोऽपवादः ।
व्रीहीणां भवनं क्षेत्रं व्रैहेयं ।
शालेयं । ।

---

1. <यव-यवक-षष्टिकाद्यत्># । । PS_५,२.३ । ।

_______Sठा~ठ्JKव्_५,२.३ः

यवादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये ।
खञोऽपवादः ।
यवानां भवनं क्षेत्रं यव्यं ।
यवक्यं ।
षष्टिक्यं । ।

---

1. <विभाषा तिल-माष-उमा-भङ्गा-अणुभ्यः># । । PS_५,२.४ । ।

_______Sठाऌ़JKव्_५,२.४ः

तिल माष उमा भङ्गा अणु इत्येतेभ्यः विभाषा यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये ।
खञि प्राप्ते वचनं, पक्षे सोऽपि भवति ।
उमाभङ्गयोरपि धान्यत्वं आश्रितं एव ।
तिलानां भवनं क्षेत्रं तिल्यम्, तैलीनं ।
माष्यम्, माषीणं ।
उम्यम्, औमीनं ।
भङ्ग्यम्, भाङ्गीनं ।
अणव्यम्, अणवीनं । ।

---

1. <सर्वचर्मणः कृतः ख-खञौ># । । PS_५,२.५ । ।

_______Sठाऌ़JKव्_५,२.५ः

सर्वचर्मन्शब्दात्तृतीयासमर्थात्कृतः इत्यस्मिन्नर्थे ख-खञौ प्रत्ययौ भवतः ।
सर्वशब्दश्च अत्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा ।
तत्र अयं असमर्थसमासो द्रष्टव्यः ।
सर्वश्चर्मणा कृतः इत्येतस्मिन्वाक्यार्थे वृत्तिः ।
सर्वचर्मीणः, सार्वचर्मीणः । ।

---

[#४९९]

1. <यथामुख-सम्मुखस्य दर्शनः खः># । । PS_५,२.६ । ।

_______Sठाऌ़JKव्_५,२.६ः

यथामुख-शब्दात्सम्मुख-शब्दात्षष्ठीसमर्थाद्दर्शनः इत्येतस्मिन्नर्थे खः प्रत्ययो भवति ।
दृश्यतेऽस्मिनिति दर्शनः आदर्शादिः प्रतिबिम्बाश्रय उच्यते ।
निपातनात्सादृश्येऽव्ययीभावः ।

यथामुखं दर्शनः यथामुखीनः ।
सर्वस्य मुखस्य दर्शनः सम्मुखीनः । ।

---

1. <तत्सर्व-आदेः पथ्य्-अङ्ग-कर्म-पत्र-पात्रं व्याप्नोति># । । PS_५,२.७ । ।

_______Sठा~ठ्JKव्_५,२.७ः

ततिति द्वितीया समर्थविभक्तिः ।
व्याप्नोति इति प्रत्ययार्थः ।
परिशिष्टं प्रकृतिविशेषणं ।
सर्व-आदेः प्रातिपदिकात्पथिनङ्ग कर्मन्पत्र पात्र इत्येवं अन्ताद्द्वितीयासमर्थाद्व्याप्नोति इत्यस्मिन्नर्थे खः प्रत्ययो भवति ।
सर्वपथं व्याप्नोति सर्वपथीनो रथः ।
सर्वाङ्गिणः तापः ।
सर्वकर्मीणः पुरुषः ।
सर्वपत्रीणः सारथिः ।
सर्वपात्रीणः ओदनः । ।

---

1. <आप्रपदं प्राप्नोति># । । PS_५,२.८ । ।

_______Sठा~ठ्JKव्_५,२.८ः

प्रपदं इति पादस्य अग्रं उच्यते ।
आङ्मर्यादायां ।
तयोरव्ययीभावः ।
आप्रपद-शब्दात्तदिति द्वितीयासमर्थात्प्राप्नोति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति ।
आप्रपदं प्राप्नोति आप्रपदीनः पटः ।
शरीरेण असम्बद्धस्य अपि पटस्य प्रमाणं आख्यायते । ।

---

1. <अनुपद-सर्वान्न-अय-अनयं बद्धा-भक्षयति-नेयेषु># । । PS_५,२.९ । ।

_______Sठा~ठ्JKव्_५,२.९ः

अनुपद-आदिभ्यः शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः यथासङ्ख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति ।
अनुः आयामे सादृश्ये वा ।
अनुपदं बद्धा उपानतनुपदीना ।
पदप्रमाणा इत्यर्थः ।
सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः ।
अयः प्रदक्षिणम्, अनयः प्रसव्यं ।
प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परशारैः पदानामसमावेशः सोऽयानयः ।
अयानयं नेयः अयानयीनः शारः ।
फलकशिरःस्थित इत्यर्थः ।।

---

1. <परोवर-परम्पर-पुत्रपौत्रं अनुभवति># ।। PS_५,२.१० ।।

_______Sठा-ठJKव्_५,२.१०ः

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यः तदिति द्वितीयासमर्थेभ्यः अनुभवति इत्यस्मिनर्थे खः प्रत्ययो भवति ।
परोवर इति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते ।
परांश्च अवरांश्च अनुभवति परोवरीणः ।
परपरतराणां च परम्परभावो निपात्यते ।
परांश्च परतरांश्च अनुभवति परम्परीणः ।
पुत्रपौत्राननुभवति पुत्रपौत्रीणः ।
परम्परशब्दो विनापि प्रत्ययेन दृश्यते, मन्त्रिपरम्परा मन्त्रं भिनत्ति इति ।
तच्छब्दान्तरं एव द्रष्टव्यं ।।

---

[#५००]

1. <अवारपार-अत्यन्त-अनुकामं गामी># ।। PS_५,२.११ ।।

_______Sठा-ठJKव्_५,२.११ः

अवारपार अत्यन्त अनुकाम इत्येतेभ्यो द्वितीयासमर्थेभ्यः गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति ।
गमिष्यति इति गामी, भविष्यति गम्यादयः (*३,३.३) इति ।
अक-इनोर्भविस्यद्-आधमर्ण्ययोः (*२,२.७०) ।
इति षष्ठीप्रतिषेधः ।
अवारपारं गामी अवारपारीणः ।
विपरीताच्च ।
पारावारीणः ।
विगृहीतादपि इष्यते ।
अवारीणः ।

अत्यन्तं गामी अत्यन्तीनः ।
भृशं गन्ता इत्यर्थः ।
अनुकामं गामी अनुकामीनः ।
यथा+इष्टं गन्ता इत्यर्थः । ।

---

1. <समांसमां विजायते># । । PS_५,२.१२ । ।

______Sठाऽठ्JKव्_५,२.१२ः

समांसमां इति वीपसा ।
सुबन्तसमुदायः प्रकृतिः ।
विजायते गर्भं धारयति इति प्रत्ययार्थः ।
गर्भधारणेन सकलाऽपि समा व्याप्यते इति अत्यन्तसंयोगे द्वितीया ।
समांसमां विजायते समांसमीना गौः ।
समांसमीना वडवा ।
पूर्वपदे सुपोऽलुग्वक्तव्यः ।
केचित्तु समायां विजायते इति विगृह्णन्ति, गर्भमोचने तु विजनिर्वर्तते इत्याहुः ।
तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्य अलुग्वक्तव्यः ।
अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः ।
समांसमांविजायते, समायां समायां विजायते इति वा । ।

---

1. <अद्यश्वीना अवष्टब्धे># । । PS_५,२.१३ । ।

______Sठाऽठ्JKव्_५,२.१३ः

विजायते इति वर्तते ।
अद्यश्वीन इति निपात्यते अवष्टब्धे विजने, आसन्ने प्रसवे ।
आविदूर्ये हि मूर्धन्यो विधीयते अवाच्च आलम्बन-आविदूर्ययोः (*८,३.६८) इति ।
अद्य वा श्वो वा विजायतेऽद्यश्वीना गौः ।
अद्यश्वीना वडवा ।
केचित्तु विजायते इति न अनुवर्तयन्ति, अवष्टब्धमात्रे निपातनं इत्याहुः ।
अद्यश्वीनं मरणम्, अद्यश्वीनो वियोगः इति । ।

---

[#५०१]

1. <आगवीनः># । । PS_५,२.१४ । ।

______Sठाञ्ठJKव्_५,२.१४ः

आगवीनः इति निपात्यते ।
गोः आङ्पूर्वादा तस्य गोः प्रतिपादनात्कर्मकारिणि खः प्रत्ययो निपात्यते ।
आगवीनः कर्मकरः ।
यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात् । ।

---

1. <अनुग्व्-अलङ्गामी># । । PS_५,२.१५ । ।

______Sठाञ्ठJKव्_५,२.१५ः

गोः पश्चादनुगु ।
अनुगु-शब्दादलङ्गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति ।
अनुगु पर्याप्तं गच्छति अनुगवीनः गोपालकः । ।

---

1. <अध्वनो यत्-खौ># । । PS_५,२.१६ । ।

______Sठाञ्ठJKव्_५,२.१६ः

ततिति द्वितीया समर्थविभक्तिरनुवर्तते ।
अलङ्गामी इति च प्रत्ययार्थः ।
अध्वन्-शब्दात्द्वितीयासमर्थादलङ्गामी इत्येतस्मिन्नर्थे यत्-खौ प्रत्ययौ भवतः ।
अध्वानं अलङ्गामी अध्वन्यः, अध्वनीनः ।
ये च अभवकर्मणोः (*६,४.१६८), आत्म-अध्वानौ खे (*६,४.१६९) इति प्रकृतिभावः । ।

---

1. <अभ्यमित्राच्छ च># । । PS_५,२.१७ । ।

______Sठाञ्ठJKव्_५,२.१७ः

अभ्यमित्र-शदात्द्वितीयासमर्थातलङ्गामी इत्यस्मिन्नर्थे छः प्रत्ययो भवति ।
चकाराद्यत्-खौ च ।
अभ्यमित्रं अलङ्गामी अभ्यमित्रीयः अभमित्र्यः, अभ्यमित्रीणः ।
अमित्राभिमुखं सुष्ठु गच्छति इत्यर्थः । ।

---

1. <गोष्ठात्खञ्भूतपूर्वे># । । PS_५,२.१८ । ।

______Sठा~ठ्JKव्_५,२.१८ः

गावस्तिष्ठन्त्यस्मिनिति गोष्ठं ।
गोष्ठ-शब्देन सन्निहितगोसमूहो देश उच्यते ।
भूतपूर्व-ग्रहणं तस्य+एव विशेषणं ।
गोष्ठ-शब्दाद्भूतपूर्वोपाधिकात्स्वार्थे खञ्प्रत्ययो भवति ।
गोष्ठो भूतपूर्वः गौष्ठीनो देशः ।
भूतपूर्व-ग्रहणं किं ? गोष्ठो वर्तते । ।

---

1. <अश्वस्यैकाहगमः># । । PS_५,२.१९ । ।

______Sठा~ठ्JKव्_५,२.१९ः

निर्देशादेव समर्थविभक्तिः ।
अश्व-शब्दाद्षष्ठीसमर्थातेकाहगमः इत्येतस्मिन्नर्थे खञ्प्रत्ययो भवति ।
एकाहेन गम्यते इति एकाहगमः ।
अश्वस्य एकाहगमोऽध्वा आश्वीनः ।
आश्वीनानि शतं पतित्वा । ।

---

[#५०२]

1. <शालीन-कौपीने अधृष्ट-अकार्ययोः># । । PS_५,२.२० । ।

______Sठा~ठ्JKव्_५,२.२०ः

शालीन-कौपीन-शब्दौ निपात्येते यथासङ्ख्यं अधृष्टे अकार्ये च अभिधेये ।
अधृष्टः अप्रगल्भः ।
अकार्यं अकरणार्हं विरुद्धं ।
शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद्व्युत्पादयितव्यौ ।
शालाप्रवेशनं अर्हति, कूपावतारं अर्हति इति खञ्प्रत्ययः उत्तरपदलोपश्च निपात्यते ।
शालीनो जडः ।
कौपीनं पापं । ।

---

1. <व्रातेन जीवति># । । PS_५,२.२१ । ।

______Sठा~ठ्JKव्_५,२.२१ः

निर्देशादेव तृतीया समर्थविभक्तिः ।
व्रात-शब्दात्तृतीयासमर्थात्जीवति इत्यस्मिन्नर्थे खञ्प्रत्ययो भवति ।
नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः ।
उत्सेधः शरीरं, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषा कर्म व्रातं ।
तेन व्रातेन जीवति व्रातीनः ।
तेषां एव व्रातानामन्यतम उच्यते ।
यस्त्वन्यस्तदीयेन जीवति तत्र न+इष्यते । ।

---

1. <साप्तपदीनं सख्यम्># । । PS_५,२.२२ । ।

______Sठा~ठ्JKव्_५,२.२२ः

साप्तपदीनं इति निपात्यते सख्येऽभिधेये ।
सप्तभिः पदैरवाप्यते साप्तपदीनं ।
सख्यं जनाः साप्तपदीनं आहुः ।
कथं साप्तपदीनः सखा, साप्तपदीनं मित्रं इति ? यदा गुणप्रधानः साप्तपदीन-शब्दः सखिभावे तत्कर्मणि च वर्तते तदा सख्य-शब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्तते तदा पुरुषेण सामानाधिकरण्यं भवति । ।

---

1. <हैयङ्गवीनं सञ्ज्ञायाम्># । । PS_५,२.२३ । ।

______Sठा~ठ्JKव्_५,२.२३ः

हैयङ्गवीनं निपात्यते सञ्ज्ञायां विषये।
ह्योगोदोहस्य हियङ्गवादेशः, तस्य विकारे खञ्प्रत्ययो भवति सञ्ज्ञायां।
ह्योगोदोहस्य विकारः हैयङ्गवीनं।
घृतस्य सञ्ज्ञा।
तेन+इह न भवति, ह्योगोदोहस्य विकार उदश्वित्।।

---

1. <तस्य पाक-मूले पील्वदि-कर्णादिभ्यः कुणब्-जाहचौ>#।। PS_५,२.२४।।

______Sठाऽठ्JKव्_५,२.२४ः

तस्य इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासङ्ख्यं पाक-मूलयोरर्थयोः कुणप्जाहचित्येतौ प्रत्ययौ भवतः।
पीलूनां पाकः पीलुकुणः।
कर्कन्धुकुणः।
कर्णादिभ्यः - कर्णस्य मूलं कर्णजाहं।
पीलु।
कर्कन्धु।
शमी।
करीर।
कुवल।
बदर।
अश्वत्थ।
खदिर।
पील्वादिः।
कर्ण।
अक्षि।
नख।
मुख।
मख।
केश।
पाद।
गुल्फ।
भ्रूभङ्ग।
दन्त।
ओष्ठ।
पृष्ठ।
अङ्गुष्ठ।
कर्णादिः।।

---

[#५०३]

1. <पक्षात्तिः># । । PS_५,२.२५ । ।

_______Sठाऽठ्JKव्_५,२.२५ः
तस्य इत्येव ।
तस्य इति षष्ठीसमर्थात्पक्ष-शब्दात्मूलेऽभिधेये तिः प्रत्ययो भवति ।
मूल-ग्रहणं अनुवर्तते, न पाक्ष-ग्रहणं ।
एकयोगनिर्दिष्टानां अप्येकदेशोऽनुवर्तते इति ।
पक्षस्य मूलं पक्षतिः प्रतिपत् । ।

---

1. <तेन वित्तश्चुञ्चुप्-चणपौ># । । PS_५,२.२६ । ।

_______Sठाऽठ्JKव्_५,२.२६ः

तेन इति तृतीयासमर्थात्वित्तः इत्येतस्मिन्नर्थे चुञ्चुप्चणपित्येतौ प्रत्ययौ भवतः ।
वित्तः प्रतीतः ज्ञात इत्यर्थः ।
विद्यया वित्तः विद्याचुञ्चुः, विद्याचणः । ।

---

1. <वि-नञ्भ्यां ना-नाञौ नसह># । । PS_५,२.२७ । ।

_______Sठाऽठ्JKव्_५,२.२७ः

वि नञित्येताभ्यां यथासङ्ख्यं ना नाञित्येतौ प्रत्ययौ भवतः ।
नसह इति प्रकृतिविशेषणं ।
असहार्थे पृथग्भावे वर्तमानाभ्यां विनञ्भ्यां सवार्थे ना-नाञौ प्रत्ययौ भवतः ।
विना ।
नाना । ।

---

1. <वेः शालच्-छङ्कटचौ># । । PS_५,२.२८ । ।

_______Sठाऽ्ठJKव्_५,२.२८ः

विशदात्शालच्शङ्कटचित्येतौ प्रत्ययौ भवतः।
ससाधनकृइयावचनातुपसर्गात्स्वार्थे प्रत्ययौ भवतः।
विगते शृङ्गे विशाले, विशङ्कटे।
तद्योगाद्गौरपि विशालः, विशङ्कटः इत्युच्यते।
परमार्थतस्तु गुण-शब्दा एते यथाकथञ्चिद्व्युत्पाद्यन्ते।
न अत्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः।।

---

1. <सं-प्र-उदश्च कटच्>#।। PS_५,२.२९।।

_______Sठाऽ्ठJKव्_५,२.२९ः

सं प्र उदित्येतेभ्यः कटच्प्रत्ययो भवति।
चकाराद्वेश्च।
सङ्कटं।
प्रकटं।
उत्कटं।
विकटं।
कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानं।
अलाबूनां रजः अलाबूकटं।
तिलकटं।
उमाकटं।
भङ्गाकटं।
गोष्ठादयः स्थानादिषु पशुनां आदिभ्य उपसङ्ख्यानं।
गवां स्थानं गोगोष्ठं।
महिषीगोष्ठं।
सङ्घाते कटच्वक्तव्यः।

[#५०४]

अवीनां सङ्घातः अविकटं।
विस्तारे पटच्वक्तव्यः।
अविपटं।
द्वित्वे गोयुगछ्।
उष्ट्रगोयुगं।
अश्वगोयुगं।
प्रकृत्यर्थस्य षट्त्वे षङ्गवछ्।
हस्तिषङ्गवं।
अश्वषङ्गवं।
विकारे स्नेहे तैलछ्।
एरण्डतैलं।

इङ्गुदीतैलं।
तिलतैलं।
भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ।
इक्षुशाकटम्, इक्षुशाकिनं।
मूलशाकटम्, मूलशाकिनं।।

---

1. <अवात्कुटारच्च>#।। PS_५,२.३०।।

______Sठा~ठ्JKव्_५,२.३०ः

अव-शब्दात्कुटारच्प्रत्ययो भवति।
चकारात्कटच्।
अवकुटारम्, अबकटं।।

---

1. <नते नासिकायाः सञ्ज्ञायां टीटञ्-नाटज्-भ्रटचः>#।। PS_५,२.३१।।

______Sठा~ठ्JKव्_५,२.३१ः

अवातित्येव।
नमनं नतं।
नासिकायाः सम्बन्धिनि नते अभिधेये टिटच्नाटच्भ्रटचित्येते प्रत्यया भवन्ति सञ्ज्ञायां विषये।
नासिकाया नतं अवटीटम्, अवनाटम्, अवभ्रटं।
तद्योगान्नासिकाऽपि तथा+उच्यते, अवटीटः, अवनाटः, अवभ्रटः इति।।

---

1. <नेर्बिडज्बिरीसचौ>#।। PS_५,२.३२।।

______Sठा~ठ्JKव्_५,२.३२ः
नते नासिकायाः इत्यनुवर्तते, सञ्ज्ञायां इति च।
नि-शब्दान्नासिकाया नतेऽभिधेये बिडच्बिरीसचित्येतौ प्रत्ययौ भवतः।
निबिडम्, निबिरीसं।
तद्योगात्नासिकाऽपि।
पुरुषोऽपि, निबिडः, निबिरीसः।

कथं निबिडाः केशाः, निबिडं वस्त्रं ? उपमानाद्भविष्यति । ।

---

[#५०५]

1. <इनच्पिटच्चिक चि च># । । PS_५,२.३३ । ।

_______Sठान्ठ्JKव्_५,२.३३ः

नेः इत्येव, नते नासिकायाः इति च ।
नि-शब्दान्नासिकाया नतेऽभिधेये इनच्पिटचित्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च नि-शब्दस्य यथासङ्ख्यं चिक चि इत्येतावादेशौ भवतः ।
चिकिनः, चिपिटः । ।
ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्यादेशः ।
चिक्कः ।
तथा च+उक्तं - इनच्-पिटच्-काश्चिकचिचिकादेशाश्च वक्तव्याः इति ।
क्लिन्नस्य चिल्-पिल्लश्च अस्य चक्षुषी ।
क्लिन्नस्य चिल्पिलित्येतावादेशौ भवतः लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मिन्नर्थे ।
क्लिन्ने अस्य चक्षुषी चिल्लः, पिल्लः ।
चुलादेशो वक्तव्यः ।
चुल्लः ।
अस्य इत्यनेन नार्थः ।
चक्षुषोरेव अभिधाने प्रत्यय इष्यते ।
क्लिअन्ने चक्षुषी चिल्ले, पिल्ले चुल्ले ।
तद्योगात्तु पुरुषस्तथा+उच्यते । ।

---

1. <उप-अधिभ्यां त्यकन्नासन्न-आरूढयोः># । । PS_५,२.३४ । ।

_______Sठान्ठ्JKव्_५,२.३४ः

उप अधि इत्येताभ्यां यथासङ्ख्यं आसन्नारूढयोर्वर्तमानाभ्ह्यां स्वार्थे त्यकन्प्रत्ययो भवति ।
सञ्ज्ञाधिकाराच्च नियतविषयं आसन्नारूढं गम्यते ।
पर्वतस्य आसन्नं उपत्यका ।
तस्य+एस्व आरूढं अधित्यका ।
प्रत्ययस्थात्कात्पूर्वस्य इति इत्वं अत्र न भवति, सञ्ज्ञाधिकारादेव । ।

---

1. <कर्मणि घटोऽठच्># । । PS_५,२.३५ । ।

_______Sठा~ठ्JKव्_५,२.३५ः

निर्देशादेव समर्थविभक्तिः ।
कर्म-शब्दात्सप्तमीसमर्थाद्घटः इत्येतस्मिन्नर्थे अठच्प्रत्ययो भवति ।
ङ्हटते इति ङ्हटः ।
कर्मणि ङ्हटते कर्मठः पुरुषः । ।

---

1. <तदस्य सञ्जातं तारका-आदिभ्य इतच्># । । PS_५,२.३६ । ।

_______Sठा~ठ्JKव्_५,२.३६ः

तदिति प्रथमासमर्थेभ्यस्तारका-आदिभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे इतच्प्रत्ययो भवति ।
सञ्जात-ग्रहणं प्रकृति-विशेषणं ।
तारकाः सञ्जाता अस्य नभसः तारकितं नभः ।
पुष्पितो वृक्षः ।
तारका ।
पुष्प ।
मुकुल ।
कण्टक ।
पिपासा ।
सुख ।
दुःख ।
ऋजीष ।
कुड्मल ।
सूचक ।
रोग ।
विचार ।
व्याधि ।
निष्क्रमण ।
मूत्र ।
पुरीष ।
किसलय ।
कुसुम ।
प्रचार ।
तन्द्रा ।
वेग ।
पुक्षा ।
श्रद्धा ।
उत्कण्ठा ।
भर ।

द्रोह ।
गर्भादप्राणिनि ।
तारकादिराकृतिगणः । ।

---

[#५०६]

1. <प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः># । । PS_५,२.३७ । ।

_______Sठा~ठ्JKव्_५,२.३७ः

तदस्य इत्यनुवर्तते ।
तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे द्वयसच्दघ्नच्मात्रचित्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति ।
ऊरुः प्रमाणं अस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रं ।
जानुद्वयसं ।
जानुदघ्नं ।
जानुमात्रं ।
प्रथमश्च द्वितियश्च ऊर्ध्वमाने मतौ मम ।
ऊरुद्वयसं उदकं ।
ऊरुदघ्नं उदकं ।
मात्रच्पुनरविशेषेण, प्रस्थमात्रं इत्यपि भवति ।
प्रमाणे लो वक्तव्यः ।
प्रमाण-शब्दा इति ये प्रसिद्धाः, तेभ्य उत्पन्नस्य प्रत्ययस्य लुग्भवति ।
शमः प्रमाणमस्य शमः ।
दिष्टिः ।
वितस्तिः ।
द्विगोर्नित्यं ।
द्वौ शमौ प्रमाणं अस्य द्विशमः ।
त्रिशमः ।
द्विवितस्तिः ।
नित्य-ग्रहणं किं ? संशये श्राविणं वक्ष्यति, तत्र अपि द्विगोर्लुगेव यथा स्याथ् ।
द्वे दिष्टी स्यातां वा न वा द्विदिष्टिः ।
डिट्स्तोमे वक्तव्यः ।
पञ्चदशः स्तोमः ।
पञ्चदशी रात्रिः ।
टित्त्वाद्ङीप् ।
शन्शतोर्डिनिर्वक्तव्यः ।
पञ्चदशिनोऽर्धमासाः, त्रिंशिनो मासाः ।
विंशतेश्चेति वक्तव्यं ।
विंशिनोऽङ्गिरसः ।
प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्च अपि संशये मात्रच्वक्तव्यः ।
शममात्रं ।
दिष्टिमात्रं ।
प्रस्थमात्रं ।
कुडवमात्रं ।
पञ्चमात्रं ।

दशमात्रा गावः।
वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं।
तावदेव तावद्द्वयसम्, तावन्मात्रं।
एतावद्द्वयसम्, एतावन्मात्रं।
यावद्द्वयसम्, यावन्मात्रं।।

---

[#५०७]

1. <पुरुष-हस्तिभ्यां अण्च>#।। PS_५,२.३८।।

_______Sठा्ठ्JKव्_५,२.३८ः

तदस्य इत्येव, प्रमाणे इति च।
पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यां अस्य इति षष्ठ्यार्थे अण्प्रत्ययो भवति, चकाराद्द्वयसजादयः।
पुरुषः प्रमाणं अस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदघ्नम्, पुरुषमात्रं।
हास्तिनम्, हस्तिद्वयसम्, हस्तिदघ्नम्, हस्तिमात्रं।
द्विगोर्नित्यं लुक्।
द्विपुरुषं उदकं।
त्रिपुरुषं उदकं।
द्विहस्ति।
त्रिहस्ति।
द्विपुरुषी।
त्रिपुरुषी।
द्विहस्तिनि।
त्रिहसिनी।।

---

1. <यत्-तद्-एतेभ्यः परिमाणे वतुप्>#।। PS_५,२.३९।।

_______Sठा्ठ्JKव्_५,२.३९ः
तदस्य इत्येव।
यत्-तद्-एतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः अस्य इति षष्ठ्यर्थे वतुप्प्रत्ययो भवति।
यत्परिमाणं अस्य यावान्।
तावान्।
एतावान्।
प्रमाण-ग्रहणेऽनुवर्तमाने परिमाण-ग्रहणं प्रमाणपरिमाणयोर्भेदाथ्।
डावताव्-अर्थवैशेष्यान्निर्देशः पृथगुच्यते।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः।
वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानं।

न त्वा वां अन्यो दिव्यो न पीर्थिवो अ जातो न जनिस्यते ।
त्वावतः पुरूवसो यज्ञं विप्रस्य मावतः ।
त्वत्सदृशस्य, मत्सदृशस्य इत्यर्थः । ।

---

1. <किम्-इदम्-भ्यां वो घः># । । PS_५,२.४० । ।

_______Sठा~ठ्JKव्_५,२.४०ः

किम्-इदम्-भ्यां उत्तरस्य वतुपो वकारस्य घकारादेशो भवति ।
कियान् ।
इयान् ।
एतदेव चादेशविधानं ज्ञापकं किमिदम्भ्यां वतुप्-प्रत्ययो भवति इति ।
अथ वा योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते । ।

---

1. <किमः सङ्ख्यापरिमाणे डति च># । । PS_५,२.४१ । ।

_______Sठा~ठ्JKव्_५,२.४१ः

सङ्ख्यायाः परिमाणं सङ्ख्यापरिच्छेदः इत्यर्थः ।
सङ्ख्यापरिमाणे वर्तमानात्किमः प्रथमासमर्थादस्य इति षष्ठ्यर्थे डतिः प्रत्ययो भवति, चकाराद्वतुप् ।
तस्य च वकारस्य घादेशो भवति ।
पृच्छ्यमानत्वात्परिच्छेदोपाधिकायां सङ्ख्यायां वर्तमानात्किमः प्रत्ययो विज्ञायते ।

[#५०८]

का सङ्ख्या परिमाणं एषां ब्राह्मणानां कति ब्राह्मणाः, कियन्तो ब्राह्मणाः ।
अथ वा सङ्ख्या+एव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते, का सङ्ख्या परिमाणं येषां इति ।
ननु च सङ्ख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते ? यत्र अपरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति ।
क्षेपे हि परिच्छेदो न अस्ति, केयं एषां सङ्ख्या दशानां इति । ।

---

1. <सङ्ख्याया अवयवे तयप्># । । PS_५,२.४२ । ।

_______Sठाञ्ठ्JKव्_५,२.४२ः

तदस्य इत्येव।
सङ्ख्याया अवयवे वर्तमानायाः अस्य इति षष्ठ्यर्थे तयप्प्रत्ययो भवति।
अवयवावयविनः सम्बन्धिनः इति सामर्थ्यातवयवी प्रत्ययार्थो विज्ञायते।
पञ्च अवयवा यस्य पञ्चतयं।
दशतयं।
चतुष्टयं।
चतुष्टयी।।

---

1. <द्वि-त्रिभ्यां तयस्य अयज्वा>#।। PS_५,२.४३।।

_______Sठाञ्ठ्JKव्_५,२.४३ः

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वा अयजादेशो भवति।
द्वौ अवयवौ अस्य द्वयम्, द्वितयं।
त्रयम्, त्रितयं।
तय-ग्रहणं स्थानिनिर्देशार्थं।
अन्यथा प्रत्ययान्तरं अयज्विज्ञायेत।
तत्र को दोषः ? त्रयी गतिः इति तयनिबन्धन ईकारो न स्यात्, प्रथम-चरम-तय-अल्प-अर्ध-कतिपय. नेमाश्च (*१,१.३३)।
इत्येष विधिर्न स्याथ्।
द्वये।
द्वयाः।
चकारः स्वरार्थः।।

---

1. <उभादुदात्तो नित्यम्>#।। PS_५,२.४४।।

_______Sठाञ्ठ्JKव्_५,२.४४ः

उभ-शब्दात्परस्य तयपो नित्यं अयजादेशो भवति, स चोदात्तः।
वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते।
उभशब्दो यति लौकिकी सङ्ख्या ततः पूर्वेण+एव विहितस्य तयप आदेशविधानार्थं वचनं।
अथ न सङ्ख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यं अयजादेशो विधीयते।
उभयो मणिः।
उभयेऽस्य देवमनुष्याः।।

---

1. <तदस्मिन्नधिकं इति दशान्ताड्डः># । । PS_५,२.४५ । ।

_______Sठाऱ्ठJKव्_५,२.४५ः

ततिति प्रथमासमर्थातस्मिनिति सप्तम्यर्थे दशान्तात्प्रातिपदिकात्डः प्रत्ययो भवति यत्तत्प्रथमासमर्थं अधिकं चेत्तद्भवति ।
इतिकरणस्ततश्चेद्विवक्षा ।
एकादश अधिका अस्मिनशते एकादशं शतं ।
एकादशं सहस्त्रं ।
द्वादशं शतं ।
द्वादशं सहस्रं ।
दशान्तातिति किं ? पञ्च अधिका अस्मिन्शते ।
अन्त-ग्रहणं किं ? दशाधिका अस्मिन्शते ।

[#५०९]

प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते ।
एकादश कार्षापणा अधिका अस्मिन्कार्षापणशते एकादशं कार्षापनशतं इति ।
इह तु न भवति, एकादश माषा अधिका अस्मिन्कार्षापणशते इति ।
शतसहस्रयोश्च+इष्यते ।
इह न भवति, एकादशाधिका अस्यां त्रिंशति इति ।
इतिकरणो विवक्षार्थ इत्युक्तं, तत इदं सर्वं लभ्यते ।
कथं एकादशं शतसहस्रं इति ? शतानां सहस्रं, सहस्राणां वा शतं इति शतसहस्रं इत्युच्यते ।
तत्र शतसहस्रयोः इत्येव सिद्धं ।
अधिके समानजाताविष्टं शतसहस्रयोः ।
यस्य सङ्ख्या तदाधिक्ये डः कर्तव्यो मतो मम । ।

---

1. <शदन्त-विंशतेश्च># । । PS_५,२.४६ । ।

_______Sठाऱ्ठJKव्_५,२.४६ः

तदस्मिन्नधिकं इत्यनुवर्तते, डः इति च ।
शदन्तात्प्रातिपदिकात्विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकं इत्येतस्मिन्विषये ।
त्रिंशदधिका अस्मिञ्छते त्रिंशं शतं ।
शद्-ग्रहनेऽन्त-ग्रहनं प्रत्यय-ग्रहणे यस्मात्स तदादेरधिकार्थं ।
एकत्रिंश शतं ।
एकचत्वारिंशं शतं ।
सङ्ख्या-ग्रहणं च कर्तव्यं ।
इह मा भूत्, गोत्रिंशदधिका अस्मिन्गोशते इति ।

विंशतेश्च ।
विशं शतं ।
तदन्तादपि इति वक्तव्यं ।
एकविंशं शतं ।
सङ्ख्या-ग्रहणं च कर्तव्यं ।
इह मा भूत्, गोविंशतिरधिकाऽस्मिन्गोशते इति । ।

---

1. <सङ्ख्याया गुणस्य निमाने मयट्># । । PS_५,२.४७ । ।

______Sठा-ठ्JKव्_५,२.४७ः
तदस्य इत्यनुवर्तते तदस्य सञ्जातं इत्यतः ।
तदिति प्रथमासमर्थात्सङ्ख्यावाचिनः प्रातिपदिकातस्य इति षष्ठ्यर्थे मयट्प्रत्ययो भवति यत्तत्प्रथमासमर्थं गुणस्य चेन्निमाने वर्तते ।
गुणो भागः निमानं मूल्यं ।
गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद्भाग एव विज्ञायते ।
यवानां द्वौ भागौ निमानं अस्य उदश्विद्भागस्य द्विमयमुदश्विद्यवानां ।
त्रिमयं ।
चतुर्मयं ।
भागेऽपि तु विधीयामानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे ।
तेन सामान्याधिकरण्यं भवति द्विमयमुदश्वितिति ।
गुणस्य इति चैकत्वं विवक्षितं, तेन+इह न भवति, द्वौ भागौ यवानां त्रय उदश्वितः इति ।

[#५१०]

भूयसश्च वाचिकायाः सङ्ख्यायाः प्रत्यय इष्यते ।
इह न भवति, एको भागो निमानमस्य इति ।
भूयसः इति च प्रत्ययार्थात्प्रकृत्यर्थस्य अधिक्यमात्रं विवक्षितं ।
बहुत्वमतन्त्रं, तेन द्विशब्दादपि भवति ।
गुणशब्दः समानावय्ववचनः ।
तेन+इह न भवति, द्वौ भागौ यवानां अध्यर्ध उदश्वितः इति ।
निमेये चापि दृश्यते ।
निमेये वर्तमानायाः सङ्ख्याया निमाने प्रत्ययो दृश्यते ।
उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः ।
त्रिमया यवा उदश्वितः ।
चतुर्मयाः ।
गुणस्य इति किं ? द्वौ व्रीहियवौ निमानमस्य+उदश्वितः ।
निमाने इति किं ? द्वौ गुणौ क्षीरस्य एकस्तैलस्य, द्विगुणं पच्यते तैलं क्षीरेण इत्यत्र मा भूत् । ।

---

1. <तस्य पूरणे डट्># । । PS_५,२.४८ । ।

______Sठाञ्ठJKव्_५,२.४८ः

तस्य इति षष्ठीसमर्थात्सङ्ख्यावाचिनः प्रातिपदिकात्पूरणे इत्यस्मिन्नर्थे डट्प्रत्ययो भवति ।
पूर्यतेऽनेन इति पूरणं ।
येन सङ्ख्या सङ्ख्यानं पूर्यते सम्पद्यते, स तस्याः पूरणः ।
एकादशानां पूरणः एकदशः ।
त्रयोदशः ।
यस्मिन्नुपसञ्जातेऽन्या सङ्ख्या सम्पद्यते स प्रत्ययार्थः ।
इह न भवति, पञ्चानां मुष्टिकानां पूरणो घटः इति । ।

---

1. <न अन्तादसङ्ख्या-आदेर्मट्># । । PS_५,२.४९ । ।

______Sठाञ्ठJKव्_५,२.४९ः

डटिति वर्तते ।
नकारान्तात्सङ्ख्यावाचिनः प्रातिपदिकातसंख्यादेः परस्य डटो मडागमो भवति ।
नान्तातिति पञ्चमी इट आगमसम्बन्धे षष्ठीं प्रकल्पयति ।
पञ्चानां पूरणः पञ्चमः ।
सप्तमः ।
नान्तातिति किं ? विंशतेः पूरणः विंशः ।
असङ्ख्यादेः इति किं ? एकादशानां पूरणः एकादशः । ।

---

1. <थट्च छन्दसि># । । PS_५,२.५० । ।

______Sठाञ्ठJKव्_५,२.५०ः

नान्तादसङ्ख्यादेः परस्य डटः छन्दसि विषये थडागमो भवति ।
चकारात्पक्षे मडपि भवति ।
पर्णमयानि पञ्चथानि भवन्ति ।
पञ्चथः ।
सप्तथः ।
मट्- पञ्चममिन्द्रियस्यापाक्रामत् । ।

---

[#५११]

1. <षट्-कति-कतिपय-चतुरां थुक्># । । PS_५,२.५१ । ।

_______Sठा{ठJKव्_५,२.५१ः

डटिति अनुवर्तते,

[#५१०]

तदिह सप्तम्या विपरिणम्यते ।
षट्कति कतिपय चतुरित्येषां डटि पुरतस्थुगागमो भवति ।
कतिपयशब्दो न सङ्ख्या ।
तस्य अस्मादेव ज्ञापकात्डट्प्रत्ययो विज्ञायते ।
षण्णां पुरणः षष्ठः ।
कतिथः ।
कतिपयथः ।
चतुर्थः ।
चतुरश्छयतावाद्यक्षरलोपश्च ।
चतुर्णां पूरणः तुरीयः, तुर्यः । ।

---

[#५११]

1. <बहु-पूग-गण-सङ्घस्य तिथुक्># । । PS_५,२.५२ । ।

_______Sठा{ठJKव्_५,२.५२ः

डटित्येव ।
बहु पूग गन सङ्घ इत्येतेषां डटि परतः तिथुगागमो भवति ।
पूगसङ्घशब्दयोरसङ्ख्यात्वादिदं एव ज्ञापकं डटो भावस्य ।
बहूनां पूरणः बहुतिथः ।
पूगतिथः ।
गणतिथः ।
सङ्घतिथः । ।

---

1. <वतोरिथुक्># । । PS_५,२.५३ । ।

______Sठाऱ्ठJKव्_५,२.५३ः

डटित्येव।
वतोर्डटि परतः इथुगागमो भवति।
वत्वन्तस्य संख्यात्वात्पूर्वेण डड्विहितः, तस्मिन्नयं आगमः विधीयते।
यावतां पूरणः यावतिथः।
तावतिथः।
एतावतिथः।।

---

1. <द्वेस्तीयः>#।। PS_५,२.५४।।

______Sठाऱ्ठJKव्_५,२.५४ः

द्विशब्दात्तीयः प्रत्ययो भवति तस्य पूरणे इत्यस्मिन्विषये।
डटोऽपवादः।
द्व्योः पूरणः द्वितीयः।।

---

1. <त्रेः सम्प्रसारणं च>#।। PS_५,२.५५।।

______Sठाऱ्ठJKव्_५,२.५५ः

त्रिशब्दात्तीयः प्रत्ययः भवति तस्य पूरणे इत्येतद्विषये।
डटोऽपवादः।
तत्संनियोगेन त्रेः संप्रसारणं च भवति।
त्रयाणां पूरणः तृतीयः।
हलः (*६,४.२.) इति संप्रसारणस्य दीर्घत्वं न भवति।
अणः इति तत्र अनुवर्तते ढ्रलोपे इत्यतः।
पूर्वेण च णकारेण अण्ग्रहणं।।

---

[#५१२]

1. <विंशत्य्-आदिभ्यस्तमडन्यतरस्याम्>#।। PS_५,२.५६।।

______Sठा-ठ्JKव्_५,२.५६ः

विंशत्य्-आदिभ्यः परस्य डटः तमडागमो भवत्यन्यतरसयां ।
पूरणाधिकाराड्डट्प्रत्यय आगमी विज्ञायते ।
विंशतेः पूरणः विंशतितमः, विंशः ।
एकविंशतितमः, एकविंशः ।
त्रिविंशतितमः, त्रिविंशः ।
त्रिंशत्तमः, त्रिंशः ।
एकत्रिंशत्तमः, एकत्रिंशः ।
विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादि-सूत्र-संनिविष्टाः ।
तद्ग्रहणे ह्येकविंशतिप्रभुऋतिभ्यो न स्याथ् ।
ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाथ् ।
एवं च सति षष्ट्यादेश्च असङ्ख्यादेः (*५,२.५८) इति पर्युदासोयुज्यत एव । ।

---

1. <नित्यं शतादि-मास-अर्धमास-संवत्सराच्च># । । PS_५,२.५७ । ।

______Sठा-ठ्JKव्_५,२.५७ः

शतादयः संख्याशब्दाः लौकिका गृह्यन्ते ।
शतादिभ्यः मासार्धमाससंवत्सरशदेभ्यश्च परस्य डटो नित्यं तमडागमः भवति ।
मासादयः संख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकाड्डट्प्रत्ययो विज्ञायते ।
शतस्य पूरणः शततमः ।
सहस्रतमः ।
लक्षतमः ।
मासस्य पूरनः मासतमो दिवसः ।
अर्धमासतमः ।
संवत्सरतमः ।
षष्ट्यादेश्च असङ्ख्यादेः (*५,२.५८) इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं सङ्ख्याद्यर्थं ।
एकशततमः ।
द्विशततमः । ।

---

1. <षष्ट्यादेश्च असङ्ख्यादेः># । । PS_५,२.५८ । ।

______Sठा-ठ्JKव्_५,२.५८ः

षष्ट्यादेः सङ्ख्याशब्दादसङ्ख्यादेः परस्य डटो नित्यं तमडागमः भवति ।
विंशत्यादिभ्यः इति विकल्पेन प्राप्ते नित्यार्थं ।

षष्टितमः ।
सप्ततितमः ।
असंख्यादेः इति किं ? एकषष्टः, एकषष्टितमः ।
एकसप्ततः, एकसप्ततितमः । ।

---

1. <मतौ छः सूक्त-साम्नोः># । । PS_५,२.५९ । ।

_______Sठाऱ्ठ्JKव्_५,२.५९ः

मतौ इति मत्वर्थ उच्यते ।
प्रातिपदिकान्मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि च अभिधेये ।
मत्वर्थ-ग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषनं, प्रत्ययार्थः इति सर्वं आक्षिप्यते ।
अच्छावाक-शब्दोऽस्मिन्निति अच्छावाकीयं सूक्तं ।
मित्रावरुणीयं ।
यज्ञायज्ञीयं साम ।
वारवन्तीयं ।
अनुकरन-शब्दाश्च स्वरूपामात्र-प्रधानाः प्रत्ययं उत्पादयन्ति ।
तेन अनेकपदादपि सिद्धं ।
अस्यवमीयं ।
कयाषुभीयं । ।

---

[#५१३]

1. <अध्याय-अनुवाकयोर्लुक्># । । PS_५,२.६० । ।

_______Sठाऱ्ठ्JKव्_५,२.६०ः

मतौ इत्येव ।
मत्वर्थे उत्पन्नस्य छस्य लुक्भवति अध्यायानुवाकयोः अभिधेययोः ।
केन पुनरध्यायानुवाकयोः प्रत्ययः ? इदं एव लुग्-वचनं ज्ञापकं तद्विधानस्य ।
विकल्पेन लुगयं इष्यते ।
गर्दभाण्डशब्दोऽस्मिन्निति गर्दभाण्डोऽध्यायः, अनुवाको वा गर्दभान्डीयः ।
दीर्घजीवितः, दीर्घजीवितीयः ।
पलितस्तम्भः, पलितस्तम्भीयः । ।

---

1. <विमुक्त-आदिभ्योऽण्># । । PS_५,२.६१ । ।

_______Sठा\~ठ्JKव्_५,२.६१ः

मतौ इत्येव, अध्यायानुवाकयोः इति च ।
विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण्प्रत्ययो भवति मत्वर्थे अध्यायानुवाकयोरभिधेययोः ।
विमुक्त-शब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः अनुवाको वा ।
दैवासुरः ।
विमुक्त ।
देवासुर ।
वसुमथ् ।
सत्वथ् ।
उपसथ् ।
दशार्हपयस् ।
हविर्द्धान ।
मित्री ।
सोमापूषन् ।
अग्नाविष्णु ।
वृत्रहति ।
इडा ।
रक्षोसुर ।
सदसथ् ।
परिषादक् ।
वसु ।
मरुत्वथ् ।
पत्नीवथ् ।
महीयल ।
दशार्ह ।
वयस् ।
पतत्रि ।
सोम ।
महित्री ।
हेतु ।
विमुक्तादिः । ।

---

1. <गोषदादिभ्यो वुन्># । । PS_५,२.६२ । ।

_______Sठा\~ठ्JKव्_५,२.६२ः

मतौ इत्येव, अध्यायानुवाकयोः इति च।
गोषदादिभ्यः प्रातिपदिकेभ्यः वुन्प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोः।
गोषदशब्दोऽस्मिन्निति गोषडकोऽध्यायोऽनुवाको वा।
इषेत्वकः।
मातरिश्वकः।
गोषद।
इषेत्वा।
मातरिश्वन्।
देवस्यत्वा।
देवीरापः।
कृष्णोस्याख्यरेष्टः।
दैवींधियं।
रक्षोहण।
अञ्जन।
प्रभूत।
प्रतूर्त।
कृशानु।
गोषदादिः।।

---

1. <तत्र कुशलः पथः>#।। PS_५,२.६३।।

______Sठाऽ्ठ्JKव्_५,२.६३ः

वुनित्येव।
तत्र इति सप्तमीसमर्थात्पथिन्शब्दात्कुशलः इत्यस्मिन्नर्थे वुन्प्रत्ययो भवति।
पथि कुशलः पथकः।।

---

1. <आकर्शादिभ्यः कन्>#।। PS_५,२.६४।।

______Sठाऽ्ठ्JKव्_५,२.६४ः

तत्र इत्येव, कुशलः इति च।
आकर्शादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः कुशलः इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति।
आकर्षे कुशलः आकर्षकः।
त्सरुकः।
आकर्ष।
त्सरु।
पिप्पसा।

पिचण्ड ।
अशनि ।
अश्मन् ।
विचय ।
चय ।
जय ।
आचय ।
अय ।
नय ।
निपाद ।
गद्गद ।
दीप ।
ह्रद ।
ह्लाद ।
ह्लाद ।
शकुनि ।
आकर्शादिः । ।

---

[#५१४]

1. <धन-हिरण्यात्कामे># । । PS_५,२.६५ । ।

_______Sठाऱ्ठ्JKव्_५,२.६५ः

तत्र इत्येव, कनिति च ।

[#५१३]

धन-हिरण्य-शब्दाभ्यां तत्र इति सप्तमीसमर्थाभ्यां कामे इत्यस्मिन्नर्थे कन्प्रत्ययो भवति ।
कामः इच्छा, अभिलाषः ।
धने कामः धनको देवदत्तस्य ।
हिरण्यको देवदत्तस्य । ।

---

[#५१४]

1. <स्वाङ्गेभ्यः प्रसिते># । । PS_५,२.६६ । ।

_______Sठाऱ्ठ्JKव्_५,२.६६ः

तत्र इत्येव, कनिति च।
स्वाङ्गवाचिभ्यः शब्देभ्यः तत्र इति सप्तमीसमर्थेभ्यः प्रसिते इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति।
प्रसितः प्रसक्तस्तत्परः इत्यर्थः।
केशेषु प्रसितः केशकः।
केशादिरचनायां प्रसक्त एवं उच्यते।
बहुवचनं स्वाङ्ग-समुदाय-शब्दादपि यथा स्याथ्।
दन्तौष्ठकः।
केशनखकः।।

---

1. <उदराड्गगाद्यूने>#।। PS_५,२.६७।।

______Sठा~ठ्JKव्_५,२.६७ः

तत्र इत्येव, प्रसिते इति च।
उदरशब्दात्सप्तमीसमर्थात्प्रसिते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति।
आध्यूने इति प्रत्ययार्थविशेषणं।
उदरेऽविजिगीषुर्भण्यते।
यो बुभुक्षयाऽत्यन्तं पीड्यते स एवं उच्यते।
उदरे प्रसितः औदरिकः आद्यूनः।
आद्यूने इति किं? उदरकः।।

---

1. <सस्येन परिजातः>#।। PS_५,२.६८।।

______Sठा~ठ्JKव्_५,२.६८ः

कन्प्रत्ययः इत्येव स्वर्यते, न ठक्।
निर्देशादेव तृतीयासमर्थविभक्तिः।
सस्य-शब्दात्तृतीयासमर्थात्परिजातः इत्यस्मिन्नर्थे कन्प्रत्ययो भवति।
सस्यशब्दोऽयं गुणवाचि।
परिः सर्वतो भावे वर्तते।
यो गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं न अस्ति, तस्य+इदं अभिधानं।
सस्येन परिजातः सस्यकः शालिक।
सस्यकः साधुः।
सस्यको मणिः।
आकरशुद्ध इत्यर्थः।।

---

1. <अंशं हारि># । । PS_५,२.६९ । ।

_______Sठाञ्ठ्JKव्_५,२.६९ः

अंशशब्दान्निर्देशादेव द्वितियासमर्थाद्हारी इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति ।
अंशं हारी अंशको दायादः ।
अंशकः पुत्रः ।
हारी इति आवश्यके णिनिः ।
तत्र षष्ठीप्रतिषेधात्कर्मणि द्वितीया एव भवति । ।

---

[#५१५]

1. <तन्त्राद्-अचिर-अपहृते># । । PS_५,२.७० । ।

_______Sठाञ्ठ्JKव्_५,२.७०ः

तन्त्रशब्दान्निर्देशादेव पञ्चमीसमर्थातचिरापहृते इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति ।
अचिरापहृतः स्तोककालापहृतः इत्यर्थः ।
तन्त्रादचिरापहृतः तन्त्रकः पटः ।
तन्त्रकः प्रावारः ।
प्रत्यग्रो नव उच्यते । ।

---

1. <ब्राह्मणक-उष्णिके सञ्ज्ञायाम्># । । PS_५,२.७१ । ।

_______Sठाञ्ठ्JKव्_५,२.७१ः

ब्राह्मणक उष्णिक इत्येतौ शब्दौ निपात्येते कन्प्रत्ययान्तौ सञ्ज्ञायां विषये ।
ब्राह्मणको देशः ।
उष्णिका यवागूः ।
यत्र अयुधजीविनो ब्राह्मणाः सन्ति तत्र ब्राह्मणकः इति सञ्ज्ञा ।
अल्पान्ना यवागूः उष्णिका इत्युच्यते । ।

---

1. <शीतोष्णाभ्यां कारिणि># । । PS_५,२.७२ । ।

_______Sठा~ठ्JKव्_५,२.७२ः

शीतोष्णा-शब्दाभ्यां कारिण्यभिधेये कन्प्रत्ययो भवति ।
क्रियाविशेषणाद्द्वितीयासमर्थादयं प्रत्ययः ।
शीतं करोति शीतकः ।
अलसो, जड उच्यते ।
उष्णं करोति उष्णकः ।
शीघ्रकारी, दक्ष उच्यते । ।

---

1. <अधिकम्># । । PS_५,२.७३ । ।

_______Sठा~ठ्JKव्_५,२.७३ः

अधिकं इति निपात्यते ।
अध्यारूढस्य उत्तरपदलोपः कन्च प्रत्ययः ।
अधिको द्रोणः खार्यां ।
अधिका खारी द्रोणेन ।
कर्तरि कर्मणि च अध्यारूढशब्दः । ।

---

1. <अनुक-अभिक-अभीकः कमिता># । । PS_५,२.७४ । ।

_______Sठा~ठ्JKव्_५,२.७४ः

अनुक अभिक अभीक इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते कमिता इत्येतस्मिन्नर्थे ।
अभेः पक्षे दीर्घत्वं चनिपात्यते ।
अनुकामयते अनुकः ।
अभिकः ।
अभीकः । ।

---

1. <पार्श्वेन अन्विच्छति># । । PS_५,२.७५ । ।

_______Sठाञ्ठ्JKव्_५,२.७५ः

पार्श्वशब्दात्तृतीयासमर्थादन्विच्छति इत्यस्मिन्नर्थे कन्प्रत्ययो भवति ।
अनृजुरुपायः पार्श्वम्, तेन अर्थानन्विच्छति पार्श्वकः ।
मायावी, कौसृतिकः, जालिकः उच्यते । ।

---

1. <अयःशूल-दण्ड-अजिनाभ्यां ठक्-ठञौ># । । PS_५,२.७६ । ।

_______Sठाञ्ठ्JKव्_५,२.७६ः

अन्विच्छति इत्येव ।
अयःशूल-दण्ड-अजिनाह्ब्यां तृतीयासमर्थाभ्यां अन्विच्छति इत्येतस्मिन्नर्थे ठक्ट्-हञौ प्रत्ययौ भवतः ।
तीक्ष्णः उपायः अयञ्शूलं उच्यते ।
तेन अन्विच्छति आयःशूलिकः साहसिकः इत्यर्थः दम्भो दण्डाजिनम्, तेन अन्विच्छति दाण्डाजिनिकः ।
दाम्भिकः इत्यर्थः । ।

---

[#५१६]

1. <तावतिथं ग्रहणं इति लुग्वा># । । PS_५,२.७७ । ।

_______Sठाञ्ठ्JKव्_५,२.७७ः

तावतां पूरणं तावतिथां ।
गृह्यतेऽनेन इति ग्रहणं ।
प्रकृतिविशेषणं च+एतथ् ।
पूरणप्रत्ययान्तात्प्रातिपदिकात्ग्रहणोपाधिकात्स्वार्थे कन्प्रत्ययो भवति ।
पूरणस्य प्रत्ययस्य वा लुक् ।
द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकं ।
त्रिकम्, तृतीयकं ।
चतुष्कम्, चतुर्थकं ।
तावतिथेन गृह्णाति इति कन्वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् ।
षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः ।

पञ्चकः ।
चतुष्कः ।
इतिकरणो विवक्षार्थः ।
तेन ग्रन्थविषयं एव ग्रहणं विज्ञायते, न अन्यविषयं । ।

---

1. <स एषां ग्रामणीः># । । PS_५,२.७८ । ।

_______Sठाञ्ठ्JKव्_५,२.७८ः

स इति प्रथमासमर्थातेषां इति षष्ठ्यर्थे कन्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं ग्रामणीश्चेत्स भवति ।
ग्रामणीः प्रधानः, मुख्यः इत्यर्थः ।
देवदत्तः ग्रामणीः एषां देवदत्तकाः ।
ब्रह्मदत्तकाः ।
ग्रामणीः इति किं ? देवदत्तः शत्रुरेषां । ।

---

1. <शृङ्खलं अस्य बन्धनं करभे># । । PS_५,२.७९ । ।

_______Sठाञ्ठ्JKव्_५,२.७९ः

शृङ्खल-शब्दात्प्रथमासमर्थादस्य इति षष्ठ्यर्थे कन्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं बन्धनं चेद्तद्भवति, यत्तदस्य इति निर्देष्टं करभश्चेत्स भवति ।
शृङ्खलं बन्धनं अस्य करभस्य शृङ्खलकः ।
उष्ट्राणां बालकाः करभाः ।
तेषां काष्ठमयं पाशकं पादे व्यातिषज्यते, तदुच्यते शृङ्खलं इति ।
यद्यपि रज्ज्वादिकं अपि तत्र अस्ति तथापि शृङ्खलं अस्य अस्वतन्त्रीकरणे भवति साधनं इति बन्धनं इत्युच्यते । ।

---

1. <उत्क उनमनाः># । । PS_५,२.८० । ।

_______Sठाञ्ठ्JKव्_५,२.८०ः

उत्कः इति निपात्यते, उन्मनाश्चेद्स भवति ।
उद्गतं मनो यस्य स उन्मनाः ।
उच्-छब्दात्ससाधनक्रियावचनात्तद्वति कन्प्रत्ययो निपात्यते ।

उत्को देवदत्तः ।
उत्कः प्रवासी ।
उत्सुकः इत्यर्थः । ।

---

1. <काल-प्रयोजनाद्रोगे># । । PS_५,२.८१ । ।

______Sठान्ठ्JKव्_५,२.८१ः

अर्थलभ्या समर्थविभक्तिः ।
कालात्प्रयोजनाच्च यथायोगं समर्थविभक्तियुक्तात्रोगेऽभिधेये कन्प्रत्ययो भवति ।
कालो देवसादिः ।
प्रयोजनं कारणं रोगस्य फलं वा ।
द्वितीयेऽह्नि भवो द्वितीयको ज्वरः ।
चतुर्थकः ।
प्रयोजनात्- विषपुष्पैर्जनितो विषपुष्पको ज्वरः ।
काशपुष्पकः ।
उष्णं कार्यं अस्य उष्णको ज्वरः ।
शीतको ज्वरः ।
उत्तरसूत्रातिह सञ्ज्ञाग्रहणं अपकृष्यते ।
तेन अयं प्रकारनियमः सर्वो लभ्यते । ।

---

[#५१७]

1. <तदस्मिन्नन्नं प्राये सञ्ज्ञायाम्># । । PS_५,२.८२ । ।

______Sठान्ठ्JKव्_५,२.८२ः

ततिति प्रथमासमर्थादस्मिनिति सप्तम्यर्थे कन्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं अन्नं चेत्प्रायविषयं तद्भवति ।
प्रायो बाहुल्यं ।
सञ्ज्ञाग्रहण तदन्तोपाधिः ।
गुडापूपाः प्रायेण अन्नं अस्यां पौर्णमास्यां गुडापूपिका ।
तिलापूपिका पौर्णमासी ।
वटकेभ्य इनिर्वक्तव्यः ।
वटकिनी पौर्णमासी । ।

---

1. <कुल्माषादञ्># । । PS_५,२.८३ । ।

_______Sठा-ठ्JKव्_५,२.८३ः

कुल्माष-शब्दातञ्प्रत्ययो भवति, तदस्मिन्नन्नं प्राये सञ्ज्ञायां (*५,२.८२) इत्येतस्मिन्नर्थे ।
ञकारो वृद्धिस्वरार्थः ।
कुल्माषाः प्रायेण अन्नमस्यां कौल्माषी पौर्णमासी । ।

---

1. <श्रोत्रियं श्छन्दोऽधीते># । । PS_५,२.८४ । ।

_______Sठा-ठ्JKव्_५,२.८४ः

श्रोत्रियनिति निपात्यते छन्दोऽधीते इत्येतस्मिन्नर्थे ।
नकारः स्वरार्थः ।
श्रोत्रियो ब्राह्मणः ।
श्रोत्रियंश्छन्दोऽधीते इति वाक्यार्थे पदवचनम्, छन्दसो वा श्रोत्रभावः, तदधीते इति घन्च प्रत्ययः ।
कथं छन्दोऽधीते छन्दसः ? बाग्रहणं अनुवर्तते तावतिथं ग्रहणं इति लुग्वा (*५,२.७७) इत्यतः । ।

---

1. <श्राद्धं अनेनन्भुक्तं इनि-ठनौ># । । PS_५,२.८५ । ।

_______Sठा-ठ्JKव्_५,२.८५ः

श्राद्धं इति प्रकृतिः ।
अनेन इति प्रत्ययार्थः ।
भुक्तं इति प्रकृतिविशेषणं ।
श्राद्धशब्दाद्भुक्तोपाधिकादनेन इत्यस्मिन्नर्थे इनिठनौ प्रत्ययौ भवतः ।
श्राद्ध-शब्दः कर्मनामधेयं तत्साधनद्रव्ये वर्तित्वा प्रत्ययं उत्पादयति ।
श्राद्धं भुक्तं अनेन श्राद्धी, श्राद्धिकः ।
इनिठनोः समानकालग्रहणं कर्तव्यम्, अद्य भुक्ते श्राद्धे श्वः श्राद्धिकः इति मा भूत् । ।

---

1. <पूर्वादिनिः># । । PS_५,२.८६ । ।

_______Sठाञ्ठJKव्_५,२.८६ः

अनेन इति प्रत्ययार्थः कर्ताऽनुवर्तते ।
न च क्रियां अन्तरेण कर्ता सम्भवति इति यां काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधेयः ।
पूर्वातनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति ।
पूर्वं गतं अनेन पीतं भुक्तं वा पूर्वी, पूर्विणौ, पूर्विणः । ।

---

[#५१८]

1. <सपूर्वाच्च># । । PS_५,२.८७ । ।

_______Sठाञ्ठJKव्_५,२.८७ः

विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः ।
सपूर्वात्प्रतिपदिकात्पूर्वशब्दान्तातनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति ।
पूर्वं कृतं अनेन कृतपूर्वी कटं ।
भुक्तपूर्वी ओदनं ।
सुप्सुपा इति समासं कृत्वा तद्धित उत्पाद्यते ।
योगद्वयेन च अनेन पूर्वादिनिः (*५,२.८६), सपूर्वच्च (*५,२.८७) इति परिभाषाद्वयं ज्ञाप्यते, व्यपदेशिवद्भावोऽप्रातिपदिकेन, ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न अस्ति इति । ।

---

1. <इष्ट-आदिभ्यश्च># । । PS_५,२.८८ । ।

_______Sठाञ्ठJKव्_५,२.८८ः

अनेन इत्येव इष्टादिभ्यः प्रातिपदिकेभ्यः अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति ।
इष्टमनेन इष्टी यज्ञे ।
पूर्ती श्राद्धे ।
क्तस्येन्विषयस्य कर्मणि इति सप्तम्युअसङ्ख्यायते ।
इष्ट ।
पूर्त ।
उपसादित ।
निगदित ।
परिवादित ।
निकथित ।
परिकथित ।
सङ्कलित ।

निपठित ।
सङ्कल्पित ।
अनर्चित ।
विकलित ।
संरक्षित ।
निपतित ।
पठित ।
परिकलित ।
अर्चित ।
परिरक्षित ।
पूजित ।
परिगणित ।
उपगणित ।
अवकीर्ण ।
परित ।
आयुक्त ।
आम्नात ।
श्रुत ।
अधीत ।
आसेवित ।
अपवारित ।
अवकल्पित ।
निराकृत ।
उपकृत ।
उपाकृत ।
अनुयुक्त ।
उपनत ।
अनुगुणित ।
अनुपठित ।
व्याकुलित ।
निगृहीत ।
इष्टादिः । ।

---

1. <छन्दसि परिपन्थि-परिपरिणौ पर्यवस्थातरि># । । PS_५,२.८९ । ।

______Sठाॅ्ठ्JKव्_५,२.८९:

परिपन्थिन्परिपरिनित्येतौ शब्दौ छन्दसि विषये निपात्येते, पर्यवस्थातरि वाच्ये ।
पर्यवस्थाता प्रतिपक्षः, सप्त्न उच्यते ।
मा त्वा परिपन्थिनो विदन्मा त्वा परिपरिणो विदन् । ।

---

1. <अनुपद्य्-अन्वेष्टा># ।। PS_५,२.९० ।।

_______Sठा~ठ्JKव्_५,२.९०ः

अनुपदी इति निपात्यते अन्वेष्टा चेत्स भवति ।
पदस्य पश्चादनुपदं ।
अनुपदी गवां ।
अनुपदी उष्ट्राणां ।।

---

1. <साक्षाद्द्रष्टरि सञ्ज्ञायाम्># ।। PS_५,२.९१ ।।

_______Sठा~ठ्JKव्_५,२.९१ः

साक्षाच्-छब्दोऽव्ययं ।
तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये ।
सञ्ज्ञाग्रहणं अभिधेयनियम-अर्थं ।
साक्षाद्द्रष्टा साक्षी ।
साक्षिणौ ।
साक्षिणः ।
सञ्ज्ञाग्रहणादुपद्रष्टा एव उच्यते, न दाता ग्रहीता वा ।।

---

[#५१९]

1. <क्षेत्रियच्परक्षेत्रे चिकित्स्यः># ।। PS_५,२.९२ ।।

_______Sठा~ठ्JKव्_५,२.९२ः

क्षेत्रियचिति निपात्यते परक्षेत्रे चिकित्स्यः इत्येतस्मिन्वाक्यार्थे पदवचनं ।
परक्षेत्राद्तत्र इति सप्तमीसमर्थात्चिकित्स्यः इत्येतस्मिन्नर्थे घच्प्रत्ययः परशब्दलोपश्च निपात्यते ।
परक्षेत्रे चिकित्स्यः क्षेत्रेयो व्याधिः ।
क्षेत्रियं कुष्ठं ।
परक्षेत्रं जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः ।
असाध्यः प्रत्याख्येयो व्याधिरुच्यते ।

नामृतस्य निवर्तते इत्यर्थः ।
अथ वा क्षेत्रियं विषं यत्परक्षेत्रे परशरीरे संक्रमय्य चिकित्सते ।
अथ वा क्षेत्रियाणि तृणानि यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि नाशयितव्यानि ।
अथ वा क्षेत्रियः पारदारिकः ।
परदाराः परक्षेत्रं तत्र चिकित्स्यः निग्रहीतव्यः ।
सर्वं च+एतत्प्रमाणं । ।

---

1. <इन्द्रियम्-इन्द्रलिङ्गम्-इन्द्रदृष्टम्-इन्द्रसृष्टम्-इन्द्रजुष्टम्-इन्द्रदत्तं इति वा># । । PS_५,२.९३ । ।

______Sठा~ठ्JKव्_५,२.९३ः

इन्द्रियं इत्यन्तोदात्तं शब्दरूपं निपात्यते ।
रूढिरेषा चक्षुरादिनां करणानं ।
तथा च व्युत्पत्तेरनियमं दर्शयति ।
इन्द्र-शब्दात्षष्ठीसमर्थात्लिङ्गं इत्येतस्मिन्नर्थे घच्-प्रत्ययो भवति ।
इन्द्रस्य्लिङ्गं इन्द्रियं ।
इन्द्र आत्मा, स चक्षुरादिना करणेन अनुमीयते ।
नाकर्तृकं करणं अस्ति ।
इन्द्रेण दृष्टं ।
तृतीयासमर्थात्प्रत्ययः ।
आत्मना दृष्टं इत्यर्थः ।
इन्द्रेण सृष्टम्, आत्मना सृष्टं ।
तत्कृतेन शुभाशुभकर्मणोत्पन्नं इति कृत्वा ।
इन्द्रेण जुष्टम्, आत्मना जुष्टं, सेवितं ।
तद्द्वारेण विज्ञानोत्पादनाथ् ।
इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय ।
इतिकरणः प्रकारार्थः ।
सति सम्भवे व्युत्पत्तिरन्यथाऽपि कर्तव्या, रूढेरनियमातिति ।
वाशब्दः प्रत्येकं अभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति । ।

---

1. <तदस्य अस्त्यस्मिन्निति मतुप्># । । PS_५,२.९४ । ।

______Sठा~ठ्JKव्_५,२.९४ः

टतिति प्रथमा समर्थविभक्तिः ।
अस्य अस्मिनिति प्रत्ययार्थौ ।
अस्ति इति प्रकृतिविशेषणं ।
इतिकरणो विवक्षार्थः ।

तदिति प्रथमासमर्थादस्य+इति षष्ठ्यार्थेऽस्मिन्निति सप्तम्यर्थे वा मतुप्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं अस्ति चेत्तद्भवति ।
अस्त्यर्थोपाधिकं चेद्तद्भवति इत्यर्थः ।
इतिकरणस्ततश्चेद्विवक्षा ।
गावोऽस्य सन्ति गोमान्देवदत्तः ।
वृक्षाः अस्मिन्सन्ति वृक्षवान्पर्वतः ।
यवमान् ।
प्लक्षवान् ।
इति करणाद्विषयनियमः ।
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः । ।

[#५२०]

भूम्नि तावत्- गोमान् ।
निन्दायां - कुष्ठी ।
ककुदावर्तिनी ।
प्रशंसायां - रूपवती कन्या ।
नित्ययोगे - क्षीरिणो वृक्षाः ।
अतिशायने - उदरिणी कन्या ।
संसर्गे - दण्डी ।
छत्री ।
अस्तिविवक्षायां - अस्तिमान् ।
गुणवचनेभ्यो मतुपो लुग्वक्तव्यः ।
शुक्लो गुणोऽस्य अस्ति शुक्लः पटः ।
कृष्णः ।
श्वेतः । ।

---

1. <रसादिभ्यश्च># । । PS_५,२.९५ । ।

______Sठान्ठJKव्_५,२.९५ः

रसादिभ्यः प्रातिपदिकेभ्यः मतुप्प्रत्ययो भवति तदस्य अस्त्यस्मिनित्येतस्मिन्विषये ।
रसवान् ।
रूपवान् ।
किमर्थं इदं उच्यते, न पूर्वसूत्रेण+एव मतुप्सिद्धः ? रसादिभ्यः पुनर्वचनं अन्यनिवृत्त्यर्थम्, अन्ये मत्वर्थीया मा भूवन्निति ।
कथं रूपिणी कन्या, रूपिको दारकः ? प्रायिकं एतद्वचनं ।
इतिकरणो विवक्षार्थोऽनुवर्तते ।
अथ वा गुणातिति अत्र पठ्यते ।
तेन ये रसनेन्द्रियादिग्राह्या गुणाः, तेषां अत्र पाठः ।
इह मा भूत्, रूपिणी, रूपिकः इति ।
शोभायोगो गम्यते ।
रसिको नटः इत्यत्र भावयोगः ।
रस ।

रूप ।
गन्ध ।
स्पर्श ।
शब्द ।
स्नेह ।
गुणाथ् ।
एकाचः ।
गुन-ग्रहणं रसादीनां विशेषणं । ।

---

1. <प्राणिस्थादातो लजन्यतरस्याम्># । । PS_५,२.९६ । ।

_______Sठा¬ठ्JKव्_५,२.९६ः

प्राणिस्थवाचिनः शब्दाताकारान्तात्लच्प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे ।
चूडालः, चूडावान् ।
कर्णिकालः, कर्णिकावान् ।
प्राणिस्थातिति किं ? शिखावान्प्रदीपः ।
आतिति किं ? हस्तवान् ।
पादवान् ।
प्राण्यङ्गादिति वक्तव्यं ।
इह मा भूत्, चिकीर्षाऽस्य अस्ति चिकीर्षावान्, जिहीर्षाऽस्य अस्ति जिहीर्षावान् ।
प्रत्ययस्वरेण+एव अन्तोदात्तत्वे सिद्धे, चकारश्चूडालोऽस्ति इत्यत्र स्वरितो वानुदत्ते पदादौ (*८,२.६) इति स्वरितबाधनार्थः । ।

---

1. <सिध्म-आदिभ्यश्च># । । PS_५,२.९७ । ।

_______Sठा¬ठ्JKव्_५,२.९७ः
लजन्यतरस्यां इति वर्तते ।
सिध्मादिभ्यः प्रातिपदिकेभ्यो लच्प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे ।
सिध्मलः, सिध्मवान् ।
गडुलः, गडुमान् ।
अन्यतरस्यां ग्रहणेन मतुप्समुच्चीयते, न तु प्रत्ययो विकल्प्यते ।
तस्मातकारान्तेभ्यः इनिठनौ प्रत्ययौ न भवतः ।
सिध्म ।
गडु ।
मणि ।
नाभि ।
जीव ।
निष्पाव ।

पांसु ।
सक्तु ।
हनु ।
मांस ।
परशु ।
पार्ष्णिधमन्योर्दीर्घश्च ।
पार्ष्णीलः ।
धमनीलः ।
पर्ण ।
उदक ।
प्रज्ञा ।
मण्ड ।
पार्श्व ।
गण्ड ।
ग्रन्थि ।
वातदन्तबलललाटानामूङ्च ।

[#५२१]

वातूलः ।
दन्तूलः ।
बलूलः ।
ललाटूलः ।
जटाघटाकलाः क्षेपे ।
जटालः ।
घटालः ।
कलालः ।
सक्थि ।
कर्ण ।
स्नेह ।
शीत ।
श्याम ।
पिङ्ग ।
पित्त ।
शुष्क ।
पृथु ।
मृदु ।
मञ्जु ।
पत्र ।
चटु ।
कपि ।
कण्डु ।
सञ्ज्ञा ।
क्षुद्रजन्तूपतापाच्च+इष्यते ।
क्षुद्रजन्तु - यूकालः ।
मक्षिकालः ।
उपताप - विचर्चिकालः ।
विपादिकालः ।
मूर्च्छालः ।

सिध्मादिः । ।

---

1. <वत्सांसाभ्यां कामबले># । । PS_५,२.९८ । ।

_______Sठाऽ्ठJKव्_५,२.९८ः

वत्सांसशब्दाभ्यां लच्प्रत्ययो भवति यथासङ्ख्यं कामवति बलवति च अर्थे ।
वत्सलः ।
अंसलः ।
वृत्तिविषये वत्सांसशब्दौ स्वभावात्कामबलयोर्वर्तमानौ तद्वति प्रत्ययं उत्पादयतः ।
न ह्यत्र वत्सार्थः अंसार्थो वा विद्यते ।
वत्सलः इति स्नेहवानुच्यते, वत्सलः स्वामी, वत्सलः पिता इति ।
अंसलः इति च उपचितमांसो बलवानुच्यते ।
न च अयं अर्थो मतुपि सम्भवति इति नित्यं लजेव भवति ।
अन्यत्र अंसवती गौः, अंसवान्दुर्बलः । ।

---

1. <फेनादिलच्च># । । PS_५,२.९९ । ।

_______Sठाऽ्ठJKव्_५,२.९९ः

फेनशब्दातिलच्प्रत्ययो भवति मत्वर्थे ।
चकारात्लच्च ।
अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं सर्वत्र+एव अनुवर्तते ।
हेनिलः, फेनलः, फेनवान् । ।

---

1. <लोमादि-पामादि-पिच्छादिभ्यः श-न-इलचः># । । PS_५,२.१०० । ।

_______Sठाऽ्ठJKव्_५,२.१००ः

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासङ्ख्यं श न इलचित्येते प्रत्यया भवन्ति मत्वर्थे, मतुप्च ।
लोमादिभ्यः शो भवति - लोमशः, लोमवान् ।
पामादिभ्यो नो भवति - पामनः, पामवान् ।

पिछादिभः इलच्भवति - पिच्छिलः, पिच्छवान् ।
उरसिलः, उरस्वान् ।
लोमन् ।
रोमन् ।
वल्गु ।
बभ्रौ ।
हरि ।
कपि ।
शुनि ।
तरु ।
लोमादिः ।
पामन् ।
वामन् ।
हेमन् ।
श्लेष्मन् ।
कद्रु ।
बलि ।
श्रेष्ठ ।
पलल ।
सामन् ।
अङ्गात्कल्याणे ।
शाकीपललीदद्र्वां ह्रस्वत्वं च ।
विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ।
लक्ष्म्या अच्च ।
पामादिः ।
पिच्छ ।
उरस् ।
घ्रुवका ।
क्षुवका ।
जटाघटाकलाः क्षेपे ।
वर्ण ।
उदक ।
पङ्क ।
प्रज्ञा ।
पिच्छादिः । ।

---

1. <प्रज्ञा-श्रद्धा-अर्चा-वृत्तिभ्यो णः># । । PS_५,२.१०१ । ।

_______Sठाऱ्ठ्JKव्_५,२.१०१ः
प्रज्ञा श्रद्धा अर्चा वृत्ति इत्येतेभ्यः णः प्रत्ययो भवति मतुबर्थे ।
मतुप्सर्वत्र समुच्चीयते ।
प्राज्ञः, प्रज्ञावान् ।
श्राद्धाः, स्रद्धावान् ।
आर्चः, अर्चावान् ।

वार्त्तः, वृत्तिमान् । ।

---

[#५२२]

1. <तपः-सहस्राभ्यां विनि-इनी># । । PS_५,२.१०२ । ।

_______Sठाञ्ठJKव्_५,२.१०२ः

तपः-सहस्र-शब्दाभ्यां विनि इनि इत्येतौ प्रत्ययौ भवतः मत्वर्थे ।
प्रत्ययार्थयोस्तु यथासङ्ख्यं सर्वत्र+एव अस्मिन्प्रकरणे निस्यते ।
तपोऽस्य अस्मिन्वा विद्यते तपस्वी ।
सहस्री ।
असन्तत्वाददन्तत्वाच्च सिद्धे प्रत्यये पुनर्वचनं अणा वक्ष्यमाणेन बाधा मा भूतिति ।
सहस्रात्तु ठनपि बाध्यते । ।

---

1. <अण्च># । । PS_५,२.१०३ । ।

_______Sठाञ्ठJKव्_५,२.१०३ः

तपः-सहस्राभ्यां अण्च प्रत्ययो भवति ।
तापसः ।
साहस्रः ।
योगविभाग उत्तरार्थः, यथासङ्ख्यार्थश्च ।
अण्प्रकरणे ज्योत्स्नादिभ्य उप्सङ्ख्यानं ।
ज्योत्स्ना विद्यतेऽस्मिन्पक्षे ज्यौत्स्नः पक्षः ।
तामिस्रः ।
कौण्डलः ।
कौतपः ।
वैसर्पः ।
वौपादिकः । ।

---

1. <सिकता-शर्कराभ्यां च># । । PS_५,२.१०४ । ।

_______Sठा~ठJKव्_५,२.१०४ः

सिकता-शर्कराभ्यां अण्प्रत्ययो भवति मत्वर्थे ।
सैकतो घटः ।
शार्करं मधु ।
अदेशे इह+उदाहरणं ।
देशे तु लुबिलचौ भविष्यतः । ।

---

1. <देशे लुब्-इलचौ च># । । PS_५,२.१०५ । ।

_______Sठा~ठJKव्_५,२.१०५ः

सिकताशर्कराभ्यां देशेऽभिधेये लुब्-इलचौ भवतः ।
चकारादण्च, मतुप्च ।
कस्य पुनरयं लुप्? मतुबादीनां अन्यतमस्य, विशेषाभावाथ् ।
सिकता अस्मिन्विद्यते सिकता देशः, सिकतिलः, सैकतः, सिकतावान् ।
एवं शर्करा देशः, शर्करिलः, शार्करः, शर्करावान् ।
देशे इति किं ? सैकतो घटः ।
शार्करं मधु । ।

---

1. <दन्त उन्नत उरच्># । । PS_५,२.१०६ । ।

_______Sठा~ठJKव्_५,२.१०६ः

उन्नत इति प्रकृतिविशेषणं ।
दन्तशब्दादुनतोपाधिकादुरच्प्रत्ययो भवति मवर्थे ।
दन्ता उन्नता अस्य सन्ति दन्तुरः उन्नत इति किं ? दन्तवान् । ।

---

1. <ऊष-सुषि-मुष्क-मधो रः># । । PS_५,२.१०७ । ।

_______Sठा~ठJKव्_५,२.१०७ः

ऊष सुषि मष्क मधु इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे ।
ऊषरं क्षेत्रं ।
सुषिरं काष्ठं ।
मुष्करः पशुः ।
मधुरो गुडः ।

[#५२३]

इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति ।
इह न भवति, ऊषोऽस्मिन्घटे विद्यते, मधु अस्मिन्घटे विद्यते इति ।
रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानं ।
खमस्य अस्ति कण्ठविवरं महत्खरः ।
मुखं अस्य अस्ति इति सर्वस्मिन्वक्तव्ये मुखरः ।
कुञ्जावस्य स्तः कुञ्जरः ।
हस्तिहनू कुञ्जशब्देन+उच्येते ।
नगपांसुपाण्डुभ्यश्च+इति वक्तव्यं ।
नगरं ।
पांसुरं ।
पाण्डुरं ।
कच्छ्वा ह्रस्वत्वं च ।
कच्चुरं ।।

---

1. <द्यु-द्रुभ्यां मः># ।। PS_५,२.१०८ ।।

_______Sठा~ठJKव्_५,२.१०८ः

द्यु-द्रु-शब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे ।
द्युमः ।
द्रुमः ।
रूढिशब्दौ एतौ ।
रूढिषु मतुप्पुनर्न विकल्प्यते ।।

---

1. <केशाद्वोऽन्यतरस्याम्># ।। PS_५,२.१०९ ।।

______Sठा~ठ्JKव्_५,२.१०९ः

केशशब्दाद्वः प्रत्ययो भवति मत्वर्थे अन्यतरस्यां।
ननु च प्रकृतं अन्यतरस्यां ग्रहणं अनुवर्तत एव ? मतुप्समुचायार्थं तदित्युक्तं।
अनेन तु इनिठनौ प्रप्येते।
ततश्चातूरूप्यं भवति, केशवः, केशी, केशिकः, केशवानिति।
वप्रकरणेऽन्येभ्योऽपि दृश्यते इति वक्तव्यं।
मणिवः।
हिरण्यवः।
कुररावः।
कुमारावः।
कुञ्जावः।
राजीवं।
इष्टकावः।
विम्बावः।
अर्णसो लोपश्च।
अर्णवः।
छन्दसीवनिपौ च वक्तवयौ।
रथीरभून्मुद्गलानी गविष्ठौ।
सुमङ्गलीरियं वधूः।
वनिप्- मघवानमीमहे।
वकारामतुपौ च।
उद्वा च उद्वती च।
मेधारथाभ्यामिरन्निरचौ वक्तव्यौ।
मेधिरः।
रथिरः।।

---

[#५२४]

1. <गाण्ड्यजगात्सञ्ज्ञायाम्>#।। PS_५,२.११०।।

______Sठा~ठ्JKव्_५,२.११०ः

गाण्दी अजग इत्येताभ्यां वः प्रत्ययो भवति सञ्ज्ञायां विषये मत्वर्थे।
गान्दीवं धनुः।
अजगवं धनुः।
ह्रस्वादपि भवति गाण्डिवं धनुः इति।
तत्र तुल्या हि संहिता दीर्घ-ह्रस्वयोः।
उभयथा च सूत्रं प्रणीतं।।

---

1. <काण्ड-आण्डादीरन्न्-ईरचौ># । । PS_५,२.१११ । ।

_______Sठाऽठ्JKव्_५,२.१११ः

काण्ड अण्ड इत्येताभ्यां यथासङ्ख्यं ईरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे ।
काण्डीरः ।
अण्डीरः । ।

---

1. <रजः-कृष्य्-आसुति-परिषदो वलच्># । । PS_५,२.११२ । ।

_______Sठाऽठ्JKव्_५,२.११२ः

रजः-प्रभृतिभ्यः प्रातिपदिकेभ्यः वलच्प्रत्ययो भवति मत्वर्थे ।
रजस्वलास्त्री ।
कृषीवलः कुटुम्बी ।
आसुतीवलः शौण्दिकः ।
परिषद्वलो राजा ।
वले (*६,३.११८) इति दीर्घत्वं ।
इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते ।
तेन+इह न भवति, रजोऽस्मिन्ग्रामे विद्यते इति ।
वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यं ।
भ्रातृवलः ।
पुत्रवलः ।
उत्साहवलः । ।

---

1. <दन्त-शिखात्सञ्ज्ञायाम्># । । PS_५,२.११३ । ।

_______Sठाऽठ्JKव्_५,२.११३ः

दन्त-शिखा-शब्दाभ्यां बलच्प्रत्ययो भवति मत्वर्थे सञ्ज्ञायां विषये ।
दन्तावलः सैन्यः ।
दन्तावलो गजः ।
शिखावलं नगरं ।

शिखावला स्थूणा । ।

---

1. <ज्योत्स्ना-तमिस्रा-शृङ्गिण-ऊर्जस्विन्न्-ऊर्जस्वल-गोमिन्-मलिन-मलीमसाः># । । PS_५,२.११४ । ।

______Sठाञ्ठJKव्_५,२.११४ः

ज्योत्स्नादयः शब्दाः निपात्यन्ते मत्वर्थे सञ्ज्ञायां विषये ।
ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते - ज्योत्स्ना चन्द्रप्रभा ।
तमस उपधाया इकारो रश्च - तमिस्रा रात्रिः ।
स्त्रीत्वमतन्त्रं अन्यत्र अपि दृश्यते - तमिस्रं नभः ।
शृङ्गादिनच्प्रत्ययो निपात्यते - शृङ्गिणः ।
ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ - ऊर्जस्वी, ऊर्जस्वलः ।
गोर्मिनि प्रत्ययो निपात्यते - गोमी ।
मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते - मलिनः, मलीमसः । ।

---

1. <अत इनिठनौ># । । PS_५,२.११५ । ।

______Sठाञ्ठJKव्_५,२.११५ः

अकारान्तात्प्रातिपदिकातिनिठनौ प्रत्ययौ भवतः ।
दण्डी, दण्डिकः ।
छन्त्री, च्नत्रिकः ।
अन्यतरस्यां इत्यधिकारान्मतुबपि भवति ।
दण्डवान् ।
छत्रवान् ।
तपरकरणं किं ? श्रद्धावान् ।
एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ।
एकाक्षरात्तावत्- स्ववान् ।
खवान् ।
कृतः - कारकवान् ।
जातेः - व्याघ्रवान् ।
सिंहवान् ।
सप्तम्यां - दन्डा अस्यां सन्ति दण्डवती शाला इति ।

[#५२५]

इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते इत्युक्तम्, तेन क्वचिद्भवत्यपि, कार्यी, हार्यी, तण्डुली, तण्दुलिकः इति । ।

---

1. <व्रीह्यादिभ्यश्च># । । PS_५,२.११६ । ।

______Sठा॒ठ्JKव्_५,२.११६ः

व्रीह्यादिभ्यः प्रातिपदिकेभ्यः इनिठनौ प्रत्ययौ भवतो मत्वर्थे ।
मतुब्भवत्येव ।
व्रीही, व्रीहिकः, व्रीहिमान् ।
मायी, मायिकः, मायावान् ।
न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयं इष्यते ।
किं तर्हि ? शिखादिभ्य इनिर्वाच्य इकन्यवखदादिषु ।
परिशिष्टेभ्य उभयं ।
शिखा मेखला सञ्ज्ञा बलाका माला वीणा वडवा अष्टका पताका कर्मन्चर्मन्हंसा इत्येतेभ्य इनिरेव+इष्यते ।
यवखद कुमारी नौ इत्येतेभ्य इकन्नेव+इष्यते ।
परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः ।
व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते ? एवं तर्हि तुन्दादिसु व्रीहिग्रहणं अर्थग्रहणं विज्ञायते ।
शालयोऽस्य सन्ति शालिनः, शाली, शालिकः, शालिमानिति ।
व्रीहिशिखादयः पूर्वं पठिताः ।
यवखद ।
कुमारी ।
नौ ।
शीर्षान्नञः - अशीर्षी, अशीर्षिकः । ।

---

1. <तुन्दादिभ्य इलच्च># । । PS_५,२.११७ । ।

______Sठा॒ठ्JKव्_५,२.११७ः

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच्प्रत्ययो भवति मत्वर्थे ।
चकारादिनिठनौ मतुप्च ।
तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् ।
उदरिलः, उदरी, उदरिकः, उदरवान् ।
तुन्द ।
उदर ।
पिचण्ड ।
घट ।
यव ।
व्रीहि ।
स्वाङ्गाद्विवृद्धौ च ।
तुन्दादिः । ।

---

1. <एक-गो-पूर्वाट्ठञ्नित्यम्># । । PS_५,२.११८ । ।

_______Sठाञ्ठJKव्_५,२.११८ः
एकपूर्वाद्गोपूर्वाच्च प्रातिपदिकान्नित्यं ठञ्प्रत्ययो भवति मत्वर्थे ।
एकशतं अस्य अस्ति इति ऐकशतिकः ।
ऐकसहस्रिकः ।
गोपूर्वात्च - गौशतिकः ।
गौसहस्रिकः ।
अत इत्येव एकविंशतिरस्य अस्ति इति न भवति ।
कथं ऐकगविकः ? समासान्ते कृते भविष्यति ।
कथं गौशकटिकः ? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति, ततो भविष्यति ।
अवश्यं च अतः इत्यनुवर्त्यम्, द्वन्द्वोपतापगर्ह्यातित्येवं आद्यर्थं ।
नित्यग्रहणं मतुपो बाधनार्थं ।
कथं एकद्रव्यवत्त्वातिति ? नैवायं साधुः ।
एकेन वा द्रव्यवत्त्वादिति समर्थनीयं । ।

---

1. <शत-सहस्र-अन्ताच्च निष्कात्># । । PS_५,२.११९ । ।

_______Sठाञ्ठJKव्_५,२.११९ः

शतान्तात्सहस्रान्तात्च प्रातिपदिकात्ठञ्प्रत्ययो भवति मत्वर्थे तौ चेत्शतसहस्रशब्दौ निष्कात्परौ भवतः ।
निष्कशतं अस्य अस्ति नैष्कशतिकः ।
नैष्कसहस्रिकः ।
सुवर्णनिष्कशतं अस्य अस्ति इति अनभिधानान्न भवति । ।

---

[#५२६]

1. <रूपादाहत-प्रशंसयोर्यप्># । । PS_५,२.१२० । ।

_______Sठाञ्ठJKव्_५,२.१२०ः

आहतप्रशंसे प्रकृत्युपाधी ।
आहतप्रशंसाविशिष्टार्थे वर्तमानाद्रूपशब्दात्यप्प्रत्ययो भवति मत्वर्थे ।
आहतं रूपमस्य रूप्यो दीनारः ।
रूप्यः केदारः ।
रूप्यं कार्षापणं ।
प्रशस्तं रूपं अस्य अस्ति रूप्यः पुरुसः ।
निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतम्नित्युच्यते ।
आहतप्रशंसयोः इति किं ? रूपवान् ।
यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यं ।
हिम्याः पर्वताः ।
गुण्याः ब्राह्मणाः । ।

---

1. <अस्-माया-मेधा-स्रजो विनिः># । । PS_५,२.१२१ । ।

_______Sठाऍ्ठ्JKव्_५,२.१२१ः

असन्तात्प्रातिपदिकात्, माया मेधा स्रजित्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे ।
मतुप्सर्वत्र समुच्चीयते एव ।
असन्तात्तावत्- यशस्वी, पयस्वी ।
मायावी ।
मेधावी ।
स्रग्वी ।
मायाशब्दाद्व्रीह्यादिषु पाठातिनिठनौ अपि भवतः ।
मायी, मायिकः । ।

---

1. <बहुलं छन्दसि># । । PS_५,२.१२२ । ।

_______Sठाऍ्ठ्JKव्_५,२.१२२ः
छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे ।
अग्ने तेजस्विन् ।
न भवति ।
सूर्यो वर्चस्वान् ।
छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं वेति वक्तव्यं ।
अष्ट्रावी ।
मेखलावी ।
द्वयावी ।
उभयावी ।
रुजावी ।

हृदयावी।
द्वयोभयगृदयानि दीर्घत्वं प्रयोजयन्ति।
मर्मणश्च+इति वक्तव्यं।
मर्मावी।
सर्वत्रामयस्य+उपसङ्ख्यानं।
छन्दसि भाषायां च।
आमयावी।
शृङ्गवृन्दाभ्यामारकन्वक्तव्यः।
शृङ्गारकः।
वृन्दारकः।
फलबर्हाभ्यामिनच्वक्तव्यः।
फलिनः।
बर्हिणः।

[#५२७]

हृदयाच्चालुरन्यतरस्यां।
हृदयालुः, हृदयी, हृदयिकः, हृदयवान्।
शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुच्वक्तव्यः।
शीतं न सहते शीतालुः।
उष्णालुः।
तृप्रालुः।
तन्न सहत इति हिमाच्चेलुः।
हिमं न सहते हिमेलुः।
बलादूलछ्।
बलं न सहते बलूलः।
वातात्समूहे च।
वातं न सहत इति च।
वातानां समूहः, वातं न सहते इति वा वातूलः।
पर्वमरुद्भ्यां तन्वक्तव्यः।
पर्वतः।
मरुत्तः।
अर्थात्तदभाव इनिर्वक्तव्यः।
अर्थी।
तदभावे इत्येव, अर्थवान्।
तदेतत्सर्वं बहुलग्रहणेन सम्पद्यते॥

---

1. <ऊर्णाया युस्># ॥ PS_५,२.१२३ ॥

______Sठाऽ्ठ्JKव्_५,२.१२३ः

ऊर्णाशब्दाद्युस्प्रत्ययो भवति मत्यर्थे।
सकारः पदसञ्ज्ञार्थः।
ऊर्णा अस्य विद्यते ऊर्णायुः।

केचिच्छन्दोग्रहणं अनुवर्तयन्ति । ।

---

1. <वाचो ग्मिनिः># । । PS_५,२.१२४ । ।

______Sठा~ठ्JKव्_५,२.१२४ः

वाच्शब्दात्ग्मिनिः प्रत्ययो भवति मत्वर्थे ।
वाग्मी, वाग्मिनौ, वाग्मिनः । ।

---

1. <आलजाटचौ बहुभाषिणि># । । PS_५,२.१२५ । ।

______Sठा~ठ्JKव्_५,२.१२५ः

वाच्शब्दात्प्रथमासमर्थादालचाटचित्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिणि अभिधेये ।
ग्मिनेरपवादः ।
वाचालः ।
वाचाटः ।
कुत्सित इति वक्तव्यं ।
यो हि सम्यग्बहु भाषते वाग्मीत्येव स भवति । ।

---

[#५२८]

1. <स्वामिन्न्-ऐश्वर्ये># । । PS_५,२.१२६ । ।

______Sठा~ठ्JKव्_५,२.१२६ः

स्वामिनिति निपात्यते ऐश्वर्थे गम्यमाने ।
स्वशदादैश्वर्यवाचिनो मत्वर्थे आमिन्प्रत्ययो निपात्यते ।
स्वं अस्य अस्ति इति ऐश्वर्यं अस्य अस्ति इति स्वामी ।
स्वामिनौ ।
स्वामिनः ।
ऐश्वर्ये इति किं ? स्ववान् । ।

---

1. <अर्श-आदिभ्योऽच्># । । PS_५,२.१२७ । ।

_______Sठा~ठJKव्_५,२.१२७ः
अर्शसित्येवं अदिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे ।
अर्शासि अस्य विद्यन्ते अर्शसः ।
उरसः ।
आकृतिगणश्च अयं ।
यत्र अभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वं इह द्रष्टव्यं ।
अर्शस् ।
उरस् ।
तुन्द ।
चतुर ।
पलित ।
जटा ।
घता ।
अभ्र ।
कर्दम ।
आम ।
लवण ।
स्वाङ्गाद्धीनाथ् ।
वर्णाथ् ।
अर्शाअदिः । ।

---

1. <द्वन्द्व-उपताप-गर्ह्यात्प्राणिस्थादिनिः># । । PS_५,२.१२८ । ।

_______Sठा~ठJKव्_५,२.१२८ः

द्वन्द्वः समासः ।
उपतापो रोगः ।
गर्ह्यं निन्द्यं ।
तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्यः इनिः प्रत्ययो भवति मत्वर्थे ।
द्वन्द्वात्तावत्- कटकवलयिनी ।
शङ्खनूपुरिणी ।
उपतापात्- कुष्ठी ।
किलासी ।
गर्ह्यात्- ककुदावर्ती ।
काकतालुकी ।
प्राणिस्थातिति किं ? पुष्पफलवान्वृक्षः ।

प्राण्यङ्गान्नेष्यते, पाणिपादवती ।
अतः इति अनुवर्तते ।
तेन+इह नि भवति, चित्रललाटिकावती ।
सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थं । ।

---

1. <वात-अतिसाराभ्यां कुक्च># । । PS_५,२.१२९ । ।

_______Sठा~ठ्JKव्_५,२.१२९ः

वात-अतिसारशब्दाभ्यां इनिः प्रत्ययो भवति, तत्संनियोगेन च तयोः कुगागमो भवति ।
वातातिसारयोरुपतापत्वात्पूर्वेण+एव सिद्धे प्रत्यये कुगर्थं एव+इदं वचनं ।
वातकी ।
अतिसारकी ।
पिशाचाच्च+इति वक्तव्यं ।
पिशाचकी वैश्रवणः ।
रोगे च अयं इष्यते ।
इह न भवति, वातवती गुहा । ।

---

1. <वयसि पूरणात्># । । PS_५,२.१३० । ।

_______Sठा~ठ्JKव्_५,२.१३०ः

इनिरनुवर्तते ।
पूरणप्रत्ययान्तात्प्रातिपदिकातिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये ।
पञ्चमोऽस्य अस्ति मासः संवत्सरो वा पञ्चमी उष्ट्रः ।
नवमी ।
दशमी ।
सिद्धे सति नियमार्थं वचनम्, इनिरेव भवति, ठन्न भवति इति ।
वयसि इति किं ? पञ्चमवान्ग्रामरागः । ।

---

[#५२९]

1. <सुख-आदिभ्यश्च># । । PS_५,२.१३१ । ।

______Sठा~ठ्JKव्_५,२.१३१ः

सुख इत्येवं आदिभ्यः प्रातिपदिकेभ्यः इनिः प्रत्ययो नियम्यते मत्वर्थे ।
सुही ।
दुःखी ।
मालाक्षेपे इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं वचनं ।
सुख ।
दुःख ।
तृप्र ।
कृच्छ्र ।
आम्र ।
अलीक ।
करुणा ।
कृपण ।
सोढ ।
प्रमीप ।
शील ।
हल ।
माल क्षेपे ।
प्रणय । ।

---

1. <धर्म-शील-वर्णान्ताच्च># । । PS_५,२.१३२ । ।

______Sठा~ठ्JKव्_५,२.१३२ः

अन्तःशब्दः प्रत्येकं अभिसम्बध्यते ।
धर्माद्यन्तात्प्रातिपदिकातिनिः प्रत्ययो नियम्यते ।
ब्रह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्य अस्ति इति ब्राह्मणधर्मी ।
ब्राह्मणशीली ।
ब्राह्मणवर्णी । ।

---

1. <हस्ताज्जातौ># । । PS_५,२.१३३ । ।

______Sठा~ठ्JKव्_५,२.१३३ः

हस्तशब्दातिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज्जातिरभिधीयते ।

हस्तोऽस्य अस्ति इति हस्ती ।
हस्तिनौ हस्तिनः ।
जातौ इति किं ? हस्तवान्पुरुषः । ।

---

1. <वर्णाद्ब्राह्मचारिणि># । । PS_५,२.१३४ । ।

_______Sठा~ठ्JKव्_५,२.१३४ः

वर्णशब्दातिनिः प्रत्ययो भवति मत्वर्थे समुदायेन चेद्ब्रह्मचारी भण्यते ।
ब्रह्मचारि इति त्रैवर्णिकोऽभिप्रेतः ।
स हि विद्याग्रहणार्थं उपनीतो ब्रह्म चरति, नियमं आसेवते इत्यर्थः ।
वर्णी, वर्णिनौ, वर्णिनः ।
ब्रह्मचारिणि इति किं ? वर्णवान् ।
ब्राह्मणादयस्त्रयो वर्णा वर्णिनः उच्यन्ते । ।

---

1. <पुष्कर-आदिभ्यो देशे># । । PS_५,२.१३५ । ।

_______Sठा~ठ्JKव्_५,२.१३५ः

पुष्कर इत्येवं आदिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद्देशोऽभिधीयते ।
पुष्करिणी ।
पद्मिनी ।
देशे इति किं ? पुस्करवान्हस्ती ।
इनिप्रकरणे बलाद्बहूरुपूर्वादुपसङ्ख्यानं ।
बाहुवली ।
ऊरुबली ।
सर्वादेश्च ।
सर्वधनी ।
सर्वबीजी ।
सर्वकेशी नटः ।

[#५३०]

अर्थाच्च असन्निहिते ।
अर्थी ।
असन्निहिते इति किं ? अर्थवान् ।
तदन्ताच्च+इति वक्तव्यं ।
धान्यार्थी ।

हिरण्यार्थी।
पुष्कर।
पद्म।
उत्पल।
तमाल।
कुमुद।
नड।
कपित्थ।
बिस।
मृणाल।
कर्दम।
शालूक।
विगर्ह।
करीष।
शिरीष।
यवास।
प्रवास।
हिरण्य।
पुष्करादिः॥

---

1. <बलादिभ्यो मतुबन्यतरस्याम्>#॥ PS_५,२.१३६॥

______Sठाऱ्ठ्JKव्_५,२.१३६ः

बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति।
अन्यतरस्यां ग्रहणेन प्रकृतः इनिः समुच्चीयते।
बलवान्, बाली।
उत्साहवान्, उत्साही।
बल।
उत्साह।
उद्भाव।
उद्वास।
उद्वाम।
शिखा।
पूग।
मूल।
दंश।
कुल।
आयाम।
व्यायाम।
उपयाम।
आरोह।
अवरोह।
परिणाह।

युद्ध । ।

---

1. <सञ्ज्ञायां मन्-माभ्याम्># । । PS_५,२.१३७ । ।

_______Sठा॰ठJKव्_५,२.१३७ः

मन्नन्तात्प्रातिपदिकान्मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत्सञ्ज्ञा गम्यते ।
प्रथिमिनी ।
दामिनी ।
मशब्दान्तात्होमिनी ।
सोमिनी ।
सञ्ज्ञायां इति किं ? सोमवान् ।
होमवान् । ।

---

1. <कं-शंभ्यां ब-भ-युस्-ति-तु-त-यसः># । । PS_५,२.१३८ । ।

_______Sठा॰ठJKव्_५,२.१३८ः

कं शं इति मकारान्तौ उद्कसुखयोर्वाचकौ, ताभ्यां ब भ युस्ति तु त यसित्येते सप्त प्रत्यया भवन्ति मत्वर्थे ।
कम्बः, कम्भः, कंयुः, कन्तिः, कन्तुः, कन्तः, कंयः ।
शम्बः, शम्भः, शंयुः, शन्तिः, शन्तुः, शन्तः, शंयः ।
सकारः पदसञ्ज्ञार्थः, तेन अनुस्वारपरसवर्णौ सिद्धौ भवतः ।
सञ्ज्ञायां हि असत्यां कम्यः, शम्यः इति स्यात् । ।

---

1. <तुन्दि-बलि-वटेर्भः># । । PS_५,२.१३९ । ।

_______Sठा॰ठJKव्_५,२.१३९ः

तुन्दि बलि वटि इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे ।
तुन्दिः इति वृद्धा नाभिरुच्यते, सा अस्य अस्ति इति तुन्दिभः ।
बलिभः ।
वटिभः ।
वलिशब्दः आमादिषु पठ्यते, तेन बलिनः इत्यपि भवति । ।

---

[#५३१]

1. <अहं-शुभमोर्युस्># । । PS_५,२.१४० । ।

_______Sठाऱ्ठ्JKव्_५,२.१४०ः

अहं इति शब्दान्तरं अहङ्कारे वर्तते, शुभं इत्यव्ययं शुभपर्यायः, ताभ्यां युस प्रत्ययो भवति मत्वर्थे ।
सकारः पदसञ्ज्ञार्थः ।
अहंयुः ।
अहङ्कारवानित्यर्थः ।
शुभंयुः ।
कल्याणवानित्यर्थः । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य द्वितीयः पादः । ।

---

पञ्चमाध्यायस्य तृतीयः पादः ।

---

[#५३२]

1. <प्राग्-दिशो विभक्तिः># । । PS_५,३.१ । ।

_______Sठाऱ्ठ्JKव्_५,३.१ः

दिक्-शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्-देश-कालेष्वस्तातिः (*५,३.२७) इति वक्ष्यति ।
प्रागेतस्माद्दिक्षं शब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामो विभक्तिसञ्ज्ञास्ते वेदितव्याः ।
वक्ष्यति - पञ्चम्यास्तसिल्(*५,३.७) ।
ततः ।
यतः ।
कुतः ।
तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः इदमो विभक्तिस्वरश्च ।
इह ।
ऊडिदं इति विभक्त्युदात्तत्वं सिद्धं भवति ।
अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्न+उपयुज्यते इति निवृत्तं ।
वावचनं तु वर्तत एव ।
तेन विकल्पेन तसिलादयो भवन्ति, कुतः , कस्मात्, कुत्र, कस्मिनिति । ।

---

1. <किं-सर्वनाम-बहुभ्योऽद्व्य्-आदिभ्यः># । । PS_५,३.२ । ।

_______Sठा~ठ्JKव्_५,३.२ः

प्राग्दिशः इत्येव ।
किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्ययाः वेदितव्याः ।
सर्वनामत्वात्प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते ।
कुतः , कुत्र ।
यतः, यत्र ।
ततः, तत्र ।
बहुतः, बहुत्र ।
अद्व्यादिभ्यः इति किं ? द्वाभ्यां ।
द्वयोः ।
प्रकृतिपरिसङ्ख्यानं किं ? वृक्षाथ् ।
वृक्षे ।
प्राग्दिशः इत्येव, वैयाकरणपाशः ।
सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासाथ् ।
बहुग्रहणे सङ्ख्याग्रहणं ।
इह न भवति, बहोः सूपात्, बहौ सूपे इति । ।

---

1. <इदं इश्># । । PS_५,३.३ । ।

_______Sठा~ठ्JKव्_५,३.३ः

प्राग्दिशः ।
इदं इशित्ययं आदेशो भवति प्राग्-दिशीयेषु प्रत्ययेशु परतः ।
शकारः सर्वादेशार्थः ।
इह । ।

---

1. <एत-इतौ र-थोः># । । PS_५,३.४ । ।

_______Sठा~ठ्JKव्_५,३.४ः

रेफथकारादौ प्राग्-दिशीये प्रत्यये परतः इदमः एत-इतौ आदेशौ भवतः ।
इशोऽपवादः ।
रेफेऽकार उच्चारणार्थः ।
इदमो र्हिल्(*५,३.१६) - एतर्हि ।
इदमस्थमुः (*५,३.२४) - इत्थं । ।

---

[#५३३]

1. <एतदोऽश्># । । PS_५,३.५ । ।

_______Sठाऽठ्JKव्_५,३.५ः

प्राग्दिशः इत्येव ।
एतदः प्राग्-दिशीये परतः अशित्ययं आदेशो भवति ।
शकारः सर्वादेशार्थः ।
अतः ।
अत्र ।
एतदः इति योगविभागः कर्तव्यः ।
एतदो रथोः परत एत इतित्येतावादेशौ भवतः ।
एतर्हि ।
इत्थं रेफादेः अनद्यतने र्हिलन्यतरस्यां (*५,३.२१) इति विद्यत एव ।
थमुप्रत्ययः पुनरेतद उपसङ्ख्येयः । ।

---

1. <सर्वस्य सोऽन्यतरस्यां दि># । । PS_५,३.६ । ।

_______Sठाऽठ्JKव्_५,३.६ः

सर्वस्य स इत्ययं आदेशो भवति प्राग्-दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्यां ।
सर्वदा ।
सदा ।
प्राग्-दिशीये इत्येव, सर्वं ददाति इति सर्वदा ब्राह्मणी । ।

---

1. <पञ्चम्यास्तसिल्># । । PS_५,३.७ । ।

_______Sठा-ठ्JKव्_५,३.७ः

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यः तसिल्प्रत्ययो भवति ।
कुतः ।
यतः ।
ततः ।
बहुतः । ।

---

1. <तसेश्च># । । PS_५,३.८ । ।

_______Sठा-ठ्JKव्_५,३.८ः

प्रतियोगे पञ्चम्यास्तसिः (*५,४.४४) , अपादाने च अहीय-रुहोः (*५,४.४५) इति वक्ष्यति ।
तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति ।
कुत आगतः ।
यतः ।
ततः ।
बहुत आगतः ।
तसेस्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च । ।

---

1. <पर्य्-अभिभ्यां च># । । PS_५,३.९ । ।

_______Sठा-ठ्JKव्_५,३.९ः

परि अभि इत्येताभ्यां तसिल्प्रत्ययो भवति ।
सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते ।
परितः ।
सर्वतः इत्यर्थः ।
अभितः ।
उभयतः इत्यर्थः । ।

---

1. <सप्तम्यास्त्रल्># । । PS_५,३.१० । ।

_______Sठा~ठ्JKव्_५,३.१०ः

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल्प्रत्ययो भवति ।
कुत्र ।
यत्र ।
तत्र ।
बहुत्र । ।

---

1. <इदमो हः># । । PS_५,३.११ । ।

_______Sठा~ठ्JKव्_५,३.११ः

इदमः सप्तम्यन्तादहःप्रत्ययो भवति ।
त्रलोऽपवादः ।
इह । ।

---

[#५३४]

1. <किमोऽत्># । । PS_५,३.१२ । ।

_______Sठा~ठ्JKव्_५,३.१२ः

किमः सप्तम्यन्तादत्प्रत्ययो भवति ।
त्रलोऽपवादः ।
क्व भोक्ष्यसे ।
क्वाध्येष्यसे ।
त्रलं अपि केचिदिच्छन्ति - कुत्र ।
तत्कथं ? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते । ।

---

1. <वा ह च च्छन्दसि># । । PS_५,३.१३ । ।

_______Sठाऺठ्JKव्_५,३.१३:

किमः सप्तम्यनताद्वा हः प्रत्ययो भवति छन्दसि विसये।
यथाप्राप्तं च।
क्व।
कुह।
कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः।।

---

1. <इतराभ्ह्योऽपि दृश्यन्ते>#।। PS_५,३.१४।।

_______Sठाऺठ्JKव्_५,३.१४:

सप्तमी-पञ्चम्य्-अपेक्षं इतरत्वं।
इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते।
दृशिग्रहणं प्रायिकविध्यर्थं, तेन भवदादिभिर्योग एव+एतद्विधानं।
के पुनर्भवदादयः ? भवान्दीर्घायुरायुष्मान्देवानां प्रियः इति।
स भवान्, ततो भवान्, तत्र भवान्।
तं भवन्तं, तत्र भवन्तम्, ततो भवन्तं।
तेन भवता, तत्र भवता, ततो भवता।
तस्मै भवते, तत्र भवते, ततो भवते।
तस्माद्भवतः, तत्र भवतः , ततो भवतः।
तस्मिन्भवति, तत्र भवति, ततो भवति।
एवं दीर्घयुःप्रभृतिष्वप्युदाहार्यं।।

---

1. <सर्व-एक-अन्य-किं-यत्-तदः काले दा>#।। PS_५,३.१५।।

_______Sठाऺठ्JKव्_५,३.१५:

सप्तम्याः इति वर्तते, न तु इतराभ्यः इति।
सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति।
त्रलोऽपवादः।
सर्वस्मिन्काले सर्वदा।
एकदा।
अन्यदा।
कदा।
यदा।

तदा।
काले इति किं? सर्वत्र देशे॥

---

1. <इदमो र्हिल्># ॥ PS_५,३.१६ ॥

_______Sठा॒ठ्JKव्_५,३.१६ः

सप्तम्याः इत्येव, काले इति च।
इदमः सप्तम्यन्तात्काले वर्तमानात्र्हिल्प्रत्ययो भवति।
हस्य अपवादः।
लकारः स्वरार्थः।
अस्मिन्काले एतर्हि।
काले इत्येव, इह देशे॥

---

1. <अधुना># ॥ PS_५,३.१७ ॥

_______Sठा॒ठ्JKव्_५,३.१७ः

अधुना इति निपात्यते।
इदमोऽश्भावो धुना च प्रत्ययः।
अस्मिन्काले अधुना॥

---

[#५३५]

1. <दानीं च># ॥ PS_५,३.१८ ॥

_______Sठा॒ठ्JKव्_५,३.१८ः

इदमः सप्तम्यन्तात्काले वर्तमानाद्दानीं प्रत्ययो भवति।
अस्मिन्काले इदानीं॥

---

1. <तदो दा च># । । PS_५,३.१९ । ।

______Sठाऱ्ठJKव्_५,३.१९ः

तदः सप्तम्यन्तात्काले वर्तमानाद्दा प्रत्ययो भवति, चकाराद्दानीं च ।
तस्मिन्काले तदा, तदानीं ।
तदो दावचनं अनर्थकं, विहितत्वात् । ।

---

1. <तयोर्दा-र्हिलौ च छन्दसि># । । PS_५,३.२० । ।

______Sठाऱ्ठJKव्_५,३.२०ः

तयोः इति प्रातिपदिक-निर्देशः ।
तयोरिदमः तदश्च यथासङ्ख्यं दा-र्हिलौ प्रत्ययौ भवतश्छन्दसि विषये ।
चकाराद्यथाप्राप्तं च ।
इदावत्सरीयः ।
इदं तर्हि ।
इदानीं ।
तदानीं । ।

---

1. <अनद्यतने र्हिलन्यतरस्याम्># । । PS_५,३.२१ । ।

______Sठाऱ्ठJKव्_५,३.२१ः

छन्दसि इति न स्वर्यते ।
सामान्येन विधानं ।
किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः अनद्यतने कालविशेषे वर्तमानेभ्यः र्हिल्प्रत्ययो भवत्यन्तरस्यां ।
कर्हि, कदा ।
यर्हि, यदा ।
तर्हि, तदा । ।

---

1. <सद्यः परुत्परार्य्-औषमः परेद्यव्य्-अद्य-पूर्वेद्युर्-अन्येद्युर्-अन्यतरेद्युर्-इतरेद्युर्-अपरेद्युर्-अधरेद्युर्-उभयेद्युर्-उत्तरेद्युः># । । PS_५,३.२२ । ।

______Sठा-ठ्JKव्_५,३.२२:

स्प्तम्याः इति काले इति च वर्तते ।
सद्यः-प्रभृतयः शब्दाः निपात्यन्ते ।
प्रकृतिः, प्रत्ययः, आदेशः, कालविशेषः इति सर्वं एतन्निपातनाल्लभ्यते ।
समानस्य सभावो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये ।
समानेऽहनि सद्यः ।
पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरेऽभिधेये ।
पूर्वस्मिन्संवत्सरे परुथ् ।
पूर्वतरे संवत्सरे परारी ।
इदम इश्भावः समसण्प्रत्ययः निपात्यते संवत्सरेऽभिधेये ।
अस्मिन्संवत्सरे ऐषमः ।
परस्मादेद्यवि प्रत्ययोऽहनि ।
परस्मिन्नहनि परेद्यवि ।
इदमोऽश्भावो द्यश्च प्रत्ययोऽहनि ।
अस्मिन्नहनि अद्य ।
पूर्व-अन्य. अन्यतर-इतर-अपर-अद्धर-उभय-उत्तरेभ्य एद्युस्प्रत्ययो निपात्यते अहन्यभिधेये ।
पूर्वस्मिन्नहनि पूर्वेद्युः ।
अन्यस्मिन्नहनि अन्येद्युः ।
अन्यतरस्मिन्नहनि अन्यतरेद्युः ।
इतरस्मिन्नहनि इतरेद्युः ।
अपरस्मिन्नहनि अपरेद्युः ।
अधरस्मिन्नहनि अधरेद्युः ।
उभयोरह्नोः उभयेद्युः ।
उत्तरस्मिन्नहनि उत्तरेद्युः ।
द्युश्च+उभयाद्वक्तव्यः ।
उभयद्युः । ।

---

[#५३६]

1. <प्रकारवचने थाल्># । । PS_५,३.२३ । ।

______Sठा-ठ्JKव्_५,३.२३:

किं-सर्वनाम-बहुभ्योऽद्व्य्-आदिभ्यः (*५,३.२) इति वर्तते ।
सप्तम्याः इति काले इति च निवृत्तं ।

सामान्यस्य भेदकः विशेषः प्रकारः ।
प्रकृत्यर्थविशेषणं च+एतथ् ।
प्रकारवृत्तिभ्यः किं-सर्वनाम-बहुभ्यः स्वार्थे थाल्प्रत्ययो भवति ।
तेन प्रकारेण तथा ।
यथा ।
सर्वथा ।
जातीयरोऽपीदृशं एव लक्षणं ।
स तु स्वभावात्प्रकारवति वर्तते, थाल्पुनः प्रकारमात्रे । ।

---

1. <इदमस्थमुः># । । PS_५,३.२४ । ।

______Sठा~ठ्JKव्_५,३.२४ः

इदं-शब्दात्प्रकारवचने थमुः प्रत्ययो भवति ।
थालोऽपवादः अनेन प्रकारेण इत्थं ।
उकारो मकारपरित्राणार्थः । ।

---

1. <किमश्च># । । PS_५,३.२५ । ।

______Sठा~ठ्JKव्_५,३.२५ः

किं-शब्दात्प्रकारवचने थमुः प्रत्ययो भवति ।
केन प्रकारेण कथं ।
योगविभागः उत्तरार्थः । ।

---

1. <था हेतौ च च्छन्दसि># । । PS_५,३.२६ । ।

______Sठा~ठ्JKव्_५,३.२६ः

किंशब्दाद्धेतौ वर्तमानात्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये ।
हेतौ तावत्- कथा ग्रामं न पृच्छसि ।
केन हेतुना न पृच्छसि इत्यर्थः ।
प्रकार-वचने - कथा देवा आसन्पुराविदः ।

विभक्ति-सञ्ज्ञायाः पूर्णोऽवधिः । ।

---

1. <दिक्-शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्-देश-कालेष्वस्तातिः># । । PS_५,३.२७ । ।

_______Sठा-ठ्JKव्_५,३.२७ः

दिशां शब्दाः दिक्शब्दाः ।
तेभ्यो दिक्शब्देभ्यो दिग्-देश-कालेषु वर्तमानेभ्यः सप्तमी. पञ्चमी-प्रथमान्तेभ्यः अस्तातिः प्रत्ययो भवति स्वार्थे ।
यथासङ्ख्यं अत्र न+इष्यते ।
पुरस्ताद्वसति ।
पुरस्तादागतः ।
पुरस्ताद्रमणीयं ।
अधस्ताद्वसति ।
अधस्तादागतः ।
अधस्ताद्रमणीयं ।
दिक्शब्देभ्यः इति किं ? ऐन्द्र्यां दिशि वसति ।
सप्तमी-पञ्चमी-प्रथमाभ्यः इति किं ? पूर्वं ग्रामं गतः ।
दिग्-देश-कालेसु इति किं ? पूर्वस्मिन्गुरौ वसति ।
इकारस्तकारपरित्राणार्थः । ।

---

1. <दिक्षिण-उत्तराभ्यां अतसुच्># । । PS_५,३.२८ । ।

_______Sठा-ठ्JKव्_५,३.२८ः

दिक्षिण-उत्तराभ्यां दिग्-देश-कालेषु वर्तमानभ्यां सप्तमी-पञ्चमी-प्रथमान्ताभ्यां स्वार्थेऽतसुच्प्रत्ययो भवति ।
अस्तातेरपवदः ।
दक्षिणा-शब्दः काले न सम्भवति इति दिग्देशवृत्तिः परिगृहृयते ।
दक्षिणतो वसति ।
दक्षिणत आगतः ।
दक्षिनतो रमणीयं ।
उत्तरतो वसति ।
उत्तरत आगतः ।
उत्तरतो रमणीयं ।
अकारो विशेषणार्थः षष्ठ्य्-अतसर्थप्रत्ययेन (*२,३.३०) इति । ।

---

[#५३७]

1. <विभाषा पर-अवराभ्याम्># । । PS_५,३.२९ । ।

_______Sठा~ठJKव्_५,३.२९ः

पर-अवर-शब्दाभ्यां विभाषा अतसुच्प्रत्ययो भवति अस्तातेरर्थे ।
परतो वसति ।
पर्त आगतः ।
परतो रमणीयं ।
परस्ताद्वसति ।
परस्तादागतः ।
परस्ताद्रमणीयं ।
अवरतो वसति ।
अवरत आगतः ।
अवरतो रमणीयं ।
अवरस्तद्वसति ।
अवरस्तादागतः ।
अवरस्ताद्रमणीयं । ।

---

1. <अञ्चेर्लुक्># । । PS_५,३.३० । ।

_______Sठा~ठJKव्_५,३.३०ः

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्य अस्तातिप्रत्ययस्य लुग्भवति ।
प्राच्यां दिशि वसति ।
लुक्तद्धित-लुकि (*१,२.४९) इति स्त्रिप्रत्ययोऽपि निवर्तते ।
प्राग्वसति ।
प्रागागतः ।
प्राग्रमणियं ।
प्रत्यग्वसति ।
प्रत्यगागतः ।
प्रत्यग्रमणीयं । ।

---

1. <उपर्य्-उपरिष्टात्># । । PS_५,३.३१ । ।

_______Sठाञ्ठ्JKव्_५,३.३१ः

उपरि उपरिष्टतित्येतौ शब्दौ निपात्येते अस्तातेरर्थे ।
ऊर्ध्वस्य उपभावः रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते ।
ऊर्ध्वायां दिशि वसति उपरि वसति ।
उपर्यागतः ।
उपरि रमणीयं ।
उपरिष्टद्वसति ।
उपरिष्टादागतः ।
उपरिष्ताद्रमणीयं । ।

---

1. <पश्चात्># । । PS_५,३.३२ । ।

_______Sठाञ्ठ्JKव्_५,३.३२ः

पश्चादित्ययं शब्दो निपात्यतेऽस्तातेरर्थे ।
अपरस्य पश्चभावः आतिश्च प्रत्ययः ।
अपरस्यां दिशि वसति पश्चाद्दिशि वसति ।
पश्चादागतः ।
पश्चाद्रमणीयं ।
दिक्पूर्वपदस्य अपरस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययः ।
दक्षिणापश्चाथ् ।
उत्तरपश्चाथ् ।
अर्धोत्तरपदस्य दिक्पूर्वस्य पश्चभावो वक्तव्यः ।
दक्षिणपश्चार्धः ।
उत्तरपश्चार्धः ।
विनाऽपि पूर्वपदेन पश्चभावो वक्तव्यः ।
पश्चार्धः । ।

---

1. <पश्च पश्चा च छन्दसि># । । PS_५,३.३३ । ।

_______Sठाञ्ठ्JKव्_५,३.३३ः

पश्च-पश्चा-शब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे ।
चकारात्पश्चादपि भवति ।
अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते ।

पुरा व्याघ्रो जायते पश्च सिंहः ।
पश्चा सिंहः ।
पश्चात्सिंहः । ।

---

[#५३८]

1. <उत्तर-अधर-दक्षिणादातिः># । । PS_५,३.३४ । ।

_______Sठा~ठ्JKव्_५,३.३४ः

उत्तर-अधर-दक्षिण-शब्देभ्यः आतिः प्रत्ययो भवति अस्तातेरर्थे ।
उत्तरस्यां दिशि वसति उत्तराद्वसति ।
उत्तरादागतः ।
उत्तराद्रमणीयं ।
अधराद्वसति ।
अधरादागतः ।
अधराद्रमणीयं ।
दक्षिणाद्वसति ।
दक्षिणादागतः ।
दक्षिणाद्रमणीयं । ।

---

1. <एनवन्यतरस्यां अदूरेऽपञ्चम्याः># । । PS_५,३.३५ । ।

_______Sठा~ठ्JKव्_५,३.३५ः

उत्तर-अधर-दक्षिण-शब्देभ्यः एनप्प्रत्ययो भवत्यनतरस्यां अस्तातेरर्थे अदूरे चेदवधिमानवधेर्भवति ।
विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी पर्युदस्यते ।
तेन अयं सप्तमी-प्रथमान्ताद्विज्ञायते प्रत्ययः ।
उत्तरेण वसति, उत्तराद्वसति, उत्तरतो वसति ।
उत्तरेण रमणीयम्, उत्तराद्रमणीयम्, उत्तरतो रमणीयं ।
अध्रेण वसति अधराद्वसति, अघस्ताद्वसति ।
अधरेण रमणीयम्, अधराद्रमणीयम्, अधस्ताद्रमणीयं ।
दक्षिणेन वसति, दक्षिणाद्वसति, दक्षिणातो वसति ।
दक्षिणेन रमणीयम्, दक्षिणाद्रमणीयम्, दक्षिणतो रमणीयं ।
अदूरे इति किं ? उत्ताराद्वसति ।
अपञ्चम्याः इति किं ? उअत्तरादागतः ।
अपज्चम्याः इति प्रागसेः ।
असिप्रतयस्तु पञ्चम्यन्तादपि भवति ।

केचिदिह+उत्तरादिग्रहणं न अनुवर्तयन्ति ।
दिक्शब्दमात्रात्प्रत्ययं मन्यन्ते ।
पूर्वेण ग्रामं ।
अपरेण ग्रामं । ।

---

1. <दक्षिणादाच्># । । PS_५,३.३६ । ।

_______Sठाऽठ्JKव्_५,३.३६ः

अदूरे इति न स्वर्यते ।
अपञ्चयाः इति वर्तते ।
दक्षिण-शब्दाताच्-प्रत्ययो भवति अस्तातेरर्थे ।
दक्षिणा वसति ।
दक्षिणा रमणीयं ।
अपञ्चम्याः इत्येव, दक्षिणत आगतः ।
चकारो विशेषणार्थः ।
अञ्चूत्तरपदाजाहियुक्ते इति । ।

---

1. <आहि च दूरे># । । PS_५,३.३७ । ।

_______Sठाऽठ्JKव्_५,३.३७ः

दक्षिण-शब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति ।
दक्षिणाहि वसति, दक्षिणा वसति ।
दक्षिणाहि रमणीयम्, दक्षिणा रमणीयं ।
दूरे इति किं ? दक्षिणतो वसति ।
अपञ्चमाः इत्येव, दक्षिणत आगतः । ।

---

1. <उत्तराच्च># । । PS_५,३.३८ । ।

_______Sठाऽठ्JKव्_५,३.३८ः

उत्तर-शब्दादाजाही प्रत्ययौ भवतः अस्तातेरर्थे दूरे चेदवधिमानवधेर्भवति ।
उत्तरा वसति, उत्तराहि वसति ।
उत्तरा रमणीयम्, उत्तराहि रमणीयं ।
दूरे इत्येव, उत्तरेण प्रयाति ।
पञ्चम्याः इत्येव, उत्तरादागतः । ।

---

[#५३९]

1. <पूर्व-अधर-अवरानां असि पुर्-अदः-अवश्च+एषाम्># । । PS_५,३.३९ । ।

_______Sठा~ठ्JKव्_५,३.३९ः

अपञ्चम्याः इति निवृत्तं ।
तिसृणां विभक्तीनां इह ग्रहणं ।
पूर्वाधरावराणां असिः प्रत्ययो भवति अस्तातेरर्थे ।
तत्संनिओगेन च+एषां यथासङ्ख्यं पुरदः अवित्येते आदेशा भवन्ति ।
असि इत्यविभक्तिको निर्देशः ।
पुरो वसति ।
पुर आगतः ।
पुरो रमणीयं ।
अधो वसति ।
अध आगतः ।
अधो रमणीयं ।
अवो वसति ।
अव आगतः ।
अवो रमणीयं । ।

---

1. <अस्ताति च># । । PS_५,३.४० । ।

_______Sठा~ठ्JKव्_५,३.४०ः

सप्तम्यान्तं एतथ् ।
अस्ताति-प्रत्यये परतः पुर्वादीनां यथासङ्ख्यं पुरादय आदेशा भवन्ति ।
इदं एव आदेशविधानं ज्ञापकं , अस्तातिरेभ्यो भवति, असि-प्रत्ययेन न आध्यते इति ।
पुरस्ताद्वसति ।
पुरस्तादागतः ।
पुरस्ताद्रमणीयं ।
अधस्ताद्वसति ।
अधस्तादागतः ।

अधस्ताद्रमणीयं । ।

---

1. <विभाषाऽवरस्य># । । PS_५,३.४१ । ।

_______Sठाऽ्ठJKव्_५,३.४१ः

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते ।
अवरस्य अस्तातौ परतो विभाषा अवित्ययं आदेशो भवति ।
अवस्ताद्वसति ।
अवस्तादागतः ।
अवस्ताद्रमणीयं ।
अवरस्ताद्वसति ।
अवरस्तादागतः ।
अवरस्ताद्रमणीयं । ।

---

1. <सङ्ख्याया विधार्थे धा># । । PS_५,३.४२ । ।

_______Sठाऽ्ठJKव्_५,३.४२ः

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमाणेभ्यो धा प्रत्ययो भवति स्वार्थे ।
विधा प्रकारः, स च सर्वक्रियाविषय एव गृह्यते ।
क्रियप्रकारे वर्तमानायाः सङ्ख्याया धा प्रत्ययः ।
एकधा भुङ्क्ते ।
द्विधा गच्छति ।
त्रिधा ।
चतुर्धा ।
पञ्चधा । ।

---

1. <अधिकरणविचाले च># । । PS_५,३.४३ । ।

_______Sठाऽ्ठJKव्_५,३.४३ः

सङ्ख्यायाः इत्येव।
अधिकरणं द्रव्यं, तस्य विचालः सङ्ख्यान्तरापादनं।
एकस्य अनेकीकरणं अनेकस्य वा एकीकरणं।
अधिकरणविचाले गम्यमाने सङ्ख्यायाः स्वार्थे धा प्रत्ययो भवति।
एकं राशिं पञ्चधा कुरु।
अष्टधा कुरु।
अनेकं एकधा कुरु।।

---

1. <एकाद्धो द्यमुञन्यतरस्याम्>#।। PS_५,३.४४।।

_______Sठाञ्ठJKव्_५,३.४४ः

एकशब्दात्परस्य धा-प्रत्ययस्य ध्यमुञादेशः भवत्यन्यतरस्यां।
एकधा राशिं कुरु, ऐकध्यं कुरु।
एकधा भुङ्क्ते, ऐकध्यं भुङ्क्ते।
प्रकरणादेव लब्धे पुनर्धा-ग्रहणं विधार्थे विहितस्य अपि यथा स्याथ्।
अनन्तरस्य+एव ह्येतत्प्रत्प्नोति।।

---

[#५४०]

1. <द्वि-त्र्योश्च धमुञ्>#।। PS_५,३.४५।।

_______Sठाञ्ठJKव्_५,३.४५ः

धा इत्यनुवर्तते।
द्वि-त्र्योः सम्बन्धिनो धा-प्रययस्य विधार्थे अधिकरणविचाले च विहितस्य धमुञ्-आदेशो भवति अन्यतरस्यां।
चकारो विकल्पानुकर्षणार्थः।
द्विधा, द्वैधं।
त्रिधा, त्रैधं।
धमुञन्तात्स्वार्थे डदर्शनं।
मतिद्वैधानि संश्रयन्ते।
मतित्रैधानि संश्रयन्ते।।

---

1. <एधाच्च># । । PS_५,३.४६ । ।

______Sठा~ठ्JKव्_५,३.४६ः

द्वि-त्र्योः सम्बन्धिनो धा-प्रत्ययस्य एधाचादेशो भवत्यन्यत्रस्यां ।
चकारो विकल्पानुकर्षण-अर्थः ।
द्वेधा, द्वैधम्, द्विधा ।
त्रेधा, त्रैधम्, त्रिधा । ।

---

1. <याप्ये पाशप्># । । PS_५,३.४७ । ।

______Sठा~ठ्JKव्_५,३.४७ः

याप्यः कुत्सितः इति उच्यते ।
याप्ये वर्तमानात्प्रातिपदिकात्स्वार्थे पाशप्प्रत्ययो भवति ।
याप्यो वैयाकरणः, कुत्सितो वैयाकरणः वैयाकरणपाशः ।
याज्ञिकपाशः ।
यो व्याकरन-शास्त्रे प्रवीणो दुःशीलः, तत्र कस्मान्न भवति ? यस्य गुणस्य सद्भावाद्द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः । ।

---

1. <पूरणाद्भागे तीयादन्># । । PS_५,३.४८ । ।

______Sठा~ठ्JKव्_५,३.४८ः

पूरण-प्रत्ययो यस्तीयः, तदन्तात्प्रातिपदिकाद्भागे वर्तमानात्स्वार्थे अन्प्रत्ययो भवति ।
स्वरार्थं वचनं ।
द्वितीयो भागः द्वितियः ।
तृतीयः ।
भागे इति किं ? द्वितीयं ।
तृतीयं ।
पूरण-ग्रहणं उत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति ।
मुखतीयादिरनर्थकः । ।

---

1. <प्रागेकादशभ्योऽच्छन्दसि># । । PS_५,३.४९ । ।

_______Sठा~ठ्JKव्_५,३.४९ः

पूरणाद्भागे इत्येव ।
प्रागेकादशभ्यः सङ्ख्याशब्देभ्यः पूरणप्रत्ययान्तेभ्यः भागे वर्तमानेभ्यः स्वार्थेऽन्प्रत्ययो भवति अच्छन्दसि विषये ।
स्वरार्थं वचनं ।
पञ्चमः ।
सप्तमः ।
नवमः ।
दशमः ।
प्रागेकादशभ्यः इति किं एकादशः ।
द्वादशः ।
अच्छन्दसि इति किं ? तस्य पञ्चममिन्द्रियस्याअपाक्रामत् । ।

---

[#५४१]

1. <षष्ठ-अष्टमाभ्यां ञ च># । । PS_५,३.५० । ।

_______Sठा~ठ्JKव्_५,३.५०ः

भागे इत्येव, अच्छन्दसि इति च ।
षष्ठ-अष्टमभ्यां भागे अभिधेये अच्छन्दसि विषये ञः प्रत्ययो भवति ।
चकारादन्च ।
षष्ठो भागः षष्टः, षष्ठः ।
आष्टमः, अष्टमः । ।

---

1. <मान-पश्व्-अङ्गयोः कन्-लुकौ च># । । PS_५,३.५१ । ।

_______Sठा~ठ्JKव्_५,३.५१ः

भागे इत्येव ।
षष्ठ-अष्टमाभ्यां यथासङ्ख्यं कन्-लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः ।
षष्ठको भागो मानं चेत्तद्भवति ।
अष्टमो भागः पश्वङ्ग चेत्तद्भवति ।
कस्य लुक्? ञस्य लुक् ।
अनो वा ।
चकाराद्यथाप्राप्तं च ।

षाष्ठः, षष्ठः ।
आष्टमः, अष्टमः ।
मानपश्वङ्गयोः इति किं ? षाष्ठः, षष्ठः ।
आष्टमः, अष्टमः । ।

---

1. <एकादाकिनिच्च असहाये># । । PS_५,३.५२ । ।

_______Sठाऽठ्JKव्_५,३.५२ः

एक-शदाद्सहाय-वाचिनः स्वार्थे आकिनिच्प्रत्ययो भवति ।
चकारात्कन्-लुकौ च ।
आकिनिचः कनो वा लुग्विज्ञायते ।
स च विधानसामर्थ्यात्पक्षे भवति ।
एकाकी, एककः, एकः ।
असहाय-ग्रहणं सङ्ख्याशब्दनिरासार्थं ।
तदुपादाने हि द्विबह्वोर्न स्यात्, एकाकिनौ, एकाकिनः । ।

---

1. <भूतपूर्वे चरट्># । । PS_५,३.५३ । ।

_______Sठाऽठ्JKव्_५,३.५३ः

पूर्व भूतः इति विगृह्य सुप्सुपेति समासः ।
भूतपूर्वशब्दोऽतिक्रान्तकालवचनः ।
प्रकृतिविशेषणं च+एअथ् ।
भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे चरट्प्रत्ययो भवति ।
आढ्यो भूतपूर्वः आढ्यचरः ।
सुकुमारचरः ।
टकारो ङीबर्थः ।
आढ्यचरी । ।

---

1. <षष्ठ्या रूप्य च># । । PS_५,३.५४ । ।

_______Sठाञ्ठJKव्_५,३.५४ः

षष्ठ्यन्तात्प्रातिपदिकात्रूप्यः प्रत्ययो भवति ।
चकाराच्चरट्च ।
षष्ठ्यन्तात्प्रत्ययविधानात्संप्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं, न तु प्रकृत्यर्थविशेषणं ।
देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः, देवदत्तचरः । ।

---

[#५४२]

1. <अतिशायने तमबिष्ठनौ># । । PS_५,३.५५ । ।

_______Sठाञ्ठJKव्_५,३.५५ः

अतिशयनं अतिशायनं प्रकर्षः ।
निपातनाद्दीर्घत्वं ।
प्रकृत्यर्थविशेषणं च+एतथ् ।
अतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः ।
प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति ।
सर्व इमे आढ्याः, अयं एषां अतिशयेन आढ्यः आढ्यतमः ।
दर्शनीयतमः ।
सुकुमारतमः ।
अयं एषां अतिशयेन पटुः पटिष्थः ।
लघिष्ठः ।
गरिष्ठः ।
यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव ।
देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ।
युधिष्ठिरः श्रेष्ठतमः कुरूणां इति । ।

---

1. <तिङश्च># । । PS_५,३.५६ । ।

_______Sठाञ्ठJKव्_५,३.५६ः

तिङन्तात्च अतिशायने द्योत्ये तमप्प्रत्ययो भवति ।
ङ्य्-आप्-प्रातिपदिकात्(*४,१.१) इत्यधिकारात्तिङो न प्राप्नोति इति इदं वचनं ।
सर्वे इमे पचन्ति इति, अयं एषां अतिशयेन पचति पचतितमां ।
जल्पतितमां ।

इष्ठन्नोदाह्रियते, गुणवचने तस्य नियतत्वात् । ।

---

1. <द्विवचन-विभज्य-उपपदे तरब्-ईयसुनौ># । । PS_५,३.५७ । ।

_______Sठा~ठ्JKव्_५,३.५७ः

द्वयोरर्थयोर्वचनं द्विवचनं विभक्तव्यो विभज्यः ।
निपातनाद्यत्भवति ।
द्व्यर्थे विभज्ये च+उपपदे प्रातिपदिकात्तिङन्ताच्च अतिशायने तरबीयसुनौ प्रत्ययौ भवतः ।
तमबिष्ठनोरपवादौ ।
यथासङ्ख्यं अत्र न+इष्यते ।
द्वाविमावाढ्यौ, अयं अनयोरतिशयेन आढ्यः आढ्यतरः ।
सुकुमारतरः ।
पचतितरां ।
जल्पतितरां ।
ईयसुन्खल्वपि - द्वाविमौ पटू, अयं अनयोरतिशयेन पटुः पटीयान् ।
विभज्ये च+उपपदे - माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ।
दर्शनीयतराः ।
पटीयांसः ।
लघीयांसः । ।

---

1. <अजादि गुणवचनादेव># । । PS_५,३.५८ । ।

_______Sठा~ठ्JKव्_५,३.५८ः

इष्ठन्नीयसुनौ अजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते, गुणवचनादेव भवतस्तौ न अन्यस्मादिति ।
पटीयान् ।
लघीयान् ।
पटिष्ठः ।
लघीष्ठः ।
इह न भवतः, पाचकतरः, पाचकतमः इति ।
एव कारः इष्टतोऽवधारणार्थः, प्रत्ययनियमोऽयं न प्रकृतिनियमः इति ।
पटुतरः ।
पटुतमः । ।

---

[#५४३]

1. <तुश्छन्दसि># । । PS_५,३.५९ । ।

_______Sठा~ठJKव्_५,३.५९ः
तुः इति तृन्-तृचोः सामान्येन ग्रहणं ।
त्रन्ताच्छन्दसि विषये अजदी प्रत्ययौ भवतः ।
पूर्वेण गुणवचनादेव नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, त्रन्तादप्यजादी भवत इति ।
आसुतिं करिष्ठः ।
दोहीयसी धेनुः ।
भस्याढे तद्धिते इति पुंवद्भावे कृते तुरिष्ठेमेयःसु (*३,४.१५४) इति तृचो निवृत्तिः । ।

---

1. <प्रशस्यस्य श्रः># । । PS_५,३.६० । ।

_______Sठा~ठJKव्_५,३.६०ः

प्रशस्य शब्दस्य श्र इत्ययं आदेशे भवति अजाद्योः प्रत्यययोः परतः ।
अजादी इति प्रकृतस्य सप्तमी विभक्तिविपरिणम्यते ।
ननु च प्रशस्य शब्दस्य अगुणवचनत्वादजादी न सम्भवतः ? एवं तर्हि आदेशविधानसामर्थ्यात्तद्विषयो नियमो न प्रवर्तते, अजादी गुणवचनादेव इति ।
एवं उत्तरेष्वपि योगेषु विज्ञेयं ।
सर्वे इमे प्रशस्याः, अयं एषां अतिशयेन प्रशस्यः श्रेष्ठः ।
उभाविमौ प्रशस्यौ, अयं अनयोरतिशयेन प्रशस्यः श्रेयान् ।
अयं अस्मात्श्रेयान् ।
प्रकृत्यौ काचिति प्रकृतिभावत्श्रशब्दस्य टिलोपयस्येतिलोपौ न भवतः । ।

---

1. <ज्य च># । । PS_५,३.६१ । ।

_______Sठा~ठJKव्_५,३.६१ः

प्रशस्य शब्दस्य ज्य इत्ययं आदेशो भवति अजाद्योः प्रत्यययोः परतः ।
सर्वे इमे प्रशस्याः, अयं एषां अतिशयेन प्रशस्यः ज्येष्ठः ।
उभाविमौ प्रशस्यौ, अयं अनयोरतिशयेन प्रशस्यः ज्यायान् ।
अयमस्मात्ज्यायान् ।
ज्यादादीयसः (*६,४.१६०) इत्याकारः । ।

---

1. <वृद्धस्य च># । । PS_५,३.६२ । ।

_______Sठाञ्ठ्JKव्_५,३.६२ः

वृद्ध-शब्दस्य च ज्य इत्ययं आदेशो भवत्यजाद्योः प्रत्यययोः परतः ।
तयोश्च सत्त्वं नियमाभावेन पूर्ववज्ज्ञाप्यते ।
सर्वे इमे वृद्धाः, अयं एषां अतिशयेन वृद्धः ज्येष्ठः ।
उभाविमौ वृद्धौ, अयं अनयोरतिशयेन वृद्धः ज्यायान् ।
अयं अस्माज्ज्यायान् ।
प्रियस्थिर इत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते ।
वचनसामर्थ्यात्पक्षे सोऽपि भवति ।
वर्षिष्ठः ।
वर्षीयान् । ।

---

[#५४४]

1. <अन्तिक-बाढयोर्नेद-साधौ># । । PS_५,३.६३ । ।

_______Sठाञ्ठ्JKव्_५,३.६३ः

अन्तिक-बाढयोः यथासङ्ख्यं नेद साध इत्येतावादेशौ भवतोऽजाद्योः परतः ।
तयोश्च सत्त्वं पूर्ववद्विज्ञेयं ।
निमित्तभूतयोर्यथासङ्ख्यं अत्र एष्यते सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेन अन्तिकं नेदिष्ठं ।
उभे इमे अन्तिके, इदं अनयोरतिशयेन अन्तिकं नेदीयः ।
इदं अस्मान्नेदियः ।
सर्वे इमे बाढमधीयते, अयं एषां अतिशयेन बाढं अधीते सधिष्ठः ।
उभाविमौ बाढं अधीयाते, अयं अनयोरतिशयेन बाढं अधीते साधीयः ।
अयं अस्मात्साधीयोऽधीते । ।

---

1. <युव-अल्पयोः कनन्यतरस्याम्># । । PS_५,३.६४ । ।

_______Sठा~ठ्JKव्_५,३.६४ः

युव-अल्प-शब्दयोः कनित्ययं आदेशो भवत्यन्यतरस्यां अजद्योः परतः ।
तयोश्च सत्त्वं पूर्ववज्ज्ञेयं ।
सर्वे इमे युवानः, अयं एषं अतिशयेन युव कनिष्ठः ।
द्वाविमौ युवानौ, अयं अनयोरतिशयेन युवा कनीयान् ।
अयं अस्मात्कनीयान् ।
यविष्ठः, यवीयानिति वा ।
सर्वे इमेऽल्पाः, अयं एषां अतिशयेन अल्पः कनिष्ठः ।
उभाविमावल्पौ, अयं अनयोरतिशयेन अल्पः कनीयान् ।
अयं अस्मात्कनीयान् ।
अल्पिष्ठः, अल्पीयानिति वा । ।

---

1. <विन्-मतोर्लुक्># । । PS_५,३.६५ । ।

_______Sठा~ठ्JKव्_५,३.६५ः

विनो मतुपश्च लुग्भवति अजाद्योः प्रत्यययोः परतः ।
इदं एव वचनं ज्ञापकं अजादिसद्भावस्य ।
सर्वे इमे स्रग्विणः, अयं एषां अतिशयेन स्रग्वी स्रजिष्ठः ।
उभाविमौ स्रग्विणौ, अयं अनयोरतिशयेन स्रग्वी स्रजियान् ।
अयं अस्मात्स्रजीयान् ।
सर्वे इमे त्वग्वन्तः, अयं एषां अतिशयेन त्वग्वान्त्वचिष्ठः ।
उभाविमौ त्वग्वन्तौ, अयं अनयोरतिशयेन त्वग्वान्त्वचीयान् ।
अयं अस्मात्त्वचीयान् । ।

---

1. <प्रशंसायां रूपप्># । । PS_५,३.६६ । ।

_______Sठा~ठ्JKव्_५,३.६६ः

प्रशंसा स्तुतिः ।
प्रकृत्यर्थस्य विशेषणं च+एतथ् ।
प्रशंसाविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे रूपप्प्रत्ययो भवति ।
स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति ।
प्रशस्तो वैयाकरणो वैयाकरणरूपः ।
याज्ञिकरूपः ।
प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति ।

वृषलरूपोऽयं यः पलाण्डुना सुरां पिबति ।
चोररूपः, दस्युरूपः, योऽक्ष्णोरप्यञ्जनं हरेथ् ।

[#५४५]

तिङश्च (*५,३.५६) इत्यनुवर्तते ।
पचतिरूपं ।
पचतोरूपं ।
पचन्तिरूपं ।
क्रियाप्रधानं आख्यातं ।
एका च क्रिया इति रुपप्प्रत्ययान्ताद्द्विवचनबहुवचने न भवतः ।
नपुंसकलिङ्गं तु भवति, लोकाश्रयत्वाल्लिङ्गस्य । ।

---

1. <ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः># । । PS_५,३.६७ । ।

_______Sठाऱ्ठ्JKव्_५,३.६७ः

सम्पूर्णता पदार्थानां समाप्तिः ।
स्तोकेनासम्पूर्णता ईषदसमाप्तिः ।
प्रकृत्यर्थविशेषणं च+एतथ् ।
ईषदसमाप्तिविशेष्टेऽर्थे वर्तमानात्प्रातिपदिकात्कल्पप्देश्य देशीयरित्येते प्रत्यया भवन्ति ।
ईषदसमाप्तः पटुः पटुकल्पः, पटुदेश्यः, पटुदेशीयः ।
मृदुकल्पः, मृदुदेश्यः, मृदुदेशीयः ।
तिङश्च (*५,३.५६) इत्येव, पचतिकल्पं ।
जल्पतिकल्पं । ।

---

1. <विभाषा सुपो बहुच्परस्तात्तु># । । PS_५,३.६८ । ।

_______Sठाऱ्ठ्JKव्_५,३.६८ः

ईषदसमाप्तिविशेष्टेऽर्थे वर्तमानात्सुबन्तात्विभषा बहुच्प्रत्ययो भवति ।
स तु पुरस्तादेव भवति, न परतः ।
चित्करणं अन्तोदात्तार्थं ।
ईषदसमाप्तः पटुः बहुपटुः ।
बहुमृदुः ।
बहुगुडो द्राक्षा ।
विभाषावचनात्कल्पबादयोऽपि भवन्ति ।
सुब्ग्रहणं तिङन्तान्मा भूदिति । ।

---

1. <प्रकारवचने जातीयर्># । । PS_५,३.६९ । ।

_______Sठा~ठ्JKव्_५,३.६९ः

सामान्यस्य भेदको विशेषः प्रकारः, तस्य वचने ।
प्रकृत्यर्थविशेषणं च+एतथ् ।
सुबन्तात्प्रकारविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे जातीयर्प्रत्ययो भवति ।
प्रकारवति च अयं प्रत्ययः ।
थाल्पुनः प्रकारमात्र एव भवति ।
पटुप्रकारः पटुजातीयः ।
मृदुजातीयः ।
दर्शनीयजतीयः । ।

---

1. <प्राग्-इवात्कः># । । PS_५,३.७० । ।

_______Sठा~ठ्JKव्_५,३.७०ः

इवे प्रतिकृतौ (*५,३.९६) इति वक्ष्यति ।
प्राकेतस्मादिव संशब्दनाद्यानित ऊर्ध्वं अनुक्रमिष्यामः कप्रत्ययस्तेषु अधिकृतो वेदितव्यः ।
वक्ष्यति - अज्ञाते (*५,३.७३) इति ।
अश्वकः ।
गर्दभकः ।
तिङन्तादयं प्रत्ययो निष्यते, अकजिष्यते ।
तिङश्च (*५,३.५६) इत्यनुवृत्तं उत्तरसूत्रेण+एव सम्बन्धनीं । ।

---

[#५४६]

1. <अव्यय-सर्वनाम्नां अकच्प्राक्टेः># । । PS_५,३.७१ । ।

_______Sठा~ठ्JKव्_५,३.७१ः

तिङश्च (*५,३.५६) इत्येव ।

अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेषु अकच्प्रत्ययो भवति, स च प्राक्टेः, न परतः।
कस्य अपवादः।
उच्चकैः।
नीचकैः।
शनकैः।
सर्वनाम्नः खल्वपि - सर्वके।
विश्वके।
उभयके।
प्रातिपदिकात्, सुपः इति द्वयं अपि इह अनुवर्तते।
तत्र अभिधानतो व्यवस्था भवति।
क्वचित्प्रातिपदिकस्य प्राक्टेः प्रत्ययो भवति, क्वचित्सुबन्तस्य।
युष्मकाभिः , अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोः, इत्यत्र प्रातिपदिकस्य।
त्वयका, मयका, त्वयकि, मयकि इत्यत्र सुबन्तस्य।
अकच्प्रकरणे तूष्णीमः काम्प्रत्ययो वक्तव्यः।
स च मित्त्वादन्त्यातचः परो भवति।
तुष्णीकां आस्ते।
तूष्णीकां तिष्ठति।
शीले को मलोपश्च वक्तव्यः।
तूष्णींशीलः तूष्णीकः।
तिङश्च (*५,३.५६) इति प्रकृतमत्र सम्बध्यते।
पचतकि।
जल्पतकि॥

---

1. <कस्य च दः># ॥ PS_५,३.७२ ॥

_______Sठा~ठ्JKव्_५,३.७२ः

ककारान्तस्य प्रातिपदिकस्य अकच्सन्नियोगेन दकारादेशो भवति।
चकारः सन्नियोगार्थः।
सामर्थ्याच्चाव्ययग्रहणं अनुवर्तते, न सर्वनामग्रहणं।
ककारान्तस्य सर्वनाम्नोऽसम्भवाथ्।
धिक्- धकिथ्।
हिरुक्- हिरकुथ्।
पृथक्- पृथकत्॥

---

1. <अज्ञाते># ॥ PS_५,३.७३ ॥

_______Sठा~ठ्JKव्_५,३.७३ः

अज्ञातविशेषः अज्ञातः ।
अज्ञातत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात्तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति ।
स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेण अज्ञाते प्रत्ययविधानं एतथ् ।
कस्य अयं अश्वः इति स्वस्वामिसम्बन्धेन अज्ञाते अश्वे प्रत्ययः, अश्वकः ।
गर्दभकः ।
उष्ट्रकः ।
एवं अन्यत्र अपि यथायोगं अज्ञातता विज्ञेया ।
उच्चकैः ।
नीचकैः ।
सर्वके ।
विश्वके ।
पचतकि ।
जल्पतकि । ।

---

[#५४७]

1. <कुत्सिते># । । PS_५,३.७४ । ।

_______Sठा~ठ्JKव्_५,३.७४ः

कुत्सितो गर्हितो, निन्दितः ।
प्रकृत्यर्थविशेषणं च+एतथ् ।
कुत्सितस्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययो भवति ।
कुत्सितोऽश्वः अश्वकः ।
उष्ट्रकः ।
गर्दभकः ।
उच्चकैः ।
नीचकैः ।
सर्वके ।
विश्वके ।
पचतकि ।
जल्पतकि । ।

---

1. <सञ्ज्ञायां कन्># । । PS_५,३.७५ । ।

_______Sठा~ठ्JKव्_५,३.७५ः

कुत्सिते इत्येव ।
कुत्सितत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपैद्कात्कन्-प्रत्ययो भवति, कस्य अपवादः, प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यते ।
शूद्रकः ।
धारकः ।
पूर्णकः । ।

---

1. <अनुअम्पायाम्># । । PS_५,३.७६ । ।

_______Sठा~ठ्JKव्_५,३.७६ः

कारुण्येन अभ्युपपत्तिः परस्य अनुकम्पा ।
तस्या गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति ।
पुत्रकः ।
वत्सकः ।
दुर्बलकः ।
बुभुक्षितकः ।
स्वपितकि ।
श्वसितकि । ।

---

1. <नीतौ च तद्युक्तात्># । । PS_५,३.७७ । ।

_______Sठा~ठ्JKव्_५,३.७७ः

सामदानादिरुपायो नीतिः ।
नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद्यथाविहितं प्रत्ययो भवति ।
हन्त ते धानकाः ।
हन्त ते तिलकाः ।
एहकि ।
अद्धकि ।
परस्य अनुकम्पामात्रोपादानेनाराधयति ।
पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धातनुकम्प्यमानादेव प्रत्ययो विहितः ।
संप्रति व्यवहितादपि यथा स्यादिति वचनं । ।

---

1. <बह्वचो मनुस्यनाम्नष्ठज्वा># ।। PS_५,३.७८ ।।

_______Sठा~ठ्JKव्_५,३.७८ः

अनुकम्पायां (*५,३.७६), नीतौ च तद्युक्तात्(*५,३.७७) इति वर्तते ।
बह्वचः प्रातिपदिकात्मनुष्यनामधेयाद्वा ठच्प्रत्ययो भवति, अनुकम्पायां गम्यमानायां नीतौ च ।
देविकः, देवदत्तकः ।
यज्ञिकः, यज्ञदत्तकः ।
बह्वचः इति किं ? दत्तकः ।
गुप्तकः ।
मनुष्यनाम्नः इति किं ? मद्रबाहुकः ।
भद्रबाहुकः ।।

---

[#५४८]

1. <घन्-इलचौ च># ।। PS_५,३.७९ ।।

_______Sठा~ठ्JKव्_५,३.७९ः

अनुकम्पायां इत्यादि सर्वं अनुवर्तते ।
पूर्वेण ठचि विकल्पेन प्राप्ते वचनं ।
बह्वचो मनुस्यनाम्नो घनिलचित्येतौ प्रत्ययौ भवतः ।
चकाराद्यथाप्राप्तं च ।
देवियः, देविलः, देविकः, देवदत्तकः ।
यज्ञियः, यज्ञिलः, यज्ञिकः, यज्ञदत्तकः ।।

---

1. <प्राचां उपादेरडज्-वुचौ च># ।। PS_५,३.८० ।।

_______Sठा~ठ्JKव्_५,३.८०ः

पूर्ववत्सर्वं अनुवर्तते ।
उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद्बह्वचो मनुस्यनाम्नः ।
अडच्-वुच्-प्रत्ययौ भवतः ।
चकाराद्घनिलचौ प्रत्ययौ भवतः ठच्च वा ।
उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः ।
प्राचां-ग्रहणं पूजार्थं ।
वा इत्येव हि वर्तते ।।

---

1. <जातिनाम्नः कन्># । । PS_५,३.८१ । ।

_______Sठाच्ठJKव्_५,३.८१ः

बह्वचः इति न अनुवर्तते ।
सामान्येन विधानं ।
जातिशब्दो यो मनुस्यनामधेयो व्याघ्र सिंह इत्येवं आदिः, तस्मादनुकम्पायां नीतौ च कन्-प्रत्ययो भवति ।
व्याघ्रकः ।
सिंहकः ।
शरभकः ।
वावचनानुवृत्तेर्यथादर्शनं अन्योऽपि भवति ।
व्याघ्रिलः ।
सिंहिलः ।
नाम-ग्रहणं स्वरूपनिवृत्त्यर्थं । ।

---

1. <अजिनान्तस्य+उत्तरपदलोपश्च># । । PS_५,३.८२ । ।

_______Sठाच्ठJKव्_५,३.८२ः

कनित्यनुवर्तते, मनुस्यनाम्नः इति च ।
अजिन-शब्दान्तात्प्रातिपदिकान्मनुस्यनाम्नोऽनुकम्पायां कन्प्रत्ययो भवति, तस्य च+उत्तरपदलोपः ।
व्याघ्राजिनो नां अकश्चिन्मनुस्यः, सोऽनुकम्पितः व्याघ्रकः ।
सिंहकः । ।

---

1. <ठ-अज्-आदावूर्ध्वं द्वितीयादचः># । । PS_५,३.८३ । ।

_______Sठाच्ठJKव्_५,३.८३ः

लोपः इत्यनुवर्तते ।
अस्मिन्प्रकरणे यः ठः अजादिश्च प्रत्ययः, तस्मिन्परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति ।
ऊर्ध्व-ग्रहणं सर्वलोपार्थं ।
अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः ।

यज्ञिकः, यज्ञिक्यः, यज्ञिलः ।
उपडः, उपक, उपियः, उपिलः, उपिकः ।
ठग्रहणमुक्तो द्वितीयात्वे कविधानार्थं ।
अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः ।
वायुदत्तः वायुकः ।
पितृदत्तः पितृकः ।
चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः ।
अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः बृहस्पतियः बृहस्पतिलः ।

[#५४९]

अनजादौ विभाषा लोपो वक्तव्यः ।
देवदत्तकः, देवकः ।
यज्ञदत्तकः, यज्ञकः ।
लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः ।
दत्तिकः, दत्तिलः, दत्तियः, दत्तकः ।
विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोः विभाषा लोपो वक्तव्यः ।
देवदत्तो दत्तः, देव इति वा ।
उवर्णाल्ल इलस्य च ।
भानुदत्तो भानुलः ।
वसुदत्तो वसुलः ।
चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथा+एव+इष्ट उवर्णाल्ल इलस्य च । ।
द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनं ।
लहोडः लहिकः ।
कहोडः कहिकः ।
एकाक्षरपूर्वपदानां उत्तरपदलोपो वक्तव्यः ।
वागाशीः वाचिकः ।
स्रुचिकः ।
त्वचिकः ।
कथं षडङ्गुलिदत्तः षडिकः इति ? षषष्ठाजादिवचनात्सिद्धं । ।

---

1. <शेवल-सुपरि-विशाला-वरुण-अर्यम-आदिनां तृतीयात्># । । PS_५,३.८४ । ।

_______Sठा-ठ्JKव्_५,३.८४ः

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादचः ऊर्ध्वस्य लोपो भवति ।
पूर्वस्य अयं अपवादः ।
अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः ।
सुपरिकः, सुपरियः, सुपरिलः ।
विशालिकः, विशालियः, विशालिलः ।
वरुणिकः, वरुणियः, वरुणिलः ।
अर्यमिकः, अर्यमियः, अर्यमिलः ।
शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनां इति वक्तव्यं ।

शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः शेवलिकः, सुपरिकः इति यथा स्यात् ।
शेवल्यिकः, सुपर्यिकः इति मा भूत् । ।

---

[#५५०]

1. <अल्पे># । । PS_५,३.८५ । ।

_______Sठाॅठ्JKव्_५,३.८५ः

परिमाणापचये अल्पशब्दः ।
प्रकृतिविशेषणं च+एतथ् ।
अल्पत्वविशिष्टे अर्थे वर्तमानात्प्रातिपदिकात्यथाविहितं पत्ययो भवति ।
अल्पं तैलं तैलकं ।
घृतकं ।
सर्वकं ।
विश्वकं ।
उच्चकैः ।
नीचकैः ।
पचतकि ।
जल्पतकि । ।

---

1. <ह्रस्वे># । । PS_५,३.८६ । ।

_______Sठाॅठ्JKव्_५,३.८६ः

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्यथाविहितं प्रत्ययो भवति ।
दीर्घप्रतियोही ह्रस्वः ।
ह्रस्वो वृक्षः वृक्षकः ।
प्लक्षकः ।
स्तम्भकः । ।

---

1. <सञ्ज्ञायां कन्># । । PS_५,३.८७ । ।

_______Sठाऽ्ठJKव्_५,३.८७ः

ह्रस्वे इत्येव।
ह्रस्वत्वहेतुका या सञ्ज्ञा तस्यां गम्यमानायां कन्-प्रत्ययो भवति।
पूर्वस्य अयं अपवादः।
वंशकः।
वेणुकः।
दण्डकः॥

---

1. <कुटी-शमी-शुण्डाभ्यो रः># ॥ PS_५,३.८८ ॥

_______Sठाऽ्ठJKव्_५,३.८८ः

ह्रस्वे इत्येव।
सञ्ज्ञाग्रहणं न अनुवर्तते।
सामान्येन विधानं।
कुटी-शमी-शुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति।
कस्य अपवादः।
ह्रस्वा कुटी कुटीरः।
शमीरः।
शुण्डारः।
स्वार्थिकत्वेऽपि पुंलिङ्गता, लोकाश्रयत्वाल्लिङ्गस्य॥

---

1. <कुत्वा डुपच्># ॥ PS_५,३.८९ ॥

_______Sठाऽ्ठJKव्_५,३.८९ः

ह्रस्वे इत्येव।
कुतूशब्दाद्ह्रस्वत्वे द्योत्ये दुपच्प्रत्ययो भवति।
कस्य अपवादः।
ह्रस्वा कुटूः कुतुपं।
चर्म अयं स्नेहभाजनं उच्यते।
कुतूः इत्यावपनस्याख्या॥

---

1. <कासू-गोणीभ्यां ष्टरच्># । । PS_५,३.९० । ।

______Sठाञ्ठ्JKव्_५,३.९०ः

ह्रस्वे इत्येव ।
कासू-गोणी-शब्दाभ्यां ह्रस्वस्वे द्योत्ये ष्टरचप्रत्ययो भवति ।
कस्य अपवादः ।
षकारो ङीषर्थः ।
ह्रस्वा कासूः कासूतरी ।
गोणीतरी ।
कासूः इति शक्तिः, आयुधविशेसः उच्यते । ।

---

[#५५१]

1. <वत्स-उक्ष-अश्व-र्षभेभ्यश्च तनुत्वे># । । PS_५,३.९१ । ।

______Sठाञ्ठ्JKव्_५,३.९१ः

ह्रस्वे इति निवृत्तं ।
वत्स उक्षनश्व ऋषभ इत्येतेभ्यः तनुत्वे द्योत्ये ष्टरच्-प्रत्ययो भवति ।
यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः तस्य तनुत्वे प्रत्ययः ।
वत्सतरः ।
उक्षतरः ।
अश्वतरः ।
ऋषभतरः ।
प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः ।
तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः ।
अश्वेन अश्वायां उत्पन्नोऽस्वः, तस्य तनुत्वं अन्यपितृकता ।
अनुड्वानृषभः, तस्य तनुत्वं भारवहने मन्दशक्तिता । ।

---

1. <किं-यत्-तदो निर्धारणे द्वयोरेकस्य डतरच्># । । PS_५,३.९२ । ।

______Sठाञ्ठ्JKव्_५,३.९२ः

किं यत्ततित्येतेभ्यः प्रातिपदिकेभ्य द्वयोरेकस्य निर्धारणे डतरच्प्रत्ययो भवति ।
निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः ।
जात्या, क्रियया, गुनेन, सञ्ज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणं ।
कतरो भवतोः कठः ।
कतरो भवतोः कारकः ।
कतरो भवतोः पटुः ।
कतरो भवतोर्देवदत्तः ।
यतरो भवतोः कारकः ।
यतरो भवतोः पतुः ।
यतरो भवतोर्देवदत्तः, ततर आगच्छतु ।
महाविभाषया चात्र प्रत्ययो विकल्प्यते ।
को भवतोर्देवदत्तः, स आगच्छतु ।
निर्धारणे इति विसयसप्तमीनिर्देशः ।
द्वयोः इति समुदायान्निर्धारणविभक्तिः ।
एकस्य इति निर्देशः निर्धर्यमाणनिर्देशः । ।

---

1. <वा बहूनां जातिपरिप्रश्नो डतमच्># । । PS_५,३.९३ । ।

_______Sठाव्ठ्JKव्_५,३.९३ः

किंयत्तदः इति वर्तते निर्धारने, एकस्य इति च ।
बहूनां इति निर्धारने षष्ठी ।
बहुनां मध्ये एकस्य निर्धारने गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यः वा डतमच्प्रत्ययो भवति ।
कतमो भवतां कठः ।
यतमो भवतां कठः, ततम आगच्छतु ।
वावचनं अकजर्थं ।
यको भवतां कठः, सक आगच्छतु ।
महाविभाषा च प्रत्ययविकलोपार्था अनुवर्तते एव ।
को भवतां कठः ।
यो भवतां कठः, स आगच्छतु ।
जातिपरिप्रश्ने इति किं ? को भवतां देवदत्तः ।
परिप्रश्नग्रहणं च किम एव विशेषणं, न यत्तदोः, असम्भवाथ् ।
जातिग्रहणं तु सर्वैरेव सम्बद्यते ।
किमोऽस्मिन्विषये डतरं अपि इच्छन्ति केचित्, कतरो भवतां कालापः इति ।
तत्र कतरकतमौ जातिअपरिप्रश्ने (*२,१.६३) इति वचनात्सिद्धं । ।

---

1. <एकाच्च प्राचाम्># । । PS_५,३.९४ । ।

_______Sठाञ्ठ्JKव्_५,३.९४ः

एकशब्दात्प्राचां आचार्याणां मतेन डतरच्डतमचित्येतौ प्रत्ययौ भवतः स्वस्मिन्विष्यए।
चकारो डतरचोऽनुकर्सणार्थः।
द्वयोर्निर्धारने डतरच्, बहूनां निर्धारने डतमछ्।
जातिपरिप्रश्ने इति न अनुवर्तते।
सामान्येन विधानं।
एकतरो भवतोर्देवदत्तः।
एकतमो भवतां देवदत्तः।
प्राचां-ग्रहणं पूजार्थं, विकल्पोऽनुवर्तते एव।।

---

[#५५२]

1. <अवक्षेपणे कन्>#।। PS_५,३.९५।।

_______Sठाञ्ठ्JKव्_५,३.९५ः

अवक्षियते येन तदवक्षेपणं।
तस्मिन्वर्तमानात्प्रतिपदिकात्कन्प्रत्ययो भवति।
व्याकरणकेन नाम त्वं गर्वितः।
याज्ञिक्यकेन नाम त्वं गर्वितः।
परस्य कुत्सार्थं यदुपादीयते तदिह+उदाहरणं।
यत्पुनः स्वयं एव कुत्सितं तत्र कुत्सिते (*५,३.७४) इत्यनेन कन्प्रत्ययो भवति, देवदत्तकः, यज्ञदत्तकः इति।
प्रागिवीयस्य पूर्णोऽवधिः।।

---

1. <इवे प्रतिकृतौ>#।। PS_५,३.९६।।

_______Sठाञ्ठ्JKव्_५,३.९६ः

कनित्यनुवर्तते।
इवार्थे यत्प्रातिपदिकं वर्तते तस्मात्कन्प्रत्ययो भवति।
इवार्थः सादृश्यं, तस्य विशेसणं प्रतिकृतिग्रहणं।
प्रतिकृतिः प्रतिरूपकं, प्रतिच्छन्दकं।
अश्व इव अयं अश्वप्रतिकृतिः अश्वकः।
उष्ट्रकः।
गर्दभकः।
प्रतिकृतौ इति किं? गौरिव गवयः।।

---

1. <सञ्ज्ञायां च># । । PS_५,३.९७ । ।

_______Sठा~ठ्JKव्_५,३.९७ः

इव इत्यनुवर्तते, कनिति च ।
इवार्थे गम्यमाने कन्प्रत्ययो भवति, समुदायेन चेत्सञ्ज्ञा गम्यते ।
अप्रतिकृत्यर्थ आरम्भः ।
अश्वसदृशस्य सञ्ज्ञा अश्वकः ।
उष्ट्रकः ।
गर्दभकः । ।

---

1. <लुम्-मनुस्ये># । । PS_५,३.९८ । ।

_______Sठा~ठ्JKव्_५,३.९८ः

सञ्ज्ञायां इत्येव ।
सञ्ज्ञायां विहितस्य कनो मनुस्येऽभिधेये लुब्भवति ।
चञ्चेव मनुष्यः चञ्चा ।
दासी ।
खरकुटी ।
मनुस्ये इति किं ? अश्वकः ।
उष्ट्रकः ।
गर्दभकः ।
देवपथादेराकृतिगणत्वात्तस्य+एव अयं प्रपञ्चो वेदितव्यः । ।

---

1. <जीविकार्थे चापण्ये># । । PS_५,३.९९ । ।

_______Sठा~ठ्JKव्_५,३.९९ः

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब्भवति ।
विक्रीयते यत्तत्पण्य ।

वासुदेवः ।
शिवः ।
स्कन्दः ।
विष्णुः ।
आदित्यः ।
देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते ।
अपण्ये इति किं ? हस्तिकान्विक्रीणीते ।
अश्वकान् ।
रथकान् ।
देवपथादेरेव अयं प्रपञ्चः । ।

---

1. <देवपथादिभ्यश्च># । । PS_५,३.१०० । ।

_______Sठाञ्ठJKव्_५,३.१००ः

इवे प्रतिकृतौ (*५,३.९६), सञ्ज्ञायां च (*५,३.९७) विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब्भवति ।
आदिशब्दः प्रकारे ।
आकृतिगणश्च अयं ।
देवपथः ।
हंसपथः ।

[#५५३]

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु । ।
अर्चासु तावत्- शिवः ।
विष्णुः ।
चित्रकर्मणि - अर्जुनः ।
दुर्योधनः ।
ध्वजेषु - कपिः ।
गरुडः ।
सिंहः ।
देवपथ ।
हंस्पथ ।
वारिपथ ।
जलपथ ।
राजपथ ।
शतपथ ।
सिंहगति ।
उष्ट्रग्रीवा ।
चामरज्जु ।
रज्जु ।
हस्त ।
इन्द्र ।
दण्ड ।

पुष्प।
मत्स्य॥

---

1. <वस्तेर्धञ्># । । PS_५,३.१०१ । ।

_______Sठान्ठ्JKव्_५,३.१०१ः

इव इत्यनुवर्तते।
इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ चप्रतिकृतौ च।
वस्तिशब्दादिवार्थे द्योत्ये ठञ्प्रत्ययो भवति।
वस्तिरिव वास्तेयः।
वास्तेयी॥

---

1. <शिलाया ढः># । । PS_५,३.१०२ । ।

_______Sठान्ठ्JKव्_५,३.१०२ः

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति।
शिलेव शिलेयं दधि।
केचिदत्र ढञं अपि इच्छन्ति, तदर्थं योगविभागः कर्तव्यः।
शिलायाः ढञ्प्रत्ययो भवति।
शैलेयं।
ततो धः।
शिलेयं॥

---

1. <शाखादिभ्यो यत्># । । PS_५,३.१०३ । ।

_______Sठान्ठ्JKव्_५,३.१०३ः

शाखा इत्येवं आदिभ्यः प्रातिपदिकेभ्यः पत्प्रत्ययो भवति इवार्थे शाखेव शख्यः।
मुख्यः।
जघन्यः।

शाखा।
मुख।
जघन।
शृङ्ग।
मेघ।
चरण।
स्कन्ध।
शिरस्।
उरस्।
अग्र।
शरन।
शाखादिः॥

---

1. <द्रव्यं च भव्ये># ॥ PS_५,३.१०४ ॥

_______Sठान्ठ्JKव्_५,३.१०४ः

द्रव्यशब्दो विपात्यते भव्येऽभिधेये।
द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते।
द्रव्यम्, भव्यः, आत्मवानधिप्रेतानां अर्थनां पात्रभूत उच्यते।
द्रव्योऽयं राजपुत्रः।
द्रव्योऽयं माणवकः॥

---

1. <कुशाग्राच्छः># ॥ PS_५,३.१०५ ॥

_______Sठान्ठ्JKव्_५,३.१०५ः

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति।
कुशाग्रं इव सूक्ष्मत्वात्कुशाग्रीया बुद्धिः।
कुशाग्रीयं शस्त्रं॥

---

[#५५४]

1. <समासाच्च तद्विषयात्># ॥ PS_५,३.१०६ ॥

_______Sठा~ठ्JKव्_५,३.१०६ः

तदित्यनेन प्रकृत इवार्थो निर्दिश्यते ।
इवार्थविषयात्समासादपरस्मिन्निवार्थे एव छनः प्रत्ययो भवति ।
कालतालीयं ।
अजाकृपाणीयं ।
अन्धकवर्तकीयं ।
अतर्कितोपनतं चित्रीकरणमुच्यते ।
तत्कथं ? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च ।
तेन तलेन पतता काकस्य वधःकृतः ।
एवं एव देवदत्तस्य तत्रागमनं, दस्यूनां च उपनिपातः ।
तैश्च तस्य वधः कृतः ।
तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसदृशः इत्येकः उपमार्थः, अतश्च देवदत्तस्य वधः, स कालतालवधसदृशः इति द्वितीयः उपमार्थः ।
तत्र प्रथमे समासः, द्वितीये प्रत्ययः ।
समासश्च अयं अस्मादेव ज्ञापकात्, न ह्यस्य अपरं सक्षणं अस्ति ।
सुप्सुपेति वा समासः ।
स च+एवं विषय एव । ।

---

1. <शर्करा-आदिभ्योऽण्># । । PS_५,३.१०७ । ।

_______Sठा~ठ्JKव्_५,३.१०७ः

शर्करा इत्येवं आदिभ्यः प्रातिपदिकेभ्यः इवार्थे अण्प्रत्ययो भवति ।
शर्करा इव शार्करं ।
कापालिकं ।
शर्करा ।
कपालिका ।
पिष्टिक ।
पुण्डरीक ।
शतपत्र ।
गोलोमन् ।
गोपुच्छ ।
नरालि ।
नकुला ।
सिकता ।
शर्करादिः । ।

---

1. <अङ्गुल्यादिभ्यष्ठक्># । । PS_५,३.१०८ । ।

_______Sठाॅठ्JKव्_५,३.१०८ः

अङ्गुल्यादिभ्यः इवार्थे ठक्प्रत्ययो भवति ।
अङ्गुलीव आङ्गुलिकः ।
भारुजिकः ।
अङ्गुलि ।
भरुज ।
बभ्रु ।
वल्गु ।
मण्डर ।
मण्डल ।
शष्कुल ।
कपि ।
उदश्विथ् ।
गोणी ।
उरस् ।
शिखर ।
कुलिश ।
अङ्गुल्यादिः । ।

---

1. <एकशालायाष्ठजन्यतरस्याम्># । । PS_५,३.१०९ । ।

_______Sठाॅठ्JKव्_५,३.१०९ः

एकशालाशब्ददिवार्थेऽन्यतरस्यां ठच्प्रत्ययो भवति ।
अन्यतरस्यांग्रहणेन अनन्तरः ठक्प्राप्यते ।
एकशालेव एकशालिकः, ऐकशालिकः । ।

---

[#५५५]

1. <कर्क-लोहितादीकक्># । । PS_५,३.११० । ।

_______Sठाॅठ्JKव्_५,३.११०ः

कर्क-लोहित-शब्दाभ्यां इवार्थे ईकक्प्रत्ययो भवति ।
कर्कः शुक्लोऽश्वः, तेन सदृशः कार्कीकः ।

लौहितीकः स्फटिकः।
स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते।।

---

1. <प्रत्न-पूर्व-विश्व-इमात्थाल्छन्दसि>#।। PS_५,३.१११।।

_______Sठाञ्ठ्JKव्_५,३.१११ः

प्रत्न पूर्व विश्व इम इत्येतेभ्यः इवार्थे थाल्प्रत्ययो भवति छन्दसि विषये।
तं प्रत्नथा पूर्वथा विश्वथेमथा।।

---

1. <पूगाञ्ञ्योऽग्रामणीपूर्वात्>#।। PS_५,३.११२।।

_______Sठाञ्ठ्JKव्_५,३.११२ः

इवार्थे इति निवृत्तं।
नानाजातिया अनियतवृत्तयोऽर्थकां अप्रधानाः सङ्घाः पूगाः।
पूगवाचिनः प्रातिपदिकातग्रामणीपूर्वात्स्वार्थे ञ्यः प्रत्ययो भवति।
लौहध्वज्यः, लौहध्वज्यौ, लोहध्वजाः।
शैव्यः, शैब्यौ, शिबयः।
चातक्यः, चातक्यौ, चातकाः।
अग्रामणीपूर्वातिति किं ? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः।
यज्ञदत्तकाः।।

---

1. <व्रात-च्फञोरस्त्रियाम्>#।। PS_५,३.११३।।

_______Sठाञ्ठ्JKव्_५,३.११३ः

नानाजातियाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः।
व्रातवाचिभ्यः प्रातिपदिकेभ्यः च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियां।
कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः।
व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमताः।
च्फञः खल्वपि - कौञ्जायन्यः, कौञ्जायनयौ, कौञ्जायनाः।

ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नयनाः ।
अस्त्रियां इति किं ? कपोतपाकी ।
व्रीहिमती ।
कौञ्जायनी ।
ब्राध्नायनी । ।

---

1. <आयुध-जीविसङ्क्घाञ्ञ्यङ्-वाहीकेष्वब्राह्मण-राजन्यात्># । । PS_५,३.११४ । ।

_______Sठाञ्ठ्JKव्_५,३.११४ः

आयुधजीविनां सङ्घः आयुधजीविसङ्घः ।
स वाहीकैर्विशेष्यते ।
वाहीकेषु य आयुधजीविसङ्घः, तद्वाचिनः प्रातिपदिकात्ब्राह्मणराजन्यवर्जितात्स्वार्थे ञ्यट्प्रत्ययो भवति ।
ब्राह्मणे तद्विशेषग्रहणं ।
राजन्ये तु स्वरूपग्रहणं एव ।
टकारो ङीबर्थः, तेन अस्त्रियां इति न अनुवर्तते ।
कौण्डिबृस्यः, कौण्डीवृस्यौ, कौण्डीवृसाः ।
क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः ।
मालव्यः, मालव्यौ, मालवाः ।
स्त्रियां - कौण्दिवृसी ।
क्षौद्रकी ।
मालवी ।
आयुधजीविग्रहणं किं ? मल्लाः ।
शयण्डाः ।
सङ्घग्रहणं किं ? सम्राठ् ।
वाहीकेसु इति किं ? शबराः ।
पुलिन्दाः ।
अब्राह्मणराजन्यातिति किं ? गोपालवा ब्राह्मणाः ।
शालङ्कायना राजन्याः । ।

---

[#५५६]

1. <वृकाट्टेण्यण्># । । PS_५,३.११५ । ।

_______Sठाञ्ठ्JKव्_५,३.११५ः

आयुधजीविसङ्घातिति वर्तते ।
वृकशदातायुधजीविनः स्वार्थे टेण्यण्प्रत्ययो भवति ।

टकारो ङीबर्थो, णकारो वृद्ध्यर्थः ।
वार्केण्यः, वार्केण्यौ, वृकाः ।
आयुधजीविसङ्घविशेषणं, जातिशब्दान्मा भूथ् ।
कामक्रोधौ मनुस्याणां खादितारौ वृकाविव । ।

---

1. <दामन्यादि-त्रिगर्तष्ठाच्छः># । । PS_५,३.११६ । ।

______Sठा~ठ्JKव्_५,३.११६ः

आयुधजीविसङ्घातिति वर्तते ।
दामन्यादिभ्यः प्रातिपदिकेभ्यः त्रिगर्तषष्ठेभ्यः च आयुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति ।
येषां आयुधजीविनां सङ्घानां षडन्तवर्गास्तेषां च त्रिगर्तः षष्ठः ।
त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठाः इत्युच्यन्ते ।
तेषु च+इयं स्मृतिः -- आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टकिर्जालमानिश्च ब्राह्मगुप्तोऽर्थ जानकिः । ।
इति ।
दामन्यादिभ्यस्तावत्- दामनीयः, दामनीयौ, दामनयः ।
औलपीयः, औलपीयौ, उलपयः ।
त्रिगर्तषष्ठेभ्यः खल्वपि - कोण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः ।
दाण्डकीयः, दाण्डकीयौ, दाण्डकयः ।
कौष्टकीयः ।
जालमानीयः ।
ब्रह्मगुप्तीयः ।
जानकीयः ।
दामनी ।
औलपि ।
आकिदन्ती ।
काकरन्ति ।
काकदन्ति ।
शत्रुन्तपि ।
सार्वसेनि ।
बिन्दु ।
मौञ्जायन ।
उलभ ।
सावित्रीपुत्र ।
दामन्यादिः । ।

---

1. <पर्श्वादि-यौधेयादिभ्यां अण्-अञौ># । । PS_५,३.११७ । ।

______Sठा~ठ्JKव्_५,३.११७ः

आयुधजीविसङ्घातित्येव।
पर्श्वादिभ्यः यौधेयादिभ्यश्च प्रातिपदिकेभ्यः आयुधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः।
पार्शवः, पर्शवौ, पार्शवः।
आसुरः, आसुरौ, असुराः।
यौधेयः।
शौक्रेयः।
पर्शु।
असुर।
रक्षस्।
बाह्लीक।
वयस्।
मरुथ्।
दशार्ह।
पिशाच।
विशाल।
अशनि।
कार्षापण।
सत्वथ्।
वसु।
पर्श्वादिः।
यौधेय।
कौशेय।
क्रौशेय।
शौक्रेय।
शौभ्रेय।
धार्तेय।
वार्तेय।
जाबालेय।
त्रिगर्त।
भरत।
उशीनर।
यौधेयादिः।।

---

1. <अभिजिद्-विदभृच्-छालावच्-छिखावच्-छमीवद्-ऊर्णावच्-छरुमद्-अणो यञ्>#।। PS_५,३.११८।।

______Sठा~ठ्JKव्_५,३.११८ः

आयुधजीविसङ्घातिति निवृत्तं।
अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ्प्रत्ययो भवति।
अभिजितोऽपत्यं इत्यण्, तदन्ताद्यञ्।

[#५५७]

आभिजित्यः, आभिजित्यौ, आभिजिताः ।
वैदभृत्यः, वैदभृत्यौ, वैदभृताः ।
शालावत्यः, शालावत्यौ, शालावताः ।
शैखावत्यः ।
शामीवत्यः ।
और्णावत्यः ।
श्रॐअत्यः ।
गोत्रप्रत्ययस्य अत्र अणो ग्रहणं इष्यते ।
अभिजितो मुहुर्तः, आभिजितःस्थालीपाकः इत्यत्र न भवति । ।

---

1. <ञ्यादयस्तद्राजाः># । । PS_५,३.११९ । ।

_______Sठाञ्ठ्JKव्_५,३.११९ः

पूगाञ्ञ्योऽग्रामणीपूर्वात्(*५,३.११२) इत्यतः प्रभृति ये प्रत्ययाः, ते तद्राजसञ्ज्ञा भवन्ति ।
तथा च+एव+उदाहृतं ।
तद्राजप्रदेशाः - तद्राजस्य बहुसु इत्येवं आदयः । ।
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य तृतीयः पादः

---

पञ्चमाध्यायस्य चतुर्थः पादः ।

---

[#५५८]

1. <पादशतस्य सङ्ख्यादेर्वीप्सायां वुन्लोपश्च># । । PS_५,४.१ । ।

_______Sठाञ्ठ्JKव्_५,४.१ः

पादशतान्तस्य सङ्ख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन्प्रत्ययो भवति ।
तत्सन्नियोगेन चान्तस्य लोपो भवति ।
यस्य+इति लोपेन+एव सिद्धे पुनर्वचनं अनैमित्तिकार्थं ।
यस्य+इति लोपः परनिमित्तकः ।
तस्य स्थानिवद्भावात्पादः पत्(*६,४.१३०) इति पद्भावो न स्याथ् ।
अस्य त्वनैमित्तिकत्वान्न स्थानिवत्त्वं ।
द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति ।
द्वे द्वे शते ददाति द्विशतिकां ददाति ।

तद्धितार्थ इति समासः ।
ततः प्रत्ययः ।
स्वभावाच्च वुन्प्रत्ययान्तं स्त्रियां एव वर्तते ।
पादशतस्य इति किं ? द्वौ द्वौ माषौ ददाति ।
सङ्ख्यादेः इति किं ? पादं पादं ददाति ।
वीप्सायां इति किं ? द्वौ पादौ ददाति ।
द्वे शते ददाति ।
पादशतग्रहणं अनर्थकं ।
अन्यत्र अपि दर्शनाथ् ।
द्विमोदकिकां ददाति त्रिमोदकिकां ददाति । ।

---

1. <दण्ड-व्यवसर्गयोश्च># । । PS_५,४.२ । ।

_______Sठाऽ्ठJKव्_५,४.२ः

दमनं दण्डः ।
दानं व्यवसर्गः ।
दण्डव्यवसर्गयोः गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य सङ्ख्यादेः वुन्प्रत्ययो भवति, अन्तलोपश्च ।
अवीप्सार्थोऽयं आरम्भः ।
द्वौ पादौ दण्डितः द्विपदिकां दण्डितः ।
द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति ।
द्विशतिकां दण्डितः ।
त्रिशतिकां ।
द्विशतिकां व्यवसृजति ।
त्रिशतिकां । ।

---

1. <स्थूलादिभ्यः प्रकारवचने कन्># । । PS_५,४.३ । ।

_______Sठाऽ्ठJKव्_५,४.३ः

स्थूलादिभ्यः प्रकारवचने द्योत्ये कन्प्रत्ययो भवति ।
जातीयरः अपवादः ।
प्रकारो विशेषः ।
स्थूलप्रकारः स्थूलकः ।
अणुकः ।
माषकः ।
कन्प्रकरणे चञ्चद्बृहतोरुपसङ्ख्यानं ।
चञ्चत्प्रकारः चञ्चत्कः ।
बृहत्कः ।

चञ्चद्बृहयोः इति केचित्पठन्ति ।
तेषां चञ्चकः, बृहकः इति उदाहरणं द्रष्टव्यं ।
स्थूल ।
अणु ।
माष ।
इषु ।
कृष्ण तिलेषु ।
यव व्रीहिषु ।
पाद्यकालावदाताः सुरायां ।
गोमूत्र आच्छादने ।
सुराया अहौ ।
जीर्ण शालिषु ।
पत्रमूले समस्तव्यस्ते ।
कुमारीपुत्र ।
कुमार ।
श्वशुर ।
मणि ।
इति स्थूलादिः । ।

---

[#५५९]

1. <अनत्यन्तगतौ क्तात्># । । PS_५,४.४ । ।

_______Sठाऱ्ठ्JKव्_५,४.४ः

अत्यन्तगतिः अशेषसम्बन्धः, तदभावोऽन्त्यन्तगतिः ।
अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन्प्रत्ययो भवति ।
भिन्नकः ।
छन्नकः ।
अनत्यन्तगतौ इति किं ? भिन्नं ।
छिन्नं । ।

---

1. <न सामिवचने># । । PS_५,४.५ । ।

_______Sठाऱ्ठ्JKव्_५,४.५ः
सामिवचने उपपदे क्तान्तात्कन्प्रत्ययो न भवति ।
सामिकृतं ।
सामिभुक्तं ।

वानग्रहणं पर्यायार्थं ।
अर्धकृतं ।
नेमकृतं ।
सामिवचने प्रतिषेधानर्थक्यम्, प्रकृत्याभिहितत्वात्? एवं तर्हि न+एव अयं अनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि, स्वार्थिकस्य ।
केन पुनः स्वर्थिकः कन्विहितः ? एतदेव ज्ञापकं भवति स्वार्थे कनिति ।
तत्र यदेतदुच्यते, एवं हि सूत्रं अभिन्नतरकं भवति, एतैर्हि बहुतरकं व्याप्यते इत्येवं आदि, तदुपपन्नं भवति । ।

---

1. <बृहत्या आच्छादने># । । PS_५,४.६ । ।

_______Sठा-ठ्JKव्_५,४.६ः

कन्ननुवर्तते, न प्रतिषेधः ।
बृहतीशब्दादाच्छादने वर्तमानात्स्वार्थे कन्प्रत्ययो भवति ।
बृहतिका ।
आच्छादने इति किं ? बृहतीछन्दः । ।

---

1. <अषडक्ष-आशितङ्ग्व्-अलङ्कर्म-अलम्पुरुष-अध्युत्तरपदात्खः># । । PS_५,४.७ । ।

_______Sठा-ठ्JKव्_५,४.७ः

अषडक्ष आशितङ्गु अलग्कर्म अलम्पुरुष इत्येतेभ्यः अध्युत्तरपदात्च स्वार्थे खः प्रत्ययो भवति ।
अविद्यमानानि षड्क्षीणि अस्य इति बहुव्रीहिः ।
बहुव्रीहौ सक्थ्यक्ष्णोः इति षच्, ततः खप्रत्ययः ।
अषडक्षीणो मन्त्रः ।
यो द्वाभ्यं एव क्रियते न बहुभिः ।
आशिता गावोऽस्मिन्नरण्ये आशितङ्गवीनं अरण्यं ।
निपातनात्पूर्वपदस्य मुमागमः ।
अकङ्कर्मन्, अलम्पुरुषः इति पर्यादयो ग्लानद्यर्थे चतुर्थ्या इति समासः ।
अलं कर्मणे अलङ्ककर्मीणः ।
अलं पुरुषाय अलंपुरुषीणः ।
अध्युत्तरपदस्तत्पुरुसः ।
अधिशब्दः शौण्डादिसु पठ्यते ।
राजाधीनः ।
नित्यश्च अयं प्रत्ययः, उत्तरत्र विभाषाग्रहणाथ् ।
अन्येऽपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते, तमबादयः प्रक्क्नः, ञ्यादयः प्राग्वुनः, आमादयः प्राङ्मयटः, बृहतीजात्यन्ताः समानान्ताश्च इति । ।

---

[#५६०]

1. <विभाषा-अञ्चेरदिक्स्त्रियाम्># । । PS_५,४.८ । ।

_______Sठा~ठ्JKव्_५,४.८ः

अञ्चत्यन्तात्प्रातिपदिकातदिक्स्त्रियां वर्तमानात्स्वार्थे विभाषा खः प्रत्ययो भवति ।
प्राक्प्राचीनं ।
अर्वाक्, अर्वाचीनं ।
अदिक्स्त्रियां इति किं ? प्राची दिक् ।
प्रतीची दिक् ।
दिग्ग्रहणं किं ? प्राचीना ब्राह्मणी ।
अवाचीना ।
स्त्रीग्रहणं किं ? प्राचीनं दिग्रमणीयं ।
उदीचीनं दिग्ररमणीयं । ।

---

1. <जात्यन्ताच्छ बन्धुनि># । । PS_५,४.९ । ।

_______Sठा~ठ्JKव्_५,४.९ः

जात्यन्तात्प्रातिपदिकात्बन्धुनि वर्तमानात्स्वार्थे छः प्रत्ययो भवति ।
बध्यतेऽस्मिञ्जातिः इति बन्धुशब्देन द्रव्यं उच्यते ।
येन ब्राह्मणत्वादिजातिर्व्यज्यते तद्बन्धु द्रव्यं ।
ब्राह्मणमातीयः, क्षत्रियजातीयः, वैश्यजातीयः इति ब्राह्मणादिरेव+उच्यते ।
बन्धुनि इति किं ? ब्राह्मणजातिः शोभना । ।

---

1. <स्थानान्ताद्विभाषा सस्थानेन+इति चेत्># । । PS_५,४.१० । ।

_______Sठा~ठ्JKव्_५,४.१०ः

स्थानान्तात्प्रातिपदिकात्विभाषा छः प्रत्ययो भवति सस्थानेन चेत्स्थानान्तमर्थवद्भवति ।
सस्थानः इति तुल्य उच्यते, समानं स्थानं अस्य इति कृत्वा ।
पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः ।
मातृस्थानीयः, मातृस्थानः ।

राजस्थानीयः, राजस्थानः ।
सस्थानेन इति किं ? गोस्थानं ।
अश्वस्थानं ।
इतिकरणो विवक्षार्थः ।
तेन बहुव्रीहिः सस्थानशब्दार्थं उपस्थापयति, न तत्पुरुषः ।
चेच्छब्दः सम्बन्धार्थः ।
द्व्योर्विभाषयोर्नित्या विधयः इति पूर्वत्र नित्यविधयः । ।

---

1. <किम्-एत्-तिङ्-अव्यय-घाद्-आंव्-अद्रव्यप्रकर्षे># । । PS_५,४.११ । ।

_______Sठा-ठ्JKव्_५,४.११ः

किम एकारान्तात्तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात्प्रातिपदिकातद्रव्यप्रकर्षे आमुप्रत्ययो भवति ।
यद्यपि द्रव्यस्य स्वतः प्रकर्षो न अस्ति, तथा अपि क्रियागुणस्थः प्रकर्षो यदा द्रव्ये उपचर्यते तदाऽयं प्रतिषेधः ।
क्रियागुणयोरेव अयं प्रकर्षे प्रत्ययः ।
किंतरां ।
किंतमां ।
पूर्वाह्णेतरां ।
पूर्वाह्णेतमां ।
पचतितरां ।
पचतितमां ।
उच्चैस्तरां ।
उच्चैस्तमां ।
अद्रव्यप्रकर्षे इति किं ? उच्चैस्तरः ।
उच्चैस्तमः । ।

---

[#५६१]

1. <अमु च च्छन्दसि># । । PS_५,४.१२ । ।

_______Sठा-ठ्JKव्_५,४.१२ः

किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये ।
चकारादामु च ।
प्रतरं न आयुः ।
प्रतरां नय ।
स्वरादिषु अं आं इति पठ्यते, तस्मात्तदन्तस्य अव्ययत्वं । ।

---

1. <अनुगादिनष्ठक्># । । PS_५,४.१३ । ।

_______Sठा~ठ्JKव्_५,४.१३ः

अनुगदति इति अनुगादि ।
अनुगादिन्शब्दात्स्वार्थे ठक्प्रत्ययो भवति ।
आनुगादिकः । ।

---

1. <णचः स्त्रियां अञ्># । । PS_५,४.१४ । ।

_______Sठा~ठ्JKव्_५,४.१४ः

कर्मव्यतिहारे णच्स्त्रियां (*३,३.४३) ।
इति णच्विहितः, तदन्तात्स्वार्थे अञ्प्रत्ययो भवति स्त्रियां विषये ।
व्यावक्रोशी ।
व्यावहासी वर्तते ।
स्त्रीग्रहणं किमर्थम्, यावता णच्स्त्रियां एव विहितः, ततः स्वार्थिकस्तत्र+एव भविष्यति ? एवं तर्ह्येतज्ज्ञापयति - स्वार्थिकाः प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि इति ।
तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवता इत्येवं आदि उपपन्नं भवति । ।

---

1. <अणिनुणः># । । PS_५,४.१५ । ।

_______Sठा~ठ्JKव्_५,४.१५ः

अभिविधौ भाव इनुण्(*३,३.४४) विहितः, तदन्तात्स्वार्थे अण्प्रत्ययो भवति ।
सांराविणं वर्तते ।
सांकूटिनं । ।

---

1. <विसारिणो मत्स्ये># । । PS_५,४.१६ । ।

_______Sठाञ्ठ्JKव्_५,४.१६ः

विसरति इति विसारी ।
विसारिन्शब्दात्स्वार्थे अण्प्रत्ययो भवति मत्स्येऽभिधेये ।
वैसारिणो मत्स्यः ।
मत्स्ये इति किं ? विसारी देवदत्तः । ।

---

1. <सङ्क्यायाः क्रिया-अभ्यावृत्तिगणने कृत्वसुच्># । । PS_५,४.१७ । ।

_______Sठाञ्ठ्JKव्_५,४.१७ः

सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच्प्रत्ययो भवति ।
पौनःपुन्यं अभ्यावृत्तिः ।
एककर्तृणां तुल्यजातीयानां क्रियाणां जन्मसङ्ख्यानं क्रियाभ्यावृत्तिगणनं, तत्र प्रत्ययः ।
पञ्चवारान्भुङ्क्ते पञ्चकृत्वः ।
सप्तकृत्वः ।
सङ्ख्यायाः इति किं ? मूरीन्वारान्भुङ्क्ते ।
क्रियाग्रहणं किमर्थम्, यावता अभ्यवृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोः ? उत्तरार्थं क्रियाग्रहणं ।
एकस्य सकृच्च (*५,४.१९) इत्यत्र क्रिय+एव गण्यते, न अभ्यावृत्तिः, असम्भवाथ् ।
अभ्यावृत्तिग्रहणं किं ? क्रियामात्रग्रहणे मा भूथ् ।
पञ्च पाकाः ।
दश पाकाः ।

[#५६२]

गणनग्रहणं किमर्थम्, यावता गणनात्मिकैव सङ्ख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः सङ्ख्येयवचनेभ्य एव प्रत्ययः स्यात्, शतवारान्भुङ्क्ते शतकृत्वः इति ? इह न स्यात्, शतं वाराणां भुङ्क्ते इति ? न ह्यत्र अभ्यावृत्तौ शतशब्दः, सङ्ख्यानमात्रवृत्तित्वाथ् ।
गणनग्रहणात्तु सर्वत्र सिद्धं भवति । ।

---

1. <द्वि-त्रि-चतुर्भ्यः सुच्># । । PS_५,४.१८ । ।

_______Sठाञ्ठ्JKव्_५,४.१८ः

द्वि त्रि चतुरित्येतेभ्यः सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच्प्रत्ययो भवति ।
कृत्वसुचोऽपवादः ।
द्विर्भुङ्क्ते ।

त्रिर्भुङ्क्ते।
चत्रुभुक्तं।
चकारः स्वरार्थः।।

---

1. <एकस्य सकृच्च># ।। PS_५,४.१९ ।।

_______SठाR्ठJKव्_५,४.१९ः

एकशब्दस्य सकृतित्ययं आदेशो भवति सुच्च प्रत्ययः क्रियागणेन।
कृत्वसुचोऽपवादः।
अभ्यावृत्तिस्त्विह न सम्भवति।
सकृद्भुङ्क्ते।
सकृदधीते।
एकः पाकः इत्यत्र न भवति, अनभिधानात्।।

---

1. <विभाषा बहोर्धाऽविप्रक्रष्टकाले># ।। PS_५,४.२० ।।

_______SठाR्ठJKव्_५,४.२०ः

बहुशब्दात्क्रियाभ्यावृतिगणने वर्तमानात्विभाषा धा प्रत्ययो भवति।
कृत्वसुचोऽपवादः।
पक्षे सोऽपि भवति।
अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणं।
क्रियाणामुत्पत्तयश्चेदासन्नकालाः भवन्ति, न विप्रकृष्टकालाः।
बहुधा दिवसस्य भुङ्क्ते, बहुकृत्वो दिवसस्य भुङ्क्ते।
अविप्रकृष्टकाले इति किं? बहुकृत्वो मासस्य भुङ्क्ते।।

---

1. <तत्प्रकृतवचने मयट्># ।। PS_५,४.२१ ।।

_______SठाR्ठJKव्_५,४.२१ः

तदिति प्रथमासमर्थविभक्तिः।

प्राचुर्येण प्रस्तुतं प्रकृतं ।
प्रथमासमर्थात्प्रकृतोपाधिकेऽर्थे वर्तमानात्स्वार्थे मयट्प्रत्ययो भवति ।
टकारो ङीबर्थः ।
अन्नं प्रकृतं अन्नमयं ।
अपूपमयं ।
अपरे पुनरेवं सूत्रार्थं आहुः ।
प्रक्र्तं इति उच्यतेऽस्मिनिति प्रकृतवचनं ।
तदिति प्रथमासमर्थात्प्रकृतवचनेऽभिधेये मयट्प्रत्ययो भवति ।
अन्नं प्रकृतं अस्मिनन्नमयो यज्ञः ।
अपूपमयं पर्व ।
वटकमयी यात्रा ।
द्वयं अपि प्रमाणम्, उभयथा सूत्रप्रणयनात् । ।

---

1. <समूहवच्च बहुषु># । । PS_५,४.२२ । ।

_______Sठाञ्ठJKव्_५,४.२२ः

तत्प्रकृतवचने इत्येव ।
बहुसु प्रकृतेषु उच्यमानेसु समूहवत्प्रत्यया भवन्ति ।
चकारात्मयट्च ।
मोदकाः प्रकृताः प्राचुर्येण प्रस्तुताः मौदकिकम्, मोदकमयं ।
शाष्कुलिकम्, शष्कुलीमयं ।
अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि ।

[#५६३]

द्वितीये सूत्रार्थे - मोदकाः प्रकृताः अस्मिन्यज्ञे मौदकिको यज्ञः, मोदकमयः ।
शाष्कुलिकः, शष्कुलीमयः । ।

---

1. <अनन्त-आवसथ-इतिह-भेषजाञ्ञ्यः># । । PS_५,४.२३ । ।

_______Sठाञ्ठJKव्_५,४.२३ः

अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति ।
अनन्त एव आनन्त्यं ।
आवसथ एव आवसथ्यं ।
इति ह ऐतिह्यं ।
निपातसमुदायोऽयं उपदेशपारम्पर्ये वर्तते ।

भेषजं एव भैषज्यं ।
महाविभाषया विकल्पते प्रत्ययः । ।

---

1. <देवतान्तात्तादर्थ्ये यत्># । । PS_५,४.२४ । ।

______Sठाऱ्ठJKव्_५,४.२४ः

देवताशब्दान्तात्प्रातिपदिकात्चतुर्थीसमर्थात्तादर्थे यत्प्रत्ययो भवति ।
तदर्थ एव तादर्थ्यं ।
चातुवर्ण्यादित्वात्ष्यञ् ।
तदिति प्रकृत्यर्थे निर्दिश्यते ।
आग्निदेवतायै इदं अग्निदेवत्यं ।
पितृदेवत्यं ।
वायुदेवत्यं । ।

---

1. <पाद-अर्घाभ्यां च># । । PS_५,४.२५ । ।

______Sठाऱ्ठJKव्_५,४.२५ः

तादर्थ्ये इत्येव ।
पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्ये अभिधेये यत्प्रत्ययो भवति ।
पादर्थमुदकं पाद्यं ।
अर्घ्यं ।
अनुक्तसमुच्चयार्थश्चकारः ।
यथादर्शनं अन्यत्र अपि प्रत्ययो भवति ।
एष वै छन्दस्यः प्रजापतिः ।
वसु, अपस्, ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त, यविष्ठ इत्येतेभ्यः छन्दसि स्वार्थे यत्प्रत्ययो भवति ।
अग्निरीशे वसव्यस्य ।
अपस्यो वसानाः ।
द्वितीयाबहुवचनस्य अलुक् ।
अपो वसानाः इत्यर्थः ।
स्व ओक्ये ।
कव्योऽसि कव्यवाहनः ।
क्षेम्यमध्यवस्यति ।
वायुर्वर्चस्यः ।
निष्केवल्यं शंसन्ति ।
उक्थ्यं शंसति ।
जन्यं ताभिः ।

पूर्व्या विदुः ।
स्तोमं जनयामि नव्यं ।
सूर्यः ।
मत्यः ।
यविष्ठ्यः ।
आमुष्यायणामुष्यपुत्रिकेत्युपसङ्ख्यानं ।

[#५६४]

समशब्दादावतुप्रत्ययो वक्तव्यः ।
समावद्वसति ।
नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्ययाः ।
नूत्नम्, नूतनम्, नवीनं ।
नश्च पुराणे प्रात् ।
पुराने वर्तमानात्प्रशब्दान्नप्रत्ययो भवति ।
चकारान्नप्तनप्खाश्च ।
प्रणम्, प्रत्नम्, प्रतनम्, प्रीणं ।
भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः ।
भागधेयं ।
रूपधेयं ।
नामधेयं ।
मित्राच्छन्दसि ।
मित्रधेये यतस्व ।
आग्नीध्रासाधरणादञ् ।
आग्नीध्रं ।
साधारणं ।
स्त्रियां ङीप्- आग्नीध्री साधारणी ।
वाप्रकरनाच्च विकल्पन्ते एतान्युपसंख्यानानि, तेन यथाप्राप्तं अपि भवति, आग्नीध्रा शाला, साधारणा भूः इति ।
अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः ।
आयवसे रमन्ते ।
मारुतं शर्धाः । ।

---

1. <अतिथेर्ञ्यः># । । PS_५,४.२६ । ।

______Sठाञ्ठ्JKव्_५,४.२६ः

तादर्थ्ये इत्येव ।
अतिथिशब्दात्चतुर्थिसमर्थात्तादर्थ्ये अभिधेये ञ्यः प्रत्ययो भवति ।
अतिथये इदं आतिथं । ।

---

1. <देवात्तल्># । । PS_५,४.२७ । ।

_______Sठा~ठ्JKव्_५,४.२७ः

तादर्थ्ये इति निवृत्तं ।
देवशब्दात्स्वार्थे तल्प्रत्ययो भवति ।
देव एव देवता । ।

---

[#५६५]

1. <अवेः कः># । । PS_५,४.२८ । ।

_______Sठा~ठ्JKव्_५,४.२८ः

अविशब्दात्स्वार्थे कः प्रत्ययो भवति ।
अविरेव अविकः । ।

---

1. <यावादिभ्यः कन्># । । PS_५,४.२९ । ।

_______Sठा~ठ्JKव्_५,४.२९ः

याव इत्येवं आदिभ्यः स्वार्थे कन्प्रत्ययो भवति ।
याव एव यावकः ।
माणिकः ।
याव ।
मणि ।
अस्थि ।
चण्ड ।
पीत ।
स्तम्ब ।
ऋतावुष्णशीते ।
पशौ लूनवियाते ।
अणु निपुणे ।
पुत्र कृत्रिमे ।
स्नात वेदसमाप्तौ ।
शून्य रिक्ते ।
दान कुत्सिते ।
तनु सूत्रे ।

ईयसश्च ।
श्रेयस्कः ।
ज्ञात ।
कुमारीक्रीडनकानि च ।
यावादिः । ।

---

1. <लोहितान्मणौ># । । PS_५,४.३० । ।

_______Sठा्ऽJKव्_५,४.३०ः

लोहितशब्दात्मणौ वर्तमानात्स्वार्थे कन्प्रत्ययो भवति ।
लोहितो मणिः लोहितकः ।
मणौ इति किं ? लोहितः । ।

---

1. <वर्णे च अनित्ये># । । PS_५,४.३१ । ।

_______Sठा्ऽJKव्_५,४.३१ः

अनित्ये वर्णे वर्तमानात्लोहितशब्दात्स्वार्थे कन्प्रत्ययो भवति ।
लोहितकः कोपेन ।
लोहितकः पीडनेन ।
अनित्ये इति किं ? लोहितो गौः ।
लोहितं रुधिरं ।
लोहिताल्लिङ्गबाधनं वा वक्तव्यं ।
लोहितिका कोपेन ।
लोहिनिका कोपेन । ।

---

1. <रक्ते># । । PS_५,४.३२ । ।

_______Sठा्ऽJKव्_५,४.३२ः

लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात्कन्प्रत्ययो भवति ।
लोहितकः कम्बलः ।

लोहितकः पटः ।
लिङ्गबाधनं वा इत्येव, लोहितिका, कोहिनिका शाटी । ।

---

1. <कालाच्च># । । PS_५,४.३३ । ।

_______Sठा¬ठ्JKव्_५,४.३३ः

वर्णे च अनित्ये (*५,४.३१), रक्ते (*५,४.३२) इति द्वयं अप्यनुवर्तते ।
कालशब्दातनित्ये वर्तमानात्रक्ते च कन्प्रत्ययो भवति ।
कालकं मुखं वैलक्ष्येण ।
रक्ते - कालकः पटः ।
कालिका शाटी । ।

---

[#५६६]

1. <विनयादिभ्यष्ठक्># । । PS_५,४.३४ । ।

_______Sठा¬ठ्JKव्_५,४.३४ः

विनय इत्येवं आदिभ्यः स्वार्थे ठक्प्रत्ययो भवति ।
विनय एव वैनयिकः ।
सामयिकः ।
औपयिकः ।
विभाषाग्रहणेन प्रत्ययो विकल्प्यते ।
विनय ।
समय ।
उपायाद्घ्रस्वत्वं च ।
सङ्गति ।
कथञ्चिथ् ।
अकस्माथ् ।
समयाचार ।
उपचार ।
समाचार ।
व्यवहार ।
सम्प्रदान ।
समुत्कर्ष ।
समूह ।
विशेष ।
अत्यय ।

विनयादिः ।।

---

1. <वाचो व्याहृत-अर्थायाम्># ।। PS_५,४.३५ ।।

_______SठाV्ठJKव्_५,४.३५ः

व्याहृतः प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्तमानाद्वाच्शब्दात्स्वार्थे ठक्प्रत्ययो भवति ।
पूर्वम्न्येन+उक्तार्थत्वात्सन्देशवाग्व्याहृतार्था इत्युच्यते ।
वाचिकं कथयति ।
वाचिकं श्रद्दधे ।
व्याहृतार्थायां इति किं ? मधुरा वाक्देवदत्तस्य ।।

---

1. <तद्युक्तात्कर्मणोऽण्># ।। PS_५,४.३६ ।।

_______SठाV्ठJKव्_५,४.३६ः

व्याहृतार्थया वाचा यत्कर्म युक्तं, तदभिधायिनः कर्मशब्दात्स्वार्थे अण्प्रत्ययो भवति ।
कर्म एव कार्मणं ।
वाचिकं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणं इत्युच्यते ।
अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसङ्ख्यानं ।
कुलाल एव कौलालः ।
वारुडः ।
नैषादः ।
कार्मारः ।
चाण्डालः ।
मैत्रः ।
आमित्रः ।
सान्नायानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्न- वैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः ।
एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते ।
सान्नाय्यं ।
आनुजावरः ।
आनुषूकः ।
आष्टुभः ।
चातुष्प्राश्यः ।
राक्षोघ्नं ।
वैयातः ।
वैकृतः ।
वारिवस्कृतः ।

आग्रायणः ।
आग्रहायणः ।
सान्तपनः । ।

---

1. <ओषधेरजातौ># । । PS_५,४.३७ । ।

_______Sठा~ठ्JKव्_५,४.३७ः

ओषधिशब्दादजातौ वर्तमानात्स्वार्थेऽण्प्रत्ययो भवति ।
औषधं पिबति ।
औषधं ददाति ।
अजातौ इति किं ? ओषधयः क्षेत्रे रूढा भवन्ति । ।

---

[#५६७]

1. <प्रज्ञादिभ्यश्च># । । PS_५,४.३८ । ।

_______Sठा~ठ्JKव्_५,४.३८ः

प्रजानाति इति प्रज्ञः ।
प्रज्ञ इत्येवं आदिभ्यः प्रातिपदिकेभ्यः स्वार्थे अण्प्रत्ययो भवति ।
प्रज्ञ एव प्राज्ञः ।
प्राज्ञी स्त्री ।
यस्य अस्तु प्रज्ञा विद्यते सा प्राज्ञा प्रज्ञा-श्रद्धा-अर्चा-वृत्तिभ्यो णः (*५,२.१०१) इति ।
विदन्नित्यत्र पठ्यते ।
विदेः शत्रन्तस्य ग्रहणं, विदेः शतुर्वसुः (*७,२.३६) इत्यत एव ज्ञापकात्पाक्षिको वस्वादेशः ।
अन्यतरस्यांग्रहणं वा तत्र अनुवर्तते, तु-ह्योस्तातङाशिष्य्-अन्यतरस्यां (*७,१.३५) इति ।
प्रज्ञ ।
वणिज् ।
उशिज् ।
उष्णिज् ।
प्रत्यक्ष ।
विद्वस् ।
विदन् ।
षोडन् ।
षोडश ।
विद्या ।
मनस् ।

श्रोत्र शरीरे - श्रौत्रं ।
जुह्वत्कृष्णमृगे ।
चिकीर्षथ् ।
चोर ।
शत्रु ।
योध ।
चक्षुस् ।
वक्षस् ।
धूर्त ।
वस् ।
एथ् ।
मरुथ् ।
क्रुङ् ।
राजा ।
सत्वन्तु ।
दशार्ह ।
वयस् ।
आतुर ।
रक्षस् ।
पिशाच ।
अशनि ।
कार्षापण ।
देवता ।
बन्धु ।
प्रज्ञादिः । ।

---

1. <मृदस्तिकन्># । । PS_५,४.३९ । ।

______Sठा¬ठ्JKव्_५,४.३९ः

मृच्छब्दात्स्वार्थे तिकन्प्रत्ययो भवति ।
विकल्पः स्वत्रानुवर्तते ।
मृदेव मृत्तिका । ।

---

1. <सस्नौ प्रशंसायां># । । PS_५,४.४० । ।

______Sठा¬ठ्JKव्_५,४.४०ः

प्रशंसोपाधिकेऽर्थे वर्तमानान्मृच्छब्दात्स स्न इत्येतौ प्रत्ययौ भवतः ।
रूपपः अपवादः ।
प्रशस्ता मृद्मृत्सा, मृत्स्ना ।
नित्यश्च अयं प्रत्ययः, उत्तरसूत्रेऽन्यतरस्यां ग्रहणात् । ।

---

1. <वृक-ज्येष्ठाभ्यां तिल्-तातिलौ च छन्दसि># । । PS_५,४.४१ । ।

_______Sठाऽ्ठJKव्_५,४.४१ः

प्रशंसायां इत्येव ।
वृक-ज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्तमानाभ्यां यथासङ्ख्यं तिल्-तातिलौ प्रत्ययौ भवतः छन्दसि विषये ।
रूपपोऽपवादौ ।
वृकतिः ।
ज्येष्ठतातिः । ।

---

1. <बह्व्-अल्प-अर्थाच्छस्कारकादन्यतरस्याम्># । । PS_५,४.४२ । ।

_______Sठाऽ्ठJKव्_५,४.४२ः

बह्वर्थातल्पार्थाच्च कारकाभिधायिनः शब्दात्शस्प्रत्ययो भवति अन्यतरस्यां ।
विशेषानभिधानाच्च सर्वं कर्मादिकारकं गृह्यते ।
बहूनि ददाति बहुशो ददाति ।
अल्पं ददाति अल्पशो ददाति ।
बहुभिर्ददाति बहुशो ददाति ।
अल्पेन, अल्पशः ।
बहुभ्यः, बहुशः ।
अल्पाय, अल्पशः इत्येवं आद्युदाहार्यं ।
बह्वल्पार्थातिति किं ? गां ददाति ।

[#५६८]

अश्वं ददाति ।
कारकातिति किं ? बहूनां स्वामी ।
अल्पानां स्वामी ।
अर्थग्रहणात्पर्यायेभ्योऽपि भवति ।
भूरिशो ददाति ।
स्तोकशो ददाति ।
बह्वल्पार्थान्मङ्गलामङ्गलवचनं ।
यत्र मङ्गलं गम्यते तत्र अयं प्रत्यय इस्यते ।

बहुशो ददाति इति आभ्युदयिकेषु कर्मसु ।
अल्पशो ददाति इति अनिष्टेषु कर्मसु । ।

---

1. <सङ्ख्या-एकवचनाच्च वीप्सायाम्># । । PS_५,४.४३ । ।

_______Sठाऽठ्JKव्_५,४.४३ः

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यः एकवचनाच्च वीप्सायां द्योत्यायां शस्प्रत्ययो भवति अन्यतरस्यां ।
द्वौ द्वौ मोदकौ ददाति द्विशः ।
त्रिशः ।
एकवचनात्खल्वपि - कार्षापणं कार्षापणं ददाति कर्षापणशः ।
माषशः ।
पादशो ददाति ।
एकोऽर्थ उच्यते येन तदेकवचनं ।
कार्षापणादयश्च परिमाणशब्दाः वृत्तावेकार्था एव भवन्ति ।
सङ्ख्यैकवचनातिति किं ? घटं घटं ददाति ।
वीप्सायां इति किं ? द्वौ ददाति ।
कार्षापणं ददाति ।
कारकातित्येव, द्वयोर्द्वयोः स्वामी ।
कार्षापणस्य कार्षापणस्य स्वामी । ।

---

1. <प्रतियोगे पञ्चम्यास्तसिः># । । PS_५,४.४४ । ।

_______Sठाऽठ्JKव्_५,४.४४ः

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः प्रत्ययो भवति ।
प्रद्युम्नो वासुदेवतः प्रति ।
अभिमन्युरर्जुनतः प्रति ।
वाग्रहणानुवृत्तेर्विकल्पेन भवति ।
वासुदेवादर्जुनादित्यपि भवति ।
तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानं ।
आदौ आदितः ।
मद्यतः ।
पार्श्वतः ।
पृष्ठतः ।
आकृतिगणश्च अयं । ।

---

1. <अपादाने च अहीय-रुहोः># । । PS_५,४.४५ । ।

_______Sठा।ऌJKव्_५,४.४५ः

अपादाने या पञ्चमी तस्याः पञ्चम्याः वा तसिः प्रत्ययो भवति, तच्चेदपादानं हीयरुहोः सम्बन्धि न भवति ।
ग्रामतः आगच्छति, ग्रामाथ् ।
चोरतः बिभेति, चोराथ् ।
अध्ययनतः पराजयते, अध्ययनाथ् ।
अहीयरुहोः इति किं ? सार्थाद्हीयते ।
पर्वतादवरोहति ।
हीयते इति क्विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर्मा भूत्, भूमित उज्जिहीते, भूमेरुज्जिहीते ।
कथं मन्त्रो हीनः स्वरतो वर्णतो वा इति ।
न+एषा पञ्चमी ।
किं तर्हि, तृतीया ।
स्वरेण वर्णेन वा हीनः इत्यर्थः । ।

---

[#५६९]

1. <अतिग्रह-अव्यथन-क्षेपेष्वकर्तरि तृतीयायाः># । । PS_५,४.४६ । ।

_______Sठा।ऌJKव्_५,४.४६ः

अतिक्रम्य ग्रहः अतिग्रहः ।
अचलनं अव्यथनं ।
क्षेपो निन्दा ।
अतिग्रहादिविषये या तृतीया तदन्ताद्वा तसिः प्रत्ययो भवति, सा चेत्कर्तरि न भवति ।
वृत्तेन अतिगृह्यते वृत्ततोऽतिगृह्यते ।
चारित्रेण अतिगृह्यते चारित्रतोऽतिगृह्यते ।
सुष्ठुवृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यते इत्यर्थः ।
अव्यथने - वृत्तेन न व्यथते वृत्ततो न व्यथते ।
चारित्रेण न व्यथते चारित्रतो न व्यथते ।
वृत्तेन न चलति इत्यर्थः ।
क्षेपे - वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः ।
चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः ।
वृत्तेन निन्दितः इत्यर्थः ।
अकर्तरि इति किं ? देववत्तेन क्षिप्तः । ।

---

1. <हीयमान-पापयोगाच्च># । । PS_५,४.४७ । ।

______Sठा~ठ्JKव्_५,४.४७ः

अकर्तरि तृतीयायाः (*५,४.४६) इत्येव ।
हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात्परा या तृतीया विभक्तिरकर्तरि तदन्ताद्वा तसिः प्रत्ययो भवति ।
वृत्तेन हीयते वृत्ततो हीयते ।
चारित्रेण हीयते चारित्रतो हीयते ।
पापयोगात्- वृत्तेन पापः वृत्ततः पापः ।
चारित्रेण पापः चारित्रतः पापः ।
क्षेपस्य च अविवक्षायां तत्त्वाख्यायां इदं उदाहरणं ।
क्षेपे हि पूर्वेण+एव सिद्धं ।
अकर्तरि इत्येव, देवदत्तेन हीयते । ।

---

1. <षष्ठ्या व्याश्रये># । । PS_५,४.४८ । ।

______Sठा~ठ्JKव्_५,४.४८ः

नानापक्षसमाश्रयो व्याश्रयः ।
व्याश्रये गम्यमाने षष्ठ्यन्ताद्वा तसिः प्रत्ययो भवति ।
देवा अर्जुनतोऽभवन् ।
आदित्याः कर्णतोऽभवन् ।
षष्ठी च अत्र पक्षापेक्षैव ।
अर्जुनस्य पक्षे, कर्णस्य पक्षे इत्यर्थः ।
व्याश्रये इति किं ? वृक्षस्य शाखा । ।

---

1. <रोगाच्च अपनयने># । । PS_५,४.४९ । ।

______Sठा~ठ्JKव्_५,४.४९ः

रोगो व्याधिः ।
तद्वाचिनः शब्दाद्या षष्थी विभक्तिः, तदन्ताद्वा तसिः प्रत्ययो भवति अपनयने गम्यमाने ।
अपनयनं प्रतीकारः ।
चिकित्सा इत्यर्थः ।
प्रवाहिकातः कुरु ।

कासतः कुरु ।
छर्दिकातः कुरु ।
प्रतीकारमस्याः कुरु इत्यर्थः ।
अपनयने इति किं ? प्रवाहिकायाः प्रकोपनं कुरु । ।

---

[#५७०]

1. <अभूततद्भावे कृ-भ्व्-अस्तियोगे सम्पद्यकर्तरि च्विः># । । PS_५,४.५० । ।

_______Sठा~ठ्JKव्_५,४.५०ः

कारणस्य विकाररूपेण अभूतस्य तदात्मना भावः अभूततद्भावः ।
सम्पद्यतेः कर्ता सम्पद्यकर्ता ।
सम्पद्यकर्तरि वर्तमानात्प्रातिपदिकातभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः प्रत्ययो भवति ।
अशुक्लः शुक्लः सम्पद्यते, तं करोति शुक्लीकरोति ।
मलिनं शुक्लीकरोति ।
शुक्लीभवति ।
शुक्लीस्याथ् ।
घटीकरोति मृदं ।
घटीभवति ।
घटीस्याथ् ।
अभूततद्भावे इति किं ? शुक्लं करोति ।
न अत्र प्रकृतिर्विवक्षिता ।
कृभ्वस्तियोगे इति किं ? अशुक्लः शुक्लो जायते ।
सम्पद्यक्र्तरि इति किम्, यावता अभूततद्भावसामर्थ्याल्लब्धं एव सम्पद्यकर्तृत्वं ? कारकान्तरसम्पत्तौ मा भूत्, अदेवगृहे देवगृहे सम्पद्यते ।
देवगृहस्याधेयविशेषसम्बन्धेन अभूततद्भावः सत्त्वाधिकरणस्य, न कर्तुः इति ? । ।

---

1. <अरुर्-मनश्-चक्षुश्-चेतो-रहो-रजसां लोपश्च># । । PS_५,४.५१ । ।

_______Sठा~ठ्JKव्_५,४.५१ः

अरुःप्रभ्र्तीनां अन्तस्य लोपो भवति च्विश्च प्रत्ययः ।
अत्र सर्वविशेषणसम्बन्धात्पूर्वेण+एव प्रत्ययः सिद्धः, लोपमात्रार्थ आरम्भः ।
अनरुररुः सम्पद्यते, तं करोति अरूकरोति ।
अरूभवति ।
अरूस्याथ् ।
मनस्- उन्मनीकरोति ।
उन्मनीभवति ।

उन्मनीस्याथ् ।
चक्षुस्- उच्चक्षूकरोति ।
उच्चक्षूभवति ।
उच्चक्षूस्याथ् ।
चेतस्- विचेतीकरोति ।
विचेतीभवति ।
विचेतीस्याथ् ।
रहस्- विरहीकरोति ।
विरहीभवति ।
विरहीस्याथ् ।
रजस्- विरजीकरोति ।
विरजीभवति ।
विरजीस्यात् । ।

---

1. <विभाषा साति कात्स्न्र्ये># । । PS_५,४.५२ । ।

_______Sठाऽठ्JKव्_५,४.५२ः

अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि इति सर्वं अनुवर्तते ।
अस्मिन्विषये विभाष सातिः प्रययो भवति कात्स्न्र्ये गम्यमाने ।
यदि प्रक्रितः कृत्स्नां विकारात्मतामापद्यते इत्यर्थः ।
अग्निसाद्भवति शस्त्रम्, अग्नीभवति शस्त्रं ।
उदकसाद्भवति, उदकीभवति लवणं ।
कात्स्न्र्ये इति किं ? एकदेशेन पटः शुक्लीभवति ।
विभाषाग्रहणं च्वेः प्रापकं ।
प्रत्ययविकल्पस्तु महाविभाषय+एव सिद्धः । ।

---

1. <अभिविधौ सम्पदा च># । । PS_५,४.५३ । ।

_______Sठाऽठ्JKव्_५,४.५३ः

अभिविधिः अभिव्याप्तिः ।
अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदा योगे, चकारात्कृभ्वस्तिभिश्च ।
विभाषाग्रहणानुवृत्तेः च्विरप्यभ्यनुज्ञायते ।
स तु कृभ्वस्तिभिरेव योगे भवति, न सम्पदा ।
अग्निसात्सम्पद्यते, अग्निसाद्भवति ।
उदकसात्सम्पद्यते, उदकसाद्भवति लवणं ।
अग्नीभवति ।
उदकीभवति ।

[#५७१]

अथाभिविधेः कात्स्न्र्यस्य च को विशेषः ? यत्र+एकदेशेन अपि सर्वा प्रकृतिर्विकारं आपद्यते सोऽभिविधिः, यथा+अस्यां सेनायां उत्पातेन सर्वं शस्त्रं अग्निसात्सम्पद्यते, वर्षासु सर्वं लवणमुदकसात्सम्पद्यते इति ।
कात्स्न्र्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति । ।

---

1. <तदधीनवचने># । । PS_५,४.५४ । ।

______Sठाऽठ्JKव्_५,४.५४ः

अभूततद्भावे इति निवृत्तम्, अर्थान्तरोपादानाथ् ।
कृभ्वस्तियोगे सम्पदा च इति वर्तते ।
तदधीनं तदायत्तं, तत्स्वामिकं इत्यर्थः ।
स्वामिसामान्यम्, ईशितव्यसामान्यं च तदधीनशब्देन निर्दिश्यते ।
स्वामिविशेषवाचिनः प्रातिपदिकातीशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे ।
राजाधीनं करोति राजसात्करोति ।
राजसाद्भवति ।
राजसत्स्याथ् ।
राजसात्सम्पद्यते ।
ब्राह्मणसत्करोति ।
ब्राह्मणसाद्भवति ।
ब्राह्मणसात्स्याथ् ।
ब्राह्मणसात्सम्पद्यते । ।

---

1. <देये त्रा च># । । PS_५,४.५५ । ।

______Sठाऽठ्JKव्_५,४.५५ः

तदधीनवचने च इति अनुवर्ते ।
तस्य विशेषणं देयग्रहणं ।
दातव्यं देयं ।
तदधीने देये त्रा प्रत्ययो भवति, चकारात्सातिश्च कृभ्वस्तिभिः सम्पदा च योगे ।
ब्राह्मनेभ्यो देयं इति यद्विज्ञातम्, तद्यदा तेषा समर्पणेन तदधीनं क्रियते तदात्रा प्रत्ययः ।
ब्राह्मणाधीनं देयं करोति ब्राह्मणसात्करोति ।
ब्राह्मणत्रा करोति ।
ब्राह्मणत्रा भवति ।
ब्राह्मणत्रा स्याथ् ।

ब्राह्मणत्रा सम्पद्यते ।
देये इति किं ? राजसाद्भवति राष्ट्रं । ।

---

1. <देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्># । । PS_५,४.५६ । ।

_______Sठाव्ठ्JKव्_५,४.५६ः

सातिर्निवृत्तः, त्रा प्रत्ययोऽनुवर्तते ।
देवादिभ्यः प्रातिपदिकेभ्यः द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो भवति बहुलं ।
कृभ्वस्तिभिः इति न अत्र सम्बध्यते ।
सामान्येन विधानं ।
देवान्गच्छति देवत्रा गच्छति ।
देवेषु वस्ति देवत्रा वसति ।
मनुष्यान्गच्छति मनुष्यत्रा गच्छति ।
मनुष्येषु वसति मनुष्यत्रा वसति ।
एवं अन्येष्वप्युदाहार्यं ।
पुरुषान्गच्छति पुरुत्रा गच्छति ।
मर्त्यान्गच्छति मर्त्यत्रा गच्छति ।
मर्त्येषु वसति मर्त्यत्रा वसति ।
बहुलवचनादन्यत्र अपि भवति, बहुत्रा जीवतो मनः इति । ।

---

1. <अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच्># । । PS_५,४.५७ । ।

_______Sठाव्ठ्JKव्_५,४.५७ः

यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्ह्यक्तः ।
तस्य अनुकरणं अव्यक्तानुकरणं ।
द्व्यचवरार्धं यस्य तद्व्यजवरार्धं ।
अवरशब्दोऽपकर्षे ।
यस्य अपकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं सम्पद्यते, तस्मादव्यक्तानुकरणादनितिपराड्डाच्प्रत्ययो भवति ।

[#५७२]

कृभ्वस्तियोगे इत्यनुवर्तते ।
यस्य च द्विर्वचने कृते द्व्यजवरार्धं ततः प्रत्ययः ।
डाचि बहुलं द्वे भवतः इति विषयसप्तमी ।
डाचि विवक्षिते द्विर्वचनं एव पूर्वं क्रियते, पश्चात्प्रत्ययः ।
पटपटाकरोति ।

पटपटाभवति ।
पटपटास्याथ् ।
दमदमाकरोति ।
दमदमाभवति ।
दमदमास्याथ् ।
अव्यक्तानुकरणातिति किं ? दृषत्करोति ।
द्वजवरार्धातिति किं ? श्रत्करोति ।
अवरग्रहणं किं ? खरटखरटाकरोति ।
त्रपटत्रपटाकरोति ।
अनितौ इति किं ? पटिति करोति ।
चकारः स्वरार्थः, स्वरितबाधनार्थः ।
पटपटासि, अत्र स्वरितो वाऽनुदात्ते पदादौ (*८,२.६) इति स्वरितो न भवति ।
केचिद्द्व्यजवराध्यादिति यकारं पठन्ति, स स्वर्थिको विज्ञेयः । ।

---

1. <कृञो द्वितीय-तृतीय-शम्ब-बीजात्कृषौ># । । PS_५,४.५८ । ।

_______Sठाव्ठ्JKव्_५,४.५८ः

द्वितीय-तृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच्प्रत्ययो भवति कृञो योगे, न अन्यत्र ।
पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थं ।
द्वितीयाकरोति ।
द्वितीयं कर्षणं विलेखनं करोति इत्यर्थः ।
तृतीयाकरोति ।
शम्बाकरोति ।
अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषति इत्यर्थः ।
बीजाकरोति ।
सह बीजेन विलेहनं करोति इत्यर्थः ।
कृषौ इति किं ? क्वितीयं करोति पदं । ।

---

1. <सङ्ख्यायाश्च गुणान्तायाः># । । PS_५,४.५९ । ।

_______Sठाव्ठ्JKव्_५,४.५९ः

कृञः इति अनुवर्तते, कृषौ इति च ।
सङ्ख्यावाचिनः शब्दस्य गुनशब्दोऽन्ते समीपे यत्र सम्भवति सा सङ्ख्या गुणान्ता इत्युच्यते ।
तादृशात्प्रातिपदिकात्कृषावभिधेयायां डाच्प्रत्ययो भवति कृञो योगे ।
द्विगुणं विलेखनं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रं ।
त्रिगुणाकरोति ।

कृषौ इति किं ? क्विगुणां करोति रज्जुं । ।

---

1. <समयाच्च यापनायाम्># । । PS_५,४.६० । ।

_______Sठाऽठ्JKव्_५,४.६०ः

कृञः इत्येव ।
कृषौ इति निवृत्तं ।
कर्तव्यस्यावसरप्राप्तिः समयः, तस्य अतिक्रमणं यापना ।
समयशब्दाद्यापनायां गम्यमानायां डाच्प्रत्ययो भवति कृञो योगे ।
समयाकरोति ।
समयं यापयति, कालक्षेपं करोति इत्यर्थः ।
यापनायां इति किं ? समयं करोति । ।

---

[#५७३]

1. <सपत्र-निष्पत्रादतिव्यथने># । । PS_५,४.६१ । ।

_______Sठाऽठ्JKव्_५,४.६१ः

कृञः इत्येव ।
सपत्र-निष्पत्र-शब्दाभ्यां अतिव्यथने डाच्प्रत्ययो भवति कृञो योगे सति ।
अतिव्यथनं अतिपीडनं ।
सपत्राकरोति मृगं व्याधः ।
सपत्रं शरमस्य शरीरे प्रवेशयति इत्यर्थः ।
निष्पत्राक्रोति ।
शरीराच्छरमपरपार्श्वे निष्क्रामयति इत्यर्थः ।
अतिव्यथने इति किं ? सप्त्रं वृक्षं करोति जलसेचकः ।
निष्पत्रं वृक्षतलं करोति भूमिशोधकः । ।

---

1. <निष्कुलान्निष्कोषणे># । । PS_५,४.६२ । ।

_______Sठाञ्ठ्JKव्_५,४.६२ः

कृञः इत्येव ।
निष्कुलशब्दात्निष्कोषने वर्तमानात्कृञो योगे डाच्प्रत्ययो भवति ।
निष्कोषणं अन्तरवयवानां बहिर्निष्कासनं ।
निष्कुलाकरोति पशून् ।
निष्कुष्णाति इत्यर्थः ।
निष्कोषणे इति किं ? निष्कुलान्करोति शत्रून् । ।

---

1. <सुख-प्रियादानुलोम्ये># । । PS_५,४.६३ । ।

_______Sठाञ्ठ्JKव्_५,४.६३ः

सुख-प्रिय-शब्दाभ्यां आनुलोम्ये वर्तमानाभ्यां कृञो योगे डाच्प्रत्ययो भवति ।
आनुलोम्यं अनुकूलता, आराध्यचित्तानुवर्त्तनं ।
सुखाकरोति ।
प्रियाकरोति ।
स्वाम्यादेः चित्तमाराधयति इत्यर्थः ।
सुखं प्रियं वा कुर्वन्नप्यानुलोम्येऽवस्थित एवं उच्यते ।
आनुलोम्ये इति किं ? सुखं करोति, प्रियं करोति औषधपानं । ।

---

1. <दुःखात्प्रातिलोम्ये># । । PS_५,४.६४ । ।

_______Sठाञ्ठ्JKव्_५,४.६४ः

कृञः इत्येव ।
दुःखशब्दात्प्रातिपदिकात्प्रातिलोम्ये गम्यमाने डाच्प्रत्ययो भवति कृञो योगे ।
प्रातिकूल्यं प्रतिकूलता ।
स्वाम्यादेश्चित्तपीडनं ।
कुःखाकरोति भृत्यः ।
प्रातिलोम्ये इति किं ? दुःखं करोति कदन्नं । ।

---

1. <शूलात्पाके># । । PS_५,४.६५ । ।

______Sठाव्ठJKव्_५,४.६५ः

कृञः इत्येव ।
शूलशब्दात्पाकविषये डाच्प्रत्ययो भव्ति कृञो योगे ।
शूले पचति शूलाकरोति मांसं ।
पाके इति किं ? शूलं करोति कृदन्नं । ।

---

[#५७४]

1. <सत्यादशपथे># । । PS_५,४.६६ । ।

______Sठाव्ठJKव्_५,४.६६ः

कृञः इत्येव ।
सत्यशब्दातशपथे डाच्प्रत्ययो भवति कृञो योगे ।
सत्यशब्दोऽनृतप्रतिपक्षवचनः ।
क्वचित्तु शपथे च वर्तते, सत्येन शापयेद्द्विजं इति, तस्य अयं प्रतिषेधः ।
सत्याकरोति वणिक्भाण्डं ।
मयैतत्क्रेतव्यं इति तथ्यं करोति ।
अशपथे इति किं ? सत्यं करोति ब्राह्मणः । ।

---

1. <मद्रात्परिवापणे># । । PS_५,४.६७ । ।

______Sठाव्ठJKव्_५,४.६७ः

कृञः इत्येव ।
मद्रशब्दात्परिवापणे डाच्प्रत्ययो भवति कृञो योगे ।
परिवापणं मुण्डनं ।
मद्रशब्दो मङ्गलार्थः ।
मङ्गलं मण्डनं करोति मद्राकरोति ।
भद्राच्च+इति वक्तव्यं ।
भद्राकरोति नापितः कुमारं ।
परिवापणे इति किं ? भद्रं करोति । ।

---

1. <समासान्ताः># । । PS_५,४.६८ । ।

______Sठान्ठJKव्_५,४.६८ः

अधिकारोऽयं ।
आपादपरिसमाप्तेः ये प्रत्ययाः विहितास्ते समासान्तावयवा एकदेशाः भवन्ति, तद्ग्रहणेन गृह्यन्ते इति वेदितव्यं ।
प्रयोजनं - अव्ययीभाव-द्विगु-द्वन्द्व-तत्पुरुष-बहुव्रीहि-सञ्ज्ञाः ।
उपराजं ।
अधिराजं ।
न अव्ययीभावातित्येष विधिर्भवति, अनश्च (*५,४.१०८) इति टछ् ।
द्विपुरी, तिर्पुरी इति ।
द्विगोः (*४,१.२१) इति ङीप्भवति ।
कटकवलयिनी ।
शङ्खनूपुरिणी ।
कोशनिषदिनी ।
स्रक्त्वचिनी ।
द्वन्द्वोपतापगर्ह्यातिति इनिर्भवति ।
विधुरः ।
प्रधुरः ।
तत्पुरुषे तुल्यार्थ इत्येष स्वरो भवति ।
उच्चैर्धुरः ।
नीचैर्धुरः ।
बहुव्रीहौ प्रकृत्या पूर्वपदं (*६,२.१) इत्येतद्भवति । ।

---

1. <न पूजनात्># । । PS_५,४.६९ । ।

______Sठान्ठJKव्_५,४.६९ः

यान्शब्दानुपादाय समासान्ता विधीयन्ते राज-अहः-सखिभ्यष्टच्(*५,४.९१) इत्येवं आदीन्, यदा ते पूजनात्पूजनवचनात्परे भवन्ति तदा समासान्तो न भवति ।
सुराजा ।
अतिराजा ।
सुगौः ।
अतिगौः ।
पूजायां स्वतिग्रहणं कर्तव्यं ।
इह मा भूत्, परमराजः, परमगवः इति ।
प्राग्बहुव्रीहिग्रहणं च कर्तव्यं ।
बहुव्रीहौ सक्थ्यक्ष्णोः इत्येवं आदौ प्रतिषेधो न भवति ।
सुसक्थः ।

अतिसक्थः।
स्वक्षः।
अत्यक्षः॥

---

[#५७५]

1. <किमः क्षेपे># । । PS_५,४.७० । ।

_______Sठा~ठ्JKव्_५,४.७०ः

क्षेपे यः किंशब्दः ततः परस्य समासान्तो न भवति।
किंराजा यो न रक्षति।
किंसखा योऽभिद्रुह्यति।
किंगौर्यो न वहति।
किं क्षेपे (*२,१.६४) इति समासः।
क्षेपे इति किं? कस्य राजा किंराजः।
किं सखः।
किंगवः॥

---

1. <नञस्तत्पुरुषात्># । । PS_५,४.७१ । ।

_______Sठा~ठ्JKव्_५,४.७१ः

नञः परे वक्ष्यमाणा ये राजादयस्तदन्तात्तत्पुरुषात्समासान्तो न भवति।
अराजा असखा।
अगौः।
तत्पुर्षातिति किं? अनृचो माणवकः।
अधुरं शकटं॥

---

1. <पथो विभाषा># । । PS_५,४.७२ । ।

_______Sठा~ठ्JKव्_५,४.७२ः

नञः परो यः पथिन्शब्दः, तदन्तात्तत्पुरुषात्समासान्तो विभाषा न भवति ।
पुर्वेण नित्यः प्रतिसेधः प्राप्तो विकल्प्यते ।
अपथम्, अपन्थाः । ।

---

1. <बहुव्रीहौ सङ्ख्येये डजबहु-गणात्># । । PS_५,४.७३ । ।

______Sठाऽठ्JKव्_५,४.७३ः

सङ्ख्येये यो बहुव्रीहिर्वर्तते तस्मादबहु-गण-अन्तात्डच्प्रत्ययो भवति ।
सङ्ख्ययाव्ययासन्न इति यो बहुव्रीहिः तस्य+इदं ग्रहणं ।
उपदशाः ।
उपविंशाः ।
उपत्रिंशाः ।
आसन्नदशाः ।
अदूरदशाः ।
अधिकदशाः ।
द्वित्राः ।
पञ्चषाः ।
पञ्चदशाः ।
सङ्ख्येये इति किं ? चित्रगुः ।
शबलगुः ।
अबहुगणातिति किं ? उपबहवः ।
उपगणाः ।
अत्र स्वरे विशेषः ।
डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्य+उपसङ्ख्यानं कर्तव्यं निस्त्रिंशाद्यर्थं ।
निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य ।
निश्चत्वारिंशानि यज्ञदत्तस्य ।
निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । ।

---

1. <ऋक्-पूर्-अब्-धूः-पथां आनक्षे># । । PS_५,४.७४ । ।

______Sठाऽठ्JKव्_५,४.७४ः

बहुव्रीहौ इति न स्वर्यते ।
सामान्येन विधानं ।
ऋक्पुरप्धुर्पथिनित्येवं अन्तानां समासानां अकारः प्रत्ययो भवति समासान्तोऽक्षे न ।
सामर्थ्याद्धुर एतद्विशेषणम्, ऋगादीनां न भवति ।
अक्षेसम्बन्धिनी या धूः तदन्तस्य न भवति ।

अनृचः ।
बह्वृचः ।
अर्धर्चः ।
पुर्- ललाटपुरं ।
नान्दीपुरं ।
अप्- द्वीपं ।
अन्तरीपं ।
समीपं ।
धुर्- राजधुरा ।
महाधुरः ।
पथिन्- स्थलप्थः ।
जलपथः ।
अनृचो अनक्षे इति किं ? अक्षस्य धूः अक्षधूः ।
दृढधूः अक्षः ।
अनृचो माणवको ज्ञेजो, बः वृचश्चरणाख्यायां ।
माणवकः ।
बह्वृचो ब्राह्मणः ।
अनृक्कं साम, बह्वृक्कं सूक्तं इत्यत्र न भवति । ।

---

[#५७६]

1. <अच्प्रत्य्-अन्व्-अवपूर्वात्साम-लोम्नः># । । PS_५,४.७५ । ।

_______Sठा~ठ्JKव्_५,४.७५ः

प्रति अनु अव इत्येवं पूर्वात्सामान्तात्लोमान्तात्च समासादच्प्रत्ययो भवति ।
प्रतिसामं ।
अनुसामं ।
अवसामं ।
प्रतिलोमं ।
अनुलोमं ।
अवलोमं ।
कृशणोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि । ।
कृष्णभूमः ।
पाण्डुभूमः ।
उदग्भूमः ।
पञ्चनदं ।
पञ्चगोदावरं ।
नदीभिश्च इति अव्ययीभावः ।
भूमेरपि सङ्ख्यापूर्वायाः अच्प्रत्यय इष्यते - द्विभूमः प्रासादः ।
त्रिभूमः ।
दशभूमकं सुत्रं अन्यत्र अपि च दृश्यते - पद्मनाभः ।
ऊर्णनाभः ।
दीर्घरात्रः ।

समरात्रः ।
अरात्रः ।
तदेतत्सर्वं इह योगविभागं कृत्वा साधयन्ति । ।

---

1. <अक्ष्णोऽदर्शनात्># । । PS_५,४.७६ । ।

_______Sठा~ठ्JKव्_५,४.७६ः

अचित्यनुवर्तते ।
दर्शनादन्यत्र योऽक्षिशब्दः तदन्तातच्प्रत्ययो भवति ।
लबणाक्षं ।
पुष्कराक्षं ।
उपमितं व्याघ्रादिभिः इति समासः ।
अदर्शनातिति किं ? ब्राह्मणाक्षि ।
कथं कबराक्षम्, गवाक्षं इति ? अश्वादीनां मुखप्रच्छादनार्थं बहुच्छिद्रं कबराक्षम्, तेन अपि हि दृश्यते, गवाक्षेण च ? न+एष दोषः ।
चक्षुःपर्यायवचनो दर्शनशब्दः प्राण्यङ्गवचन इह अश्रीयते । ।

---

1. <अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुह-र्क्षाम-वाङ्मनस-अक्षिभ्रुव-दारगव-ऊर्वष्ठीव-पदष्ठीव-नक्तंदिव-रात्रिंदिव-अहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुष-र्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्ष-उपशुन-गोष्ठश्वाः># । । PS_५,४.७७ । ।

_______Sठा~ठ्JKव्_५,४.७७ः

अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते ।
समासे व्यवस्था अपि निपातनादेव प्रतिपत्तव्या ।
आद्यास्त्रयो बहुव्रीहयः ।
अदृश्यानि अविद्यमानानि वा चत्वारि यस्य सोऽचतुरः ।
विगतानि चत्वारि यस्य स विचतुरः ।
शोभनानि चत्वारि यस्य स सुचतुरः ।
अतः परे एकादश द्वन्द्वाः ।
स्त्री च पुमांश्च स्त्रीपुंसौ ।
इह न भवति, स्त्रियाः पुमानिति ।
धेनुश्च अनड्वांश्च धेन्वनडुहौ ।
ऋक्च साम च ऋक्षामे ।
वाक्च मनश्च वाङ्मनसे ।
अक्षि च भ्रुवौ च अक्षिभ्रुवं ।
दाराश्च गावश्च दारगवं ।

ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवं ।
टिलोपो निपात्यते ।
पादौ च अष्ठीवन्तौ च पदष्ठीवं ।
पादस्य पद्भावो निपात्यते ।
नक्तं च दिवा च नक्तंदिवं ।
दप्तम्यर्थवृत्तयोरव्यययोः समासोऽपि निपातनादेव ।
रात्रौ च दिवा च रात्रिंदिवं ।
पूर्वपदस्य मान्तत्वं निपात्यते ।
अहनि च दिवा च अहर्दिवं ।
ननु च पर्यायावेतौ, कथं अनयोर्द्वन्द्वः ? वीप्सायां द्वन्द्वो निपात्यते ।
अहन्यहनि इत्यर्थः ।
एकोऽव्यव्यीभावः साकल्ये - सरजसमभ्यवहरति ।
बहुव्रीहौ न भवति, सह रजसा सरजः पङ्कजं इति ।
ततः तत्पुरुषः - निश्चितं श्रेयो निःश्रेयसं ।
निःश्रेयस्कः पुरुषः इत्यत्र न भवति ।
ततः षष्ठीसमासः - पुरुषस्य आयुः पुरुषायुषं ।
द्वन्द्वे न भवति, पुरुषश्च आयुश्च पुरुषायुषी ।
ततो द्विगू - द्वे आयुषी समाहृते द्व्यायुषं ।
त्र्यायुषं ।
इह न भवति, द्व्योरायुः द्व्यायुः त्र्यायुः इति ।
ततो द्वन्द्वः - ऋक्च यजुश्च ऋग्यजुषं ।
इह न भवति, ऋग्यजुरस्य उन्मुग्धस्य ऋग्यजुरुन्मुग्धः ।
जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः - जातोक्षः ।
महोक्षः ।
वृद्धोक्षः ।
बहुव्रीहौ न भवति, जातोक्षा ब्राह्मणः ।
महोक्षा, वृद्धोक्षा इति ।
ततोऽव्ययीभावः - शुनः समीपं उपशुनं ।
टिलोपाभावः सम्प्रसारणं च निपातनादेव ।
ततः सप्तमीसमासः - गोष्ठे श्वा गोष्ठश्वः ।
चतुरोऽच्प्रकरणे त्र्युपाभ्यां उपसङ्ख्यानं ।
त्रिचतुराः ।
उपचतुराः । ।

---

1. <ब्रह्महस्तिभ्यां वर्चसः># । । PS_५,४.७८ । ।

_______Sठा~ठ्JKव्_५,४.७८ः

ब्रह्महस्तिभ्यां परो यो वर्चःशब्दस्तदन्तात्समासादच्प्रत्ययो भवति ।
ब्रह्मवर्चसं ।
हस्तिवर्चसं ।
पल्यराजभ्यां च+इति वक्तव्यं ।
पल्यवर्चसं ।
राजवर्चसं । ।

---

1. <अव-सम्-अन्धेभ्यस्तमसः># । । PS_५,४.७९ । ।

_______Sठाऱ्ठJKव्_५,४.७९ः

अव सं अन्ध इत्येतेभ्यो यः परः तमस्शब्दः तदन्तात्समासातच्प्रत्ययो भवति ।
अवतमसं ।
सन्तमसं ।
अन्धतमसं । ।

---

1. <श्वसो वसीयः-श्रेयसः># । । PS_५,४.८० । ।

_______Sठाऱ्ठJKव्_५,४.८०ः

श्वसः परौ यौ वसीयस्-श्रेयस्-शब्दौ तदन्तात्समासातच्प्रत्ययो भवति ।
श्वोवसीयसं ।
श्वःश्रेयसं ।
मयूरव्यंसकादित्वात्समासः ।
स्वभावाच्च+इह श्वःशब्दः उत्तरपदार्थस्य प्रशंसामाशीर्विषयां आचश्टे, श्वःश्रेयसं ते भूयथ् ।
शोभनं श्रेयस्ते भूयातित्यर्थः ।
श्वोवसीयसं इत्यस्य+एव अयं पर्यायः । ।

---

[#५७८]

1. <अन्व्-अव-तप्ताद्रहसः># । । PS_५,४.८१ । ।

_______Sठाऱ्ठJKव्_५,४.८१ः

अनु अव तप्त इत्येतेभ्यः परो यो रहस्शब्दः तदन्तात्समासादच्प्रत्ययः भवति ।
अनुरहसं ।
अवरहसं ।
तप्तरहसं । ।

---

1. <प्रतेरुरसः सप्तमीस्थात्># । । PS_५,४.८२ । ।

_______Sठा५ठ्JKव्_५,४.८२ः

प्रतेः परो य उरस्शब्दः तदन्तात्समासातच्प्रत्ययो भवति, स चेदुरस्शब्दः सप्तमीस्थो भवति ।
सप्तम्यर्थे वर्तते इत्यर्थः ।
उरसि वर्तते ।
विभक्त्यर्थे अव्ययं इति समासः ।
प्रत्युरसं ।
सप्तमीस्थातिति किं ? प्रतिगतं उरः प्रत्युरः । ।

---

1. <अनुगवं आयामे># । । PS_५,४.८३ । ।

_______Sठा५ठ्JKव्_५,४.८३ः

अनुगवं इत्यच्प्रत्ययान्तं निपात्यते आयमेऽभिधेये ।
अनुगवं यानं ।
यस्य चायामः (*२,१.१६) इति समासः ।
आयमे इति किं ? गवां पश्चदनुगु । ।

---

1. <द्विस्तावा तिर्स्तावा वेदिः># । । PS_५,४.८४ । ।

_______Sठा५ठ्JKव्_५,४.८४ः

द्विस्तावा त्रिस्तावा इति वेदिश्चेदभिधेया भवति ।
अच्प्रत्ययः, टिलोपः, समासश्च निपात्यते ।
यावती प्रकृतौ वेदिः ततो द्विगुणा वा त्रिगुणा वा कस्यांचिद्विकृतौ तत्र+इदं निपातनं ।
द्विस्तावा वेदिः ।
त्रिस्तावा वेदिः ।
वेदिः इति किं ? द्विस्तावती, त्रिस्तावती रज्जुः । ।

---

1. <उपसर्गादध्वनः># । । PS_५,४.८५ । ।

_______Sठा~ठ्JKव्_५,४.८५ः

उपसर्गात्परो योऽध्वन्शब्दः तदन्तात्समासातच्प्रत्ययो भवति ।
प्रगतोऽध्वानं प्राध्वोरथः ।
प्राध्वं शकटं ।
निरध्वं ।
प्रत्यध्वं ।
उपसर्गातिति किं ? परमाध्वा ।
उत्तमध्वा । ।

---

1. <तत्पुरुषस्य अङ्गुलेः सङ्ख्या-अव्ययादेः># । । PS_५,४.८६ । ।

_______Sठा~ठ्JKव्_५,४.८६ः

अङ्गुलिशब्दान्तस्य तत्पुरुषस्य सङ्ख्यादेः अव्ययादेश्च अच्प्रत्ययो भवति ।
द्वे अङ्गुली प्रमानं अस्य द्व्यङ्गुलं ।
त्र्यङ्गुलं ।
तद्धितार्थ इति समासः ।
प्रमाणे लो द्विगोर्नित्यं (*६,२.१२) इति मात्रचो लोपः ।
अव्ययादेः - निर्गतं अङ्गुलिभ्यः निरङ्गुलं ।
अत्यङ्गुलं ।
तत्प्रुषस्य इति किं ? पञ्चाङ्गुलिः ।
अत्यङ्गुलिः पुरुषः ।
तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तातिति यावत् । ।

---

[#५७९]

1. <अहः-सर्व-एकदेश-सङ्ख्यात-पुण्याच्च रात्रेः># । । PS_५,४.८७ । ।

_______Sठा~ठ्JKव्_५,४.८७ः
अहरादिभ्यः परो यो रात्रिशब्दः तदन्तस्य तत्पुरुषस्य अच्प्रत्ययो भवति, चकारात्सङ्ख्यादेः अव्ययादेश्च ।

अहर्ग्रहणं द्वन्द्वार्थं ।
अहश्च रात्रिश्च अहोरात्रः ।
सर्वरात्रः ।
एकदेशे पूर्वं रात्रेः पूर्वरात्रः ।
अपररात्रः ।
पूर्वपरावर इति समासः ।
सङ्ख्याता रात्रिः सङ्ख्यातरात्रः ।
विशेषणं विशेष्येण इति समासः ।
एवं पुण्या रत्रिः पुण्यरात्रः ।
सङ्ख्याव्यायदेः खल्वपि - द्वे रात्री समाहृते द्विरात्रः ।
त्रिरात्रः ।
अतिक्रान्तो रात्रिं अतिरात्रः ।
नीरात्रः । ।

---

1. <अह्नोऽह्न एतेभ्यः># । । PS_५,४.८८ । ।

______Sठा~ठJKव्_५,४.८८ः

राज-अहः-सखिभ्यष्टच्(*५,४.९१) इति वक्ष्यति, तस्मिन्परभूते अहनित्येतस्य अह्नः इत्ययं आदेशो भवति एतेभ्य उत्तरस्य ।
सङ्ख्याव्ययादयःप्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते ।
सामर्थ्याच्चाहःशब्दः पूर्वत्वेन नाश्रीयते ।
परिशिष्टानां ग्रहणं ।
न हि अहःशब्दात्परोऽहःशब्दः सम्भवति ।
सङ्ख्यायास्तावत्- द्व्योरह्नोर्भवः द्व्यह्नः ।
त्र्यह्नः ।
अव्ययात्- अहरतिक्रान्तः अत्यह्नः ।
निरह्नः ।
सर्वाह्णः ।
पूर्वह्णः ।
अपराह्णः ।
सङ्ख्याताह्नः ।
पुण्यशब्दात्प्रतिषेधं वक्ष्यति । ।

---

1. <न सङ्ख्यादेः समाहारे># । । PS_५,४.८९ । ।

______Sठा~ठJKव्_५,४.८९ः

सङ्ख्यादेस्तत्पुरुषस्य समाहारे वर्तमानस्य अहःशब्दस्य अह्नादेशो न भवति ।
पूर्वेण प्राप्तः प्रतिषिद्यते ।

द्वे अहनी समाहृते द्व्यहः ।
त्र्यहः ।
समाहारे इति किं ? द्वयोरह्नोः भवः द्व्यह्नः ।
त्र्यह्नः ।
तद्धितार्थ इति समासे कृते अणः आगतस्य द्विगोर्लुगनपत्ये (*४,१.८८) इति लुक् । ।

---

1. <उत्तम-एकाभ्यां च># । । PS_५,४.९० । ।

_______Sठाऱ्ठJKव्_५,४.९०ः

उत्तमैकाभ्यां च परस्य अह्नः इत्ययं आदेशो न भवति ।
उत्तमशब्दोऽन्यवचनः पुण्यशब्दं आचष्टे ।
पुण्यग्रहणं एव न कृतं वैचित्र्यार्थं पुण्याहः ।
एकाहः ।
केचित्तु उपोत्तमस्य अपि प्रतिपत्त्यर्थं वर्णयन्ति ।
तेन सङ्ख्यातशब्दादपि परस्य न भवति, सङ्ख्याताहः इति । ।

---

[#५८०]

1. <राज-अहः-सखिभ्यष्टच्># । । PS_५,४.९१ । ।

_______Sठाऱ्ठJKव्_५,४.९१ः

राजनहन्सखि इत्येवं अन्तात्प्रातिपदिकात्टच्प्रत्ययो भवति ।
महाराजः ।
मद्रराजः ।
परमाहः ।
उत्तमाहः ।
राज्ञः सखा राजसखः ।
ब्राह्मणसखः ।
इह कस्मान्न भवति, मद्राणां राज्ञी मद्रराज्ञी ? लिङ्गविशिष्टपरिभाषया प्राप्नोति ? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजशब्दस्य सवर्णदीर्घार्थं प्रथमं प्रयोगं कुर्वन्नेतद्ज्ञापयति यस्य अकारेण सवर्णदीर्घत्वं सम्भवति तस्य+इदं ग्रहणं इति । ।

---

1. <गोरतद्धित-लुकि># । । PS_५,४.९२ । ।

______Sठाञ्ठ्JKव्_५,४.९२ः

गोशब्दान्तात्तत्पुरुषात्टच्प्रत्ययो भवति, स चेत्तपुरुषस्तद्धित-लुग्-विषयो न भवति ।
परमगवः ।
उत्तमगवः ।
पञ्चगवं ।
दशगवं ।
अतद्धितलुकि इति किं ? पञ्चभिर्गोभिः क्रीतः पण्चगुः ।
दशगुः ।
तेन क्रीतं (*५,१.३७) इत्यागतस्य आर्हीयस्य ठकोऽध्यर्धपूर्वाद्द्विगोः इति लुक् ।
तद्धितग्रहणं किं ? सुब्लुकि प्रतिषेधो मा भूथ् ।
राजगवमिच्छति राजगवीयति ।
लुग्ग्रहणं किं ? तद्धित एव मा भूथ् ।
पञ्चभ्यो गोभ्यः आगतं पञ्चगवरूप्यम्, पञ्चगवमयं ।
दशगवरूप्यम्, दशगवमयं । ।

---

1. <अग्र-आख्यायां उरसः># । । PS_५,४.९३ । ।

______Sठाञ्ठ्JKव्_५,४.९३ः

उरस्शब्दान्तात्तत्पुरुषाट्टच्प्रत्ययो भवति, स चेदुरस्शब्दः अग्राख्यायां भवति ।
अग्र प्रधानं उच्यते ।
यथा शरीरावयवानां उच्यते उरः प्रधानम्, एवं अन्योऽपि प्रधानभूत उरस्शब्देन+उच्यते ।
अश्वानां उरः अश्वोरसं ।
हस्त्युरसं ।
रथोरसं ।
अग्राख्यायां इति किं ? देवदत्तस्य उरः देवदत्तोरः । ।

---

1. <अनोऽश्म-अयस्-सरसां जाति-सञ्ज्ञायोः># । । PS_५,४.९४ । ।

______Sठाञ्ठ्JKव्_५,४.९४ः

अनसश्मनयस्सरसित्येवं अन्तात्तत्पुरुसात्टच्प्रत्ययो भवति जातौ सञ्ज्ञायाञ्च विषये ।
उपानसं इति जातिः ।
महानसं इति सञ्ज्ञा ।
अमृताश्म इति जातिः ।

पिण्डाश्म इति सञ्ज्ञा ।
कालायसं इति जातिः ।
लोहितायसं इति सञ्ज्ञा ।
मण्डूकसरसं इति जातिः ।
जलसरसं इति सञ्ज्ञा ।
जातिसञ्ज्ञयोः इति किं ? सदनः ।
सदश्मा ।
सत्सरः । ।

---

1. <ग्राम-कौटाभ्यां च तक्ष्णः># । । PS_५,४.९५ । ।

______Sठा~ठ्JKव्_५,४.९५ः

जातिसञ्ज्ञयोः इति न अनुवर्तते ।
ग्रामकौटाभ्यां परो यः तक्षन्शब्दः तदन्तात्ततत्पुरुषात्टच्प्रत्ययो भवति ।
ग्रामस्य तक्ष ग्रामतक्षः ।
बहूनं साधारणः इत्यर्थः ।
कुट्यां भवः कौटः, तस्य तक्षा कौटतक्षः ।
स्वतन्त्रः कर्मजीवी, न कस्य चित्प्रतिबद्धः इत्यर्थः ।
ग्रामकाउटाभ्यां इति किं ? राजतक्षा । ।

---

[#५८१]

1. <अतेः शुनः># । । PS_५,४.९६ । ।

______Sठा~ठ्JKव्_५,४.९६ः

अतिशब्दात्परः यः श्वन्शब्दः तदन्तात्ततत्पुरुषात्टच्प्रत्ययो भवति ।
अतिक्रान्तः श्वानं अतिश्वो वराहः ।
जववानित्यर्थः ।
अतिश्वः सेवकः ।
सुष्ठु स्वामिभक्तः इत्यर्थः ।
अतिश्वी सेवा ।
अतिनीचा इत्यर्थः । ।

---

1. <उअप्मानादप्राणिषु># । । PS_५,४.९७ । ।

_______Sठा~ठ्JKव्_५,४.९७ः

उपमानवाची यः श्वन्शब्दोऽप्राणिषु वर्तते तदन्तात्तत्पुरुषात्टच्प्रत्ययो भवति ।
आकर्षः श्वेव आकर्षश्वः ।
फलकश्वः ।
उपमितं व्याघ्रादिभिः इति समासः ।
उपमानातिति किं ? न श्वा अश्वा लोष्टः ।
अप्राणिषु इति किं ? वानरः श्वेव वानरश्वा । ।

---

1. <उत्तरमृगपूर्वाच्च सक्थ्नः># । । PS_५,४.९८ । ।

_______Sठा~ठ्JKव्_५,४.९८ः

उत्तर मृग पूर्व इत्येतेभ्यः परो यः सक्थिशब्दः, चकारादुपमानं च, तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति समासान्तः ।
उत्तरसक्थं ।
मृगसक्थं ।
पूर्वस्क्थं ।
उपमानात्खल्वपि - फलकं इव सक्थि फलकसक्थं । ।

---

1. <नावो द्विगोः># । । PS_५,४.९९ । ।

_______Sठा~ठ्JKव्_५,४.९९ः

नौशब्दान्तात्द्विगोः टच्प्रत्ययो भवति समासान्तः ।
द्वे नावौ समाहृते द्विनावं ।
त्रिनावं ।
द्विनावधनः ।
पञ्चनावप्रियः ।
द्वाभ्यां नौभ्यामागतं द्विनावरूप्यं ।
द्विनावमयं ।
द्विगोः इति किं ? राजनौः ।
अतद्धितलुकि इत्येव, पञ्चभिर्नौभिः क्रीतः पञ्चनौः ।
दशनौः । ।

1. <अर्धाच्च># । । PS_५,४.१०० । ।

_______Sठा~ठ्JKव्_५,४.१००ः

अर्धशब्दात्परो यो नौशब्दः तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति ।
अर्धं नावः अर्धनावं ।
अर्धं नपुंसकं (*२,२.२) इति समासः ।
परवल्लिङ्गं न भवति, लोकाश्रयत्वात्लिङ्गस्य । ।

---

1. <खार्याः प्राचाम्># । । PS_५,४.१०१ । ।

_______Sठा~ठ्JKव्_५,४.१०१ः

द्विगोः, अर्धच्च इति द्वयं अप्यनुवर्तते ।
खारीशब्दान्तात्द्विगोरर्धाच्च परो यः खारीशब्दः तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति प्राचां आचार्याणां मतेन ।
द्वे खर्यौ समाहृते द्विखारम्, द्विखारि ।
त्रिखारम्, त्रिखारि ।
अर्धं खार्याः अर्धखारम्, अर्धखारि । ।

---

[#५८२]

1. <द्वि-त्रिभ्यां अञ्जलेः># । । PS_५,४.१०२ । ।

_______Sठा~ठ्JKव्_५,४.१०२ः

द्वित्रिभ्यां परो योऽञ्जलिशब्दः तदन्तात्तत्पुरुषात्टच्प्रत्ययो भवति ।
द्वावञ्जली समाहृतौ द्व्यञ्जलं ।
त्र्यञ्जलं ।
द्विगोः इत्येव, द्व्योरञ्जलिः द्व्यञ्जलिः ।
अतद्धितलुकि इत्येव, द्वाभ्यां अञ्जलिभ्यां क्रीतः द्व्यञ्जलिः ।
त्र्यञ्जलिः ।
प्राचां इत्येव, द्व्यञ्जलिप्रियः । ।

---

1. <अन्-अस्-अन्तान्नपुंसकाच्छन्दसि># । । PS_५,४.१०३ । ।

_______Sठाऽठ्JKव्_५,४.१०३ः

अन्नन्तातसन्तात्च नपुंसकलिङ्गात्ततत्पुरुषात्टच्प्रत्ययो भवति छन्दसि विषये ।
हस्तिचर्मे जुहोति ।
ऋषभचर्मेऽभिषिच्यते ।
असन्तात्देवच्छन्दसानि ।
मनुष्यच्छन्दसं ।
अनसन्तातिति किं ? बिल्वादारु जुहोति ।
नपुंसकातिति किं ? सुत्रामाणं पृथिवीं द्यामनेहसं ।
अनसन्तान्नपुंसकाच्छन्दसि वावचनं ।
ब्रह्मसाम, ब्रह्मसामं ।
देवच्छन्दः, देवच्छन्दसं । ।

---

1. <ब्रह्मणो जानपदाख्यायाम्># । । PS_५,४.१०४ । ।

_______Sठाऽठ्JKव्_५,४.१०४ः

ब्रह्मन्शब्दानतात्ततत्पुरुषाट्टच्प्रत्ययो भवति समासेन चेद्ब्रह्मणो जानपदत्वं आख्यायते ।
जनपदेषु भवः जानपदः ।
यस्य तत्प्रुषस्य जनपदशब्दः पूर्वपदं तस्मादेतत्प्रत्ययविधानं ।
सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः ।
अवन्तिब्रह्मः ।
योगविभागात्सप्तमीसमासः ।
जानपदाख्यायं इति किं ? देवब्रह्मा नारदः । ।

---

1. <कु-महद्भ्यां अन्यतरस्याम्># । । PS_५,४.१०५ । ।

_______Sठाऽठ्JKव्_५,४.१०५ः

कुमहद्भ्यां परो यो ब्रह्मा तदन्तात्ततत्पुरुषाट्टच्प्रत्ययो भवत्यन्यतरस्यां ।
कुब्रह्मः, कुब्रह्मा ।
महाब्रह्मः, महाब्रह्मा ।

ब्रह्मणपर्यायो ब्रह्मन्शब्दः । ।

---

1. <द्वन्द्वाच्चु-द-ष-ह-अन्तात्समाहारे># । । PS_५,४.१०६ । ।

_______Sठाऽठ्JKव्_५,४.१०६ः
तत्पुरुषाधिकारो निवृत्तः ।
द्वन्द्वात्चवर्गान्तात्, दकारान्तात्, षकारान्तात्, हकारान्तात्च टच्प्रत्ययो भवति, स चेद्द्वन्द्वः समाहारे वर्तते, न+इतरेतरयोगे ।
वाक्च त्वक्च वाक्त्वचं ।
स्रक्च त्वक्च स्रक्त्वचं ।
श्रीस्रजं ।
इडूर्जं ।
वागूर्जं ।
समिद्दृषदं ।
सम्पद्विपदं ।
वाग्विप्रुषं ।
छत्रोपानहं ।
धेनुगोदुहं ।
द्वन्द्वातिति किं ? तत्पुरुषान्मा भूत्, पञ्च वाचः समाहृताः पञ्चवाक् ।
चुदषहान्तातिति किं ? वाक्षमिथ् ।
समाहारे इति किं ? प्रावृट्शरदौ । ।

---

[#५८३]

1. <अव्ययीभावे शरत्-प्रभृतिभ्यः># । । PS_५,४.१०७ । ।

_______Sठाऽठ्JKव्_५,४.१०७ः

शरतित्येवं आदिभ्यः प्रातिपदिकेभ्यः टच्प्रत्ययो भवति अव्ययीभावे ।
शरदः समीपं उपशरदं ।
प्रतिशरदं ।
उपविपाशं ।
प्रतिविपाशं अव्ययीभावे इति किं ? पारमशरथ् ।
येऽत्र ज्रयन्तः पठ्यन्ते तेषां नित्यार्थं ग्रहणं ।
स्वर्यते च+इदं अव्ययीभावग्रहणं प्राग्बहुव्रीहेः ।
शरथ् ।
विपाश् ।
अनस् ।
मनस् ।

उपानः ।
दिव् ।
हिमवथ् ।
अनडुः ।
दिश् ।
दृश् ।
उअतुर् ।
यद् ।
तद् ।
जराया जरश्च ।
सदृश् ।
प्रतिपरसमनुभ्योऽक्ष्णः ।
पथिन् ।
प्रत्यक्षं ।
परोक्षं ।
समक्षं ।
अन्वक्षं ।
प्रतिपथं ।
परपथं ।
संपथं ।
अनुपथं । ।

---

1. <अनश्च># । । PS_५,४.१०८ । ।

______Sठा-ठ्JKव्_५,४.१०८ः

अन्नन्तादव्ययीभावाट्टच्प्रत्ययो भवति समासान्तः ।
उपराजं ।
प्रतिराजं ।
अध्यात्मं ।
प्रत्यात्मं । ।

---

1. <नपुंसकादन्यतरस्याम्># । । PS_५,४.१०९ । ।

______Sठा-ठ्JKव्_५,४.१०९ः

अनः इत्येव ।
नपुंसकग्रहणं उत्तरपदविशेषणं ।

अन्नन्तं यद्नपुंसकं तदन्तादव्ययीभावातन्यतरस्यां टच्प्रत्ययो भवति समासान्तः ।
पूर्वेण नित्ये प्राप्ते विकल्प्यते ।
प्रतिचर्मम्, प्रतिचर्म ।
उपचर्मम्, उपचर्म । ।

---

1. <नदी पौर्णमास्य्-आग्रहायणीभ्यः># । । PS_५,४.११० । ।

_______Sठाऽठ्JKव्_५,४.११०ः

नदी पौर्णमासी आग्रहायणी इत्येवं अन्तादव्ययीभावातन्यतरस्यां टच्प्रत्ययो भवति ।
नद्याः समीपं उपनदम्, उपनदि ।
उपपौर्णमासम्, उपपौर्णमासि ।
उपाग्रहायणम्, उपाग्रहायणि । ।

---

1. <ज्ञयः># । । PS_५,४.१११ । ।

_______Sठाऽठ्JKव्_५,४.१११ः

ज्ञयः इति प्रयाहारग्रहणं ।
ज्ञयन्तादव्ययीभावादन्यतरस्यां टच्प्रत्ययो भवति ।
उपसमिमिधम्, उपसमिथ् ।
उपदृषदम्, उपदृषत् । ।

---

1. <गिरेश्च># । । PS_५,४.११२ । ।

_______Sठाऽठ्JKव्_५,४.११२ः

गिरिशब्दान्तातव्ययीभावाट्टच्प्रत्ययो भवति सेनकस्य आचार्यस्य मतेन ।
अन्तर्गिरम्, अन्तर्गिरि ।
उपगिरम्, उपगिरि ।
सेनकग्रहणं पूजार्थं ।
विकल्पोऽनुवर्तते एव । ।

---

[#५८४]

1. <बहुव्रीहौ सक्थ्य्-अक्ष्णोः स्वाङ्गात्षच्># । । PS_५,४.११३ । ।

______Sठा-ऽठ्JKव्_५,४.११३ः

स्वाङ्गवाची यः सक्थिशब्दः अक्षिशब्दश्च तदन्तात्बहुव्रीहेः षच्प्रत्ययो भवति समासान्तः ।
अयं अर्थोऽभिप्रेतः ।
सूत्रे तु दुःश्लिष्टविभक्तीनि पदानि ।
दीर्घं सक्थि यस्य दीर्घसक्थः ।
कल्याणाक्षः ।
लोहिताक्षः ।
विशालाक्षः ।
बहुव्रीहौ इति किं ? परमसक्थिः ।
परमाक्षिः ।
सक्थ्यक्ष्णोः इति किं ? दीर्घजानुः ।
सुबाहुः ।
स्वाङ्गातिति किं ? दीर्घस्क्थि शकटं स्थुलाक्षिः इक्षुः ।
टचि प्रकृते षज्ग्रहणं स्वरार्थं ।
चक्रसक्थी स्त्री ।
दीर्घसक्थी स्त्री ।
सक्थं चाक्रान्तात्(*६,२.१९८) इति विभाषयोत्तरपदस्य अन्तोदात्तता विधीयते ।
तत्र यस्मिन्पक्षे न अस्त्युदात्तत्वं तत्र ङीपि सति उदात्तनिवृत्तिस्वरस्य अभावादनुदात्तः श्रूयेत ।
ङीषि तु सर्वत्र+उदात्तः सिद्धो भवति ।
बहुव्रीहिग्रहणं आ पादपरिसमाप्तेरनुवर्तते । ।

---

1. <अङ्गुलेर्दारुणि># । । PS_५,४.११४ । ।

______Sठा-ऽठ्JKव्_५,४.११४ः

अङ्गुलिशब्दान्ताद्बहुव्रीहेः षच्प्रत्ययो भवति समासान्तः दारुणि समासार्थे ।
द्व्यङ्गुलं दारु ।
त्र्यङ्गुलं दारु ।
पञ्चाङ्गुलं दारु ।
अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठं उच्यते ।
यस्य तु द्वे अङ्गुली प्रमाणं दारुणः तत्र तद्धितार्थ इति समासे इष्यते तत्पुरुषस्य अङ्गुलेः इत्यचा भवितव्यं ।
दारुणि इति किं ? पञ्चाङ्गुलिर्हस्तः । ।

---

1. <द्वि-त्रिभ्यां ष मूर्ध्नः># । । PS_५,४.११५ । ।

______Sठान्ढ्JKव्_५,४.११५ः
द्वित्रिभ्यां परो यो मूर्धन्शब्दः तदन्ताद्बहुव्रीहेः षप्रत्ययः भवति समासान्तः ।
द्विमूर्धः ।
त्रिमूर्धः ।
द्वित्रिभ्यां इति किं ? उच्चैर्मूर्धा । ।

---

1. <अप्पूरणी-प्रमाण्योः># । । PS_५,४.११६ । ।

______Sठान्ढ्JKव्_५,४.११६ः

पूरणप्रत्याअन्ताः स्त्रीलिङ्गाः शब्दाः पूरणीग्रहणेन गृह्यन्ते ।
प्रमाणी इति स्वरूपग्रहणं ।
पूरण्यनतात्प्रमाण्यन्तात्च भुव्रीहेः अप्प्रत्ययो भवति समासान्तः ।
कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः ।
कल्याणीदशमा रात्रयः ।
स्त्री प्रमाणी एशां स्त्रीप्रमाणाः कुटुम्बिनः ।
भार्याप्रधानाः इत्यर्थः ।
अपि प्रधानपूरणीग्रहणं कर्तव्यं ।
यत्र अन्यपदार्थे पूरणी अनुप्रविशति न केवलं वर्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यं ।
पुंबद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते ।
इह न भवति, कल्याणी पञ्चमी अस्मिन्पक्षे कल्याणपञ्चमीकः पक्षः इति ।
नेतुर्नक्षत्र उपसङ्ह्यानं ।

[#५८५]

मृगो नेता आसां रात्रीणां मृगनेत्रा रात्रयः ।
पुष्यनेत्राः ।
नक्षत्रे इति किं ? देवदत्तनेतृकाः ।
छन्दसि च नेतुरुपसङ्ख्यानं ।
वृहस्पतिनेत्रा देवाः ।
सोमनेत्राः ।
मासाद्भृतिप्रत्ययपूर्वपदाट्ठञ्विधिः ।
पञ्चको मासोऽस्य पञ्चकमासिकः कर्मकरः ।
दशकमासिकः ।
सोऽस्यांशवस्नभुऋतयः (*५,१.५६) इति सङ्ख्याया अतिशदन्तायाः कन्(*५,१.५२) । ।

---

1. <अन्तर्-बहिर्भ्यां च लोम्नः># । । PS_५,४.११७ । ।

_______Sठा-ठ्JKव्_५,४.११७ः

अन्तर्बहिसित्येताभ्यां परो यो लोमन्शब्दः तदन्ताद्बहुव्रीहेः अप्प्रत्ययो भवति ।
अन्तर्गतानि लोमानि अस्य अन्तर्लोमः प्रावारः ।
बहिर्लोमः पतः । ।

---

1. <अञ्नासिकायाः सञ्ज्ञायां नसं च अस्थूलात्># । । PS_५,४.११८ । ।

_______Sठा-ठ्JKव्_५,४.११८ः

नासिकान्तात्बहुव्रीहेः अच्प्रत्ययो भवति, नासिकाशब्दश्च न समादेशं आपद्यते ।
अस्थूलातिति नासिकाविशेषणं, न चेत्स्थूलशब्दात्परा नासिका भवति इति ।
सञ्ज्ञायां इति समुदायोपाधिः ।
द्रुरिव नासिका अस्य द्रुणसः ।
वाद्ग्रीणसः ।
पूर्वपदात्सञ्ज्ञायां अगः (*८,४.३) इति णत्वं ।
गोनसः ।
सञ्ज्ञायां इति किं ? तुङ्गनासिकः ।
अस्थूलातिति किं ? स्थूलनासिको वराहः ।
खुरखराभ्यां नस्वक्तव्यः ।
खुरणाः ।
खरणाः ।
पक्षेऽच्प्रत्ययोऽपि इष्यते ।
खुरणसः ।
खरणसः ।
शितिनाः, अहिनाः, अर्चनाः इति निगम इष्यते । ।

---

1. <उपसर्गाच्च># । । PS_५,४.११९ । ।

_______Sठा-ठJKव्_५,४.११९ः

उपसर्गात्परो यो नासिकाशब्दः तदन्तात्बहुव्रीहेः अच्प्रत्ययो भवति, नासिकाशब्दश्च न समापद्यते।
असञ्ज्ञार्थं वचनं।
उन्नता नासिका अस्य उन्नसः।
प्रनसः।
उपसर्गाद्बहुलं (*८,४.२८) इति णत्वं।
वेर्ग्रो वक्तव्यः।
विगता नासिका अस्य विग्रः।।

---

[#५८६]

1. <सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरश्र-एणीपदाजपद-प्रोष्ठपदाः>#।। PS_५,४.१२०।।

_______Sठा-ठJKव्_५,४.१२०ः

सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते।
अन्यदपि च टिलोपादिकं निपातनादेव सिद्धं।
शोभनं प्रातरस्य सुप्रातः।
शोभनं श्वोऽस्य सुश्वः।
शोभनं दिवा अस्य सुदिवः।
शारेरिव कुक्षिरस्य शारिकुक्षः।
चतस्रोऽश्रयोऽस्य चतुरश्रः।
एण्या इव पादौ अस्य एणीपदः।
अजस्य+इव पादावस्य अजपदः।
प्रोष्थो गोः, तस्य+इव पादावय प्रोष्ठपदः।।

---

1. <नञ्-दुः-सुभ्यो हलि-सक्थ्योरन्यारस्याम्>#।। PS_५,४.१२१।।

_______Sठा-ठJKव्_५,४.१२१ः

नञ्दुस्सु इत्येतेभ्यः परौ यौ हलि-सक्थि-शब्दौ तदन्तद्बहुव्रीहेरन्यतरस्यां अच्प्रत्ययो भवति समासान्तः।
अविद्यमाना हलिरस्य अहलः, अहलिः।
दुर्हलः, दुर्हलिः।
सुहलः, सुहलिः।
अविद्यमानं सक्थि अस्य असक्थः, असक्थिः।

दुःसक्थः, दुःसक्थिः ।
सुसक्थः, सुसक्थिः ।
हलिशक्त्योः इति केचित्पठन्ति ।
अविद्यमाना शक्तिः अस्य अशक्तः, अशक्तिः ।
विरूपा शक्तिः अस्य दुःशक्तः, दुःशक्तः, दुःशक्तिः ।
शोभना शक्तिः अस्य सुशक्तः, सुशक्तिः । ।

---

1. <नित्यं असिच्प्रजा-मेधयोः># । । PS_५,४.१२२ । ।

_______Sठाॅठ्JKव्_५,४.१२२ः

नञ्दुस्सुभ्यः इत्येव ।
नञ्दुस्सु इत्येतेभ्यः परौ यौ प्रजा-मेधा-शब्दौ तदन्ताद्बहुव्रीहेः नित्यं असिच्प्रत्ययो भवति समासान्तः ।
अविद्यमाना प्रजा अस्य अप्रजाः ।
दुष्प्रजाः ।
सुप्रजाः ।
अविद्यमाना मेधा यस्य अमेधाः ।
दुर्मेधाः ।
सुमेधाः ।
नित्यग्रहणं किम्, यावता पूर्वसूत्रेऽन्यतरस्यां ग्रहणं न+एव स्वर्यते ? एवं तर्हि नित्यग्रहणादन्यत्र अपि भवति इति सूच्यते ।
श्रोत्रियस्य+इव ते राजन्मन्दकस्याल्पमेधसः ।
अनुवाकहता बुद्धिर्न+एषा तत्त्वार्थदर्शिनी । ।

---

1. <बहुप्रजाश्च्छन्दसि># । । PS_५,४.१२३ । ।

_______Sठाॅठ्JKव्_५,४.१२३ः

बहुप्रजाः इति छन्दसि निपात्यसे ।
बहुप्रजा निरृतिमाविवेश ।
छन्दसि इति किं ? बहुप्रजो ब्राह्मणः । ।

---

1. <धर्मादनिच्केवलात्># । । PS_५,४.१२४ । ।

_______Sठा~ठ्JKव्_५,४.१२४ः

केवलाद्यो धर्मशब्दः तदन्ताद्बहुव्रीहेः अनिच्प्रत्ययो भवति समासन्तः ।
कल्याणो धर्मोऽस्य कल्याणधर्मा ।
प्रियधर्मा ।
केवलातिति इं ? परमः स्वो धर्मः अस्य परमस्वधर्मः ।
यद्येवं त्रिपदे बहुव्रीहौ प्राप्नोति, परमः स्वो धर्मः अस्य इति ? एवं तर्हि केवलातिति पूर्वपदं निर्दिश्यते, केवलात्पदाद्यो धर्मशब्दो न पदसमुदायात्, तदन्ताद्बाहुव्रीहेः प्रत्ययः ।।

---

[#५८७]

1. <जम्भा सुहरिततृणसोमेभ्यः># ।। PS_५,४.१२५ ।।

_______Sठा~ठ्JKव्_५,४.१२५ः

बहुव्रीहौ समासे स्वादिभ्यः परं जम्भा इति कृतसमासान्तं उत्तरपदं निपात्यते जम्भशब्दः अभ्यवहार्यवची दन्तविशेषवाची च ।
शोभनो जम्भः अस्य सुजम्भा देवदत्तः ।
शोभनाभ्यवहार्यः शोभनदन्तो वा ।
एवं हरितजम्भा ।
तृणजम्भा ।
सोमजम्भा ।
दन्तवचने - तृणं इव जम्भः अस्य, सोम इव जम्भः अस्य इति विग्रहीतव्यं ।
सुहरिततृणसोमेभ्यः इति किं ? पतितजम्भः ।।

---

1. <दक्षिणेर्मा लुब्धयोगे># ।। PS_५,४.१२६ ।।

_______Sठा~ठ्JKव्_५,४.१२६ः

दक्षिणेर्मा इति कृतस्मासान्तः निपात्यते बहुव्रीहौ समासे लुब्धयोगे ।
दक्षिणं ईर्मं अस्य दक्षिणेर्मा मृगः ।
ईर्मं व्रणं उच्यते ।
दक्षिणं अङ्गं व्रणितं अस्य व्याधेन इत्यर्थः ।
लुब्धयोगे इति किं ? दक्षिणेर्म शकटं ।।

---

1. <इच्कर्मव्यतिहारे># । । PS_५,४.१२७ । ।

______Sठा~ठ्JKव्_५,४.१२७ः

कर्मव्यतिहारे यो बहुव्रीहिः तस्मादिच्प्रत्ययो भवति ।
तत्र तेन+इदं इति सरूपे (*२,२.२७) इत्ययं बहुव्रीहिर्गृह्यते ।
केशेसु केशेसु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि ।
कचाकचि ।
मृसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि ।
दण्डादण्डि ।
तिष्ठद्गुप्रभृतिषु अयं इच्प्रत्ययः पठ्यते । ।

---

1. <द्विदण्ड्यादिभ्यश्च># । । PS_५,४.१२८ । ।

______Sठा~ठ्JKव्_५,४.१२८ः

द्विदण्ड्यादयः शब्दाः इच्प्रत्ययान्ताः साधवो भवन्ति ।
द्विदण्ड्यादिभ्यः इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी ।
द्विदण्ड्याद्यर्थं इच्प्रत्ययो भवति तथा भवति यथा द्विदण्ड्यादयः सिद्ध्यन्ति इत्यर्थः ।
समुदायनिपातनाच्च अर्थविशेषेऽवरुध्यन्ते ।
द्विदण्डि प्रहरति ।
द्विमुसलि प्रहरति ।
इह न भवति, द्विदण्डा शाला इति ।
बहुव्रीह्यधिकारेऽपि तत्पुरुषात्क्वचिद्विधानं इच्छन्ति ।
निकुच्य कर्णौ धावति निकुच्यकर्णि धावति ।
प्रोह्य पादौ हस्तिनं वाहयति प्रोद्यपादि हस्तिनं वाहयति ।
मयूरव्यंसकादित्वात्समासः । ।
द्विदण्डि ।
द्विमुसलि ।
उभाञ्जलि ।
उभयाञ्जलि ।
उभाकर्णि ।
उभयाकर्णि ।
उभादन्ति ।
उभयादन्ति ।
उभाहस्ति ।
उभयाहस्ति ।
उभापाणि ।
उभयापाणि ।
उभाबाहु ।

उभयाबाहु ।
एकपदि ।
प्रोह्यपदि ।
आढ्यपदि ।
सपति ।
निकुच्यकर्णि ।
संहतपुच्छि ।
उभाबाहु, उभयाबाहु इति निपातनादिच्प्रत्ययलोपः ।
प्रत्ययलक्षणेन अव्ययीभावसञ्ज्ञा । ।

---

[#५८८]

1. <प्र-संभ्यां जानुनोर्ज्ञुः># । । PS_५,४.१२९ । ।

_______Sठा<ठJKव्_५,४.१२९ः

प्र सं इत्येताभ्यां उत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ ।
प्रकृष्टे जानुनी अस्य प्रज्ञुः ।
सञ्ज्ञौः । ।

---

1. <ऊर्ध्वाद्विभाषा># । । PS_५,४.१३० । ।

_______Sठा<ठJKव्_५,४.१३०ः
ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा ज्ञुः इत्ययं आदेशो भवति ।
ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः, ऊर्ध्वज्ञुः । ।

---

1. <ऊधसोऽनङ्># । । PS_५,४.१३१ । ।

_______Sठा<ठJKव्_५,४.१३१ः

ऊधस्शब्दान्तस्य बहुव्रीहेः अनङादेशो भवति समासान्तः ।
कुण्डं इव ऊधः अस्याः सा कुण्डोध्नी ।

घटोध्नी ।
ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यं ।
इह मा भूत्, महोधाः पर्जन्यः ।
घटोधो धैनुकं । ।

---

1. <धनुषश्च># । । PS_५,४.१३२ । ।

_______Sठा त्ठ्JKव्_५,४.१३२ः

धनुःशब्दान्तस्य बहुव्रीहेः अनङादेशो भवति समासान्तः ।
शार्ङ्गं धनुरस्य शार्ङ्गधन्वा ।
गाण्डीवधन्वा ।
पुष्पधन्वा ।
अधिज्यधन्वा । ।

---

1. <वा सञ्ज्ञायाम्># । । PS_५,४.१३३ । ।

_______Sठा त्ठ्JKव्_५,४.१३३ः

धनुःशब्दान्ताद्बहुव्रीहेरन्डादेशो वा भवति सञ्ज्ञायां विषये ।
पूर्वेण नित्यः प्रप्तः विकल्प्यते ।
शतधनुः, शतधन्वा ।
दृढधनुः, दृढधन्वा । ।

---

1. <जायाया निङ्># । । PS_५,४.१३४ । ।

_______Sठा त्ठ्JKव्_५,४.१३४ः

जायाशब्दान्तस्य बहुव्रीहेर्निङादेशः भवति ।
युवतिः जाया यस्य युवजानिः ।
वृद्धजानिः । ।

---

[#५८९]

1. <गन्धस्य+इदुत्-पूति-सु-सुरभिभ्यः># । । PS_५,४.१३५ । ।

_______Sठाऱ्ठJKव्_५,४.१३५ः

उत्पूति सु सुरभि इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे ।
तकार उच्चारणार्थः ।
उद्गतो गन्धोऽस्य उद्गन्धिः ।
पूतिगन्धिः ।
सुगन्धिः ।
सुरभिगन्धिः ।
एतेभ्यः इति किं ? तीव्रगन्धो वातः ।
गन्धस्येत्वे तदेकान्तग्रहणं ।
तेन शोभनः गन्धः अस्य सुगन्धः आपणिकः । ।

---

1. <अल्प-आख्यायाम्># । । PS_५,४.१३६ । ।

_______Sठाऱ्ठJKव्_५,४.१३६ः

अल्पाख्यायां योगन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे ।
सूपोऽल्पोऽस्मिन्सूपगन्धि भोजनं ।
अल्पं अस्मिन्भोजने घृतं घृतगन्धि ।
क्षीरगन्धि ।
अल्पपर्यायो गन्धशब्दः । ।

---

1. <उपमानाच्च># । । PS_५,४.१३७ । ।

_______Sठाऱ्ठJKव्_५,४.१३७ः

उपमानात्परो यो गन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे ।
पद्मस्य इव गन्धोऽस्य पद्मगन्धिः ।
उत्पलगन्धिः ।

करीषगन्धिः । ।

---

1. <पादस्य लोपोऽहस्त्यादिभ्यः># । । PS_५,४.१३८ । ।

_______Sठाञ्ठJKव्_५,४.१३८ः

उपमानातित्येव ।
उपमानातिहस्त्यादिवर्जितात्परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे ।
स्थानिद्वारेण लोपस्य समासान्तता विज्ञायते ।
व्याघ्रस्य+इव पादौ अस्य व्यघ्रपाथ् ।
संहपाथ् ।
अहस्त्यादिभ्यः इति किं ? हस्तिपादः ।
कटोलपादः ।
हस्तिन् ।
कटोल ।
गण्डोल ।
गण्डोलक ।
महिला ।
दासी ।
गणिका ।
कुसूल । ।

---

1. <कुम्भपदीषु च># । । PS_५,४.१३९ । ।

_______Sठाञ्ठJKव्_५,४.१३९ः

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते ।
तत्र एवं सूत्रं ज्ञेयं ।
पादस्य लोपो भवति कुम्भपद्यादिविषये यथा कुम्भपद्यादयः ।
सिध्यन्ति ।
समुदायपाठस्य च प्रयोजनं विषयनियमः - स्त्रियां एव, तत्र ङीप्प्रत्यये एव, न अन्यदा ।
कुम्भपदी ।
शतपदी ।
यच्च इह उपमानपूर्वं सङ्ख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनं ।
पादोऽन्यतरस्यां (*४,१.८) इति विकओपो न भवति ।

[#५९०]

कुम्भपदी ।

शतपदी ।
अष्टापदी ।
जालपदी ।
एकपदी ।
मालापदी ।
मुनिपदी ।
गोधापदी ।
गोपदी ।
कलशीपदी ।
घृतपदी ।
दासीपदी ।
निष्पदी ।
आर्द्रपदी ।
कुणपदी ।
कृष्णपदी ।
द्रोणपदी ।
द्रुपदी ।
शकृत्पदी ।
सूपपदी ।
पञ्चपदी ।
अर्वपदी ।
स्तनपदी ।
कुम्भपद्यादिः । ।

---

1. <सङ्ख्या-सुपूर्वस्य># । । PS_५,४.१४० । ।

______Sठा~ठJKव्_५,४.१४०ः

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः ।
द्वौ पादौ अस्य द्विपाथ् ।
त्रिपाथ् ।
शोभनौ पादौ अस्य सुपात् । ।

---

1. <वयसि दन्तस्य दतृ># । । PS_५,४.१४१ । ।

______Sठा~ठJKव्_५,४.१४१ः

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दः, तस्य दतृ इत्ययं आदेशो भवति समासान्तः वयसि गम्यमाने ।

ऋकार उगित्कार्यार्थः ।
द्वौ दन्तौ अस्य द्विदन् ।
त्रिदन् ।
चतुर्दन् ।
शोभना दन्ताः अस्य समस्ताः जाताः सुदन्कुमारः ।
वयसि इति किं ? द्वैदन्तः कुञ्जरः ।
सुदन्तो दाक्षिणात्यः । ।

---

1. <छन्दसि च># । । PS_५,४.१४२ । ।

_______Sठान्ढ़्JKव्_५,४.१४२ः

छन्दसि च दन्तशदस्य दतृ इत्ययं आदेशो भवति समासान्तः बहुव्रीहौ समासे ।
पत्रदतमालभेत ।
उभयादतः आलभते । ।

---

1. <स्त्रियां सञ्ज्ञायाम्># । । PS_५,४.१४३ । ।

_______Sठान्ढ़्JKव्_५,४.१४३ः

स्त्रियां अन्यपदार्थे सञ्ज्ञायां विषये दन्तशब्दस्य दतृ इत्ययं आदेशो भवति ।
अयोदती ।
फालदती ।
सञ्ज्ञायां इति किं ? समदन्ती ।
स्निग्धदन्ती । ।

---

1. <विभाषा श्याव-अरोकाभ्याम्># । । PS_५,४.१४४ । ।

_______Sठान्ढ़्JKव्_५,४.१४४ः

श्याव अरोक इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययं आदेशो भवति विभाषा समासान्तो बहुव्रीहौ ।
श्यावदन्, श्यावदन्तः ।
अरोकदन्, अरोकदन्तः ।

अरोको निर्दीप्तिः ।
सञ्ज्ञायां इत्येव, श्यवदन्तः ।
अरोकदन्तः । ।

---

[#५९१]

1. <अग्रान्त-शुद्ध-शुभ्र-वृष-वराहेभ्यश्च># । । PS_५,४.१४५ । ।

_______Sठाञ्ठ्JKव्_५,४.१४५ः
विभाषा इत्येव ।
अग्रान्तात्शब्दात्शुद्ध शुभ्र वृष वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृ इत्ययं आदेशो भवति समासान्तो बहुव्रीहौ समासे ।
कुड्मलाग्रदन्,कुड्मलाग्रदन्तः ।
शुद्धदन्, शुद्धदन्तः ।
शुभ्रदन्, शुभ्रदन्तः ।
वृषदन्, वृषदन्तः ।
वराहदन्, वराहदन्तः ।
अनुक्तसमुच्चयार्थः चकारः ।
अहिदन्, अहिदन्तः ।
मूषिकदन्, मूषिकदन्तः ।
गर्दभदन्, गर्दभदन्तः ।
शिखरदन्, शिखरदन्तः । ।

---

1. <ककुदस्य अवस्थायां लोपः># । । PS_५,४.१४६ । ।

_______Sठाञ्ठ्JKव्_५,४.१४६ः

ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तः अवस्थायां गम्यमानायां ।
कालादिकृता वस्तुधर्मा वयःप्रभृतयः अवस्था इत्युच्यते ।
असञ्जातं ककुदं अस्य असञ्जातककुथ् ।
बालः इत्यर्थः ।
पूर्णककुथ् ।
मध्यमवयाः इत्यर्थः ।
उन्नतककुथ् ।
वृद्धवयाः इत्यर्थः ।
स्थूलककुथ् ।
वलवानित्यर्थः ।
यष्टिककुथ् ।
नातिस्थूलो नातिकृशः इत्यर्थः ।

अवस्थायां इति किं ? श्वेतककुदः । ।

---

1. <त्रिककुत्पर्वते># । । PS_५,४.१४७ । ।

_______SठाJKव्_५,४.१४७ः

त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये ।
त्रीणि ककुदान्यस्य त्रिककुत्पर्वतः ।
ककुदाकारं पर्वतस्य शृङ्गं ककुदं इत्युच्यते ।
न च सर्वस्त्रिशिखरः पर्वतः त्रिककुथ् ।
किं तर्हि ? सञ्ज्ञैषा पर्वतविशेषस्य ।
पर्वते इति किं ? त्रिककुदोऽन्यः । ।

---

1. <उद्-विभ्यां काकुदस्य># । । PS_५,४.१४८ । ।

_______SठाJKव्_५,४.१४८ः

उत्वि इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे ।
उद्गतं काकुदं अस्य उत्का कुथ् ।
विकाकुथ् ।
तालु काकुदं उच्यते । ।

---

1. <पूर्णाद्विभाषा># । । PS_५,४.१४९ । ।

_______SठाJKव्_५,४.१४९ः

पूर्णात्परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे ।
पूर्णं काकुदं अस्य पूर्णकाकुत्पूर्णकाकुदः । ।

---

[#५९२]

1. <सुहृद्-दुर्हृदौ मित्र-अमित्रयोः># । । PS_५,४.१५० । ।

______Sठाञ्ठJKव्_५,४.१५०ः

सुहृत्दुर्हृतिति निपात्यते यथासङ्ख्यं मित्र-अमित्रयोरभिधेययोः ।
सुशब्दात्परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात्परस्य ।
शोभनं हृदयं अस्य सुहृत्मित्रं ।
दुष्टं हृदयं अस्य दुर्हृतमित्रं ।
मित्रामित्रयोः इति किं ? सुहृदयः कारुणिकः ।
दुर्हृदयः चोरः । ।

---

1. <उरःप्रभृतिभ्यः कप्># । । PS_५,४.१५१ । ।

______Sठाञ्ठJKव्_५,४.१५१ः

उरःप्रभृत्यन्तात्बहुव्रीहेः कप्प्रत्ययो भवति ।
व्यूढं उरः अस्य व्यूढोरस्कः ।
प्रियसर्पिष्कः ।
अवमुक्तोपानत्कः ।
पुमाननड्वान्पयः नौः लक्ष्मीः इति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि ।
तत्र+इदं प्रयोजनं - एकवचनान्तानां एव ग्रहणं इह विज्ञायेत, द्विवचन-बहुवचन-अन्तानां मा भूतिति ।
तत्र शेषद्विभाषा (*५,४.१५४) इति विकल्प एव भवति इति ।
द्विपुमान्, द्विपुंस्कः ।
बहुपुमान्, बहुपुंस्कः ।
उरस् ।
सर्पिस् ।
उपानः ।
पुमान् ।
अनड्वान् ।
नौः ।
पयः ।
लक्ष्मीः ।
दधि ।
मधु ।
शालि ।
अर्थान्नञः अनर्थकः । ।

---

1. <इनः स्त्रियाम्># । । PS_५,४.१५२ । ।

_______Sठाऱ्ठJKव्_५,४.१५२ः

इन्नन्ताद्बहुव्रीहेः कप्प्रत्ययो भवति स्त्रियां विषये ।
बहवो दण्दिनः अस्यां शालायां बहुदण्दिका शाला ।
बहुच्छत्रिका ।
बहुस्वामिका नगरी ।
बहुवाग्मिका सभा ।
स्त्रियां इति किं ? बहुदण्डी राजा, बहुदण्डिकः ।
शेषद्विभाषा (*५,४.१५४) इत्येतद्भवति । ।

---

1. <नद्य्-ऋतश्च># । । PS_५,४.१५३ । ।

_______Sठाऱ्ठJKव्_५,४.१५३ः

नद्यन्तात्बहुव्रीहेः ऋकारान्तात्च कप्प्रत्ययो भवति ।
बह्व्यः कुमार्य अस्मिन्देशे बहुकुमारीकः देशः ।
बहुब्रह्मबन्धूकः ।
ऋतः खल्वपि - बहुकर्तृकः ।
तकारः मुखसुखार्थः । ।

---

1. <शेषाद्विभाषा># । । PS_५,४.१५४ । ।

_______Sठाऱ्ठJKव्_५,४.१५४ः

यस्माद्बहुव्रीहेः समासान्तो न विहितः स शेषः तस्माद्विभाषा कप्प्रत्ययो भवति ।
बह्व्यः खट्वाः अस्मिन्बहुखट्वकः ।
बहुमालकः ।
बहुवीणकः ।
बहुखट्वाकः ।
बहुमालाकः ।
बहुवीणाकः ।

बहुखट्वः ।
बहुमालः ।
बहुवीणः ।
कथं अनृक्कं साम, बह्वृक्कं सूक्तं इति, यावता विहितोऽत्र सामान्येन समासान्तः ऋष्पूः इति ।
न+एतदस्ति ।
विशेषे स इष्यते, अनृचो माणदको ज्ञेयो बह्वृचश्चरणाख्यायां इति ।
शेषातिति किं ? प्रियपथः ।
प्रियधुरः । ।

---

[#५९३]

1. <न सञ्ज्ञायाम्># । । PS_५,४.१५५ । ।

_______Sठान्ठ्JKव्_५,४.१५५ः

सञ्ज्ञायां विषये बहुव्रीहौ समासे कप्प्रत्ययो न भवति ।
पूर्वेण प्राप्तः प्रतिषिध्यते ।
विश्वे देवा अस्य विश्वदेवः ।
विश्वयशाः । ।

---

1. <ईयसश्च># । । PS_५,४.१५६ । ।

_______Sठान्ठ्JKव्_५,४.१५६ः

ईयसन्ताद्बहुव्रीहेः कप्प्रत्ययो न भवति ।
सर्वा प्राप्तिः प्रतिषिध्यते ।
बहवः श्रेयांसः अस्य बहुश्रेयान् ।
शेषाद्विभाषा (*५,४.१५४) इत्यस्य प्रतिषेधः ।
बह्व्यः श्रेयस्यः अस्य बहुश्रेयसी ।
नद्यृतश्च (*५,४.१५३) इत्यसय्प्रतिषेधः ।
ह्रस्वत्वं अपि न भवति, ईयसो बहुव्रीहौ पुंवतिति वचनात् । ।

---

1. <वन्दिते भ्रातुः># । । PS_५,४.१५७ । ।

_______Sठा-ठJKव्_५,४.१५७ः

वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद्बहुव्रीहेः कप्प्रत्ययो न भवति ।
वन्दितः स्तुतः पूजितः इत्युच्यते ।
शोभनो भ्राता अस्य सुभ्राता ।
वन्दितः इति किं ? मूर्खभ्रातृकः ।
दुष्टभ्रातृकः । ।

---

1. <ऋतश्छन्दसि># । । PS_५,४.१५८ । ।

_______Sठा-ठJKव्_५,४.१५८ः

ऋवर्नान्ताद्बहुव्रीहेः छन्दसि विषये कप्प्रत्ययो न भव्ति ।
हता माता अस्य हतमाता ।
हतपिता ।
हतस्वसा ।
सुहोता । ।

---

1. <नाडी-तन्त्र्योः स्वाङ्गे># । । PS_५,४.१५९ । ।

_______Sठा-ठJKव्_५,४.१५९ः

स्वाङ्गे यौ नाडीत्-अन्त्री-शब्दौ तदन्ताद्बहुव्रीहेः कप्प्रत्ययो न भवति ।
बह्व्यः नाड्यः अस्य बहुनाडिः कायः ।
बहुतन्त्री ग्रीवा ।
धमनीवचनस्तन्त्रीशबः ।
स्वाङ्गे इति किं ? बहुनाडीकः स्तम्भः ।
बहुतन्त्रीका वीणा । ।

---

1. <निष्प्रवाणिश्च># । । PS_५,४.१६० । ।

_______Sठाऽ्ठ्JKव्_५,४.१६०ः
निष्प्रवाणिः इति नदीलक्षणस्य कपः प्रतिषेधो निपात्यते ।
प्रोयतेऽस्यां इति प्रवाणी ।
प्रवयन्ति तया वा इति प्रावाणी ।
करणसाधनोऽयं ल्युठ् ।
तन्तुवायशलाका भ्ण्यते ।
निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः ।
निष्प्रवाणिः कम्बलः ।
अपनीतशलाकः समाप्तवानः प्रत्यग्रो नवकः उच्यते । ।
इति श्रीवामनविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य चतुर्थः पदः

षष्टोऽध्यायः प्रथमः पादः ।

---

[#५९४]

1. <एक-अचो द्वे प्रथमस्य># । । PS_६,१.१ । ।

______Sठान्ठJKव्_६,१.१ः

अधिकारोऽयं ।
एकाचः इति च, द्वे इति च, प्रथमस्य इति च त्रितयं अधिकृतं वेदितव्यं ।
इत उत्तरं यद्वक्ष्यामः प्राक्संप्रसारणविधानात्तत्र एकाचः प्रथमस्य द्वे भवतः इत्येवं तद्वेदितव्यं ।
वक्ष्यति - लिटि धातोरनभ्यासस्य (*६,१.८) इति ।
तत्र धातोरवयवयस्य अनभ्यासस्य प्रथमस्य+एकाचो द्वे भवतः ।
जजागार ।
पपाच ।
इयाय ।
आर ।
एकाच इति बहुव्रीहिनिर्देशः ।
एकोऽच्यस्य सोऽयं एकाचित्यवयवेन विग्रहः ।
तत्र समुदायः समासार्थः ।
अभ्यन्तरश्च समुदायेऽवयवो भवति इति साच्कस्य+एव द्विर्वचनं भवति ।
एवं च पचित्यत्र येन+एव अचा समुदायः एकाच्, तेना+एव तदवयवोऽच्छब्दः पशब्दश्च ।
तत्र पृथगवयवैकाच्न द्विरुच्यते, किं तर्हि, समुदायैकाजेव ।
तथा हि सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते ।
पपाच इत्यत्र प्रथमत्वं व्यपदेशिवद्भावाथ् ।
इयाय, आर इत्यत्र एकाच्त्वं अपि व्यपदेशिभावादेव ।
द्विःप्रयोगश्च द्विर्वचनं इदं ।
आवृत्तिसङ्ख्या हि द्वे इति विधीयते ।
तेन स एव शब्दो द्विरुचार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते । ।

---

1. <अजादेर्द्वितीयस्य># । । PS_६,१.२ । ।

______Sठान्ठJKव्_६,१.२ः

प्रथम-द्विर्वचन-अपवादोऽयं ।
अजादेर्द्वितियस्य एकचो द्विर्वचनं अधिक्रियते ।
अचादिर्यस्य धातोः तदवयवस्य द्वितीयस्य एकाचो द्वे भवतः ।
अटिटिषति ।
अशिशिषति ।
अरिरिषति ।
अर्तेः स्मि-पूङ्-ऱ्-अञ्ज्व्-अशां सनि (*७,२.७४) इति इट्क्रियते ।

तस्मिन्कृते गुणे च रपरत्वे च द्विर्वचनेऽचि (*१,२.५९) इति स्थानिवद्भावः प्राप्नोति ।
तत्र प्रतिविधानं द्विर्वचननिमित्तेऽचि इति उच्यते ।
न च अत्र द्विर्वचननिमित्तमिठ् ।
किं तर्हि ? कार्यी ।
न च कार्यी निमित्तत्वेन अश्रीयते ।
तथा हि - क्ङिनिमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयिता इत्यत्र न भवति, न हि कार्यिणः शीङो गुणं प्रति निमित्तभावः इति ।
अत्र केचिदजादेः इति कर्मधारयात्पञ्चमीं इच्छन्ति ।
अच्च असौ आदिश्च इत्यजादिः, तस्मातजादेरुत्तरस्य एकाचो द्वे भवतः इति ।
तेषां द्वितीयस्य इति विस्पष्टर्थं द्रष्टाव्यं । ।

---

1. <न न्द्राः संयोगादयः># । । PS_६,१.३ । ।

______Sठाञ्ठ्JKव्_६,१.३ः

द्वितीयस्य इति वर्तते ।
द्वितीयस्य एकाचोऽवयवभूतानां न्द्राणां तदन्तर्भावात्प्राप्तं द्विर्वचनं प्रतिषिध्यते ।
नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुद्यन्ते ।
उन्दिदिषति ।
अड्डिडिषति ।

[#५९५]

अर्चिचिषति ।
न्द्राः इति किं ? ईचिक्षिषते ।
संयोगादयः इति किं ? प्राणिणिषति ।
अनितेः (*८,४.१९) उभौ साभ्यासस्य (*८,४.२१) इति णत्वं ।
अजादेः इत्येव, दिद्रासति ।
केचिदजादेः इत्यपि पञ्चम्यन्तं कर्मधारयं अनुवर्तयन्ति ।
तस्य प्रयोजनम्, इन्दिद्रीयिषति इति ।
अजादेरनन्तरत्वाभावाद्दकारो द्विरुच्यत एव, नकारो न द्विरुच्यते ।
इन्द्रं इच्छति इति क्यछ् ।
तदन्तातिन्द्रीयितुं इच्छति इति सन् ।
बकारस्य अप्ययं प्रतिषेधो वक्तव्यः ।
उब्जिजिषति ।
यदा बकरोपध उब्जिरुपदिश्यते तदा अयं प्रतिषेधः ।
दकारोपधोपदेशे तु न वक्तव्यः ।
बत्वं तु दकारस्य विधातव्यं ।
यकारपरस्य रेफस्य प्रतिषेधो न भवति इति वक्तव्यं ।
अरार्यते ।
अर्तेः अट्यर्तिशूर्णोतीनां उपसंख्यानं (*७,४.८२) इति यङ् ।
तत्र यङि च (*७,४.३०) इति गुणः, ततो द्विर्वचनं ।
ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यं ।
कस्य तृतीयस्य ? केचिदाहुर्व्यञ्जनस्य इति ।
ईर्ष्यियिषति ।
अपरे पुनः तृतीयस्य एकाचः इति व्याचक्षते ।
ईर्ष्यिषिषति ।
कण्ड्वादीनां तृतीयस्य+एअकाचो द्वे भवत इति वक्त्व्यं ।
कण्डूयियिषति ।
असुयियिषति ।
वा नामधातूनां तृतीयस्य+एकाच्द्वे भवत इति वक्तव्यं ।
अश्वीयियिषति ।

अशिश्वीयिषति ।
अपर आह - यथा+इष्टं नामधातुष्विति वक्तव्यं ।
पुपुत्रीयिषति ।
पुतित्रीयिषति ।
पुत्रीयियिषति ।
पुपुतित्रीयियिषति ।
पुत्रीयिषिषति । ।

---

[#५९६]

1. <पूर्वोऽभ्यासः># । । PS_६,१.४ । ।

_______Sठाञ्ठ्JKव्_६,१.४ः

द्वे इति प्रथमन्तं यदनुवर्तते तदर्थादिह षष्ठ्यन्तं जायते ।
तत्र प्रत्यासत्तेरस्मिन्प्रकरणे ये द्वे विहिते तयोर्यः पूर्वोऽवयवः सोऽभ्याससञ्ज्ञो भवति ।
पपाच ।
पिपक्षति ।
पापच्यते ।
जुहोति ।
अपीपचथ् ।
अभ्यासप्रदेशास्तु अत्र लोपोऽभ्यासस्य (*७,४.५८) इत्येवं आदयः । ।

---

1. <उभे अभ्यस्तम्># । । PS_६,१.५ । ।

_______Sठाञ्ठ्JKव्_६,१.५ः

द्वे इति वर्तमाने उभेग्रहणं समुदायसञ्जाप्रतिपत्त्यर्थं ।
ये एवे विहिते ते उभे अपि समुदिते अभ्यस्तसञ्ज्ञे भवतः ।
ददति ।
ददथ् ।
दधतु ।
उभेग्रहणं किं ? नेनिजति इत्यत्र अभ्यस्तानां आदिः इति समुदाये उदात्तत्वं यथा स्यात्, प्रत्येकं पर्यायेण वा मा भूतिति ।
अभ्यस्तप्रदेशाः - अभ्यस्तानां आदिः (*६,१.१८९) इत्येवं आदयः । ।

---

1. <जक्षित्य्-आदयः षट्># । । PS_६,१.६ । ।

_______Sठाञ्ठ्JKव्_६,१.६ः

अभ्यस्तं इति वर्तते ।

जक्ष इत्ययं धातुः इत्यादयश्च अन्ये षट्धातवः अभ्यस्तसञ्ज्ञा भवन्ति ।
सेयं सप्तानां धातूनां अभ्यस्तसञ्ज्ञा विधीयते ।
जक्ष भक्षहसन्योः इत्यतः प्रभृति वेवीङ्वेतिना तुल्ये इति यावथ् ।
जक्षति ।
जाग्रति ।
दरिद्रति ।
चकासति ।
शासति ।
दीध्यते, वेव्यते इत्यत्र अभ्यस्तानां आदिः इत्येष स्वरः प्रयोजनं ।
दीध्यतिति च शतरि व्यत्ययेन सम्पादिते न अभ्यस्ताच्छतुः (*७,१.७८) इति नुमः प्रतिषेधः । ।

---

1. <तुजादीनां दीर्घोऽभ्यासस्य># । । PS_६,१.७ । ।

_______Sठान्ठ्JKव्_६,१.७ः

तुजादीनां इति प्रकारे आधिशब्दः ।
कश्च प्रकारः ? तुजेर्दीर्घोऽभ्यासस्य न विहितः, दृश्यते च ।
ये तथाभूताः ते तुजादयः, तेषां अभ्यासस्य दीर्घः साधुर्भवति ।
तूतुजानः ।
मामहानः ।
अनड्वान्दाधार ।
व्रतं मीमाय ।
दाधार ।
स तूताव दीर्घश्च+एषां छन्दसि प्रत्ययविशेषे एव दृश्यते, ततोऽन्यत्र न भवति ।
तुतोज शबलान्हरीन् । ।

---

1. <लिटि धातोरनभ्यासस्य># । । PS_६,१.८ । ।

_______Sठान्ठ्JKव्_६,१.८ः

लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्य+एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः ।
पपाच ।
पपाठ ।
प्रोर्णुनाव ।
वाच्य ऊर्णोर्णुवद्भावः इति वचनादूर्णोतेः इजादेः इति आं न भवति ।
लिटि इति किं ? कर्ता ।
हर्ता ।
धातोः इति किं ? ससृवांसो विशृण्विरे इम इन्द्राय सुन्विरे अनभ्यासस्य इति किं ? कृष्णो नोनाव वृषभो यदीदं नोनूयतेर्नोनाव ।

[#५९७]

समान्या मरुतः संमिमिक्षुः ।
लिटि उसन्तः ।
द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यं ।
यो जागार तमृचः कामयन्ते ।

दाति प्रियाणि इति।।

---

1. <सन्-यङोः>#।। PS_६,१.९।।

______Sठाऱ्ठ्JKव्_६,१.९ः

धातोरनभ्यासस्य इति वर्तते।
सन्यङोः इति च षष्ठ्यन्तं एतथ्।
सनन्तस्य यङन्तस्य च अनभ्यासस्य धातोरवयवस्य प्रथमस्य+एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः।
पिपक्षति।
पिपतिषति।
अरिरिषति।
उन्दिदिषति।
यङन्तस्य - पापच्यते।
अटाट्यते।
यायज्यते।
अरार्यते।
प्रोर्णोनूयते।
अनभ्यासस्य इत्येव जुगुप्सिषते।
लोलूयिषते।।

---

1. <श्लौ>#।। PS_६,१.१०।।

______Sठाऱ्ठ्JKव्_६,१.१०ः

श्लौ परतः अनभ्यासस्य धातोरवयवस्य प्रथमस्य+एकाचो द्वितियस्य वा यथायोगं द्वे भवतः।
जुहोति।
बिभेति।
जिह्नेति।।

---

1. <चङि>#।। PS_६,१.११।।

______Sठाऱ्ठ्JKव्_६,१.११ः

चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः।
अपीपचथ्।
अपीपठथ्।
आटिटथ्।
आशिशथ्।

आर्दिदथ् ।
पचादीनां ण्यनतानां चङि कृते णिलोपः, उपधाह्रस्वत्वं, द्विर्वचनं इत्येषां कार्याणां प्रवृत्तिक्रमः ।
तथा च सन्वल्लघुनि चङ्परे इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यते ।
यो ह्यनादिष्टादचः पूर्वः तस्य विधिं प्रति स्थानिवद्भावो भवति ।
न च अस्मिन्कार्याणां क्रमेणानिष्टादचः पूर्वोऽभ्यासो भवति इति ।
आटिटतिति द्विर्वचनेऽचि (*१,१.५९) इति स्थानिवद्भावात्द्वितीयस्य+एकाचः द्विर्वचनं भवति । ।

---

1. <दाश्वान्साह्वान्मीढ्वांश्च># । । PS_६,१.१२ । ।

_______Sठाञ्ठJKव्_६,१.१२ः

दाश्वान्साह्वान्मीढ्वानित्येते शदाः छन्दसि भाषायां च अविशेषेण निपायने ।
दाश्वानिति दाशृ दाने इत्येतस्य धातोः क्वसौ अद्विर्वचनं अनिट्त्वं च निपात्यते ।
दाश्वांसो दाशुषः सुतं इति ।

[#५९८]

साह्वानिति षह मर्षणे इत्येतस्य परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनं अनिट्त्वं च निपातनाथ् ।
साह्वान्बलाहकः ।
मीढ्वानिति मिह सेचने इत्येतस्य अद्विर्वचनम्, अनिट्त्वम्, उपधादीर्घत्वं ढत्वं च निपातनाथ् ।
मीढ्वस्तोकाय तनयाय मृल ।
एकवचनं अतन्त्रं ।
कृञादीनां के द्वे भवत इति वक्तव्यं ।
क्रियतेऽनेन इति चक्रं ।
चिक्लिदं ।
कृञः क्लिदेश्च घञर्थे कविधानं इति कः प्रत्ययः ।
चरिचलिपतिवदीनां द्वित्वमच्याक्च अभ्यासस्य ।
चरादीनां धातूनां अपि प्रत्यये परतः द्वे भवतः ।
अभ्यासस्य आगागमो भवति ।
आगागमविधानसामर्थ्याच्च हलादिशेषो न भवति ।
हलादिशेषे हि सयागमस्य आदेशस्य च विशेषो न अस्ति ।
चराचरः ।
चलाचल ।
पतापतः ।
वचावदः ।
वेति वक्तव्यं ।
तेन चरः पुरुषः, चलो रथः , पतं यानम्, वदो मनुष्यः इत्येवं आदि सिद्धं भवति ।
हन्तेर्घत्वं च ।
हन्तेरचि प्रत्यये परतो द्वे भवतः, अभ्यासस्य च हकारस्य च घत्वम्, आक्चागमो भवति ।
परस्य अभ्यासाच्च (*७,३.५५) इति कुत्वं घनाघनः क्षोभणश्चर्षणीनां ।
पाटेर्णिलुक्चोक्च दीर्घश्च अभ्यासस्य ।
पाटेरचि परतो द्वे भवतो णिलुक्च भवति ।
अभ्यासस्य च ऊगागमो दीर्घश्च भवति ।
पाटूपटः । ।

---

1. <ष्यङः सम्प्रसारणं पुत्र-पत्योस्तत्पुरुषे># । । PS_६,१.१३ । ।

______Sठान्ठ्JKव्_६,१.१३ः
पुत्र पति इत्येतस्योरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः संप्रसारणं भवति ।
यणः स्थाने इग्भवति इत्यर्थः ।
कारीषगन्धीपुत्रः ।
कारिषगन्धीपति ।
क्ॐउदगन्धीपुत्रः ।
क्ॐउदगन्धीपतिः ।
करीषस्य+इव गन्धोऽस्य, कुमुदस्य+इव गन्धोऽस्य इति बहुव्रीहिः, तत्र उपमानाच्च (*५,४.१३७) इति गन्धस्य+इदन्तादेशः ।
करीषगन्धेः अपत्यं इत्यण्, तदन्तात्स्त्रियां अण्-इञोरन्नर्षयोर्गुरूपत्तमयोः ष्यङ्गोत्रे (*४,१.७८) इति ष्यङ्, ततश्च अपि विहिते षष्ठीसमासः, सम्प्रसारणस्य (*६,३.१३९) इति दीर्घत्वं ।
ष्यङः इति इं ? भ्यापुत्रः ।
क्षत्रियापुत्रः ।
पुत्रपत्योः इति किं ? कारीषगन्ध्याकुलं ।
क्ॐउदगन्ध्याकुलं ।
तत्पुरुषे इति किं ? कारीषगन्ध्या पतिरस्य ग्रामस्य कारीषगन्ध्यापतिः अयं ग्रामः ।

[#५९९]

ष्यङः इति स्त्रीप्रत्ययग्रहणं न स्त्रीप्रत्यये चानुपसर्जने इति प्रत्ययग्रहणपरिभाषया यस्मात्स विहितः तदादेः इत्येष नियमो न अस्ति, तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, परमकारीषगन्धीपतिः इत्यपि भवति ।

[#५९८]

उपसर्जने तु ष्यङि न भवति ।
अतिक्रान्ता कारीषगन्ध्यां अतिकारीषगन्ध्या, तस्य पुत्रः अतिकारीषगन्ध्यापुत्रः ।
अतिकारीषगन्ध्यापति ।
पुत्रपत्योः केवलयोः उत्तरपदयोः इदं सम्प्रसारणं, तदादौ तदन्ते च न भवति, कारीषगन्ध्यापुत्रकुलम्, कारिषगन्ध्यापरमपुत्रः इति ।
ष्यङन्ते च यद्यप्यन्ये यणः सन्ति, तथापि ष्यङः एव सम्प्रसारणं, निर्दिश्यमानस्य आदेशा भवन्ति इति ।
सम्प्रसारणं इति चाधिक्रियते विभाषा परेः (*६,१.४४) इति यावत् । ।

---

[#५९९]

1. <बन्धुनि बहुव्रीहौ># । । PS_६,१.१४ । ।

______Sठान्ठ्JKव्_६,१.१४ः

स्यङः संप्रसारणं इति अनुवर्तते ।
बन्धुशब्दे उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणं भवति ।
कारीषगन्ध्या बन्धुः अस्य कारीषगन्धीबन्धुः ।
क्ॐउदगन्धीबन्धुः ।
बहुव्रीहौ इति किं ? कारीषगन्ध्यायाः बन्धुः कारीषगन्ध्याबन्धुः ।
अत्र अपि पूर्ववदेव ।
परमकारीषगन्धीबन्धुः इत्यत्र भवति ।
अतिकारीषगन्ध्याबन्धुः इति च न भवति, तथा कारीषगन्ध्याबन्धुधनः, कारीषगन्ध्यापरमबन्धुः इति ।
बन्धुनि इति नपुंसकालिङ्गनिर्देशः शब्दरूपापेक्षया, पुंलिङ्गाभिधेयस्तु अयं बन्धुशब्दः ।
मातच्मातृकमातृषु ।
ष्यङः सम्प्रसारणं भवति विभाषया बहुव्रीहावेव ।
कारीषगन्ध्या माता अस्य इत्येवं बहुव्रीहौ कृते एतस्मादेव उपसङ्ख्यानात्पक्षे मतृशब्दस्य मातजादेशः ।
तत्र चित्करनसमर्थ्याद्बहुव्रीहिस्वरं अन्तोदात्तत्वं बाधते ।

मातृमातृकशब्दयोश्च भेदेन+उपादानात्नद्यृतश्च (*५,४.१५३) इति कबपि विकल्प्यते ।
कारीषगन्धीमातः, कारीषगन्ध्यमातः, कारीषगन्धीमातृकः, कारिषगन्ध्यामातृकः, कारीषगन्धीमाता, कारीषगन्ध्यामाता । ।

---

1. <वचि-स्वपि-यजादीनां किति># । । PS_६,१.१५ । ।

_______Sठाऽ्ठ्JKव्_६,१.१५ः

सम्प्रसारणं इति वर्तते ।
ष्यङः इति निवृत्तं ।
वचि - वच परिभाषणे, ब्रुवो वचिः (*२,४.५३) इति च ।
स्वपि - ञिष्वप शये ।
यजादयः - यज देवपूजासंगतिकरनदानेसु इत्यतः प्रभृति आगणान्ताः ।
तेषां वचिस्वपि यजादीनां किति प्रत्यये परतः सम्प्रसारणं भवति ।

[#६००]

वचि - उक्तः ।
उक्तवा ।
स्वपि - सुप्तः ।
सुप्तवान् ।
यज - इष्टः ।
इष्टवान् ।
वप - उप्तः ।
उप्तवान् ।
वह-ऊढः ।
ऊढवान् ।
वस-उषितः ।
उषितवान् ।
वेञ्-उतः ।
उतवान् ।
व्येञ्- संवीतः ।
संवीतवान् ।
ह्वेञ्- आहूतवान् ।
वद - उदितः ।
उदितवान् ।
टुओश्वि - शूनः ।
शूनवान् ।
धातोः स्वरूपग्रहणे तत्प्रत्ययेकार्यं विज्ञायते ।
तेन+इह न भवति, वाच्यते, वाचिकः इति । ।

---

1. <ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च># । । PS_६,१.१६ । ।

_______Sठाऽ्ठ्JKव्_६,१.१६ः

ग्रह उपादाने, ज्या वयोहानौ, वेञो वयिः (*२,४.४१), व्यध ताडने, वश कान्तौ, व्यच्व्याजीकरणे, ओव्रश्चू छेदने, प्रच्छ ज्ञीप्सायाम्, भ्रस्ज पाके इत्येतेषां धातूनां ङीति

प्रत्यये परतः चकारात्कति च संप्रसारणं भवति ।
ग्रह - गृहीतः ।
गृहीतवान् ।
ङिति - गृह्णाति जरीगृह्यते ।
ज्या - जीनः ।
जीनवान् ।
ल्वादिभ्यः (*८,२.४४) इति निष्ठानत्वं ।
ङिति- जिनाति ।
जेजीयते ।
हलः (*६,४.२) इति सम्प्रसारणदीर्घे कृते प्वादीनां इति ह्रस्वः क्रियते ।
वयि - लिटि परतः वेञो वयिः आदेशः, तस्य ङिदभावात्किदेवोदाह्रियते ।
ऊयतुः ।
ऊयुः ।
यद्येवं वयिग्रहणं अनर्थकम्, यजादिषु वेञ्पठ्यते ? न+एवं शक्यं ।
लिटि तस्य वेञः (*६,१.४०) इति प्रतिषेधो वक्ष्यते, तत्र यथा+एव स्थानिवद्भावाद्व्येर्विधिः एवं प्रतिषेधोऽपि प्राप्नोति ? न+एष दोषः ।
लिटि वयो यः (*६,१.३८) इति यकारस्य संप्रसारणप्रतिषेधाद्वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहणमनुमास्यते ? सत्यं एतथ् ।
एष एव अर्थः साक्षान्निर्देशेन व्येः स्पष्टीक्रियते ।
व्यध - विद्धः ।
विद्धवान् ।
ङिति - विध्यति ।
वेविध्यते ।
वश - उशितः ।
उशितवान् ।
ङिति - उष्टः ।
उशन्ति ।
व्यच - विचितः ।
विचितवान् ।
ङिति - विचति ।
वेविच्यते ।
व्यचेः कुटादित्वमनसि प्रतिपादितम्, तेन सर्वत्र अञ्णिति प्रत्यये सम्प्रसारणं भवति, उद्विचिता, उद्विचितुम्, उद्विचितव्यं इति ।
व्रश्चेः - वृक्णः ।
वृक्णवान् ।
अथ कथं अत्र कुत्वं, व्रश्चभ्रस्ज इति हि षत्वेन भवितव्यं ? निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः ।

[#६०१]

तत्र ष्त्वं प्रति नत्वस्य सिद्धत्वाद्ज़लादिर्निष्ठा न भवति ।
कुत्वे तु कर्तव्ये तदसिद्धं एव इति प्रवर्तते कुत्वं ।
ङिति - वृश्चति ।
वरीवृश्च्यते ।
प्रच्छ - पृष्टः ।
पृष्टवन् ।
ङिति - पृच्छति ।
परीपृच्छयते ।
प्रश्नः ।
नङि तु प्रश्ने च आसन्नकाले (*३,२.११७) इति निपातनादसंप्रसारणं ।
भ्रस्ज - भृष्टः ।
भृष्टवान् ।
ङिति - भृज्जति ।
बरीभृज्यते ।
सकारस्य ज़लां जश्ज़शि (*७,४.५३) इति जश्त्वेन दकारः, स्तोः श्चुना श्चुः (*८,४.४०) इति श्चुत्वेन जकारः । ।

1. <लिट्यभ्यासस्य+उभयेषाम्># । । PS_६,१.१७ । ।

_______Sठाञ्ठ्JKव्_६,१.१७ः

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति ।
वचि - उवाच ।
उवचिथ ।
स्वपि - सुष्वाप ।
सुष्वपिथ ।
यज इयाज ।
इयजिथ ।
डुवप्- उवाप ।
उअवपिथ ।
ग्रह्यादीनां - तत्र ग्रहेरविशेषः ।
जग्राह ।
जग्रहिथ ।
ज्या - जिज्यौ ।
जिज्यिथ ।
वयि - उवाय ।
उवयिथ ।
व्यध - विव्याध ।
विव्यधिथ ।
वश - उवाश ।
उवशिथ ।
व्यच - विव्याच ।
विव्यचिथ ।
वृश्चतेः सत्यसति वा योगे न अस्ति विशेषः ।
योगारम्भे तु सति यदि सम्प्रसारणं अकृत्वा हलादिशेषेण रेफो निवर्त्यते, तदा वकारस्य सम्प्रसारणं प्राप्नोति ।
अथ रेफस्य सम्प्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानी - मुरदत्वस्य स्थानिवद्भावात्न सम्प्रसारणे सम्प्रसारणं (*६,१.३७) इति प्रतिषेधो भवति इत्यस्ति विशेषः ।
वव्रश्च ।
वव्रश्चिथ ।
पृच्छति भृज्जत्योरविशेषः ।
अकिदर्थं च+इदं अभ्यासस्य सम्प्रसारणं विधीयते ।
किति हि परत्वाद्धातोः सम्प्रसारणे कृते पुनः प्रसङ्गविज्ञानाद्द्विर्वचनम्, ऊचतुः, ऊचुः इति ।
अधिकारादेव+उभयेषां ग्रहणे सिद्धे पुनरुभयेषां इति वचनं हलादिः शेषं अपि बाधित्वा सम्प्रसारणं एव यथा स्यातिति ।
विव्याध । ।

---

1. <स्वापेश्चङि># । । PS_६,१.१८ । ।

_______Sठाञ्ठ्JKव्_६,१.१८ः

स्वापेः इति स्वपेर्ण्यन्तस्य ग्रहणं ।
तस्य चङि परतः संप्रसारणं भवति ।
असूषुपत्, असूषुपताम्, असूषुपन् ।
द्विर्वचनात्पूर्वं अत्र संप्रसारणम्, तत्र कृते लघूपधगुणः, तस्य णौ चङ्युपधायाः ह्रस्वत्वम्, ततो द्विर्वचनम्, दीर्घो लघोः (*७,४.९४) इति दीर्घत्वं ।
चङि इति किं ? स्वाप्यते ।
स्वापितः ।
किति इति निवृत्तं ।
ङिति इति केवलं इह अनुवर्तते इत्येतद्दुर्विज्ञानं । ।

---

[#६०२]

1. <स्वपि-स्यमि-व्येञां यङि># । । PS_६,१.१९ । ।

______SठाL्ठJKव्_६,१.१९ः

ञिष्वप शये, स्यमु, स्वन, ध्वन शब्दे, व्येञ्संवरणे इत्येतेषां धातूनां यङि परतः सम्प्रसारणं भवति ।
सोषुप्यते ।
सेसिम्यते ।
वेवीयते ।
यङि इति किं ? स्वप्नक् । ।

---

1. <न वशः># । । PS_६,१.२० । ।

______SठाL्ठJKव्_६,१.२०ः

यगि इति वर्तते ।
वशेर्धातोर्यङि परतः संप्रसारणं न भवति ।
वावश्यते, वावश्येते, वावश्यन्ते ।
यगि इति किं ? उष्टः ।
उशन्ति । ।

---

1. <चायः की># । । PS_६,१.२१ । ।

______SठाL्ठJKव्_६,१.२१ः

यगि इति वर्तते ।
चायृ पूजानिशामनयोः इत्येतस्य धातोः यगि परतः की इत्ययं आदेशो भवति ।
चेकीयते, चेकीयेते, चेकीयन्ते ।
दीर्घोच्चारणं यङ्लुगर्थं ।
चेकीतः । ।

---

1. <स्फायः स्फी निष्ठायाम्># । । PS_६,१.२२ । ।

_______Sठा~ठ्JKव्_६,१.२२ः

स्फायी ओप्यायी वृद्धौ इत्यस्य्धातोः निष्ठायां परतः स्फी इत्ययं आदेशो भवति ।
स्फीतः ।
स्फीतवान् ।
निष्थायां इति किं ? शातिः ।
स्फातीभवति इत्येतदपि क्तिन्नन्तस्य+एव रूपं, न निष्थान्तस्य ।
निष्ठायां इत्येतदधीक्रीयते लिङ्यङोश्च (*६,१.२९) इति प्रागेतस्मात्सूत्रात् । ।

---

1. <स्त्यः प्रपूर्वस्य># । । PS_६,१.२३ । ।

_______Sठा~ठ्JKव्_६,१.२३ः

निष्ठायां इति वर्तते, संप्रसारणं इति च ।
स्फी इत्येतन्न स्वर्यते ।
स्त्यै ष्ट्यै शब्दसंघातयोः ।
द्वयोरप्येतयोः धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणं ।
स्त्या इत्यस्य प्रपूर्वस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति ।
प्रस्तीतः ।
प्रस्तीतवान् ।
सम्प्रसारणे कृते यण्वत्त्वं विहतं इति ।
निष्ठानत्वं न भवति ।
प्रस्त्योऽन्यतरस्यां (*८,२.५४) इति तु पक्षे मकारः क्रियते ।
प्रस्तीमः प्रस्तीमवान् ।
प्रपूर्वस्य इति किं ? संस्त्यानः ।
संस्त्यानवान् ।
प्रस्त्यः इत्येव सिद्धे पूर्वग्रहणं इह अपि य्था स्यात्, प्रसंस्तीतः, प्रसंस्तीतवान् ।
तत्कथं प्रपूर्वस्य इति षष्ठ्यर्थे बहुव्रीहिः ? प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वः तदवयवस्य स्त्यः इति व्यधिकरणे षष्ठ्यौ ।
तत्र प्रसंस्तीतः इत्यत्र अपि प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति । ।

---

[#६०३]

1. <द्रवमूर्ति-स्पर्शयोः श्यः># । । PS_६,१.२४ । ।

_______Sठा~ठ्JKव्_६,१.२४ः

द्रवमूर्तौ द्रवकाठिन्ये, स्पर्शे वर्तमानस्य श्यैङ्गतौ इत्यस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति ।
शिनं घृतं ।
शीना वसा ।
शीनं मेदः ।
द्रवावस्थायाः काठिन्यं गतं इत्यर्थः ।
श्योऽस्पर्शे (*८,२.४७) इति निष्थानत्वं ।
स्पर्शे - शीतं वर्तते ।
शीतो वायुः ।

शीतमुदकं ।
गुणमात्रे तद्वति च अस्य शीतशब्दस्य वृत्तिर्द्रष्टव्या ।
द्रवमूर्तिस्पर्शयोः इति किं ? संश्यानो वृश्चिकः । ।

---

1. <प्रतेश्च># । । PS_६,१.२५ । ।

______Sठा~ठ्JKव्_६,१.२५ः

श्यः इति वर्तते ।
प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसरणं भवति ।
प्रतिशीनः ।
प्रतिशीनवान् ।
द्रवमूर्तिस्पर्शाभ्यां अन्यत्र अपि यथा स्यातिति सूत्रारम्भः । ।

---

1. <विभाषाऽभ्य्-अव-पूर्वस्य># । । PS_६,१.२६ । ।

______Sठा~ठ्JKव्_६,१.२६ः

श्यः इति वर्तते ।
अभि अव इत्येवं पूर्वस्य श्यायतेर्निष्थायां विभाषा सम्प्रसारणं भवति ।
अभिशीनं अभिश्यानं ।
अवशीनम्, अवश्यानं ।
द्रवमूर्तिस्पर्शविवक्षायां अपि विकल्पो भवति ।
अभिशीनं घृतम्, अभिश्यानं घृतं ।
अवशीनं मेदः, अवश्यानं मेदः ।
अभिशीतो वायुः, अभिश्यानः ।
अवशीतमुदकं , अवश्यानमुदकं ।
सेयमुभयत्रविभाषा द्रष्टव्या ।
पूर्वग्रहणस्य च प्रयोजनम्, सम्भिश्यानं, समवश्यानं इत्यत्र मा भूतिति केचिद्व्यचक्षते , नकिलायं अभ्यवपूर्वः समुदायः इति योऽत्र अभ्यवपूर्वः समुदायस्तदाश्रयो विक्लपः कस्मान्न भवति ? तस्मातत्र भवितव्यं एव ।
यदि तु न+इष्यते ततो यत्नानतरमास्थेयं अस्माद्विह्बाषाविज्ञानाथ् ।
व्यवस्थेयं ।
पूर्वग्रहणस्य च अन्यत्प्रयोजनं वक्तव्यं । ।

---

1. <शृतं पाके># । । PS_६,१.२७ । ।

______Sठा~ठ्JKव्_६,१.२७ः

विभाषा इत्यनुवर्तते ।
श्रा पाके इत्येतस्य धातोः ण्यन्तस्य अण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा ।

शृतं क्षीरं।
शृतं हविः।
व्यवस्थितविभाषा च+इयम्, तेन क्षीरहविषोर्नित्यं शृभावो भवति, अन्यत्र न भवति श्राणा यवागूः श्रपिता यवागूः इति।
यदा अपि बाह्ये प्रयोजके द्वितीयो णिचुत्पद्यते तदा अपि निष्यते, श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेन इति।
श्रातिरयं अकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्तते, स ण्यन्तः अपि प्राकृतं पच्यर्थमाहुः।
तदत्र द्वयोरपि शृतं इति इष्यते।
शृतं क्षीरं स्वयं एव।
शृतं क्षीरं देवदत्तेन।
पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव॥

---

[#६०४]

1. <प्यायः पी># ॥ PS_६,१.२८ ॥

______Sठाञ्ठ्JKव्_६,१.२८ः

विभाषा इत्येव।
ओप्यायी वृद्धौ इत्यस्य धातोः निष्ठायां विभाषा पी इत्ययं आदेशो भवति।
पीनं मुखं।
पीनौ बाहू।
पीनमुरः।
इयं अपि व्यवस्थितविभाषा+एव।
तेन अनुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु न+एस्व भवति।
आप्यानश्चन्द्रमाः।
आङ्पूर्वस्यान्धूधसोः भवत्येव, आपीनोऽन्धुः, आपीनमूधः इति॥

---

1. <लिड्-यङोश्च># ॥ PS_६,१.२९ ॥

______Sठाञ्ठ्JKव्_६,१.२९ः

विभाषा इति निवृत्तं।
प्यायः पी (*६,१.२८) इत्येतत्चशब्देन अनुकृष्यते।
लिटि यङि च परतः प्यायः पी इत्ययं आदेशो भवति।
आपिप्ये, आपिप्याते, आपिप्यिरे।
परत्वात्पीभावे कृते पुनः प्रसङ्गविज्ञानात्द्विर्वचनम्, एरनेकाचः इति यणादेशः।
यङि - आपेपीयते, आपेपीयेते, अपेपीयन्ते॥

---

1. <विभाषा श्वेः># ॥ PS_६,१.३० ॥

_______Sठा~ठ्JKव्_६,१.३०ः

लिड्य्ङोः इति वर्तते, सम्प्रसरणं इति च ।
लिटि यङि च श्वयतेर्धातोः विभाषा सम्प्रसारणं भवति ।
शुशाव, शिश्वाय ।
शुशुवतुः, शिश्वियतुः ।
यगि - शोशूयते, शेश्वीयते ।
तदत्र यङि सम्प्रसारणं अप्राप्तं विभाष विधीयते ।
लिटि तु किति यजादित्वान्नित्यं प्राप्तं, तत्र सर्वत्रविकल्पो भवति इत्येषा उभयत्रविभाषा ।
यदा च धातोर्न भवति तदा लिट्यभ्यासस्य+उभयेषां (*६,१.१७) इत्यभ्यासस्य अपि न भवति । ।

---

1. <णौ च संश्-चङोः># । । PS_६,१.३१ । ।

_______Sठा~ठ्JKव्_६,१.३१ः

विभाषा श्वेः (*६,१.३०) इति वर्तते ।
सन्परे चङ्परे च णौ परतः श्वयतेर्धातोः विभाषा सम्प्रसारणं भवति ।
शुशावयिषति ।
चङि - अशूशवत्, अशिश्वयथ् ।
सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवति इति वचनादन्तरङ्गं अपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते ।
कृते तु संप्रसारणे वृद्धिरावादेशश्च ।
ततः ओः पु-यण्-ज्य्-अपरे (*७,४.८०) इत्येतद्वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्य, इति स्थानिवद्भावात्शुशब्दो द्विरुच्यते । ।

---

1. <ह्वः संप्रसारणम्># । । PS_६,१.३२ । ।

_______Sठा~ठ्JKव्_६,१.३२ः

णौ च संश्चङोः (*६,१.३१) इति वर्तते ।
सन्परे चङ्परे च नौ परतो ह्वः संप्रसारणं भवति ।
जुहावयिषति, जुहावयिष्तः, जुहावयिषन्ति ।
अजूहवत्, अजूहवताम्, अजूहवन् ।
संप्रसारणस्य बलीयस्त्वात्शाच्छासाह्वाव्यावेपां युक्(*७,३.३७) इति प्रागेव युक्न भवति ।
सम्प्रसारणं इति वर्तमाने पुनः सम्प्रसारणं इत्युक्तं विभाषा इत्यस्य निवृत्त्यर्थं ।
ह्वः सम्प्रसारणं अभ्यस्तस्य इत्येकयोगेन सिद्धे पृथग्योगकरनं अनभ्यस्तनिमित्तप्रत्ययव्यवधाने सम्प्रसारणाभावज्ञापनार्थं ।
ह्वयकं इच्छति ह्वायकीयते ।
ह्वायकीयतेः सन्जिह्वायकीयिषति । ।

---

[#६०५]

1. <अभ्यस्तस्य च># । । PS_६,१.३३ । ।

_______Sठा~ठ्JKव्_६,१.३३ः

ह्वः इति वर्तते, तदभ्यस्तस्य इत्यनेन व्यधिकरणं ।
अभ्यस्तस्य यो ह्वयतिः ।
कश्च अभ्यस्तस्य ह्वयतिः ? कारणं ।
तेन अभ्यस्तकारणस्य ह्वयतिः प्रागेव द्विर्वचनात्सम्प्रसारणं भवति ।
जुहाव ।
जुहूयते ।
जुहूषति । ।

---

1. <बहुलं छन्दसि># । । PS_६,१.३४ । ।

_______Sठा~ठ्JKव्_६,१.३४ः

ह्वः इति वर्तते ।
छन्दसि विषये ह्वयतेर्धातोर्बहुलं संप्रसारणं भवति ।
इन्द्राग्नी हुवे ।
देवीं सरस्वतीं हुवे ।
ह्वेञो लटि आत्मनेपदोत्तमैकवचने बहुलं छन्दसि इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च ।
न च भवति ।
ह्वयामि मरुतः शिवान् ।
ह्वयामि देवां । ।

---

1. <चायः की># । । PS_६,१.३५ । ।

_______Sठा~ठ्JKव्_६,१.३५ः

बहुलं छन्दसि इति वर्तते ।
चायतेर्धातोः छन्दसि विषये बहुलं की इत्ययं आदेशो भवति ।
वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यं ।
लिटि उसि रूपं ।
न भवति ।
अग्नेर्ज्योतिर्निचाय्यः । ।

---

1. <अपस्पृधेथाम्-आनृचुर्-आनृहुश्-चिच्युषेतित्याज-श्राताः श्रितम्-आशीराशीर्ताः># । । PS_६,१.३६ । ।

______Sठान्ठ्JKव्_६,१.३६ः

छन्दसि इति वर्तते ।
अपस्पृधेथां इति स्पर्ध सङ्घर्षे इत्यस्य लङि आथामि द्विवर्चनं रेफस्य संप्रसारणं अकारलोपश्च निपातनाथ् ।
इन्द्रश्च विष्णो यदपस्पृधेथां ।
अपस्पर्धेथां इति भाषायां ।
अपर आह - स्पर्धेः अपपूर्वस्य लिङि आथामि सम्प्रसरणं अकारलोपश्च निपातनाथ् ।
बहुलं छन्दस्यमङ्योगेऽपि (*६,४.७५) इत्यडागमाभावः ।
अत्र प्रत्युदाहरणं अपास्पर्धेथां इति भषायां ।
आनृचुः, आनृहुः इति ।
अर्च पूजायाम्, अर्ह पूजायं इत्यनयोर्धात्वोलिट्युसि सम्प्रसारणं अकारलोपश्च निपातनाथ् ।
ततो द्विर्वचनम्, उरदत्वम्, अत आदेः (*७,४.७०) इति दीर्घत्वं ।
तस्मान्नुड्द्विहलः (*७,४.७१) इति नुडागमः ।
य उग्रा अर्कमानृचुः ।
न वसून्यानृहुः ।
आनर्चुः, आनर्हुः इति भाषायां ।

[#६०६]

चिच्युषे ।
च्युङ्गतौ इत्यस्य धातोः लिति सेशब्दे अभ्यासय सम्प्रसारणं अनिट्च निपातनाथ् ।
चिच्युषे ।
चुच्युविषे इति भाषायां ।
तित्याज ।
त्यज हानौ इत्यसय्धातोः लिटि अभ्यासस्य सम्प्रसारणं निपात्यते ।
तित्याज ।
तत्याज इति भाषायां ।
श्राताः इति ।
श्रीञ्पाके इत्येतस्य धातोः निष्ठायां श्राभावः ।
श्रातास्त इन्द्रसोमाः ।
श्रितं इति तस्य+एव श्रीणातेः ह्रस्वत्वं ।
सोमो गौरी अधिश्रितः ।
श्रिता नो गृहाः ।
अनयोः श्राभावश्रिभावयोर्विषयविभागं इच्छति, सोमेषु बहुषु श्राभाव एव, अन्यत्र श्रिभावः इति ।
सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते ।
यदि श्रातो जुहोतन ।
तस्य श्राताः इति बहुवचनस्य अविवक्षितत्वादुपसंग्रहो द्रष्टव्यः ।
आशीः, आशीर्तः इति ।
तस्य+एव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, निष्ठायाश्च नत्वाभावो निपातनाथ् ।
तामाशीरा दुहन्ति ।
आशीर्त ऊर्जं ।
क्षीरैर्मध्यत आशीर्तः । ।

---

1. <न सम्प्रसारणे सम्प्रसारणम्># । । PS_६,१.३७ । ।

______Sठान्ठ्JKव्_६,१.३७ः

सम्प्रसारने परतः पूर्वस्य यणः सम्प्रसारणं न भवति ।
व्यध - विद्धः ।

व्यच - विचितः ।
व्येञ्- संवीतः ।
एकयोगलक्षनं अपि सम्प्रसारणं अत एव वचनात्प्रथमं परस्य यणः क्रियते, पूर्वस्य च प्रसक्तं प्रतिषिध्यते ।
सम्प्रसारणं इति वर्तमाने पुनः सम्प्रसारनग्रहणं विदेशस्थस्य अपि सम्प्रसारणस्य प्रतिषेधो यथा स्यातिति ।
श्व-युव-मघोनां अतद्धिते (*६,४.१३३) - यूनः ।
यूना ।
सम्प्रसारणग्रहणसामर्थ्यातेव पूर्वस्य प्रतिषेधे वक्तव्ये स्वर्णदीर्घत्वं एकादेशो न स्थानिवद्भवति ।
सति वा स्थानिवत्त्वे व्यवधानमेतावदाश्रयिष्यते ।
ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ।
ऋचि परतः त्रेः सम्प्रसारणं भवति उत्तरपदादिलोपश्च छन्दसि विषये ।
तिस्र ऋचः यस्मिन्तत्तृचं सूक्तं ।
तृचं साम ।
ऋक्पूरब्धूःपथामानक्षे (*५,४.७४) इति समासान्तः ।
छन्दसि ति किं ? त्यृचं कर्म ।
रयेर्मतौ बहुलं ।
रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं सम्प्रसारणं भवति ।
आ रेवानेतु नो विशः ।
न च भवति ।
रयिमान्पुष्टिवर्धनः । ।

---

[#६०७]

1. <लिटि व्यो यः># । । PS_६,१.३८ । ।

______Sठा⁓ठ्JKव्_६,१.३८ः

न सम्प्रसारणं इति अनुवर्तते ।
लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति ।
उवाय, ऊयतुः, ऊयुः ।
लिड्ग्रहणं उत्तरार्थं । ।

---

1. <वश्च अस्य अन्यतरस्यां किति># । । PS_६,१.३९ । ।

______Sठा⁓ठ्JKव्_६,१.३९ः

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवति अन्यतरस्यां ।
ऊवतुः, ऊवुः ।
ऊयतुः, ऊयुः ।
किति इति किं ? उवाय ।
उवयिथ । ।

---

1. <वेञः># । । PS_६,१.४० । ।

______Sठाॅऴ्JKव्_६,१.४०ः

लिटि इत्यनुवर्तते ।
वेञ्तन्तुसन्ताने इत्यस्य धातोः लिति परतः सम्प्रसारणं न भवति ।
ववौ, ववतुः, ववुः ।
किति यजादित्वात्धातोः प्राप्तं अकित्यपि लिट्यभ्यासस्य+उभयेषां (*६,१.१७) इत्यभ्यासस्य, अतः उभयं प्रतिषिध्यते । ।

---

1. <ल्यपि च># । । PS_६,१.४१ । ।

______Sठाॅऴ्JKव्_६,१.४१ः

वेञः इत्यनुवर्तते ।
ल्यपि च पर्तो वेञः सम्प्रसारणं न भवति ।
प्रवाय ।
उपवाय ।
पृथग्योगकरणं उत्तरार्थं । ।

---

1. <ज्यश्च># । । PS_६,१.४२ । ।

______Sठाॅऴ्JKव्_६,१.४२ः

ल्यपि इत्येव ।
ज्या वयोहानौ इत्यस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति ।
प्रज्याय ।
उपज्याय । ।

---

1. <व्यश्च># । । PS_६,१.४३ । ।

______Sठाॅऴ्JKव्_६,१.४३ः

ल्यपि इत्येव ।
व्येञ्संवरणे इत्येतस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति ।
प्रव्याय ।
उपव्याय ।
योगविभागः उत्तरार्थः । ।

---

1. <विभाषा परेः># । । PS_६,१.४४ । ।

______Sठा~ठ्JKव्_६,१.४४ः

ल्यपि च व्यश्च इति अनुवर्तते ।
परेरुत्तरस्य व्येञित्येतस्य धातोः ल्यपि परतः विभाषा सम्प्रसारणं न भवति ।
परिवीय यूपम्, परिव्याय ।
सम्प्रसारणे कृते परपूर्वत्वे च ह्रस्वस्य इति तुक प्राप्नोति, स हलः (*६,४.२) इति दीर्घत्वेन परत्वाद्बाध्यते । ।

---

[#६०८]

1. <आदेच उपदेशेऽशिति># । । PS_६,१.४५ । ।

______Sठा~ठ्JKव्_६,१.४५ः

धातोः इति वर्तते ।
एजन्तो यो धातुरुपदेशे तस्य अकारादेशो भवति, शिति तु प्रत्यये न भवति ।
ग्लै - ग्लाता ।
ग्लातुं ।
ग्लातव्यं ।
शो - निशाता ।
निशातुं ।
निशातव्यं ।
एचः इति किं ? कर्ता ।
हर्ता ।
उपदेशे इति किं ? चेता ।
स्तोता ।
अशिति इति किं ? ग्लायति ।
म्लायति ।
कथं जग्ले, मम्ले ? न+एवं विज्ञायते, शकार इद्यस्य सोऽयं शितिति, किं तर्हि, श एव इत्शिथ् ।
तत्र यस्मिन्विधिस्तदादावल्ग्रहणे इति शिदादौ प्रत्यये प्रतिषेधः ।
एश्शकारान्तो भवति ।
अशिति इति प्रसज्यप्रतिषेधोऽयम्, तेन एतदात्त्वं अनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवति इति, सुग्लः, सुम्लः इति आतश्चोपसर्गे (*३,१.१३६) इति कप्रत्ययः, सुग्लानः, सुम्लानः इति आतो युच्(*३,३.१२८) इत्येवं आदि सिद्धं भवति इति ।
आकाराधिकारस्त्वयं नित्यं सम्यतेः (*६,१.५७) इति यावत् । ।

---

1. <न व्यो लिटि># । । PS_६,१.४६ । ।

______Sठाञ्ठ्JKव्_६,१.४६ः

व्येञित्येतस्य धातोः लिटि परत आकारादेशो न भवति ।
संविव्याय ।
सविव्ययिथ ।
लिट्यभ्यासस्य+उभयेषां (*६,१.१७) इति अभ्यासस्य सम्प्रसारणं ।
णलि अचो ञ्णिति (*७,२.११५) इति वृद्धिः । ।

---

1. <स्फुरति-स्फुलत्योर्घञि># । । PS_६,१.४७ । ।

______Sठाञ्ठ्JKव्_६,१.४७ः

अदेचः इति वर्तते ।
स्फुर स्फुल चलने इत्येतयोर्धात्वोः एचः स्थाने घञि परतः आकारादेशो भवति ।
विस्फारः ।
विस्फालः ।
विष्फारः ।
विष्फालः स्फुरतिस्फुलत्योर्निर्-नि-विभ्यः (*८,३.७६) इति वा षत्वं । ।

---

1. <क्री-इङ्-जीनां णौ># । । PS_६,१.४८ । ।

______Sठाञ्ठ्JKव्_६,१.४८ः

डुक्रीञ्द्रव्यविनिमये, इङध्ययने जि जये इत्येतेषां धातूनां एचः स्थाने णौ परतः आकारादेशो भवति ।
क्रापयति ।
अध्यापयति ।
जापयति । ।

---

[#६०९]

1. <सिध्यतेरपारलौकिके># । । PS_६,१.४९ । ।

______Sठाञ्ठ्JKव्_६,१.४९ः

णौ इत्यनुवर्तते ।
षिधु हिंसासम्राध्योः इत्यस्य धातोः अपारलौकिकेऽर्थे वर्तमानस्य एचः स्थाने णौ परतः आकारादेशो भवति ।
अन्नं साधयति ।

ग्रामं साधयति ।
अपारलौकिके इति किं ? तपस्तापसं सेधयति ।
स्वान्येवैनं कर्माणि सेधयन्ति ।
अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्तते ।
तापसः सिध्यति ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते ।
स च ज्ञानविशेषः उत्पन्नः परलोके जन्मान्तरे फलं अभ्युदयलक्षणं उपसंहरन्परलोकप्रयोजनो भवति ।
इह कस्मान्न भवति, अन्नं साधयति ब्राह्मनेभ्यो दास्यामि इति ? सिध्यते - रत्रार्थो निष्पत्तिः ।
तस्याः प्रयोजनं अन्नं ।
तस्य यद्दानं तत्पारलौकिकम्, न पुनः सिद्धिरेव इति न आत्वं पर्युदस्यते ।
सक्षात्परलोकप्रयोजने च सिध्यर्थे कृतवकाशं वचनं एवं विषयं न अवगाहते ।
सिध्यतेः इति श्यना निर्देशः, षिध गत्यां इत्यस्य भौवादिकस्य निवृत्त्यर्थः । ।

---

1. <मीनाति-मिनोति-दीङां ल्यपि च># । । PS_६,१.५० । ।

______Sठाञ्ठ्JKव्_६,१.५०ः

आदेच उपदेशे (*६,१.४५) इति वर्तते ।
मीञ्हिंसायाम्, डुमिञ्प्रक्षेपणे, दीङ्क्षये इत्येतेषं धातूनां ल्यपि विषये, चकारादेचश्च विषये उपदेशे एव प्राक्प्रत्ययोत्पत्तेः अलोऽन्यस्य स्थाने आकारादेशो भवति ।
प्रमाता ।
प्रमातव्यं ।
प्रमातुं ।
प्रमाय ।
निमाता ।
निमातव्यं ।
निमातुं ।
निमाय ।
उपदाता ।
उपदातव्यं ।
उपदातुं ।
उपदाय ।
उपदेशे एव आत्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति ।
आकारलक्षणश्च भवति, उपदायो वर्तते ।
ईषदुपदानं इति घञ्युचौ भवतः । ।

---

1. <विभाषा लीयतेः># । । PS_६,१.५१ । ।

______Sठाञ्ठ्JKव्_६,१.५१ः

ल्यपि इति वर्तते, आदेच उपदेशे इति च ।
लीङ्श्लेषणे इति दिवादिः ।
ली श्लेषणे इति क्र्यादिः ।
तयोः उभयोः अपि यका निर्देशः स्मर्यते ।
लीयतेर्धतोः ल्यपि च एचश्च विषये उपदेशे एव अलोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति ।
विलता ।
विलातुं ।

विलातव्यं ।
विलाय ।
विलेता ।
विलेतुं ।
विलेतव्यं ।
विलीय ।
निमिमीलियं खलचोः प्रतिषेधो वक्तव्यः ।
ईषत्प्रमयः ।
प्रमयो वर्तते ।
ईषन्निमयः ।
निमयो वर्तते ।
ईषद्विलयः ।
विलयो वर्तते ।
अत्र तु लियो व्यवस्थितविभाषाविज्ञानात्सिद्धं ।
एवं च प्रलम्भनशालीनीकरनयोश्च णौ नित्यमात्त्वं भवति, कस्त्वामुल्लापयते, श्येनो वर्तिकामुल्लापयते । ।

---

[#६१०]

1. <खिदेश्छन्दसि># । । PS_६,१.५२ । ।

______Sठाञ्ठ्JKव्_६,१.५२ः

विभाषा इति वर्तते ।
खिद दैन्ये इत्यस्य धातोः एचः स्थाने छन्दसि विषये विभाषा आकारः आदेशो भवति ।
चित्तं चिखाद ।
चित्तं चिखेद ।
छन्दसि इति किं ? चित्तं खेदयति । ।

---

1. <अपगुरो णमुलि># । । PS_६,१.५३ । ।

______Sठाञ्ठ्JKव्_६,१.५३ः

गुरी उद्यमने इत्यस्य धातोः अपपूरस्य णमुलि परतः एचः स्थाने विभाषा आकारः आदेशो भवति ।
अपगारमपगारं ।
अपगोरमपगोरं ।
आभीक्ष्ण्ये णमुल्च (*३,४.२२) इति णमुल् ।
अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्ते इत्यत्र द्वितीयायां च (*३,४.५६) इति णमुल् । ।

---

1. <चि-स्फुरोर्णौ># । । PS_६,१.५४ । ।

______Sठा্ঠ্JKव्_६,१.५४ः

चिन्स्फुर इत्येतयोः धात्वोः णौ परतः एचः स्थाने विभाष आकारादेशो भवति।
चापयति, चययति।
स्फारयति, स्फोरयति।।

---

1. <प्रजने वीयतेः># ।। PS_६,१.५५ ।।

______Sठा্ঠ্JKव्_६,१.५५ः

णौ इति वर्तते।
वी गतिप्रजनकान्त्यसनखादनेषु इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतः विभाषा आकारादेशो भवति।
पुरोवातो गः प्रवापयति, पुरोवातो गाः प्रवाययति।
गर्भं ग्राहयति इत्यर्थः।
प्रजनो हि जन्मन उपक्रमो गर्भग्रहणं।।

---

1. <बिभेतेर्हेतुभये># ।। PS_६,१.५६ ।।

______Sठा্ঠ্JKव्_६,१.५६ः

णौ इति वर्तते, विभाषा इति च।
हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः, ततो यद्भयम्, स यस्य भयस्य साक्षाद्हेतुः, तद्भयं हेतुभयं।
तत्र वर्तमानस्य ञिभी भये इत्यस्य धातोः णौ परतः विभाषा आकारादेशो भवति।
मुण्डो भापयते, मुण्डो भीषयते।
जटिलो भापयते, जटिलो भीषयते।
भीस्म्योर्हेतुभये (*१,३.३८) इत्यात्मनेपदं।
भियो हेतुभये षुक्(*७,३.४०)।
स च आत्त्वपक्षे न भवति।
लिभियोः ईकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुक्विधीयते।
हेतुभये इति किं? कुञ्चिकयैनं भाययति।
अत्र हि कुञ्चिकातो भयं करणात्, न हेतोर्देवदत्तात्।।

---

1. <नित्यं स्मयतेः># ।। PS_६,१.५७ ।।

______Sठা্ঠ্JKव्_६,१.५७ः

णौ इति वर्तते, हेतुभये इति च।

नित्यग्रहणाद्विभाषा इति निवृत्तं।
ष्मिङीषद्धसने इत्यस्य धातोः हेतुभयेऽर्थे णौ परतो नित्यमकारादेशो भवति।
मुण्डो विस्मापयते।
जटिलो विस्मापयते।
भये इति किं? कुञ्चिकया एनं विस्मापयति।
भयशब्देन हेत्वर्थसामान्या, इह स्मयतेरर्थोऽभिधीयते।
न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति।।

---

[#६११]

1. <सृजि-दृशोर्झल्यं अकिति>#।। PS_६,१.५८।।

______Sठाञ्ठJKव्_६,१.५८ः

सृज विसर्गे, दृशिर्प्रेक्षणे इत्येतयोः धात्वोः झलादावकिति प्रत्यये परतः अं आगमो भवति।
स्रष्टा।
स्रष्टुं।
स्रष्टव्यं।
द्रष्टा।
द्रष्टुं।
द्रष्टव्यं।
लघूपधगुणापवादोऽयं अमागमः।
अस्राक्षीथ्।
अद्राक्षीथ्।
सिचि वृद्धिः अमि कृते भवति, पूर्वं तु बाध्यते।
झलि इति किं? सर्जनं।
दर्शनं।
अकिति इति किं? सृष्टः।
दृष्टः।
धातोः स्वरूपग्रहणे तत्प्रतये कार्यविज्ञानादिह न भवति, रज्जुसृड्भ्याम्, देवदृग्भ्यां इति।।

---

1. <अनुदात्तस्य च र्दुपधस्य अन्यतर्स्याम्>#।। PS_६,१.५९।।

______Sठाञ्ठJKव्_६,१.५९ः

उपदेशे इति वर्तते, झल्यं अकिति इति च।
उपदेशेऽनुदात्तस्य धातोः ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्यां अमागमो भवति।
त्रप्ता, तर्पिता, तर्प्ता।
द्रप्ता, दर्पिता, दर्प्ता।
तृप प्रीणने, दृप हर्षमोचनयोः, इत्येतौ रधादी धतू, तयोः इडागमः रधादिभ्यश्च (*७,२.४५) इति विकल्प्यते।
अनुदात्तोपदेशः पुनरमर्थ एव।
अनुदात्तस्य इति किं? वर्ढा, वर्ढुम्, वर्ढव्यं।
वृहू उद्यमने इत्ययं उदात्तोपदेशः ऊदित्वाच्चास्येड्विकलोप्यते।
ऋदुपधस्य इति किं? भेत्ता।
छेत्ता।

ञलि इत्येव, तर्पणं ।
दर्पणं ।
अकिति इत्येव, तृप्तः ।
दृप्तः । ।

---

1. <शीर्षश्छन्दसि># । । PS_६,१.६० । ।

______Sठान्ठ्JKव्_६,१.६०ः

शीर्षनिति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयं आदेशः शिरःशब्दस्य ।
शोऽपि हि छन्दसि प्रयुज्यत एव ।
शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति ।
यत्ते शीर्ष्णो दौर्भाग्यं ।
छन्दसि इति किं ? शिरः । ।

---

1. <ये च तद्धिते># । । PS_६,१.६१ । ।

______Sठान्ठ्JKव्_६,१.६१ः

शीर्षनिति वर्तते ।
आदेशोऽयं इष्यते ।
स कथं ? तद्धिते इति हि परं निमित्तं उपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दं आक्षिपति ।
यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति ।
शिर्षण्यो हि मुख्यो भवति ।
शीर्षण्यः स्वरः ।
शिरसि भवः इति शरीर-अवयवाच्च (*४,३.५५) इति यत्, ये च अभाव-कर्मणोः (*६,४.१३८) इति प्रकृतिभावः ।
तद्धिते इति किं ? शिरः इच्छति शिरस्यति ।
वा केशेषु ।
शिरसः शीर्षन्नादेशो वक्तव्यः ।
शीषर्ण्याः केशाः, शिरस्याः केशाः । ।

---

[#६१२]

1. <अचि शीर्षः># । । PS_६,१.६२ । ।

______Sठान्ठ्JKव्_६,१.६२ः

श्जादौ तद्धिते शिरसः शीर्षशब्दः आदेशो भवति ।
हस्तिशिरसः अपत्यं हास्तिशीर्षिः ।
बाह्वादिभ्यश्च (*४,१.९६) इति इञ् ।
स्थूलशिरसः इदं स्थौ लशीर्षं ।

शीर्षन्भावे हि अन्(*६,४.१६७) इति प्रकृतिभावः स्याथ् ।
हास्तिशीर्षिशब्दात्स्त्रियां इञोऽण्-इञोरनार्षयोः ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात्शीर्षन्नादेशः प्राप्नोति ।
तत्र प्रकृतिभावे सति हास्तिशीर्षण्या इत्यनिष्टं रूपं स्याथ् ।
इष्यते तु हास्तिशीर्ष्या इति ।
तत्कथं ? कर्तव्योऽत्र यत्नः ।
अणिञन्तादवा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र यस्य+इति लोपस्य स्थानिवद्भावाद्व्यवधानं । ।

---

1. <पद्-दन्-नो-मास्-हृन्-निश्-असन्-यूषन्-दोषन्-यकञ्-छकन्न्-उदन्न्-आसञ्छस्प्रभृतिषु># । । PS_६,१.६३ । ।

______Sठाञ्ठJKव्_६,१.६३ः

पाद दन्त नासिका मास हृदय निशा असृज्यूष दोष यकृत्शकृतुदक आसन इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद्दत्नस्माशृद्निशसन्यूषन्दोषन्यकन्शकनुदनासनित्येते आदेशाः यथासङ्ख्यं भवन्ति ।
पद्- निपदश्चतुरो जहि ।
पदा वर्तय गोदुहं ।
पादः पत्(*६,४.१३०) ।
दत्- या दतो धावते तस्यै श्यावदन् ।
नस्- सूकरस्त्वा खनन्नसा ।
मास्- मासि त्वा पश्यामि चक्षुषा ।
हृद्- हृदा पूतं मनसा जातवेदो ।
निश्- अमावास्यायां निशि यजेथ् ।
असन्- असिक्तोऽस्नाऽवरोहति ।
यूषन्- या पात्राणि यूष्ण आसेचनानि ।
दोषन्- यत्ते दोष्णो दौर्भाग्यं ।
यकन्- यक्नोऽवद्यति ।
शकन्- शक्नोऽवद्यति ।
उदन्- उद्नो दिव्यस्य नो देहि ।
आसन्- आसनि किं लभे मधूनि ।
शस्प्रभृतिषु इति किं ? पादौ ते प्रतिपीड्यौ ।
नासिके ते कृशे ।
केचिदत्र छन्दसि इत्यनुवर्तयन्ति ।
अपरे पुनरविशेषेण+इच्छन्ति ।
तथा हि भाषायां अपि पदादयः शब्दाः प्रयुज्यन्ते ।
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो न+उपसर्पन्ति वैनतेयामवोरगाः । ।
इत्येवं आदयः ।
अन्यतरस्यां इत्येतदनुवर्तयन्ति ।
तेन पादादयोऽपि प्रयुज्यन्ते ।
शस्प्रभृतिषु इति प्रकारार्थे प्रभृतिशब्द इति शला दोषणी इत्यत्र अपि दोषन्नादेशो भवति ।
पदादिषु मांस्पृत्स्नूनां उपसङ्ख्यानं ।
मांस पृतना सानु इत्येतेषां स्थाने यथासङ्ख्यं मांस्पृत्स्नु इत्येते आदेशाः भवन्ति ।
मांस्पचन्या उखायाः ।
मांसपचन्या इति प्राप्ते ।
पृत्सु मर्त्यं ।
पृतनासु मर्त्यं इति प्राप्ते ।
न ते दिवो न पृथिव्या अधिस्नुषु ।
अधिसानुषु इति प्राप्ते ।

[#६१३]

नस्नासिकाया यत्तस्क्षुद्रेषु ।

नासिकाया नस्भावो वक्तव्यः यत्तस्क्षुद्र इत्येतेषु परतः।
नस्यं।
नस्तः।
नःक्षुः।
यति वर्णनगरयोर्न+इति वक्तव्यं।
नासिक्यो वर्णः।
नासिक्यं नगरं।।

---

1. <धात्वादेः षः सः>#।। PS_६,१.६४।।

______Sठाञ्ठ्JKव्_६,१.६४ः

धातोरादेः षकारस्य स्थाने सकारादेशो भवति।
षह - सहते।
षिच - सिञ्चति।
धातुग्रहणं किं? सोडश।
षोडन्।
षण्डः।
षडिकः।
आदेः इति किं? कषति।
लषति।
कृषति।
आदेश प्रत्यययोः (*८,३.५९) इत्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः।
के पुनस्ते? ये तथा पठ्यन्ते।
अथवा लक्षणं क्रियते, अज्दन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च, सृपिसृजिस्तृस्त्यासेक्षृवर्जं।
सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः।
षोडीयति।
षण्डीयति।
ष्ठीवति।
ष्वष्कते।
ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारश्च+इष्यते।
तेन तेष्ठीव्यते, टेष्ठीव्यते इति च अभ्यासरूपं द्विधा भवति।।

---

1. <णो नः>#।। PS_६,१.६५।।

______Sठाञ्ठ्JKव्_६,१.६५ः

धातोरादेः इत्यनुवर्तते।
धातोरादेर्णकारस्य नकार आदेशो भवति।
णीञ्- नयति।
णम - नमति।
णह - नह्यति।
धात्वादेः इत्येव, अणति।
सुब्धातोरयं अपि नेष्यते, णकारं इच्छति णकारीयति।
उपसर्गादसमासेऽपि णोपदेशस्य (*८,४.१४) इत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो धात्वः केचिदुपदिष्यन्ते।

के पुनस्ते ? ये तथा पठ्यन्ते ।
अथवा लक्षणं क्रियते, सर्वे णादयो णोपदेशाः, नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृवर्जं । ।

---

1. <लोपो व्योर्वलि># । । PS_६,१.६६ । ।

______Sठाञ्ठ्JKव्_६,१.६६ः

धतोः इति प्रकृतं यत्तद्धात्वादेः इति पुनर्धातुग्रहणान्निवृत्तं ।
तेन धातोरधातोश्च वकारयकारयोः वलि परतो लोपो भवति ।
दिव्- दिदिवान्, दिदिवांसौ, दिदिवांसः ।
ऊयी - ऊतं ।
क्नूयी - क्नूतं ।
गोधाया ढ्रक्(*४,१.१२९) ।
घौधेरः ।
पचेरन् ।
यजेरन् ।
वकारस्य - जीवेरदानुक्, जीरदानुः ।
स्रिवेः - आस्रेमाणं ।
उणादयो बहुलं (*३,३.१) इति बहुलवचनाच्च्चः-वोः श्-ऊड्-अनुनासिके च (*६,४.१९) इति ऊटः न भवति ।
बलि इति किं ? ऊय्यते ।
क्नूय्यते ।
ऊर्वं लोपग्रहणं किं ? वेरपृक्तलोपात्पूर्वं वलि लोपो यथा स्याथ् ।
कण्डूयतेः क्विप्-कण्डूः ।
लोलूयतेः - लोलूः ।
व्रश्चादीनां उपदेशसामर्थ्यात्वलि लोपो न भवति ।
वृश्चति ।
ववृश्च इत्यत्र अपि हि सम्प्रसारणहलादिःशेषयोर्बहिरङ्गत्वात्प्राप्नोति । ।

---

[#६१४]

1. <वेरपृक्तस्य># । । PS_६,१.६७ । ।

______Sठाञ्ठ्JKव्_६,१.६७ः

लोपः इति वर्तते ।
वेः इति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते ।
वेरपृक्तस्य लोपो भवति ।
ब्रह्मभ्रूणवृत्रेषु क्विप्(*६,२.८७) ।
ब्रह्महा ।
मूणहा ।
स्पृशोऽनुदके क्विन्(*६,२.५८) ।
घृतस्पृक् ।
तैलस्पृक् ।
भजो ण्विः (*३,२.६२) ।
अर्धभाक् ।

पादभाक् ।
तुरीयभाक् ।
अपृक्तस्य इति किं ? वृदृभ्यां क्विन्दर्विः ।
कृगृशृसृजागृभ्यः क्वि ।
जागृविः । ।

---

1. <हल्-ङ्य्-आब्भ्यो दीर्घात्सु-ति-स्य्-अपृक्तं हल्># । । PS_६,१.६८ । ।

______Sठा-ठ्JKव्_६,१.६८ः

लोप इति वर्तते ।
तदिह लौकिकेन अर्थवत्कर्मसाधनं द्रष्टव्यं ।
लुप्यते इति लोपः ।
हलन्ताद्, ङ्यन्तादाबन्ताच्च दीर्घात्परं सु ति सि इत्येतदपृक्तं हल्लुप्यते ।
हलन्तात्सुलोपः - राजा ।
तक्षा ।
उखास्रथ् ।
पर्णध्वथ् ।
ङ्यन्तात्- कुमारी ।
गौरी ।
शार्ङ्गरवी ।
आबन्तात्- खट्वा ।
बहुराजा ।
कारीषगन्ध्या ।
हलन्तादेव तिलोपः सिलोपश्च ।
तत्र तिलोपस्तावत्- अबिभर्भवाथ् ।
भृञो लङि तिपि श्लौ भृञामितित्यभ्यासस्य इत्त्वं ।
अजागर्भबान् ।
सिलोपः-अभिनोऽत्र अच्छिनोऽत्र ।
दस्य रेफः ।
हल्ङ्याब्भ्यः इति किं ? ग्रामणीः ।
सेननीः ।
दीर्घातिति किं ? निष्कौशाम्बिः ।
अतिखट्वः ।
सुतिसि इति किं ? अभैत्सीथ् ।
तिपा सहचरितस्य सिशब्दस्य ग्रहणात्सिचो ग्रहणं न अस्ति ।
अपृक्तं इति किं ? भिनत्ति ।
छिनत्ति ।
हलि इति किं ? बिभेद ।
चिच्छेद ।
अथ किमर्थं हलन्तात्सुतिसिनां लोपो विधीयते, संयोगान्तलोपेन+एव सिद्धं ? न सिध्यति ।
राजा, तक्षा इत्यत्र संयोगान्तलोपस्य असिद्धत्वान्नलोपो न स्याथ् ।
उखास्रत्, पर्णध्वतित्यत्र अपदन्तत्वाद्दत्वं च न स्याथ् ।
अभिनोऽत्र इत्यत्र अतो रोरप्लुतादप्लुते (*६,१.११३) इत्युत्वं न स्याथ् ।
अबिभर्भवानित्यत्र तु रात्सस्य (*८,३.२४) इति नियमाल्लोप एव न स्याथ् ।
संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु ते न+एव लोपः स्याद्धलस्तस्माद्विधीयते । ।

---

1. <एङ्ह्रस्वात्सम्बुद्धेः># । । PS_६,१.६९ । ।

______Sठान्ठ्JKव्_६,१.६९ः

लोपः इति वर्तते, हलिति च ।
अपृक्तं इति न अधिक्रियते, तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतं ।
एङन्तात्प्रातिपदिकात्ह्रस्वन्ताच्च परो हल्लुप्यते स चेत्सम्बुद्धेर्भवति ।
एङन्तात्- हे अग्ने ।
हे वायो ।
ह्रस्वान्तात्- हे देवदत्त ।
हे नदि ।
हे वधु ।
हे कुण्ड ।
कुण्डशब्दातततोऽ (*७,१.२४) इति अं ।
अमि पूर्वः (*६,१.१०७) इति पूर्वत्वे क्रते लहमात्रस्य मकारस्य लोपः ।
हे कतरतित्यत्र डिदयं अद्डादेशः, तत्र टिलोपे सति ह्रस्वाभावान्न अस्ति सम्बुद्धिलोपः ।
एङ्ग्रहणं क्रियते सम्बुद्धिगुणबलीयस्त्वात् । ।

---

[#६१५]

1. <शेः छन्दसि बहुलम्># । । PS_६,१.७० । ।

______Sठान्ठ्JKव्_६,१.७०ः

शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति ।
या क्षेत्रा ।
या वना ।
यानि क्षेत्राणि ।
यानि वनानि । ।

---

1. <ह्रस्वस्य पिति कृति तुक्># । । PS_६,१.७१ । ।

______Sठान्ठ्JKव्_६,१.७१ः

पिति कृति परतो ह्रस्वान्तस्य धातोः तुगागमो भवति ।
अग्निचित् ।
सोमसुत् ।
प्रकृत्य ।
प्रहृत्य ।
उपस्तुत्य ।

ह्रस्वस्य इति किं ? आलूय ।
ग्रामणीः ।
पिति इति किं ? कृतं ।
हृतं ।
कृति इति किं ? पटुतरः ।
पटुतमः ।
ग्रामणि ब्राह्मणकुलं इत्यत्र ह्रस्वस्य बहिरङ्गस्य असिद्धत्वात्तुग्न भवति । ।

---

1. <संहितायाम्># । । PS_६,१.७२ । ।

______Sठाञ्ठ्JKव्_६,१.७२ः

अधिकारोऽयं अनुदात्तं पदं एकवर्जं (*६,१.१५८) इति यावथ् ।
प्रागेतस्मत्सूत्रादित उत्तरं यद्वक्ष्यामः संहितायां इत्येवं तद्वेदितव्यं ।
वक्ष्यति - इको यणचि (*६,१.७७), दध्यत्र ।
मध्वत्र ।
संहितायां इति किं ? दधि अत्र ।
मधु अत्र । ।

---

1. <छे च># । । PS_६,१.७३ । ।

______Sठाञ्ठ्JKव्_६,१.७३ः

ह्रस्वस्य तुकिति वर्तते ।
छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति ।
इच्छति ।
यच्छति ।
ह्रस्व एव अत्र आगमी, न तु तदन्तः ।
तेन चिच्छदतुः, चिच्छिदुः इत्यत्र तुकभ्यासस्य ग्रहणेन न गृह्यते इति हलदिःशेषेण न निवर्त्यते, नावयवावयवः समुदायावयवो भवति इति । ।

---

1. <आङ्-माङोश्च># । । PS_६,१.७४ । ।

______Sठाञ्ठ्JKव्_६,१.७४ः

तुकिति अनुवर्तते, छे इति च ।
आङो ङित ईषदादिषु चतुर्ष्वर्थेषु वर्तमानस्य, माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति ।
पदान्ताद्वा (*६,१.७६) इति विकल्पे प्राप्ते नित्यं तुगागमो भवति ।
ईषदर्थे - ईषच्छाया आच्छाया ।
क्रियायोगे - आच्छादयति ।

मर्यादाभिविध्योः - आ च्छायायाः आच्चायं ।
माङः खल्वपि - मा च्छैत्सीथ् ।
मा च्छिदथ् ।
ङिद्विशिष्टग्रहणं किं ? आछाया, आच्छाया ।
प्रमाछन्दः, प्रमाच्छन्दः । ।

---

[#६१६]

1. <दीर्घात्># । । PS_६,१.७५ । ।

______Sठाञ्ठ्JKव्_६,१.७५ः

छे तुकिति वर्तते ।
दीर्घात्परो यः छकारः तस्मिन्पूर्वस्य तस्य+एव दीर्घस्य तुगागमो भवति ।
ह्रीच्छति ।
म्लेच्छति ।
अपचाच्छायते ।
विचाच्छायते । ।

---

1. <पदान्ताद्वा># । । PS_६,१.७६ । ।

______Sठाञ्ठ्JKव्_६,१.७६ः

दीर्घात्छे तुकिति वर्तते ।
पदान्ताद्दीर्घात्परो यः छकारः तस्मिन्पूर्वस्य तस्य+एव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति ।
कुटीच्छाया, कुटीछाया ।
कुवलीच्छाया, कुवलीछाया ।
विश्वजनादीनां छदसि वा तुगागमो भवति इति वक्तव्यं ।
विश्वजनच्छत्रम्, विश्वजनछत्रं ।
नच्छायां करवोऽपरं ।
न छायां करवोऽपरं । ।

---

1. <इको यणचि># । । PS_६,१.७७ । ।

______Sठाञ्ठ्JKव्_६,१.७७ः

अचि परतः इको यणादेशो भवति ।
दध्यत्र ।
मध्वत्र ।

कर्त्रर्थं ।
लाकृतिः ।
इकः प्लुतपूर्वस्य सवर्नदीर्घबाधनार्थं यणादेशो वक्तव्यः ।
भो३इ इन्द्रं ।
भो३यिन्द्रं ।
अचि इति च अयं अधिकारः संप्रसारणाच्च (*६,१.१०८) इति यावत् । ।

---

1. <एचोऽय्-अव्-आय्-आवः># । । PS_६,१.७८ । ।

______Sठा-ठ्JKव्_६,१.७८ः

एचः स्थाने अचि परतः अयवायावित्येते आदेशाः यथासङ्ख्यं भवन्ति ।
चयनं ।
लवनं ।
चायकः ।
लावकः ।
कयेते ।
ययेते ।
वायाववरुणद्धि । ।

---

1. <वान्तो यि प्रत्यये># । । PS_६,१.७९ । ।

______Sठा-ठ्JKव्_६,१.७९ः

योऽयं एचः स्याने वन्तादेशः ओकारस्य अव्, औकारस्य आव्, स यकारादौ प्रत्यये परतो भवति ।
बाभ्रव्यः ।
माण्डव्यः ।
शङ्कव्यं दारु ।
पिचव्यः कार्पासः ।
नाव्यो ह्रदः ।
वान्तः इति किं ? रायं इच्छति रैयति ।
यि इति किं ? योभ्यां ।
नौभ्यां ।
प्रत्यये इति किं ? गोयानं ।
नौयानं ।

[#६१७]

गोर्यूतौ छन्दसि ।
गोशब्दस्य यूतौ परतः छन्दसि विसये वान्तादेशो वक्तव्यः ।
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं ।
छन्दसि इति किं ? गोयूतिः ।
अध्वपरिमाणे च ।
गोर्यूतौ परतो वान्तादेशो वक्तव्यः ।
गव्यूतिमात्रं अध्वानं गतः । ।

---

1. <धातोस्तन्निमित्तस्य+एव># । । PS_६,१.८० । ।

______Sठान्ठ्JKव्_६,१.८०ः

एचः इति वर्तते, वान्तो यि प्रत्यये इति च ।
धातोर्य एच्तन्निमित्तो यकारादिप्रत्ययनिमित्तः, तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति ।
लव्यं ।
पव्यं ।
अवश्यलाव्यं ।
अवश्यपाव्यं ।
धातोः इति किं ? प्रातिपदिकस्य नियमो म भूथ् ।
तत्र को दोषः ? बाभ्रव्यः इत्यत्रा+एव स्यात्, इह न स्यात्गव्यम्, नाव्यं इति ।
तन्निमित्तस्य इति किं ? अतन्निमित्तस्य मा भूथ् ।
उपोयते ।
औयत ।
लौयमानिः ।
पौयमानिः ।
अत इञ्(*४,१.९५) ।
एवकारकरणं किं ? धात्ववधारणं यथा स्यात्, तन्निमित्तावधारणं मा भूतिति तानिमित्तस्य हि धातोश्च अधातोश्च भवति ।
बाभ्रव्यः ।
अवश्यलाव्यं ।
लवं । ।

---

1. <क्षय्य-जय्यौ शक्यार्थे># । । PS_६,१.८१ । ।

______Sठान्ठ्JKव्_६,१.८१ः

क्षि जि इत्येतयोर्धात्वोः यति रत्यये परतः शक्यार्थे गम्यमाने एकारस्य अयादेशो निपात्यते ।
शक्यः क्षेतुं क्षय्यः ।
शक्यो जेतुं जय्यः ।
शक्यार्थे इति किं ? क्षेयं पापं ।
जेयो वृषलः । ।

---

1. <क्रय्यस्तदर्थे># । । PS_६,१.८२ । ।

______Sठान्ठ्JKव्_६,१.८२ः

क्रीणातेः धातोः तदर्थे क्रयार्थें यत्तस्मिन्नभिधेये यति प्रत्यये परतः अयादेशो निपात्यते ।
क्रय्यो गौः ।
क्रय्यः कम्बलः ।

क्रयार्थं यः प्रसारितः स उच्यते ।
तदर्थे इति किं ? क्रेयं नो धान्यं, न च अस्ति क्रय्यं । ।

---

1. <भय्यप्रवय्ये च च्छन्दसि># । । PS_६,१.८३ । ।

______Sठाञ्ठ्JKव्_६,१.८३ः

बिभेतेर्धातोः रपुर्वस्य च वी इत्येतस्य्यति प्रत्यये परतः छन्दसि विषये अयादेशः निपात्यते ।
भय्यं किलासीथ् ।
वत्सतरी प्रवय्या ।
भय्येति कृत्यल्युटो बहुलं (*३,३.११३) इत्यपदाने यत्प्रत्ययः ।
बिभेत्यस्मादिति भय्यं ।
प्रव्य्या इति स्त्रियां एव निपातनं ।
अन्यत्र प्रवेयं इत्येव भवति ।
छन्दसि इति किं ? भेयं प्रवेयं ।
ह्रदय्या आप उपसङ्ख्यानं ।
ह्रदय्या आपः ।
ह्रदे भवा, भवे छन्दसि (*४,४.११०) इति यत्प्रत्ययः । ।

---

[#६१८]

1. <एकः पूर्वपरयोः># । । PS_६,१.८४ । ।

______Sठाञ्ठ्JKव्_६,१.८४ः

अधिकारोऽयं ।
ख्यत्यात्परस्य (*६,१.११२) इति प्रागेतस्मात्सूत्रातिति उत्तरं यद्वक्ष्यामस्तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवति इत्येतद्वेदितव्यं ।
वक्ष्यति आद्गुणः (*६,१.८७) इति ।
तत्र अचि पूर्वस्य अवर्णात्च परस्य स्थाने एको गुणो भवति ।
खट्वेन्द्रः मालेन्द्रः ।
पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्, एकस्य+एव हि स्यात्, नोभे सप्तमीपञ्चम्यौ युगपत्प्रकल्पिके भवतः इति ।
एकग्रहणं पृथगादेशनिवृत्त्यर्थं, स्थानिभेदाद्धि भिन्नादिषु नत्ववद्द्वावादेशौ स्यातां । ।

---

1. <अन्तादिवच्च># । । PS_६,१.८५ । ।

______Sठाञ्ठ्JKव्_६,१.८५ः

एकः इति वर्तते, पूर्वपरयोः इति च ।
एकः पूर्वपरयोः (*६,१.८४) इति योऽयं एकादेशो विधीयते स पूर्वस्य अन्तवद्भवति, परस्यादिवद्भवति ।
यथा तस्यान्तः आदिर्वा तदन्तर्भूतः तद्ग्रहणेन गृहयते, तद्वदेकादेशोऽपि तद्ग्रहणेन ग्रह्यते इत्येषोऽतिदेशार्थः ।

ब्रह्मबन्धूः इत्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङिति अप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर्यः एकादेशः स प्रातिपदिकस्य अन्तवद्भवति, यथा शक्यते कर्तुं ङ्याप्प्रातिपदिकात्(*४,१.१) इति स्वादिविधिः ।
वृक्षौ इत्यत्र सुबौकारः असुबकारः, तयोः सुबसुपोरेकादेशः सुपः आदिवद्भवति, यथा शक्यते वक्तुं सुबन्तं पदं इति ।
वर्णाश्रयविधौ अयं अनतादिवद्भावो निस्यते ।
तथा हि खट्वाभिः इत्यत्र अन्तवद्भावाभावाततो भिस ऐस्(*७,१.९) इति न भवति ।
ह्वयतेः जुहाव इति सम्प्रसारणपूर्वत्वस्य आदिवद्भावाहावातात औ णलः (*७,१.३४) इति न भर्वात ।
अस्यै अश्वः, अस्या अश्वः इति वृद्धिरेचि (*६,१.८८) इति वृद्धिः, एङः पदान्तादति (*६,१.१०९) इत्यत्र विधौ आदिवन्न भवति ।
पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्तयते ।
तत्र अवयवयोरानुमानिकं स्थानित्वं इति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तं इत्यन्तादिवद्भावो विधीयते । ।

---

1. <षत्व-तुकोरसिद्धः># । । PS_६,१.८६ । ।

_______Sठाञ्ठ्JKव्_६,१.८६ः

षत्वे तुकि च कर्तव्ये एकदेशोऽसिद्धो भवति, सिद्धकार्यं न करोति इत्यर्थः ।
असिद्धवचनं आदेशलक्षणप्रतिषेधर्थम्, उत्सर्गलक्षणभावार्थं च ।
कोऽसिचतित्यत्र एङः पदान्तादति (*६,१.१०९) इति एकादेशस्य परं प्रत्यादिवद्भावातपदादेरिण उत्तरस्य आदेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति ।
कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै इत्येकादेशस्य असिद्धत्वातिणः इति षत्वं न भवति ।
तुग्विधौ - अधीत्य, प्रेत इत्यत्र+एकादेशस्य असिद्धत्वात्ह्रस्वस्य पिति कृति तुक्(*६,१.७१) इति तुग्भवति ।
सम्प्रसारनङीट्सु प्रतिषेधो वक्तव्यः ।

[#६१९]

सम्प्रसारणे - ब्रह्महूषु ।
सम्प्रसारणपूर्वत्वस्य असिद्धत्वात्षत्वं न प्राप्नोति ।
ङौ - वृक्षे च्छत्रम्, वृक्षे छत्रं ।
इटि - अपचे च्छत्रम्, अपचे छत्रं ।
आद्गुणस्य असिद्धत्वाद्ह्रस्वलक्षणो नित्योऽत्र तुक्प्राप्नोति, दीर्घात्, पदान्ताद्वा (*६,१.७६) इति तुग्निकल्प इष्यते । ।

---

1. <आद्गुणः># । । PS_६,१.८७ । ।

_______Sठाञ्ठ्JKव्_६,१.८७ः

अचि इत्यनुवर्तते ।
अवर्नात्परो योऽच्च पूर्वो योऽवर्णः तयोः पूर्वपरयोः अवर्णाचोः स्थाने एको गुण आदेशो भवति ।
तवेदं ।
खट्वेन्द्रः ।
मालेन्द्रः ।
तवेहते ।
खट्वेहते ।
तवोदकं ।
खट्वोदकं ।
तवर्श्यः ।
खट्वर्श्यः ।
तवल्कारः ।

खट्वल्कारः ।
लृकारस्य स्थाने योऽने योऽण्तस्य लप्रत्वं इष्यते । ।

---

1. <वृद्धिरेचि># । । PS_६,१.८८ । ।

______Sठाञ्ठ्JKव्_६,१.८८ः

आतिति वर्तते ।
अवर्णात्परो य एच्, एचि च पूर्वो यः अवर्णः, तयोः पूर्वपरयोः अवर्णैचोः स्थाने वृद्धिरेकादेशो भवति ।
आद्गुणस्य अपवादः ।
ब्रह्मैडका ।
खट्वैडका ।
ब्रह्मैतिकायनः ।
खट्वैतिकायनः ।
ब्रह्मौदनः ।
खट्वौदनः ।
ब्रह्मौपगवः ।
खट्वौपगवः । ।

---

1. <एत्य्-एधत्य्-ऊठ्सु># । । PS_६,१.८९ । ।

______Sठाञ्ठ्JKव्_६,१.८९ः

वृद्धिरेचि इति वर्तते, आतिति च ।
तदेततेज्ग्रहणं एतेरेव विशेषणं , न पुनरेधतेः, अव्यभिचारात्, ऊठश्च सम्भवाथ् ।
इण्गतौ इत्येतस्मिन्धातौ एचि, एध वृद्धौ इत्येतस्मिनूठि च पूर्वं यदवर्णं ततश्च परो योऽच्, तयोः पूर्वपर्योः अवर्णाचोः स्थाने वृद्धिरेकादेशो भवति ।
उपैति ।
उपैषि ।
उपैमि ।
उपैधते ।
प्रैधते ।
प्रष्ठौहः ।
प्रष्ठौहा ।
प्रष्ठौहे ।
ऊठि आद्गुणापवादो वृद्धिर्विधीयते ।
एत्येधत्योः तु एङि पररूपापवादः ।
ओम्-आङोश्च (*६,१.९५) इत्येतत्तु पररूपं न बाध्यते, येन न अप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति, पुरस्तादपवादा अनन्तरान्विधीन्बधन्ते इति वा ।
तेन+इह न भवति, उप आ इतः उपेतः इति ।
एचि इतेव, उप इतः उपेतः ।
अक्षादूहिन्यां वृद्धिर्वक्तव्या ।
अक्षौहिणी ।
स्वादीरेरिण्योर्वृद्धिर्वक्तव्या ।
स्वैरं ।
स्वैरिणी ।
प्राद्ूढोढ्येषैष्येषु वृद्धिर्वक्तव्या ।

प्रौढः ।
प्रौढिः ।
प्रैषः ।
प्रैष्यः ।

[#६२०]

ऋते च तृतीयासमासेऽवर्णाद्वृद्धिर्वक्तव्या ।
सुखेन ऋतः सुखार्तः ।
दुःखेन ऋतः दुःखार्तः ।
ऋतः इति किं ? सुखेन इतः सुखेतः ।
तृतीया इति किं ? परमर्तः ।
समासे इति किं ? सुखेनर्तः ।
प्रवत्सतरकम्बलवसनानाम्र्णे वृद्धिर्वक्तव्या ।
प्र - प्रार्णं ।
वत्सतर - वत्सतरार्णं ।
कम्बल - कम्बलार्णं ।
वसन - वसनार्णं ।
ऋणदशाभ्यां वृद्धिर्वक्तव्या ।
ऋणार्णं ।
दशार्णं । ।

---

1. <आटश्च># । । PS_६,१.९० । ।

______Sठाऱ्ठ्JKव्_६,१.९०ः

एचि इति निवृत्तं ।
अचि इत्यनुवर्तते ।
आटः परो यो अच्, अचि च पूर्वो य आट्, तयोः पूर्वपरयोः आडचोः स्थाने वृद्धिरेकादेशो भवति ।
ऐक्षिष्ट ।
ऐक्षत ।
ऐक्षिष्यत ।
औभीथ् ।
आर्ध्नोन् ।
औब्जीथ् ।
चकारोऽधिकविधानार्थः, उसि ओम्-आङोश्च (*६,१.९५) इति पररूपबाधनार्थः ।
औस्रीयथ् ।
औङ्कारीयथ् ।
आ ऊढा ओढा, तामैच्छतौढीयत् । ।

---

1. <उपसर्गादृति धातौ># । । PS_६,१.९१ । ।

______Sठाऱ्ठ्JKव्_६,१.९१ः

आतित्येव ।

अवर्णान्तादुपसर्गातृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति ।
आद्गुणापवादः ।
उपार्च्छति ।
प्रार्च्छति ।
उपार्ध्नोति ।
उपसर्गातिति किं ? खट्वर्च्छति ।
मालर्च्छति ।
प्रगता ऋच्छका अस्माद्देशात्प्रर्च्छको देशः ।
यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसञ्ज्ञकाः इति ।
ऋति इति किं ? उप इतः उपेतः ।
तपरकरणं किं ? उप ऋकरीयति उपर्कारीयति ।
वा सुप्यापिशलेः (*६,१.९२) इति विकल्पः स्याथ् ।
उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकलनिवृत्त्यर्थं ।
ऋत्यकः (*६,१.१२८) इति हि शाकल्यस्य प्रक्रितभावः प्राप्नोति । ।

---

1. <वा सुप्यापिशलेः># । । PS_६,१.९२ । ।

_______Sठाऱ्ठ्JKव्_६,१.९२ः

आतित्येव, उपसर्गातृति धातौ इति च ।
सुबन्तावयवे धातौ ऋकारादौ परतः अवर्णान्तातुपसर्गात्पूर्वपरयोः आपिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति ।
उपर्शभीयति, उपार्षभीयति ।
उपल्कारीयति, उपाल्कारीयति ।
ऋकारलृकारयोः सावर्ण्यविधिः इति ऋति इति लृकारोऽपि गृह्यते ।
आपिशलिग्रहणं पूजर्थम्, वा इति ह्युच्यते एव । ।

---

[#६२१]

1. <आ-ओतोऽम्-शसोः># । । PS_६,१.९३ । ।

_______Sठाऱ्ठ्JKव्_६,१.९३ः

ओतः अमि शसि च परतः पूर्वपरयोः आकारः आदेशो भवति ।
गां पश्य ।
गाः पश्य ।
द्यां पश्य ।
द्याः पश्य ।
द्योशब्दोऽपि ओकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णितिष्यते, तेन नाप्राप्तायां वृद्धौ अयं आकारो विधीयमानस्तां बाधते ।
अं इति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपि इति चाधिकाराथ् ।
तेन अचिनवम्, असुनवं इत्यत्र न भवति । ।

---

1. <एङि पररूपम्># । । PS_६,१.९४ । ।

_______Sठा॒ऩ्JKव्_६,१.९४ः

आतित्येव, उपसर्गाद्धातौ इति च।
अवर्णान्तातुपसर्गातेङादौ धातौ पूर्वपरयोः पररूपं एकादेशो भवति।
वृद्धिरेचि (*६,१.८८) इत्यस्य अपवादः।
उपेलयति।
प्रेलयति।
उपोषति।
प्रोषति।
केचित्वा सुप्यापिशलेः (*६,१.९२) इत्यनुवर्त्यन्ति, तच्च वाक्यभेदेन सुब्धातौ विकल्पं करोति।
उपेडकीयति, उपैडकीयति।
उपोदनीयति, उपौदनीयति।
शकन्ध्वादिषु पररूपं वाच्यं।
शक अन्धुः शकन्धुः।
कुल अटा कुलटा।
सीमन्तः केशेषु।
सीम्नोऽन्तः सीमन्तः।
अन्यत्र सीमान्तः।
एवे चानियोगे पररूपं वक्तव्यं।
इह एव इहेव।
अद्य एव अद्येव।
अनियोगे इति किं? इहैअ भव, मा अन्यत्र गाः।
ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यं।
स्थूल ओतुः स्थूलौतुः, स्थूलोतुः।
बिम्बौष्ठी, बिम्बोष्ठी।
समासे इति किं? तिष्ठ देवदत्तौष्ठं पश्य।
एमन्नादिषु छन्दसि पररूपं वक्तव्यं।
अपां त्वा एमनपां त्वेमन्।
अपां त्वा ओद्मनपां त्वोद्मन्।।

---

[#६२२]

1. <ओम्-आङोश्च>#।। PS_६,१.९५।।

_______Sठा॒ऩ्JKव्_६,१.९५ः

आतित्येव।
अवर्णान्तातोमि आङि च परतः पूर्वपरयोः स्थाने पररूपं एकादेशो भवति।
का ओं इत्यवोचत्, कों इत्यवोचथ्।
यों इत्यवोचथ्।
आगि खल्वपि - आ ऊढा ओढा।
अद्य ओढा अद्योढा।
कदा ओढा कदोढा।
तदा ओढा तदोढा।
वृद्धिरेचि (*६,१.८८) इत्यस्य पवादः।
इह तु आ ऋश्यातर्श्यात्, अद्य अर्श्यातद्यर्श्यातिति अकः सवर्णे दीर्घत्वं बाधते।।

---

1. <उस्यपदान्तात्># । । PS_६,१.९६ । ।

_______Sठा~ठ्JKव्_६,१.९६ः

आतित्येव ।
अवर्णातपदान्तातुसि पूर्वपरयोः आद्गुणापवादः पररूपं एकादेशो भवति ।
भिन्द्या उस्भिन्द्युः ।
छिन्द्या उस्छिन्द्युः ।
अदा उसदुः ।
अया उसयुः ।
अपदान्तातिति किं ? का उस्रा कोस्रा ।
का उषिता कोषिता ।
आतित्येव, चक्रुः ।
अबिभयुः । ।

---

1. <अतो गुणे># । । PS_६,१.९७ । ।

_______Sठा~ठ्JKव्_६,१.९७ः

अपदान्तातिति वर्तते ।
अकारातपदन्तात्गुणे परतः पूर्वपरयोः स्थने पररूपं एकादेशो भवति ।
पचन्ति ।
यजन्ति ।
अकः सवर्ने दीर्घस्य अपवादः ।
पचे, यजे इत्यत्र वृद्धिरेचि इति वृद्धिः प्राप्नोति ।
अतः इति किं ? यान्ति ।
वान्ति ।
गुणे इति किं ? अपचे ।
अयजे ।
अपदान्तातित्येव, दण्डाग्रं ।
युपाग्रं । ।

---

1. <अव्यक्त-अनुकरणस्य अत इतौ># । । PS_६,१.९८ । ।

_______Sठा~ठ्JKव्_६,१.९८ः

अव्यक्तं अपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णं एव केनचित्साद्दश्येन तदव्यक्तं अनुकरोति, तस्य यो अत्शब्दः तस्मातितौ पूर्वपरयोः स्थाने पररूपं एकादेशो भवति ।
पटतिति पटिति ।
घटतिति घटिति ।
ज्ञटतिति ज्ञतिति ।
छमितिति छमिति ।

अव्यक्तानुकरणस्य इति किं ? जगतिति जगदिति ।
अतः इति किं ? मरटिति मरडिति ।
इतौ इति किं ? पटतत्र पटदत्र ।
अनेकाच इति वक्तव्यं ।
इह मा भूत्, श्रतिति श्रदिति ।
कथं घटदिति गम्भीरमम्बुदैर्नदितं इति ? दकारान्तं एतदनुकरणं द्रष्टव्यं । ।

---

[#६२३]

1. <न आम्रेडितस्य अनत्यस्य तु वा># । । PS_६,१.९९ । ।

______Sठाऱ्ठ्JKव्_६,१.९९ः

अव्यक्तानुकरणस्य आम्रेडितस्य यो अत्शब्दः इतौ तस्य पररूपं न भवति, तस्य योऽन्त्यस्तकारस्तस्य वा भवति ।
पटत्पटदिति, पटत्पटेति करोति ।
नित्यवीप्सयोः (*८,१.४) इति द्विर्वचनं ।
यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्, पटत्पटेति करोति । ।

---

1. <नित्यं आम्रेडिते डाचि># । । PS_६,१.१०० । ।

______Sठाऱ्ठ्JKव्_६,१.१००ः

अव्यक्तानुकरणस्य, अतः, अन्त्यस्य इति च अनुवर्तते ।
डाच्परं यदम्रेदितं तस्मिन्पूर्वस्य अव्यक्तानुकरनस्य अच्छब्दस्य योऽन्त्यः तकारः तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपं एकदेशो भवति ।
पटपटा करोति ।
दमदमा करोति ।
पटदित्यस्मातव्यक्तानुकरणातिति डाचि विहिते डाचि बहुलं इति द्विर्वचनम्, तच्च टिलोपात्पूर्वं एव+इष्यते । ।

---

1. <अकः सवर्णे दीर्घः># । । PS_६,१.१०१ । ।

______Sठाऱ्ठ्JKव्_६,१.१०१ः

अकः सवर्णे अचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति ।
दण्डाग्रं ।
दधीन्द्रः ।
मधूदके ।
होत्ἑश्यः ।
अकः इति किं ? अग्नये ।
सवर्ने इति किं ? दध्यत्र ।
अचि इत्येव, कुमारी शेते ।

नाज्झलौ (*१,१.१०) इत्यत्र यतचिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्य अनभिनिर्वृत्तत्वात्सवर्णा न गृह्यन्त इति सवर्नत्वमीकारशकारयोरप्रतिषिद्धं।
सवर्णदीर्घत्वे ऋति ऋ वा वचनं।
ऋति सवर्णे परभूते तत्र ऋ वा भवति इति वक्तव्यं।
होतृ ऋकारः होतृकारः।
यदा न ऋ तदा दीर्घ एव होत्éकारः।
लृति लृ वा वक्तव्यं।
ल्टृति सवर्णे परतो लृ वा भवति इति वक्तव्यं।
होतृ लृकारः होत्लृकारः।
होत्éकारः।
ऋकारलृकारयोः सवर्णासञ्ज्ञाविधिरुक्तः।
दीर्घपक्षे तु समुदायान्तरतमस्य लृवर्णस्य दीर्घस्य अभावातृकारः क्रियते।।

---

1. <प्रथमयोः पूर्वसवर्णः>#।। PS_६,१.१०२।।

_______Sठान्ठ्JKव्_६,१.१०२ः

अकः इति दीर्घः इति वर्तते।
प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्याद्द्वितीयाऽपि प्रथमा इति उक्ता।
तस्यां प्रथमायां द्वितीयायां च विभक्तौ अचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घः एकादेशो भवति।
अग्नी।
वायू।
वृक्षाः।
प्लक्षाः।
वृक्षान्।
प्लक्षान्।
अतो गुणे (*६,१.९७) इति यदकारे पररूपं ततकः सवर्णे दीर्घत्वं एव बाधते, न तु पूर्वसवर्नदीर्घत्वम्, पुरस्तादपवाद अनन्तरान्विधीन्बाधन्ते न+उत्तरातिति।
अचि इत्येव, वृक्षः।
प्लक्षः।
अकः इत्येव, नावौ।
पूर्वसवर्नग्रहणं किं? अग्नी इत्यत्र पक्षे परसवर्णो मा भूथ्।
दीर्घग्रहणं किं? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थं।।

---

[#६२४]

1. <तस्माच्छसो नः पुंसि>#।। PS_६,१.१०३।।

_______Sठान्ठ्JKव्_६,१.१०३ः

तस्मात्पूर्वसवर्णदीर्घातुत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति।
वृक्षान्।
अग्नीन्।
वायून्।
कर्त्éन्।
हर्त्éन्।
षण्डकान्।
षण्ढकान्।

षण्ढकान् ।
स्थूरान् ।
अररकान्पश्य ।
सर्व एते पुंलिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति ।
इह तु चञ्चेव चञ्चा, लुम्मनुष्ये इति कनो लुपि कृते लुपि युक्तवद्व्यक्तिवचने (*१,२.५) इति पुंसोऽपि स्त्रीलिङ्गत, तेन नत्वं न भवति, चञ्चाः पश्य, वध्रिकाः पश्य इति ।
तस्मातिति किं ? एतांश्चरतो गाः पश्य ।
शासः इति किं ।
वृक्षाः ।
प्लक्षाः ।
पुंसि इति किं ? धेनूः ।
बह्वीः ।
कुमरीः । ।

---

1. <नादिचि># । । PS_६,१.१०४ । ।

______Sठाञ्ठ्JKव्_६,१.१०४ः

अवर्णातिचि पूर्वसवर्णदीर्घो न भवति ।
वृक्षौ ।
प्लक्षौ खट्वे ।
कुण्डे ।
आतिति किं ? अग्नी ।
इचि इति किं ? वृक्षाः । ।

---

1. <दीर्घाज्जसि च># । । PS_६,१.१०५ । ।

______Sठाञ्ठ्JKव्_६,१.१०५ः

दीर्घात्जसि इचि च परतः पूर्वसवर्णदीर्घः न भवति ।
कुमार्यौ ।
कुमार्यः ।
ब्रह्मबन्ध्वौ ।
ब्रह्मबन्ध्वः । ।

---

1. <वा छन्दसि># । । PS_६,१.१०६ । ।

______Sठाञ्ठ्JKव्_६,१.१०६ः

दीर्घात्छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्नदीर्घो न भवति ।
मारुतीश्चतस्रः पिण्डीः ।
मारुत्यश्चतस्रः पिण्ड्यः ।
वाराही ।
उपानही ।
वाराह्यौ ।
उपानह्यौ । ।

---

1. <अमि पूर्वः># । । PS_६,१.१०७ । ।

_______Sठाऩ्ङ्JKव्_६,१.१०७ः

अकः इत्येव ।
अमि परतोटकः पूर्वपरयोः स्थाने पूर्वरुपं एकादेशो भवति ।
वृक्षं ।
प्लक्षं ।
अग्निं ।
वायुं ।
पूर्वग्रहणं किं ? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूतिति, कुमारीं इत्यत्र हि त्रिमात्रः स्याथ् ।
वा छन्दसि (*६,१.१०६) इत्येव, शमीं च, शम्यं च ।
गौरीं च, गौर्यं च । ।

---

[#६२५]

1. <सम्प्रसारणाच्च># । । PS_६,१.१०८ । ।

_______Sठाऩ्ङ्JKव्_६,१.१०८ः

पूर्वः इत्येव ।
सम्प्रसारणातचि परतः पूर्वपरयोः स्थाने पूर्वरूपं एकादेशो भवति ।
यजि - इष्टं ।
वपि - उप्तं ।
ग्रहि - गृहीतं ।
सम्प्रसरणविधानसामर्थ्यात्विगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते ।
वा छन्दसि (*६,१.१०६) इत्येव, मित्रो नो अत्र वरुणो यज्यमानः ।
परपूर्वत्वविधाने सत्यर्थवत्सम्प्रसारणविधानं इति इष्ट इत्येवं आदिषु पूर्वत्वभावे यणादेशो भवत्येव ।
अन्तरङ्गे च अचि इक्ऋतार्थं वचनं इति बाह्ये पश्चात्सन्निपतिते पूर्वत्वं न भवति ।
शकह्वौ ।
शकह्वर्थं । ।

---

1. <एङः पदान्तादति># । । PS_६,१.१०९ । ।

______Sठाञ्ठ्JKव्_६,१.१०९:

एङ्यः पदान्तः तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपं एकाद्शो भवति।
अग्नेऽत्र।
वायोऽत्र।
अयवादेशयोरयं अपवादः।
एङः इति किं।
दध्यत्र।
मध्वत्र।
पदान्तातिति किं ? चयनं।
लवनं।
अति इति इं।
वायो इति।
भानो इति।
वायविति।
भानविति।
तपरकरणं इति किं ? वायवायाहि।।

---

1. <ङसिङसोश्च># । । PS_६,१.११० । ।

______Sठाञ्ठ्JKव्_६,१.११०:

एङः इति वर्तते, अति इति च।
एङः उत्तरयोः ङसिङसोः अति परतः पूर्वपरयोः स्थाने पूर्वरूपं एकादेशो भवति।
अग्नेरागच्छति।
वायोरागच्छति।
अग्नेः स्वं।
वायोः स्वं।
अपदान्तार्थः आरम्भः।।

---

1. <ऋत उत्># । । PS_६,१.१११ । ।

______Sठाञ्ठ्JKव्_६,१.१११:

ङसिङसोः इत्येव।
ऋकारान्तादुत्तरयोः ङ्सिङसोः अति परतः पूर्वपरयोः उकार एकादेशो भवति।
होतुरागच्छति।
होतुः स्वं।
द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्यतरव्यपदेशं इति उरण्रपरः (*१,१.५१) इति रपरत्वं अत्र कृत्वा रात्सस्य (*८,२.२४) इति सलोपः कर्तव्यः।।

---

1. <ख्यत्यात्परस्य># । । PS_६,१.११२ । ।

______SठाKव्_६,१.११२:

ङसिङसोः इति वर्तते, उतिति च ।
ख्यत्यातिति खिशब्दखीशब्दयोः तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणं, ताभ्यां परस्य ङसिङसोः अत उकारादेशो भवति ।
सख्युरागच्छति ।
सख्युः स्वं ।
पत्युरागच्छति ।
पत्युः स्वं ।
खीशब्दस्य+उदाहरणं - सह खेन वर्तते इति सखः, तं इच्छति इति क्यच्सखीयति ।
सख यतेः क्विप्सखीः, तस्य ङसिङसोः सख्युः इति ।

[#६२६]

तीशब्दस्य अपि - लूनं इच्छति लूनीयति, लूनीयतेः क्विपि लुप्ते, लून्युराग्च्छति ।
लून्युः स्वं ।
निष्ठानत्वं पूर्वत्रासिद्धं (*८,२.१) इत्यसिद्धं ।
विकृतनिर्देशादेव इह न भवति, अतिसखेरागच्छति, सेनापतेरागच्छति इति ।
सखिशब्दस्य केवलस्य घिसञ्ज्ञा प्रतिषिध्यते, न तदन्तस्य । ।

---

1. <अतो रोरप्लुतादप्लुते># । । PS_६,१.११३ । ।

______SठाKव्_६,१.११३:

अति, उतिति वर्तते ।
अकारादप्लुतादुत्तरस्य रो रेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति ।
वृक्षोऽत्र ।
प्लक्षोऽत्र ।
भो-भगो-अघो-अपूर्वस्य योऽशि (*८,३.१७) इत्यस्मिन्प्राप्ते उत्वं विधीयते ।
रुत्वं अपि आश्रयात्पूर्वत्र असिद्धं (*८,२.१) इति असिद्धं न भवति ।
अतः इति किं ? अग्निरत्र ।
तपरकरणं किं ? वृक्षा अत्र ।
सानुबन्धग्रहणं किं ? स्वरत्र ।
प्रातरत्र ।
अति इत्येव, वृक्ष इह ।
तस्य अपि तपरत्वादत्र न भवति ।
वृक्ष आश्रितः ।
अलुतातिति किं ? सुस्रोता३अत्र न्वसि ।
अप्लुते इति किं ? तिष्ठतु पय अ३च्श्विन् ।
अत्र प्लुतस्य असिद्धत्वातुत्वं प्राप्नोति इति अप्लुतादप्लुते इति उच्यते । ।

---

1. <हशि च># । । PS_६,१.११४ । ।

______SठाKव्_६,१.११४:

हशि च परतः अत उत्तरस्य रोरुकारादेशो भवति ।
पुरुषो याति ।
पुरुषो हसति ।
पुरुषो ददाति ॥

---

1. <प्रकृत्याऽन्तःपादं अव्यपरे># ॥ PS_६,१.११५ ॥

_______Sठान्ठ्JKव्_६,१.११५ः

एङोऽति (*६,१.१०९) इत्येव ।
एङः इति यत्पञ्चम्यन्तं अनुवर्तते, तदर्थादिह प्रथमान्तं भवति ।
प्रकृतिः इति स्वभावः कारणं वाऽभिधीयते ।
अन्तरिति अव्ययं अधिकरनभूतं मध्यं आचष्टे ।
पादशब्देन च ऋक्पादस्य+एव ग्रहणं इष्यते, न तु श्लोकपदस्य ।
अवकारयकारपरे अति परतः एङ्प्रकृत्या भवति ।
स्वभावेन अवतिष्ठते कारणात्मना वा भवति, न विकारं आपद्यते ।
तौ चेन्निमित्तकार्यिणौ अन्तःपादमृक्पादमध्ये भवतः ।
ते अग्रे अश्वमायुञ्जन् ।
ते अस्मिन्जवमादधुः ।
उपप्रयन्तो अध्वरं ।
शिरो अपश्यं सुजाते अश्वसूनृते ।
अध्वर्यो अद्रिभिः सुतं ।
अन्तःपादं इति किं ।
कया मती कुत एतास एतेऽर्चन्ति ।
अव्यपरे इति किं ।
तेऽवदन् ।
तेजोऽयस्मयं ।
एङिति किं ? अन्वग्निरुषसामग्रमख्यथ् ।
केचिदिदं सूत्रं न अन्तःपादं अव्यपरे इति पठन्ति, ते संहितायां इह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

---

[#६२७]

1. <अव्याद्-अवद्याद्-अवक्रमुर्-अव्रत-अयम्-अवन्त्व्-अवस्युसु च># ॥ PS_६,१.११६ ॥

_______Sठान्ठ्JKव्_६,१.११६ः

अव्यातवद्यातवक्रमुः अव्रत अयं अवन्तु अवस्यु इत्येतेषु वकार-यकारपरेऽप्यति परतः अन्तःपादं एङ्प्रकृत्या भवति ।
अग्निः प्रथमो वसुभिर्नो अव्याथ् ।
मित्रमहो अवद्याथ् ।
मा शिवासो अवकृअमुः ।
ते नो अव्रताः ।
शतधारो अयं मणिः ।
ते नो अवन्तु पितरः ।
कुशिकासो अवस्यवः ॥

---

1. <यजुष्युरः># । । PS_६,१.११७ । ।

______Sठान्ठ्JKव्_६,१.११७ः

उरःशब्दः एङन्तः यजुषि विषये अति रकृत्या भवति ।
उरो अन्तरिक्षं ।
अपरे यजुष्युरो इति सूत्रं पठन्ति, उकारान्तं उरुशब्दं सम्बुद्ध्यन्तं अधीयते, ते इदं उदाहरन्ति उरो अन्तरिक्षं सजूः इति ।
यजुषि पादानां अभावातनन्तःपादर्थं वचनं । ।

---

1. <आपो-जुषणो-वृष्णो-वर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे># । । PS_६,१.११८ । ।

______Sठान्ठ्JKव्_६,१.११८ः

यजुषि इत्येव ।
आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः अम्बे अम्बाले इत्येतौ च यावम्बिके शब्दात्पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति ।
आपो अस्मान्मातरः शुन्धयन्तु ।
जुषणो अप्तुराज्यस्य ।
वृष्णो अंशुभ्यां गभस्तिपूतः ।
वषिष्ठे अधि नाके ।
अम्बे अम्बाल्यम्बिके यजुषीदमीदृशं एव पठ्यते ।
अस्मादेव निपातनातम्बार्थनद्योर्ह्रस्वः (*७,६.१०७) इति ह्रस्वत्वं न भवति । ।

---

1. <अङ्ग इत्यादौ च># । । PS_६,१.११९ । ।

______Sठान्ठ्JKव्_६,१.११९ः

अङ्गशब्दे य एङ्तदादौ चाकारे यः पूर्वः स यजुसि विषये अति प्रकृत्या भवति ।
ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यथ् ।
ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यथ् ।
ऐन्द्रः प्राणो अङ्गे अङ्गे अरोचिषं । ।

---

1. <अनुदात्ते च कुधपरे># । । PS_६,१.१२० । ।

______Sठान्ठ्JKव्_६,१.१२०ः

यजुषि इत्येव।
अनुदात्ते च अति कवर्गधकारपरे परतो यजुसि विषये एङ्प्रकृत्या भवति।
अयं सो अग्निः।
अयं सो अध्वरः।
अनुदात्ते इति किं? अधोग्रे।
अग्रशब्द आद्युदात्तो निपात्यते।
कुधपरे इति किं? सोऽयं अग्निः सहस्रियः।।

---

[#६२८]

1. <अवपथासि च>#।। PS_६,१.१२१।।

______Sठाञ्ठ्JKव्_६,१.१२१ः

यजुषि इत्येव।
अनुदात्ते इति चशब्देन अनुकृष्यते।
अवपथाःशब्देऽनुदात्ते अकारादौ परतो यजुषि विषये एङ्प्रकृत्या भवति।
त्री रुद्रेभ्यो अवपथाः।
वपेर्लङि थासि तिङ्ङ्-अतिङः (*८,१.२८) इति निघातेन अनुदात्तत्वं।
अनुदात्ते इत्येव, यद्रुद्रेभ्योऽवपथाः।
निपातैर्यद्-यदि-हन्त इति निघातः प्रतिषिध्यते।।

---

1. <सर्वत्र विभाषा गोः>#।। PS_६,१.१२२।।

______Sठाञ्ठ्JKव्_६,१.१२२ः

सर्वत्र छन्दसि भाषायां च अति परतो गोः एङ्प्रकृत्या भवति विभाषा।
गोऽग्रम्, गो अग्रं।
छन्दसि - अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वान्।।

---

1. <अवङ्स्फोटायनस्य>#।। PS_६,१.१२३।।

______Sठाञ्ठ्JKव्_६,१.१२३ः

अति इति निवृत्तं।
अचि इत्येतत्त्वनुवर्तत एव।
अचि परतः गोः स्फोटायनस्य आचार्यस्य मतेन अवङादेशो भवति।
गवाग्रम्, गोऽग्रं।
गवाजिनम्, गोऽजिनं।
गवौ दनम्, गवोदनं।

गवोष्ट्रम्, गवुष्ट्रं ।
आद्युदात्तश्च अयं आदेशो निपात्यते, स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति ।
गावः अग्रं अस्य गवाग्रः इति ।
अन्यत्र तु समासान्त-उदात्तत्वेन बाध्यते ।
स्फोटायनग्रहणं पूजार्थं, विभाषा इत्येव हि वर्तते ।
व्यवस्थितविभाषा इयं, तेन गवाक्षः इत्यत्र नित्यं अवङ्भवति । ।

---

1. <इन्द्रे च नित्यम्># । । PS_६,१.१२४ । ।

_______Sठा-ठ्JKव्_६,१.१२४ः

इन्द्रशब्दस्थे अचि परतो गोर्नित्यं अवङादेशो भवति ।
गवेन्द्रः ।
गवेन्द्रयज्ञस्वरः । ।

---

1. <प्लुत-प्रगृह्या अचि># । । PS_६,१.१२५ । ।

_______Sठा-ठ्JKव्_६,१.१२५ः

प्लुताश्च प्रगृह्याश्च अचि प्रकृत्या भवन्ति ।
देवदत्त३अत्र न्वसि ।
यज्ञदत्त३इदं आनय ।
आश्रयादत्र प्लुतः सिद्धः ।
प्रगृह्याः - अग्नी इति ।
वायू इति ।
खट्वे इति ।
माले इति ।
अचि इत्यनुवर्तमाने पुनरज्ग्रहणं आदेशनिमित्तस्य अचिः परिग्रहार्थं ।
तेन+इह न भवति, जानु उ अस्य रुजति जान्वस्य रुजति ।
प्रगृह्यादुकारात्परस्य अकारस्य सवर्णदीर्घत्वं प्रत्यनिमित्तत्वादत्र प्रकृतिभावो न भवति ।
नित्यग्रहणं इह अनुवर्तते ।
प्लुतप्रगृह्याणां नित्यं अयं एव प्रकृतिभावो यथा स्याद्, इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (*६,१.१२७) इत्येतन्मा भूतिति । ।

---

[#६२९]

1. <आङोऽनुनासिकश्छन्दसि># । । PS_६,१.१२६ । ।

_______Sठा-ठ्JKव्_६,१.१२६ः

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति ।
अभ्र ॐ अपः ।
गभीर ॐ उग्रपुत्रे जिघांसतः ।
केचिदाङोऽनुनासिकश्छन्दसि बहुलं इत्यधीयते ।
तेन+इह न भवति, इन्द्रो बाहुभ्यामातरथ् ।
आ अतरत् । ।

---

1. <इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च># । । PS_६,१.१२७ । ।

______Sठा-ठ्JKव्_६,१.१२७ः

इकोऽसवर्ने अचि परतः शाकल्यस्य आचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्य इकः स्थाने भवति ।
दधि अत्र, दध्यत्र ।
मधु अत्र, मध्वत्र ।
कुमारि अत्र, कुमार्यत्र ।
किशोरि अत्र, किशोर्यत्र ।
इकः इति किं ? खट्वेन्द्रः ।
असवर्णे इति किं ।
कुमारीन्द्रः ।
शाकल्यस्य ग्रहणं पूजार्थं ।
आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः ।
सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ।
सिति - अयं ते योनिरृत्वियः ।
नित्यसमासे - व्याकरनं ।
कुमार्यर्थं ।
ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यं ।
ईषा अक्षो हिरण्ययः ।
का इमरे पिशङ्गिला ।
पथा अगमन् । ।

---

1. <ऋत्यकः># । । PS_६,१.१२८ । ।

______Sठा-ठ्JKव्_६,१.१२८ः

शाकल्यस्य ह्रस्वश्च इत्येतदनुवर्तते ।
ऋकारे परतः शाक्ल्यस्य आचार्यस्य मतेन अकः प्रकृत्या भवन्ति ह्रस्वश्च तस्यकः स्थाने भवति ।
खट्व ऋश्यः ।
माल ऋश्यः ।
कुमारि ऋश्यः ।
होतृ ऋश्यः ।
ऋति इति किं ? खट्वेन्द्रः ।
अकः इति किं ।
वृक्षावृश्यः ।
सवर्णार्थमनिगर्थं च वचनं । ।

---

1. <अप्लुतवद्-उपस्थिते># । । PS_६,१.१२९ । ।

_______Sठाऱ्ठ्JKव्_६,१.१२९ः

उपस्थितं नाम अनार्षः अतिकरणः, समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते ।
तस्मिन्परतः प्लुतः अप्लुतवद्भवति ।
प्लुतकार्यं प्रकृतिभावं न करोति ।
सुश्लोक३ इति सुश्लोकेति ।
सुमङ्गल३ इति सुमङ्गलेति ।
वत्करणं किं ? अप्लुत इति उच्यमाने प्लुत एव प्रतिषिद्यते ।
तत्र को दोषः ? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्, अग्नी३ इति, वायू३ इति । ।

---

[#६३०]

1. <ई३ चाक्रवर्मणस्य># । । PS_६,१.१३० । ।

_______Sठाऱ्ठ्JKव्_६,१.१३०ः

ई३कारः प्लुतोऽचि परतः चाक्रवर्मणस्य आचार्यस्य मतेन प्लुतवद्भवति ।
अस्तु हीत्यब्रूताम्, अस्तु ही३ इत्यब्रूतां ।
चिनु हीदं ।
चिनु ही३ इदं ।
चाक्रवर्मणग्रहणं विकल्पार्थम्, तदुपस्थिते निवृत्त्यर्थं अनुपस्थिते प्राप्त्यर्थं इत्युभयत्रविभाषा इयं ।
ईकारादन्यत्र अप्ययं अप्लुतवद्भाव इष्यते ।
वशा३ इयं वशेयं । ।

---

1. <दिव उत्># । । PS_६,१.१३१ । ।

_______Sठाऱ्ठ्JKव्_६,१.१३१ः

एङः पदान्तादति (*६,१.१०९) इत्यतः पदग्रहणं अनुवर्तते ।
दिवः इति प्रातिपदिकं गृह्यते, न धातुः, सानुबन्धकत्वाथ् ।
दिवः पदस्य उकारादेशो भवति ।
दिवि कामो यस्य द्युकामः ।
द्युमान् ।
विमलद्यु दिनं ।
द्युभ्यां ।
द्युभिः ।
निरनुबन्धकग्रहणादिह न भवति, अक्षद्यूभ्याम्, अक्षद्यूभिः इति ।
तपरकरनं ऊठो निवृत्त्यर्थम्, द्युभ्याम्, द्युभिः इति ।
अत्र हि परत्वातूटः प्राप्नोति ।

पदस्य इति किं ? दिवौ ।
दिवः । ।

---

1. <एतत्-तदोः सुलोपोऽकोरनञ्समासे हलि># । । PS_६,१.१३२ । ।

______Sठा-ठ्JKव्_६,१.१३२ः

एतत्तदौ यावककारौ नञ्समासे न वर्तते तयोर्यः सुशब्दः, कश्च तयोः सुशब्दः ? यः तदर्थेन सम्बद्धः, तस्य संहितायां विषये हलि परतो लोपो भवति ।
एष ददाति ।
स ददाति ।
एष भुङ्क्ते ।
स भुङ्क्ते ।
एतत्तदोः इति किं ? यो ददाति ।
यो भुङ्क्ते ।
सुग्रहणं किं ? एतौ गावौ चरतः ।
अकोः इति किं ? एषको ददाति ।
सको ददाति ।
तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति रूपभेदेऽपि साकच्कावेतत्तदावेव भवतः ।
अनञ्समासे इति किं ? अनेषो ददाति ।
असो ददाति ।
उत्तरपदार्थप्रधानत्वान्नञ्समासस्य एतत्तदोरेव अत्र सम्बद्धः सुशब्दः ।
हलि इति किं ? एषोऽत्र सोऽत्र । ।

---

1. <स्यश्छन्दसि बहुलम्># । । PS_६,१.१३३ । ।

______Sठा-ठ्JKव्_६,१.१३३ः

स्य इत्येतस्य छन्दसि हलि परतः बहुलं सोर्लोपो भवति ।
उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ।
एष स्य ते पवत इन्द्र सोमः ।
न च भवति, यत्र स्यो निपतेत् । ।

---

[#६३१]

1. <सोऽचि लोपे चेत्पादपूरणम्># । । PS_६,१.१३४ । ।

______Sठा-ठ्JKव्_६,१.१३४ः

सः इत्येतस्य अचि परतः सुलोपो भवति, लोपे सति चेत्पादः पूर्यते ।

सेदु राजा क्षयते चर्षणीनां ।
सौषधीरनुरुध्यसे ।
लोपे चेत्पादपूरणं इति किं ? स इव व्याघ्रो भवेथ् ।
अचि इति वस्पष्टार्थं ।
पादग्रहणेन अत्र श्लोकपादस्य अपि ग्रहणं केचिदिच्छन्ति, तेन+इदं सिद्धं भवति ।
सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैषा भीमो महाबलः । ।

---

1. <सुट्कात्पूर्वः># । । PS_६,१.१३५ । ।

______Sठा~ठ्JKव्_६,१.१३५ः

अधिकारोऽयं पारस्करप्रभृतीनां च सञ्ज्ञायां (*६,१.१७५) इति यावथ् ।
इत उत्तरं यद्वक्ष्यामस्तत्र सुटिति , कात्पूर्वः इति च+एतदधिकृतं वेदितव्यं ।
वक्ष्यति - सम्पर्युपेभ्यः करोतौभूषणे (*६,१.१३७) ।
संस्कर्ता ।
संस्कर्तुं ।
संस्कर्तव्यं ।
कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थं ।
तथा हि संस्कृषीष्ट, संस्क्रियते इति संयोगादिलक्षणौ इङ्गुणौ न भवतः ।
तिङ्ङतिङः (*८,१.१८) इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात्? स्वरविधौ व्यञ्जनं अविद्यमानवतिति वचनान्न अस्ति व्यवधानं संचस्करतुः, संचस्करुः इति गुणः कथं ? तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति ।
संयोगोपधग्रहणं च ऋतश्च संयोगादेर्गुणः (*७,४.१०) इत्यत्र कर्तव्यं ।
टित्करणं सुट्स्तुस्वञ्जां इत्यत्र विशेषणार्थं । ।

---

1. <अड्-अभ्यास-व्यवायेऽपि># । । PS_६,१.१३६ । ।

______Sठा~ठ्JKव्_६,१.१३६ः

अड्व्यवाये, अभ्यासव्यवाये अपि सुट्कात्पूर्वः भवति ।
संस्करोथ् ।
समस्कार्षीथ् ।
सञ्चस्कर ।
परिचस्कार ।
किमर्थं पुनरिदं उच्यते, पूर्वं धातुरुपसर्गेण युज्यते इति तत्र धातूपसर्गयोः कर्यं अन्तरङ्गं इति पूर्वं सुट्क्रियते पश्चादडभ्यासौ ? अभक्तश्च सुटित्युक्तम्, ततः सकारादुत्तरावडभ्यासौ अनिष्टे देशे स्यातां ।
एतस्मिंस्तु सत्यत एव वचनात्कृतयोरडभ्यासयोः तद्व्यवाये अपि सुट्कात्पूर्वः क्रियते इति सिद्धं इष्टं भवति । ।

---

1. <सम्पर्युपेभ्यः करोतौ भूषणे># । । PS_६,१.१३७ । ।

______Sठाञ्ठ्JKव्_६,१.१३७ः

सं परि उप इत्येतेभ्यः भुषणार्थे करोतौ परतः सुट्कात्पूर्वो भवति।
संस्कर्ता।
संस्कर्तुं।
संस्कर्तव्यं।
अत्र संपुंकानां सत्वं इति समो मकारस्य सकारः, पूर्वस्य चाकारस्य अनुनासिकः।
परिष्कर्ता।
परिष्कर्तुं।
परिष्कर्तव्यं।
सुट्स्तुस्वञ्जां इति षत्वं।
उपस्कर्ता।
उपस्कर्तुं।
उपस्कर्तव्यं।
भूषणे इति किं? उपकरोति।
सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते, संस्कृतमन्नं इति।।

---

[#६३२]

1. <समवाये च>#।। PS_६,१.१३८।।

______Sठाञ्ठ्JKव्_६,१.१३८ः

समवायः समुदायः, तस्मिंश्चार्थे करोतौ सम्पर्युपेभ्यः कात्पूर्वः सुडागमो भवति।
तत्र नः संस्कृतं।
तत्र नः परिष्कृतं।
तत्र न उपस्कृतं।
समुदितं इत्यर्थः।।

---

1. <उपात्प्रतियत्न-वैकृत-वाक्य-अध्याहारेसु>#।। PS_६,१.१३९।।

______Sठाञ्ठ्JKव्_६,१.१३९ः

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः।
विकृतं एव वैकृतं।
प्रज्ञादित्वादण्।
गम्यमानार्थस्य वाक्यस्य स्वरूपेण+उपादानं वाक्यस्य अध्याहारः।
एतेष्वर्थेषु गम्यमानेसु करोतौ धातौ परतः उपात्सुट्कात्पूर्वः भवति।
प्रतियत्ने तावत्- एधो दकस्य+उपस्कुरुते।
काण्डगुणस्य+उपस्कुरुते।
वैकृते - उपस्कृतं भुङ्क्ते।
उपस्कृतं गच्छति।
वाक्याध्याहारे - उपस्कृतं जल्पति।

उपस्कृतं अधीते ।
एतेषु इति किं ? उपकरोति । ।

---

1. <किरतौ लवने># । । PS_६,१.१४० । ।

_______Sठाऱ्ठ्JKव्_६,१.१४०ः

उपातित्येव ।
उपादुत्तरस्मिन्किरतौ धातौ लवनविषये सुत्कत्पूर्वः भवति ।
उपस्कारं मद्रका लुनन्ति ।
उपस्कारं काश्मीरका लुनन्ति ।
विक्षिप्य लुनन्ति इत्यर्थः ।
णमुलत्र वक्तव्यः ।
लवने इति किं ? उपकिरति देवदत्तः । ।

---

1. <हिंसायां प्रतेश्च># । । PS_६,१.१४१ । ।

_______Sठाऱ्ठ्JKव्_६,१.१४१ः

किरतौ इत्येव ।
उपात्प्रतेश्च उत्तरस्मिन्किरतौ सुट्कात्पूर्वः भवति हिंसयां विषये ।
उपस्कीर्णं हं ते वृषल भूयाथ् ।
प्रतिस्कीर्णं हं ते वृषल भूयाथ् ।
तथा ते वृषल विक्षेपो भूयात्यथा हिंसामनुबध्नाति इत्यर्थः ।
हिंसायां इति किं ।
प्रतिकीर्णं । ।

---

1. <अपाच्चतुष्पाच्-छकुनिष्वालेखने># । । PS_६,१.१४२ । ।

_______Sठाऱ्ठ्JKव्_६,१.१४२ः

किरतौ इत्येव ।
अपातुत्तरस्मिन्किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन्विसये सुत्कात्पूर्वः भवति ।
अपस्किरते वृषभो हृष्टः ।
अपस्किरते कुक्कुटो भक्ष्यार्थी ।
अपस्किरते श्वा आश्रयार्थी ।
आलिख्य विक्षिपति इत्यर्थः ।
चतुष्पाच्छकुनिषु इति किं ? अपकिरति देवदत्तः ।
हर्षजीविकाकुलायकरणेष्विति वक्तव्यं ।

[#६३३]

इह मा भूत्, अपकिरति श्वा ओदनपिण्डमाशितः।
हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्य+उपसंख्यानं।।

---

1. <कुस्तुम्बुरूणि जातिः># ।। PS_६,१.१४३ ।।

______Sठाऱ्ठ्JKव्_६,१.१४३:

कुस्तुम्बुरूणि इति सुट्निपात्यते जातिश्चेद्भवति।
कुस्तुम्बुरुर्नामौषधिजातिः धान्यकं।
तत्फलान्यपि कुसुम्बुरुणि सूत्रनिर्देशे नपुंसकमविवक्षितं।
जातिः इति किं? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि।
तुम्बुरुशब्देन तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा।।

---

1. <अपरस्पराः क्रियासातत्ये># ।। PS_६,१.१४४ ।।

______Sठाऱ्ठ्JKव्_६,१.१४४:

अपरास्परा इति सुट्निपात्यते क्रियासातत्ये गम्यमाने।
अपरस्पराः सार्थाः गच्छन्ति।
सन्ततमविच्छेदेन गच्छन्ति इत्यर्थः।
क्रियासातत्ये इति किं? अपरपराः सार्थाः गच्छन्ति।
अपरे च परे च सकृदेव गच्छन्ति इत्यर्थः।
न अत्र गमनस्य सातत्यप्रबन्धो विवक्षितः।
किं इदं सातत्यं इति? सततस्य भावः सातत्यं।
कथं सततं? समस्तते विकल्पेन मकारलोपो विधीयते।
लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि।
समो वा हिततततयोर्मांसस्य पचियुड्घञोः।।

---

1. <गोष्पदं सेवित-असेवित-प्रमाणेसु># ।। PS_६,१.१४५ ।।

______Sठाऱ्ठ्JKव्_६,१.१४५:

गोष्पदं इति सुट्निपात्यते, तस्य च षत्वं सेविते असेविते प्रमाने च विषये।
गोष्पदो देशः।
गावः पद्यन्ते यस्मिन्देशे स गोभिः सेवितो देशो गोष्पदः इत्युच्यते।
असेविते - अगोष्पदान्यरण्यानि।

असेविते गोष्पदशब्दो न सम्भवति इत्यगोष्पदशब्दार्थं निपातनं ।
यद्येवं न अर्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविस्यति ? सत्यं एतत्, यत्र तु सेवितप्रसङ्गोऽस्ति तत्र+एव स्यादगोष्पदं इति, यत्र त्वत्यन्तासम्भव एव तत्र न स्यात्, अगोष्पदान्यरण्यानि इति ? असेवितग्रहणात्तत्र अपि भवति ।
यानि हि महान्त्यरणानि येषु गवां अत्यन्तासम्भवस्तान्येवं उच्यन्ते ।
प्रमाणे - गोस्पदमात्रं क्षेत्रं ।
गोष्पदपूरं वृष्टो देवः ।
न अत्र गोष्पदं स्वार्थप्रतिपादनार्थं उपादीयते, किं तर्हि, क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्तां ।
सेवितासेवितप्रमाणेसु इति किं ? गोः पदं गोपदं । ।

---

[#६३४]

1. <आस्पदं प्रतिष्ठायाम्># । । PS_६,१.१४६ । ।

_______Sठाञ्ठ्JKव्_६,१.१४६ः

आत्मयापनाय स्थानं प्रतिष्ठा, तस्यां आस्पदं इति सुट्निपात्यते ।
आस्पदं अनेन लब्धं ।
प्रतिष्थायां इति किं ? आ पदातापदं । ।

---

1. <आश्चर्यं अनित्ये># । । PS_६,१.१४७ । ।

_______Sठाञ्ठ्JKव्_६,१.१४७ः

अनित्यतया विषयभूतया अद्भुतत्वं इह उपलक्ष्यते, तस्मिन्नाचर्यं निपात्यते ।
चरेराङि चागुरौ इति यत्प्रत्यये कृते निपातनात्सुठ् ।
आश्चर्यं यदि स भुञ्जीत ।
आश्चर्यं यदि सोऽधीयीत ।
चित्रं अद्भुतं इत्यर्थः ।
अनित्ये इति किं ? आचर्यं कर्म शोभनं । ।

---

1. <वर्चस्केऽवस्करः># । । PS_६,१.१४८ । ।

_______Sठाञ्ठ्JKव्_६,१.१४८ः

कुत्सितं वर्चः वर्चस्कं अन्नमलम्, तस्मिन्नभिधेयेऽवस्करः इति निपात्यते ।
अवपूर्वस्य किरतेः कर्मणि ऋदोरप्(*३,३.५७) इत्यप्, निपातनाप्सुठ् ।
अवकीर्यते इत्यवस्करोऽन्नमलम्, तत्सम्बन्धात्देशोऽपि तथा+उच्यते ।
वर्चस्के इति किं ? अवकरः । ।

---

1. <अपस्करो रथाङ्गम्># । । PS_६,१.१४९ । ।

______Sठाञ्ठ्JKव्_६,१.१४९ः

अपस्करः इति निपात्यते रथाङ्गं चेद्भवति ।
अपपूर्वात्किरतेः ऋदोरप्(*६,६.५७) इत्यप्, निपातनात्सुठ् ।
अपस्करो रथावयवः ।
रथाङ्गं इति किं ? अपकरः । ।

---

1. <विष्किरः शुकुम्निर्विकिरो वा># । । PS_६,१.१५० । ।

______Sठाञ्ठ्JKव्_६,१.१५०ः

विष्किरः इति किरतेः विपूर्वस्य इग्-उपध-ज्ञा-प्री-किरः कः (*३,१.१३५) इति कप्रत्यये विहिते सुट्निपात्यते शुकुनिश्चेद्भवति ।
विकिरशब्दाभिधेयो वा शकुनिर्भवति ।
सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते ।
विष्किरो वा शकुनौ इति व ग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणं इह तस्य अपि शकुनेरन्यत्र प्रयोगो म भूत् । ।

---

1. <ह्वस्वाच्चन्द्र-उत्तरपदे मन्त्रे># । । PS_६,१.१५१ । ।

______Sठाञ्ठ्JKव्_६,१.१५१ः

चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति मन्त्रविसये ।
सुश्चन्द्रः युष्मान् ।
ह्रस्वातिति किं ? सूर्याचन्द्रमसाविव ।
मन्त्रे इति किं ? सुचन्द्रा पौर्णमासी ।
उत्तरपदं समास एव भवति इति प्रसिद्धम्, तत इह न भवति, शुक्रमसि, चन्द्रमसि । ।

---

[#६३५]

1. <प्रतिष्कशश्च कशेः># । । PS_६,१.१५२ । ।

______Sठाञ्ठ्JKव्_६,१.१५२ः

कश गतिशासनयोः इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट्निपात्यते, तस्य+एव षत्वं ।

ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः ।
वार्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कशः इत्यभिधीयते ।
कशेः इति किं ।
प्रतिगतः कशां प्रतिकशोऽश्वः ।
अत्र यद्यपि कशेरेव कशाशब्दः, तथा अपि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थं ।
तेन धात्वन्तरोपसर्गान्न भवति । ।

---

1. <प्रस्कण्व-हरिश्चन्द्रावृषी># । । PS_६,१.१५३ । ।

______Sठाञ्ठ्JKव्_६,१.१५३ः

प्रस्कण्व हरिश्चन्द्र इति सुट्निपात्यते ऋषी चेदभिधेयौ भवतः ।
प्रस्कण्व ऋषिः ।
हरिश्चन्द्र ऋषिः ।
हरिश्चन्द्रग्रहणं अमन्त्रार्थं ।
ऋषी इति किं ? प्रकण्वो देशः ।
हरिचन्द्रो माणवकः । ।

---

1. <मस्करमस्करिणौ वेणुपरिव्राजकयोः># । । PS_६,१.१५४ । ।

______Sठाञ्ठ्JKव्_६,१.१५४ः

मस्कर मस्करिनित्येतौ यथासङ्ख्यं वेणौ परिव्राजके च निपात्येते ।
मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणौ अभिधेये सुट्निपात्यते, परिव्राजके त्विनिः अपि ।
मस्करः वेणुः ।
मस्करी परिव्राजकः ।
वेणुपरिव्राजकयोः इति किं ? मकरो ग्राहः ।
मकरी समुद्रः ।
केचित्पुनरत्र माङि उपपदे करोतेः करणेऽच्प्रत्ययं अपि निपातयन्तिक्माङ्श्च ह्रस्वत्वं सुट्च ।
मा क्रियते येन प्रतिषिध्यते स मस्करो वेणुः ।
वेणुग्रहणं च प्रदर्शनार्थं अन्यत्र अपि भवति, मस्करो दण्डः इति ।
परिव्राजके अपि माङि उपपदे करोतेस्ताच्छील्ये इनिर्निपात्यते, माङो ह्रस्वत्वं सुट्च तथा+एव ।
माकरणशीलो मस्करी कर्मापवादित्वात्परिव्राज्क उच्यते ।
स ह्येवं आह - मा कुरुत कर्माणि शान्तिर्वः श्रेयसी इति । ।

---

1. <कास्तीराजस्तुन्दे नगरे># । । PS_६,१.१५५ । ।

______Sठाञ्ठ्JKव्_६,१.१५५ः

कास्तीर अजस्तुन्द इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये ।

ईषत्तीरमस्य, अजस्येव तुन्दमस्य इति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यं एतयोः ।
कास्तीरं नाम नगरं ।
अजस्तुन्दं नाम नगरं ।
नगरे इति किं ? कातीरं ।
अजतुनदं । ।

---

1. <कारस्करो वृक्षः># । । PS_६,१.१५६ । ।

______Sठान्ढ्JKव्_६,१.१५६ः

कारस्कर इति सुट्निपात्यते व्रक्षश्चेद्भवति ।
कारं करोति इति दिवाविभानिशाप्रभाभास्करान्त इति टप्रत्ययः ।
कारस्करो वृक्षः ।
वृक्षः इति किं ? कारकरः ।
केचिदिदं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्षः इति पठन्ति । ।

---

[#६३६]

1. <पारस्करप्रभृतीनि च सञ्ज्ञायाम्># । । PS_६,१.१५७ । ।

______Sठान्ढ्JKव्_६,१.१५७ः

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते सञ्ज्ञायां विषये ।
पारस्करो देशः ।
कारस्करो वृक्षः ।
रथस्पा नदी ।
किष्कुः प्रमाणं ।
किष्किन्धा गुहा ।
तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च ।
तस्करश्चोरः ।
वृहस्पतिदेवता ।
चोरदेवतयोः इति किं ? तत्करः ।
बृहत्पतिः ।
सञ्ज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थं ।
प्रात्तुम्पतौ गवि कर्तरि ।
तुम्पतौ धातौ प्रशब्दात्परः सुट्भवति गवि कर्तरि ।
प्रस्तुम्पति गौः ।
गवि इति किं ? प्रतुम्पति वनस्पतिः ।
पारस्करप्रभृतिराकृतिगणः ।
अविहितलक्षणः सुट्पारस्करप्रभृतिषु द्रष्टव्यः ।
प्रायश्चित्तं ।
प्रायश्चित्तिः ।
यदुक्तं प्रायस्य चितिचित्तयोः सुडस्कारो वा इति तत्सङ्गृहीतं भवति । ।

1. <अनुदात्तं पदं एकवर्जम्># । । PS_६,१.१५८ । ।

______Sठा॰्JKव्_६,१.१५८ः

परिभाषा+इयं स्वरविधिविषया ।
यत्र अन्यः स्वरः उदात्तः स्वरितो वा विधीयते, तत्र अनुदात्तं पदं एकं वर्जयित्वा भवति इत्येतदुपस्थितं द्रष्टव्यं ।
अनुदात्ताच्कं अनुदात्तं ।
कः पुनरेको वर्ज्यते ? यस्य असौ स्वरो विधीयते ।
वक्ष्यति - धातोः (*६,१.१६२) अन्तः उदात्तो भवति ।
गोपायति ।
धूपायति ।
धातोरन्त्यं अचं वर्जयित्वा परिशिष्टं अनुदात्तं भवति ।
धातुस्वरं श्नाश्वरो बाधते ।
लुनाति ।
पुनाति ।
श्नाश्वरं तस्स्वरः ।
लुनीतः ।
पुनीतः ।
तस्स्वरमांस्वरः ।
लुनीतस्तरां ।
पुनीतस्तरां ।
आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थं एकवर्जं पदस्वरः । ।
आगमस्य - चितुरनुडुहोरामुदात्तः (*७,१.९८) ।
चत्वारः ।
अनड्वाहः ।
आगमस्वरः प्रकृतिस्वरं बाधते ।
विकारस्य - अस्थनि, दधनि इत्यनङ्स्वरः प्रकृतिस्वरं बाधते ।
प्रकृतेः - गोपायति ।
धूपायति ।
प्रकृतिस्वरः प्रत्ययस्वरं बाधते ।
प्रत्ययस्य - कर्तव्यं ।
हर्तव्यं ।
प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः ।
परनित्यान्तरङ्गापवादैः स्वरैर्व्यावस्था सतिशिष्टेन च ।
यो हि यस्मिन्सति शिष्यते स तस्य बाधको भवति ।
तथा हि - गोपायति इत्यत्र धातुस्वरापवादः प्रत्ययस्वरः, तेन+एव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद्बाध्यते ।
कार्ष्णोत्तरासङ्गपुत्रः इत्यत्र च समासस्वरापवादो बहुव्रिहिस्वरः सतिशिष्टेन समासान्तोदात्तत्वेन वाध्यते ।
विकरणस्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वरं न बाधते ।
लुनीतः इति तस एव स्वरो भवति ।
विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यं ।
अतिस्रः इत्यत्र तिसृभ्यो जसः (*६,१.१६६) इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते ।

[#६३७]

विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यं ।
अचत्वारः, अनन्ड्वाहः इति ।
यस्य विभक्तिर्निमित्तमामः, तस्य यदुदात्तत्वं तनप्रस्वरेण बाद्यते ।
पदग्रहनं किं ? देवदत्त गामभ्याज शुक्लां इति वाक्ये हि प्रतिपदं स्वरःपृथग्भवति ।
परिमाणार्थं च+इदं पदग्रहणं पदाधिकारस्य निवृत्तिं करोति ।
तेन प्रागेव पदव्यपदेशात्स्वरविधिसमकाले एव शिष्टस्य अनुदात्तत्वं भवति ।
तथा च कुवल्या विकारः कौवलं इत्यत्र अनुदात्तादिलक्षणोऽञ्सिद्धो भवति ।

तथा गर्भिणीशब्दश्च अनुदात्तादिलक्षणस्य अञो बाधनर्थं भिक्षादिषु पठ्यते।
कुवलगर्भशब्दौ आद्युदात्तौ।।

---

1. <कर्ष-आत्वतो घञोऽन्त उदात्तः>#।। PS_६,१.१५९।।

_______Sठान्ठ्JKव्_६,१.१५९ः

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति।
कर्षः।
पाकः।
त्यागः।
रागः।
दायः।
धायः।
ञ्नित्यादिर्नित्यं (*६,१.१९७) इत्यस्य अपवादः।
कर्षः इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः।
तौदादिकस्य घञन्तस्य कर्षः इत्याद्युदात्तः एव भवति।।

---

1. <उच्छादीनां च>#।। PS_६,१.१६०।।

_______Sठान्ठ्JKव्_६,१.१६०ः

उच्छ इत्येवं आदीनां अन्त उदात्तो भवति।
उञ्छः, म्लेच्छः, जञ्जः, जल्पः एते घञन्ताः इति ञित्स्वरः प्राप्तः।
जपः, व्यधः इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः।
केचित्तु वधः इति पठन्ति।
युगः।
युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनं इदं इष्यते।
कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगः अन्यत्र हि योगः एव भवति।
गरो दूष्येऽबन्तः।
गरशब्दोऽबन्तः, स दूष्य एव अन्तोदात्तः।
गरो विषं।
अन्यत्राद्युदात्त एव।
वेदवेगवेष्टबन्धाः करणो।
हलश्च (*३,३.१२१) इति घञन्ता एते करणोऽन्तोदात्ता भवन्ति।
भावे आद्युदात्ता एव।
स्तुयुद्रुवश्छन्दसि।
उपसमस्तार्थं एतथ्।
परिष्टुथ्।
संयुथ्।
परिद्रुथ्।
वर्तनिः स्तोत्रे।
स्तोत्रं साम।
तत्स्थो वर्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः।
श्वभ्रे दरः।

श्वभ्रेऽभिधेये दरशब्दोऽन्तोदत्तः, अन्यत्राबन्तत्वादाद्युदात्तः।
साम्बतापौ भावगर्हायां।
अन्तोदातौ अन्यत्राद्युदात्तौ।
उत्तमशश्वत्तमौ सर्वत्र।
केचित्तु भावगर्हायां इत्यत्र अपि अनुवर्तयन्ति।
भक्षमन्थभोगदेहाः एते घञन्ताः।
भक्षिर्ण्यन्तोऽपि घञन्त एव, एरच्(*३,३.५६) अण्यन्तानां इति वचनात्।।

---

[#६३८]

1. <अनुदात्तस्य च यत्र+उदात्तलोपः>#।। PS_६,१.१६१।।

______Sठान्ढ्JKव्_६,१.१६१ः

उदात्तः इति वर्तते।
यस्मिन्ननुदात्ते परतः उदात्तो लुप्यते तस्य अनुदात्तस्यादिरुदात्तो भवति।
कुमार ई कुमारी।
कुमारशब्दोऽन्तोदात्तः, तस्य ङीप्यनुदाते उदात्तो लुप्यते।
अनुदात्तो ङीपुदात्तः।
भस्य टेर्लोपः (*७,१.८८)।
पथः।
पथा।
पथे।
पथिन्शब्दोऽन्तोदात्तः।
कुमुदनडवेतसेभ्यो ड्मतुप्।
कुमुद्वान्।
नड्वान्।
वेतस्वान्।
कुमुदादयोऽन्तोदात्ताः।
ड्मतुबनुदात्तः।
अनुदात्तस्य इति किं? प्रासङ्गं वहति प्रासङ्ग्यः।
प्रासङ्गशब्दस्थाथादिस्वरेण अन्तोदात्तः।
तस्य यति तित्स्वरितं इति स्वरिते उदात्तो लुप्यते? न+एतदस्ति, स्वरिते हि विधीयमाने परिशिष्टं अनुदात्तम्, तत्कुत उदात्तलोपः।
तदेतदनुदात्तग्रहणमादेरनुदात्तस्य+उदात्तार्थं।
अन्तः इति हि प्रकृतत्वादन्तस्य स्यात्, मा हि धुक्षाताम्, मा हि धुक्षाथां।
यत्र इति किं? भर्गवः, भार्गवौ, भृगवः।
प्राक्सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक्।
उदात्तग्रहणं किं? बैदी और्वी।।

---

1. <धातोः>#।। PS_६,१.१६२।।

______Sठान्ढ्JKव्_६,१.१६२ः

अन्तः इत्येव।
धातोरन्त उदात्तो भवति।

पचति।
पठति।
ऊर्णोति।
गोपायति।
याति।।

---

1. <चितः># । । PS_६,१.१६३ । ।

______Sठा~ठ्JKव्_६,१.१६३ः

चितोऽन्त उदात्तो भवति।
भञ्ज-भास-मिदो घुरच्(*३,२.१६१) भङ्गुरं।
भासुरं।
मेदुरं।
आगस्त्य-कौण्डिनययोरगस्ति-कुण्डिनच्(*२,४.७०)।
कुण्डिनाः।
चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्य अन्त उदात्त इष्यते।
बहुपटुः।
उच्चकैः।।

---

1. <तद्धितस्य># । । PS_६,१.१६४ । ।

______Sठा~ठ्JKव्_६,१.१६४ः

चितः इत्येव।
चितस्तद्धितस्य अन्त उदात्तो भवति।
गोत्रे कुञ्ज-आदिभ्यश्च्फञ्(*४,१.९८) - कौञ्जायनाः।
मौञ्जायनाः।
किं अर्थं इदं ? परं अपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वं एव यथा स्यादिति।।

---

1. <कितः># । । PS_६,१.१६५ । ।

______Sठा~ठ्JKव्_६,१.१६५ः
तद्धितस्य इत्येव।
तद्धितस्य कितोऽन्त उदात्तो भवति।
नडादिभ्यः फक्(*४,१.९९) - नाडायनः।
चारायणः।
प्राग्वहतेष्ठक्(*४,४.१) - आक्षिकः।
शालाकिकः।।

---

[#६३९]

1. <तिसृभ्यो जसः># । । PS_६,१.१६६ । ।

_______Sठाव्ठ्JKव्_६,१.१६६:

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति ।
तिस्रस्तिष्ठन्ति ।
उदात्त-स्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इत्यस्य अपवादः ।
शसि उदात्तयणो हल्-पूर्वात्(*६,१.१७४) इति सिद्धेऽन्यत्र बहुवचने षट्त्रिचतुर्भ्यो हलादिः (*६,१.१७९) इति विधानात्जसेव लभ्यते इति जस्ग्रहणं उपसमस्तार्थं एके इच्छन्ति अतितिस्त्रौ इत्यत्र स्वरो मा भूतिति । ।

---

1. <चतुरः शसि># । । PS_६,१.१६७ । ।

_______Sठाव्ठ्JKव्_६,१.१६७:

चतुरः शसि परतोऽन्त उदात्तो भवति ।
चतुरः पश्य ।
चतस्रादेशे आद्युदात्तनिपातनाद्यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति चतस्रः पश्य इति । ।

---

1. <सावेक-अचस्तृतीया-आदिर्विभक्तिः># । । PS_६,१.१६८ । ।

_______Sठाव्ठ्JKव्_६,१.१६८:

सौ इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणं ।
तत्र सौ य एकाच्तस्मत्परा तृतीयादिर्विभक्तिरुदात्ता भवति ।
वाचा ।
वाग्भ्यां ।
वाग्भिः ।
वाग्भ्यः ।
याता ।
यादभ्यां ।
याद्भिः ।
सौ इति किं ? राज्ञा ।
रज्ञे ।
एकाचः इति किं ? हरिणा ।
गरिणा ।
राजसु ।
तृतीयादिः इति किं ? वाचौ ।

वाचः ।
विभक्तिः इति किं ? वाक्तरा ।
वाक्तमा ।
सप्तमीबहुवचनस्य ग्रहणादिह न भवति त्वया, त्वयि इति । ।

---

1. <अन्त-उदात्तादुत्तरपदादन्यतरस्यां अनित्यसमासे># । । PS_६,१.१६९ । ।

______Sठाऱ्ठ्JKव्_६,१.१६९ः

एकाचः इति वर्तते, तृतीयादिर्विभक्तिरिति च ।
नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते ।
नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदं अन्तोदात्तं एकाच्च तस्मात्परा तृतीयादिर्विभक्तिरन्यतरस्यां उदात्ता भवति ।
परमवाच, परमवाचा ।
परमवाचे, परमवाचे ।
परमत्वचा, पर्मत्वचा ।
परमत्वचे, परमत्वचे ।
यदा विभक्तिरुदात्ता न भवति, तदा समासान्तोदात्तत्वं एव ।
अन्तोदात्तातिति किं ? अवाचा ।
सुवाचा ।
सुत्वचा ।
तत्पुरुषोऽयं ।
तत्र तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्य्-उपमान. अव्यय्य (*६,-२.२.) इति पूर्वपदप्रकृतिस्वरः ।
उत्तरपदग्रहणं एकाच्त्वेन+उत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणं एतत्स्याथ् ।
तत्र शुनः ऊर्क, श्वोर्जा इत्यत्र+एव अयं विधिः स्याथ् ।
अनित्यसमासे इति किं ।
अग्निचिता ।
सोमसुता उपपदं अतिङ्(*२,२.१९) इत्ययं नित्याधिकारे समासो विधीयते ।
तत्र गतिकारक-उपपदात्कृत्(*६,२.१३९) इत्युत्तरपदप्रकृतिस्वरेन चित्शब्दः उदात्तः ।
यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः, अवाचा ब्राह्मणेन, सुबाचा ब्राह्मणेन इति ।
बहुव्रीहौ नञ्सुभ्यां (*६,२.१७२) इत्युत्तरपदान्त-उदात्ततवं भवति । ।

---

[#६४०]

1. <अञ्चेश्छन्दस्यसर्वनामस्थानम्># । । PS_६,१.१७० । ।

______Sठाऱ्ठ्JKव्_६,१.१७०ः

अञ्चेः परा असर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये ।
इन्द्रो दधीचो अस्थभिः ।
चौ इति पूर्वपदान्तोदात्तत्वं प्राप्तं ।
तृतीयादिः इति वर्तमानेन्शसोऽपि परिग्रहार्थं असर्वनामस्थानग्रहणं ।
इह अपि यथा स्यात्, प्रतीचो बाहून्प्रतिभङ्ग्ध्येषां इति । ।

---

1. <ऊङ्-इदं-पदाद्य्-अप्-पुम्-रै-द्युभ्यः># । । PS_६,१.१७१ । ।

_______Sठान्ठ्JKव्_६,१.१७१ः
ऊटः इदं पदादि अप्पुं रै दिवित्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति ।
ऊटः - प्रष्टौहः ।
प्रष्ठौहा ।
ऊठ्युपधाग्रहणं कर्तव्यं ।
इह मा भूत्, अक्षद्युवा ।
अक्षद्युवे ।
इदं - आभ्यां ।
एभिः ।
अन्तोदात्तातित्यधिकारादन्वादेशे न भवति, अथो आभ्यां निपुणमधीतं इति ।
पदादयः पद्दन्नोमास (*६,१.६३) इत्येवं आदयो निश्पर्यन्ता इह गृह्यन्ते ।
नि पदश्चतुरो जहि ।
या दतो धावते ।
असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति ।
ग्रीवायां बद्धो अपि कक्ष आसनि ।
मत्स्यं न दीन उदनि क्षियन्तं ।
अप्- अपः पश्य ।
अद्भिः ।
अद्भ्यः ।
पुं - पुंसः ।
पुम्भ्यां ।
पुम्भ्यः ।
पुंसा ।
पुंसे ।
रै - रायः पश्य ।
राभ्यां ।
राभिः ।
दिव्- दिवः पश्य ।
दिवा ।
दिवे । ।

---

1. <अष्टनो दीर्घात्># । । PS_६,१.१७२ । ।

_______Sठान्ठ्JKव्_६,१.१७२ः
अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति ।
अष्टाभिः ।
अष्टाभ्यः ।
अष्टासु ।
घृतादिपाठातष्टन्शब्दोऽन्तोदात्तः, तत्र ज्ञल्युपोत्तमं (*६,१.१८०) इत्यस्य अपवादो विभक्तिरेव+उदात्तत्वं विधीयते ।
दीर्घातिति किं ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत ।
इदं एव दीर्घग्रहणं अष्टन आत्त्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्सञ्ज्ञां ज्ञापयति ।
अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः ।
स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन । ।

---

[#६४१]

1. <शतुरनुमो नद्य्-अज्-आदी># । । PS_६,१.१७३ । ।

_______Sठाऱ्ठ्JKव्_६,१.१७३ः

अद्न्तोदात्तातिति वर्तते ।
अनुं यः शतृप्रत्ययस्तदन्तात्परा नदी अजादिर्विभक्तिरसर्वनामस्थानं उदात्ता भवति ।
तुदती ।
नुदती ।
लुनती ।
पुनती ।
तुदता ।
लुनता ।
पुनता ।
अनुमः ।
इति किं ? तुदन्ती ।
नुदन्ती ।
अत्र अप्युपदेशातिति लसार्वधातुकादनुदात्तत्वे एकादेशः, तस्य एकादेश उदात्तेन+उदात्तः (*८,२.५) इत्युदात्ततत्वं , तस्य पूर्वत्र असिद्धत्वं न+इष्यते इति शत्रन्तं अन्तोदात्तं भवति ।
नद्यजादी इति किं ? तुदद्भ्यां ।
नुदद्भ्यां ।
तुदद्भिः ।
अन्तोदात्तातित्येव, ददती ।
दधतः ।
अभ्यस्तानां आदिः (*६,१.१८९) इत्याद्युदात्तवेतौ ।
बृहन्महतोरुपसङ्ख्यानं ।
बृहती ।
महती ।
बृहता ।
महता । ।

---

1. <उदात्तयणो हल्पूर्वात्># । । PS_६,१.१७४ । ।

_______Sठाऱ्ठ्JKव्_६,१.१७४ः

उदात्तस्थाने यो यण्हलपूर्वस्तस्मात्परा नदी अजादिर्या असर्वनामविद्भक्तिरुदात्ता भवति ।
कर्त्री ।
हर्त्री ।
प्रलवित्री ।
प्रसवित्री ।
कर्त्रा ।
हर्त्रा ।
प्रलवित्रा ।
प्रसवित्रा ।

तृजन्ता एतेऽन्तोदात्ताः ।
उदात्तग्रहणं किं ? कर्त्री ।
हर्त्री ।
कर्त्रा ।
हर्त्रा ।
तृन्नन्तोऽयं आद्युदात्तः ।
हल्पूर्वातिति किं ? बहुतितवा ब्राह्मण्या ।
नकारग्रहणं कर्तव्यं ।
वाक्पत्नी इयं कन्या । ।

---

1. <न+उङ्-धात्वोः># । । PS_६,१.१७५ । ।

_______Sठाञ्ठ्JKव्_६,१.१७५ः

ऊङो धातोश्च य उदात्तयण्हलपूर्वः, तस्मात्परा तृतीयादिर्विभक्तिर्न+उदात्ता भवति ।
ब्रह्मबन्ध्वा ।
ब्रह्मबन्ध्वे ।
वीरबन्ध्वा ।
वीरबन्ध्वे ।
ऊङ्प्रत्ययस्वरेण उदात्तः ।
तेन सह य एकादेशः सोऽप्युदात्तः इति उदात्तयण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इति विभक्तिः स्वर्यते ।
धातुयणः खल्वपि - सकृल्ल्वा ।
सकृल्ल्वे ।
खलप्वे ।
क्विबन्दतस्य कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तस्य ओः सुपि (*६,४.८३) यणादेशः । ।

---

1. <ह्रस्व-नुड्भ्यां मतुप्># । । PS_६,१.१७६ । ।

_______Sठाञ्ठ्JKव्_६,१.१७६ः

अन्तोदात्तातित्येव ।
ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तो भवति ।
अग्निमाथ् ।
वायुमान् ।
कर्तृमान् ।
हर्तृमान् ।
नुटः खल्वपि - अक्षण्वता ।
शीर्षण्वता ।
अन्तोदात्तातित्येव, वसुमान् ।
वसुशब्द आद्युदात्तः, तस्मान्मतुबनुदात्त एव भवति ।
अत्र च स्वरविधौ व्यञ्जनं अविद्यमानवतित्येषा परिभाषा न अश्रीयते नुड्ग्रहणात्, तेन मरुत्वानित्यत्र न भवति ।
[#६४२]

रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यं ।
आरेवान् ।
त्रेश्च प्रतिषेधो वक्तव्यः ।

त्रिवतीर्याज्यानुवाक्या भवति इति ।।

---

1. <नां अन्यतरस्याम्># ।। PS_६,१.१७७ ।।

_______Sठाञ्ठ्JKव्_६,१.१७७ः

ह्रस्वग्रहणां अनुवर्तते, मतुब्-ग्रहणं च ।
तेन मतुपा ह्रस्वो विशेष्यते ।
मतुपि यो ह्रस्वः, तदन्तादन्तोदात्तादन्यतरस्यां नां उदात्तो भवति ।
अग्नीनाम्, अग्नीनां ।
वायूनां वायूनां ।
कर्तॄणाम्, कर्तॄणां ।
मतुपा ह्रस्वविशेषनं किं ? भूतपूर्वेऽपि ह्रस्वे यथा स्याथ् ।
अन्यथा हि साम्प्रतिक एव स्यात्, तिसृणाम्, चतसृणां इति ।
सनुट्कस्य ग्रहणं किं ? धेन्वां ।
शकट्यां ।
उदात्तयणो हल्पूर्वात्(*६,१.१७४) इत्ययं अन्तोदात्तः ।
ह्रस्वातित्येव, कुमारीणां ।
अन्तोदात्तातित्येव, त्रपूणां ।
वसूनां ।।

---

1. <ङ्याश्छन्दसि बहुलम्># ।। PS_६,१.१७८ ।।

_______Sठाञ्ठ्JKव्_६,१.१७८ः

ङ्यन्तात्छन्दसि विषये नामुदात्तो भवति बहुलं ।
देवसेनानामभिभञ्जतीनां ।
बह्वीनां पिता ।
न च भवति, नदीनां पारे ।
जयनतीनां मरुतः ।।

---

1. <षट्त्रिचतुर्भ्यो हलादिः># ।। PS_६,१.१७९ ।।

_______Sठाञ्ठ्JKव्_६,१.१७९ः

अन्तोदात्तातित्येतन्निवृत्तं ।
षट्सञ्ज्जाकेभ्यः, त्रि चतुरित्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति ।
षड्भिः ।
षड्भ्यः ।

पञ्चानां ।
षण्णां ।
सप्तानां ।
त्रि - त्रिभिः ।
तिर्भ्यः ।
त्रयाणां ।
चतुर्- चतुर्भ्यः ।
चतुर्णा ।
हलादिः इति किं ? चतस्रः पश्य । ।

---

1. <ज़ल्युपोत्तमम्># । । PS_६,१.१८० । ।

______Sठाञ्ठ्JKव्_६,१.१८०ः

षट्त्रिचतुर्भ्यो या ज़ालादिर्विभक्तिः तदन्ते पदे उपोत्तमं उदात्तं भवति ।
त्रिप्रभृतीनां अन्त्यं उत्तमम्, तत्समीपे च यत्तदुपोत्तमं ।
पञ्चभिः तपस्तपति ।
सप्तभिः पराञ्जयति ।
तिसृभिश्च वहसे त्रिंशता ।
चत्रुभिः ।
ज़लि इति किं ? पञ्चानां ।
सप्तानां ।
उपोत्तमं इति किं ? षड्भिः ।
षड्भ्यः । ।

---

[#६४३]

1. <विभाषा भाषायाम्># । । PS_६,१.१८१ । ।

______Sठाञ्ठ्JKव्_६,१.१८१ः

षट्-त्रि-चतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तमं उदात्तं भवति विभाषा भषायां विषये ।
पञ्चभिः, पञ्चभिः ।
सप्तभिः, सप्तभिः ।
तिसृभिः, तिसृभिः ।
चतुर्भिः, चतुर्भिः । ।

---

1. <न गो-श्वन्-सावर्ण-राड्-अङ्-क्रुङ्-कृद्भ्यः># । । PS_६,१.१८२ । ।

______Sठान्ठ्JKव्_६,१.१८२ः
गो श्वन्, साववर्णः सौ प्रथमैकवचने यदवर्णान्तम्, राडङ्क्रुङ्कृदित्येतेभ्यो यदुक्तं तन्न भवति।
गवा, गवे, गोभ्यां इति।
सावेकाचस्तृतीयादिर्विभक्तिः (*६,१.१६८) इति प्राप्तिः प्रतिषिध्यते।
सुगुना, सुगवे, सुगुभ्यां।
अन्तोदात्तादुत्तरपदातिति प्राप्तिः।
श्वन्- शुना, शुने, श्वभ्यां।
परमशुना, परमशुने, परमश्वभ्यां।
पूर्ववत्प्राप्तिः।
साववर्णः - सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणं।
येभ्यः।
तेभ्यः।
केभ्यः।
राट्- राजतिः क्विबन्तः।
राजा।
परमराजः।
अङ्- अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्र अस्य नलोपो न अस्ति तत्र प्रतिषेधो यथा स्याथ्।
नाञ्चेः पूजायां (*६,४.६०)।
इति प्रतिषिध्यते नलोपः।
प्राञ्चा।
प्राङ्भ्यां।
नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वं।
प्राचा।
प्राचे।
प्राग्भ्यां।
क्रुङ्क्विन्नन्त एव -क्रुञ्चा।
परमक्रुञ्चा।
कृत्- करोति कृतिर्वा क्विबन्तः।
कृता।
परमकृता।।

---

1. <दिवो झल्>#।। PS_६,१.१८३।।

______Sठान्ठ्JKव्_६,१.१८३ः
दिवः परा झलादिर्विभक्तिः न+उदात्ता भवति।
द्युभ्यां।
द्युभिः।
सावेकाचः (*६,१.१६८) इति ऊङ्-इदं-पदाद्य्-अप्-पुम्-रै-द्युभ्यः (*६,१.१७१) इति वा प्राप्तिः प्रतिषिध्यते।
झलि इति किं? दिवा।।

---

1. <नृ च अन्यतरस्याम्>#।। PS_६,१.१८४।।

______Sठान्ठ्JKव्_६,१.१८४ः

नृ इत्येतस्मात्परा झलादिर्विभक्तिः अन्यतरस्यां न+उदात्ता भवति ।
नृभ्यां ।
नृभिः ।
नृभ्यः ।
नृषु झलित्येव -न्रा ।
न्रे । ।

---

1. <तित्स्वरितम्># । । PS_६,१.१८५ । ।

______Sठाऱ्ठ्JKव्_६,१.१८५ः

तित्स्वरितं भवति ।
सन्नन्ताद्यत्- चिकीर्ष्यं ।
जिहीर्ष्यं ।
ऋ-हलोर्ण्यत्(*३,१.१२४) - कार्यं ।
हार्यं ।
प्रत्ययाद्य्-उदात्तस्य अपवादः । ।

---

[#६४४]

1. <तास्य्-अनुदातेन्-ङिद्-अद्-उपदेशाल्ल-सार्वधातुकं अनुदात्तं अह्न्विङोः># । । PS_६,१.१८६ । ।

______Sठाऱ्ठ्JKव्_६,१.१८६ः

तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात्परं लसार्वधातुकं अनुदात्तं च भवति ह्नुङिङित्येताभ्यां परं वर्जयित्वा ।
तासेस्तावत्- कर्ता, कर्तारौ, कर्तारः ।
प्रत्ययस्वरापवादोऽयं ।
अनुदात्तेतः - आस - आस्ते ।
वस - वस्ते ।
ङित्- षूङ्- सूते ।
शीङ्- शेते ।
अदुपदेशात्- तुदतः ।
नुदतः ।
पचतः ।
पठतः ।
अनुबन्धस्य अनैकान्तिकत्वादकारान्तोपदेश एव शप् ।
पचमानः ।
यजमानः ।
यद्यत्र मुककारमात्रस्य स्यात्तदा लसार्वधातुकं अदुपदेशादनन्तरं इति सिद्धो निघातः ।
अथाकारान्तस्य अङ्गस्य, तथा अपि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वातसिद्धः इति सिद्धं ।
चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद्बाध्यते ।
तास्यादिभ्यः इति किं ? चिनुतः ।
चिन्वन्ति ।
ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य ।
उपदेशग्रहणं किं ? इह च यथा स्यात्, पचावः, पचामः इति ।

इह च मा भूत्, हतो, हथः इति ।
लग्रहणं किं ? कतीहपचमानाः ।
सार्वधातुकं इति किं ? शिश्ये, शिश्याते, शिशियरे ।
अह्निवङोः इति किं ? हनुते ।
यदधीते । ।

---

1. <आदिः सिचोऽन्यतरस्याम्># । । PS_६,१.१८७ । ।

______Sठाऱ्ठ्JKव्_६,१.१८७ः

उदात्तः इति वर्तते ।
सिजन्तस्य अन्यतरस्यां आदिरुदात्तो भवति ।
मा हि कार्ष्टाम्, मा हि कार्ष्टां ।
एकोऽत्र आद्युदात्तः, अपरोऽन्तोदात्तः ।
मा हि लाविष्टाम्, मा हि लाविष्टां ।
एकोऽत्र आद्युदात्तः, अपरो मद्योदात्तः ।
सिचश्चित्करणादागमानुदात्तत्वं हि वाध्यते ।
सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यं ।
मा हि कर्षम्, मा हि कार्षं ।
अनिटः इति किं ? मा हि लाविसं ।
मध्योदात्त एव आद्युदात्ताभावपक्षे भवति । ।

---

1. <स्वपादि-हिंसां अच्यनिटि># । । PS_६,१.१८८ । ।

______Sठाऱ्ठ्JKव्_६,१.१८८ः

लसार्वधातुकग्रहणं यदनुवर्तते तदचि अनिटि इति सम्बन्धादिह सप्तम्यन्तं उपजायते स्वपादिरावृत्करणाथ् ।
स्वपादीनां हिंसेश्च अजादवनिटि लसार्वधातुके परतोऽन्यतरस्यां आदिरुदात्तो भवति ।
स्वपन्ति, स्वपन्ति ।
श्वसन्ति, श्वसन्ति ।
हिंसेः खल्वपि - हिंसन्ति, हिंसन्ति ।
प्रत्ययस्वरेण पक्षे मध्योदात्तः ।
अचि इति किं ? स्वप्याथ् ।
हिंस्याथ् ।
अनिटि इति किं ? स्वपितः ।
श्वसितः ।
ङित्यजादावयं विधिरिष्यते ।
इह न भवति, स्वपानि, हिनसानि । ।

---

[#६४५]

1. <अभ्यस्तानां आदिः># । । PS_६,१.१८९ । ।

______Sठा~ठ्JKव्_६,१.१८९ः

अभ्यस्तानां अजादावनिति लसार्वधातुके परतः आदिरुदात्तो भवति ।
ददति ।
ददतु ।
अधति ।
दधतु ।
जक्षति ।
जक्षतु ।
जाग्रति ।
जाग्रतु ।
अचि इत्येव, दद्याथ् ।
अनिटि इत्येव, जक्षितः ।
आदिः इति वर्तमाने पुनरादिग्रहणं नित्यार्थं । ।

---

1. <अनुदाते च># । । PS_६,१.१९० । ।

______Sठा~ठ्JKव्_६,१.१९०ः

अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानां आदिरुदात्तो भवति ।
अनजाद्यर्थ आरम्भः ।
ददाति ।
जहाति ।
दधाति ।
जहीते ।
मिमीते ।
अनुदात्ते इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ।
मा हि स्म दधाथ् ।
दधात्यत्र । ।

---

1. <सर्वस्य सुपि># । । PS_६,१.१९१ । ।

______Sठा~ठ्JKव्_६,१.१९१ः

सर्वशब्दस्य सुपि परतः आद्युदात्तो भवति ।
सर्वः, सर्वौ, सर्वे ।
सुपि इति किं ? सर्वतरः ।
सर्वतमः ।
प्रत्ययलक्षणेऽप्ययं स्वर इष्यते सर्वस्तोमः इति ।
सर्वस्वरोऽनकच्कस्य+इति वक्तव्यं ।
सर्वकः ।
चित्स्वरेण अन्तोदात्तो भवति । ।

---

1. <भी-ह्री-भृ-हु-मद-जन-धन-दरिद्रा-जागरां प्रत्ययात्पूर्वं पिति># । । PS_६,१.१९२ । ।

_______Sठाऽ्ठ्JKव्_६,१.१९२ः

भी ह्री भृ हु मद जन धन दरिद्रा जागृ इत्येतेषां अभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वं उदात्तं भवति ।
विभेति ।
जिह्रेति ।
विभर्ति ।
जुहोति ।
ममत्तु नः परिज्मा ।
मदेः बहुलं छन्दसि इति विकरणस्य श्लुः ।
जजनदिन्द्रं ।
जन जनने इत्यस्य पञ्चमे लकारे रूपं ।
धन धान्ये इत्यस्य पञ्चमे लकारे दधनथ् ।
दरिद्राति ।
जागति ।
भ्यादीनां इति किं ? ददाति ।
पिति इति किं ? दरिद्रति । ।

---

1. <लिति># । । PS_६,१.१९३ । ।

_______Sठाऽ्ठ्JKव्_६,१.१९३ः

लिति प्रत्ययात्पूर्वं उदात्तं भवति ।
चिकीर्षकः ।
जिहीर्षकः ।
भौरिकिविधं ।
भौलिकिविधं ।
ऐषुकारिभक्तं । ।

---

[#६४६]

1. <आदिर्णमुल्यन्यतरस्याम्># । । PS_६,१.१९४ । ।

_______Sठाऽ्ठ्JKव्_६,१.१९४ः

णमुलि परतोऽन्यतरस्यां आदिरुदात्तो भवति ।
लोलूयं लोलूयम्, लोलूयं लोलूयं ।
पोपूयं पोपूयम्, पोपूयं पोपूयं ।

आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः । ।

---

1. <अचः कर्तृयकि># । । PS_६,१.१९५ । ।

______Sठाञ्ठ्JKव्_६,१.१९५ः

उपदेशे इति वर्तते ।
अजन्ता ये उपदेशे धातवः तेषां कर्तृयकि अन्यतरस्यां आदिरुदात्तो भवति ।
लूयते केदारः स्वयं एव, लूयते केदारः स्वयं एव ।
स्तीर्यते केदारः स्वयं एव, स्तीर्यते केदरः स्वयं एव ।
यदा आद्युदात्तत्वं न भवति तदा लसर्वधातुकनिघाते कृते यक एव स्वरो भवति ।
जनादीनां उपदेशे एवात्वं द्रष्टव्यं ।
तत्र अप्ययं स्वर इष्यते ।
जायते स्वयं एव ।
सायते स्वयं एव ।
खायते स्वयं एव ।
अचः इति किं ? भिद्यते स्वयं एव ।
कर्तृग्रहणं किं ? लूयते केदारो देवदत्तेन । ।

---

1. <थलि च सेटीडन्तो वा># । । PS_६,१.१९६ । ।

______Sठाञ्ठ्JKव्_६,१.१९६ः

सेटि थलि इट्वा उदात्तो भवति अन्तो वा आदिर्वा अन्यतरस्यां ।
लुलविथ, लुलविथ, लुलविथ ।
यदा न+एते त्रयः स्वराः , तदा लिति प्रत्ययात्पूर्वं उदात्तं भवति ।
तेन+एते चत्वारः स्वरा पर्यायेण भवन्ति ।
सेटि इति किं ? ययाथ ।
लिति प्रत्ययात्पूर्वं उदात्तं इत्ययं एव स्वरो भवति । ।

---

1. <ञ्नित्यादिर्नित्यम्># । । PS_६,१.१९७ । ।

______Sठाञ्ठ्JKव्_६,१.१९७ः

ञिति निति च नित्यं आदिरुदात्तो भवति ।
गर्गादिभ्यो यञ्- गार्ग्यः ।
वात्स्यः ।
वासुदेव-अर्जुनाभ्यां वुन्(*४,३.९८) - वासुदेवकः ।
अर्जुनकः ।

प्रत्ययस्वरापवादोऽयं योगः ।
प्रत्ययलक्षणं अत्र न+इष्यते, तेन गर्गाः, बिदाः, चञ्चाः इत्यत्र यञि कनि च लुप्ते न भवति ।।

---

1. <आमन्त्रितस्य च># ।। PS_६,१.१९८ ।।

______Sठाञ्ठ्JKव्_६,१.१९८ः

आमन्त्रितस्य आदिरुदात्तो भवति ।
देवदत्त, देवदत्तौ, देवदत्ताः ।
अत्र कारकाद्दत्त-श्रुतयोरेव आशिषि (*६,२.१४८) ।
इति प्राप्तिर्बाध्यते ।
लुमताऽपि लुप्ते प्रत्ययलक्षणं अत्र+इष्यते, सर्पिरागच्छ, सप्तागच्छ इति ।।

---

[#६४७]

1. <पथि-मथोः सर्वनामस्थाने># ।। PS_६,१.१९९ ।।

______Sठाञ्ठ्JKव्_६,१.१९९ः

पथि-मथि-शब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेण अन्तोदात्तौ, तयोः सर्वनामस्थाने परतः आदिरुदात्तो भवति ।
पन्थाः, पन्थानौ, पन्थानः ।
मन्थाः, मन्थानौ, मन्थानः ।
सर्वनामस्थाने इति किं ? पथः पश्य ।
मथः पश्य ।
उदात्तनिवृत्तिस्वरेण अन्तोदात्तो भवति ।
प्रत्ययलक्षणं अत्र अपि न+इष्यते ।
पथिप्रियः इत्यत्र पूर्वपदप्रकृतिस्वरेण अन्तोदात्तः पथिशब्दः ।।

---

1. <अन्तश्च तवै युगपत्># ।। PS_६,१.२०० ।।

______Sठाञ्ठ्JKव्_६,१.२००ः

तवैप्रत्ययान्तस्य अन्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः ।
कर्तवै ।
हर्तवै ।
प्रत्ययाद्युदात्तत्वापवादः ।
युगपद्ग्रहणं पर्यायनिवृत्तयर्थं ।
एकवर्जं इति वचनाद्यौगपद्यं न स्यात् ।।

---

1. <क्षयो निवासे># । । PS_६,१.२०१ । ।

______Sठाञ्ठ्JKव्_६,१.२०१ः

क्षयशदो निवासेऽभिधेये आद्युदात्तो भवति ।
क्षियन्ति निवसन्ति अस्मिनिति क्षयः ।
पुंसि सञ्ज्ञायां घः प्रयेण (*३,३.११८) इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः ।
क्षये जागृहि प्रप्श्यन् ।
निवासे इति किं ? क्षयो वर्तते दस्यूनां ।
एरच्(*३,३.५६) इत्ययं अजन्तः । ।

---

1. <जयः करणम्># । । PS_६,१.२०२ । ।

______Sठाञ्ठ्JKव्_६,१.२०२ः

जयशब्दः करणवाची आद्युदात्तो भवति ।
जयन्ति तेन इति जयः ।
पुंसि सञ्ज्ञायां घः प्रायेण (*३,३.११८) इति घः, तस्य प्रत्ययस्वरः प्राप्तः ।
जयोऽश्वः ।
करणं इति किं ? जयो वर्तते ब्राह्मणानां ।
अत्र अपि एरच्(*३,३.५६) इत्ययं अजन्तः । ।

---

1. <वृष-आदीनां च># । । PS_६,१.२०३ । ।

______Sठाञ्ठ्JKव्_६,१.२०३ः

वृषः इत्येवं आदीनां आदिरुदात्तो भवति ।
वृषः ।
जनः ।
ज्वरः ।
ग्रहः ।
हयः ।
गयः ।
एते सर्वे पचाद्यच्प्रत्ययान्ताः ।
गयः इत्यत्र गायतेर्निपातनादेत्वं ।
नयः ।
तयः ।
अयः ।
वेदः ।
अंशः ।

अशः ।
दवः ।
एतेऽपि तथा+एव अच्प्रत्ययान्ताः ।
सूदः ।
इगुपधातिति कप्रत्ययान्तः ।
गुहा ।
भिदादिरङ्प्रत्ययान्तः ।
शमरणौ सञ्ज्ञायां सम्मतौ भावकर्मणोः ।
शमो भावे ।
रणः करमणि ।
अजन्तावेतौ निपातनाद्भावकर्मणोः भवतः ।
मन्त्रः पचाद्यजन्तः ।
शान्तिः इति क्तिजन्तः ।
कामः ।
यामः ।
घञन्तावेतौ ।
आरा ।
धारा ।
कारा ।
भिदादयः ।
वहः ।
गोचरादिषु घप्रत्ययान्तः ।
कल्पः ।
अजन्तः ।
पादः ।
घञन्तः ।
तत्र क्वचित्प्रत्ययस्वरः प्राप्तः, क्वचित्कर्षात्वतो घञोऽन्त उदात्तः (*६,१.१५९) इति ।
वृषादिराकृतिगणः ।
अविहितं आद्युदात्तत्वं वृषादिषु द्रष्टव्यं । ।

---

[#६४८]

1. <सञ्ज्ञायां उपमानम्># । । PS_६,१.२०४ । ।

_______Sठान्ठ्JKव्_६,१.२०४:

उपमानशब्दः सञ्ज्ञायां आद्युदातो भवति ।
चञ्चा ।
वध्रिका ।
खरकुटी ।
दासी ।
उपमानशब्दा एते उपमेयस्य सञ्ज्ञाः ।
तत्र इवे प्रतिकृतौ (*५,३.९६) इति यः कन्, तस्य लुम्मनुष्ये (*५,३.९८) इति लुप् ।
यद्येवं किं अर्थं इदं उच्यते प्रत्ययलक्षणेन सिद्धं आद्युदात्तत्वं ? एतदेव ज्ञापयति क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवति इति ।
तथा च पूर्वत्र+उदाहृतं ।
सञ्ज्ञायां इति किं ? अग्निर्माणवकः ।
उपमानं इति किं ? देवदत्तः । ।

---

1. <निष्ठा च द्व्यजनात्># । । PS_६,१.२०५ । ।

______Sठा-ठ्JKव्_६,१.२०५ः

निष्ठान्तं द्व्यच्सञ्ज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति ।
दत्तः ।
गुप्तः ।
बुद्धः ।
प्रत्ययस्वरापवादः ।
निष्ठा इति किं ? देवः ।
भीमः ।
द्व्यचिति किं ? चिन्तितः ।
रक्षितः ।
अनातिति किं ? त्रातः ।
आप्तः ।
सञ्ज्ञायां इति किं ? कृतं ।
हृतं । ।

---

1. <शुष्क-धृष्तौ># । । PS_६,१.२०६ । ।

______Sठा-ठ्JKव्_६,१.२०६ः

आदिः उदात्तः इति वर्तते ।
शुष्क धृष्ट इत्येतावाद्युदात्तौ भवतः ।
शुष्कः ।
धृष्टः ।
असञ्ज्ञार्थ आरम्भः । ।

---

1. <आशितः कर्ता># । । PS_६,१.२०७ । ।

______Sठा-ठ्JKव्_६,१.२०७ः

आशितशब्दः कर्तृवाचि आद्युदात्तो भवति ।
आशितो देवदत्तः ।
अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः ।
तत्र थाऽथघञ्(*६,२.१४४) इति प्राप्तः स्वरो बाध्यते ।
कर्तरि इति किं ? आशितमन्नं ।
आशितं देवदत्तेन ।
पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे । ।

---

1. <रिक्ते विभाषा># । । PS_६,१.२०८ । ।

______Sठा-ठ्JKव्_६,१.२०८ः

रिक्तशब्दे विभाष आदिरुदात्तो भवति ।
रिक्तः, रिक्तः ।
सञ्ज्ञायाम्, निष्ठा च द्व्यजनात्(*६,१.२०५) इत्यनेन पूर्वविप्रतिषेधेन नित्यं आद्युदात्तः । ।

---

1. <जुष्ट-अर्पिते च च्छन्दसि># । । PS_६,१.२०९ । ।

______Sठा-ठ्JKव्_६,१.२०९ः

जुष्ट अर्पित इति शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः ।
जुष्टः, जुष्टः ।
अर्पितः, अर्पितः ।
छन्दसि इति किं ? भाषायां प्रत्ययस्वरेण अन्तोदात्तवेतौ । ।

---

[#६४९]

1. <नित्यं मन्त्रे># । । PS_६,१.२१० । ।

______Sठा-ठ्JKव्_६,१.२१०ः

जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यं आद्युदात्ते भवतः ।
जुष्टं देवानां ।
अर्पितं पित्ḥणां ।
पूर्वेण अत्र विकल्पः प्राप्तः ।
केचिदत्र जुष्ट इत्येतदेव अनुवर्तयन्ति ।
अर्पितशब्दस्य विभाषा मन्त्रेऽपि इच्छन्ति ।
अन्तोदात्तोऽपि ह्ययं मन्त्रे पठयते, तस्मिन्साकं त्रिशता न शङ्कवोऽर्पिताः इति । ।

---

1. <युष्मद्-अस्मदोर्ङसि># । । PS_६,१.२११ । ।

______Sठा-ठ्JKव्_६,१.२११ः

युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते, तयोर्ङसि परतः आदिः उदात्तो भवति ।
तव स्वं ।
मम स्वं । ।

---

1. <ङयि च># । । PS_६,१.२१२ । ।

______Sठान्ठ्JKव्_६,१.२१२ः

युष्मदस्मदोः इति वर्तते, आदिरुदात्तः इति च ।
ङे इत्येतस्मिंश्च परतो युष्मदस्मदोः आदिरुदात्तो भवति ।
तुभ्यं ।
मह्यं ।
पृथग्योगकरणं यथासङ्ख्यशङ्कानिवृत्त्यर्थं । ।

---

1. <यतोऽनावः># । । PS_६,१.२१३ । ।

______Sठान्ठ्JKव्_६,१.२१३ः

निष्था च द्व्यजनात्(*६,१.२०५) ।
इत्यतो द्व्यज्ग्रहणं अनुवर्तते ।
यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति न चेन्नौशब्दात्परो भवति ।
अचो यत्(*३,१.९७) - च+इयं ।
जेयं ।
शरीरावयवाद्यत्(*५,१.६) - कण्ठ्यं ।
ओष्ठ्यं ।
तस्वरितं (*६,१.१८५) इत्यस्य अपवादः ।
अनावः इति किं ? नाव्यं ।
द्व्यचः इत्येव, चिकीर्ष्यं ।
ललाट्यं । ।

---

1. <ईड-वन्द-वृ-शंस-दुहां ण्यतः># । । PS_६,१.२१४ । ।

______Sठान्ठ्JKव्_६,१.२१४ः

ईड वन्द वृ शंस दुह इत्येतेषां यो ण्यत्तदन्तस्य आदिरुदात्तो भवति ।
ईड्यं ।
वन्द्यं ।
वार्यं ।
शंस्यं ।

दोहया धेनुः ।
द्व्यनुबन्धकत्वात्ण्यतो यद्ग्रहणेन ग्रहणं न अस्ति इति तित्स्वरितं (*६,१.१८५) इत्येतत्प्राप्तं ।
वार्यं इति वृङ्सम्भक्तौ इत्यस्य अयं ण्यथ् ।
क्यब्विधौ हि वृञ एव ग्रहणं इष्यते । ।

---

1. <विभाषा वेण्व्-इन्धानयोः># । । PS_६,१.२१५ । ।

_______Sठा~ठ्JKव्_६,१.२१५ः

वेणु इन्धान इत्येतयोः विभाषा आदिरुदात्तो भवति ।
वेणुः, वेणुः ।
इन्धानः, इन्धानः, इन्धानः ।
वेणुशब्दोऽयं अजिवृरीभ्यो निच्च इति णुप्रत्ययान्तो नित्वान्नित्यं आद्युदात्तः प्राप्तः ।
इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वदन्तोदात्तः ।
अथ शानजन्तस्तदा लसार्वधतुक-अनुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः ।
तदेवं इन्धाने सर्वथा अप्राप्तं उदात्तत्वं पक्षे विधीयते ।
वेणुरिव वेणुः इत्युपमानं यदा सञ्ज्ञा भवति, तदा सञ्ज्ञायां उपमानं (*६,१.२०४) इति नित्यं आद्युदात्तत्वं इष्यते । ।

---

[#६५०]

1. <त्याग-राग-हास-कुह-श्वठ-क्रथानाम्># । । PS_६,१.२१६ । ।

_______Sठा~ठ्JKव्_६,१.२१६ः

त्याग राग हास कुह श्वठ क्रथ इत्येतेषां विभाषा आदिरुदात्तो भवति ।
त्यागः तयागः ।
रागः, रागः ।
हासः, हासः ।
एते घञन्ताः, तेषां पक्षे कर्षात्वतो घञोऽन्त उदात्तः (*६,१.१५९) इत्युदात्तत्वं एव भवति ।
कुहः, कुहः ।
श्वठः, श्वठः ।
क्रथः, क्रथः ।
एते पचाद्यजन्ताः । ।

---

1. <उपोत्तमं रिति># । । PS_६,१.२१७ । ।

_______Sठा~ठ्JKव्_६,१.२१७ः

रिदन्तस्य उपोत्तमं उदात्तं भवति ।

त्रिप्रभृतीनां अन्त्यं उत्तमं तस्य समीपे यत्तदुपोत्तमं ।
करणीयं ।
हरणीयं ।
पठुजातीयः ।
मृदुजातीयः ।
प्रत्ययस्वरापवादोऽयं । ।

---

1. <चङ्यन्यतरस्याम्># । । PS_६,१.२१८ । ।

______Sठा‌ऽ्ठ्JKव्_६,१.२१८ः

चङन्तेऽन्यतरस्यां उपोत्तमं उदात्तं भवति ।
मा हि चीकरताम्, मा हि चीकरतां ।
न माङ्योगे (*६,४.७४) इत्यटि प्रतिषिद्धे हि च (*८,१.३४) इति निघातेऽदुपदेशातिति लसार्वधातुकानुदात्तत्वे इॠते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति ।
उपोत्तमग्रहणाद्व्यचो न भवति, मा हि दधत् । ।

---

1. <मतोः पूर्वमात्सञ्ज्ञायां स्त्रियाम्># । । PS_६,१.२१९ । ।

______Sठा‌ऽ्ठ्JKव्_६,१.२१९ः

मतोः पूर्वः आकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गे सञ्ज्ञा भवति ।
उदुम्बरावती ।
पुष्करावती ।
वीरणावती ।
शरावती ।
शरादीनां च (*६,३.१२०) इति दीर्घः ।
आतिति किं ? इक्षुमती ।
द्रुमवती ।
सञ्ज्ञायं इति किं ? खट्वावती ।
स्त्रियां इति किं ? शरावान् ।
मतोः इति किं ? गवादिनी । ।

---

1. <अन्तोऽवत्याः># । । PS_६,१.२२० । ।

______Sठा‌ऽ्ठ्JKव्_६,१.२२०ः

सञ्ज्ञायां इत्येव ।
अवतीशब्दान्तस्य सञ्ज्ञायां अन्त उदात्तो भवति ।
अजिरवती ।
खदिरवती ।

हंसवती ।
कारण्डवती ।
ङीपः पित्त्वादनुदात्तत्वं प्राप्तं ।
अवत्याः इति किं उच्यते, न वत्या इत्येवं उच्येत ? न+एवं शक्यं इह अपि स्यात्, राजवती ।
स्वरविधौ नलोपस्य असिद्धत्वान्न अयं अवतीशब्दः ।
वत्वं पुनराश्रयात्सिद्धं । ।

---

1. <ईवत्याः># । । PS_६,१.२२१ । ।

______Sठान्ठ्JKव्_६,१.२२१ः

ईवतीशब्दान्तस्य अन्त उदातो भवति स्त्रियां सञ्ज्ञायां विषये ।
अहीवती ।
कृषीवती ।
मुनीवती । ।

---

[#६५१]

1. <चौ># । । PS_६,१.२२२ । ।

______Sठान्ठ्JKव्_६,१.२२२ः

चौ इति अञ्चतिर्लुप्तनकारो गृह्यते ।
तस्मिन्परतः पूर्वस्य अन्त उदात्तो भवति ।
दधीचा ।
दधीचे ।
मधूचः पश्य ।
मधूचा ।
मधूचे ।
उदात्तनिवृत्तिस्वरापवादोऽयं ।
चावतद्धित इति वक्तव्यं ।
दाधीचः ।
माधूचः ।
प्रत्ययस्वर एव अत्र भवति । ।

---

1. <समासस्य># । । PS_६,१.२२३ । ।

______Sठान्ठ्JKव्_६,१.२२३ः

समासस्यन्त उदात्तो भवति ।

[#६५०]

राजपुरुषः ।
ब्रहमणकम्बलः ।
कन्यास्वनः ।
पटहशब्दः ।
नदीघोषः ।
राजपृषथ् ।
ब्राहमणसमिथ् ।
स्वरविधौ व्यञ्जनमविद्यमानवतिति हलन्तेष्वप्यन्तोदात्तत्वं भवति ।
नानापदस्वरस्य अपवादः । ।
इति काशिकायां वृत्तौ षष्ठाध्यायस्य प्रथमाः पादः । ।

---

[#६५२]

षष्ठाध्यायस्य द्वितीयः पादः ।

---

1. <बहुव्रीहौ प्रकृत्या पूर्वपदम्># । । PS_६,२.१ । ।

______Sठाञ्ठ्JKव्_६,२.१ः

पूर्वपदग्रहणं अत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्तते ।
बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति, स्वभावेन अवतिष्ठते, न विकारमनुदात्तत्वं आपद्यते ।
समासान्तोदात्तत्वे हि सति अनुदात्तं पदं एकवर्जं (*६,१.१५८) इति सोऽनुदात्तः स्यातिति समासान्तोदात्तत्वापवादोऽयं आरभ्यते ।
कार्ष्णोत्तरासङ्गाः ।
कृष्णो मृगः तस्य विकारः कार्ष्णः, प्राणि-रजत-आदिभ्योऽञ्(*४,३.१५४) इति अञ्प्रत्ययान्तो ञ्नित्स्वरेण आद्युदात्तः ।
यूपवलजः ।
यूपशब्दः उणादिषु कुसुयुभ्यश्च इति पप्रत्ययान्तः ।
तत्र च दीर्घः इति निदिति च वर्तते तेन आद्युदात्तः ।
ब्रहमचारिपरिस्कन्दः ।
ब्रहमचारिशब्दः कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः ।
स्नातकपुत्रः ।
स्नातकशब्दः कन्प्रत्ययान्तो नित्स्वरेण आद्युदात्तः ।
अध्यापकपुत्रः ।
लित्स्वरेण अध्यापकशब्दो मध्योदात्तः ।
श्रोत्रियपुत्रः ।
श्रोत्रियशब्दो नित्वादाद्युदात्तः ।
मन्ष्यनाथः ।
मनुष्यशब्दः तित्स्वरितं (*६,१.१८५) इति स्वरितान्तः ।
उदात्तग्रहणं स्वरितग्रहणं च अत्र अनुवर्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव न अस्ति इति समासान्तोदात्तत्वं भवति ।
समाभ्यागः इति समशब्दो हि सर्वानुदातः । ।

---

1. <तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्य्-उपमान-अव्यय-द्वितीया-कृत्याः># । । PS_६,२.२ । ।

______Sठाऱ्ठJKव्_६,२.२ः

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तं उपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति ।
तुल्यार्थ - तुल्यार्थ - तुल्यश्वेतः ।
तुल्यलोहितः ।
तुल्यमहान् ।
सदृक्श्वेतः ।
सदृशमहान् ।
एते कृत्य-तुल्य-आख्या अजात्या (*२,१.६८) इति कर्मधरयाः ।
तत्र तुल्यशब्दः यतोऽनावः (*६,१.२१३) इत्याद्युदात्तः ।
सदृक्शब्दः समानान्ययोश्च इति क्विन्प्रत्ययान्तः, कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः ।
सदृशशब्दोऽपि कञन्तो मध्योदात्तः ।
तुल्यार्थ ।
तृतीया - शङ्कुलया खण्डः शङ्कुलाखण्डः ।
किरिणा काणः किरिकाणः ।
शङ्कुपूर्वाल्लातेः घञर्थे कविधानं इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः ।
किरिशब्दोऽपि किरतेः क्éग्éश्éप्éकुटि भिदिच्छिदिभ्यश्च इति इकारप्रत्ययः किदौणादिकः, तेन असावन्तोदात्तः ।
तृतीया ।
सप्तमी - अक्षेषु शौण्डः अक्षशौण्डः ।
पानशौण्डः ।
अशेर्देवने इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः ।
पानशब्दो ल्युडन्तो लित्स्वरेण आद्युदात्तः ।
सप्तमी ।

[#६५३]

उपमान - शस्त्रीश्यामा ।
कुमुदश्येनी ।
हंसगद्गदा ।
न्यग्रोधपरिमण्डला ।
दूर्वाकाण्डश्यामा ।
शरकाण्डगौरी ।
उपमानानि सामान्यवचनैः (*२,१.५५) इति समासः ।
शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः ।
कुमुदशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात्कप्रत्ययान्तः, नब्विषयस्य अनिसन्तस्य इति वा आद्युदात्तः ।
हंसशब्दो व्éत्éविदिहनिकमिकशिभ्यः सः इति सप्रत्ययन्तः ।
न्यग्रोहति इति न्यग्रोधः, पचादित्वादच्प्रत्ययान्तः तस्य न्यग्रोधस्य च केवलस्य (*७,३.५) इति निपातनाद्हकारस्य धकारो मध्योदात्तत्वं च ।
दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदातौ ।
उपमान ।
अव्यय - अब्राह्मणः ।
अवृषलः ।
कुब्राह्मणः ।
कुवृषलः ।
निष्कौशाम्बिः ।
निर्वाराणसिः ।
अतिखट्वः ।
अतिमालः ।
एतान्यव्ययान्याद्युदात्तानि ।
अव्यये नञ्कुनिपातानां इति वक्तव्यं ।
इह मा भूत्, स्नत्वाकालकः इति ।
अव्यय ।
द्वितीया - मुहूर्तसुखं ।
मुहूर्तरमणीयं ।

सर्वरात्रकल्याणी ।
सर्वरात्रशोभना ।
अत्यन्तसंयोगे च (*२,२.२१) इति द्वितीयासमसः ।
मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः ।
सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः ।
द्वितीया ।
कृत्य - भोज्योष्णं ।
भोज्यलवणं ।
पानीयशीतं ।
हरणीयचूर्णं ।
भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः ।
पाणीयहरणीयशब्दयोः उपोत्तमं रिति (*६,१.२१७) इति ईकार उदात्तः । ।

---

1. <वर्णो वर्णेष्वनेते># । । PS_६,२.३ । ।

_______Sठान्ठ्JKव्_६,२.३ः

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति च वर्तते ।
वर्णं वर्णवाचि पूर्वपदं वर्नवाचिष्वेव+उत्तरपदेषू एतशब्दवर्जितेषु परतस्तत्पुरुषे समसे प्रकृतिस्वरं भवति ।
कृष्णसारङ्गः ।
लोहितसारङ्गः ।
कृष्णकल्माषः ।
लोहितकल्माषः ।
कृषेर्वर्ने इति कृष्णशब्दो नक्प्रत्ययान्तः अन्तोदात्तः ।
लोहितशब्दोऽपि रुहेरश्च लो वा इति इतन्प्रययान्तः आद्युदात्तः ।
वर्नः इति किं ? परमकृष्णः ।
वर्नेषु इति किं ? कृष्णतिलाः ।
अनेते इति किं ? कृष्णैतः ।
लोहितैतः । ।

---

[#६५४]

1. <गाध-लवनयोः प्रमाणे># । । PS_६,२.४ । ।

_______Sठान्ठ्JKव्_६,२.४ः

प्रमाणवाचिनि तत्पुरुषे समासे गाध लवण इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति ।
शम्बगाधमुदकं ।
अरित्रगाधमुदकं ।
तत्प्रमाणं इत्यर्थः ।
गोलवणं ।
अश्वलवणं ।
अश्वलवणं ।
यावद्गवे दीयते तावदित्यर्थः ।
षष्ठीसमासा एते ।

तत्र शमेर्बनिति बन्प्रत्ययान्तत्वाच्छम्बशब्द आद्युदात्तः ।
अरित्रशब्दः अर्तिलूधूसू इति इत्रप्रत्ययान्तो मध्योदात्तः ।
गोशब्दो डोप्रत्ययान्तः अन्तोदातः ।
अश्वशब्दो अशूप्रुषिलटिकणिखतिविशिभ्यः क्वनिति क्वन्प्रत्ययान्तः आद्युदात्तः ।
प्रमाणं इयत्तापरिच्छेदमात्रं इह द्रष्टव्यं न पुनरायाम एव ।
स्वरव्यङ्ग्यं च प्रमानविशेषविषयत्वं एतेषां ।
प्रमाणे इति किं ? परमगाधं ।
परमलवणं । ।

---

1. <दायाद्यं दायादे># । । PS_६,२.५ । ।

_______Sठान्ठ्JKव्_६,२.५ः

तत्पुरुषे समासे दायादशब्दे उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति ।
विद्यादायादः ।
धनदायादः ।
सञ्ज्ञायां समजनिषद इति विद्याशब्दः क्यप्प्रत्ययान्तः ।
उदात्तः इति च तत्र वर्तते, तेन अयं अन्तोदात्तः ।
क्éप्éवृजिमन्दिनिधाञ्भ्यः क्युः इति बहुलवचनात्केवलादपि धात्रः क्युः प्रत्ययः, तेन धनशब्दः प्रत्ययस्वरेण आद्युदात्तः ।
अथ विद्यादायादः इति केन षष्ठी ? स्वामीरीश्वराधिपतिदायाद इति ।
यद्येवं प्रतिपदविधाना च षष्ठी न समस्यते इति समासप्रतिषेधः प्राप्नोति ? एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यस्तु सप्तमी विधीयमाना बाधिका मा विज्ञायि इति पुनरभ्यनुज्ञायते ।
दायाद्यं इति किं ? परमदायादः ।
अत्र समासान्तोदातत्वं एव भवति । ।

---

1. <प्रतिबन्धि चिर-कृच्छ्रयोः># । । PS_६,२.६ । ।

_______Sठान्ठ्JKव्_६,२.६ः

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति ।
गमनचिरं ।
गमनकृच्छ्रं ।
व्याहरणचिरं ।
व्याहरणकृच्छ्रं ।
गमनव्याहरनशब्दौ ल्युडन्तौ, तयोर्लित्स्वरः ।
गमनं च यच्चिरं च इति विशेषणसमासोऽयम्, मयूरव्यंसकादिर्वा एष द्रष्टव्यः ।
गमनं हि कारणविकलतया विरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते ।
प्रतिबन्धि इति किं ? मूत्रकृच्छ्रं । ।

---

1. <पदेऽपदेशे># । । PS_६,२.७ । ।

______Sठा~ठ्JKव्_६,२.७ः

अपदेशो व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्दे उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति।
मूत्रपदेन प्रस्थितः।
उच्चारपदेन प्रस्थितः।
मूत्रशब्दः सिविमुच्योष्टेरू च इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्तः आद्युदात्तः।
उच्चारशब्दोऽपि घञन्तः थ-अथ-घञ्-क्त-अज्-अब्-इत्र-काणां (*६,२.१४४) इत्यन्तोदात्तः।
विशेषनसमासोऽयं मयूरव्यंसकादिर्वा।
अपदेशे इति किं? विष्णोः पदं विष्णुपदं।।

---

[#६५५]

1. <निवाते वातत्राणे>#।। PS_६,२.८।।

______Sठा~ठ्JKव्_६,२.८ः

निवातशब्दे उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति।
कुट्येव निवातं कुटीनिवातं।
शमीनिवातं।
कुड्यनिवातं।
वातस्याभावो निवातम्, अर्थाभावः इत्यव्ययीभावः।
निरुद्धो वातोऽस्मिनिति वा निवातं इति बहुव्रीहिः।
तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते।
कुटीशमीशब्दौ गौरादिङोषन्तावन्तोदातौ।
कुड्यशब्दोऽपि कवतेर्यत्डक्किच्च इति यत्प्रत्ययान्त आद्युदात्त इत्येके।
ड्यक्प्रत्ययान्तोऽन्तोदात्तः इत्यपरे।
वातत्राने इति किं? राजनिवाते वसति।
सुखं मातृनिवातं।
निवातशब्दोऽयं पार्श्ववाची रूढिशब्दस्तत्रोभयत्र षष्ठीसमासः।।

---

1. <शारदेऽनार्तवे>#।। PS_६,२.९।।

______Sठा~ठ्JKव्_६,२.९ः

ऋतौ भवमार्तवं।
अनार्तववाचिनि शारदशब्दे उत्तरपदे उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति।
रज्जुशारदमुदकं।
दृषत्शारदाः सक्तवः।
शारदशब्दोऽयं प्रत्यग्रवाची, तस्य नित्यसमासोऽस्वपदविग्रह इष्यते।
सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारां उच्यते।
रज्जुशदः सृजेरसुं च इति उप्रत्ययान्तः आदिलोपश्च।
धान्ये नितिति च तत्र वर्तते, तेन आद्युदात्तः।
दृषत्शब्दः दृणातेः षुग्रस्वश्च इति अदिप्रत्ययान्तोऽन्तोदात्तः।
अनार्तवे इति किं? पर्मशारदं।

उत्तरमशारदं ।
शरदि ऋतुविशेषे भवं यत्तदिह शारदं । ।

---

1. <अध्वर्यु-कषाययोर्जातौ># । । PS_६,२.१० । ।

_______Sठान्ठ्JKव्_६,२.१०ः

अध्वर्यु कषाय इत्येतयोः जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
प्राच्याध्वर्युः ।
कठाद्वर्युः ।
कलापाध्वर्युः ।
एते समानाधिकरणसमासाः जातिवाचिनो नियतविषयाः ।
तत्र प्राच्यशब्दः यत्प्रत्ययान्त आद्युदात्तः ।
कठशब्दः पचाद्यचि व्युत्पादितः ।
ततः कठेन प्रोक्तं इति वैशम्पायन-अन्तेवासिभ्यश्च (*४,३.१०४) इति णिनिः, तस्य कठ-चरकाल्लुक्(*४,३.१०७) इति लुक् ।
कलापिना प्रोक्तं इति कलापिनोऽण्(*४,३.१०८), तस्मिनिनण्यनपत्ये (*६,४.१६४) इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिल. अङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणां उपसङ्ख्यानं इति टिलोपः ।
तदेवं कलापशब्दोऽन्तोदात्तः ।
सर्पिर्मण्डकषायं ।
उमापुष्पकषायं ।
दौवारिककषायं ।
षष्ठीसमासव्युत्पादिता रूढिशब्दा एते ।
तत्र सर्पिर्मण्डशब्दः उमापुष्पशब्दश्च षष्ठीसमासाबन्दोदात्तौ ।
दौवारिकशब्दोऽपि द्वारि नियुक्तः इति ठकि सत्यन्तोदात्तः एव ।
जातौ इति किं ? परमाध्वर्युः ।
परमकषायः । ।

---

1. <स-दृश-प्रतिरूपयोः सादृश्ये># । । PS_६,२.११ । ।

_______Sठान्ठ्JKव्_६,२.११ः

सदृश प्रतिरूप इत्येतयोः उत्तरपदयोः सादृश्यवाचिनि तत्प्रुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
पितृसदृशः ।
मातृसदृशः ।
पितृ-मातृ-शब्दावुणादिष्वन्तोदात्तौ निपातितौ ।
षष्ठीसमासार्थं च सदृशग्रहणं इह तदलुकि षष्ठ्याः प्रयोजयति, दास्याः सदृशः, वृषल्याः सदृशः इति ।

[#६५६]

अत्र दासीवृषलीशब्दयोरन्तोदात्तत्वादुदात्तयणो हल्पूर्वत्(*६,१.१७४) इति विभक्तिरन्तोदात्ता ।
पितृप्रतिरूपः ।
मातृप्रतिरूपः ।
सादृश्ये इति किं ? परमसदृशः ।
उत्तमसदृशः ।
समासार्थोऽत्र पूज्यमानता न सादृश्यं । ।

---

1. <द्विगौ प्रमाणे># । । PS_६,२.१२ । ।

______Sठाऱ्ठ्JKव्_६,२.१२ः

द्विगावुत्तरपदे प्रमणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
प्राच्यसप्तशमः ।
गान्धारिसप्तशमः ।
सप्तशमाः प्रमाणं अस्य इति मात्रचः उत्पन्नस्य प्रमाणे लः द्विगोर्नित्यं इति लुक् ।
प्राच्यश्च असौ सप्तशमश्च प्राच्यसप्तशमः ।
प्राच्यशब्दः आद्युदात्तः ।
गान्धरिशब्दः कर्दमादित्वादाद्युदात्तो मद्योदत्तो वा ।
द्विगौ इति किं ? व्रीहिप्रस्थः प्रमाणे इति किं ? परमसप्तशमं । ।

---

1. <गन्तव्य-पण्य वाणिजे># । । PS_६,२.१३ । ।

______Sठाऱ्ठ्JKव्_६,२.१३ः

वाणिजशब्दे उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति ।
मद्रवाणिजः ।
काश्मीरवाणिजः ।
गान्धारिवाणिजः ।
मद्रादिषु गत्वा व्यवहरन्ति इत्यर्थः ।
सप्तमीसमासा एते ।
तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः ।
काश्मीरशब्दोऽपि पृषोदरादिषु मद्योदातः ।
गान्धारिशब्दः कर्दमादिषु पठ्यते, तत्र कर्दमादीनां च इति पक्षे आद्युदात्तो भवति, द्वितीयो वा ।
पण्ये - गोवाणिजः ।
अश्ववाणिजः ।
गोशब्दोऽन्तोदात्तः ।
अश्वशब्दः आद्युदात्तः ।
गन्तव्याण्यं इति किं ? परमवाणिजः ।
उत्तमवाणिजः । ।

---

1. <मात्रोपज्ञोपक्रमच्छाये नपुंसके># । । PS_६,२.१४ । ।

______Sठाऱ्ठ्JKव्_६,२.१४ः

मात्रा उपज्ञा उपक्रम छाया एतेषु उत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
भिक्षामात्रं न ददाति याचितः ।

समुद्रमात्रं न सरोऽस्ति किंचन ।
मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्तते ।
तत्र भिक्षायास्तुल्यप्रमाणं इति अस्वपदविग्रहः षष्ठीसमासः ।
तत्र भिक्षाशब्दः गुरोश्च हलः (*३,३.१०३) इत्यप्रत्ययान्तोऽन्तोदात्तः ।
समुद्रशब्दोऽपि फिषि पाटलापालङ्काम्बासागरार्थानां इत्यन्तोदात्त एव ।
उपज्ञा - पाणिनोपज्ञं अकालकं व्याकरणं ।
व्याड्युपज्ञं दुष्करणं ।
आपिशल्युपज्ञं गुरुलाघवं ।
षष्ठीसमासा एते ।
तत्र पणिनोऽप्त्यं इत्यणन्तः पाणिनशब्दः प्रत्ययस्वरेण अन्तोदात्तः ।
व्याडिरिञन्तत्वादाद्युदात्तः ।
तद्वदापिशलिः ।
उपक्रं - आढ्योपक्रमं प्रासादः ।
दर्शनीयूपक्रमं ।
सुकुमारोपक्रमं ।
नन्दोपक्रमाणि मानानि ।
एतेऽपि षष्ठीसमासा एव ।
तत्रैत्यैनं ध्यायन्ति इत्याढ्याः ।
घञर्थे कविधानं इति कप्रत्ययः ।
आङ्पूर्वाद्ध्यायतेः पृषोदरादित्वाद्धस्य ढत्वं ।
तदयं आढ्यशब्दः थाथादिस्वरेण अन्तोदात्तः ।
दर्शनीयशब्दो रित्वादुपोत्तमोदात्तः ।
सुकुमारशब्दः नञ्सुभ्यां (*६,२.१७२) इत्यन्तोदात्तः ।
दर्शनियशब्दो रित्वादुपोत्तमोदात्तः ।
सुकुमारशब्दः नञ्सुभ्यां (*६,२.१७२) इत्यन्तोदात्तः ।
नन्दशब्दः पचाद्यचि व्युत्पादितः ।
उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता उपज्ञोपक्रमं तदाद्याचिख्यासायां (*२,३.२१) इति ।

[#६५७]

छाया - इषुच्छायं ।
धनुश्छायं ।
इषुशब्दः ईषेः किच्च इत्युप्रत्ययान्तः, तत्र च धान्ये नितिति वर्तते, तेन आद्युदात्तः ।
धनुः शब्दोऽपि नब्विषयस्य अनिसन्तस्य इत्याद्युदात्त एव ।
इषूणां छाया इति षष्ठीसमासः ।
छाया बाहुल्ये (*२,४.२२) इति नपुंसकलिङ्गता ।
नपुंसके इति किं ? कुड्यच्छाया । ।

---

1. <सुख-प्रिययोर्हिते># । । PS_६,२.१५ । ।

______Sठाऩ्ःJKव्_६,२.१५ः

सुख प्रिय इत्येतयोरुत्तरपद्योर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
गमनसुखं ।
वचनसुखं ।
व्याहरणसुखं ।
प्रिय - गमनप्रियं ।
वचनप्रियं ।
व्याहरणप्रियं ।
समानाधिकरणसमासा एते ।
तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तते ।

तद्धि हितं यदायत्यं प्रीतिं करोति ।
गमनादिषु ल्युडन्तेषु लित्वरः ।
हिते इति किं ? परमसुखं ।
परमप्रियं । ।

---

1. <प्रीतौ च># । । PS_६,२.१६ । ।

______Sठान्ठ्JKव्_६,२.१६ः

प्रीतौ गमयमानायां सुख प्रिय इत्येतयोः उत्तपदयोः तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
ब्राह्मणसुखं पायसं ।
छात्रप्रियोऽनध्यायः ।
कन्यप्रियो मृदङ्गः ।
सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थं ।
ब्राह्मणछात्रशब्दौ प्रत्ययस्वरेण अन्तोदातौ ।
कन्याशब्दः स्वरितान्तः ।
प्रीतौ इति किम्? राजसुखं ।
राजप्रियं । ।

---

1. <स्वं स्वामिनि># । । PS_६,२.१७ । ।

______Sठान्ठ्JKव्_६,२.१७ः

स्वामिशब्दे उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति ।
गोस्वामी ।
अश्वस्वामी ।
धनस्वामी ।
अश्वधनगवां कथित एव स्वरः ।
स्वं इति किं ? परमस्वामी । ।

---

1. <पत्यावैश्वर्ये># । । PS_६,२.१८ । ।

______Sठान्ठ्JKव्_६,२.१८ः

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं भवति ।
गृहपतिः ।
सेनापतिः ।
नरपतिः ।
धान्यपतिः ।
गेहे कः (*३,१.१४४) इति प्रकृतिस्वरेण अन्तोदात्तो गृहशब्दः ।
सह इनेन वर्तते इति बहुव्रीहौ प्रकृत्या पूर्वपदं (*६,२.१) इति सेनाशब्द आद्युदात्तः ।

न्é नये एतस्माद्दोरप्(*३,३.५७) इति अप्प्रत्ययान्त आद्युदात्तो नरशब्दः ।
धान्यं अन्तस्वरितं ।
ऐश्वर्यं इति किं ? ब्राह्मणो वृषलीपतिः ।
वृषल्या भर्ता इत्यर्थः । ।

---

[#६५८]

1. <न भू-वाक्-चिद्-दिधिषु># । । PS_६,२.१९ । ।

_______Sठान्ठ्JKव्_६,२.१९ः

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू वाक्चित्दिधिषू इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति ।
पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते ।
भूपतिः ।
वाक्पतिः ।
चित्पतिः ।
दिधिषूपतिः ।
षष्ठीसमासा एते समासस्वरेण अन्तोदात्ता भवन्ति । ।

---

1. <वा भूवनम्># । । PS_६,२.२० । ।

_______Sठान्ठ्JKव्_६,२.२०ः

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुष समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति ।
भुवनपतिः, भुवनपतिः ।
पूर्वपद-प्रकृतिस्वरपक्षे आदिरुदात्तः ।
रञ्जेः क्युनिति वर्तमाने भुसूधूभ्रास्जिभ्यश्छन्दसि इति क्युन्प्रत्ययान्तो भुवनशब्दः आद्युदात्तो व्युत्पादितः ।
कथं भुवनपतिरादित्यः इति ? उणादयो बहुलं (*३,३.१) इति बहुलवचनाद्भषायां अपि प्रयुज्यते । ।

---

1. <आशङ्क-आबाध-नेदीयस्सु सम्भावने># । । PS_६,२.२१ । ।

_______Sठान्ठ्JKव्_६,२.२१ः

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति वर्तते ।
आशङ्क आबाध नेदियसित्येतेषु उत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
अस्तित्वाध्यवसायः सम्भावनं ।
गमनाशङ्कं वर्तते ।
गमनमाशङ्क्यते इति सम्भाव्यते ।
वचनाशङ्कं ।
व्याहरणाशङ्कं ।

आबाध - गमनाबाधं ।
वचनाबाधं ।
व्यहरणाबाधं ।
गमनं बाध्यते इति सम्भाव्यते ।
नेदीयस्- गमननेदीयः ।
व्याहरणनेदीयः ।
गमनमतिनिकटतरं इति सम्भाव्यते ।
सम्भावने इति किं ? परमनेदियः ।
पूर्वपदानि ल्युडन्तान्युक्तस्वराणि । ।

---

1. <पूर्वे भूतपूर्वे># । । PS_६,२.२२ । ।

______Sठाञ्ठ्JKव्_६,२.२२ः

पूर्वशदे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
आढ्यो भूतपूर्वः आढ्यपूर्वः ।
पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते, तत्र विशेषणं विशेष्येण इति समासः, मयूरव्यंसकादिर्वा द्रष्टव्यः ।
दर्शनीयपूर्वः ।
सुकुमारपूर्वः ।
भूतपूर्वे इति किं ? परमपूर्वः ।
उत्तमपूर्वः ।
अत्र प्रमश्चासौ पूर्वश्च इति समासो, न तु परमो भूतपूर्वः इति ।
तथा हि सति उदाहरणं एव भवति । ।

---

1. <सविध-सनीड-समर्याद-सवेश-सदेशेषु सामीप्ये># । । PS_६,२.२३ । ।

______Sठाञ्ठ्JKव्_६,२.२३ः

सविध सनीड समर्याद सवेश सदेश इत्येतेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति ।
मद्रसविधं ।
गान्धारिसविधं ।
काश्मीरसविधं ।
मद्रसनीडं ।
गान्धारिसनीडं ।
काश्मीरसनीडं ।
मद्रसमर्यादं ।
गान्धरिसमर्यादं ।
काश्मीरसमर्यादं ।
मद्रसवेशं ।
गान्धारिसवेशं ।
काश्मीरसवेशं ।
मद्रसदेशं ।
गान्धरिसदेशं ।
काश्मीरसदेशं ।
पूर्वपदान्युक्तस्वराणि ।
सविधादीनां सह विधया इत्येवं आदिका व्युत्पत्तिरेव केवलं ।

समीपवाचिनस्त्वेते समुदायाः।
मद्राणां सविधं समीपं इत्यर्थः।
समीप्ये इति किं ? सह मर्यादया वर्तते समर्यादं क्षेत्रं।
देवदत्तस्य समर्यादं देवदत्तसमर्यादं।
सविधादिसु इति किं ? देवदत्तसमया।।

---

[#६५९]

1. <विस्पष्ट-आदीनि गुणवचनेषु>#।। PS_६,२.२४।।

______Sठान्ठ्JKव्_६,२.२४ः

विस्पष्टादिनि पूर्वपदानि गुनवानेषु उत्तरपदेषु प्रकृतिस्वराणि भवन्ति।
विस्पष्टकटुकं।
विचित्रकटुकं।
व्यक्तकटुकं।
विस्पष्टलवणं।
विचित्रलवणं।
व्यक्तलवणं।
विस्पष्टं कटुकं इति विगृह्य सुप्सुपा इति समासः।
विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणं।
कटुकादिभिश्च शब्दैर्गुनवद्द्रव्यं अभिधीयते इत्यसामानाधिकरन्यं अतो न अस्ति कर्मधारयः।
विस्पष्टशब्दो गतिरनन्तरः (*६,२.४९) इत्याद्युदात्तः।
विचित्रशब्दोऽपि अव्ययस्वरेण।
विचित्तशब्दमन्ये अहन्ति।
सोऽपि बहुव्रीहिस्वरेण आद्युदात्त एव।
व्यक्तशब्दः उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इत्यादिस्वरितः।
ये च अत्र अपरे पठ्यन्ते तत्र सम्पन्नशब्दस्थाथादिस्वरेण अन्तोदात्तः।
पटुपण्डितशब्दौ प्रत्ययस्वरेण।
कुशलशब्दः कृत्स्वरेण अन्तोदत्तः।
चपलशब्दश्चित्स्वरेण अन्तोदात्तः, चुपेरच्चोपधायाः इत्यत्र हि चिदिति वर्तते।
निपुणशब्दस्थाथादिस्वरेण अन्तोदत्तः, पुणेरिगुपधलक्षणः कप्रत्ययोऽयं।
विस्पष्टादीनि इति किं ? परमलवणं।
उत्तमलवणं।
गुणवचनेषु इति किं ? विस्पष्टब्राह्मणः।
विस्पष्ट।
विचित्र।
व्यक्त।
सम्पन्न।
पटु।
पण्डित।
कुशल।
चपल।
निपुण।
विस्पष्टादिः।।

---

1. <श्र-ज्य-अवम-कन्-पाप-वत्सु भावे कर्मधारये># । । PS_६,२.२५ । ।

_______Sठाऽ्ठ्JKव्_६,२.२५ः

श्र ज्य अवम कनित्येतेषु पापशब्दवति च+उत्तरपदे कर्मधार्ये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति ।
गमनश्रेष्ठं ।
गमनश्रेयः ।
ज्य - वचनज्येष्ठं ।
वचनज्यायः ।
अवम - गमनावमं ।
वचनावमं ।
कन्- गमनकनिष्ठं ।
गमनकनीयः ।
पापवत्- गमनपापिष्ठं ।
गमनपापीयः ।
ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेण आद्युदात्तानि ।
श्रज्यकनां आदेशानां ग्रहणं इति सामर्थ्यात्तद्वदुत्तरपदं गृह्यते ।
आदिष्विति किं ? गमनशोभनं ।
भावे इति किं ? गम्यतेऽनेन इति गमनं तत्श्रेयः, गमनश्रेयः ।
कर्मधारये इति किं ? गमनं श्रेयः गमनश्रेयः । ।

---

1. <कुमारश्च># । । PS_६,२.२६ । ।

_______Sठाऽ्ठ्JKव्_६,२.२६ः

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति ।
कुमारश्रमणा ।
कुमारकुलटा ।
कुमारतापसी ।
कुमारशब्दोऽन्तोदात्तः ।
अत्र केचित्लक्षणप्रतिपदोकयोः प्रतिपदोक्तस्य+एव ग्रहणं इत्परिभाषया कुमारः श्रमणादिभिः (*२,१.७०) इत्यत्र+एव समासे स्वरं एतं इच्छन्ति ।
केचित्पुनरविशेषेण सर्वत्र+एव कर्मधारये । ।

---

1. <आदिः प्रत्येनसि># । । PS_६,२.२७ । ।

_______Sठाऽ्ठ्JKव्_६,२.२७ः

कर्मधारये इति वर्तते ।
प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः ।
तस्मिन्नुत्तरपदे कर्मधारये कुमारस्य आदिरुदात्तो भवति ।
कुमारप्रत्येनाः ।
उअदात्तः इत्येतदत्र सामर्थ्याद्वेदितव्यं ।
पूर्वपदप्रकृतिस्वर एव ह्ययं आदेरुपदिश्यते । ।

[#६६०]

1. <पूगेष्वन्यतरस्याम्># । । PS_६,२.२८ । ।

_______Sठान्ठ्JKव्_६,२.२८ः

पूगा गणाः, तद्वाचिनि उत्तरपदे कर्मधारये समासे कुमारस्य अन्यतरस्यां आदिरुदात्तो भवति ।
कुमारचातकाः, कुमारचातकाः, कुमारचातकाः ।
कुमारलोहध्वजाः, कुमारलोहध्वजाः, कुमारलोहध्वजाः ।
कुमारबलाहकाः, कुमारबलाहकाः, कुमारबलाहकाः ।
कुमारजीमूताः, कुमारजीमूताः, कुमारजीमूताः ।
चातकादयः पूगशब्दाः, तेभ्यः पूगाञ्ञ्योऽग्रामणीपूर्वात्(*५,३.११२) इति ञ्यः प्रत्ययः, तस्य तद्राजस्य बहुषु तेन+एव स्त्रियां (*२,४.६२) इति लुक् ।
अत्र यदा आद्युदात्तत्वं न भवति तदा कुमारश्च (*६,२.२६) इति पूर्वपदप्रकृतिस्वरत्वं एके कुर्वन्ति ।
ये तु तत्र प्रतिपदोक्तस्य ग्रहणं इच्छन्ति तेषां समासान्तोदात्तत्वं एव भवति । ।

---

1. <इगन्त-काल-कपाल-भगाल-शरावेषु द्विगौ># । । PS_६,२.२९ । ।

_______Sठान्ठ्JKव्_६,२.२९ः

इगन्ते उत्तरपदे, कालवाचिनि, कपाल भगाल शराव इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति ।
इगन्त - पञ्चारत्निः ।
दशारत्निः ।
पञ्चारत्नयः प्रमाणमस्य, दशारत्नयः प्रमाणमस्य इति तद्धितार्थे द्विगुः, प्रमाणे लः द्विगोर्नित्यं इति मात्रचो लोपः ।
इगन्त ।
काल - पञ्चमास्यः ।
दशमास्यः ।
पञ्च मासान्भृतो भूतो भावी वा इति तद्धितार्थे द्विगोर्यप्(*५,१.८२) ।
पञ्चवर्षः ।
दशवर्षः ।
वर्षाल्लुक्च (*५,१.८८) इति ठञो लुक् ।
काल ।
कपाल - पञ्चकपालः ।
दशकपालः ।
कपाल ।
भगाल - पञ्चभगालः ।
दशभगालः ।
भगाल ।
शराव - पञ्चशरावः ।
दशशरावः ।
संस्कृतं भक्षाः (*४,२.१६) इति तद्धितार्थे एते समासाः द्विगोर्लुगनपत्ये (*४,१.८८) इति कृताणप्रत्ययलोपा द्रष्टव्याः ।
इगन्तादिषु इति किं ? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः ।
दशाश्वः ।
द्विगौ इति किं ? परमारत्निः ।
परमशरावं ।
पञ्चारत्न्यो दशारत्न्यः इति च यण्गुणयोः बहिरङ्गलक्षणयोरसिद्धत्वात्स्थानिवद्भावाद्वा द्विगुस्वर इगन्तलक्षणः प्रवर्तते । ।

---

1. <बह्व्-अन्यतरस्याम्># । । PS_६,२.३० । ।

______Sठाञ्ठ्JKव्_६,२.३०ः

बहुशब्दः पूर्वपदं इगन्तादिषु उत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति ।
पूर्वेण नित्यं प्राप्ते विकल्पः ।
बह्वरत्निः, बह्वरत्निः ।
भ्ॐआस्यः, बहुमास्यः ।
बहुकपालः, बहुकपालः ।
बहुभगालः, बहुभगालः ।
बहुशरावः, बहुशरावः ।
बहुशब्दोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशः तत्र उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इत्येष स्वरो भवति । ।

---

1. <दिष्टि-वितस्त्योश्च># । । PS_६,२.३१ । ।

______Sठाञ्ठ्JKव्_६,२.३१ः

दिष्टि वितस्ति इत्येतयोरुत्तरपदयोः द्विगौ समासे पूर्वपदं अन्यतरस्यां प्रकृतिस्वरं भवति ।
पञ्चदिष्टिः, पञ्चदिष्टिः ।
पञ्चवितस्तिः, पञ्चवितस्तिः ।
दिष्टिवितस्ती प्रमाणे, तेन अत्र मात्रचो लुक् । ।

---

[#६६१]

1. <सप्तमी सिद्ध-शुष्क-पक्व-बन्धेष्वकालात्># । । PS_६,२.३२ । ।

______Sठाञ्ठ्JKव्_६,२.३२ः

सप्तम्यन्तं पूर्वपदं सिद्ध शुष्क पक्व बन्ध इत्येतेषु उत्तरपदेषु रकृतिस्वरं भवति सा चेत्सप्तमी कालान्न भवति ।
सांकश्यसिद्धः, सांकाश्यसिद्धः ।
काम्पिल्यसिद्धः, काम्पिल्यसिद्धः ।
सांकाश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तौ अन्तोदात्तौ ।
फिषि तु सांकाश्यकाम्पिल्यनसिक्यदार्वाघाटानां अन्तः पूर्वं वा इति पठ्यते, तत्र पक्षे मध्योदात्तावपि भवतः ।
शुष्क - ऊकशुष्कः ।
निधनशुष्कः ।
ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तोऽन्तोदात्तः ।
निधनशब्दः निधात्रः क्यप्रत्यये मध्योदात्तः ।
पक्व - कुम्भीपक्वः ।
कलसीपक्वः ।
भ्राष्ट्रपक्वः ।

कुम्भीकलसीशब्दौ ङीषन्तावन्तोदात्तौ ।
भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्तः आद्युदात्तः ।
बन्ध - चक्रबन्धः ।
चारकबन्धः ।
चक्रशब्दोऽन्तोदात्तः ।
चारकशब्दो ण्वलन्त आद्युदात्तः ।
अकालातिति किं ? पूर्वाह्णसिद्धः ।
अपराह्णसिद्धः ।
सप्तमीस्वरः कृत्स्वरेण बाधितः पुनरयं विधीयते । ।

---

1. <परि-प्रत्य्-उप-अपा वर्ज्यमान-अहोरात्र-अवयवेषु># । । PS_६,२.३३ । ।

_______Sठाऱ्ठJKव्_६,२.३३ः

परि प्रति उप अप इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि च+उत्तरपदे प्रकृतिस्वरा भवन्ति ।
परित्रिगर्तं वृष्टो देवः ।
परिसौवीरं ।
परिसार्वसेनि ।
प्रति - प्रतिपूर्वाह्णं ।
प्रत्यपराह्णं ।
प्रतिपूर्वरात्रं ।
प्रत्यपररात्रं ।
उप - उपपूर्वाह्णं ।
उपापराह्णं ।
उपपूर्वरात्रं ।
उपापररात्रं ।
अप - अपत्रिगर्तं वृष्टो देवः ।
अपसौवीरं ।
अपसार्वसेनि ।
निपाता आद्युदात्ता उपसर्गाश्च अभिवर्जं इति आद्युदात्तानि पूर्वपदानि ।
तत्पुरुषे बहुव्रीहौ च सिद्धत्वातव्ययईभावार्थोऽयं आरम्भः ।
तत्र अपपरीवर्जने वर्तेते, इति तयोरेव वर्ज्यमानं उत्तरपदं, नेतरयोः ।
अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति इति न पृथगुदाह्रियते ।
वर्ज्यमानाहोरात्रावयवेषु इति किं ? प्रत्यग्नि शलभाः पतन्ति ।
परिवनं इत्यत्र वनं समासे (*६,२.१७८) इत्येतद्भवति । ।

---

1. <राजन्य-बहुवचन-द्वन्द्वेऽन्धक-वृष्णिषु># । । PS_६,२.३४ । ।

_______Sठाऱ्ठJKव्_६,२.३४ः

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति ।
श्वाफल्कचैत्रकाः ।
चैत्रकरोधकाः ।
शिनिवासुदेवाः ।
श्वाफल्कशब्दः चैत्रकशब्दश्च ऋष्यन्धकवृष्णिकुरुभ्यश्च (*४,१.११४) इति अणन्तावन्तोदात्तौ ।
शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्तते ।

राजन्य इति किं ? द्वैप्यहैमायनाः ।
द्वीपे भवाः इति द्वीपादनुसमुद्रं यञ्(*४,३.१०) ।
हैमेरपत्यं युवा हैमायनः ।
अन्धकवृष्णय एते न तु राजन्याः ।
राजन्यग्रहणं इह अभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थं ।
एते च न अभिषिक्तवंश्याः ।
बहुवचनग्रहणं किं ? सङ्कर्षणवासुदेवौ ।
द्वन्द्वे इति किं ? वृष्णीनां कुमाराः वृष्णिकुमाराः ।
अन्धकवृष्णिषु इति किं ? कुरुपञ्चालाः । ।

---

[#६६२]

1. <सङ्ख्या># । । PS_६,२.३५ । ।

______Sठाञ्ठ्JKव्_६,२.३५ः

द्वन्द्वसमासे सङ्ख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति ।
एकादश ।
द्वादश ।
त्रयोदश, त्रयोदश ।
इण्भीकापाशल्यतिमर्चिभ्यः कनिति नित्त्वादाद्युदात्त एकशब्दः ।
त्रेस्त्रयसदेशोऽन्तोदात्तो निपात्यते । ।

---

1. <आचार्य-उपसर्जनश्च अन्तेवासी># । । PS_६,२.३६ । ।

______Sठाञ्ठ्JKव्_६,२.३६ः

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वः, तत्र पूर्वपदं प्रकृतिस्वरं भवति ।
आपिशलपाणिनीयाः ।
पाणिनीयरौढीयाः ।
रौढीयकाशकृत्स्नाः ।
अपिशलस्यापत्यमापिशलिराचर्यः, अत इञ्(*४,१.९५) ।
तेन प्रोक्तं आपिशलम्, इञश्च (*४,२.११२) इत्यण् ।
तदधीयते येऽन्तेवासिनः तेऽप्यापिशलाः, प्रोक्ताल्लुक्(*४,२.६४) इति तस्य तद्धितस्याध्येतरि विहितस्य लुक्क्रियते ।
आपिशलेर्वा छात्राः आपिशलाः, इत्युभयथाप्याचर्योपसर्जनश्चान्तेवासी भवति ।
आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम्, सकलो द्वन्द्वः आचार्योपसर्जनो यथा विज्ञायेत ।
इह मा भूत्, पाणिनियदेवदत्तौ ।
आचार्योपसर्जने इति किं ? छान्दसवैयाकरणाः ।
अन्तेवासी इति किं ? आपिशलपाणिनीये शास्त्रे । ।

---

1. <कार्त-कौजप-आदयश्च># । । PS_६,२.३७ । ।

_______Sठा-ठ्JKव्_६,२.३७ः

कार्तकौजपादयो ये द्वन्द्वाः तेषु पूर्वपदं प्रकृतिस्वरं भवति।
प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति।
विभक्त्यन्तानां पाठो वचनविवक्षार्थः।
चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः।
कार्तकौजपौ।
कृतस्य अपत्यं, कुजपस्य अपत्यं इत्यणन्तावेतौ।
सावर्णिमाण्डूकेयौ।
सावर्णिरिञन्तः।
अवन्त्यश्मकाः।
अवन्तेरपत्यानि वहूनि, तन्निवासो जनपदोऽवन्तयः।
तथा अश्मकाः।
पैलश्यापर्णेयाः।
युवद्वन्द्वोऽयं।
पीलायाः अपत्यं पैलः, तस्य अपत्यं युवा इति अणो द्व्यचः (*४,१.१५६) इति विहितस्य फिञः पैलादिभ्यश्च (*२,४.५९) इति लुक्।
श्यापर्णशब्दो बिदादिः, तस्य अपत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः।
बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयौ इत्यत्र अपि भवति।
कपिश्यापर्णेयाः।
कपिरन्तोदात्तः, तस्य अपत्यं बहुत्वे कपि-बोध-अङ्गिरसे (*४,१.१०७) इति उत्पन्नस्य यञः यञञोश्च इति लुक्, तेन अत्र बहुत्वं आश्रीयत एव।

[#६६३]

शैतिकाक्षपाञ्चालेयाः।
शितिकाक्षो नाम ऋषिः, तस्य अपत्यं इति ऋष्यण्, तदपत्ये यूनि य इञ्तस्य ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (*२,४.५८) इति लुक्।
पाञ्चालस्य अपत्यं स्त्री पाञ्चाली, तदपत्यं युवा पाञ्चालेयः।
अत्र अपि बहुवचनं अविवक्षितं इति शैतिकाक्षपञ्चालेयौ इत्यत्र अपि भवति।
कटुकवार्चलेयाः।
कटुकस्य अपत्यं इति अत इञ्(*४,१.९५), तस्य बह्वच इञः प्राच्यभरतेषु (*२,४.६६) इति बहुषु लुक्।
वर्चलायाः अपत्यं वार्चलेयः।
शाकलशुनकाः।
शकलस्य अपत्यं शाकल्यः, तस्य छात्राः शाकलाः।
कण्वादिभ्यो गोत्रे (*४,२.१११) इत्यण्।
शुनकस्य अपतयं इति बिदादिभ्योऽञ्(*४,१.१०४), तस्य बहुषु लुक्।
शाकलशणकाः इति केचित्पठन्ति।
तेषां शणकशबादुत्पन्नस्य इञः बह्वच इञः प्राच्यभरतेषु (*२,४.६६) इति बहुषु लुक्।
शुनकधात्रेयाः।
धात्र्या अपत्यं धात्रेयः।
शणकबाभ्रवाः।
बभ्रोरपत्यं बाभ्रवः।
आर्चाभिमौद्गलाः।
ऋचाभेन प्रोक्तं अधीयते आर्चाभिनः।
वैशम्पायनान्तेवासित्वात्णिनिः।
मुद्गलः कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः।
कुन्तिसुराष्ट्राः।
कुन्तेः सुराष्ट्रस्य च अपत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयं।
कुन्तिचिन्तिशब्दौ अन्तोदात्तौ।
चिन्तिसुराष्ट्राः कुन्तिसुराष्ट्रवथ्।
तण्डवतण्डाः।
पचाद्यच्प्रत्ययान्तौ अन्तोदात्तौ एतौ गर्गादिषु पठ्येते।
तत्र अपत्यबहुत्वे यञो लुक्क्रियते।
गर्गवत्साः।
अत्र अपि अपत्येषु बहुषु इञः बह्वच इञः प्राच्यभरतेषु (*२,४.६६) इति लुक्क्रियते।
बाभ्रवशालङ्कायनाः।
बभ्रोरपत्यं बाभ्रवः।

शलङ्कु शलङ्कं च इति शालङ्कायनः ।
बाभ्रवदानच्युताः ।
दानच्युतशब्दातिञः बह्वचः इति लुक् ।
कठकालापाः ।
कठेन प्रोक्तं अधीयते कठाः, वैशम्पायनान्तेवासित्वात्णिनिः, तस्य कठचरकाल्लुक् ।
कलापिना प्रोक्तमधीयते कालापाः ।
कलापिनोऽण्(*४,३.१०८) इत्यण्प्रत्ययः, तस्मिनिनण्यनपत्ये (*६,४.१६४) इति प्रकृतिभावे प्राप्ते न अन्तस्य टिलोपे सब्रह्मचारिपीठसर्पि इत्यादिनोपसङ्ख्यानेन टिलोपः ।
कठकौथुमाः ।
कुथुमिना प्रोक्तमधीयते इति प्राग्दीव्यतोऽण्(*४,१.८३), तस्य पूर्ववत्टिलोपः ।
कौथुमलौकाक्षाः ।
लोकाक्षेण प्रोक्तं अधीयते लौकाक्षाः ।
लोकाक्षस्य वा अपत्यं लौकाक्षिः, तस्य छात्राः लौकाक्षाः ।
स्त्रीकुमारं ।
स्त्रीशब्दोऽन्तोदात्तः ।
मौदपैप्पलादाः ।
मुदस्य अपत्यं मौदिः ।
तस्य छात्रा मौदाः ।
तथा पैप्पलादाः ।
मौदपैप्पलादाः इति द्विः पठ्यते, तस्य प्रयोजनं पक्षे समासान्तोदात्तत्वं एव यथा स्यादिति ।
वत्सजरथ् ।
वत्सश्च जरच्च ।
वत्सशब्दोऽन्तोदात्तः ।
सौश्रुतपार्थवाः ।
सुश्रुतस्य पृथोश्च छात्राः, प्राग्दीव्यतोऽण्(*४,१.८३) ।
जरामृत्यू ।
याज्यानुवाक्ये ।
यजेर्ण्यत्, यजयाचरुचप्रवचर्चश्च (*७,३.६६) इति कुत्वाभावः ।
तत्स्वरितं (*६,१.१८५) इत्यन्तस्वरितः ।
अनुवाक्या इति वचेरनुपूर्वात्ण्यथ् ।
आचार्योपसर्जनान्तेवासिनां इह पाठः प्रप्ञ्चार्थः । ।

---

[#६६४]

1. <महान्व्रीह्य्-अपराह्ण-गृष्टि-इष्वास-जाबाल-भार-भारत-हैलिहिल-रौरव-प्रवृद्धेषु># । । PS_६,२.३८ । ।

_______Sठाऌ्ठ्JKव्_६,२.३८ः

प्रकृत्या पूर्वपदं इति वर्तते, द्वन्द्वे इति निवृत्तं ।
महानित्येतत्पूर्वपदं व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल लौरव प्रवृद्ध इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति ।
महव्रीहिः ।
महापराह्णः ।
महागृष्टिः ।
महेष्वासः ।
महाजाबालः ।
महाभारः ।
महाभारतः ।
महाहैलिहिलः ।
महारौरवः ।
महाप्रवृद्धः ।
महच्छब्दोऽन्तोदात्तः, तस्य रतिपदोक्तो यः समासः सन्महत्परमोत्कृष्टाः पूज्यमानैः (*२,१.६१) इति तत्र+एष स्वरः ।

तेन+एषां षष्ठीसमासोऽन्तोदात्त एव भवति, महतो व्रीहिः महद्व्रीहिः इति ।
कर्मधारयेऽनिष्ठा (*६,२.४६) इत्ययं अपि श्रेण्यादिसमासे विधिः इति प्रवृद्धशब्दः इह पठ्यते । ।

---

1. <क्षुल्लकश्च वैश्वदेवे># । । PS_६,२.३९ । ।

______Sठा-ठ्JKव्_६,२.३९ः
क्षुल्लक इत्येतत्पूर्वपदं महांश्च वैश्वदेवे उत्तरपदे प्रकृतिस्वरं भवति ।
क्षुल्लकवैश्वदेवं ।
महावैश्वदेवं क्षुधं लाति इति क्षुल्लः ।
तस्मादज्ञातादिसु प्रगिवात्केऽन्तोदात्तः क्षुल्लकशब्दः । ।

---

1. <उष्ट्रः सादि-वाम्योः># । । PS_६,२.४० । ।

______Sठा-ठ्JKव्_६,२.४०ः

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति ।
उष्ट्रसादि ।
उष्ट्रवामि ।
उष्ट्रशब्द उषेः ष्ट्रन्प्रत्ययान्तः आद्युदात्तः ।
कर्मधारयोऽयं षष्ठीसमासो वा । ।

---

1. <गौः साद-सादि-सारथिषु># । । PS_६,२.४१ । ।

______Sठा-ठ्JKव्_६,२.४१ः

गोशब्दः पूर्वपदं साद सादि सारथि इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति ।
गोः सादः गोसादः ।
गां सादयति इति वा गोसादः ।
गोः सादिः गोसादिः ।
गोसारथिः । ।

---

[#६६५]

1. <कुरुगार्हपत-रिक्तगुर्व्-असूतजरत्य्-अश्लीलदृढरूपा-पारेवडवा-तैतिलकद्रू-पण्यकम्बलो दासीभाराणां च># । । PS_६,२.४२ । ।

______Sठाऽ्ठ्JKव्_६,२.४२ः

कुरुगार्हपत रिक्तगुरु असूतजरती अश्लीलदृढरूपा-पारेवडवा तैतिलकद्रू पण्यकम्बल इत्येते समासाः, तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति।
कुरूणां गार्हपतं कुरुगार्हपतं।
कृग्रोरुच्च इति कुरुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः।
कुरुवृज्योर्गार्हपत इति वक्तव्यं।
वृजीनां गार्हपतं वृजिगार्हपतं।
वृजिशब्द आद्युदात्तः।
रिक्तो गुरुः रिक्तगुरुः, रिक्तगुरुः।
रिक्ते विभाषा (*६,१.२०८) इति पूर्वपदं आद्युदात्तं अन्तोदत्तं वा।
असूता जरती असूतजरती।
अश्लीला दृढरूपा अश्लीलदृढरूपा।
अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः।
श्रीः यस्य अस्ति तत्श्लीलं।
सिध्मादेराकृतिगणत्वाल्लछ्।
कपिलकादित्वाच्च लत्वं।
अश्लीलदृढरूपा इति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहिता उच्यते।
पारे वडवा इव पारेवडवा।
निपातनादिवार्थे समासो विभक्त्यलोपश्च।
पारशदो घृतादित्वादन्तोदात्तः।
तैतिलानां कद्रूः तैतिलकद्रूः।
तितिलिनोऽपत्यं छात्रो वा तैतिलः इत्यणन्तः।
पण्यकम्बलः।
पण्यशब्दो यदन्तत्वादाद्युदात्तः।
पण्यकम्बलः सञ्ज्ञायां इति वक्तव्यं।
अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वं एव।
प्रतिपदोक्ते हि कृत्यानां समासे द्वितीया दृत्या इत्येष विहितः स्वरितः।
दास्या भारः दासीभारः।
देवहूतिः।
देवजूतिः।
देवसूतिः।
देवनीतिः।
अन्तोदात्तं पूर्वपदं।
वसुनीतिः।
वसुशदः आद्युदात्तः।
श्ένस्वृस्निहित्रप्यसिवसि इत्यत्र धान्ये नितिति वर्तते।
ओषधिः।
ओषो धीयतेऽस्यां इति कर्मण्यधिकरणे च (*३,३.९३) इति किप्रत्ययः।
ओषशब्दो घञन्तत्वादाद्युदात्तः।
चन्द्रमाः।
चन्द्रे मो डितिति असिप्रत्ययान्तोऽयं।
चन्द्रशब्दस्तु रक्प्रत्यान्तत्वादन्तोदात्तः।
यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वं इष्यते, न च विहितं, स सर्वो दासीभारादिसु द्रष्टव्यः।।

---

1. <चतुर्थी तदर्थे>#।। PS_६,२.४३।।

______Sठाऽ्ठ्JKव्_६,२.४३ः

चतुर्थ्यन्तं पूर्वपदं तदर्थे उत्तरपदे तदभिधेयार्थं यत्तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति।

ततिति चतुर्थ्यन्तस्य अर्थः परामृश्यते।
यूपदारु।
कुण्डलहिरण्यं।
यूपशब्द आद्युदात्तः।
कुसुयुभ्यश्च इत्यत्र नितिति वर्तते।
कुन्डलशब्दोऽपि वृषादिभ्यश्चितिति कलप्रत्ययान्तोऽन्तोदात्तः।
रथदारु।
वल्लीहिरण्यं।
रथशब्द आद्युदात्तः।

[#६६६]

हनिकुषिनीरमिकाशिभ्यः क्थनित्यादिना क्थन्प्रत्ययः।
वल्लीशब्दो ङीषः स्वरेण अन्तोदात्तः।
तदर्थे इति किं? कुबेरबलिः।
प्रकृतिविकारभावे स्वरोऽयं इष्यते।।

---

1. <अर्थे>#।। PS_६,२.४४।।

______Sठाऱ्ठJKव्_६,२.४४ः

चतुर्थी इति वर्तते।
अर्थशब्दे उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति।
मात्रे इदं मात्रर्थं।
पित्रर्थं।
देवतार्थं।
अतिथ्यर्थं।
मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ।
देवताशब्दो लित्स्वरेण मध्योदात्तः।
अतिथिः इति अतेरिथिनिति इथिन्प्रत्ययान्तः।
तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यं इत्यतदर्थार्थोऽयं आरम्भः।
केचित्पुनराहुः ज्ञापकार्थं इदं।
एतदनेन ज्ञाप्यते, पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति।
अश्वघासः, श्वश्रूसुरं इत्यत्र सत्यपि तादर्थ्ये न भवति।।

---

1. <क्ते च>#।। PS_६,२.४५।।

______Sठाऱ्ठJKव्_६,२.४५ः

क्तान्ते च+उत्तरपदे चतुर्थ्यन्तं प्रकृतिस्वरं भवति।
गोहितं।
अश्वहितं।
मनुष्यहितं।
गोरक्षितं।
अश्वरक्षितं।
वनं तापसरक्षितं।

अश्वशब्द आद्युदात्तः।
मनुष्यशब्दोऽन्तस्वरितः।
परिशिष्ट - पूर्वपदमन्तोदात्तं।
गोभ्यो रक्षितं इति सम्प्रदाने चतुर्थी।।

---

1. <कर्मधारयेऽनिष्ठा>#।। PS_६,२.४६।।

______Sठा~ठ्JKव्_६,२.४६ः

कर्मधार्ये समासे क्तान्ते उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति।
श्रेणिकृताः।
ऊककृताः।
पूगकृताः।
निधनकृताः।
श्रेणिशब्द आद्युदात्तः।
ऊकपूगशब्दावन्तोदात्तौ।
निधनशब्दोऽयं मध्योदात्तः।
कर्मधारये इति किं? श्रेण्या कृतं श्रेणिकृतं।
अनिष्ठा इति किं? कृताकृतं।।

---

1. <अहीने द्वितीया>#।। PS_६,२.४७।।

______Sठा~ठ्JKव्_६,२.४७ः

अहीनवाचिनि समासे क्तान्ते उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति।
कष्टश्रितः।
त्रिशकलपतितः।
ग्रामगतः।
कष्टशब्दोऽन्तोदात्तः।
त्रीणि शकलानि अस्य त्रिशकलः, बहुव्रीहिस्वरेण आद्युदात्तः।
ग्रामशब्दो नित्स्वरेण आद्युदात्तः।
अहीने इति किं? कान्तारातीतः।
योजनातीतः।
द्वितीयाऽनुपसर्गे इति वक्तव्यं।
इह मा भूत्, सुखप्राप्तः।
दुःखप्राप्तः।
सुखापन्नः।
दुःखापन्नः।
अन्तः थाथेत्यस्य अपवादोऽयं।।

---

[#६६७]

1. <तृतीया कर्मणि># । । PS_६,२.४८ । ।

_______Sठाऱ्ठJKव्_६,२.४८ः

कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति ।
अहिहतः, अहिहतः ।
वज्रहतः ।
महाराजहतः ।
नखनिर्भिन्ना ।
दात्रलूना ।
आङि श्रिहनिभ्यां ह्रस्वश्च इति अहिरन्तोदात्तो व्युत्पादितः ।
केचिदाद्युदात्तं इच्छन्ति ।
वज्रो रक्प्रत्ययान्तः ।
महाराजश्टच्प्रत्ययान्तः ।
नास्य खमस्तीति बहुव्रीहौ नकुलनखेति नखशब्दो निपातितः ।
तेन नञ्सुभ्यां (*६,२.१७२) इत्यन्तोदात्तः ।
दात्रशब्दो दाम्नीशस इति ष्ट्रन्प्रत्ययान्तः ।
कर्मणि इति किं ? रथेन यातः रथयातः ।
गत्यर्थत्वात्कर्तरि क्तः । ।

---

1. <गतिरनन्तरः># । । PS_६,२.४९ । ।

_______Sठाऱ्ठJKव्_६,२.४९ः

क्ते कर्मणि इति वर्तते ।
कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति ।
प्रकृतः ।
प्रहृतः ।
अनन्तरः इति किं ? अभ्युद्धृतः ।
समुद्धृतः ।
समुदाहृतः ।
व्यवहितस्य गतेरयं स्वरो न भवति ।
अनन्तरे पुनरिष्यते ।
कारकपूर्वस्य तु सति शिष्टत्वात्थाथादिस्वर एव भवति दूरादागतः इति ।
अनन्तरग्रहणसामर्थ्यादेव कृद्ग्रहणे गतिकारकपूर्वस्य अपि इत्येतन्न अश्रीयते ।
कर्मणि इत्येव, प्रकृतः कटं देवदत्तः ।
थाथादिस्वरापवादो योगः । ।

---

1. <त-आदौ च निति कृत्य्-अतौ># । । PS_६,२.५० । ।

_______Sठाऱ्ठJKव्_६,२.५०ः

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः प्रकृतिस्वरो भवति ।
प्रकर्ता ।
प्रकर्तुं ।
प्रकृतिः ।
प्रकर्ता इति तृन्नन्तः ।
कृत्स्वरबाधनार्थं वचनं ।
तादौ इति किं ? प्रजल्पाकः ।
निति इति किं ? प्रकर्ता ।
तृजन्तः ।
कृद्ग्रहणं उपदेशे ताद्यर्थं ।
इह अपि यथा स्यात्, प्रलपिता ।
प्रलपितुं ।
अतौ इति किं ? आगन्तुः । ।

---

1. <तवै च अन्तश्च युगपत्># । । PS_६,२.५१ । ।

_______Sठान्ठ्JKव्_६,२.५१ः

तवैप्रत्ययस्य अन्त उदात्तो भवति गतिश्च अनन्तरः प्रकृतिस्वरः इति एतदुभयं युगपद्भवति ।
अन्वेतवै ।
परिस्तरितवै ।
परिपातवै ।
तस्मादग्निचिन्न अभिचरितवै ।
उपसर्गा आद्युदात्ता अभिवर्जं इत्यभिरन्तोदात्तः ।
कृत्स्वरापवादो योगः । ।

---

1. <अनिगन्तोऽञ्चतौ वप्रत्यये># । । PS_६,२.५२ । ।

_______Sठान्ठ्JKव्_६,२.५२ः

अनिगन्तो गतिः प्रकृतिस्वरो भवति अञ्चतौ वप्रत्यये परतः ।
प्राङ्, प्राञ्चौ, प्राञ्चः ।
प्राङ्, प्राञ्चौ, प्राञ्चः ।
स्वरितो वा+अनुदात्ते पदादौ (*८,२.६) इत्ययं एकादेशः उदात्तः स्वरितो वा ।
[#६६८]

पराङ्, पराञ्चौ, पराञ्चः ।
अनिगन्तः इति किं ? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः ।
कृदुत्तरपदप्रकृतिस्वर इह भवति ।
वप्रत्यये इति किं ? उदञ्चनः ।
चोरनिगन्तोऽञ्चतौ वप्रत्ययः इत्येव स्वरो भवति वप्रतिषेधेन ।
पराचः ।
पराचा । ।

---

1. <न्य्-अधी च># । । PS_६,२.५३ । ।

_______Sठाऽ्ठ्JKव्_६,२.५३ः

नि अधि इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः ।
न्यङ्, न्यञ्चौ, न्यञ्चः ।
उदात्तस्वरितयोर्यनः स्वरितोऽनुदात्तस्य (*८,२.४) इत्यञ्चतेरकारः स्वरितः ।
अध्यङ्, अध्यञ्चौ, अध्यञ्चः ।
अधीचः ।
अधीचा । ।

---

1. <ईषदन्यतरस्याम्># । । PS_६,२.५४ । ।

_______Sठाऽ्ठ्JKव्_६,२.५४ः

ईषतित्येतत्पूर्वपदं अन्यतरस्यां प्रक्र्तिस्वरं भवति ।
ईषत्कडारः, ईषत्कडारः ।
ईषत्पिङ्गलः, ईषत्पिङ्गलः ।
ईषतित्ययं अन्तोदात्तः ।
ईषद्भेदः इत्येवं आदौ कृत्स्वर एव भवति । ।

---

1. <हिरण्यपरिमाणं धने># । । PS_६,२.५५ । ।

_______Sठाऽ्ठ्JKव्_६,२.५५ः

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्दे उत्तरपदेऽन्यतरस्यां प्रक्र्तिस्वरं भवति ।
द्विसुवर्णधनम्, द्विसुवर्णधनं ।
द्वौ सुवर्णौ परिमाणं अस्य द्विसुवर्णम्, तदेव धनं इति कर्मधारयः ।
बहुव्रीहावपि परत्वाद्विकल्प एव भवति ।
द्विसुवर्नधनः, द्विसुवर्णधनः ।
हिरण्यग्रहणं किं ? प्रस्थधनं ।
परिमाणग्रहणं किं ? काञ्चनधनं ।
धने इति किं ? निष्कमाला । ।

---

1. <प्रथमोऽचिर-उपसम्पत्तौ># । । PS_६,२.५६ । ।

______Sठाञ्ठ्JKव्_६,२.५६ः

प्रथमशब्दः पूर्वपदं अचिरोपसम्पत्तौ गम्यमानायां अन्यतरस्यां प्रक्तितिस्वरं भवति ।
अचिरोपसम्पत्तिः अचिरोपश्लेषः, अभिनवत्वं ।
प्रथ्मवैयाकरणः, प्रथमवैयाकरणः ।
अभिनववैयाकरणः, सम्प्रति व्याकरणं अध्येतुं प्रवृत्तः इत्यर्थः ।
प्रथमशब्दः प्रथेरमचिति चित्त्वादन्तोदात्तः ।
अचिरोपसम्पत्तौ इति किं ? प्रथमवैयाकरणः ।
वैयाकरणानामाद्यो मुख्यो वा यः स नित्योऽन्तोदात्तः एव । ।

---

[#६६९]

1. <कतर-कतमौ कर्मधारये># । । PS_६,२.५७ । ।

______Sठाञ्ठ्JKव्_६,२.५७ः

कतरशब्दः कतमशदश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति ।
कतरकठः, कतरकठः ।
कतमकठः, कतमकठः ।
कर्मधारयग्रहणं उत्तरार्थं इह तु प्रतिपदोक्तत्वादेव सिद्धं । ।

---

1. <आर्यो ब्राह्मण-कुमारयोः># । । PS_६,२.५८ । ।

______Sठाञ्ठ्JKव्_६,२.५८ः

आर्यशब्दः पूर्वपदं ब्रह्मणकुमारयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति ।
आर्यब्रह्मणः, आर्यब्राह्मणः ।
आर्यकुमारः, आर्यकुमारः ।
आर्यशब्दः ण्यदन्तोऽन्तस्वरितः ।
आर्यः इति किं ? परमब्रह्मणः ।
परमकुमारः ।
ब्रह्मणकुमारयोः इति किं ? आर्यक्षत्रियः ।
कर्मधारये इत्येव, आर्यस्य ब्राह्मणः आर्यब्राह्मणः । ।

---

1. <राजा च># । । PS_६,२.५९ । ।

______Sठाञ्ठ्JKव्_६,२.५९ः

राजा च पूर्वपदं ब्राह्मणकुमारयोः उत्तरपदयोः कर्मधारये समासे अन्यतरस्यां प्रक्तितिस्वरं भवति ।
राजब्राह्मणः, राजब्राह्मणः ।

राजकुमारः, राजकुमारः ।
कर्मधारये इत्येव, राज्ञो ब्राह्मणः राजब्रह्मणः ।
राजकुमारः ।
पृथग्योगकरणं उत्तरार्थं ।।

---

1. <षष्ठी प्रत्येनसि># ।। PS_६,२.६० ।।

______Sठान्ठ्JKव्_६,२.६०ः

राजा इति वर्तते, अन्यतरस्यां इति च ।
षष्ठ्यन्तो राजशब्दः पूर्वपदं प्रत्येनसि उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति ।
राज्ञः प्रत्येनाः राजप्रत्येनाः, राजप्रत्येनाः ।
षष्ठी इति किं ? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः ।।

---

1. <क्ते नित्य-अर्थे># ।। PS_६,२.६१ ।।

______Sठान्ठ्JKव्_६,२.६१ः

क्तान्ते उत्तरपदे नित्यार्थे समासे पूर्वपदं अन्यतरस्यां प्रक्रितिस्वरं भवति ।
नित्यप्रहसितः, नित्यप्रहसितः ।
सततप्रहसितः, सततप्रहसितः ।
कालाः इति द्वितीयासमासोऽयं ।
नित्यशब्दः त्यब्नेर्ध्रुवे इति त्यबन्तः आद्युदात्तः ।
सतत इति यदा भावे क्तः तदा थाथादिस्वरेण अन्तोदात्तः ।
नित्यार्थे इति किं ? मुहूर्तप्रहसितः ।।

---

1. <ग्रामः शिल्पिनि># ।। PS_६,२.६२ ।।

______Sठान्ठ्JKव्_६,२.६२ः

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यत्रस्यां प्रकृतिस्वरं भवति ।
ग्रामनापितः, ग्रामनापितः ।
ग्रामकुलालः, ग्रामकुलालः ।
ग्रामशब्दः आद्युदात्तः ।
ग्रामः इति किं ? परमनापितः ।
शिल्पिनि इति किं ? ग्रामरथ्या ।।

---

[#६७०]

1. <राजा च प्रशंसायाम्># । । PS_६,२.६३ । ।

_______Sठाञ्ठ्JKव्_६,२.६३ः

राजशब्दः पूर्वपदं शिलिवाचिनि उत्तरपदे प्रशंसायां गम्यमानायां अन्यतरस्यां प्रक्र्तिस्वरं भवति ।
राजनापितः, राजनापितः ।
राजकुलालः, राजकुलालः ।
कर्मधारये राजगुणाध्यरोपेणोत्तरपदार्थस्य प्रशंसा ।
षष्ठीसमासे च राजयोग्यतया तस्य ।
राजा इति किं ? परमनापितः ।
प्रशंसायां इति किं ? राजनापितः ।
शिल्पिनि इत्येव, राजहस्ती । ।

---

1. <आदिरुदात्तः># । । PS_६,२.६४ । ।

_______Sठाञ्ठ्JKव्_६,२.६४ः

आदिरुदात्तः इत्येतदधिकृतं ।
इत उत्तरं यद्वक्ष्यामः तत्र पूर्वपदस्य आदिरुदात्तो भवति इत्येवं तद्वेदितव्यं ।
वक्ष्यति - सप्तमीहारिणौ धर्म्येऽहरणे (*६,२.६५) इति ।
स्तूपेशाणः ।
सुकुटेकार्षापणं ।
याज्ञिकाश्वः ।
वैयाकरणहस्ती ।
दृषदिमाषकः ।
आदिरिति प्रागन्ताधिकाराथ् ।
उदात्तः इति प्रकृत्या भगालं (*६,२.१३७) इति यावत् । ।

---

1. <सप्तमीहारिणौ धर्म्येऽहरणे># । । PS_६,२.६५ । ।

_______Sठाञ्ठ्JKव्_६,२.६५ः

सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति ।
हारि इति देयं यः स्वीकरोति सोऽभिधीयते ।
धर्म्यं इत्याचारनियतं देयं उच्यते ।
धर्मो हि अनुवृत्त आचारः, तस्मादनपेतं तेन वा प्राप्यं इति ।
स्तूपेशाणः ।
मुकुटेकार्षापणं ।
हलेद्विपदिका ।
हलेत्रिपदिका ।

दृषदिमाषकः ।
सञ्ज्ञायां इति सप्तमीसमासः, कारनाम्नि च इति विभक्तेरलुक् ।
हारिणि - याज्ञिकाश्वः ।
वैयाकरणहस्ती ।
मातुलाश्वः ।
पितृव्यगवः ।
क्वचिदयं आचारो व्यवस्थितः, स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनां अश्वादि इति ।
धर्म्ये इति किं ? स्तम्बेरमः ।
कर्मकरवर्धितकः ।
अहरणे इति किं ? वाडवहरणं ।
वडवायाः अयं वाडवः ।
तस्य बीजनिषेकादुत्तरकालं शरीरपूष्ट्यर्थं यद्दीयते हरणं इति तदुच्यते ।
परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन इत्येतदहरणे इत्यनेन ज्ञाप्यते, तेन वाडवहार्यं इति हारिस्वरः सिद्धो भवति । ।

---

1. <युक्ते च># । । PS_६,२.६६ । ।

______Sठान्ठ्JKव्_६,२.६६ः

युक्तवाचिनि च समासे पूर्वपदं आद्युदात्तं भवति ।
गोबल्लवः ।
अश्वबल्लवः ।
गोमणिन्दः ।
अश्वमणिनदः ।
गोसङ्ख्यः ।
अश्वसङ्ख्यः ।
युक्तः इति समाहितः, कर्तव्ये तत्परो यः स उच्यते । ।

---

1. <विभाषा अध्यक्षे># । । PS_६,२.६७ । ।

______Sठान्ठ्JKव्_६,२.६७ः

अध्यक्षशब्दे उत्तरपदे विभाषा पूर्वपदं आद्युदात्तं भवति ।
गवाद्यक्षः, गवाध्यक्षः ।
अश्वाध्यक्षः, अश्वाध्यक्षः । ।

---

[#६७१]

1. <पापं च शिल्पिनि># । । PS_६,२.६८ । ।

_______SठाWकव्_६,२.६८ः

पापशदः शिल्पिवाचिनि उतरपदे विभाषा आद्युदात्तो भवति ।
पापनापितः, पापनापितः ।
पापकुलालः, पापकुलालः ।
पापाणके कुत्सितैः (*२,१.५४) इति पापशब्दस्य प्रतिपदोक्तः समानाधिकरणसमासः इति षष्ठीसमसे न भवति, पापस्य नापितः पापनापितः इति । ।

---

1. <गोत्र-अन्तेवासि-मानव-ब्राह्मणेसु क्षेपे># । । PS_६,२.६९ । ।

_______SठाWकव्_६,२.६९ः

गोत्रवाचिनि अन्तेवासिवाचिनि च+उत्तरपदे मानवब्राह्मनयोश्च क्षेपवाचिनि समासे पूर्वपदं आद्युदात्तं भवति ।
जङ्घावात्स्यः ।
यो जङ्घादानं ददान्यहं इति वात्स्यः सम्पद्यते स जङ्घावात्स्यः इति क्षिप्यते ।
भार्यासौश्रुतः ।
सुश्रुतापत्यस्य बार्याप्रधानतया क्षेपः ।
वाशाब्राह्मकृतेयः ।
ब्रह्मकृतशदः शुभ्रादिसु पठ्यते ।
गोत्र ।
अन्तेवासि - कुमारीदाक्षाः ।
कम्बलचारायणीयाः ।
घृतरौढीयाः ।
ओदनपाणिनीयाः ।
कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते ।
अन्तेवासि ।
माणव - भिक्षामाणवः ।
भिक्षां लप्स्येऽहमिति माणवो भवति ।
माणव ।
ब्राह्मण - दासीब्राह्मणः ।
वृषलीब्राह्मणः ।
भयब्राह्मणः ।
यो भयेन ब्राह्मणः सम्पद्यते ।
अत्र यस्य अन्यत्समासलक्षणं न अस्ति, सुप्सुपा इत्येव तत्र समासः कर्तव्यः ।
गोत्रादिषु इति किं ? दासीश्रोत्रियः ।
क्षेपे इति किं ? महाब्राह्मणः । ।

---

1. <अङ्गानि मैरेये># । । PS_६,२.७० । ।

_______SठाWकव्_६,२.७०ः

मैरेयशब्दे उत्तरपदे तदङ्गवाचिनि पूर्वपदान्याद्युदात्तानि भवन्ति ।
गुडमैरेयः ।
मधुमैरेयः ।

मद्यविशेषो मैरेयस्तस्य गुडविकारस्य गुदोऽङ्गं भवति, मधुविकारस्य तस्य मधु अङ्गं।
अङ्गानि इति किं? परममैरेयः।
मैरेये इति किं? पुष्पासवः।
फलासवः।।

---

1. <भक्त-आख्यास्तदर्थेषु>#।। PS_६,२.७१।।

_______Sठाऱ्ठ्JKव्_६,२.७१ः

भक्तमन्नम्, तदाख्यास्तद्वाचिनः शब्दाः, तदर्थेषु उत्तरपदेषु आद्युदात्ता बवन्ति।
भिक्षाकंसः।
श्राणाकंसः।
भाजीकंसः।
भिक्षादयोऽन्नवचनाः।
भक्ताख्याः इति किं? समाशशालयः।
समशनं समाशः इति क्रियामात्रं उच्यते, न द्रव्यं।
तदर्थेसु इति किं? भिक्षाप्रियः।
बहुव्रीहिरयम्, अत्र पूर्वपदं अन्तोदात्तं।।

---

1. <गो-बिडाल-सिंह-सैन्धवेषु उपमाने>#।। PS_६,२.७२।।

_______Sठाऱ्ठ्JKव्_६,२.७२ः

गवादिषु उपमानवाचिषु उत्तरपदेषु पूर्वपदं आद्युदात्तं भवति।
धान्यगवः।
भिक्षाबिडालः।
तृणसिंहः।

[#६७२]

काष्ठसिंहः।
सक्तुसैन्धवः।
पानसैन्धवः।
धान्यं गौरिव इति विगृह्य व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिः इति समासः।
उपमानार्थोऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः।
गवाकृत्या संनिवेशितं धान्यं धान्यगवशब्देन+उच्यते।
उपमाने इति किं? परमसिंहः।।

---

1. <अके जीविका-अर्थे>#।। PS_६,२.७३।।

_______Sठाऱ्ठ्JKव्_६,२.७३ः

अकप्रत्ययान्ते उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदं आद्युदात्तं भवति ।
दन्तलेखकः ।
नखलेखकः ।
अवस्करशोधकः ।
रमणीयकारकः ।
दन्तलेखनादिभिर्येषां जीविका त एवं उच्यन्ते ।
नित्यं क्रीडाजीविकयोः (*२,२.१७) इति समासः ।
अके इति किं ।
रमणीयकर्ता ।
जीविकार्थे इति किं ? इक्षुभक्षिकां मे धारयसि ।।

---

1. <प्राचां क्रीडायां># ।। PS_६,२.७४ ।।

______Sठाऩ्ढ्JKव्_६,२.७४ः

प्राग्देशवर्तिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदं आद्युदात्तं भवति ।
उद्दालकपुष्पभञ्जिका ।
वीरणपुष्पप्रचायिका ।
शालभञ्जिका ।
तालभञ्जिका ।
सञ्ज्ञायं (*३,३.१०९) इति ण्वुल् ।
नित्यं क्रीडाजीविकयोः (*२,२.१७) इति षष्ठीसमासः ।
प्राचां इति किं ? जीवपुत्रप्रचायिका ।
इयं उदीचां क्रीडा ।
क्रीडायां इति किं ? तवपुष्पप्रचायिका ।
पर्याये ण्वुच्प्रत्ययो भवति ।।

---

1. <अणि नियुक्ते># ।। PS_६,२.७५ ।।

______Sठाऩ्ढ्JKव्_६,२.७५ः

अणन्ते उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदं आद्युदात्तं भवति ।
छत्रधारः ।
तूणीरघारः ।
कमण्डलुग्राहः ।
भृङ्गारधारः ।
नियुक्तोऽधिकृतः, स च कस्मिंश्चित्कर्तव्ये तत्परो न भवति इति नियुक्तः इत्यनेन सिध्यति ।
नियुक्तः इति किं ? काण्डलावः ।
शरलावः ।।

---

1. <शिल्पिनि च अकृञः># । । PS_६,२.७६ । ।

______Sठान्ठ्JKव्_६,२.७६ः

शिल्पिवाचिनि समासे अणन्ते उत्तरपदे पूर्वपदं आद्युदात्तं भवति, स चेदण्कृञो न भवति ।
तन्तुवायः ।
तुन्नवायः ।
वालवायः ।
शिल्पिनि इति किं ? काण्डलावः ।
शरलावः ।
अकृञः इति किं ? कुम्भकारः ।
अयस्कारः । ।

---

[#६७३]

1. <सञ्ज्ञायां च># । । PS_६,२.७७ । ।

______Sठान्ठ्JKव्_६,२.७७ः

सञ्ज्ञायां विषये अणन्ते उत्तरपदे अकृञः पूर्वपदं आद्युदात्तं भवति ।
तन्तुवायो नाम कीटः ।
वालवायो नाम पर्वतः ।
अकृञः इत्येव, रथकारो नाम ब्राह्मणः । ।

---

1. <गोतन्तियवं पाले># । । PS_६,२.७८ । ।

______Sठान्ठ्JKव्_६,२.७८ः

गो तन्ति यव इत्येतानि पूर्वपदानि पालशब्दे अद्युदात्तनि भवन्ति ।
गोपालः ।
तन्तिपालः ।
यवपालः ।
अनियुक्तार्थ आरम्भः ।
गोतन्तियवं इति किं ? वत्सपालः ।
पाले इति किं ? गोरक्षः । ।

---

1. <णिनि># । । PS_६,२.७९ । ।

______Sठान्ठ्JKव्_६,२.७९ः

णिनन्ते उत्तरपदे पूर्वपदं आद्युदात्तं भवति ।
पुष्पहारी ।
फलहारी ।
पर्णहारी । ।

---

1. <उपमनं शब्द-अर्थ-प्रकृतावेव># । । PS_६,२.८० । ।

______Sठाऩ्ठ्JKव्_६,२.८०ः

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतौ एव णिनन्ते उत्तरपदे आद्युदात्तं भवति ।
उपमानं नियम्यते ।
उष्ट्रक्रोशी ।
ध्वाङ्क्षरावी ।
खरनादी ।
उपमानग्रहनं अस्य पूर्वस च योगस्य विषयविभागार्थं ।
शब्दार्थप्रकृतौ इति किं ? वृकवञ्ची ।
वृकप्रेक्षी ।
प्रकृतिग्रहणं किं ? प्रकृतिरेव यत्र+उपसर्गनिरपेक्षा शब्दार्था भवति तत्र+एव यथा स्याद्, इह मा भूद्गर्दभोच्चारी, कोकिलाभिव्याहारी इति ।
एवकारकरणं उपमानावधारणार्थं ।
शब्दार्थं ।
शब्दार्थप्रकृतौ त्वनुपमानमुपमानं च आद्युदात्तं भवति ।
सिंहविनर्दी ।
पुष्कलजल्पी । ।

---

1. <युक्तारोह्य्-आदयश्च># । । PS_६,२.८१ । ।

______Sठाऩ्ठ्JKव्_६,२.८१ः

युक्तारोह्यादयः समासाः आद्युदात्ता भवन्ति ।
युक्तारोही ।
आगतरोही ।
आगतयोधी ।
आगतवञ्ची ।
आगतनर्दी ।
आगतप्रहारी ।
एते णिनन्ताः णिनि (*६,२.७९) इत्यस्य+एव+उदाहरनार्थं पथ्यन्ते पुर्वोत्तरपदनियमार्था इति केचिथ् ।
इह मा भूत्, वृक्षारोहि, युक्ताध्यायी इति ।
आगतमत्स्या ।
क्षीरहोता ।
भगिनीभर्ता ।
याजकादित्वात्षष्ठीसमासावेतौ ।
ग्रामगोधुक् ।
अश्वत्रिरात्रः ।
गर्गत्रिरात्रः ।
व्युष्टत्रिरात्रः ।
शणपादः ।

समपादः ।
षष्ठीसमासा एते ।
एकशितिपथ् ।
एकः शितिः पादोऽस्य इति त्रिपदो बहुव्रीहिः ।
तत्र एकशितिशब्दस्तद्धितार्थोत्तरपदः इति तत्पुरुषसञ्ज्ञः, तस्य निमित्तिस्वरबलीयस्त्वादन्तोदात्तत्वं प्राप्तं इत्याद्युदात्तत्वं विधीयते ।

[#६७४]

एवं अपि न अर्थ एतेन, इगन्त द्विगौ (*६,२.२९) इति सिद्धत्वात्? एवं तर्हि ज्ञापनार्थं ।
एतज्ज्ञापयति शित्यन्तस्य+उत्तरपदे द्विगुस्वरो न भवति इति ।
तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति ।
निमित्तिस्वरबलीयस्त्वस्य अप्येकशितिपात्स्वरवचनं एव ज्ञापकं वर्णयन्ति ।
पात्रेसमितादयश्च युक्तारोह्यादयस्ततस्तेऽप्याद्युदात्ता भवन्ति । ।

---

1. <दीर्घ-काश-तुष-भ्राष्ट्र-वटं जे># । । PS_६,२.८२ । ।

_______Sठा-ठ्JKव्_६,२.८२ः

दीर्घान्तं पूर्वपदम्, काश तुष भ्राष्ट्र वट इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति ।
कुटीजः ।
शमीजः ।
काशजः ।
तुषजः ।
भ्राष्ट्रजः ।
वटजः । ।

---

1. <अन्त्यात्पूर्वं बह्व्-अचः># । । PS_६,२.८३ । ।

_______Sठा-ठ्JKव्_६,२.८३ः

जे उत्तरपदे बह्वचः पूर्वपदस्य अन्त्यात्पूर्वं उदात्तं भवति ।
उपसरजः ।
मन्दुरजः ।
आमलकीजः ।
वडवाजः ।
बह्वचः इति किं ? दग्धजानि तृणानि । ।

---

1. <ग्रामेऽनिवसन्तः># । । PS_६,२.८४ । ।

_______SठाुJKव्_६,२.८४:

ग्रामशब्दे उत्तरपदे पूर्वपदं आद्युदात्तं भवति न चेद्निवसद्वाचि भवति।
मल्लग्रामः।
विणिग्ग्रामः।
ग्रामशब्दोऽत्र समूहवाची।
देवग्रामः।
देवस्वामिकः इत्यर्थः।
अनिवसन्तः इति किं? दाक्षिग्रामः।
माहकिग्रामः।
दाक्ष्यादयो निवसन्ति यस्मिन्ग्रामे स तेषां इति व्यपदिश्यते।।

---

1. <घोष-आदिषु च>#।। PS_६,२.८५।।

_______SठाुJKव्_६,२.८५:

घ्षादिषु च+उत्तरपदेषु पूर्वपदं आद्युदात्तं भवति।
दाक्षिघोषः।
दाक्षिकटः।
दाक्षिपल्वलः।
दाक्षिह्रदः।
दाक्षिबदरी।
दाक्षिपिङ्गलः।
दाक्षिपिशङ्गः।
दाक्षिशालः।
दाक्षिरक्षा।
दाक्षिशिल्पी।
दाक्ष्यश्वत्थः।
कुन्दतृणं।
दाक्षिशाल्मली।
आश्रममुनिः।
शाल्मलिमुनिः।
दाक्षिप्रेक्षा।
दाक्षिकूटः।
यान्यत्र निवासनां अधेयानि तेषु निवसद्वाचीनि अपि पूर्वपदानि आद्युदात्तानि भवन्ति।
अनिवसन्तः इति न अनुवर्तयन्ति केचिथ्।
अपरे पुनरनुवर्तयन्ति।।

---

1. <छात्र्य्-आदयः शालायाम्>#।। PS_६,२.८६।।

_______SठाुJKव्_६,२.८६:

शालायां उत्तरपदे छात्र्यादयः आद्युदात्ता भवन्ति।

छात्रिशाला ।
ऐलिशाला ।
भाण्दिशाला छात्रि ।
ऐलि ।
भाण्दि ।
व्याडि ।
आपिशलि ।
आख्यण्डि ।
आपारि ।
गोमि ।
यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदा अपि तत्पुरुषे शालायां नपुंसके (*६,२.१२३) इत्येतस्मात्पूर्वविप्रतिषेधेन पूर्वपदं आद्युदात्तं भवति ।
छात्रिशालं ।
ऐलिशालं । ।

---

[#६७५]

1. <प्रस्थेऽवृद्धं अकर्क्य्-आदीनाम्># । । PS_६,२.८७ । ।

______Sठाऽठ्JKव्_६,२.८७ः

प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितं अवृद्धं पूर्वपदं आद्युदात्तं भवति ।
इन्द्रप्रस्थः ।
कुण्डप्रस्थः ।
ह्रदप्रस्थः ।
सुवर्णप्रस्थः ।
अवृद्धं इति किं ? दाक्षिप्रस्थः ।
माहकिप्रस्थः ।
अकर्क्यादीनां इति किं ? कर्कीप्रस्थः ।
मघीप्रस्थः ।
कर्की ।
मघी ।
मकरी ।
कर्कन्धू ।
शमी ।
करीर ।
कटुक ।
कुरल ।
बदर ।
कर्क्यादिः । ।

---

1. <मालादीनां च># । । PS_६,२.८८ । ।

______Sठाऽठ्JKव्_६,२.८८ः

प्रस्थे इति वर्तते ।

प्रस्थे उत्तरपदे मालादीनं आदिरुदात्तो भवति ।
मालाप्रस्थः ।
शालाप्रस्थः ।
माला ।
शाला ।
शोणा ।
द्राक्षा ।
क्ष्ॐआ ।
क्षामा ।
काञ्ची ।
एक ।
काम ।
मालदिः ।
वृद्धार्थ आरम्भः ।
एकाशोणाशब्दयोः एङ्प्राचां देशे (*१,१.७५) इति वृद्धसज्ञा । ।

---

1. <अमहन्-नवं नगरेऽनुदीचाम्># । । PS_६,२.८९ । ।

______Sठा~ठ्JKव्_६,२.८९ः

नगरशब्दे उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदं आद्युदात्तं भवति, तच्चेदुदीचां न भवति ।
सुह्मनगरं ।
पुण्ड्रनगरं ।
अमहन्नवं इति किं ? महानगरं ।
नवनगरं ।
अनुदीचां इति किं ? नदीनगरं ।
कान्तीनगरं । ।

---

1. <अर्मे च अवर्णं द्व्यच्त्र्यच्># । । PS_६,२.९० । ।

______Sठा~ठ्JKव्_६,२.९०ः

अर्मशब्दे उत्तरपदे द्व्यच्त्र्यच्पूर्वपदं अवर्णान्तं आद्युदात्तं भवति ।
दत्तार्मं ।
गुप्तार्मं ।
कुक्कुटार्मं ।
वायसार्मं ।
अवर्णं इति किं ? वृहदर्मं ।
द्व्यच्त्र्यचिति किं ? कपिञ्जलार्मं ।
अमहन्नवं इत्येव, महार्मं ।
नवार्मं । ।

---

1. <न भूत-अधिक-सञ्जीव-मद्र-अश्म-कज्जलम्># । । PS_६,२.९१ । ।

______Sठा࿤ठJKव्_६,२.९१ः

भूत अधिक सञ्जीव मद्र अश्मन्कज्जल इत्येतानि पूर्वपदानि अर्मशब्दे उत्तरपदे नाद्युदात्तानि भवन्ति ।
भूतार्मं ।
अधिकार्मं ।
सञ्जीवार्मं ।
मद्राश्मग्रहणं सङ्घातविगृहीतार्थं ।
मद्रार्मं ।
अश्मार्मं ।
मद्राश्मार्मं ।
कज्जलार्मं ।
समासान्तोदात्तत्वं एव अत्र भवति ।

[#६७६]

आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानं ।
दिवोदासं वध्र्यश्वाय दाशुषे । ।

---

1. <अन्तः># । । PS_६,२.९२ । ।

______Sठा࿤ठJKव्_६,२.९२ः

अन्तः इत्यधिकृतं ।
इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्य अन्तः उदात्तो भवति इत्येवं वेदितव्यं ।

---

1. <वक्ष्यति - सर्वं गुणकात्स्न्र्ये># । । PS_६,२.९३ । ।

______Sठा࿤ठJKव्_६,२.९३ः

सर्वश्वेतः ।
सर्वकृष्णः ।
प्राकुत्तरपदादिः (*६,२.१११) इत्येतस्मादयं अधिकारो वेदितव्यः । ।
सर्वं गुणकात्स्न्र्ये (*६,२.९३) ।
सर्वशब्दः पूर्वपदं गुणकात्स्न्र्ये वर्तमानं अन्तोदात्तं भवति ।
सर्वश्वेतः ।
सर्वकृष्णः ।
सर्वमहान् ।
सर्वं इति किं ।

परमश्वेतः ।
आश्रयव्याप्त्या परमत्वं श्वेतत्वस्य इति गुणकात्स्न्र्ये वर्तते ।
गुणग्रहणं किं ? सर्वसौवर्णः ।
सर्वराजतः ।
कात्स्न्र्ये इति किं ? सर्वेषां श्वेततत्रः सर्वश्वेतः ।
गुणात्तरेण समासस्तरलोपश्च वक्तव्यः इत्येवं अत्र समासस्तरलोपश्च । ।

---

1. <सञ्ज्ञायां गिरिनिकाययोः># । । PS_६,२.९४ । ।

_______Sठाञ्ठ्JKव्_६,२.९४ः
सञ्ज्ञायां विषये गिरि निकाय इत्येतयोः उत्तरपदयोः पूर्वपदं अन्तोदात्तं भवति ।
अञ्जनागिरिः ।
भञ्जनागिरिः ।
निकाये - शापिण्दिनिकायः ।
मौण्डिनिकायः ।
चिखिल्लिनिकायः ।
सञ्ज्ञायां इति किं ? परमगिरिः ।
ब्राह्मणनिकायः । ।

---

1. <कुमार्यां वयसि># । । PS_६,२.९५ । ।

_______Sठाञ्ठ्JKव्_६,२.९५ः

कुमार्यां उत्तरपदे वयसि गम्यमाने पूर्वपदं अन्तोदात्तं भवति ।
वृद्धकुमारी ।
जरत्कुमारी ।
कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तं उपादाय प्रयुक्तो वृद्धादिभिर्वयो विशेषवचनैः समानाधिकरणो भवति ।
तच्च वयः इह गृह्यते, न कुमारत्वं एव ।
वयसि इति किं ? परमकुमारी । ।

---

1. <उदकेऽकेवले># । । PS_६,२.९६ । ।

_______Sठाञ्ठ्JKव्_६,२.९६ः

अकेवलं मिश्रं ।
तद्वाचिनि समासे उदकशब्दे उत्तरपदे पूर्वपदं अन्तोदात्तं भवति ।
गुडमिश्रं उदकं गुडोदकम्, गुडोदकं ।
तिलोदकम्, तिलोदकं ।
स्वरे कृते एकादेशः स्वरितो वानुदात्ते पदादौ (*८,२.६) इति पक्षे स्वरितो भवति ।

अकेवले इति किं ? शीतोदकं ।
उष्णोदकं । ।

---

[#६७७]

1. <द्विगौ क्रतौ># । । PS_६,२.९७ । ।

_______Sठाऽ्ठ्JKव्_६,२.९७ः

द्विगौ उत्तरपदे क्रतुवाचिनि समासे पूर्वपदं अन्तोदात्तं भवति ।
गर्गत्रिरात्रः ।
चरकत्रिरात्रः ।
कुसुरविन्दसप्तरात्रः ।
गर्गाणां त्रिरात्रः गर्गत्रिरात्रः ।
द्विगौ इति किं ? अतिरात्रः ।
अचश्चित्वा दन्तोदात्तः ।
क्रतौ इति किं ? बिल्वसप्तरात्रः ।
बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रः बिल्वसप्तरात्रः । ।

---

1. <सभायां नपुंसके># । । PS_६,२.९८ । ।

_______Sठाऽ्ठ्JKव्_६,२.९८ः

सभाशब्दे उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदं अन्तोदात्तं भवति ।
गोपालसभं ।
पशुपालसभं ।
स्त्रीसभं ।
दासीसभं ।
सभायां इति किं ? ब्राह्मणसेनं ।
नपुंसकं इति किं ? राजसभा ।
ब्राह्मणसभा ।
सभायां प्रतिपदोक्तं नपुंसकलिङ्गं गृह्यते इति समणीयसभम्, ब्राह्मणकुलं इत्यत्र न भवति । ।

---

1. <पुरे प्राचाम्># । । PS_६,२.९९ । ।

_______Sठाऽ्ठ्JKव्_६,२.९९ः

पुरशब्दे उत्तरपदे प्राचां देशे पूर्वपदं अन्तोदात्तं भवति ।
ललाटपुरं ।

काञ्चीपुरं ।
शिवदत्तपुरं ।
कार्णिपुरं ।
नार्मपुरं ।
प्राचां इति किं ? शिवपुरं । ।

---

1. <अरिष्ट-गौड-पूर्वे च># । । PS_६,२.१०० । ।

______Sठान्ढ्JKव्_६,२.१००:

अरिष्त गौड इत्येवं पूर्वे समासे पुरशब्दे उत्तरपदे पूर्वपदं अन्तोदात्तं भवति ।
अरिष्टपुरं ।
गौडपुरं ।
पूर्वग्रहणं किं ? इह अपि यथा स्याथ् ।
अरिष्टश्रितपुरं ।
गौडभृत्यपुरं । ।

---

1. <न हास्तिन-फलक-मार्देयाः># । । PS_६,२.१०१ । ।

______Sठान्ढ्JKव्_६,२.१०१:

हास्तिन फलक मार्देय इत्येतानि पूर्वपदानि पुरशब्दे उत्तरपदे न अन्तोदात्तानि भवन्ति ।
पुरे प्राचां (*६,२.९९) इति प्राप्तिः प्रतिषिध्यते ।
हास्तिनपुरं ।
फलकपुरं ।
मार्देयपुरं ।
मृदोरपत्यं मार्देयः ।
शुभ्रादित्वात्ढक्(*४,१.१२३) । ।

---

1. <कुसूल-कूप-कुम्भ-शालं बिले># । । PS_६,२.१०२ । ।

______Sठान्ढ्JKव्_६,२.१०२:

कुसूल कूप कुम्भ शाला इत्येतानि पूर्वपदानि बिलशब्दे उत्तरपदे अन्तोदात्तानि भवन्ति ।
कुसूलबिलं ।
कूपबिलं ।
कुम्भबिलं शालाबिलं ।
कुसूलादिग्रहणं किं ? सर्पबिलं ।
बिले इति किं ? कुसूलस्वामी । ।

[#६७८]

1. <दिक्-शब्दा ग्राम-जनपद-आख्यान-चानराटेषु># । । PS_६,२.१०३ । ।

_______Sठा~ठ्JKव्_६,२.१०३ः

दिक्शब्दाः पूर्वपदानि अन्तोदात्तनि भवन्ति ग्रामजनपदाख्यानवाचिषु उत्तरपदेषु, चानराटशब्दे च ।
पूर्वेषुकामशमी, पूर्वेषुकामशमी ।
अपरेषुकामशमी, अपरेषुकामशमी ।
पूर्वकृष्णमृत्तिका ।
अपरकृष्णमृत्तिका ।
जनपद - पूर्वपञ्चालाः ।
अपरपञ्चालाः ।
आख्यान - पूर्वाधिरामम्, पूर्वाधिरामं ।
पूर्वयायातं ।
अपरयायातं ।
अधिरामं अधिकृत्य कृतो ग्रन्थः आधिरामं ।
तथा यायातं ।
चानराट - पूर्वचानराटं ।
अपरचानराटं ।
शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थं । ।

---

1. <आचार्य-उपसर्जनश्च अन्तेवासिनि># । । PS_६,२.१०४ । ।

_______Sठा~ठ्JKव्_६,२.१०४ः

आचार्योपसर्जनान्तेवासिवाचिनि उत्तरपदे दिक्शब्दा अन्तोदात्ताः भवन्ति ।
पुर्वपाणिनीयाः ।
अपरपाणिनीयाः ।
पूर्वकाशकृत्स्नाः ।
अपरकाशकृत्स्नाः ।
आचार्योपसर्जनः इति किं ? पूर्वशिष्याः ।
अन्तेवासिनि इति किं ? पूर्वपाणिनीयं शास्त्रं । ।

---

1. <उत्तरपदवृद्धौ सर्वं च># । । PS_६,२.१०५ । ।

_______Sठा~ठ्JKव्_६,२.१०५ः

उत्तरपदस्य (*७,३.१०) इत्यधिकृत्य या विहिता वृद्धिः, तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्च अन्तोदात्ता भवन्ति ।
सर्वपञ्चालकः ।
पूर्वपञ्चालकः ।

उत्तरपाञ्चालकः।
सुसर्वार्धदिक्शब्देभ्यो जनपदस्य+इति तदन्तविधिना जनपदलक्षणो वुञ्प्रत्ययः।
सुसर्वार्धाज्जनपदस्य (*७,३.१२) दिशोऽमद्राणां (*७,३.१३) इति च+उत्तरपदवृद्धिः।
अधिकारलक्षणादिह न भवति, सर्वमासः, सर्वकारकः इति।।

---

1. <बहुव्रीहौ विश्वं सञ्ज्ञायां>#।। PS_६,२.१०६।।

_______Sठाऱ्ठ्JKव्_६,२.१०६ः

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं सञ्ज्ञायां विषयेऽन्तोदात्तं भवति।
विश्वदेवः।
विश्वयशाः।
विश्वमहान्।
पूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तत्वं प्राप्तं।
बहुव्रीहौ इति किं? विश्वे च ते देवाः विश्वदेवाः।
सञ्ज्ञायां इति किं? विश्वे देवा अस्य विश्वदेवः।
विश्वामित्रः, विश्वाजिनः इत्यत्र सञ्ज्ञायां मित्राजिनयोः (*६,२.१६५) इत्येतद्भवति परत्वाथ्।
बहुव्रीहौ इत्येतदधिक्रियते प्रागव्ययीभावसञ्ज्ञानात्।।

---

1. <उदर-अश्व-इषुषु>#।। PS_६,२.१०७।।

_______Sठाऱ्ठ्JKव्_६,२.१०७ः

उदर अश्व इषु इत्येतेषु उत्तरपदेसु बहुव्रीहौ समासे सञ्ज्ञायांविषये पूर्वपदं अन्तोदात्तं भवति।
वृकोदरः।
दामोदरः।
हर्यश्वः।
यौवनाश्वः।
सुवर्णपुङ्खेषुः।
महेषुः।।

---

[#६७९]

1. <क्षेपे>#।। PS_६,२.१०८।।

_______Sठाऱ्ठ्JKव्_६,२.१०८ः

क्षेपे गम्यमाने उदरादिषु उत्तरपदेषु बहुव्रीहौ समासे सञ्ज्ञायां विषये पूर्वपदं अन्तोदात्तं भवति।
कुण्दोदरः।
घटोदरः।

कटुकाश्वः ।
स्पन्दिताश्वः ।
अनिघातेषुः ।
चलाचलेषुः ।
अनुदरः, सूदरः इत्यत्र नञ्सुभ्यां (*६,२.१७२) इत्येतद्भवति विप्रतिषेधेन । ।

---

1. <नदी बन्धुनि># । । PS_६,२.१०९ । ।

______Sठान्ठ्JKव्_६,२.१०९ः

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदं अन्तोदात्तं भवति ।
गार्गीबन्धुः ।
वात्सीबन्धुः ।
नदी इति किं ? ब्रह्मबन्धुः ।
ब्रह्मशब्द आद्युदात्तः ।
बन्धुनि इति किं ? गार्गीप्रियः । ।

---

1. <निष्ठा-उपसर्गपूर्वं अन्यतरस्याम्># । । PS_६,२.११० । ।

______Sठान्ठ्JKव्_६,२.११०ः

बहुव्रीहौ समासे निष्ठान्तं उपसर्गपूर्वं पूर्वपदं अनतरस्यां अनतोदात्तं भवति ।
प्रधौतमुखः, प्रधौतमुखः प्रधौतमुखः ।
प्रक्षालितपादः, प्रक्षालितपादः ।
यदि मुखशब्दः स्वाङ्गवाची तदा पक्षे मुखं स्वाङ्गं (*६,२.१६७) इत्येतद्भवति, न चेत्पूर्वपदप्रकृतिस्वरत्वेन गतिरनन्तरः (*६,२.४९) इत्येतद्भवति ।
निष्ठा इति किं ? प्रसेचकमुखः ।
उपसर्गपूर्वं इति किं ? शुष्कमुखः । ।

---

1. <उत्तरपद-आदिः># । । PS_६,२.१११ । ।

______Sठान्ठ्JKव्_६,२.१११ः

उत्तरपदादिः इत्येतदधिकृतं ।
यदित ऊर्ध्वं अनुक्रमिष्याम उत्तरपदस्य आदिरुदात्तो भवति इत्येवं तद्वेदितव्यं ।

---

वक्ष्यति - #<कर्णो वर्णलक्षणात्># । । PS_६,२.११२ । ।

______Sठाऱ्ठ्JKव्_६,२.११२ः

शुक्लकर्णः।
कृष्णकर्णः।
उत्तरपदस्य इत्येतदपादपरिसमाप्तेः।
आदिः इति प्रकृत्या भगालं (*६,२.१२७) इति यावत्।।
कर्णो वर्ण-लक्षणात्(*६,२.११२)।
बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदं आद्युदात्तं भवति।
शुक्लकर्णः।
कृष्णकर्णः।
लक्षणात्- दात्राकर्णः।
शङ्कूकर्णः।
लक्षणस्य इति दीर्घत्वं।
पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत्क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्णः इत्यत्र न भवति।
कर्णः इति किं? श्वेतपादः।
कूटशृङ्गः।
वर्णलक्षणातिति किं? शोभनकर्णः।।

---

1. <सञ्ज्ञा-औपम्ययोश्च>#।। PS_६,२.११३।।

______Sठाऱ्ठ्JKव्_६,२.११३ः

सञ्ज्ञायां औपम्ये च यो बहुव्रीहिर्वर्तते तत्र कर्णशब्द उत्तरपदं आद्युदात्तं भवति।
सञ्ज्ञायां - कुञ्चिकर्णः।
मणिकर्णः।
औपम्ये - गोकर्णः।
खरकर्णः।।

---

[#६८०]

1. <कण्ठ-पृष्थ-ग्रीवा-जङ्घं च>#।। PS_६,२.११४।।

______Sठाऱ्ठ्JKव्_६,२.११४ः

कण्ठ पृष्ठ ग्रीवा जङ्घा इत्येतानि उत्तरपदानि बहुव्रीहौ समासे सञ्ज्ञौपम्ययोराद्युदात्तानि भवन्ति।
कण्ठः सञ्ज्ञायां - शितिकण्ठः।
नीलकण्ठः।
औपम्ये - खरकण्ठः।
उष्ट्रकण्ठः।
पृष्ठः सञ्ज्ञायां - काण्डपृष्ठः।
नाकपृष्ठः।
औपम्ये - गोपृष्ठः।
अजपृष्ठः।
ग्रीवा सञ्ज्ञायां - सुग्रीवः।
नीलग्रीवः।

दशग्रीवः।
औपम्ये - गोग्रीवः।
अश्वग्रीवः।
जङ्घा सञ्ज्ञायां - नाडीजङ्घः।
तालजङ्घः।
औपम्ये - गोजङ्घः।
अश्वजङ्घः।
एणीजङ्घः।।

---

1. <शृङ्गं अवस्थायां च>#।। PS_६,२.११५।।

_______Sठाऽ्ठ्JKव्_६,२.११५ः

शृङ्गशब्दः उत्तारपदं अवस्थायां सञ्ज्ञौ पम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति।
उद्गतशृङः।
द्व्यङ्गुलशृङ्गः।
अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्थ।
असञ्ज्ञायां - ऋष्यशृङ्गः।
औपम्ये - गोशृङ्गः मेषशृङ्गः।
अवस्थादिषु इति किं? स्थूलशृङ्गः।।

---

1. <नञो जर-मर-मित्र-मृताः>#।। PS_६,२.११६।।

_______Sठाऽ्ठ्JKव्_६,२.११६ः

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति।
अजरः।
अमरः।
अमित्रः।
अमृतः।
नञः इति किं? ब्राह्मणमित्रः।
जरादयः इति किं? अशत्रुः, नञ्सुभ्यं (*६,२.१७२) इति उत्तरपदान्तोदात्तत्वं एव अत्र भवति।।

---

1. <सोर्मन्-असी अलोम-उषसी>#।। PS_६,२.११७।।

_______Sठाऽ्ठ्JKव्_६,२.११७ः

सोः उत्तरं मनन्तं असन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा।
सुकर्मा।

सुधर्मा ।
सुप्रथिमा ।
असन्तं - सुपयाः ।
सुयशाः ।
सुस्रोताः ।
सुस्रथ् ।
सुध्वथ् ।
सोः इति किं ? कृतक्रमा ।
कृतयशाः ।
मनसी इति किं ? सुराजा ।
सुतक्षा ।
अलोमोषसी इति किं ? सुलोमा ।
सूषाः ।
अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति इत्यनर्थकयोरपि मनसोरिह ग्रहणं ।
नञ्सुभ्यां (*६,२.१७२) इत्यस्य अयं अपवादः ।
कपि तु परत्वात्कपि पूर्वं इत्येतद्भवति ।
सुकर्मकः ।
सुस्रोतस्कः । ।

---

1. <क्रत्व्-आदयश्च># । । PS_६,२.११८ । ।

_______Sठाञ्ठJKव्_६,२.११८ः

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति ।
सुक्रतुः ।
सुदृशीकः ।
क्रतु ।
दृशीक ।
प्रतीक ।
प्रतूर्ति ।
हव्य ।
भग ।
क्रत्वादिः । ।

---

[#६८१]

1. <आद्य्-उदात्तं द्व्यच्छन्दसि># । । PS_६,२.११९ । ।

_______Sठाञ्ठJKव्_६,२.११९ः

यदाद्युदात्तं द्व्यचुत्तरपदं बबुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तं एव भवति छन्दसि विसय ।
स्वश्वास्त्वा सुरथा मर्जयेम ।
नित्स्वरेण अश्वरथशब्दावाद्युदात्तौ ।
आद्युदात्तं इति किं ? या सुबाहुः स्वङ्गुरिः ।
बाहुशब्दः प्रत्ययस्वरेण अन्तोदात्तः ।
द्व्यचिति किं ? सुगुरसथ् ।

सुहिरण्यः ।
नञ्सुभ्यां (*६,२.१६२) इत्यस्य अयं अपवादः । ।

---

1. <वीर-वीर्यौ च># । । PS_६,२.१२० । ।

______Sठाञ्ठ्JKव्_६,२.१२०ः

वीर वीर्य इत्येतौ च शब्दौ शोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः ।
सुवीरस्ते ।
सुवीर्यस्य पतयः स्यम ।
वीर्यं इति यत्प्रत्ययान्तं तत्र यतोऽनावः (*६,१.१२३) इति आद्युदात्तत्वं न भवति इत्येतदेव वीर्यग्रहणं ज्ञापकं ।
तत्र हि सति पूर्वेण+एव सिद्धं स्यात् । ।

---

1. <कूल-तीर-तूल-मूल-शाला-अक्ष-समं अव्ययीभावे># । । PS_६,२.१२१ । ।

______Sठाञ्ठ्JKव्_६,२.१२१ः

कूल तीर तूल मूल शाला अक्ष सम इत्येतानि उत्तरपदानि अवयीभावसमासे आद्युदात्तानि भवन्ति ।
परिकूलं ।
उपकूलं ।
परितीरं ।
उपतीरं ।
परितूलं ।
उपतूलं ।
परिमूलं ।
उपमूलं ।
परिशालं ।
उपशालं ।
पर्यक्षं ।
उपाक्षं ।
सुषमं ।
विषमं ।
निषमं ।
दुःषमं ।
तिष्ठद्गुप्रभृतिषु एते पठ्यन्ते ।
कूलादिग्रहणं किं ? उपकुम्भं ।
अव्ययीभावे इति किं ? परमकूलं ।
उत्तरमकूलं ।
पर्यादिभ्यः कूलादीनां आद्युदात्तत्वं विप्रतिषेधेन भवति ।
परिकूलं ।
उपकूलं । ।

---

1. <किंस-मन्थ-शूर्प-पाय्य-काण्डं द्विगौ># । । PS_६,२.१२२ । ।

______Sठा~ठ्JKव्_६,२.१२२ः
कंस मन्थ शूर्प पाय्य काण्ड इत्येतानि उत्तरपदानि द्विगौ समासे आद्युदात्तानि भवन्ति ।
द्विकंसः ।
त्रिकंसः ।
द्विमन्थः ।
त्रिमन्थः ।
द्विशूर्पः ।
त्रिशूर्पः ।
द्विपाय्यः ।
त्रिपाय्यः ।
द्विकाण्डः ।
त्रिकाण्डः द्विगौ इति किं ? परमकंसः ।
उत्तरमकंसः । ।

---

1. <तत्पुरुषे शालायां नपुंसके># । । PS_६,२.१२३ । ।

______Sठा~ठ्JKव्_६,२.१२३ः

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदं आद्युदात्तं भवति ।
ब्राह्मनशालं ।
क्षत्रियशालं ।
विभाषा सेना-सुरा-च्छाया-शाला-निशानां (*२,४.२५) इति नपुंसकलिङ्गता ।
तत्पुरुषे इति किं ? दृढशालं ब्राह्मणकुलस् ।
शालायां इति किं ? ब्राह्मणसेनं नपुंसके इति किं ? ब्राह्मणशाला । ।

---

[#६८२]

1. <कन्था च># । । PS_६,२.१२४ । ।

______Sठा~ठ्JKव्_६,२.१२४ः

तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्दः उत्तरपदं आद्युदात्तं भवति ।
सौशमिकन्थं ।
आह्वकन्थं ।
चप्पकन्थं ।
सञ्ज्ञायां कन्थोशीनरेषु (*२,४.२०) इति नपुंसकलिङ्गता ।
षष्ठीसमासा एते ।
नपुंसके इत्येव, दाक्षिकन्था । ।

---

1. <आदिश्चिहणादीनां># । । PS_६,२.१२५ । ।

________Sठा॒JKव्_६,२.१२५ः

कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनां आदिरुदात्तो भवति ।
चिहणकन्थं ।
मडरकन्थं ।
मड्डुर इति केचित्पठन्ति ।
मड्डुरकन्थं ।
चिहण ।
मडर ।
मड्डुर ।
वैतुल ।
पटत्क ।
चैत्तलिकर्णः ।
वैतालिकर्णिः इत्यन्ये पथन्ति ।
कुक्कुट ।
चिक्कण ।
चित्कण इत्यपरे पथन्ति ।
आदिः इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थं । ।

---

1. <चेल-खेट-कटुक-काण्डं गर्हायाम्># । । PS_६,२.१२६ । ।

________Sठा॒JKव्_६,२.१२६ः

चेल खेट कतुक काण्ड इत्येतानि उत्तरपदानि तत्पुरुसे समासे गर्हायां गम्यमानायां आद्युदात्तानि भवन्ति ।
पुत्रचेलं ।
भार्याचेलं ।
उपानत्खेटं ।
नगरखेटं ।
दधिकटुकं ।
उदश्वित्कटुकं ।
भूतकाण्डं ।
प्रजाकाण्डं ।
चेलाअदिसादृश्येन पुत्रादीनां गर्हा ।
तत्र पुत्रः चेलं इव इति विगृह्य व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिः इति समासः ।
गर्हायां इति किं ।
परमचेलं । ।

---

1. <चीरं उपमानम्># । । PS_६,२.१२७ । ।

______Sठाञ्ठ्JKव्_६,२.१२७ः

चीरमुत्तरपदं उपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति ।
वस्त्रं चीरं इव वस्त्रचीरं ।
पटचीरं ।
अम्बलचीरं ।
उपमानं इति किं ? परमचीरं । ।

---

1. <पलल-सूप-शाकं मिश्रे># । । PS_६,२.१२८ । ।

______Sठाञ्ठ्JKव्_६,२.१२८ः

पलल सूप शाक इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तनि भवति ।
गुडपललं ।
घृतपललं ।
घृतसूपः ।
मूलकसूपः ।
घृतशाकं ।
मुद्गशाकं ।
गुडेन मिश्रं पललं गुडपललं ।
भक्षेण मिश्रीकरणं (*२,१.३५) इति समासः ।
मिश्रे इति किं ? परमपललं । ।

---

[#६८३]

1. <कूलसूदस्थलकर्षाः सञ्ज्ञायाम्># । । PS_६,२.१२९ । ।

______Sठाञ्ठ्JKव्_६,२.१२९ः

कूल सूद स्थल कर्ष इत्येतानि उत्तरपदानि तत्पुरुषे समासे सञ्ज्ञायां विषये आद्युदात्तनि भवन्ति ।
दाक्षिकूलं ।
माहकिकूलं ।
देवसूदं ।
भाजीसूदं ।
दण्डायनस्थली ।
माहकिस्थली ।
दाक्षिकर्षः ।
ग्रामनामधेयानि एतानि ।
स्थालग्रहणे लिङ्गविशिष्टत्वात्स्थालीशब्दोऽपि गृह्यते ।
जानपदकुण्ड इत्यनेन ङीष् ।
सञ्ज्ञायां इति किं ? परमकूलं । ।

1. <अकमधारये राज्यम्># । । PS_६,२.१३० । ।

______Sठा=ठ्JKव्_६,२.१३०ः

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यं इत्येतदुत्तरपदं आद्युदात्तं भवति ।
ब्राह्मणराज्यं ।
क्षत्रियराज्यं ।
अकर्मधारये इति किं ? परमराज्यं ।
चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन ।
कुचेलं ।
कुराज्यं । ।

---

1. <वर्ग्य-आदयश्च># । । PS_६,२.१३१ । ।

______Sठा=ठ्JKव्_६,२.१३१ः

वग्य इत्येवं आदीनि उत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदत्तानि भवन्ति ।
वासुदेववर्ग्यः ।
वासुदेवपक्ष्यः ।
अर्जुनवर्ग्यः ।
अर्नपक्ष्यः ।
अकर्मधारये इत्येव, परमवर्ग्यः ।
वर्ग्यादयः प्रातिपदिकेसु न पठ्यन्ते ।
दिगादिषु तु वर्ग पूग गण पक्ष इत्येवं आदयो ये पठिताः, ते एव यत्प्रत्ययान्ता वर्ग्यादयः इह प्रतिपत्तव्या । ।

---

1. <पुत्रः पुम्भ्यः># । । PS_६,२.१३२ । ।

______Sठा=ठ्JKव्_६,२.१३२ः
पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदत्तो भवति ।
कौनटिपुत्रः ।
दामकपुत्रः ।
माहिषकपुत्रः ।
पुत्रः इति किं ? कौनटिमातुलः ।
पुम्भ्यः इति किं ? गार्गीपुत्रः ।
वात्सीपुत्रः । ।

---

1. <न आचार्य-राज-र्त्विक्-संयुक्त-ज्ञात्य-आख्येभ्यः># । । PS_६,२.१३३ । ।

_______Sठा~ठ्JKव्_६,२.१३३ः

आचर्यः उपाद्यायः ।
राजा ईश्वरः ।
ऋत्विजो याजकाः ।
संयुक्ताः स्त्रीसम्बन्धिनः श्यालादयः ।
ज्ञातयो मातृपितृसम्बन्धिनो बान्धवाः ।
आचार्याद्याख्येभ्यः परः पुत्रशब्दो नद्युदात्तो भवति आख्याग्रहणात्स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति ।
आचार्यपुत्रः ।
उपाध्यायपुत्रः ।
शाकटायनपुत्रः ।
राजपुत्रः ।
ईश्वरपुत्रः ।
नन्दपुत्रः ।
ऋत्विक्पुत्रः ।
याजकपुत्रः ।
होतुःपुत्रः ।
संयुक्तपुत्रः ।
सम्बन्धिपुत्रः ।
श्यालपुत्रः ।
जञातिपुत्रः ।
भ्रातुष्पुत्रः ।
ऋतो विद्यायोनिसम्बधेभ्यः (*६,३.२३) ।
इति षष्ठ्या अलुक् ।
पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वं एव भवति । ।

---

[#६८४]

1. <चूर्ण-आदीन्यप्राणिषष्ठ्याः># । । PS_६,२.१३४ । ।

_______Sठा~ठ्JKव्_६,२.१३४ः

उत्तरपदादिः इति वर्तते, तत्पुरुषे इति च ।
चूर्णादीनि उत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात्पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति ।
मुद्गचूर्णं ।
मसूरचूर्णं ।
अप्राणिषष्ठ्याः इति किं ? मत्स्यचूर्णं ।
षष्ठ्याः इति किं ? परमचूर्णं ।
चूर्ण ।
करिप ।
करिव ।
शाकिन ।
शाकट ।
द्राक्षा ।
तूस्त ।
कुन्दम ।
दलप ।
चमसी ।

चक्कन ।
चौल ।
चूर्णादिः ।
चूर्णादीन्यप्राण्युपग्रहातिति सूत्रस्य पाठान्तरं ।
तत्र+उपग्रहः इति षष्ठ्यन्तं एव पूर्वाचार्योपचारेण गृह्यते । ।

---

1. <षट्च काण्डादीनि># । । PS_६,२.१३५ । ।

______Sठाञ्ठ्JKव्_६,२.१३५ः

षट्पुर्वोक्तानि काण्डादीनि उत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तनि भवन्ति ।
काण्डं गहार्यां इत्युक्तम्, अगर्हायां अपि भवति ।
दर्भकाण्डं ।
शरकाण्डं ।
चीरं उपमानं (*६,२.१२७) इत्युक्तम्, अनुपमानं अपि भवति ।
दर्भचीरं ।
कुशचीरं ।
पललसूपशाकं मिश्रे (*६,२.१२८) इत्युक्तम्, अनुपमानं अपि भवति ।
दर्भचीरं ।
कुशचीरं ।
पलल-सूप-शाकं मिश्रे (*६,२.१२८) इत्युक्तम्, अमिश्रेऽपि भवति ।
तिलपललं ।
मुद्गसूपः ।
मूलकशाकं ।
कूलं सञ्ज्ञायां (*६,२.१२९) इत्युक्तम्, असञ्ज्ञायां अपि भवति ।
नदीकूलं ।
समुद्रकूलं ।
षटिति किं ? राजसूदः । ।

---

1. <कुण्डं वनम्># । । PS_६,२.१३६ । ।

______Sठाञ्ठ्JKव्_६,२.१३६ः

कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तते ।
कुण्डं इत्येततुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति ।
दर्भकुण्डं ।
शरकुण्डं ।
वनं इति किं ? मृत्कुण्डं । ।

---

1. <प्रकृत्या भगालम्># । । PS_६,२.१३७ । ।

______Sठाञ्ठ्JKव्_६,२.१३७ः

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति ।
कुम्भीभगालं ।
कुम्भीकपालं ।
कुम्भीनदालं ।
भगालादयो मध्योदात्ताः ।
प्रकृत्या इत्येतदधिकृतं अन्तः (*६,२.१४३) इति यावद्वेदितव्यं । ।

---

1. <शितेर्नित्य-अबह्व्-अज्ब्-अहुव्रीहावभसत्># । । PS_६,२.१३८ । ।

______Sठाञ्ठ्JKव्_६,२.१३८ः

शितेः उत्तरपदं नित्यं यदबह्वज्भसच्छब्दवर्जितं बहुव्रीहौ समासे तत्प्रकृतिस्वरं भवति ।
शितिपादः ।
शित्यंसः ।
शित्योष्ठः ।
पादशब्दो वृषादित्वादद्युदात्तः ।
अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वाथ् ।
शितेः इति किं ? दर्शनीयपादः ।
नित्यग्रहणं किं ? शितिककुत्ककुदस्य वस्थायां लोपो विधीयते ।
तत्र अवस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवति इति तेन न नित्याबह्वछ् ।
अबह्वचिति किं ? शितिललाटः ।
बहुव्रीहौ इति किं ? शितेः पादः शितिपादः ।
अभसतिति किं ? शितिभसद् ।
शितिशब्द आद्युदात्तः ।
पूर्वपदप्रकृतिस्वरापवादो योगः । ।

---

[#६८५]

1. <गति-कारक-उपपदात्कृत्># । । PS_६,२.१३९ । ।

______Sठाञ्ठ्JKव्_६,२.१३९ः

तत्पुरुषे इति वर्तते, न बहुव्रीहौ इति ।
गतेः कारकातुपपदात्च कृदन्तं उत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति ।
प्रकारकः ।
प्रकरणं ।
प्रहारकः ।
प्रहरणं ।
कारकात्- इध्मप्रव्रश्चनः ।
पलाशशातनः ।
श्मश्रुकल्पनः ।

उपपदात्- ईषत्करः ।
दुष्करः ।
सुकरः ।
सर्वत्र+एव अत्र लित्स्वरः ।
गतिकार - कोपपदातिति किं ? देवदत्तस्य कारकः देवदत्तकारकः ।
देवदत्तस्य इति शेषलक्षण षष्ठी ।
कृद्ग्रहणं विस्पष्टार्थं ।
प्रपचतितराम्, प्रपचतितमां इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादां ।
तत्र सति शिष्टत्वादाम एव स्वरो भवति इत्येके ।
प्रपचतिदेश्याद्यर्थं कृद्ग्रहणं दृश्यत एव । ।

---

1. <उभे वनस्पत्यादिषु युगपत्># । । PS_६,२.१४० । ।

_______Sठान्ठ्JKव्_६,२.१४०ः

प्रकृत्या इति वर्तते ।
वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत्प्रकृतिस्वरे भवतः ।
वनस्पतिः ।
वनपतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात्सुठ् ।
बृहस्पतिः ।
बृहतां पतिः ।
तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च इति सुट्तकारलोपश्च ।
बृहदित्येतदन्तोदात्तं निपातयन्ति ।
तस्य केचिदाद्युदात्तत्वं वर्णयन्ति ।
शचीपतिः ।
शचीशब्दः कृदिकारादक्तिनः इति ङीषन्तत्वादन्तोदात्तः ।
केचित्तु शार्ङ्गरवादिसु पठन्ति तेषां आद्युदात्तः ।
तनूनपाथ् ।
तनोतेरौणादिकः ऊप्रत्ययः, तेन तनूशब्दोऽन्तोदात्तः ।
न पाति न पालयति वा नपात्क्विबन्तः ।
नभ्राण्नपाद्(*६,३.७५) इत्यादिना आद्युदात्तो निपातितः ।
तन्वा नपात्तनूनपाथ् ।
नराशंसः ।
नरा अस्मिनासीनाः शंसन्ति, नरा एवं शंसन्ति इति वा नराशंसः ।
न्é नये ।
अबन्तो नरशब्दः आद्युदात्तः ।
शंसशब्दोऽपि घञन्तः ।
अन्येषां अपि दृश्यते (*६,३.१६७) इति दीर्घत्वं ।
शुनःशेपः ।
शुन इत्व शेपः अस्य इति बहुव्रीहिः ।
तत्र शेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायां (*६,३.२१) इति षष्ठ्या अलुक् ।
उभावाद्युदात्तौ ।
शण्डामर्कौ ।
शण्डमर्कशब्दौ घञन्तत्वादाद्युदात्तौ ।
तयोर्द्वन्द्वे अन्येषां अपि दृश्यते (*६,३.१६७) इति दीर्घत्वं ।

[#६८६]

तृष्णावरूत्री ।
तृष्णाशब्द आद्युदात्तः ।
वरूत्रीशब्दो ग्रसितादिसूत्रे निपातितोऽन्तोदात्तः ।

तत्र द्वन्द्वे दीर्घत्वं पूर्ववथ् ।
बम्बाविश्ववयसौ ।
बम्बशब्दोऽन्तोदात्तः ।
विश्ववयःशब्दोऽपि बहुव्रीहौ विश्वं सञ्ज्ञायां (*६,२.१०६) इति विश्वशदोऽन्तोदात्तः ।
तयोर्द्वन्द्वे दीर्घत्वं पूर्ववथ् ।
मर्मृत्युः ।
मरिति मृञो विच्प्रत्ययः ।
मृत्युशब्दोऽन्तोदात्तः ।
द्वन्द्वानामदेवताद्वन्द्वार्थोऽनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः । ।

---

1. <देवताद्वन्द्वे च># । । PS_६,२.१४१ । ।

_______Sठाञ्ठ्JKव्_६,२.१४१ः

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः ।
इन्द्रासोमौ ।
इन्द्रावरुणौ ।
इन्द्राबृहस्पती ।
ऋज्रेन्द्राग्र इति इन्द्रशब्दः आद्युदात्तो निपातितः ।
सोम इति मन्प्रत्ययान्तः ।
वरुण उनन्प्रत्ययान्तः, तेन आद्युदात्तः बृहस्पतिशब्दे वनस्पत्यादित्वात्द्वावुदात्तौ, तेन इन्द्राबृहस्पती इत्यत्र त्रय उदात्ता भवन्ति ।
देवताग्रहणं किं ? प्लक्षन्यग्रोधौ ।
द्वन्द्वग्रहणं किं ? अग्निष्टोमः । ।

---

1. <न+उत्तरपदेऽनुदात्तादावपृथिवी-रुद्र-पूष-मन्थिषु># । । PS_६,२.१४२ । ।

_______Sठाञ्ठ्JKव्_६,२.१४२ः

उत्तरपदेऽनुदात्तादौ पृथिवी रुद्र पूषमन्थिवर्जिते देवताद्वन्द्वे न+उभे युगपत्प्रकृतिस्वरे भवतः ।
इन्द्राग्नी ।
इन्द्रवायू ।
अग्निवायुशब्दौ अन्तोदात्तौ ।
उत्तरपदग्रहणं अनुदात्तादौ इत्युत्तरपदविशेषणं यथा स्यात्, द्वन्द्वविशेषणं मा भूतिति ।
अनुदात्तादौ इति विधिप्रतिषेधयोः विषयविभागार्थं ।
अपृथिव्यादिषु इति किं ? द्यावापृथिव्यौ ।
द्यावाशब्द आद्युदात्तो निपातितः ।
पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः ।
रुद्र - सोमारुद्रौ ।
रोदेर्णिलुक्च इति रुद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः ।
पूषन्- इन्द्रापूषणौ ।
स्वन्नुक्षन्पूषनिति पूषान्तोदात्तो निपात्यते ।
मन्थिन्- शुक्रामन्थिनौ मन्थोऽस्य अस्ति इति मन्थी ।
इन्नतत्वादन्तोदात्तः ।
पृथिव्यादिषु तु उभे युगपत्प्रकृतिस्वरे भवत एव । ।

---

1. <अन्तः># । । PS_६,२.१४३ । ।

_______Sठाऽ्ठ्JKव्_६,२.१४३ः
अन्तः इत्यधिकारः ।
यदित ऊर्ध्वं अनुक्रमिष्यामस्तत्र समासस्य+उत्तरपदस्य अन्तः उदात्तः भवति इत्येवं तद्वेदितव्यं ।
वक्ष्यति थाथघञ्क्ताजबित्रकाणां (*६,२.१४४) इति ।
सुनीथः ।
अवभृथः । ।

---

[#६८७]

1. <थ-अथ-घञ्-क्त-अज्-अब्-इत्र-काणाम्># । । PS_६,२.१४४ । ।

_______Sठाऽ्ठ्JKव्_६,२.१४४ः

थ अथ घञ्क्त अचपित्र क इत्येवं अन्तानां उत्तरपदानां गतिकारकोपपदात्परेषां अन्तः उदात्तो भवति ।
सुनीथः ।
अवभृथः ।
हनिकुषिनीरमिकाशिभ्यः क्थनिति अवे भृञः इति च क्थन्प्रत्ययान्तावेतौ ।
तत्र कृदुत्तरपदप्रकृतिस्वरत्वेन आद्युदात्तं उत्तरपदं स्याथ् ।
अथ - आवसथः उपवसथः ।
उपसर्गे वसेः इति अथन्प्रत्ययः घञ्- प्रभेदः ।
काष्ठभेदः ।
रज्जुभेदः ।
क्त - दूरादागतः ।
आतपशुष्कः ।
विशुष्कः ।
अच्- प्रक्षयः ।
प्रजयः ।
क्षयो निवासे (*६,१.२०१) जयः करणं (*६,१.२०२) इति च आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः ।
अप्- प्रलवः ।
प्रसवः ।
इत्र - प्रलवित्रं ।
प्रसवित्रं ।
क - गोवृषः ।
खरीवृषः ।
गां वर्षति, खरीं वर्षति इति मूलविभुजादित्वात्कप्रत्ययः ।
प्रवृषः ।
प्रहृषः ।
इगुपध इति कप्रत्ययः ।
वृषादीनां च (*६,१.२०३) इति वृषशब्दः आद्युदात्तः ।
गतिकारकोपपदातित्येव, सुस्तुतं भवता ।
कर्मप्रवचनीये अव्ययस्वरः एव भवति । ।

---

1. <सु-उपमानात्क्तः># । । PS_६,२.१४५ । ।

______Sठा‍ऽ्JKव्_६,२.१४५ः

सु इत्येतस्मादुपमानाच्च परं क्तान्तं उत्तरपदं अन्तोदात्तं भवति ।
सुकृतं ।
सुभुक्तं ।
सुपीतं ।
उपमानात्- वृकावलुप्तं ।
शशप्लुतं ।
सिंहविनर्दितं ।
सुशब्दात्गतिरनन्तरः (*६,२.४९) इति प्राप्ते उपमाना दपि तृतीया कर्मणि (*६,२.४८) इत्ययं अपवादः ।
गतिकारकोपपदातित्येव, सुस्तुतं भवता । ।

---

1. <सञ्ज्ञायां अनाचितादीनाम्># । । PS_६,२.१४६ । ।

______Sठा‍ऽ्JKव्_६,२.१४६ः

सञ्ज्ञायां विषये गतिकारकोपपदाद्क्तान्तं उत्तरपदं अन्तोदात्तं भवति आचितादीन्वर्जयित्वा ।
सम्भूतो रामायणः ।
उपहूतः शाकल्यः ।
परिजग्धः कौण्डिन्यः ।
सम्भूतः इति प्रत्यर्थात्भवतेः कर्मणि क्तः ।
गतिरनन्तरः (*६,२.४९) इत्यत्र हि कर्मणि इत्यनुवर्तते, तद्बाधनार्थं चेदं ।
धनुष्खाता नदी ।
कुद्दालखातं नगरं ।
हस्तिमृदिता भूमिः ।
तृतीया कर्मणि (*६,२.४८) इति प्राप्तिरिह बाध्यते ।
अनाचितादीनां इति किं ? आचितं ।
अप्याचितं ।
आस्वापितं ।
परिगृहीतं ।
नरुक्तं ।
प्रतिपन्नं ।
प्राश्लिष्टं ।
उपहतं ।
उपस्थितं ।
संहिताऽगवि ।
संहिताशब्दो यदा गोरन्यस्य सञ्ज्ञा तदा अन्तोदत्तो न भवति ।
यदा तु गोः सञ्ज्ञा तदा अन्तोदात्त एव । ।

---

1. <प्रवृद्धादीनां च># । । PS_६,२.१४७ । ।

_______Sठा-ठ्JKव्_६,२.१४७ः

प्रवृद्धादीनां च क्तान्तं उत्तरपदं अन्तोदात्तं भवति ।
प्रवृद्धं यानं ।
प्रवृद्धो वृषलः ।
प्रयुक्ताः सक्तवः आकर्षे अवहितः ।
अवहितो भोगेसु ।
खट्वारूढः ।
कविशस्तः ।
यानदीनां अत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः, न विषयनियमार्थः ।
यानादिभ्योऽन्यत्र अपि तेषां अन्तोदात्तत्वं भवत्येव ।
विषयनियमार्थ एव+इत्येके ।
असन्ज्ञार्थोऽयं आरम्भः ।
आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः ।
तेन पुनरुत्स्यूतं वासो देयम्, पुनर्निष्कृतो रथः इत्येवं आदि सिद्धं भवति । ।

---

[#६८८]

1. <कारकाद्दत्त-श्रुतयोरेव आशिषि># । । PS_६,२.१४८ । ।

_______Sठा-ठ्JKव्_६,२.१४८ः

सन्ज्ञायां इति वर्तते, क्तः इति च ।
सन्ज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोः दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति ।
देवा एनं देयासुः देवदत्तः ।
विष्णुरेनं श्रूयात्विष्णुश्रुतः ।
कारकातिति किं ? कारकान्नियमो मा भूथ् ।
सम्भूतो रामायणः ।
दत्तश्रुतयोः इति किं ? देवपालितः ।
एतस्मान्नियमादत्र सन्ज्ञायां अनाचितादीनां (*६,२.१४६) इत्यन्तोदात्तत्वं न भवति ।
तृतीया कर्मणि (*६,२.४८) इत्येव अत्र भवति ।
एवकारकरणं किं ? कारकावधारणं यथा स्यत्, दत्तश्रुतावधारणं मा भूथ् ।
अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति ।
संश्रुतः ।
विश्रुतः ।
आशिषि इति किं ? अनाआशिषि नियमो मा भूथ् ।
देवैः खाता देवखाता ।
कारकाद्दत्तश्रुतयोराशिस्येव इत्येवं अत्र नियम इष्यते ।
तेन आहतो नदति देवदत्तः इत्यत्र न भवति ।
देवदत्त इति कस्यचिच्छङ्खस्य नाम ।
तत्र तृतीया कर्मणि (*६,२.४८) इति पूर्वपदप्रकृतिस्वरत्वं एव भवति । ।

---

1. <इत्थंभूतेन कृतं इति च># । । PS_६,२.१४९ । ।

_______Sठाञ्ठ्JKव्_६,२.१४९ः

इमं प्रकारमापन्न इत्थम्भूतः ।
इत्थंभूतेन कृतं इत्येतस्मिन्नर्थे यः समसो वर्तते तत्र क्तान्तं उत्तरपदं अन्तोदात्तं भवति ।
सुप्तप्रलपितं ।
उन्मत्तप्रलपितं ।
प्रमत्तगीतं ।
विपन्नश्रुतं ।
कृतं इति क्रियासामान्ये करोतिर्वर्तते, नाभूतप्रादुर्भाव एव ।
तेन प्रलपिताद्यपि कृतं भवति ।
तृतीया कर्मणि (*६,२.४८) इत्यस्य अयं अपवादः ।
भावे तु यदा प्रलपितादयस्तदा थाथादिस्वरेण+एव सिद्धं अन्तोदात्तत्वं भवति । ।

---

1. <अनो भाव-कर्म-वचनः># । । PS_६,२.१५० । ।

_______Sठाञ्ठ्JKव्_६,२.१५०ः

अनप्रत्ययान्तं उत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति ।
ओदनभोजनं सुखं ।
पयःपानं सुखं ।
चन्दनप्रियङ्गुकालेपनं सुखं ।
कर्मवचनः - राजभोजनाः शालयः ।
राजच्छादनानि वसांसि ।
कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखं (*३,३.११६) इत्ययं योगः उभयथा वर्ण्यते ।
कर्मण्युपपदे भावे ल्युड्भवति, कर्मण्यभिधेये ल्युड्भवति इति ।
तत्र पूर्वस्मिन्सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि ।
अनः इति किं ? हस्तहार्यमुदश्वित् ।
भावकर्मवचनः इति किं ? दन्तधावनं ।
करणे ल्युठ् ।
कारकातित्येव ।
निदर्शनं ।
अवलेखनं ।
सर्वेसु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति । ।

---

[#६८९]

1. <मन्-क्तिन्-व्याख्यान-शयन-आसन-स्थान-याजक-आदि-क्रीताः># । । PS_६,२.१५१ । ।

_______Sठाञ्ठ्JKव्_६,२.१५१ः

मन्नन्तं क्तिन्नन्तं व्याख्यान शयन स्थान इत्येतानि याजकादयः क्रीतशब्दश्च+उत्तरपदं अनतोदात्तं भवति ।
मन्- रथवर्त्म ।
शकटवर्त्म ।

क्तिन्- पाणिनिकृतिः ।
आपिशलिकृतिः ।
व्याख्यान - ऋगयनव्याख्यानं ।
छन्दोव्याख्यानं ।
शयन - राजशयनं ।
ब्राह्मणशयनं ।
आसन - राजासनं ।
ब्राह्मणासनं ।
स्थान - गोस्थानं ।
अश्वस्थानं ।
याजकादिः - ब्राह्मणयाजकः ।
क्षत्रिययाजकः ।
ब्राह्मणपूजकः ।
क्षत्रियपूजकः ।
याजकादयो ये याजकदिभिश्च (*२,२.९) इति षष्ठीसमासार्थाः पठ्यन्ते त एव+इह गृह्यन्ते ।
क्रीत - गोत्रीतः ।
अश्वक्रीतः ।
कृत्स्वरापवादोऽयं योगः ।
क्रीतशब्दे तु तृतीया कर्मणि (*६,२.४८) इत्यस्य अपवादः ।
व्याख्यानशयनासनस्थानानां अभावकर्मार्थं ग्रहणं ।
कारकातित्येव, प्रकृतिः ।
प्रहृतिः । ।

---

1. <सप्तम्याः पुण्यम्># । । PS_६,२.१५२ । ।

_______Sठाञ्ठ्JKव्_६,२.१५२ः

सप्तम्यन्तात्परं पुण्यं इत्येतदुत्तरपदं अन्तोदात्तं भवति ।
अध्ययने पुण्यं अध्ययनपुण्य ।
वेदे पुण्य वेदपुण्यं ।
सप्तमी इति योगविभागात्समासः ।
तत्पुरुषे तुल्यार्थ इति पूर्वपदकृतिस्वरत्वं प्राप्तं इत्यन्तोदात्तत्वं विधीयते ।
उणादीनां तु व्युत्पत्तिपक्षे कृत्स्वरेण आद्युदात्तः पुण्यशब्दः स्यातिति ।
सप्तम्याः इति किं ? वेदेन पुण्यं वेदपुन्यं । ।

---

1. <ऊनार्थ-कलहं तृतीआयाः># । । PS_६,२.१५३ । ।

_______Sठाञ्ठ्JKव्_६,२.१५३ः

ऊनार्थान्युत्तरपदानि कलहशब्दश्च तृतीयान्तात्पराण्यनतोदात्तानि भवन्ति ।
माषोनं ।
कार्षापणोनं ।
माषविकलं ।
कार्षापणविकलं ।
कलह - असिकलहः ।

वाक्कलहः ।
तृतीयापूर्वपदप्रकृतिस्वरापवदो योगः ।
अत्र केचिदर्थे इति स्वरूपग्रहणं इच्छन्ति ।
धान्येन अर्थो धान्यार्थः ।
ऊनशब्देन+एव त्वर्थनिर्देशर्थेन तदर्थानां ग्रहणं इति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थं । ।

---

1. <मिश्रं च अनुपसर्गं असन्धौ># । । PS_६,२.१५४ । ।

_______Sठाञ्ठJKव्_६,२.१५४ः

तृतीया इति वर्तते ।
मिश्र इत्येतदुत्तरपदं अनुपसर्गं तृतीयान्तात्परं अन्तोदात्तं भवति असन्धौ गम्यमाने ।
गुडमिश्राः ।
तिलमिश्राः ।
सर्पिर्मिश्राः ।
मिश्रं इति किं ? गुडधानाः ।
अनुपसर्गं इति किं ? गुडसंमिश्राः ।
इह अनुपसर्गग्रहणं ज्ञापकं अन्यत्र मिश्रगहणे सोपसर्गग्रहणस्य ।
तेन मिश्रश्लक्ष्णैः इति सोपसर्गेण अपि मिश्रशब्देन तृतीयासमासो भवति ।
असन्धौ इति किं ? ब्राह्मणमिश्रो राजा ।
ब्राह्मणैः सह संहितः ऐकार्थ्यां आपन्नः ।
सन्धिः इति हि पणबन्धेन ऐकार्थ्यं उच्यते ।
केचित्पुनराहुः गृह्यमाणविशेषा प्रत्यासत्तिः सन्धिः इति ।
अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्तिविभागो गृह्यते इति ब्राह्मणमिश्रो रजा इति प्रत्युदाह्रियते ।

[#६९०]

उदाहरणेष्वविभागापत्तिरेव गुडमिश्राः इति । ।

---

1. <नञो गुणप्रतिषेधे सम्पाद्य्-अर्ह-हित-अलमर्थास्तद्धिताः># । । PS_६,२.१५५ । ।

_______Sठाञ्ठJKव्_६,२.१५५ः

सम्पादि अर्ह हित अलं इत्येवं अर्था ये तद्धिताः तदन्तानि उत्तरपदानि नञो गुणप्रतिषेधे वर्तमानात्पराणि अन्तोदात्तानि भवन्ति ।
सम्पादि-कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकं अकार्णवेष्टकिकं ।
अर्ह - छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः ।
हित - वत्सेभ्यो हितः वत्सीयः, न वर्सीयः अवर्सीयः ।
अलमर्थ - सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकः असान्तापिकः ।
नञः इति किं ? गर्दभरथं अर्हति, गार्दभरथिकः ।
विगार्दभरथिकः ।
गुणप्रतिषेधे इति किं ? गार्दभरथिकादन्यः अगार्दभरथिकः ।
गुण इति तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते ।
तत्प्रतिषेधो यत्र+उच्यते समासे तत्र अयं विधिः कर्नवेष्टकाभ्यां ।
सम्पादि मुखं इति ।
सम्पाद्यर्हहितालमर्थाः इति किं ? पाणिनीयं अधीते पाणिनीयः, न पाणिनीयः अपाणिनीयः ।

तद्धिताः इति किं ? अन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा ।
अर्हे कृत्यतृचश्च (*३,३.१६९) इति तृच् । ।

---

1. <य-यतोश्च अतदर्थे># । । PS_६,२.१५६ । ।

______Sठा‌ऽ्‌ठ्JKव्_६,२.१५६ः

य यतित्येतौ यौ तद्धितावतदर्थे वर्तते तदन्तस्य+उत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति ।
पाशानां समूहः पाश्या, न पाश्या अपाश्या ।
अतृण्या ।
यत्- दन्तेषु भवं दन्त्यम्, न दन्त्यं अदन्त्यं ।
अकर्ण्यं ।
अतदर्थे इति किं ? पादार्थमुदकं पाद्यम्, न पाद्यं अपाद्यं ।
तद्धिता इत्येव, अदेयं ।
गुणप्रतिषेधे इत्येव, दन्त्यादन्यददन्त्यं ।
निरनुबन्धकैकानुबन्धकयोर्ययतोर्ग्रहणादिह न भवति, वामदेवाड्ड्यड्ड्यौ (*४,२.९) वामदेव्यम्, न वामदेव्यं अवामदेव्यं इति । ।

---

1. <अच्-कावशक्तौ># । । PS_६,२.१५७ । ।

______Sठा‌ऽ्‌ठ्JKव्_६,२.१५७ः

अच्क इत्येवं अन्तं अशक्तौ गम्यमानायां उत्तरपदं नञः परमन्तोदत्तं भवति ।
अपचः यः पक्तुं न शक्नोति ।
अजयः ।
कः खल्वपि - अविक्षिपः ।
अविलिखः ।
अशक्तौ इति किं ? अपचो दीक्षितः ।
अपचः परिव्राजकः । ।

---

1. <आक्रोशे च># । । PS_६,२.१५८ । ।

______Sठा‌ऽ्‌ठ्JKव्_६,२.१५८ः

आक्रोशे च गम्यमाने नञः उत्तरमच्कान्तं अन्तोदात्तं भवति ।
अपचोऽयं जाल्नमः अपठोऽयं जाल्मः ।
पक्तुं पठितुं शक्तोऽप्येवं आक्रुश्यते ।
अविक्षिपः ।
अविलिखः । ।

[#६९१]

1. <सञ्ज्ञायाम्># ।। PS_६,२.१५९ ।।

_______Sठाञ्ठ्JKव्_६,२.१५९ः

अक्रोशे गम्यमाने नञः परं उत्तरपदं सञ्ज्ञायां वर्तमानं अन्तोदात्तं भवति ।
अदेवदत्तः ।
अयज्ञदत्तः ।
अविष्णुमित्रः ।।

---

1. <कृत्य-उक-इष्णुच्-चार्व्-आदयश्च># ।। PS_६,२.१६० ।।

_______Sठाञ्ठ्JKव्_६,२.१६०ः

कृत्य उक इष्णुचित्येवं अन्ताश्चार्वादयश्च नञः उत्तरेऽन्तोदात्ताः भवन्ति ।
कृत्य - अकर्तव्यं ।
अक-रणीयं ।
उक - अनागामुकं ।
अनपलाषुकं ।
इष्णुच्- अनलङ्करिष्णुः ।
अनिराकरिष्णुः ।
इष्णुज्- ग्रहणे कर्तरि भुवः खिष्णुच्(*३,२.५७) इत्यस्य द्व्यनुबन्धकस्य अपि ग्रहणं इकारादेर्विधानसामर्थ्याद्भवति ।
अनाढ्यम्भविष्णुः ।
असुभगम्भविष्णुः ।
चार्वादयः - अचारुः ।
असाधुः ।
अयौधिकः ।
अवदान्यः ।
चारु ।
साधु ।
यौधिक ।
अनङ्गमेजय ।
अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वं ।
अननङ्गमेजयः ।
वदान्य ।
अकस्माथ् ।
अत्र अपि द्वितीये नञ्समासेऽन्तोदात्तत्वं ।
अनकस्माथ् ।
अवर्तमानवर्धमानत्वरमाणध्रियमाण. रोचमानशोभमानाः सञ्ज्ञायां ।
एते वर्तमानादयः सञ्ज्ञायां द्रष्दव्याः ।
विकारसदृशे व्यस्तसमस्ते ।
अविकारः ।
असदृशः ।
अविकारसदृशः ।
गृहपति ।

गृहपतिक।
राजाह्नोश्छन्दसि।
अराजा।
अनहः।
भाषायां नञ्स्वर एव भवति॥

---

1. <विभाषा तृन्न्-अन्न-तीक्ष्ण-शुचिषु># ॥ PS_६,२.१६१ ॥

_______Sठान्ठ्JKव्_६,२.१६१ः

तृन्नन्त अन्न तीक्ष्ण शुचि इत्येतेषु नञ उत्तरेषु विभाषा अन्तः उदात्तो भवति।
तृन्- अकर्ता, अकर्ता।
अन्न - अनन्नम्, अनन्नं।
तीक्ष्ण - अतीक्ष्णम्, अतीक्ष्णं।
शुचि - अशुचिः, अशुचिः।
पक्षेऽव्ययस्वर एव भवति॥

---

1. <बहुव्रीहाविदम्-एतत्-तद्भ्यः प्रथम-पूरनयोः क्रियागणने># ॥ PS_६,२.१६२ ॥

_______Sठान्ठ्JKव्_६,२.१६२ः

बहुव्रीहौ समासे इदं एतद्तदित्येतेभ्यः उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्तमानस्य अनतः उदात्तः भवति।
इदं प्रथमं गमनं भोजनं वा यस्य स इदंप्रथमः।
इदंद्वितीयः।
इदंतृतीयः।
एतत्प्रथमः।
एतद्द्वितीयः।
एतत्तृतीयः।
तत्प्रथमः।
तद्द्वितीयः।
तत्तृतीयः।
बहुव्रीहौ इति किं।
अनेन प्रथमः इदंप्रथमः।
तृतीया इति योगविभागात्समासः।
इदमेतत्तद्भ्यः इति किं ? यत्प्रथमः।
प्रथमपूरणयोः इति किं ? तानि बहून्यस्य तद्बहुः।
क्रियागणने इति किं ? अयं प्रथम एषां ते इदंप्रथमाः।
द्रव्यगणनं एतथ्।
गणने इति किं ? अयं प्रथम एषां ते इदंप्रथमाः।
इदम्प्रधाना इत्यर्थः।
उत्तरपदस्य कार्यित्वात्कपि पूर्वं अन्तोदात्तं भवति।
इदम्प्रथमकाः।
बहुव्रीहौ इत्येतत्वनं समासे (*६,२.१७८) इति प्रागेतस्मादधिकृतं वेदितव्यं॥

[#६९२]

1. <सङ्ख्यायाः स्तनः># । । PS_६,२.१६३ । ।

______Sठाञ्ठJKव्_६,२.१६३ः
सङ्ख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति ।
द्विस्तना ।
त्रिस्तना ।
चतुःस्तना ।
सङ्ख्यायाः इति किं ? दर्शनीयस्तना ।
स्तनः इति किं ? द्विशिराः । ।

---

1. <विभाषा># । । PS_६,२.१६४ । ।

______Sठाञ्ठJKव्_६,२.१६४ः

छन्दसि विषये बहुव्रीहौ समासे सङ्ख्यायाः परः स्तनशब्दो विभासाऽन्तोदात्तो भवति ।
द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहायाष्टस्तनां करोति छन्दसां दोहाय । ।

---

1. <सञ्ज्ञायां मित्र-अजिनयोः># । । PS_६,२.१६५ । ।

______Sठाञ्ठJKव्_६,२.१६५ः

सञ्ज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोः उत्तरपदयोः अन्तः उदात्तो भवति ।
देवमित्रः ।
ब्रह्ममित्रः ।
वृकाजिनः ।
कूलाजिनः ।
कृष्णाजिनः ।
सञ्ज्ञायां इति किं ? प्रियमित्रः ।
महाजिनः ।
ऋषिप्रतिषेधो मित्रे ।
विश्वामित्र ऋषिः । ।

---

1. <व्यवायिनोऽन्तरम्># । । PS_६,२.१६६ । ।

_______Sठाऽ्ठ्JKव्_६,२.१६६ः

व्यवायी व्यवधाता, तद्वाचिनः प्रमनतरं बहुव्रीहौ समासे अन्तोदात्तं भवति ।
वस्त्रान्तरः ।
पटान्तरः ।
कम्बलान्तरः ।
वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः ।
वस्त्रव्यवधायकः इत्यर्थः ।
व्यवायिनः इति किं ? आत्मान्तरः ।
आत्मा स्वभावोऽन्तरोऽन्यो यस्य असौ आत्मान्तरः । ।

---

1. <मुखं स्वाङ्गं># । । PS_६,२.१६७ । ।

_______Sठाऽ्ठ्JKव्_६,२.१६७ः

मुखं उत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति ।
गौरमुखः ।
भद्रमुखः ।
स्वाङ्गं इति किं ? दीर्घमुखा शाला ।
स्वाङ्गमद्रवादिलक्षणं इह गृह्यते । ।

---

[#६९३]

1. <न अव्यय-दिक्शब्द-गो-महत्-स्थूल-मुष्टि-पृथु-वत्सेभ्यः># । । PS_६,२.१६८ । ।

_______Sठाऽ्ठ्JKव्_६,२.१६८ः

अव्यय दिक्शब्द गो महत्स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे न अन्तोदात्तं भवति ।
अव्यय - उच्चैर्मुखः ।
नीचैर्मुखः ।
दिक्शब्द - प्राङ्मुखः ।
प्रत्यङ्मुखः ।
गो - गोमुखः ।
महत्- महामुखः ।
स्थूल - स्थूलमुखः ।
मुष्टि - मुष्टिमुखः ।
पृथु - पृथुमुखः ।
वत्स - वत्समुखः ।
पूर्वपदप्रकृतिस्वरो यथायोगं एषु भवति ।
गोमुष्टिवत्सपूर्वस्य+उपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते । ।

---

1. <निष्ठा-उपमानादन्यतरस्याम्># । । PS_६,२.१६९ । ।

______Sठाऩ्ठ्JKव्_६,२.१६९ः

निष्ठान्तातुपमानवाचिनश्च मुखं स्वाङ्गं उत्तरपदं अन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति ।
प्रक्षालितमुखः, प्रक्षालितमुखः, प्रक्षालितमुखः ।
यदा+एतदुत्तरपदान्तोदात्तत्वं न भवति तदा निष्ठोपसर्गपूर्वं अन्यतरस्यां (*६,२.११०) इति पक्षे पूर्वपदान्तोदात्तत्वं, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरः इति त्रीण्युदाहरणानि भवन्ति ।
उपमानात्- सिंहमुखः, सिंहमुखः ।
व्याघ्रमुखः, व्याघ्रमुखः । ।

---

1. <जाति-काल-सुख-आदिभ्योऽनाच्छादनात्क्तोऽकृत-मित-प्रतिपन्नाः># । । PS_६,२.१७० । ।

______Sठाऩ्ठ्JKव्_६,२.१७०ः

जातिवाचिनः आच्छादनवर्जितात्कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान्वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति ।
सारङ्गजग्धः ।
पलाण्डुभक्षितः ।
सुरापीतः ।
काल - मासजातः ।
संवत्सरजातः ।
द्व्यहजातः ।
त्र्यहजातः ।
सुखादिभ्यः - सुखजातः ।
दुःखजातः ।
तृप्रजातः ।
जात्यादिभ्यः इति किं ? पुत्रजातः ।
आहिताग्न्यादित्वात्परनिपातः ।
अनाच्छादनातिति किं ? वस्त्रच्छन्नः ।
वसनच्छन्नः ।
अकृतमितप्रतिपन्नाः इति किं ? कुण्डकृतः ।
कुण्डमितः ।
कुण्डप्रतिपन्नः ।
एतेसु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवत्येव अस्मादेव ज्ञापकाथ् ।
प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः ।
सुखादयस्तृतीयेऽध्याये पठ्यन्ते । ।

---

1. <वा जाते># । । PS_६,२.१७१ । ।

______Sठाऩ्ठ्JKव्_६,२.१७१ः

जातशब्दे उत्तरपदे वा अन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः।
दन्तजातः, दन्तजातः।
स्तनजातः, स्तनजातः।
कालात्- मासजातः, मासजातः।
संवत्सरजातः, संवत्सरजातः।
सुखादिभ्यः - सुखजातः, सुखजातः।
दुःखजातः, दुःखजातः।।

---

[#६९४]

1. <नञ्-सुभ्याम्>#।। PS_६,२.१७२।।

_______Sठा┐ठ्JKव्_६,२.१७२ः

नञ्सुभ्यां परं उत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति।
अयवो देशः।
अव्रीहिः।
अमाषः।
सुयवः।
सुव्रीहिः।
सुमाषः।
समासस्य+एतदन्तोदात्तत्वं इष्यते।
समासान्ताश्च अवयवा भवन्ति इति अनृचः, बहवृचः इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति।।

---

1. <कपि पूर्वम्>#।। PS_६,२.१७३।।

_______Sठा┐ठ्JKव्_६,२.१७३ः

नञ्सुभ्या कपि परतः पूर्वं अन्तोदात्तं भवति।
अकुमारीको देशः।
अवृषलीकः।
अब्रह्मबन्धूकः।
सुकुमारीकः।
सुवृषलीकः।
सुब्रह्मबन्धूकः।।

---

1. <ह्रस्वान्तेऽन्त्यात्पूर्वम्>#।। PS_६,२.१७४।।

_______Sठा┐ठ्JKव्_६,२.१७४ः

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तं उत्तरपदं समासो वा, तत्र अन्त्यात्पूर्वं उदात्तं भवति कपि परतो नञ्सुहयां परं बहुव्रीहौ समासे।
अयवको देशः।
अव्रीहिकः।
अमाषकः।
सुयवकः।
सुव्रीहिकः सुमाषकः।
पूर्वं इति वर्तमने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्, ह्रस्वान्तेऽन्त्यात्पूर्वं उदात्तं भवति, न कपि पूर्वं इति।
तेन अज्ञकः, सुज्ञकः इत्यत्र कबन्तस्य+एव अन्तोदात्तत्वं भवति।।

---

1. <बहोर्नञ्वदुत्तरपदभूम्नि>#।। PS_६,२.१७५।।

_______Sठान्ढ्JKव्_६,२.१७५ः

उतरपदार्थबहुत्वे यो बहुशब्दो वर्तते तस्मात्नञ इव स्वरो भवति।
नञ्सुभ्यां (*६,२.१७२) इत्युक्तम्, बहोरपि तथा भवति।
बहुयवो देशः बहुव्रीहिः।
बहुतिलः।
कपि पूर्वं (*६,२.१७३) इत्युक्तम्, बहोरपि तथा भवति।
बहुकुमारीको देशः।
बहुवृषलीकः।
बहुब्रह्मबन्धूकः।
ह्रस्वान्तेऽन्तोऽन्त्यात्पूर्वं (*६,२.१७४) इत्युक्तम्, बहोरपि तथा भवति।
बहुयवको देशः।
बहुव्रीहिकः।
बहुमाषकः।
नञो जरमरमित्रमृताः (*६,२.११६) इत्युक्तम्, बहोरपि तथा भवति।
बहुजरः।
बहुमरः।
बहुमित्रः।
बहुमृतः।
उत्तरपदभूम्नि इति किं? बहुषु मनः अस्य बहुमनाः अयं।।

---

1. <न गुणादयोऽवयवाः>#।। PS_६,२.१७६।।

_______Sठान्ढ्JKव्_६,२.१७६ः

बुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ताः भवन्ति बहुगुणा रज्जुः।
बह्वक्षरं पदं।
बहुच्छन्दो मानं।
बहुसूक्तः।
बह्वध्यायः।
गुणादिराकृतिगणो द्रष्टव्यः।
अवयवाः इति किं? बहुगुणो ब्राह्मणः।
अध्ययनश्रुतसदाचारदयोऽत्र गुणाः।।

---

[#६९५]

1. <उपसर्गात्स्वाङ्गं ध्रुवं अपर्शु># । । PS_६,२.१७७ । ।

______Sठाघ्ठ्JKव्_६,२.१७७ः

उपसर्गात्स्वाङ्गं ध्रुवं पर्शुवर्जितं अन्तोदात्तं भवति बहुव्रीहौ समासे ।
प्रपृष्ठः ।
प्रोदरः ।
प्रललाटः ।
ध्रुवं इत्येकरूपं उच्यते, ध्रुवं अस्य शीतं इति यथा ।
सततं यस्य प्रगतं पृष्ठं बह्वति स प्रपृष्ठः ।
उपसर्गातिति किं ? दर्शनीयललाटः ।
स्वाङ्गं इति किं ? प्रशाखो वृक्षः ।
ध्रुवं इति किं ? उद्बाहुः क्रोशति ।
अपर्शु इति किं ? उत्पर्शुः ।
विपर्शुः । ।

---

1. <वनं समासे># । । PS_६,२.१७८ । ।

______Sठाघ्ठ्JKव्_६,२.१७८ः

समासमात्रे वनं इत्येतदुत्तरपदं उपसर्गात्परमन्तोदात्तं भवति ।
प्रवणे यष्टव्यं ।
निर्वणे प्रणिधीयते ।
प्रनिरन्तः इति णत्वं ।
समासग्रहणं समाससमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात् । ।

---

1. <अन्तः># । । PS_६,२.१७९ । ।

______Sठाघ्ठ्JKव्_६,२.१७९ः

अन्तःशब्दादुत्तरं वनं अन्तोदात्तं भवति ।
अन्तर्वणो देशः ।
अनुपसर्गार्थ आरम्भः । ।

---

1. <अन्तश्च># । । PS_६,२.१८० । ।

______Sठाऱ्ठ्JKव्_६,२.१८०ः

अन्तःशब्दश्च उत्तरपदं उपसर्गादन्तोदात्तं भवति ।
प्रान्तः ।
पर्यन्तः ।
बहुव्रीहिरयं प्रादिसमासो वा । ।

---

1. <न नि-वि-भ्याम्># । । PS_६,२.१८१ । ।

______Sठाऱ्ठ्JKव्_६,२.१८१ः

नि वि इत्येताभ्यां उत्तरोऽन्तःशब्दो न अनतोदात्तो भवति ।
न्यन्तः ।
व्यन्तः ।
पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः ।
तत्र उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इति स्वरितो भवति । ।

---

1. <परेरभितोभावि मण्डलम्># । । PS_६,२.१८२ । ।

______Sठाऱ्ठ्JKव्_६,२.१८२ः

परेरुत्तरं अभितोभविवचनं मण्डलं च अन्तोदात्तं भवति ।
परिकूलं ।
परितीरं ।
परिमण्डलं ।
बहुव्रीहिरयं प्रादिसमासोऽव्ययीभावो वा ।
अव्ययीभावपक्षेऽपि हि परि-प्रत्य्-उप-अपा वर्ज्यमान-अहोरात्र-अवयवेषु (*६,२.३३) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तं अनेन बाध्यते ।
अभितः इत्युभयतः ।
अभितो भावोऽस्य अस्ति इति तदभितोभावि ।
यच्च+एवं स्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते । ।

---

[#६९६]

1. <प्राद्-अस्वङ्गं सञ्ज्ञायाम्># । । PS_६,२.१८३ । ।

______Sठा॒ठ्JKव्_६,२.१८३ः

प्रादुत्तरपदं अस्वाङ्गवाचि सञ्ज्ञायां विषयेऽन्तोदात्तं भवति ।
प्रकोष्ठं ।
प्रगृहं ।
प्रद्वारं ।
अस्वङ्गं इति किं ? प्रहस्तं ।
प्रपदं ।
सञ्ज्ञायां इति किं ? प्रपीठं । ।

---

1. <निरुदकादीनि च># । । PS_६,२.१८४ । ।

______Sठा॒ठ्JKव्_६,२.१८४ः

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति ।
निरुदकं ।
निरुलपं ।
निरुपलं इत्यन्ये पठन्ति ।
निर्मशकं ।
निर्मक्षिकं ।
एषां प्रादिसमासो बहुव्रीहिर्वा ।
अव्ययीभावे तु समासान्तोदात्तत्वेन+एव सिद्धं ।
निष्कालकः ।
निष्क्रान्तः कालकातिति कन्प्रत्ययान्तेन कालशब्देन प्रादिसमासः ।
निष्कालिकः इत्यन्ये पथन्ति ।
निष्पेषः ।
दुस्तरीपः ।
अवित्éस्त्éतन्त्रिभ्य ईः, तरीः ।
तां पाति इति तरीपः ।
कुत्सितः तरीपः दुस्तरीपः ।
निस्तरीपः इति केचित्पठन्ति ।
अपरे निस्तरीकः इति ।
ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति ।
निरजिनं ।
उदजिनं ।
उपाजिनं ।
परेर्हस्तपादकेशकर्षाः ।
परिहस्तः ।
परिपादः ।
परिकेशः ।
परिकर्षः ।
निरुदकादिराकृतिगणः । ।

---

1. <अभेर्मुखम्># । । PS_६,२.१८५ । ।

_______SठाॅठJKव्_६,२.१८५ः
अभेरुत्तरं मुखं अन्तोदात्तं भवति ।
अभिमुखः ।
बहुव्रीहिरयं प्रादिसमासो वा ।
अव्ययीभावे तु समासान्तोदात्तत्वेन+एव सिद्धं ।
उपसर्गात्स्वाङ्गं (*६,२.१७७) इति सिद्धे वचनं अबहुव्रीह्यर्थं अध्रुवार्थं अस्वाङ्गार्थं च ।
अभिमुखा शाला । ।

---

1. <अपाच्च># । । PS_६,२.१८६ । ।

_______SठाॅठJKव्_६,२.१८६ः

अपाच्च+उत्तरं मुखं अन्तोदात्तं भवति ।
अपमुखः ।
अपमुखं ।
अव्ययीभावोऽप्यत्र प्रयोजयति ।
तत्र अपि हि परि-प्रत्य्-उप-अपा वर्ज्यमान. अहोरात्र-अव्ययवेषु (*६,२.३३) इत्युक्तं ।
योगविभागः उत्तरार्थः । ।

---

1. <स्फिग-पूत-वीणा-अञ्जोऽध्व-कुक्षि-सीरनाम-नाम च># । । PS_६,२.१८७ । ।

_______SठाॅठJKव्_६,२.१८७ः

स्फिग पूत वीणा अञ्जसध्वन्कुक्षि इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तनि भवन्ति ।
अपस्फिगं ।
अपपूतं ।
अपवीणं ।
अपञ्जः ।
अपाध्वा ।
उपसर्गादध्वनः (*५,४.८५) इति यदा समासान्तो न अस्ति तदा अनेन अन्तोदात्तत्वं भवति ।

[#६९७]

तस्मिन्हि सत्यचप्रत्ययस्य चित्त्वादेव सिद्धं ।
अनित्यश्च समासान्तः इत्येतदेव ज्ञापकं ।
अपकुक्षिः ।
अपसीरः ।
अपहलं ।
अपलाङ्गलं ।
अपनाम ।
सर्वत्र प्रादिसमासो, बहुव्रीहिः, अव्ययीभावो वा ।
स्फिगपूतकुक्षीणां ग्रहणं अबहुव्रीह्यर्थं अध्रुवार्थं अस्वाङ्गार्थं च । ।

---

1. <अधेरुपरिस्थम्># । । PS_६,२.१८८ । ।

_______Sठाञ्ठ्JKव्_६,२.१८८ः

अधेरुत्तरं उपरिस्थवाचि अन्तोदात्तं भवति ।
अधिदन्तः ।
अधिकर्णः ।
अधिकेशः ।
अध्यारूढो दन्तः इति प्रादिसमासः ।
अध्यारूढो वा दन्तः इति समानाधिकरण उत्तरपदलोपी समस्सः ।
दन्तस्य+उपरि योऽन्योः दन्तो जायते स उच्यते अधिदन्तः इति ।
उपरिस्थं इति किं ? अधिकरणं । ।

---

1. <अनोरप्रधानकनीयसी># । । PS_६,२.१८९ । ।

_______Sठाञ्ठ्JKव्_६,२.१८९ः

अनोरुत्तरं अप्रधानवाचि कनीयः च अन्तोदात्तं भवति ।
अनुगतो ज्येष्ठं अनुज्येष्ठः ।
अनुमध्यमः ।
पूर्वपदप्रधानः प्रादिसमासोऽयं ।
अनुगतः कनीयाननुकनीयान् ।
उत्तरपदार्थप्रधानोऽयं ।
प्रधानार्थं च कनीयोग्रहणं ।
अप्रधानकनीयसी इति किं ? अनुगतो ज्येष्ठः अनुज्येष्ठः । ।

---

1. <पुरुषश्च अन्वादिष्टः># । । PS_६,२.१९० । ।

_______Sठाञ्ठ्JKव्_६,२.१९०ः

पुरुषशब्दोऽन्वादिष्टवाची च अनोरुत्तरोऽन्तोदात्तो भवति ।
अन्वादिष्टः पुरुषः अनुपुरुषः ।
अन्वादिष्ट अन्वाचितः कथितानुकथितो वा ।
अन्वादिष्टः इति किं ? अनुगतः पुरुषः अनुपुरुषः । ।

---

1. <अतेरकृत्-पदे># । । PS_६,२.१९१ । ।

_______Sठाऩ्ठJKव्_६,२.१९१ः

अतेः परमकृदन्तं पदशब्दश्च अन्तोदात्तो भवति ।
अत्यङ्कुशो नागः ।
अतिकशोऽश्वः ।
अपदशब्दः खल्वपि - अतिपदा शक्वरी ।
अकृत्पदे इति किं ? अतिकारकः ।
अतेर्धातुलोप इति वक्तव्यं ।
इह माभूत्, शोभनो गार्ग्यः अतिगार्ग्यः ।
इह च यथा स्यात्, अतिक्रान्तः कारकाततिकारकः इति । ।

---

1. <नेरनिधाने># । । PS_६,२.१९२ । ।

_______Sठाऩ्ठJKव्_६,२.१९२ः

नेः परमुत्तरपदं अन्तोदात्तं भवति अनिधाने ।
निधानं अप्रकाशता ।
अनिमूलं न्यक्षं ।
नितृणं ।
बहुव्रीहिरयं प्रादिसमासो वा ।
अव्ययीभावे तु समासान्तोदात्तत्वेन+एव सिद्धं ।
अनिधाने इति किं ? निवाग्वृषलः ।
निदण्डः ।
निहितवाक्, निहितदण्डः इत्यर्थः ।
निशब्दोऽत्र निधानार्थं ब्रवीति ।
प्रदयो हि वृत्तिविषये ससाधनां क्रियामाहुः । ।

---

[#६९८]

1. <प्रतेरंश्व्-आदयस्तत्पुरुषे># । । PS_६,२.१९३ । ।

_______Sठाऩ्ठJKव्_६,२.१९३ः

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ताः भवन्ति ।
प्रतिगतः अंशुः प्रत्यंशुः ।
प्रतिजनः ।
प्रतिराजा ।
राजशब्दः समासान्तस्य अनित्यत्वाद्यदा टज्न अस्ति तदा प्रयोजयति ।
तस्मिन्हि सति चित्त्वादेव अन्तोदात्तत्वं सिद्धं ।
तत्पुरुषे इति किं ? प्रतिगताः अंशवः अस्य प्रत्यंशुः अयं उष्ट्रः ।
अंशु ।
जन ।

राजन् ।
उष्ट्र ।
खेटक ।
अजिर ।
आर्द्रा ।
श्रवण ।
कृत्तिका ।
अर्ध ।
पुर । ।

---

1. <उपाद्द्व्यज्-अजिनं अगौरादयः># । । PS_६,२.१९४ । ।

______Sठाञ्ठ्JKव्_६,२.१९४ः

उपादुत्तरं द्व्यचजिनं च अन्तोदात्तं भवति तत्पुरुषे समासे गौरादीन्वर्जयित्वा ।
उपगतो देवं उपदेवः ।
उपसोमः ।
उपेन्द्रः ।
उपहोडः ।
अजिन - उपाजिनं ।
अगौरादयः इति किं ।
उपगौरः ।
उपतैषः ।
तत्पुरुषे इत्येव, उपगतः सोमोऽस्य उपसोमः ।
गौर ।
तैष ।
नैष ।
तैट ।
लट ।
लोट ।
जिह्वा ।
कृष्णा ।
कन्या ।
गुड ।
कल्य ।
पाद ।
गौरादिः । ।

---

1. <सोरवक्षेपणे># । । PS_६,२.१९५ । ।

______Sठाञ्ठ्JKव्_६,२.१९५ः

सुशब्दात्परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने ।
अवक्षेपणं निन्दा ।
इह खलु इदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः ।

सुशब्दोऽत्र पूजायां एव ।
वाक्यार्थस्तु अवक्षेपणमसूयया, तथा अभिधानाथ् ।
सोः इति किं ? कुब्राह्मणः ।
अवक्षेपणे इति किं ? शोभनेषु तृणेषु सुतृणेषु । ।

---

1. <विभाषा+उत्पुच्छे># । । PS_६,२.१९६ । ।

_______Sठान्ठ्JKव्_६,२.१९६ः

उत्पुच्छशब्दे तत्पुरुषे विभाषा अन्त उदात्तो भवति ।
उत्क्रान्तः पुच्छातुत्पुच्छः, उत्पुच्छः ।
यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्चयतेरचुत्पुच्छः, तदा थाथादिसूत्रेण नित्यं अन्तोदात्तत्वे प्राप्ते विकल्पोऽयं इति सेयं उभयत्र विभाष भवति ।
तत्पुरुषे इत्येव उदस्तं पुच्छं अस्य उत्पुच्छः । ।

---

1. <द्वि-त्रिभ्यां पाद्-दन्-मूर्धसु बहुव्रीहौ># । । PS_६,२.१९७ । ।

_______Sठान्ठ्JKव्_६,२.१९७ः
द्वि त्रि इत्येताभ्यां उत्तरेसु पाद्दत्मूर्धनित्येतेषु उत्तरपदेषु यो बहुव्रीहिः, तत्र विभाषा अन्तः उदात्तो भवति ।
द्वौ पादो अस्य द्विपात्, द्विपाथ् ।
त्रिपात्, त्रिपाथ् ।
द्विदन्, द्विदन् ।
त्रिदन्, त्रिदन् ।
द्विमूर्धा, द्विमूर्धा ।
त्रिमूर्धा, त्रिमूर्धा ।
पादिति कृताकरलोपः पादशब्दो गृह्यते ।
दतिति कृतददादेशो दन्तशब्दः ।
मूर्धनिति त्वकृतसमासन्तो नान्त एव मूर्धन्शब्दः ।
तस्य एतत्प्रयोजनं असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्याथ् ।
एतदेव ज्ञापकम्, अनित्यः समासान्तो भवति इति ।
यदाऽपि समासान्तः क्रियते तदा अपि बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्य अन्तोदात्तत्वं पक्षे भवत्येव ।
द्विमूर्धः ।
त्रिमूर्धः ।
द्वित्रिभ्यां इति किं ? कल्याणमूर्धा ।
पादादिषु इति किं ? द्विहस्तं ।
बहुव्रीहौ इति किं ? द्वयोर्मूर्धा द्विमूर्धा । ।

---

[#६९९]

1. <सक्थं च अक्रान्तात्># । । PS_६,२.१९८ । ।

_______Sठान्ठ्JKव्_६,२.१९८ः

सक्थं इति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते ।

[#६९८]

सः अक्रान्तात्परो विभाषा अन्तोदात्तो भवति ।
गौरसक्थः, गौरसक्थः ।
श्लक्ष्णसक्थः, श्लक्ष्णसक्थः ।
अक्रान्तातिति किं ? चक्रस्क्थः ।
षचश्चित्वान्नित्यं अन्तोदात्तत्वं भवति । ।

---

[#६९९]

1. <परादिश्छन्दसि बहुलम्># । । PS_६,२.१९९ । ।

______Sठाऽठ्JKव्_६,२.१९९ः

छन्दसि विसये परादिः उदात्तो भवति बहुलं ।
परशब्देन अत्र सक्थशब्द एव गृह्यते ।
अञ्जिसक्थं आलभेत ।
त्वाष्ट्रौ लोमशसक्थौ ।
ऋजुबाहुः ।
वाक्पतिः ।
चित्पतिः । ।
परादिश्च प्रान्तश्च पूर्वान्तश्च अपि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः । ।
परादिरुदाहृतः ।
परान्तश्च -- अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसङ्ख्यानं ।
त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण ।
पूर्वान्तः -- पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसङ्ख्यानं ।
मरुद्वृद्धः ।
पूर्वादिः -- पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानं ।
दिवोदासाय समगाय ते इत्येवं आदि सर्वं सङ्गृहीतं भवति । ।
इति काशिकायां वृत्तौ षष्ठाध्यायस्य द्वितीयः पादः । ।

---

[#७००]

षष्ठाध्यायस्य तृतीयः पादः ।

---

1. <अलुगुत्तरपदे># । । PS_६,३.१ । ।

______Sठाऽठ्JKव्_६,३.१ः

अलुकिति च, उत्तरपदे इति च एतदधिकृतं वेदितव्यं ।
यदिति ऊर्ध्वं अनुक्रमिष्यामोऽलुकुत्तरपदे इत्येवं तद्वेदितव्यं ।

---

वक्ष्यति -

1. <पञ्चम्याः स्तोकादिभ्यः># । । PS_६,३.२ । ।

______Sठाञ्ठ्JKव्_६,३.२ः

स्तोकान्मुक्तः ।
अल्पान्मुक्तः ।
उत्तरपदे इति किं ? निष्क्रान्तः स्तोकात्निस्तोकः ।
अन्यार्थं इदं उत्तरपदग्रहणं इह अप्यलुको निवृतिं करोति इत्येवं अर्थं लक्षणप्रतिपदोक्तपरिभाषा न अश्रयितव्या ।
अलुगधिकारः प्रागानङः ।
उत्तरपदाधिकारः प्रागङ्गाधिकारात् । ।
पञ्चम्याः स्तोक-आदिभ्यः (*६,३.२) ।
स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्याः उत्तरपदे अलुक्भवति ।
स्तोकान्मुक्तः ।
अल्पान्मुक्तः ।
अन्तिकादगतः अभ्याशादागतः ।
दूरादागतः ।
विप्रकृष्टादागतः ।
कृच्छ्रान्मुक्तः ।
समासे कृते प्रातिपदिकत्वात्सुपो लुकि प्राप्ते प्रतिषेधः क्रियते ।
द्विवचनबहुवचनान्तानां तु स्तोकादीनां अनभिधानात्समास एव न भवति स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः इति ।
तेन अत्र न कदाचिदैकपद्यं ऐकस्वर्यं च भवति ।
ब्राह्मणाच्छंसिन उपसङ्ख्यानं कर्तव्यं ।
ब्राह्मणदादाय शंसति इति ब्राह्मणाच्छंसी इति ।
ऋत्विग्विशेषस्य रूढिरियं ।
तस्य व्युत्पत्तिरसता सता वा अवयवार्थेन क्रियते । ।

---

1. <ओजः-सहोऽम्भस्-तमसस्तृतीययाः># । । PS_६,३.३ । ।

______Sठाञ्ठ्JKव्_६,३.३ः

ओजस्सहसम्भस्तमसित्येतेभ्य उत्तरस्याः तृतीयायाः अलुक्भवति उत्तरपदे ।
ओजसाकृतं ।
सहसाकृतं ।
अम्भसाकृतं ।
तमसाकृतं ।
अञ्जस उपसङ्ख्यानं ।
अञ्जसाकृतं ।
पुंसानुजो जनुषान्ध इति वक्तव्यं ।
पुंसानुजः ।
जनुषान्धः । ।

---

[#७०१]

1. <मनसः सञ्ज्ञायाम्># । । PS_६,३.४ । ।

_______Sठाञ्ठ्JKव्_६,३.४ः

मनसः उत्तरस्याः तृतीयायाः सञ्ज्ञायां अलुग्भवति ।
मनसादत्ता ।
मनसगुप्ता ।
मनसासङ्गता ।
सञ्ज्ञायां इति किं ? मनोदत्ता ।
मनोगुप्ता । ।

---

1. <आज्ञायिनि च># । । PS_६,३.५ । ।

_______Sठाञ्ठ्JKव्_६,३.५ः

आज्ञायिन्युत्तारपदे मनसः उत्तरस्य तृतीयायाः अलुग्भवति ।
मनसा अज्ञातुं शीलमस्य मनसाज्ञायी । ।

---

1. <आत्मनश्च पूरणे># । । PS_६,३.६ । ।

_______Sठाञ्ठ्JKव्_६,३.६ः

आत्मनश्च पूरणे (*६,३.६) ।
आत्मनः उत्तरस्याः तृतीयायाः पूरणप्रत्ययान्ते उतारपदेऽलुग्भवति ।
आत्मनापञ्चमः ।
आत्मनाषष्ठः ।
तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानं इति तृतीया ।
तृतीया इति योगविभागात्समासः ।
आत्मना वा कृतः पञ्चमः आत्मनापञ्चमः ।
कथं जनार्दनस्त्वात्मचतुर्थ एव इति ? बहुव्रीहिरयं आत्मा चतुर्थोऽस्य असौ आत्मचतुर्थः । ।

---

1. <वैयाकरणाख्यायां चतुर्थ्याः># । । PS_६,३.७ । ।

_______SठाJKव्_६,३.७ः

वैयाकरनानामाख्या वैयाकरणाख्या।
आख्या सञ्ज्ञा।
यया सञ्ज्ञया वैयाकरणा एव व्यहरन्ति तस्यां आत्मनः उत्तरस्याश्चतुर्थ्या अलुग्भवति।
आत्मनेपदं।
आत्मनेभषा।
तदर्थ्ये चतुर्थी।
चतुर्थी इति योगविभागात्समासः।।

---

1. <परस्य च>#।। PS_६,३.८।।

_______SठाJKव्_६,३.८ः

परस्य च या चतुर्थी तस्य वैयाकरणाख्यायां अलुग्भवति।
परस्मैपदं।
परस्मैभाषा।।

---

1. <हल्-अदन्तात्सप्तम्याः सञ्ज्ञायाम्>#।। PS_६,३.९।।

_______SठाJKव्_६,३.९ः

हलन्ताददन्ताच्च+उत्तरस्याः सप्तम्याः सञ्ज्ञायां अलुग्भवति।
युधिष्ठिरः।
त्वचिसारः।
गविष्ठिरः इत्यत्र तु गवियुधिभ्यां स्थिरः (*८,३.९५) इत्यत एव वचनादलुक्।
अदन्तात्- अरण्येतिलकाः।
अरण्येमाषकाः।
वनेकिंशुकाः।
वनेहरिद्रकाः।
वनेबल्बजकाः।
पुर्वाह्णेस्फोटकाः।
कूपेपिशाचकाः।
हलदन्तादिति किं? नद्यां कुक्कुटिका नदीकुक्कुटिका।
भूम्यां पाशाः भूमिपाशाः।
सञ्ज्ञायां इति किं? अक्षशौण्डः।
हृद्द्युभ्यां ङेः।
हृद्दिवित्येतेभ्यां उत्तरस्य ङेरलुग्भवति।
हृदिस्पृक्।
दिविस्पृक्।।

---

[#७०२]

1. <कारनाम्नि च प्राचां हल्-आदौ># । । PS_६,३.१० । ।

______Sठान्ठ्JKव्_६,३.१०ः

प्राचां देशे यत्कारनाम तत्र हलादवुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्याः अलुग्भवति ।
सूपेशाणः ।
दृषदिमाषकः ।
हलेद्विपदिका ।
हलेत्रिपदिका ।
कारविशेषस्याः सञ्ज्ञा एताः, तत्र पूर्वेण+एव सिद्धे नियमार्थं इदं ।
एते च त्रयो नियमविकल्पा अत्रेष्यन्ते, कारनाम्न्येव, प्राचां एव, हलादावेव इति ।
कारनाम्नि इति किं ? अभ्यर्हिते पशुः अभ्यर्हितपशुः ।
कारादन्यस्या+एतद्देयस्य नाम ।
प्राचां इति किं ? यूथे पशुः यूथपशुः ।
हलादौ इति किं ? अविकटे उरणः अविकटोरणः ।
हलदन्तादित्येव, नद्यां दोहनी नदीदोहनी । ।

---

1. <मध्याद्गुरौ># । । PS_६,३.११ । ।

______Sठान्ठ्JKव्_६,३.११ः

मध्यादुत्तरस्याः सप्तम्याः गुरावुत्तरपदेऽलुग्भवति ।
मध्येगुरुः ।
अन्ताचेति वक्तव्यं ।
अन्तेगुरुः ।
सप्तमी इति योगविभागात्समासः । ।

---

1. <अमूर्ध-मस्तकात्स्वाङ्गादकामे># । । PS_६,३.१२ । ।

______Sठान्ठ्JKव्_६,३.१२ः

मूर्ध-मस्तक-वर्जितात्स्वाङ्गादुत्तरस्याः सप्तम्याः अकामे उत्तरपदेऽलुग्भवति ।
कण्ठे कालोऽस्य कण्ठेकालः ।
उरसिलोमा ।
उदरेमणिः ।
अमूर्धमस्तकातिति किं ? मूर्धशिखः ।
मस्तकशिखः ।
अकामे इति किं ? मुखे कामोऽस्य मुखकामः ।
स्वाङ्गातिति किं ? अक्षशौण्डः ।
हलदन्तातित्येव, अङ्गुलित्राणः ।

जङ्घावलिः । ।

---

1. <भन्धे च विभाषा># । । PS_६,३.१३ । ।

_______Sठाञ्ठ्JKव्_६,३.१३ः

बन्धः इति घञन्तो गृह्यते ।
तस्मिन्नुत्तरपदे हलदन्तदुत्तरस्याः सप्तम्याः विभाषा अलुग्भवति ।
हस्तेबन्धः, हस्तबन्धः ।
चक्रेबन्धः, चक्रबन्धः ।
उभयत्र विभाषेयं ।
स्वङ्गाद्धि बहुव्रिहौ पूर्वेण नित्यं अलुक्प्राप्नोति, तत्पुरुषे तु स्वङ्गादस्वाङ्गाच्च न-इन्-सिद्ध-बध्नातिसु च (*६,३.१९) इति प्रतिषेधः प्राप्नोति ।
हलदन्तादित्येव, गुप्तिबन्धः । ।

---

1. <तत्पुरुषे कृति बहुलम्># । । PS_६,३.१४ । ।

_______Sठाञ्ठ्JKव्_६,३.१४ः

तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्याः बहुलं अलुग्भवति ।
स्तम्बेरमः ।
कर्णेजपः ।
न च भवति ।
कुरुचरः ।
मद्रचरः । ।

---

[#७०३]

1. <प्रावृट्-शरत्-काल-दिवां जे># । । PS_६,३.१५ । ।

_______Sठाञ्ठ्JKव्_६,३.१५ः

प्रावृट्शरत्काल दिवित्येतेषां जे उत्तरपदे सप्तम्याः अलुक्भवति ।
प्रावृषिजः ।
शरदिजः ।
शरदिजः ।
कालेजः ।
दिविजः ।
पूर्वस्य+एव अयं प्रपञ्चः । ।

---

1. <विभाषा># । । PS_६,३.१६ । ।

_______Sठा-ठ्JKव्_६,३.१६ः

वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्यः सप्तम्याः जे उत्तरपदे विभाषा अलुग्भवति ।
वर्षेजः, वर्षजः ।
क्षरेजः, क्षरजः ।
शरेजः, शरजः ।
वरेजः, वरजः । ।

---

1. <घ-काल-तनेसु कालनाम्नः># । । PS_६,३.१७ । ।

_______Sठा-ठ्JKव्_६,३.१७ः

घ-सञ्ज्ञके प्रत्यये, कालशब्दे, तनप्रत्यये च परतः कालनाम्नः उत्तरस्याः सप्तम्या विभाषा अलुग्भवति ।
घ - पूर्वह्णेतरे, पूर्वाह्णतरे ।
पूर्वाह्णेतमे, पूर्वाह्णतमे ।
काल - पूर्वाह्णेकाले, पूर्वह्णाकाले ।
तन - पूर्वाह्णेतने, पूर्वाह्णतने ।
कालनाम्नः इति किं ? शुक्लतरे ।
शुक्लतमे ।
हलदन्तादित्येव, रात्रितरायां ।
उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न+इष्यते हृदयस्य हृल्लेख इति लेखग्रहणाल्लिङ्गाथ् ।
तेन घतनग्रहणे, तदन्तग्रहनं न भवति ।
काल इति न स्वरूपग्रहणं । ।

---

1. <शय-वास-वासिष्वकलात्># । । PS_६,३.१८ । ।

_______Sठा-ठ्JKव्_६,३.१८ः

शय वास वासिनित्येतेषु उत्तरपदेष्वकालवाचिनः उत्तरस्याः सप्तम्या विभाषा अलुक्भवति ।
खेशयः, खशयः ।
ग्रामेवासः, ग्रामवासः ।
ग्रामेवासी, ग्रामवासी ।
अकालातिति किं ? पूर्वह्णशयः ।
हलदन्तातित्येव, भूमिशयः ।
अपो योनियन्मतुसु सप्तम्या अलुग्वक्तव्यः ।
अप्सुयोनिः ।
अप्सव्यः ।
अप्सुमन्तौ ।
अप्सु भवः इति दिगादित्वाद्यत्प्रत्ययः ।

सर्वत्र सप्तमी ती योगविभागात्समासः । ।

---

1. <न-इन्-सिद्ध-बध्नातिषु च># । । PS_६,३.१९ । ।

_______Sठाऱ्ठ्JKव्_६,३.१९ः

इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्याः अलुग्न भवति ।
स्थण्डिलवर्ती ।
सिद्ध - साङ्काश्यसिद्धः ।
काम्पिल्यसिद्धः ।
बध्नाति - चक्रबद्धः ।
चारबद्धः ।
सप्तमी इति योगविभागात्समासः ।
चक्रबन्धः इति केचिदुदाहरन्ति, तत्पचाद्यजन्तं द्रष्टव्यं ।
घञन्ते हि बन्धे च विभाषा (*६,३.१३) इत्युक्तं । ।

---

[#७०४]

1. <स्थे च भाषायाम्># । । PS_६,३.२० । ।

_______Sठाऱ्ठ्JKव्_६,३.२०ः

स्थे च+उत्तरपदे भाषायां सप्तम्या अलुक्न भवति ।
समस्थः ।
विषमस्थः ।
कूटस्थः ।
पर्वतस्थः ।
भाषायां इति किं ? कृणोम्यारेष्ठः ।
पूर्वपदात्(*८,३.१०६) इति षत्वं । ।

---

1. <षष्ठ्या आक्रोशे># । । PS_६,३.२१ । ।

_______Sठाऱ्ठ्JKव्_६,३.२१ः

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति ।
चौरस्यकुलं ।
वृषलस्यकुलं ।
आक्रोशे इति किं ? ब्राह्मनकुलं ।
षष्थीप्रकरने वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासङ्ख्यं अलुग्वक्तव्यः ।

वाचोयुक्तिः ।
दिशोदण्डः ।
पश्यतोहरः । ।
आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च अलुग्वक्तव्यः ।
अमुस्यापत्यं आमुस्यायणः ।
नडादित्वात्फक् ।
अमुष्य पुत्रस्य भावः आमुस्यपुत्रिका ।
मनोज्ञादित्वद्वुञ् ।
तथा आमुस्यकुलिका इति ।
देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग्वक्तव्यः ।
देवानं प्रियः । ।
शेपपुच्छलङ्कूलेषु शुनः सञ्ज्ञायां अलुग्वक्तव्यः ।
शुनःशेपः ।
शुनःपुच्छः ।
शुनोलाङ्गूलः ।
दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः ।
दिवोदासाय गायति । ।

---

1. <पुत्रेऽन्यतरस्याम्># । । PS_६,३.२२ । ।

_______Sठाञ्ठ्JKव्_६,३.२२ः

पुत्रशब्दे उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्याः अलुग्भवति ।
दास्यःपुत्रः, दासीपुत्रः ।
वृषल्याःपुत्रः वृषलीपुत्रः ।
आक्रोशे इत्येव, ब्राह्मणीपुत्रः । ।

---

[#७०५]

1. <ऋतो विद्यायोनिसम्बन्धेभ्यः># । । PS_६,३.२३ । ।

_______Sठाञ्ठ्JKव्_६,३.२३ः

ऋकारान्तेभ्यो विद्यसम्बन्धवचिभ्यो योनिसम्बन्धवाचिभ्यश्च+उत्तरस्याः षष्ठ्या अलुग्भवति ।
होतुरन्तेवसी ।
होतुःपुत्रः ।
पितुरन्तेवासी ।
पितुःपुत्रः ।
ऋतः इति किं ? आचर्यपुत्रः ।
मातुलपुत्रः ।
विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं ।
विद्यायोनिसम्बन्धवाचिनि एव+उत्तरपदे यथा स्यात्, अन्यत्र मा भूथ् ।
होतृधनं ।
पितृधनं होतृगृहं ।
पितृगृहं । ।

---

1. <विभाषा स्वसृ-पत्योः># । । PS_६,३.२४ । ।

______Sठा~ठ्JKव्_६,३.२४ः

स्वसृ पति इत्येतयोः उत्तरपदयोः ऋकारान्तेभ्यः विद्यायोनिसम्बन्धवाचिभ्यः विभाषाऽलुग्भवति ।
मातुःष्वसा, मातुःस्वसा, मातृष्वसा ।
पितुःष्वसा, पितुःस्वसा, पितृष्वसा ।
यदा लुक्तदा मातृपितृभ्यां स्वसा (*८,३.८४) इति नित्यं षत्वं ।
यदा तु अलुक्तदा मातुः पितुर्भ्यं अन्यतरस्यां (*८,३.८५) इति विकल्पेन षत्वं ।
दुहितुःपतिः, दुहितृपतिः ।
ननान्दुःपितिः, ननान्दृपतिः । ।

---

1. <अनङृतो द्वन्द्वे># । । PS_६,३.२५ । ।

______Sठा~ठ्JKव्_६,३.२५ः

ऋकारान्तानां विद्यायोनिसम्भन्धवाचिनां यो द्वन्द्वस्तत्र+उत्तरपदे पूर्वपदस्य आनङादेशो भवति ।
होतापोतारौ ।
नेष्टोद्गातारौ ।
प्रशास्ताप्रतिहर्तारौ ।
योनिसम्बन्धेभ्यः - मातापितरौ ।
याताननान्दरौ ।
मकारोच्चारणं रपरत्वनिवृत्त्यर्थं ।
ऋतः इति किं ? पितृपितामहौ ।
पुत्रे इत्यत्र अनुवर्तते, ऋतः इति च ।
तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्य अनङादेशो भवति ।
पितापुत्रौ ।
मातापुत्रौ । ।

---

1. <देवताद्वन्द्वे च># । । PS_६,३.२६ । ।

______Sठा~ठ्JKव्_६,३.२६ः

देवतावाचिनां यो द्वन्द्वः तत्र+उत्तरपदे पूर्वपदस्य आनङादेशो भवति ।
इन्द्रावरुणौ ।
इन्द्रासोमौ ।
इन्द्राबृहस्पती ।
द्वन्द्वे इति वर्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसहाचर्यार्थं ।
अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वं इत्येतन्निपात्यते ।

तत्र ये लोके प्रसिद्धसाहचर्या वेदे च ये सहवापनिर्दिष्टास्तेषां इह ग्रहणं भवति ।
तेन ब्रहमप्रजापती, शिववैश्रवणौ इत्येवं आदौ न भवति ।
उभ्यत्र वायोः प्रतिषेधो वक्तव्यः ।
अग्निवायू ।
वाय्वग्नी । ।

---

1. <ईदग्नेः सोमवरुणयोः># । । PS_६,३.२७ । ।

______Sठाऱ्ठ्JKव्_६,३.२७ः

सोम वरुण इत्येतयोः देवताद्वन्द्वे अग्नेः ईकारादेशो भवति ।
अग्नीषोमौ ।
अग्नीवरुणौ ।
अग्नेः स्तुत्-स्तोम-सोमाः (*८,३.८२) इति षत्वं । ।

---

[#७०६]

1. <इद्वृद्धौ># । । PS_६,३.२८ । ।

______Sठाऱ्ठ्JKव्_६,३.२८ः

कृतवृद्धावुत्तरपदे देवताद्वन्द्वे अग्नेः इकारादेशो भवति ।
आग्निवारुणीमनड्वहीमालभेत ।
आग्निमारुतं कर्म क्रियते ।
अग्नीवरुणौ देवते अस्य, अग्नीअरुतौ देवते अस्य इति तद्धितः ।
तत्र देवताद्वन्द्वे च (*७,३.२१) इत्युभयपदवृद्धौ कृतायां आनङ्, ईत्वं च बाधितुं इकारः क्रियते ।
वृद्धौ इति किं ? आग्रेन्द्रः ।
नेन्द्रस्य परस्य (*७,३.२४) इत्युत्तरपदवृद्धिः प्रतिषिध्यते ।
इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः ।
आग्नावैष्णवं चरुं निर्वपेत् । ।

---

1. <देवो द्यावा># । । PS_६,३.२९ । ।

______Sठाऱ्ठ्JKव्_६,३.२९ः

दिविव्येतस्य द्यावा इत्ययं आदेशो भवति देवताद्वन्द्वे उत्तरपदे ।
द्यावाक्षामा ।
द्यावाभूमी । ।

---

1. <दिवसश्च पृथिव्याम्># । । PS_६,३.३० । ।

_______Sठाꣳ_ठJKव्_६,३.३०ः

पृथिव्यां उत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययं आदेशो भवति, चकाराद्द्यावा च ।
दिवस्पृथिव्यौ ।
द्यावापृथिव्यौ ।
अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थं ।
तेन रुत्वदीनि न भवन्ति ।
कथं द्यावा चिदस्मै पृथिवी नमेते इति ? कर्तव्योऽत्र यत्नः । ।

---

1. <उषासा-उषसः># । । PS_६,३.३१ । ।

_______Sठाꣳ_ठJKव्_६,३.३१ः

उषसः उषासा इत्ययं आदेशो भवति देवताद्वन्द्वे उत्तरपदे ।
उषासासूर्यं ।
उषासानक्ता । ।

---

1. <मातर-पितरावुदीचम्># । । PS_६,३.३२ । ।

_______Sठाꣳ_ठJKव्_६,३.३२ः

मातरपितरौ इत्युदीचामाचार्याणां मतेनारङादेशः मातृशब्दस्य निपत्यते मातरपितरौ ।
उदीचां इति किं ? मातापितरौ । ।

---

1. <पितरा-मातरा च च्छन्दसि># । । PS_६,३.३३ । ।

_______Sठाꣳ_ठJKव्_६,३.३३ः

पितरामातरा इति छन्दसि निपात्यते ।
आ मा गन्तां पितरामातरा च ।
पूर्वपदस्य अराङादेशो निपात्यते ।
उत्तरपदे तु सुपां सु-लुक्पूर्वसवर्ण-आ-आच्-छे-या-डा-ड्या-याज्-आलः (*७,१.३९) इति आकारादेशः ।
तत्र ऋतो ङि-सर्वनामस्थानयोः (*७,३.११०) इति गुणः ।

छन्दसि इति किं ? मातापितरौ । ।

---

[#७०७]

1. <स्त्रियाः पुंवद्-भाषीतपुंस्कादनूङ्समानाधिकरणे स्त्रियां अपूरणी-प्रियादिषु># । । PS_६,३.३४ । ।

_______Sठाञ्ठ्JKव्_६,३.३४ः

भाषितः पुमान्येन समानायामाकृतावेकस्मिन्प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः ।
तदेतदेवं कथं भवति ? भासितः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमिते स भाषितपुंस्कशब्देन+उच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भासितपुंस्कः ऊङोऽभावः अनूङ्, भाषितपुंस्कादनूङ्यस्मिन्स्त्रीशब्दे स भाषितपुंस्कादनूङ्स्त्रीशब्दः ।
बहुव्रीहिरयम्, अलुग्निपातनात्पञ्चम्याः ।
तस्य भासितपुंस्काअदनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते ।
दर्शनीयभार्यः ।
शलक्ष्णचूडः ।
दीर्घजङ्घः ।
स्त्रिया इति किं ? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः ।
भाषितपुंस्कातिति किं ? खट्वाभार्यः ।
समानायामाकृतौ इति किं ? द्रोणीभार्यः ।
कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्यः इति ? कर्तव्योऽत्र यत्नः ।
अनूङ इति किं ? ब्रह्मबन्धूभार्यः ।
समानाधिकरणे इति किं ? कल्याणा माता कल्यणीमाता ।
स्त्रियां इति किं ? कल्याणी प्रधानं एषा कल्याणीप्रधाना इमे ।
अपूरणी इति किं ? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः ।
कल्याणीदशमाः ।
प्रधानपूरणीग्रहणं कर्तव्यं ।
इह मा भूत्, कल्याणीपञ्चमीकः पक्षः इति ।
अप्पूरणीप्रमाण्योः (*५,४.११६) इत्यत्र अपि प्रधानपूरणीग्रहणं एव इत्यप्प्रत्ययो न भवति ।
अप्रियादिषु इति किं ? कल्याणीप्रियः ।
प्रिया ।
मनोज्ञा ।
कल्याणी ।
सुभगा ।
दुर्भगा ।
भक्ति ।
सचिवा ।
अम्बा ।
कान्ता ।
क्षान्ता ।
समा ।
चपला ।
दुहिता ।
वामा ।
प्रियादिः ।
दृढभक्तिः इत्येवं आदिषु स्त्रीपूर्वपदस्य अविवक्षित्वात्सिद्धं इति समाधेयं । ।

---

1. <तसिल्-आदिष्वा कृत्वसुचः># । । PS_६,३.३५ । ।

_______Sठाञ्ठ्JKव्_६,३.३५ः

पञ्चम्यास्तसिल्(*५,३.७) इत्यतः प्रभृति सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्(*५,४.१७) इति प्रागेतस्माद्ये प्रत्ययाः तेसु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति ।
तस्याः शालायाः ततः ।
तस्यां तत्र ।
यस्याः यतः ।
यस्यां यत्र ।
तसिलादिसु परिगणनं कर्तव्यं ।
त्रतसौ ।
तरप्तमपौ ।
चरट्जातीयरौ ।
कल्पबदेश्यदेशीयरः ।
रूपप्पाशपौ ।
थंथालौ ।
दार्हिलौ ।
तिल्तातिलौ ।
शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ।

[#७०८]

बह्वीभ्यो देहि ।
अल्पाभ्यो देहि ।
बहुशो देहि ।
अल्पशो देहि ।
त्वतलोर्गुणवचनस्य पुंवद्भवो वक्तव्यः ।
पट्व्याः भावः पटुत्वम्, पटुता ।
गुणवचनस्य इति किं ? कठ्याः भावः कठित्वं कठीता ।
भस्याढे तद्धिते पुंवद्भावो वक्तव्यः ।
हस्तिनीनां समूहो हास्तिकं ।
अढे इति किं ? श्यैनेयः ।
रौहिणेयः ।
कथं आग्नायी देवता अस्य आग्नेयः स्थालीपाकः इति ? कर्तव्योऽत्र यत्नः ।
ठक्छसोश्च पुंवद्भावो वक्तव्यः ।
भवत्याः छात्राः भावत्काः ।
भवदीयाः । ।

---

1. <क्यङ्-मानिनोश्च># । । PS_६,३.३६ । ।

_______Sठाञ्ठ्JKव्_६,३.३६ः

क्यङि परतो मानिनि च स्तिर्या भाषितपुंस्कादनूङ्पुंवत्भवति ।
एनी - एतायते ।
श्येनी-श्येतायते ।
मानिनि - दर्शनीयमानी अयमस्याः ।
दर्शनीयमानिनी इयमस्याः ।
मानिनो ग्रहणं अस्त्र्यर्थं असमानाधिकरणार्थं च ।
इह तु दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी इति पूर्वेण+एव सिद्धं । ।

---

1. <न कोपधायाः># । । PS_६,३.३७ । ।

_______Sठा-ठ्JKव्_६,३.३७ः

कोपधायाः स्त्रियाः पुंवद्भावो न भवति ।
पाचिकाभार्यः ।
कारिकाभार्यः ।
मद्रिकाभार्यः ।
वृजिकाभार्यः ।
मद्रिकाकल्पा ।
वृजिकाकल्पा ।
मद्रिकायते ।
वृजिकायते ।
मद्रिकामानिनी ।
वृजिकामानिनी ।
वेलिपिकायाः धर्म्यं वैलेपिकं ।
कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यं ।
इह मा भूत्, पाकभार्यः, भेकभार्यः इति । ।

---

1. <सञ्ज्ञा-पूरण्योश्च># । । PS_६,३.३८ । ।

_______Sठा-ठ्JKव्_६,३.३८ः

सञ्ज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति ।
दत्तभार्यः ।
गुप्ताभार्यः ।
दत्तापाशा ।
गुप्तापाशा ।
दत्तायते ।
गुप्तायते ।
दत्तामानिनी ।
गुप्तामानिनी ।
पुरण्याः - पञ्चमीभार्यः ।
दशमीभार्यः ।
पञ्चमीपाशा ।
दशमीपाशा ।
पञ्चमीयते ।
दशमीयते ।
पञ्चमीमानिनी ।
दशमीमानिनी । ।

---

[#७०९]

1. <वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे># । । PS_६,३.३९ । ।

______Sठा-ठ्JKव्_६,३.३९ः

न इति वर्तते ।
वृद्धेर्निमित्तं यस्मिन्स वृद्धिनिमित्तः तद्धितः, स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति ।
स्त्रौघ्नीभार्यः ।
माथुरीभार्यः ।
स्त्रौघनीपाशा ।
माथुरीपाशा ।
सौघनीयते ।
माथुरीयते ।
स्त्रौघ्नीमानिनी ।
माथुरीमानिनीइ ।
वृद्धिनिमित्तस्य इति किं ? मध्यमभार्यः ।
तद्धितस्य इति किं ? काण्डलावभार्यः ।
बहुव्रीहिपरिग्रहः कमर्थः ? तावद्भार्यः ।
यावद्भार्यः ।
अरक्तविकारे इति किं ? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायवृहतिकः ।
लोहस्य विकारो लौहीं लौही ईषा यस्य रथस्य स लौहेषः ।
खादिरेषः । ।

---

1. <स्वाङ्गाच्च+इतोऽमानिनि># । । PS_६,३.४० । ।

______Sठा-ठ्JKव्_६,३.४०ः

स्वाङ्गादुत्तरो य ईकारः तदन्तायाः स्त्रियाः न पुंवद्भवति अमानिनि परतः ।
दीर्घकेशीभार्यः ।
श्लक्ष्णकेशीभार्यः ।
दीर्घकेशीपाशा ।
श्लक्ष्णकेशीपाशा ।
दीर्घकेशीयते ।
श्लक्ष्णकेशीयते ।
स्वाङ्गातिति किं ? पटुभार्यः ।
ईतः इति किं ? अकेशभार्यः ।
अमानिनि इति किं ? दीर्घकेशमानिनी । ।

---

1. <जातेश्च># । । PS_६,३.४१ । ।

______Sठा-ठ्JKव्_६,३.४१ः

जातेश्च स्त्रियाः न पुंवद्भवति अमानिनि परतः ।
कठीभार्यः ।
बह्वृचिभार्यः ।
कठीपाशा ।
बह्वृचीपाशा ।
कठीयते ।
बह्वृचीयते ।
अमानिनि इत्येव, कठमानिनी ।
बह्वृचमानिनीइ ।
अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य न+इष्यते ।
हस्तिनीनां समूहो हास्तिकं । ।

---

1. <पुंवत्कर्मधारय-जातीय-देशीयेषु># । । PS_६,३.४२ । ।

______Sठा-ठ्JKव्_६,३.४२ः

कर्मधरये समासे जातीय देशीय इत्येतयोश्च प्रत्यययोः भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति ।
प्रतिषेधर्थोऽयं आरम्भः ।
न कोपधायाः (*६,३.३७) इत्युक्तम्, तत्र अपि भवति ।
पाचकवृन्दारिका ।
पाचकजातीया ।
पाचकदेशीया ।
सञ्ज्ञापूरण्योश्च (*६,३.३८) इत्युक्तम्, तत्र अपि भवति ।
दत्तवृन्दारिका ।
दत्तजातीया ।
दत्तदेशीया ।
पूरण्याः - पञ्चमवृन्दारिका ।
पञ्चमजातीया ।
पञ्चमदेशीया ।
वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकरे (*६,३.३९) इत्युक्तम्, तत्र अपि भवति ।
स्रौघ्नजातीया ।
स्रौघ्नदेशीया ।
स्वाङ्गाच्च+इतोऽमानिनि (*६,३.४०) इत्युक्तम्, तत्र अपि भवति ।
श्लक्ष्णमुखवृन्दारिका ।
श्लक्ष्णमुखजातीया ।
श्लक्ष्णमुखदेशीया ।
जातेश्च (*६,३.४१) इत्युक्तम्, तत्र अपि भवति ।
कठवृन्दारिका ।
कठजातीया ।
कठदेशीया ।
भाषितपुंस्क्कातित्येव, खट्वावृन्दारिका ।
अनूगित्येव, ब्रह्मबन्धूवृन्दारिका ।

[#७१०]

कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः ।
कुक्कुट्याः अण्डं कुक्कुटाण्डं ।
मृग्याः पदं मृगपदं ।
मृग्याः क्षीरं मृगक्षीरं ।
काक्याः शावः काकशावः ।

न वा अस्त्रीपूर्वपदस्य विवक्षितत्वाथ् ।
स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जतिः सामान्येन विवक्षितः ।
पुंवद्भावात्ह्रस्वत्वं खिद्घादिषु भवति विप्रतिषेधेन ।
खित्- कालिम्मन्या ।
हरिणिम्मन्या ।
घादि - पट्वितरा ।
पट्वितमा ।
पट्विरूपा ।
पट्विकल्पा ।
क - पट्विका ।
मृद्विका ।
इह इडबिड्, दरद्, पृथु, उशिजित्येते जनपदशब्दाः क्षत्रियवाचिनः, तत्र तद्राजप्रत्ययस्य स्त्रियमतश्च इति लुकि कृते इडबिड्वृन्दारिका इति विगृह्य समासः क्रियते ।
ततः पुंवद्भवेन ऐडबिडादयः पुंशब्दाः क्रियन्ते ।
ऐडबिडवृन्दारिका ।
औशिजवृन्दारिका । ।

---

1. <घरूपकल्पचेलड्ब्रूवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः># । । PS_६,३.४३ । ।

______Sठाञ्ठJKव्_६,३.४३ः

घ रूप कोप चेलट्ब्रूव गोत्र मत हत इत्येतेषू परतो भाषितपुंस्कत्परो यो ङीप्रत्ययस्तदन्तस्य अनेकाचो ह्रस्वो भवति ।
घ - ब्राह्मणितरा ।
ब्राह्मणितमा ।
रूप - ब्राह्मन्णिरूपा ।
कल्प - ब्राह्मणिकल्पा ।
चेलट्- ब्राह्मणिचेली ।
ब्रुव - ब्राह्मणिब्रुवा ।
गोत्र - ब्राह्मणिगोत्रा ।
मत - ब्राह्मणिमता ।
हत - ब्राह्मणिहता ।
घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि ।
ब्रौव इति ब्रवीति इति ब्रुवः पचाद्युअचि, वच्यादेशो गुणश्च निपातनान्न भवति ।
ङ्यः इति किं ? दत्तातरा ।
गुप्तातरा ।
अनेकचः इति किं ? नद्याः शेषस्य अन्यतरस्यां (*६,३.४४) इति वक्ष्यति ।
भाषितपुंस्कादित्येव, आमलकीतरा ।
कुवलीतरा । ।

---

1. <नद्याः शेषस्य अन्यतरस्याम्># । । PS_६,३.४४ । ।

______Sठाञ्ठJKव्_६,३.४४ः
नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्यां ।
कश्च शेषः ? अङी च या नदी ङ्यन्तं च यदेकछ् ।
ब्रह्मबन्धूतरा, ब्रह्मबन्धुतरा ।
वीरबन्धूतरा ।

वीरबन्धुतरा।
स्त्रितरा, स्त्रीतरा।
स्त्रितमा, स्त्रीतमा।
कृन्नद्याः प्रतिषेधो वक्तव्यः।
लक्ष्मीतरा।
तन्त्रीतरा॥

---

1. <उग्-इतश्च># ॥ PS_६,३.४५ ॥

______Sठा०ठ्JKव्_६,३.४५ः

उग्-इतश्च परस्याः नद्याः घादिषु अन्यतरस्यां ह्रस्वो भवति।
श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा।
विदुषितरा, विदुषीतरा, विद्वत्तरा।
पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः।
प्रकर्षयोगात्प्राक्स्त्रीत्वस्या विवक्षितत्वाद्वा सिद्धं॥

---

[#७११]

1. <आन्महतः समानाधिकरनजातीययोः># ॥ PS_६,३.४६ ॥

______Sठा०ठ्JKव्_६,३.४६ः

समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतो महतः आकारादेशो भवति।
महादेवः।
महाब्राह्मणः।
महाबाहुः।
महाबलः।
जातीये - महाजातीयः।
समानाधिकरणजातीययोः इति किं? महतः पुत्रः महत्पुत्रः।
लक्षणोक्तत्वादेव अत्र न भविष्यति इति चेद्बहुव्रीहावपि न स्यान्महाबाहुः इति।
तदर्थं समानाधिकरणग्रहणं वक्तव्यं।
अमहान्महान्सम्पन्नो महद्भूतश्चन्द्रमाः इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्वं।
महदात्वे घासकरविशिष्टेषु उपसङ्ख्यानं पुंवद्वचनं च असमानाधिकरणार्थं।
महत्याः घासः महाघासः।
महत्याः करः महाकरः।
महत्याः विशिष्टः महाविशिष्टः।
अष्टनः कपाले हविष्युपसङ्ख्यानं।
अष्टकपालं चरुं निर्वपेथ्।
हविषि इति किं? अष्टकपालं ब्राह्मणस्य।
गवि च युक्तेऽष्टन उपसङ्ख्यानं कर्तव्यं।
अष्टागवेन शकटेन।
युक्ते इति किं? अष्टगवं ब्राह्मणस्य तपरकरणं विस्पष्टार्थं॥

---

1. <द्व्यष्टनः सङ्ख्यायां अबहुव्रीह्य्-अशीत्योः># । । PS_६,३.४७ । ।

______Sठा~ठ्JKव्_६,३.४७ः

द्वि अष्टनित्येतयोः आकारादेशो भवति सङ्ख्यायां उत्तरपदे अबहुव्रीह्यशीत्योः ।
द्वादश ।
द्वाविंशतिः ।
द्वात्रिंशथ् ।
अष्टादश ।
अष्टाविंशतिः ।
अष्टात्रिंशथ् ।
द्व्यष्टनः इति किं ? पञ्चदश ।
सङ्ख्यायां इति किं ? द्वैमातुरः ।
आष्टमातुरः ।
अबहुव्रीह्यशित्योः इति किं ? द्वित्राः ।
त्रिदशाः ।
द्व्यशीतिः ।
प्राक्शतादिति वक्तव्यं ।
इह मा भूत्, द्विशतं ।
द्विसहस्रं ।
अश्टशतं ।
अष्टसहस्रं । ।

---

1. <त्रेस्त्रयः># । । PS_६,३.४८ । ।

______Sठा~ठ्JKव्_६,३.४८ः

त्रि इत्येतस्य त्रयसित्ययं आदेशो भवति सङ्ख्यायां अबहुव्रीह्यशीत्योः ।
त्रयोदश ।
त्रयोविंशतिः ।
त्रयस्त्रिंशत ।
सङ्ख्यायां इत्येव, त्रैमातुरः ।
अबहुव्रीह्यशीत्योः इत्येव, त्रिदशाः ।
त्र्यशीतिः ।
प्राक्शतातित्येव, त्रिशतं ।
त्रिसहस्रं । ।

---

[#७१२]

1. <विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्># । । PS_६,३.४९ । ।

_______Sठान्ठ्JKव्_६,३.४९ः

चत्वारिंशत्प्रभृतौ संख्यायां उत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां द्वि अष्टन्ित्र इत्येतेषां यदुक्तं तद्विभाष भवति ।
द्विचत्वारिंशत्, द्वाचत्वारिंशथ् ।
त्रिपञ्चाशत्, त्रयःपञ्चाशथ् ।
अष्टपञ्चाशत्, अष्टापञ्चाशथ् ।
प्राक्शतातित्येव, द्विशतं ।
अष्टशतं ।
त्रिशतं । ।

---

1. <हृदयस्य हृल्लेख-यद्-अण्-लासेषु># । । PS_६,३.५० । ।

_______Sठान्ठ्JKव्_६,३.५०ः

हृदयस्य हृतित्ययं आदेशो भवति लेख यतण्लास इत्येतेषु परतः ।
हृदयं लिखति इति हृल्लेखः ।
यत्- हृदयस्य प्रियं हृद्यं ।
अण्- हृदयस्य इदं हार्दं ।
लास - हृदयस्य लासः हृल्लासः ।
लेख इति अणन्तस्य ग्रहणं इष्यते ।
घञि तु हृदयस्य लेखो हृदयलेखः ।
एतदेव लेखग्रहणं ज्ञापकम्, उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणस्य । ।

---

1. <वा शोक-ष्यञ्-रोगेषु># । । PS_६,३.५१ । ।

_______Sठान्ठ्JKव्_६,३.५१ः

शोक स्यञ्रोग इत्येतेषु परतः हृदयस्य वा हृदादेशो भवति ।
हृच्छोकः, हृदयशोकः ।
ष्यञ्- सौहार्द्यम्, सौहृदयं ।
ब्राह्मणादित्वात्ष्यञ् ।
हृदादेशपक्षे हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (*७,३.१९) इत्युभयपदवृद्धिः ।
रोगे - हृद्रोगः, हृदयरोगः ।
हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरं अस्ति, तेन+एव सिद्धे विकल्पविधानं प्रपञ्चार्थं । ।

---

1. <पादस्य पद-आज्य्-आति-ग-उपहतेसु># । । PS_६,३.५२ । ।

______Sठा~ठ्JKव्_६,३.५२ः

पादस्य पद इत्ययं आदेशो भवति आजि आति ग उपहत इत्येतेषु उत्तरपदेषु ।
पादाभ्यं अजति इति पदाजिः ।
पादाभ्यां अतति इति पदातिः ।
अज्यतिभ्यां, पादे च इत्यौणादिकः इण्प्रत्ययः ।
तत्र अजेर्वीभवो न भवति अत एव निपातनाथ् ।
पादाभ्यां गच्छति इति पदगः ।
पादेन+उपहतः पदोपहतः ।
पादशब्दो वृषादित्वादाद्युदात्तः, तस्य स्थाने पदादेशः उपदेशे एव अन्तोदात्तो निपात्यते, तेन पदोपहतः इति तृतीया कर्मणि (*६,२.४८) इति पूर्वपदप्रकृतिस्वरत्वेन अन्तोदात्तत्वं भवति ।
पदाजिः, पदातिः, पदग इत्येतेषु कृत्स्वरेण समासस्य+एव अन्तोदात्तत्वं । ।

---

1. <पद्यत्यतदर्थे># । । PS_६,३.५३ । ।

______Sठा~ठ्JKव्_६,३.५३ः

यत्प्रत्यये परतः पादस्य पदित्ययं आदेशो भवत्यतदर्थे ।
पादौ विध्यन्ति पद्याः शर्कराः ।
पद्याः कण्टकाः ।
अतदर्थे इति किं ? पादार्थं उदकं पाद्यं ।
पद्भाव इके चरतावुपसङ्ख्यानं ।
पादभ्यां चरति पदिकः ।
पर्पादिभ्यः ष्ठन्(*४,४.१०) इति पादशब्दात्ष्ठन्प्रत्ययः ।
शरीरावयववचनस्य पादशब्दस्य ग्रहणं इह इष्यत्, तेन पणपादमाषशतद्यत्(*५,१.३४) इत्यत्र पदादेशो न भवति ।
द्विपाद्यं ।
त्रिपाद्यं । ।

---

[#७१३]

1. <हिम-काषि-हतिसु च># । । PS_६,३.५४ । ।

______Sठा~ठ्JKव्_६,३.५४ः

हिम काषिन्हति इत्येतेषु पादशब्दस्य पदित्ययं आदेशो भवति ।
हिम - पद्धिमं ।
काषिन् - अथ पत्काषिणो यन्ति ।
हति - पद्धतिः । ।

---

1. <ऋचः शे># । । PS_६,३.५५ । ।

_______Sठा־ठ्JKव्_६,३.५५ः

ऋक्षम्बन्धिनः पादशब्दस्य शे परतः पदित्ययं आदेशो भवति ।
पच्छो गायत्रीं शंसति ।
पादं पादं शंसति इति सङ्ख्यैकवचनाच्च वीप्सायां (*५,४.४३) इति शस्प्रत्ययः ।
ऋचः इति किं ? पादशः कार्षापणं ददाति इति । ।

---

1. <वा घोषमिश्रशब्देषु># । । PS_६,३.५६ । ।

_______Sठा־ठ्JKव्_६,३.५६ः

घोष मिश्र शब्द इत्येतेषु च+उत्तरपदेषु पादस्य वा पदित्ययं आदेशो भवति ।
पद्घोषः, पादघोषः ।
पन्मिश्रः, पादमिश्रः ।
पच्छब्दः, पादशब्दः ।
निष्के च+इति वक्तव्यं ।
पन्निष्कः, पादनिष्कः । ।

---

1. <उदकस्य+उदः सञ्ज्ञायाम्># । । PS_६,३.५७ । ।

_______Sठा־ठ्JKव्_६,३.५७ः

उदकशब्दस्य सञ्ज्ञायां विषये उद इत्ययं आदेशो भवति उत्तरपदे परतः ।
उदमेघो नाम यस्य औदमेधिः पुत्रः ।
उदवाहो नाम यस्य औदवहिः पुत्रः ।
सञ्ज्ञायां इति किं ? उदकगिरिः ।
सञ्जायां उत्तरपदस्य्९अ उ)दकशब्दस्य+उदादेशो भवति इति वक्तव्यं ।
लोहितोदः ।
नीलोदः ।
क्षीरोदः । ।

---

1. <पेषम्-वास-वाहन-धिषु च># । । PS_६,३.५८ । ।

_______Sठा־ठ्JKव्_६,३.५८ः

पेषं वास वाहन धि इत्येतेषु च+उत्तरपदेसु उदकस्य उद इत्ययं आदेशो भवति ।
उदपेषं पिनष्टि ।
स्नेहने पिषः (*३,४.३८) इति णमुल् ।
वास - उदकस्य वासः उदवासः ।

वाहन - उदकस्य वाहनः उदवाहनः ।
उदकं धीयतेऽस्मिनिति उदधिः । ।

---

1. <एकहल्-आदौ पूरयितव्येऽन्यतरस्याम्># । । PS_६,३.५९ । ।

_______Sठाऱ्ठ्JKव्_६,३.५९ः

उदकस्योद इति वर्तते ।
एकः, असहायः तुल्यजातीयेन अनन्तरेण हलादिना, हलादिर्यस्य+उत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यां उदकस्य उद इत्ययं आदेशो भवति ।
उदकुम्भः, उदककुम्भः ।
उदपात्रम्, उदकपात्रं ।
एकहलादौ इति किं ? उदकस्थालं ।
पूरयितव्ये इति किं ? उदकपर्वतः । ।

---

[#७१४]

1. <मन्थ-ओदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च># । । PS_६,३.६० । ।

_______Sठाऱ्ठ्JKव्_६,३.६०ः

मन्थ ओदन सक्तु बिन्दु वज्र भार हार वीवध गाह इत्येतेषु उत्तरपदेसु उदकस्य उद इत्ययं आदेशो भवति अन्यतरस्यां ।
उदकेन मन्थः उदमन्थः, उदकमन्थः ।
ओदन - उदकेन ओदनः उदौदनः, उदकौदनः ।
सक्तु - उदकेन सक्तुः उदसक्तुः, उदकसक्तुः ।
बिन्दु - उदकस्य बिन्दुः उदबिन्दुः, उदकबिन्दुः ।
वज्र - उदकस्य वज्रः उदवज्रः, उदकवज्रः ।
भार - उदकं विभर्ति इति उदभारः, उदकभारः ।
हार - उदकं हरति इति उदहारः, उदकहारः ।
वीवध - उदकस्य वीवधः उदवीवधः, उदकवीवधः ।
गाह - उदकं गाहते इति उदगाहः, उदकगाहः । ।

---

1. <इको ह्रस्वोऽङ्यो गालवस्य># । । PS_६,३.६१ । ।

_______Sठाऱ्ठ्JKव्_६,३.६१ः

इगन्तस्य अङ्यन्तस्य उत्तरपदे ह्रस्वः भवति गालवस्य आचर्यस्य मतेन अन्यतरस्यां ।
ग्रामणिपुत्रः ग्रामणीपुत्रः ।
ब्रह्मबन्धुपुत्रः, ब्रह्यबन्धूपुत्रः ।

इकः इति किं ? खट्वापादः ।
मालापादः ।
अङ्यः इति किं ? गार्गीपुत्रः ।
वात्सीपुत्रः ।
गालवग्रहणं पुजार्थं ।
अन्यतरस्यां इति हि वर्तते ।
व्य्वस्थितविभषा च+इयं ।
तेन+इह न भवति, कारीषगन्धीपुत्रः इति ।
इयङुवङ्भाविनां अव्ययानां च न भवति ।
श्रीकुलं ।
भ्रूकुलं ।
काण्दीभूतं ।
वृषलीभूतं ।
भ्रूकुंसादीनां तु भवत्येव ।
भ्रुकुंसः ।
भ्रुकुटिः ।
अपर आह ।
भ्रुकुंसादीनां अकारो भवति इति वक्तव्यं ।
भ्रकुंसः ।
भ्रकुटिः । ।

---

1. <एक तद्धिते च># । । PS_६,३.६२ । ।

_______Sठाञ्ठ्JKव्_६,३.६२ः

एकशब्दस्य तद्धिते उत्तरपदे ह्रस्वो भवति ।
एकस्या आगतं एकरूप्यं ।
एकमयं ।
एकस्य भावः एकत्वं ।
एकता ।
उत्तरपदे - एकस्याः क्षीरं एकक्षीरं ।
एकदुग्धं ।
लिङ्गविशिष्टस्य ग्रहणं एकशब्दह्रस्वत्वं प्रयोजयति ।
अचा हि गृह्यमाणं अत्र विशेष्यते, न पुनरच्गृह्यमाणेन इति । ।

---

1. <ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्># । । PS_६,३.६३ । ।

_______Sठाञ्ठ्JKव्_६,३.६३ः

ङ्यन्तस्य अबन्तस्य च सञ्ज्ञाछन्दसोः बहुलं ह्रस्वो भवति ।
ङ्यन्तस्य सञ्ज्ञायां - रेवतिपुत्रः ।
रोहिणिपुत्रः ।
भरणिपुत्रः ।
न च भवति ।
नान्दीकरः ।

नान्दीघोषः ।
नान्दीविशालः ।
ग्यन्तस्य छन्दसि - कुमारिदा प्रफर्विदा ।
न च भवति ।
फल्गुनीपौर्णमासी ।
जगतीछदः ।
आबन्तस्य सञ्ज्ञायां - शिलवहं ।
शिलप्रस्थं ।
न च भवति ।
लोमकागृहं ।
लोमकाषण्डं ।
आबन्तस्य छन्दसि - अजक्षीरेण जुहोति ।
ऊर्णम्रदाः पृथिवी दक्षिणावत ।
न च भवति ।
ऊर्णासूत्रेण कवयो वयन्ति । ।

---

[#७१५]

1. <त्वे च># । । PS_६,३.६४ । ।

_______Sठा-ठ्JKव्_६,३.६४ः

त्वप्रत्यये परतो ङ्यापोः बहुलं ह्रस्वो भवति ।
तदजाया भावः अजत्वम्, अजात्वं ।
तद्रोहिण्या भावः रोहिणित्वम्, रोहिणीत्वं ।
सञ्ज्ञायां असम्भवाच्छन्दस्येव+उदाहरणानि भवन्ति । ।

---

1. <इष्टका-इषीका-मालानां चिततूलभारिषु># । । PS_६,३.६५ । ।

_______Sठा-ठ्JKव्_६,३.६५ः

इष्टकेषीकामालानां चित तूल भारिनित्येतेषु उत्तरपदेषु यथासङ्ख्यं ह्रस्वो भवति ।
इष्टकचितं ।
इषीकतूलं ।
मालभारिणी कन्या ।
इष्तकादिभ्यस्तदन्तस्य अपि ग्रहणं भवति ।
पक्वेष्टकचितं ।
मुञ्जेषीकतूलं ।
उत्पलमालभारिणी कन्या । ।

---

1. <खित्यनव्ययस्य># । । PS_६,३.६६ । ।

______Sठाञ्ठ्JKव्_६,३.६६ः

खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वो भवति ।
कालिंमन्या ।
हरिणिम्मन्या ।
मुमा ह्रस्वो न बाध्यते, अन्यथा हि ह्रस्वशासनं अनर्थकं स्याथ् ।
अनव्ययस्य इति किं ? दोषामन्यमहः ।
दिवामन्या रात्रिः ।
अनव्ययस्य इत्येतदेव ज्ञापकं इह खिदन्तग्रहणस्य । ।

---

1. <अरुर्-द्विषद्-अजन्तस्य मुम्># । । PS_६,३.६७ । ।

______Sठाञ्ठ्JKव्_६,३.६७ः

अरुस्द्विषतित्येतयोरजनतानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य ।
अरुन्तुदः ।
द्विषन्तपः ।
अजन्तानां - कालिम्मन्या ।
अरुर्द्विषदजन्तस्य इति किं ? विद्वन्मन्यः ।
अनव्ययस्य इत्येव, दोषामन्यमहः ।
दिवामन्या रात्रिः ।
अन्तग्रहणं किं ? कृताजन्तकार्यप्रतिपत्त्यर्थं ।
अतो ह्रस्वे कृते मुं भवति । ।

---

1. <इच एकाचोऽम्प्रत्ययवच्च># । । PS_६,३.६८ । ।

______Sठाञ्ठ्JKव्_६,३.६८ः

इजन्तस्य एकाचः खिदन्ते उत्तरपदे अमागमो भवति, अम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति ।
अं इति हि द्विरावर्तते ।
गाम्मन्यः ।
स्त्रीम्मन्यः, स्त्रियम्मन्यः ।
श्रियम्मन्यः ।
भ्रुवम्मन्यः ।
अम्प्रत्ययवच्च इत्यतिदेशातात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति ।
इचः इति किं ? त्वङमन्यः ।
एकाचः इति किं ? लेखाभ्रुम्मन्याः ।
अथेह कथं भवितव्यम्, श्रियं आत्मानं ब्राह्मणकुलं मन्यते इत्युपक्रम्य श्रिमन्यं इति भवितव्यं इति भाष्ये व्यवस्थितं ? तत्र+इदं भाष्यकारस्य दर्शनम्, अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा प्रष्ठादयः स्त्रियां ।
तत्र स्वमोर्नपुंसकात्(*७,१.२३) इत्यमो लुग्भवति । ।

---

1. <वाचंयम-पुरन्दरौ च># । । PS_६,३.६९ । ।

_______Sठाञ्ठ्JKव्_६,३.६९ः

वाचंयम पुरन्दर इत्येतौ निपात्येते ।
वाचंयम आस्ते ।
पुरं दारयति इति पुरन्दरः । ।

---

[#७१६]

1. <कारे सत्य-अगदस्य># । । PS_६,३.७० । ।

_______Sठाञ्ठ्JKव्_६,३.७०ः

कारशब्द उत्तरपदे सत्य अगद इत्येतयोर्मुमागमो भवति ।
सत्यं करोति, सत्यस्य व कारः सत्यङ्कारः ।
एवं - अगदङ्कारः ।
अस्तुसत्यागादस्य कार इति वक्तव्यं ।
अस्तुङ्कारः ।
भक्षस्य छन्दसि कारे मुं वक्तव्यः ।
भक्षं करोति, भक्षस्य वा करः भक्षङ्कारः ।
छन्दसि इति किं ? भक्षकारः ।
धेनोर्भव्यायां मुं वक्तव्यः ।
धेनुम्भव्या ।
लोकस्य पृणे मुं वक्तव्यः ।
लोकम्पृणः ।
इत्येऽनभ्याशस्य मुं वक्तव्यः ।
अनभ्याशमित्यः ।
भ्राष्ट्राग्न्योरिन्धे मुं वक्तव्यः ।
भृआष्ट्रमिन्धः ।
अग्निमिन्धः ।
गिलेऽगिलस्य मुं वक्तव्यः ।
तिमिङ्गिलः ।
अगिलस्य इति किं ? गिलगिलः ।
गिलगिले चेति वक्तव्यं ।
तिमिङ्गिलगिलः ।
उष्णभद्रयोः करणे मुं वक्तव्यः ।
उष्णङ्करणं ।
भद्रङ्करणं ।
सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः ।
सूतपुत्री, सूतदुहिता ।
उग्रपुत्री, उग्रदुहिता ।
राजपुत्री, राजदुहिता ।
भोजपुत्री, भोजदुहिता ।
मेरुपुत्री, मेरुदुहिता ।
केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तेषां पुत्री इति भवति ।

अन्यत्र अपि हि दृश्यते शैलपुत्री इति । ।

---

[#७१७]

1. <श्येन-तिलस्य पाते ञे># । । PS_६,३.७१ । ।

______Sठाञ्ठ्JKव्_६,३.७१ः

श्येन तिल इत्येतयोः पातशब्दे उत्तरपदे ञप्रत्यये परे मुमागमो भवति ।
श्येनपातोऽस्यां क्रीडायां श्यैनम्पाता ।
तैलम्पाता ।
ञे इति किं ? श्येनपातः । ।

---

1. <रात्रेः कृति विभाषा># । । PS_६,३.७२ । ।

______Sठाञ्ठ्JKव्_६,३.७२ः

रात्रेः कृदन्त उत्तरपदे विभाषा मुमागमो भवति ।
रात्रिञ्चरः, रात्रिचरः ।
रात्रिमटः, रात्र्यटः ।
अप्राप्तविभाषा इयं ।
खिति हि नित्यं मुं भवति ।
रत्रिम्मन्यः । ।

---

1. <नलोपो नञः># । । PS_६,३.७३ । ।

______Sठाञ्ठ्JKव्_६,३.७३ः

नञो नकारस्य लोपो भवति उत्तरपदे ।
अब्राह्मणः ।
अवृषलः ।
असुरापः ।
असोमपः ।
नञो नलोपेऽवक्षेपे तिङ्युपसङ्ख्यानं कर्तव्यं ।
अपचसि त्वं जाल्म ।
अकरोषि त्वं जाल्म । ।

---

1. <तस्मान्नुडचि># । । PS_६,३.७४ । ।

_______Sठाञ्ठ्JKव्_६,३.७४ः

तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादवुत्तरपदे ।
अनजः ।
अनश्वः ।
तस्मातिति किं ? नञ एव हि स्याथ् ।
पूर्वान्ते हि ङमो ह्रस्वादचि ङ्मुण्नित्यं (*८,३.३२) इति प्राप्नोति । ।

---

1. <नभ्राण्-नपान्-नवेदा-नासत्या-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाकेषु प्रकृत्या># । । PS_६,३.७५ । ।

_______Sठाञ्ठ्JKव्_६,३.७५ः

नभ्राट्नपात्नवेदाः नासत्याः नमुचि नकुल नख नपुंसक नक्षत्र नक्र नाक इत्येतेषु नञ्प्रकृत्या भवति ।
न भ्राजते इति नभ्राठ् ।
भ्राजतेः क्विबन्तस्य नञ्समासः ।
नपाति इति नपाथ् ।
पातिः शत्रन्तः ।
नवेत्ति इति नवेदाः ।
वित्तिरसुन्प्रत्ययान्तः ।
नासत्याः - सत्सु साधवः सत्याः, न सत्याः असत्याः, न असत्याः नासत्याः ।
न मुञ्चति इति नमुचिः ।
मुचेरौणादिकः किप्रत्ययः ।
न अस्य कुलं अस्ति नकुलः ।
नख - न अस्य खं अस्ति इति नखं ।
नपुंसक - न स्त्री न पुमान्नपुंसकं ।
स्त्रीपुंसयोः पुंसकभावो निपात्यते ।
नक्षत्र - न क्षरते क्षीयते इति वा नज्ञात्रं ।
क्षियः क्षरतेर्वा क्षत्रं इति निपात्यते ।
नक्र - न क्रामति इति नक्रः ।
क्रमेर्डप्रत्ययो निपातनाथ् ।
नाक - न अस्मिनकमस्ति नाकं । ।

---

[#७१८]

1. <एकादिश्च+एकस्य च आदुक्># । । PS_६,३.७६ । ।

_______Sठाञ्ठ्JKव्_६,३.७६ः

एकादिश्च नञ्प्रकृत्या भवति, एकशब्दस्य च आदुकागमो भवति ।

एकेन न विंशतिः कान्नविंशतिः ।
एकान्नत्रिंशथ् ।
तृतीया इति योगविभागात्समासः ।
पूर्वान्तोऽयं आदुक्क्रियते पदान्तलक्षणोऽत्र अनुनासिको विकल्पेन यथा स्यातिति । ।

---

1. <नगोऽप्राणिष्वन्यतरस्याम्># । । PS_६,३.७७ । ।

_______Sठाञ्ठ्JKव्_६,३.७७ः

नञ्प्रकृत्या भवति अन्यतरस्यां ।
नगा वृक्षाः, अगा वृक्षाः ।
नगाः पर्वताः, अगाः पर्वताः ।
न गच्छन्ति इति नगाः ।
गमेर्डप्रत्ययः ।
अप्राणिषु इति किं ? अगो वृषलः शीतेन । ।

---

1. <सहस्य सः सञ्ज्ञायाम्># । । PS_६,३.७८ । ।

_______Sठाञ्ठ्JKव्_६,३.७८ः

सहशब्दस्य स इत्ययं आदेशो भवति सञ्ज्ञायां विषये ।
साश्वत्थं ।
सपलाशं ।
सशिंशपं ।
सञ्ज्ञायां इति किं ? सहयुध्वा ।
सहकृत्वा ।
सादेश उदात्तो निपात्यते ।
उदात्तानुदात्तवतो हि सहशब्दस्य अन्तर्यतः स्वरितः स्याथ् ।
सनिपातनस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र उपयुज्यते ।
अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव, सेष्टि, सपशुबन्धं इति । ।

---

1. <ग्रन्थान्त-अधिके च># । । PS_६,३.७९ । ।

_______Sठाञ्ठ्JKव्_६,३.७९ः

ग्रन्थान्ते अधिके च वर्तमानस्य सहशब्दस्य स इत्ययं आदेशो भवति ।
सकलं ज्यौतिषमधीते ।
समुहूर्तं ।
ससङ्ग्रहं व्याकरणं अधीयते ।
कलान्तं, महूर्तान्तं, सङ्ग्रहान्तं इति अन्तवचने इत्यव्ययीभावः समासः ।

तत्र अव्ययीभावे चाकाले इति कालवाचिन्युत्तरपदे समासो न प्राप्नोति इत्ययं आरम्भः ।
अधिके - सद्रोणा खारी ।
समाषः कार्षापणः ।
सकाकिणीको माषः । ।

---

1. <द्वितीये च अनुपाख्ये># । । PS_६,३.८० । ।

_______Sठा्ठ्JKव्_६,३.८०ः

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः ।
उपाख्यायते प्रत्यक्षत उपलभ्यते यः स उपाख्यः ।
उपाख्यादन्यः अनुपाख्यः अनुमेयः ।
तस्मिन्द्वितीयेऽनुपाख्ये सहस्य स इत्ययं आदेशो भवति ।
साग्निः कपोतः ।
सपिशाचा वात्या ।
सराक्षसीका शाला ।
अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानाः अनुपाख्या भवन्ति । ।

---

1. <अव्ययीभावे चाकाले># । । PS_६,३.८१ । ।

_______Sठा्ठ्JKव्_६,३.८१ः

अव्ययीभावे च समासे अकालवाचिनि उत्तरपदे सहस्य स इत्ययं आदेशो भवति ।
सचक्रं धेहि ।
सधुरं प्राज ।
अकाले इति किं ? सहपूर्वाह्णं । ।

---

[#७१९]

1. <वा+उपसर्जनस्य># । । PS_६,३.८२ । ।

_______Sठा्ठ्JKव्_६,३.८२ः

उपसर्जनसर्वावयवः समासः उपसर्जनं ।
यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते ।
तदवयवस्य सहशब्दस्य वा स इत्ययं आदेशो भवति ।
सपुत्रः, सहपुत्रः ।
सच्छात्रः, सहच्छात्रः ।
उपसर्जनस्य इति किं ? सहयुध्वा ।

सहकृत्वा ।
सहकृत्वप्रियः, प्रियसहकृत्वा इति इह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवति इति सभावो न भवति । ।

---

1. <प्रकृत्या आशिष्यगो-वत्स-हलेषु># । । PS_६,३.८३ । ।

_______Sठा~ठ्JKव्_६,३.८३ः

प्रकृत्या सहशब्दो भवति आशिषि विषये अगोवत्सहलेषु ।
स्वस्ति देवत्ताय सहपुत्राय सहच्छात्राय सहामात्याय ।
अगोवत्सहलेषु इति किं ? स्वस्ति भवते सहगवे, सगवे ।
सहवत्साय, सवत्साय ।
सहहलाय, सहलाय ।
वोपसर्जनस्य (*६,३.८२) इति पक्षे भवत्येव सहबावः । ।

---

1. <समानस्य छन्दस्यपूर्ध-प्रभृत्य्-उदर्केषु># । । PS_६,३.८४ । ।

_______Sठा~ठ्JKव्_६,३.८४ः

स इति वर्तते ।
समानस्य स इत्ययं आदेशो भवति छन्दसि विषये मूर्धन्प्रभृति उदकं इत्येतानि उत्तरपदानि वर्जयित्वा ।
अनुभ्राता सगर्भ्यः ।
अनुसखा सयूथ्यः ।
यो नः सनुत्यः ।
समानो गर्भः सगर्भः, तत्र भवः सगर्थ्यः ।
सगर्भसयूथसनुताद्यत्(*४,४.११४) इति यत्प्रत्ययः ।
अमूर्धप्रभृत्युदर्केषु इति किं ? समानमूर्धा ।
समानप्रभृतयः ।
समानोदर्काः ।
समानस्य इति योगविभाग इष्टप्रसिद्ध्यर्थः क्रियते ।
तेन सपक्षः, साधर्म्यम्, सजातीयः इत्येवं आदयः सिद्धाः भवन्ति । ।

---

1. <ज्योतिर्-जनपद-रात्रि-नाभि-नाम-गोत्र-रूप-स्थान-वर्ण-वर्यो-वचन-बन्धुषु># । । PS_६,३.८५ । ।

_______Sठा~ठ्JKव्_६,३.८५ः

ज्योतिस्जनपद रात्रि नाभि नामन्गोत्र रूप स्थान वर्ण वयस्वचन बन्धु इत्येतेषु उत्तरपदेषु समानस्य स इत्ययं आदेशो भवति ।
सज्योतिः ।
सजनपदः ।
सरात्रिः ।

सनाभिः ।
सनामा ।
सगोत्रः ।
सरूपः ।
सस्थानः सवर्णः ।
सवयाः ।
सवचनः ।
सबन्धुः । ।

---

1. <चरणे ब्रह्मचारिणि># । । PS_६,३.८६ । ।

______Sठाञ्ठ्JKव्_६,३.८६ः

चरणे गम्यमाने ब्रह्मचारिणि उत्तरपदे समानस्य स इत्ययं आदेशो भवति ।
समानो ब्रह्मचारी सब्रह्मचारी ।
ब्रह्म वेदः, तदध्ययनार्थं यद्व्रतं तदपि ब्रह्म, तच्चरति इति ब्रह्मचारी ।
समानः तस्य+एव ब्रह्मणेः समानत्वदित्ययं अर्थो भवति ।
समाने ब्रह्मणि व्रतचरी सब्रह्मचरी इति । ।

---

1. <तीर्थे ये># । । PS_६,३.८७ । ।

______Sठाञ्ठ्JKव्_६,३.८७ः

तीर्थशब्द उत्तरपदे यत्प्रत्यये परतः समानस्य स इत्ययं आदेशो भवति ।
सतीर्थ्यः ।
समानतीर्थे वासी (*४,४.१०७) इति यत्प्रत्ययः । ।

---

[#७२०]

1. <विभाषा+उदरे># । । PS_६,३.८८ । ।

______Sठाञ्ठ्JKव्_६,३.८८ः

उदरशब्दे उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययं आदेशो भवति ।
सोदर्यः, समानोदर्यः ।
समानोदरे शयित ओ च+उदात्तः (*४,४.१०८) इति यत् । ।

---

1. <दृग्-दृश-वतुषु># । । PS_६,३.८९ । ।

_______Sठान्ठ्JKव्_६,३.८९ः

दृक्दृश वतु इत्येतेषु परतः समानस्य स इत्ययं आदेशो भवति ।
सदृक् ।
सदृशः ।
त्यदादिषु दृशोऽनालोचने कञ्च (*३,२.६०) इत्यत्र समानान्ययोश्चेति वक्तव्यं इति कञ्क्विनौ प्रत्ययौ क्रियेते ।
दृक्षे चेति वक्तव्यं ।
सदृक्षः ।
दृशेः क्षप्रत्ययोऽपि तत्र+एव वक्तव्यः ।
वतुग्रहणं उत्तरार्थं । ।

---

1. <इदं किमोरीश्की># । । PS_६,३.९० । ।

_______Sठान्ठ्JKव्_६,३.९०ः

इदं किं इत्येतयोरीश्की इत्येतौ यथासङ्ख्यं आदेशौ भवतो दृग्दृशवतुषु ।
ईदृक् ।
ईदृशः ।
इयान् ।
कीदृक् ।
कीदृशः ।
कियान् ।
किमिदंभ्यां वो घः (*५,२.४०) इति वतुप् ।
दृक्षे चेति वक्तव्यं ।
ईदृक्षः ।
कीदृक्षः । ।

---

1. <आ सर्वनाम्नः># । । PS_६,३.९१ । ।

_______Sठान्ठ्JKव्_६,३.९१ः

सर्वनाम्नः आकारादेशो भवति दृग्दृशवतुषु ।
तादृक् ।
तादृशः ।
तावान् ।
यादृक् ।
यादृशः ।
यावान् ।

दृक्षे चेति वक्तव्यं ।
तादृक्षः ।
यादृक्षः । ।

---

[#७२१]

1. <विष्वग्-देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये># । । PS_६,३.९२ । ।

______Sठाञ्ठ्JKव्_६,३.९२ः
विष्वक्देव इत्येतयोः सर्वनाम्नश्च टेः अद्रि इत्ययं आदेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे ।
दिष्वगञ्चति इति विष्वद्र्यङ् ।
देवद्र्यङ् ।
सर्वनाम्नः - तद्र्यङ् ।
यद्र्यङद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थं ।
तत्र यणादेशे कृते उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (*८,२.४) इत्येष स्वरो भवति ।
विष्वग्देवयोः इति किं ? अश्वाची ।
अञ्चतौ इति किं ? विष्वग्युक् ।
वप्रत्यये इति किं ? विष्वगञ्चनं ।
वप्रत्ययग्रहणं अन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थं ।
तेन अयस्कृतम्, अयस्कारः इत्यत्र अतः कृकमिकंसकुम्भपात्र इति सत्वं भवति ।
छन्दसि स्त्रियां बहुलं इति वक्तव्यं ।
विश्वाई च घृताची च इत्यत्र न भवति ।
कद्रीची इत्यत्र तु भवत्येव । ।

---

1. <समः समि># । । PS_६,३.९३ । ।

______Sठाञ्ठ्JKव्_६,३.९३ः

सं इत्येतस्य समि इत्ययं आदेशो भवति अञ्चतौ वप्रत्ययन्ते उत्तरपदे ।
सम्यक्, सम्यञ्चौ, सम्यञ्चः । ।

---

1. <तिरसस्तिर्यलोपे># । । PS_६,३.९४ । ।

______Sठाञ्ठ्JKव्_६,३.९४ः

तिरसित्येतस्य तिरि इत्ययं आदेशो भवति अञ्चाउ वप्रत्ययान्ते उत्तरपदेऽलोपे, यदा अस्य लोपो न भवति ।
तिर्यक्, तिर्यञ्चौ, तिर्यञ्चः ।
अलोपे इति किं ? तिरश्चा ।
तिरश्चे ।

अचः इत्यकारलोपः । ।

---

1. <सहस्य सध्रिः># । । PS_६,३.९५ । ।

______Sठा~ठ्JKव्_६,३.९५ः

सह इत्येतस्य सध्रिः इत्ययं आदेशो भवति अञ्चतौ वप्रत्यान्ते उत्तरपदे ।
सध्र्यङ्सध्र्यञ्चौ, सध्र्यञ्चः ।
सध्रीचः ।
सध्रीचा । ।

---

1. <सध माद-स्थयोश्छन्दसि># । । PS_६,३.९६ । ।

______Sठा~ठ्JKव्_६,३.९६ः

छन्दसि विषये माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययं आदेशो भवति ।
सधमादो द्युम्निनीरापः ।
सधस्था । ।

---

[#७२२]

1. <द्व्य्-अन्तर्-उपसर्गेभ्योऽप ईत्># । । PS_६,३.९७ । ।

______Sठा~ठ्JKव्_६,३.९७ः

द्वि अन्तरित्येताभ्यां उपसर्गाच्च उत्तरस्य अपित्येतस्य ईकारादेशो भवति ।

[#७२१]

द्वीपं ।
अन्तरीपं ।
उपसर्गात्- नीपं ।
वीपं ।
समीपं ।
समाप ईत्वे प्रतिशेधो वक्तव्यः ।
समापं नाम देवयजनं ।
अपर आह - ईत्वमनवर्णादिति वक्तव्यं ।
इह मा भूत्, प्रापम्, परापं ।
अप्शब्दं प्रति क्रिययोगाभावातुपसर्गग्रहणं प्राद्युपलक्षणार्थं । ।

---

[#७२२]

1. <ऊदनोर्देशे># । । PS_६,३.९८ । ।

_______Sठान्ठ्JKव्_६,३.९८:

अनोरुत्तरस्य अपः ऊकारादेशो भवति देशाभिधाने ।
अनूपो देशः ।
देशे इति किं ? अन्वीपं ।
दीर्घोच्चारणं अवग्रहार्थम्, अनु ऊपः अनूपः इति । ।

---

1. <अषष्थ्य्-अतृतीयास्थस्य अनयस्य दुगाशीर्-आशा-आस्था-आस्थित-उत्सुक-ऊति-कारक-राग-च्छेषु># । । PS_६,३.९९ । ।

_______Sठान्ठ्JKव्_६,३.९९:

अषष्थीस्थस्य अतृतीयास्थस्य च अन्यशब्दस्य दुगागमो भवति आशिसाशा आस्था आस्थित उत्सुक ऊति कारक राग छ इत्येतेषु परतः ।
अन्या आशीः अन्यदाशीः ।
अन्या आशा अन्यदाशा ।
अन्या आस्था अन्यदास्था ।
अन्य आस्थितः अन्यदास्थितः ।
अन्य उत्सुकः अन्यदुत्सुकः ।
अन्या ऊतिः अन्यदूतिः ।
अन्यः कारकः अन्यत्कारकः ।
अन्यः रागः अन्यद्रागः ।
अन्यस्मिन्भवः अन्यदीयः ।
गहादिष्वन्यशब्दो द्रष्टव्यः ।
अषष्ठ्यतृतीयास्थस्य इति किं ? अन्यस्य आशीः अन्याशीः ।
अन्येन आस्थितः अन्यास्थितः ।
दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु । ।
अन्यस्य कारकं अन्यत्कारकं ।
अन्यस्य इदं अन्यदीयं ।
अस्य च द्विर्नञ्ग्रहणं लिङ्गं । ।

---

1. <अर्थे विभाषा># । । PS_६,३.१०० । ।

_______Sठान्ठ्JKव्_६,३.१००:

अर्थशदे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति ।
अन्यदर्थः, अन्यार्थः । ।

---

1. <कोः कत्तत्पुरुषेऽचि># । । PS_६,३.१०१ । ।

_______Sठान्ढ्JKव्_६,३.१०१ः

कु इत्येतस्य क्त इत्ययं आदेशो भवति तत्पुरुषे समासे अजादावुत्तरपदे ।
कदजः ।
कदश्वः ।
कदुष्ट्रः ।
कदन्नं ।
तत्पुरुषे इति किं ? कूष्ट्रो राजा ।
अचि इति किं ? कुब्राह्मणः ।
कुपुरुषः ।
कद्भावे त्रावुपसङ्ख्यानं ।
कुत्सितास्त्रयः कत्त्रयः । ।

---

[#७२३]

1. <रथ-वदयोश्च># । । PS_६,३.१०२ । ।

_______Sठान्ढ्JKव्_६,३.१०२ः

रथ वद इत्येतयोश्च+उत्तरपदयोः कोः कतित्ययं आदेशो भवति ।
कद्रथः ।
कद्वदः । ।

---

1. <तृणे च जातौ># । । PS_६,३.१०३ । ।

_______Sठान्ढ्JKव्_६,३.१०३ः

तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कतित्यादेशो भवति ।
कत्तृणा नाम जातिः ।
जातौ इति किं ? कुत्सितानि तृणानि कुतृणानि । ।

---

1. <का पथ्य्-अक्षयोः># । । PS_६,३.१०४ । ।

_______Sठा~ठ्JKव्_६,३.१०४ः

पथिनक्ष इत्येतयोरुत्तरपदयोः कोः का इत्ययं आदेशो भवति ।
कापथः ।
काक्षः । ।

---

1. <ईषदर्थे च># । । PS_६,३.१०५ । ।

_______Sठा~ठ्JKव्_६,३.१०५ः

ईषदर्थे वर्तमानस्य कोः का इत्ययं आदेशो भवति ।
कामधुरं ।
कालवणं ।
अजादावपि परत्वात्कादेश एव भवति ।
काम्लं ।
कोष्णं । ।

---

1. <विभाषा पुरुषे># । । PS_६,३.१०६ । ।

_______Sठा~ठ्JKव्_६,३.१०६ः

पुरुषशब्दे उत्तरपदे विभाषा कोः का इत्ययं आदेशो भवति ।
कापुरुषः, कुपुरुषः ।
अप्राप्तविभाषेयं ।
ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति ।
ईषत्पुरुषः कापुरुषः । ।

---

1. <कवञ्चोष्णे># । । PS_६,३.१०७ । ।

_______Sठा~ठ्JKव्_६,३.१०७ः

उष्णशब्दे उत्तरपदे कोः कवं इत्ययं आदेशो भवति, का च विभाषा ।
कवोष्णम्, कोष्णम्, कदुष्णं । ।

---

1. <पथि च च्छन्दसि># । । PS_६,३.१०८ । ।

______Sठाऱ्ठ्JKव्_६,३.१०८ः

पथिशब्दे उत्तरपदे छन्दसि विषये कोः कवं का इत्येतावादेशौ भवतो विभाषा ।
कवपथः, कापथः, कुपथः । ।

---

[#७२४]

1. <पृषोदर-आदीनि यथोपदिष्टम्># । । PS_६,३.१०९ । ।

______Sठाऱ्ठ्JKव्_६,३.१०९ः

पृषोदरप्रकाराणि शब्दरूपाणि, येषु लोपागमवर्नविकाराः शास्त्रेण न विहिताः दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति ।
यानि यानि यथोपदिष्टानि, शिष्टैरुच्चारितानि प्रयुक्तानि, तानि तथा+एव अनुगन्तव्यानि ।
पृषदुदरं यस्य पृषोदरं ।
पृषदुद्वानं यस्य पृषोद्वानं ।
अत्र तकारलोपो भवति ।
वारिवाहकः बलाहकः ।
पूर्वशब्दस्य बशब्द आदेशः, उत्तरपदादेश्च लत्वं ।
जीवनस्य मूतः जीमूतः ।
वनशब्दस्य लोपः ।
शवानां शयनं श्मशानं ।
शवशब्दस्य श्मादेशः, शयनशब्दस्य अपि शानशब्द आदेशः ।
ऊर्ध्वं खमस्य इति उलूखलं ।
ऊर्ध्वखशब्दयोः उलू खल इत्येतावादेशौ भवतः ।
पिशिताशः पिशाचः ।
पिशिताशशब्दयोर्यथायोगं पिशाचशब्दौ आदेशौ ।
ब्रुवन्तोऽस्यां सीदन्ति इति बृसी ।
सदेरधिकरणे डट्प्रत्ययः ।
ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति ।
मह्यां रौति इति मयूरः ।
रौतेरचि टिलोपः ।
महीशब्दस्य मयूभावः ।
एवमन्येऽपि अश्वत्थकपित्थप्रभृतयो यथायोगं अनुगन्तव्याः ।
दिक्शब्देभ्य उत्तरस्य तीरस्य तारभावो वा भवति ।
दक्षिणतीरम्, दक्षिणतारं ।
उत्तरतीरम्, उत्तरतारं ।
वाचो वादे डत्वं च लभावश्च+उत्तरपदस्य+इञि प्रत्यये भवति ।
वाचं वदति इति वाग्वादः ।
तस्यापत्यं वड्वालिः ।
षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति ।
षड्दन्ता अस्य षोडन् ।
षट्च दश च षोडश ।
धासु वा षष उत्वं भवत्युत्तरपदादेश्च ष्टुत्वं ।

षोढा, षड्धा कुरु।
बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थः।
इह मा भूत्, षट्दधाति धयति वा षड्धा इति।
दुरो दाशनाशदभध्येषूत्वं वक्तव्यं उत्तरपदादेश्च ष्टुत्वं।
कुच्छ्रेण दाश्यते नाश्यते दभ्यते च यः स दूडाशः।
दूणाशः।
दूडभ्यः।
दम्भेः खल्बनुनासिकलोपो निपातनाथ्।
दुष्टं ध्यायति इति दूढ्यः।
दुःशब्दोपपदस्य ध्यायतेः आतश्चोपसर्गे (*६,१.१३६) इति कप्रत्ययः।
[#७२५]

स्वरो रोहतौ छन्दस्युत्वं वक्तव्यं।
जाय एहि सुवो रोहाव।
पीवोपवसनादीनां च लोपो वक्तव्यः।
पीवोपवसनानां।
पयोपवसनानां।
वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तं।।

---

1. <सङ्ख्या-वि-साय-पूर्वस्य अह्नस्य अहन्नन्यतरस्यां ङौ>#।। PS_६,३.११०।।

______Sठाञ्ठ्JKव्_६,३.११०ः

सङ्ख्या वि साय इत्येवंपूर्वस्य अह्नशब्दस्य स्थाने अहनित्ययं आदेशो भवत्यन्यतरस्यां ङौ परतः।
द्वयोरह्नोर्भवः द्व्यह्नः।
त्र्यह्नः।
द्व्यह्नि, द्व्यहनि।
त्र्यह्नि, त्र्यहनि।
द्व्यह्ने।
त्र्यह्ने।
व्यपगतमहः व्यह्नः।
व्यह्नि, व्यहनि, व्यह्ने।
सायमह्नः सायाह्नः।
सायाह्नि, सायाहनि, सायाह्ने।
एकदेशिसमासः पूर्वादिभ्योऽन्यस्य अपि भवति इत्येतदेव विसायपूर्वस्य अह्नस्य ग्रहणं ज्ञापकं।
तेन मध्यमह्नः मध्याह्नः इत्यपि भवति।
सङ्ख्याविसायपूर्वस्य इति किं? पूर्वाह्णे।
अपराह्णे।।

---

1. <ढ्रलोपे पूर्वस्य दीर्घोऽणः>#।। PS_६,३.१११।।

______Sठाञ्ठ्JKव्_६,३.१११ः

ढकाररेफयोः लोपः यस्मिन्स ढ्रलोपः, तत्र पूर्वस्य अणः दीर्घो भवति।
लीढं।

मीढं ।
उपगूढं ।
मूढः ।
रलोपे - नीरक्तं ।
अग्नीरथः ।
इन्दूरथः ।
पुना रक्तं वासः ।
प्राता राजक्रयः ।
पूर्वग्रहणं अनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थं ।
अणः इति किं ? आतृढं ।
आवृढं । ।

---

1. <सहि-वहोरोदवर्णस्य># । । PS_६,३.११२ । ।

_______Sठाञ्ठ्JKव्_६,३.११२ः

सहि वहि इत्येतयोः अवर्णस्य ओकार आदेशो भवति ढ्रलोपे ।
सोढा ।
सोढुं ।
सोढव्यं ।
वोढा ।
वोढुं ।
वोढव्यं ।
अवर्णस्य इति किं ? ऊढः ।
ऊढवान् ।
वर्णग्रहणं किं ? कृतायां अपि वृद्धौ यथा स्याथ् ।
उदवोढां ।
उदवोढं ।
तादपि परः तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात् । ।

---

1. <साढ्यै साढ्वा साढ+इति निगमे># । । PS_६,३.११३ । ।

_______Sठाञ्ठ्JKव्_६,३.११३ः

साध्यै साढ्वा साढा इति निगमे निपात्यनते ।
साढ्यै समन्तात्साढ्वा शत्रून् ।
सहेः क्त्वाप्रत्यये ओत्वाभावः ।
पक्षे क्त्वाप्रत्ययस्य ध्यैभावः ।
साढा इति तृचि रूपमेतथ् ।
निगमे इति किं ? सोढ्वा, सोढा इति भाषायां । ।

---

[#७२६]

1. <संहितायाम्># । । PS_६,३.११४ । ।

______Sठा~ठ्JKव्_६,३.११४ः

संहितायां इत्ययं अधिकारः ।
यदिति ऊर्ध्वं अनुक्रमिष्यामः संहितायां इत्येवं तद्वेदितव्यं ।
वक्ष्यति - द्व्यचोऽतस्तिङः (*६,३.१३५) इति ।
विद्मा हि त्वा गोपतिं शूर गोनां ।
संहितायां इति किं ? विद्म, हि, त्वा, गोपतिं, शूर, गोनां । ।

---

1. <कर्णे लक्षणस्य अविष्ट-अष्ट-पञ्च-मणि-भिन्न-च्छिन्न-च्छिद्र-स्रुव-स्वस्तिकस्य># । । PS_६,३.११५ । ।

______Sठा~ठ्JKव्_६,३.११५ः

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट अष्टन्पञ्चन्मणि भिन्न छिन्न छिद्र स्रुव स्वस्तिक इत्येतान्वर्जयित्वा ।
दात्राकर्णः ।
द्विगुणाकर्णः ।
त्रिगुणाकर्णः ।
द्व्यङ्गुलाकर्णः ।
अङ्गुलाकर्णः ।
यत्पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते ।
लक्षणस्य इति किं ? शोभनकर्णः ।
अविष्टादीनां इति किं ? विष्टकर्णः ।
अष्टकर्णः ।
पञ्चकर्णः ।
मणिकर्णः ।
भिन्नकर्णः ।
छिन्नकर्णः ।
छिद्रकर्णः ।
स्रुवकर्णः ।
स्वस्तिककर्णः । ।

---

1. <नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ># । । PS_६,३.११६ । ।

______Sठा~ठ्JKव्_६,३.११६ः

नहि वृति वृषि व्यधि रुचि सहि तनि इत्येतेषु क्विप्रत्ययान्तेषु उत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये ।
नहि - उपानथ् ।
परीणथ् ।
वृति - नीवृथ् ।

उपावृथ् ।
वृषि - प्रावृठ् ।
उपावृठ् ।
व्याधि - मर्माविथ् ।
हृदयाविथ् ।
श्वविथ् ।
रुचि - नीरुक् ।
अभिरुक् ।
सहि - ऋतीषठ् ।
तनि - तरीतथ् ।
गमः क्वौ (*६,४.४०) इति गमदीनं इष्यते ।
ततः तनोतेरप्यनुनासिकलोपः ।
क्वौ इति किं ? परिणहनं । ।

---

1. <वन-गिर्योः सज्ञायां कोटर-किंशुलुकादीनाम्># । । PS_६,३.११७ । ।

_______Sठा¬ठ्JKव्_६,३.११७ः

वन गिरि इत्येतयोरुत्तरपदयोर्यथासङ्ख्यं कोटरदीनां किंशुलुकादीनां च दीर्घो भवति सज्ञायां विषये ।
वने कोटरादीनां - कोटरवणं ।
मिश्रकावणं ।
सिघ्रकावणं ।
सारिकावणं ।
गिरौ किंशुलुकादीनां - किंशुलुकागिरिः ।
अञ्जनागिरिः ।
कोटरकिंशुलुकादीनां इति किं ? असिपत्रवनं ।
कृष्णगिरिः ।
कोटर ।
मिश्रक ।
पुरक ।
सिघ्रक ।
सारिक ।
कोटरादिः ।
किंशुलुक ।
शाल्वक ।
अञ्जन ।
भञ्जन ।
लोहित ।
कुक्कुठ् ।
किंशुलुकादिः । ।

---

1. <वले># । । PS_६,३.११८ । ।

_______Sठा¬ठ्JKव्_६,३.११८ः

वले परतः पूर्वस्य दीर्घः भवति ।
आसुतीवलः ।
कृषीवलः ।
दन्तावलः ।
रजःकृष्यासुतिपर्षदो वलच्(*५,२.११२) इति वलच्प्रत्ययो गृह्यते, न प्रातिपदिकं ।
अनुत्साहभ्रातृपितृ́णां इत्येव ।
उत्साहवलः ।
भ्रातृवलः ।
पितृवलः । ।

---

[#७२७]

1. <मतौ बह्वचोऽनजिरादीनाम्># । । PS_६,३.११९ । ।

______Sठाऱ्ठ्JKव्_६,३.११९ः
मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति सञ्ज्ञायां विषये ।
उदुम्बरावती ।
मशकावती ।
वीरणावती ।
पुष्करावती ।
अमरावती ।
नद्यां मतुप्(*४,२.८५) इति मतुप्प्रत्ययः ।
सञ्ज्ञायां (*८,२.११) इति मतोर्वत्वं ।
बह्वचः इति किं ? व्रीहिमती ।
अनजिरादीनां इति किं ? अजिरवती ।
खदिरवती ।
पुलिनवती ।
हंसकारण्डववती ।
चक्रवाकवती ।
सञ्ज्ञायां इत्येव, वलयवती । ।

---

1. <शरादीनां च># । । PS_६,३.१२० । ।

______Sठाऱ्ठ्JKव्_६,३.१२०ः

शरादीनां च मतौ दीर्घो भवति सञ्ज्ञायां विषये ।
शरावती ।
वंशावती ।
शर ।
वंश ।
धूम ।
अहि ।
कपि ।
मणि ।
मुनि ।

शुचि ।
हनु ।
शरादिः ।
सञ्ज्ञायां (*८,२.११) इति मतोर्वत्वं ।
यवादित्वात्व्रीह्यादिभ्यो न भवति । ।

---

1. <इको वहेऽपीलोः># । । PS_६,३.१२१ । ।

______Sठाञ्ठ्JKव्_६,३.१२१ः

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वहे उत्तरपदे दीर्घो भवति ।
ऋषीवहं ।
कपीवहं ।
मुनीवहं ।
इकः इति किं ? पिण्डवहं ।
अपीलोः इति किं ? पीलुवहं ।
अपील्वादीनां इति वक्तव्यं ।
इह मा भूत्, चारुवहं । ।

---

1. <उपसर्गस्य घञ्यमनुष्ये बहुलम्># । । PS_६,३.१२२ । ।

______Sठाञ्ठ्JKव्_६,३.१२२ः

उपसर्गस्य घञन्ते उत्तरपदे अमनुष्येऽभिधेये बहुलं दीर्घो भवति ।
वीक्लेदः ।
वीमार्गः ।
अपामार्गः ।
न च भवति ।
प्रसेवः ।
प्रसारः ।
सादकारयोः कृत्रिमे दीर्घो भवति ।
प्रासादः ।
प्राकारः ।
कृत्रिमे इति किं ? प्रसादः ।
प्रकारः ।
वेशादिषु विभाषा दीर्घो भवति ।
प्रतिवेशः, प्रतीवेशः ।
प्रतिरोधः, प्रतीरोधः ।
अमनुष्ये इति किं ? निषादो मनुष्यः । ।

---

1. <इकः काशे># । । PS_६,३.१२३ । ।

_______Sठा~ठ्JKव्_६,३.१२३ः

इगन्तस्य उपसर्गस्य काशशब्दे उत्तरपदे दीर्घो भवति।
नीकाशः।
वीकाशः।
अनूकाशः।
पचाद्यच्प्रत्ययान्तोऽयं काशशब्दः, न तु घञन्तः।
इकः इति किं? प्रकाशः।।

---

[#७२८]

1. <दस्ति>#।। PS_६,३.१२४।।

_______Sठा~ठ्JKव्_६,३.१२४ः

दा इत्येतस्य यः तकारादिरादेशः तस्मिन्परतः इगन्तस्य+उपसर्गस्य दीर्घो भवति।
नीत्तं।
वीत्तं।
परीत्तं।
अच उपसर्गात्तः (*७,४.४७) इत्यन्तस्य यद्यपि तकारः क्रियते तथापि चर्त्वस्याश्रयात्सिद्धत्वं इति तकारादिर्भवति।
इकः इत्येव, प्रत्तं।
अवत्तं।
दः इति किं? वितीर्णं।
नितीर्णं।
ति इति किं? सुदत्तं।।

---

1. <अष्टनः सञ्ज्ञायाम्>#।। PS_६,३.१२५।।

_______Sठा~ठ्JKव्_६,३.१२५ः

अष्टनित्येतस्य उत्तरपदे सञ्ज्ञायां दीर्घो भवति।
अष्टावक्रः।
अष्टाबन्धुरः।
अष्टापदं।
सञ्ज्ञायां इति किं? अष्टपुत्रः।
अष्टभार्यः।।

---

1. <छन्दसि च>#।। PS_६,३.१२६।।

_______Sठाञ्ठ्JKव्_६,३.१२६ः

छन्दसि विषयेऽष्टनः उत्तरपदे दीर्घो भवति।
आग्नेयमष्टाकपालं निर्वपेत्चरुं।
अष्टाहिरण्या दक्षिणा।
अष्टापदी देवता सुमती।
अष्टौ पादौ अस्याः इति बहुव्रीहौ पादस्य लोपे कृते पादोऽन्यतरस्यां (*४,१.८) इति ङीप्।
गवि च युक्ते भाषायामाष्टनो दीर्घो भवति इति वक्तव्यं।
अष्टागवं शकटं।।

---

1. <चितेः कपि>#।। PS_६,३.१२७।।

_______Sठाञ्ठ्JKव्_६,३.१२७ः

चितिशब्दस्य कपि परतः दीर्घो भवति।
एकचितीकः।
द्विचितीकः।
त्रिचितीकः।।

---

1. <विश्वस्य वसु-राटोः>#।। PS_६,३.१२८।।

_______Sठाञ्ठ्JKव्_६,३.१२८ः

विश्वशब्दस्य वसु राटित्येतयोः उत्तरपदयोः दिर्घ आदेशो भवति।
विश्वावसुः।
विश्वाराठ्।
राटिति विकारनिर्देशो यत्र अस्य एतद्रूपं तत्र+एव यथा स्याथ्।
इह न भवति, विश्वराजौ।
विश्वराजः।।

---

1. <नरे सञ्ज्ञायाम्>#।। PS_६,३.१२९।।

_______Sठाञ्ठ्JKव्_६,३.१२९ः

नरशब्द उत्तरपदे सञ्ज्ञायां विषये विश्वस्य दीर्घो भवति।
विश्वानरो नाम यस्य वैश्वानरिः पुत्रः।
सञ्ज्ञायां इति किं? विश्वे नरा यस्य स विश्वनरः।।

---

[#७२९]

1. <मित्रे चर्षौ># । । PS_६,३.१३० । ।

_______Sठाग्ठ्JKव्_६,३.१३०ः

मित्रे च+उत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति ।
विश्वामित्रो नाम ऋषिः ।
ऋषौ इति किं ? विश्वमित्रो माणवकः । ।

---

1. <मन्त्रे सोम-अश्व-इन्द्रिय-विश्वदेव्यस्य मतौ># । । PS_६,३.१३१ । ।

_______Sठाग्ठ्JKव्_६,३.१३१ः

मन्त्रविषये सोम अश्व इन्द्रिय विश्वदेव्य इत्येतेषां मतुप्प्रत्यये परतः दीर्थो भवति ।
सोमावती ।
अश्ववती ।
इन्द्रियावती ।
विश्वदेव्यावती । ।

---

1. <ओषधेश्च विभक्तावप्रथमायाम्># । । PS_६,३.१३२ । ।

_______Sठाग्ठ्JKव्_६,३.१३२ः

मन्त्रे इति वर्तते ।
ओषधिशब्दस्य विभक्तावप्रथमायां परतः दीर्घो भवति ।
ओषधीभिरपीतथ् ।
नमः पृथिव्यै नम ओषधीभ्यः ।
विभक्तौ इति किं ? ओषधिपते ।
अप्रथमायां इति किं ? स्थिरेयमस्त्वोषधिः । ।

---

1. <ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्># । । PS_६,३.१३३ । ।

_______Sठाग्ठ्JKव्_६,३.१३३ः

ऋचि विषये तु नु घ मक्षु तङ्कु त्र उरुष्य इत्येषां दीर्घो भवति।
आ तू न इन्द्र वृत्रहन्।
नु - नू करणे।
घ - उत वा घा स्यालाथ्।
मक्षु - मक्षू गोमन्तमीमहे।
तङ्- भरता जातवेदसं।
तङिति थादेशस्य ङीत्वपक्षे ग्रहणं, तेन+इह न भवति, शृणोत ग्रावाणः।
कु - कूमनः।
त्र - अत्रा गौः।
उरुष्य - उरुष्या णो।।

---

1. <इकः सुञि>#।। PS_६,३.१३४।।

______Sठा~ठ्JKव्_६,३.१३४ः

सुञ्निपातो गृह्यते।
इगन्तरय सुञि परतो मन्त्रविषये दीर्घो भवति।
अभी षु णः सखीनां।
ऊर्ध्व ऊ षु ण ऊतये।
सुञः (*८,३.१०७) इति षत्वम्, नश्च धातुस्थोरुषुभ्यः (*८,४.२७) इति णत्वं।।

---

1. <द्व्यचोऽतस्तिङः>#।। PS_६,३.१३५।।

______Sठा~ठ्JKव्_६,३.१३५ः

ऋचि इति वर्तते।
द्व्यचस्तिङन्तस्य अतः ऋग्विषये दीर्घो भवति।
विद्मा हि त्वा गोपतिं शूर गोनां।
विद्मा शरस्य पितरं।
द्व्यचः इति किं? अश्वा भवत वाजिनः।
अतः इति किं? आ देवान्वक्षि यक्षि च।।

---

[#७३०]

1. <निपातस्य च>#।। PS_६,३.१३६।।

______Sठा~ठ्JKव्_६,३.१३६ः
ऋचि इत्येव।
निपातस्य च ऋग्विषये दीर्गः आदेशो भवति।

एवा ते ।
अच्छा । ।

---

1. <अन्येषां अपि दृश्यते># । । PS_६,३.१३७ । ।

_______Sठा~ठ्JKव्_६,३.१३७ः

अन्येषां अपि दीर्घो दृश्यते, स शिष्टप्रयोगादनुगन्तव्यः ।
यस्य दीर्घत्वं विहितं, दृश्यते च प्रयोगे, तदनेन कर्तव्यं ।
केशाकेशि ।
कचाकचि ।
जलाषाठ् ।
नारकः पूरुषः ।
शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ।
श्वादन्तः ।
श्वादंष्ट्रः ।
श्वाकर्णः ।
श्वाकुन्दः ।
श्वावराहः ।
श्वापुच्छः ।
श्वापदः । ।

---

1. <चौ># । । PS_६,३.१३८ । ।

_______Sठा~ठ्JKव्_६,३.१३८ः

चौ परतः पूर्वपदस्य दीर्घो भवति ।
चौ इति अञ्चतिर्लुप्तनकाराकारो गृह्यते ।
दधीचः पश्य ।
दधीचा ।
दधीचे ।
मधूचः पश्य ।
मधूचा ।
मधूचे ।
अन्तरङ्गोऽपि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्तते । ।

---

1. <सम्प्रसारणस्य># । । PS_६,३.१३९ । ।

_______Sठा~ठ्JKव्_६,३.१३९ः

उत्तरप्दे इति वर्तते ।
सम्प्रसारणान्तस्य पूर्वपदस्य+उत्तरपदे दीर्घो भवति ।
कारीषगन्धीपुत्रः ।
कारीषगन्धीपतिः ।
क्ॐउदगन्धीपुत्रः ।
क्ॐउदीगन्धीपतिः ।
करीषस्य इव गन्धोऽस्य, कुमुदस्य इव गन्धोऽस्य, अल्पाख्यायां (*५,४.१३६), उपमानाच्च (*५,४.१३७) इति इकारः समासान्तः ।
करीषगन्धेरपत्यं कारीषगन्ध्या ।
कुमुदगन्धेरपत्यं क्ॐउदगन्ध्या, तस्याः पुत्रः क्ॐउदगन्धीपुत्रः ।
क्ॐउदगधीपतिः ।
इको ह्रस्वोऽङ्यो गालवस्य (*६,३.६१) इत्येतन्न भवति ।
व्यवस्थितविभाषा हि सा ।
अकृत एव दीर्घत्वे ह्रस्वभावपक्षे कृतार्थेन अपि दीर्घेण पक्षान्तरे परत्वाद्ह्रस्वो बाध्यते ।
पुनः प्रसङ्गविज्ञानं च न भवति, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितं एव इति । ।
इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य तृतीयः पादः । ।

---

[#७३१]

षष्ठाध्यायस्य चतुर्थः पादः ।

---

1. <अङ्गस्य># । । PS_६,४.१ । ।

______Sठाn्ठ्JKव्_६,४.१ः

अधिकारोऽयं आसप्तमाध्यायपरिसमाप्तेः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः अङ्गस्य इत्येवं तद्वेदितव्यं ।
वक्ष्यति - हलः (*६,४.२) - हूतः ।
जीनः ।
संवीतः ।
अङ्गस्य इति किं ? निरुतं ।
दुरुतं ।
नामि दीर्घः (*६,४.६) - अग्नीनां ।
वायूनां ।
अङ्गस्य इति किं ? क्रिमिणां पश्य ।
पामनां पश्य ।
अतो भिस ऐस्(*७,१.९) - वृक्षैः ।
प्लक्षैः ।
अङ्गस्य इति किं ? ब्राह्मणभिस्सा ।
ओदनभिस्सिटा ।
अङ्गाधिकारः कृतोऽन्यार्थो नामि दीर्घत्वाद्यपि व्यवस्थापयति इति तदर्थं अर्थवद्ग्रहणपरिभाषा नाश्रयितव्या भवति ।
अङ्गस्य इति सम्बन्धसामान्ये एषा षष्ठी यथायोगं विशेषेषु अवतिष्ठते ।
अथ वा प्रातिपदिकार्थमात्रं अविवक्षितविभक्त्यर्थं अधिक्रियते ।
ततुत्तरत्र यथायोगं विपरिणम्यते ।
ततोऽकारान्तादङ्गात्भिस ऐसित्येवं आद्यपि सम्यक्सम्पन्नं भवति । ।

---

1. <हलः># । । PS_६,४.२ । ।

_______Sठाऱ्ठ्JKव्_६,४.२ः

अङ्गावयवाद्धलो यदुत्तरं सम्प्रसारणं तदन्तस्य अङ्गस्य दीर्घो भवति ।
हूतः ।
जीनः ।
संवीतः ।
हलः इति किं ? उतः ।
उतवान् ।
अङ्गावयवातिति किं ? निरुतं ।
तदन्तस्य इति किं ? विद्धः ।
विचितः ।
अणः इत्येव, तृतीयः ।
तृतीया इति वा निपातनादत्र दीर्घाभावः ।
अङ्गग्रहणं आवर्तयितव्यं हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्त्यर्थं च । ।

---

1. <नामि># । । PS_६,४.३ । ।

_______Sठाऱ्ठ्JKव्_६,४.३ः

नां इति एतत्षष्ठीबहुवचनं आगतनुट्कं गृह्यते ।
तस्मिन्परतोऽङ्गस्य दीर्घो भवति ।
अग्नीनां ।
वायुनां ।
कर्त्ṛणां ।
हर्त्ṛणां ।
अणः इत्येतदत्र निवृत्तं ।
आगतनुट्कग्रहणं उत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थं ।
अन्यथा हि नुडेव न स्याथ् ।
नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुट्भवेथ् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणां । ।

---

[#७३२]

1. <न तिसृ-चतसृ># । । PS_६,४.४ । ।

_______Sठाऱ्ठ्JKव्_६,४.४ः

तिसृ चतसृ इत्येतयोः नामि दीर्घो न भवति ।
तिसृणां ।

चतसृणां।
इदं एव नामि इति दीर्घप्रतिषेधवचनं ज्ञापकं अचि र ऋतः (*७,२.१००) इत्येतस्मात्पूर्वविप्रतिषेधेन नुडागमो भवति इति।।

---

1. <छन्दस्युभयथा># ।। PS_६,४.५ ।।

______Sठा~ठ्JKव्_६,४.५ः

छन्दसि वषये तिसृ-चतस्रोः नामि परतः उभयथा दृश्यते, दीर्घश्चादीर्घश्च।
तिसृणां मध्यदिने, तिसृणां मध्यदिने।
चतसृणां मध्यदिने, चतस्हृणां मध्यदिने।।

---

1. <नृ च># ।। PS_६,४.६ ।।

______Sठा~ठ्JKव्_६,४.६ः

नृ इत्येतस्य नामि परे उभयथा भवति।
त्वं न्हृणां नृपते, त्वं नृणां नृपते केचिदत्र छन्दसि इति न अनुवर्तयन्ति, तेन भाषायां अपि विकल्पो भवति।।

---

1. <न-उपधायाः># ।। PS_६,४.७ ।।

______Sठा~ठ्JKव्_६,४.७ः

नान्तस्य अङ्गस्य उपधायाः नामि परतो दीर्घो भवति।
पञ्चानां।
सप्तानां।
नवानां।
दशानां।
नः इति किं? चतुर्णां।
नामि इत्येव, चर्माणां।।

---

1. <सर्वनामस्थाने च असम्बुद्धौ># ।। PS_६,४.८ ।।

______Sठा~ठ्JKव्_६,४.८ः

सर्वनामस्थाने च परतोऽसम्बुद्धौ नोपधायाः दीर्घो भवति।
राजा, राजानौ, राजानः।
राजानम्, राजानौ।
सामानि तिष्ठन्ति।
सामानि पश्य।
सर्वनामस्थाने इति किं? राजनि।
सामनि।
असम्बुद्धौ इति किं? हे राजन्।
हे तक्षन्।।

---

1. <वा षपूर्वस्य निगमे>#।। PS_६,४.९।।

______Sठाञ्ठ्JKव्_६,४.९ः

षपूर्वस्य अचः नोपधायाः निगमविषये सर्वनामस्थाने परतः असम्बुद्धौ वा दीर्घो भवति।
स तक्षाणं तिष्ठन्तमब्रवीथ्।
स तक्षणं तिष्ठन्तमब्रवीथ्।
ऋभुक्षाणमिन्द्रं।
ऋभुक्षणमिन्द्रं।
निगमे इति किं? तक्षा, तक्षाणौ, तक्षाणः।।

---

[#७३३]

1. <सान्तमहतः संयोगस्य>#।। PS_६,४.१०।।

______Sठाञ्ठ्JKव्_६,४.१०ः

सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्य+उपधायाः दीर्घो भवति सर्वनामस्थाने परतः असम्बुद्धौ।
श्रेयान्, श्रेयांसौ, श्रेयांसः।
श्रेयांसि।
पयांसि।
यशांसि।
महतः स्वल्वपि - महान्, महान्तौ, महान्तः।
असम्बुद्धौ इति किं? हे श्रेयन्।
हे महन्।।

---

1. <अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तṛṇाम्>#।। PS_६,४.११।।

______Sठाञ्ठ्JKव्_६,४.११ः

अपित्येतस्य, तृनन्तस्य, तृजन्तस्य, स्वसृ नप्तृ नेष्टृ त्वष्तृ क्षत्तृ होतृ पोतृ पशास्तृ इत्येतेषां चाङ्गानां उपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसम्बुद्धौ।

अप्- आपः ।
बह्वाम्पि तडागानि इति केचिदिच्छन्ति, तत्र समासान्तो विधिरनित्यः इति समासान्तो न क्रियते ।
नित्यं अपि च नुममकृत्व दीर्घत्वं इष्यते ।
तृन्- कर्तारौ कटान् ।
वदितारौ जनापवादान् ।
कर्तारः ।
तृच्- कर्तारौ कटस्य ।
कर्तारः ।
हर्तारौ भारस्य ।
हर्तारः ।
स्वसृ - स्वसा, स्वसारौ, स्वसारः ।
नप्तृ - नप्ता, नप्तारौ, नप्तारः ।
नेष्टृ - नेष्टा, नेष्टारौ, नेष्टारः ।
त्वष्टृ - त्वष्टा, त्वष्टारौ, त्वष्टारः ।
क्षत्तृ - क्षत्ता, क्षत्तारौ, क्षत्तारः ।
होतृ - होता, होतारौ, होतारः ।
पोतृ - पोता, पोतारौ, पोतारः ।
प्रशास्तृ - प्रशास्ता, प्रशास्तारौ, प्रशास्तारः ।
नप्त्रादिनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थं ।
व्युत्पत्तिपक्षे नियमार्थम्, एवं भूतानां अन्येषां सञ्ज्ञाशब्दानां दीर्घो मा भूतिति ।
पितरौ, पितरः ।
मातरौ,मातरः ।
असम्बुद्धौ इति किं ? हे कर्तः ।
हे स्वसः । ।

---

1. <इन्-हन्-पूष-अर्यम्णां शौ># । । PS_६,४.१२ । ।

______Sठाञ्ठ्JKव्_६,४.१२ः

इन्हन्पूषनर्यमनित्येवं अन्तानां अङ्गानां शौ परत उपधाया दीर्घो भवति ।
बहुदण्डीनि ।
बहुच्छत्रीणि ।
बहुवृत्रहाणि ।
बहुभ्रूणहानि ।
बहुपूषाणि ।
बह्वर्यमाणि ।
सिद्धे सत्यारम्भो नियमार्थः, इन्हन्पूषार्यम्णां उपधायः शावेव दीर्घो भवति न अन्यत्र ।
दण्डिनौ ।
छत्रिणौ ।
वृत्रहणौ ।
पूषणौ ।
अर्यमणौ ।
दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्यात्भ्रूणहनीति तथास्य न दुष्येत् । ।
शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः । ।
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यं । ।
हन्तेः अनुनासिकस्य क्विझलोः क्ङिति (*२,४.१५) इति दीर्घत्वं यत्तदपि नियमेन बाध्यते वृत्रहणि, भ्रूणहनि इति ।
कथं ? योगविभागः क्रियते ।
इन्हन्पूषार्यम्णां सर्वनामस्थाने एव दीर्घो भवति, न अन्यत्र इति ।
ततः शौ इति द्वितीयो नियमः ।

[#७३४]

शौ एव सर्वनामस्थाने दीर्घो भवति न अन्यत्र इति ।
सर्वस्य+उपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते ।
यस्तु न उपधालक्षणः स भवत्येव ।
वृत्रहायते ।
भ्रूणहायते ।
अथ व अनुवर्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयं अविशेषेण नियमः ।
शिशब्दो हि सर्वनामस्थाअं नपुंसकस्य, न च तस्य अन्यत्सर्वनामस्थानं अस्ति इत्यविशेषेण नियमः ।
तत्र तु नपुंसकस्य इत्येतन्न अश्रीयते ।
तेन अनपुंसकस्य अपि दीर्घो न भवति ।
सर्वनामस्थानसञ्ज्ञाविधाने तु नपुंसकस्य व्यापारोऽस्ति इति तत्र नियमः क्रियमणो नपुंसकस्य स्यात् । ।

---

1. <सौ च># । । PS_६,४.१३ । ।

______Sठान्ध्JKव्_६,४.१३ः

सावसम्बुद्धौ परतः इन्हन्पूषर्यम्णां उपधाया दीर्घो भवति ।
दण्डी ।
वृत्रहा ।
पूषा ।
अर्यमा ।
असम्बुद्धौ इति किं ? हे दण्डिन् ।
हे पूषन् ।
हे अर्यमन् । ।

---

1. <अत्व्-असन्तस्य च अधातोः># । । PS_६,४.१४ । ।

______Sठान्ध्JKव्_६,४.१४ः

अतु असित्येवं अन्तस्य अधातोरुपधायाः सावसम्बुद्धौ परतः दीर्घो भवति ।
डवतु - भवान् ।
क्तवतु - कृतवान् ।
मतुप्- गोमान् ।
यवमान् ।
अत्र कृते दीर्घे नुमागमः कर्तव्यः ।
यदि हि परत्वान्नित्यत्वाच्च नुं स्यत्, दीर्घस्य निमित्तमतूपधा विहन्येत ।
असन्तस्य - सुपयाः ।
सुयशाः ।
सुश्रोताः ।
अधातोः इति किं ? पिण्डं ग्रसते इति पिण्डग्रः ।
चर्म वस्ते इति चर्मवः ।
अनर्थकोऽप्यस्शब्दो गृह्यते, अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति इति ।
अन्तग्रहणं उपदेशप्रयोगैकदेशस्य अप्यत्वन्तस्य परिग्रहार्थम्, अन्यथा मतुपो ग्रहणं न स्याद्, उपदेशे रूपनिर्ग्रहहेतौ नायमत्वन्तः इति ।
असम्बुद्धौ इत्येव, हे गोमन् ।
सुपयः । ।

---

1. <अनुनासिकस्य क्वि-झलोः क्ङिति># । । PS_६,४.१५ । ।

______Sठाञ्ठ्JKव्_६,४.१५ः

अनुनासिकान्तस्य अङ्गस्य उपधायाः दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति ।
प्रशान् ।
प्रतान् ।
झलादौ किति - शान्तः ।
शान्तवान् ।
शान्त्वा ।
शान्तिः ।
ङिति खल्वपि - शंशान्तः ।
तन्तान्तः ।
यङ्लुगन्तादयं तस् ।
अनुनासिकस्य इति किं ? ओदनपक् ।
पक्वः ।
पक्ववान् ।
क्विझलोः इति किं ? गम्यते ।
रम्यते ।
क्ङिति इति किं ? गन्ता ।
रन्ता । ।

---

[#७३५]

1. <अज्-झन-गमां सनि># । । PS_६,४.१६ । ।

______Sठाञ्ठ्JKव्_६,४.१६ः

अजन्तानां अङ्गानं हनिगम्योश्च सनि झलादौ परे दीर्घो भवति ।
अजन्तानां - विवीषति ।
तुष्टूषति ।
चिकीर्षति ।
जिहीर्षति ।
हन्- जिघांसति ।
गं - अधिजिगांसते ।
गमेरिङादेशस्य+इति वक्तव्यं ।
इह मा भूत्सञ्जिगंसते वत्सो मात्र इति ।
स्वर्गं लोकं समजिगांसतिति छन्दसि यदनिङादेशस्य अपि दीर्धत्वं दृश्यते, तदन्येषां अपि दृश्यते (*६,३.१३७) इत्यनेन भवति ।
अथ वा इह अज्ग्रहणं न कर्तव्यं ।
सनि दीर्घो भवति इत्येतावदेव सूत्रं कर्तव्यं ।
तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धं अजन्तस्य दीर्घत्वं ? तत्क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्, अजन्तस्य अङ्गस्य दीर्घो भवति, अजादेशस्य गमेः इति ।
ततो न वक्तव्यं इदं गमेरिङादेशस्य इति । ।

---

1. <तनोतेर्विभाषा># । । PS_६,४.१७ । ।

_______Sठा~ठ्JKव्_६,४.१७ः

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति ।
तितांसति, तितंसति ।
झलि इत्येव, तितनिषति ।
सनीवन्तर्ध इत्यत्र तनोतेरुपसङ्ख्यानादिडागमो भवति विकल्पेन । ।

---

1. <क्रमश्च क्त्वि># । । PS_६,४.१८ । ।

_______Sठा~ठ्JKव्_६,४.१८ः

क्रम उपधाया विभाषा दिर्घो भवति क्त्वा प्रत्यये झलादौ परतः ।
क्रन्त्वा, क्रान्त्वा ।
झलि इत्येव, क्रमित्वा ।
प्रक्रम्य, उपक्रम्य इति बहिरङ्गोऽपि ल्यबादेशोऽन्तरङ्गानपि विधीन्बाधते इति पूर्वं एव दीर्घत्वं न प्रवर्तते । ।

---

1. <च्चः-वोः श्-ऊडः-अनुनासिके च># । । PS_६,४.१९ । ।

_______Sठा~ठ्JKव्_६,४.१९ः

छ इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासङ्ख्यं शूटः इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्ययै परतः क्वौ झलादौ च क्ङिति ।
प्रश्नः ।
विश्नः ।
अन्तरङ्गत्वात्छे च (*६,१.७३) इति तुकि कृते सतुक्कस्य शादेशः ।
वकारस्य ऊटः - स्योनः ।
सिवेरौणादिके न प्रत्यये लघूपधगुणात्पूर्वमूटः क्रियते ।
तत्र कृतेऽन्तरङ्गत्वाद्यणादेशो नानाश्रयत्वात्च न वार्णादाङ्गं बलीयः भवति ।
क्वौ छस्य शब्दप्राठ् ।
क्वब्वचि इत्यादिनौणादिकः क्विप्दीर्घश्च ।
गोविठ् ।
वकारस्य - अक्षद्यूः ।
हिरण्यष्ठ्यूः ।

[#७३६]

असिद्धं बहिरङ्गमन्तरङ्गे इति नाजानन्तर्ये इति प्रतिषिध्यते ।
झलादौ छस्य - पृष्टः ।
पृष्टवान् ।

पृष्ट्वा ।
वकारस्य - द्यूतः ।
द्यूतवान् ।
द्यूत्वा ।
क्ङिति इत्येव, द्युभ्यास् ।
द्युभिः ।
केचिदत्र क्ङिति इति न अनुवर्तयन्ति ।
कथं द्युभ्याम्, द्युभिः इति ऊठि कृते ? दिव उत्(*६,१.१३१) इति तपरत्वान्मात्राकालो भविष्यति ।
छशां षः इत्यत्र छग्रहणं न कर्तव्यं ।
अनेन+एव हि सर्वत्र शकारो विधीयते ।
ऊठष्ठित्करणं एत्यधत्यूठ्सु (*६,१.८९) इति विशेषणार्थं ।
वाह ऊटः (*६,४.१३९) इत्ययं अपि ठिदेव । ।

---

1. <ज्वर-त्वर-स्रिव्य्-अवि-मवां उपधायाश्च># । । PS_६,४.२० । ।

______Sठा-ठ्JKव्_६,४.२०:

ज्वर त्वर स्रिवि अव मव इत्येतेषां अङ्गानां वकारस्य उपधायाश्च स्थाने ऊटः इत्ययं आदेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति ।
जूः, जूरौ, जूरः ।
जूर्तिः ।
त्वर - तूः, तूरौ, तूरः ।
तूर्तिः ।
स्रिविस्रूः, स्रुवौ, स्रुवः ।
स्रूतः ।
स्रूतवान् ।
स्रूतिः ।
अव - ऊः, उवौ, उवः ।
ऊतिः ।
मव - मूः, मुवौ, मुवः ।
मूतः ।
मूतवान् ।
मूतिः ।
ज्वरत्वरोपधा वकारात्परा, स्रिव्यवमवां पूर्वा । ।

---

1. <राल्लोपः># । । PS_६,४.२१ । ।

______Sठा-ठ्JKव्_६,४.२१:

रेफादुत्तरयोः छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः ।
मुर्च्छा - मूः, मुरौ, मुरः ।
मूर्तः ।
मूर्तवान् ।
मूर्तिः ।
न ध्या-ख्या-प्é-मूर्छि-मदां (*८,२.५७) इति निष्ठानत्वाभावः ।
हुर्च्छा - हूः, हुरौ, हुरः ।
हूर्णः ।

हूर्णवान् ।
हूर्तिः ।
राल्लोपे सुतुक्कस्य छस्य अभावात्केवलो गृह्यते ।
वकारस्य - तुर्वी - तूः, तुरौ, तुरः ।
तूर्णः ।
तूर्णवान् ।
तूर्तिः ।
धुर्वी - धूः, धुरौ, धुरः ।
धूर्णः ।
धूर्णवान् ।
धूर्तिः । ।

---

1. <असिद्धवत्र-आ भात्># । । PS_६,४.२२ । ।

______Sठान्ठ्JKव्_६,४.२२ः

असिद्धवतित्ययं अधिकारः ।
यदित ऊर्ध्वं अनुक्रमिष्यामः आ अध्यायपरिसमाप्तेः तदसिद्धवत्भवति इत्येवं वेदितव्यं ।
आ भातिति विषयनिर्देशः ।
आभसंशब्दनाद्यदुच्यते तत्र कर्तव्ये ।
अत्र इत्समानाश्रयत्वप्रतिपत्त्यर्थं ।
तच्चेदत्र यत्र भवति तदा भात्शास्त्रीयं विधीयते तदाश्रयं एव भवति ।
व्याश्रयं तु नासिद्धवद्भवति इत्यर्थः ।
असिद्धवचनं उत्सर्गलक्षणभावार्थम्, आदेशलकषणप्रतिषेधार्थं च ।
एधि, शाधि इत्यत्र एत्वशाभावयोः कृतयोः झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद्भवति ।
आगहि, जहि इत्यत्र अनुनासिक लोपे जभावे च अतो हेः (*६,४.१०५) इति लुक्प्राप्नोति, असिद्धत्वान्न भवति ।
आ भातिति किं ? अभाजि ।
रागः ।
अत उपधायाः (*७,२.११६) इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति ।
अत्रग्रहणं किं ? पपुषः पश्य ।
चिच्युषः पश्य ।
लुलुवुषः पश्य ।
वसुसंप्रसारणं आल्लोपे यणादेशे उवङादेशे च कर्तव्ये नासिद्धं भवति ।
आल्लोपादीनि वसौ, वसन्तस्य विभक्तौ संप्रसारणं इति समानाश्रयत्वं न अस्ति ।
असिद्धं बहिरङ्गमन्तरङ्गे इति ? एतदप्यत्र न भवति ।

[#७३७]

किं कारणं ? एषा हि परिभाषा आभाच्छास्त्रीया ।
तस्यां प्रवर्तमानायां वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणां एव असिद्धत्वादन्तरङ्गबहिरङ्गयोः युगपत्समुपस्थापनं न अस्ति इति परिभाष न प्रवर्तते ।
वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यं ।
वुगुवङादेशे - बभूव, बहूवतुः, बव्हूवुः ।
युट्यणादेशे - उपदिदीये, उपदिदीयाते, उपदेदीयिरे ।
आभातित्ययं अभिविधावाङ् ।
तेन भाधिकारेऽप्यसिद्धवद्भवति । ।

---

1. <श्नान्नलोपः># । । PS_६,४.२३ । ।

_______Sठाञ्ठ्JKव्_६,४.२३ः

श्नातिति श्नमयमुत्सृष्टमकारो गृह्यते ।
तत उत्तरस्य नकारस्य लोपो भवति ।
अनक्ति ।
भनक्ति ।
हिनस्ति ।
शकारवतो ग्रहणं किं ? यज्ञानां ।
यत्नानां ।
सुपि च (*७,३.१०२) इति परत्वात्कृतेऽपि दीर्घत्वे स्थानिवद्भवात्नलोपः स्यादेव ।
विश्नानाम्, प्रश्नानां इत्यत्र लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य+एव इत्येवं न भवति । ।

---

1. <अनिदितां हल उपधायाः क्ङिति># । । PS_६,४.२४ । ।

_______Sठाञ्ठ्JKव्_६,४.२४ः

अनिदितां अङ्गानां हलन्तानां उपधायाः नकारस्य लोपो भवति क्ङिति प्रत्यये परतः ।
स्रस्तः ।
ध्वस्तः ।
स्रस्यते ।
ध्वस्यते ।
सनीस्रस्यते ।
दनीध्वस्यते ।
अनिदितां इति किं ? नन्द्यते ।
नानन्द्यते ।
हलः इति किं ? नीयते ।
नेनीयते ।
उपधायाः इति किं ? नह्यते ।
नानह्यते ।
क्ङिति इति किं ? स्रंसिता ।
ध्वंसिता ।
अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसङ्ख्यानं कर्तव्यं ।
विलगितः ।
विकपितः ।
उपतापशरीरविकारयोः इति किं ? विलङ्गितः ।
विकम्पितः ।
रञ्जेर्णौ मृगरमण उपसङ्ख्यानं कर्तव्यं ।
रजयति मृगान् ।
जनीज्éष्क्नसुरञ्जोऽमन्ताश्च इति मित्त्वादुपधाह्रस्वत्वं ।
मृगरमण इति किं ? रञ्जयति वस्त्राणि ।
घिनुणि च रञ्जेरुपसङ्ख्यानं कर्तव्यं ।
रागी ।
त्यजरजभज इति निपातनाद्वा सिद्धं ।
रजकरजनरजःसूपसङ्ख्यानं कर्तव्यं ।
रजकः ।
रजनं ।
रजः । ।

---

[#७३८]

1. <दंश-सञ्ज-स्वञ्जां शपि># । । PS_६,४.२५ । ।

_______Sठाऽ्ठ्JKव्_६,४.२५ः

दंश सञ्ज ष्वञ्ज इत्येतेषां अङ्गानां शपि परत उपधाया नकारस्य लोपो भवति ।
दशति ।
सजति ।
परिष्वजते । ।

---

1. <रञ्जेश्च># । । PS_६,४.२६ । ।

_______Sठाऽ्ठ्JKव्_६,४.२६ः

रञ्जेश्च शपि परतः उपधायाः नकारस्य लोपो भवति ।
रजति, रजतः, रजन्ति ।
पृथग्योगकरनं उत्तरार्थं । ।

---

1. <घञि च भावकरनयोः># । । PS_६,४.२७ । ।

_______Sठाऽ्ठ्JKव्_६,४.२७ः

भावकरनवाचिनि घञि परतो रञ्जेः उपधाया नकारस्य लोपो भवति ।
भावे - आश्चर्यो रागः ।
विचित्रो रागः ।
करणे - रज्यते अनेन इति रागः ।
भावकरणयोः इति किं ? रजन्ति तस्मिन्निति रङ्गः । ।

---

1. <स्यदो जवे># । । PS_६,४.२८ । ।

_______Sठाऽ्ठ्JKव्_६,४.२८ः

जवेऽभिधेये स्यदः इति घञि निपात्यते ।
स्यन्देर्नलोपो वृद्ध्यभावश्च ।

इक्प्रकरणात्न धातुलोपः इति प्रतिषेधो न अस्ति।
गोस्यदः।
अश्वस्यदः।
जव इति किं? तैलस्यन्दः।
घृतस्यन्दः।।

---

1. <अवोद-एदः-ओद्म-प्रश्रथ-हिमश्रथाः>#।। PS_६,४.२९।।

_______Sठाऩ्ङ्JKव्_६,४.२९ः

अवोद एध ओद्म प्रश्रथ हिमश्रथ इत्येते निपात्यन्ते।
अवोद इति उन्देरवपूर्वस्य घञि नलोपो निपात्यते।
एध इति इन्धेर्घञि नलोपो गुणश्च निपात्यते।
न धातुलोप आर्धधातुके (*१,१.४) इति हि प्रतिषेधः स्याथ्।
ओद्म इति उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते।
प्रश्रथ इति प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभवश्च निपात्यते।
हिमश्रथ इति हिमपूर्वस्य श्रन्थेः घञ्येव निपातनं।।

---

1. <न अञ्चेः पूजायाम्>#।। PS_६,४.३०।।

_______Sठाऩ्ङ्JKव्_६,४.३०ः

अञ्चेः पूजायां अर्थे नकारस्य लोपो न भवति।
अञ्चिता अस्य गुराः।
अञ्चितं एव शिरो वहति।
अञ्चेः पूजयां (*७,२.५३) इति इडागमः।
पूजायां इति किं? उदक्तमुदकं कूपाथ्।
उद्घृतं इत्यर्थः।
यस्य विभाषा (*७,२.१५) इति इट्प्रतिषेधः।।

---

[#७३९]

1. <क्त्वि स्कन्दि-स्यन्दोः>#।। PS_६,४.३१।।

_______Sठाऩ्ङ्JKव्_६,४.३१ः

क्त्वाप्रयये परतः स्कन्द स्यन्द इत्येतयोर्नकारलोपो न भवति।
स्कन्त्वा।
स्यन्त्वा।
स्यन्देरूदित्वात्पक्षे इडागमः।
स्यन्दित्वा।

तत्र यदा इडागमः तदा न क्त्वा सेट्(*१,२.१८) इति कित्त्वप्रतिषेधादेव नलोपाभावः । ।

---

1. <जान्त-नशां विभाषा># । । PS_६,४.३२ । ।

_______Sठा~ठ्JKव्_६,४.३२ः

जान्तानां अङ्गानां नशेश्च क्त्वाप्रत्यये परतः विभाषा नकारलोपो न भवति ।
रङ्क्त्वा, रक्त्वा ।
भङ्क्त्वा, भक्त्वा ।
नश - नंष्ट्वा, नष्ट्वा ।
इट्पक्षे नशित्वा । ।

---

1. <भञ्जेश्च चिणि># । । PS_६,४.३३ । ।

_______Sठा~ठ्JKव्_६,४.३३ः

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति ।
अभाजि, अभञ्जि ।
अप्राप्तोऽयं नलोपः पक्षे विधीयते, ततो न इति न अनुवर्तते । ।

---

1. <शास इदङ्हलोः># । । PS_६,४.३४ । ।

_______Sठा~ठ्JKव्_६,४.३४ः

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति ।
अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् ।
हलादौ किति-शिष्टः ।
शिष्टवान् ।
ङिति - आवां शिष्वः ।
वयं शिष्मः ।
इत्त्वे कृते शासिवसिघसीनां च (*८,३.६०) इति षत्वं ।
अङ्हलोः इति किं ? शासति ।
शशासतुः ।
शशासुः ।
क्वौ च शास इत्त्वं भवति इति वक्तव्यं ।
आर्यान्शास्ति इति आर्यशीः ।
मित्रशीः ।
यस्मात्शासेः अङ्विहितः शासु अनुशिष्टौ इति, तस्य+एव+इदं ग्रहणं इष्यते ।
आङः शासु इच्छायां इति अस्य न भवति ।
आशास्ते ।

आशास्यमानः ।
क्विप्प्रत्यये तु तस्य अपि भवति इति वक्तव्यं ।
आशीः, आशिषौ, आशिषः ।
क्षियाशीःप्रैषेषु तिङाकाङ्क्षं (*८,२.१०४) इति निपातनाद्वा सिद्धं । ।

---

[#७४०]

1. <शा हौ># । । PS_६,४.३५ । ।

______Sठाञ्ठ्JKव्_६,४.३५ः

शासो हौ परतः शा इत्ययं आदेशो भवति ।
अनुशाधि ।
प्रशाधि ।
उपधायाः इति निवृत्तम्, ततः शासः इति स्थानेयोगा षष्ठी भवति ।
क्ङति एतदपि निवृत्तं ।
तेन यदा वा छन्दसि (*३,४.८८) इति पित्त्वं हिशब्दस्य तदा अप्यादेशो भवत्येव ।
शाधि इत्याद्युदात्तं अपि छन्दसि दृश्यते । ।

---

1. <हन्तेर्जः># । । PS_६,४.३६ । ।

______Sठाञ्ठ्JKव्_६,४.३६ः

हन्तेर्धातोः जः इत्ययं आदेशो भवति हौ परत ।
जहि शत्रून् । ।

---

1. <अनुदात्त-उपदेश-वनति-तनोत्य्-आदीनां अनुनासिकलोपो झलि क्ङिति># । । PS_६,४.३७ । ।

______Sठाञ्ठ्JKव्_६,४.३७ः

अनुदात्तोपदेशानां अङ्गानां वनतेः तनोत्यादीनां च अनुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः ।
यमु - यत्वा ।
यतः ।
यतवान् ।
यतिः ।
रमु - रत्वा ।
रतः ।
रतवान् ।
रतिः ।
अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः ।

वनति - वतिः ।
क्तिनो रूपं एतथ् ।
क्तिचि तु न क्तिचि दीर्घश्च (*६,४.३९) इति भवति ।
अन्यत्र झलादाविटा भवितव्यं ।
तनोत्यादयः - ततः ।
ततवान् ।
सनोतेरात्वं वक्ष्यति ।
क्षणु - क्षतः ।
क्षतवान् ।
ऋणु - ऋतः ।
ऋतवान् ।
तृणु - तृतः ।
तृतवान् ।
घृणु - घृतः ।
घृतवान् ।
वनु - वतः ।
वतवान् ।
मनु - मतः ।
मतवान् ।
ङिति - अतत ।
अतथाः ।
अनुदात्तोपदेशवनतितनोत्यादीनां इति किं ? शान्तः ।
शान्तवान् ।
तान्तः ।
तान्तवान् ।
दान्तः ।
दान्तवान् ।
अनुनासिकस्य इति किं ? पक्वः ।
पक्ववान् ।
झलि इति किं ? गम्यते ।
रम्यते ।
क्ङिति इति किं ? यन्ता ।
यन्तव्यं ।
उपदेशग्रहणं किं ? इह वयथा स्यात्, गतिः ।
इह च मा भूत्, शान्तः, शान्तवानिति । ।

---

1. <वा ल्यपि># । । PS_६,४.३८ । ।

______Sठाञ्ठ्JKव्_६,४.३८ः

ल्यपि परतः अनुदात्तोपदेशवनतितनोत्यादीनां अनुनासिकलोपः वा भवति ।
व्यवस्थितविभाषा च+इयम्, तेन मकारान्तानां विकल्पो भवति, अन्यत्र नित्यं एव लोपः ।
प्रयत्य, प्रयम्य ।
प्ररत्य, प्ररम्य ।
प्रणत्य, प्रणम्य ।
आगत्य, आगम्य ।
आहत्य ।
प्रमत्य ।
प्रवत्य ।
प्रक्षत्य । ।

---

1. <न क्तिचि दीर्घश्च># । । PS_६,४.३९ । ।

________Sठाऱ्ठ्JKव्_६,४.३९ः

क्तिचि परतोऽनुदात्तोपदेशादीनां अनुनासिकलोपः दीर्घश्च न भवति ।
यन्तिः ।
वन्तिः ।
तन्तिः ।
अनुनासिकलोपे प्रतिषिद्धे अनुनासिकस्य क्विझलोः क्ङिति (*६,४.१५) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते । ।

---

[#७४१]

1. <गमः क्वौ># । । PS_६,४.४० । ।

________Sठाऱ्ठ्JKव्_६,४.४०ः

गमः क्वौ परतः अनुनासिकलोपो भवति ।
अङ्गगथ् ।
कलिङ्गगथ् ।
अध्वगतो हरयः ।
गमादीनां इति वक्तव्यं ।
इह अपि यथा स्यात्, संयथ् ।
परीतथ् ।
ऊ च गमादीनां इति वक्तव्यं ।
अग्रेगूः ।
अग्रेभ्रूः । ।

---

1. <विड्-वनोरनुनासिकस्य आत्># । । PS_६,४.४१ । ।

________Sठाऱ्ठ्JKव्_६,४.४१ः

विटि वनि च प्रत्यये परतः अनुनासिकान्तस्य अङ्गस्य आकार आदेशो भवति ।
अब्जा गोजा ऋतजा अद्रिजा ।
गोषा इन्दो नृषा असि ।
कूपखाः ।
शतखाः ।
सहस्रखाः ।
दधिक्राः ।
अग्रेगा उन्नेतॄणां ।
जन-सन-खन-क्रम-गमो विट्(*३,२.६७) इति विट्प्रत्ययः ।
सनोतेरनः (*८,३.१०८) इति षत्वं गोषा इन्दो नृषा असि इत्यत्र ।

वन - विजावा ।
अग्रेजावा ।
अन्येभ्योऽपि दृश्यन्ते (*४,३.७५) इति वनिप्प्रत्ययः ।
अनुनासिकस्य इति वर्तमाने पुनरनुनासिकग्रहणं अनुनासिकामात्रपरिग्रहार्थम्, अन्यथा हि अनुदात्तोपदेशवनतितनोत्यादीनां एव स्यात् । ।

---

1. <जन-सन-खनां सञ्-झलोः># । । PS_६,४.४२ । ।

______Sठान्ठ्JKव्_६,४.४२ः

झलि क्ङिति इति च अनुवर्तते ।
जन सन खन इत्येतेषां अङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परतः आकार आदेशो भवति ।
जन्- जातः ।
जातवान् ।
जातिः ।
सन्- सनि सिषासति ।
सातः ।
सातवान् ।
सातिः ।
खन्- खातः ।
खातवान् ।
खातिः ।
झल्ग्रहणं सन्विशेषणार्थं किमर्थं अनुवर्त्यते ? इह मा भूत्, जिजनिषति ।
सिसनिषति ।
चिखनिषति ।
सनोतेः सनीवन्तर्ध इति पक्षे इडागमः ।
तदिह सनोत्यर्थं एव सङ्ग्रहणं ।
अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधादात्वं अनुनासिकलोपं बाधते ।
घुमस्थागापाजहातिसां हलि (*६,४.६६) इति हल्ग्रहणं ज्ञापकं अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवति इति । ।

---

[#७४२]

1. <ये विभाषा># । । PS_६,४.४३ । ।

______Sठान्ठ्JKव्_६,४.४३ः

यकारादौ क्ङिति प्रत्यये परतो जनसनखनां आकार आदेशो भवति विभाषा ।
जायते, जन्यते ।
जाजायते, जञ्जन्यते ।
सायते, सन्यते ।
सासायते, संसन्यते ।
खायते, खन्यते ।
चाखायते, चङ्खन्यते ।
जनेः श्यनि ज्ञा-जनोर्जा (*७,३.७९) इति नित्यं जादेशो भवति । ।

---

1. <तनोतेर्यकि># । । PS_६,४.४४ । ।

______Sठाऽ्ठJKव्_६,४.४४ः

तनोतेः यकि परतो विभाषा आकार आदेशो भवति ।
तायते, तन्यते ।
यकि इति किं ? तन्तन्यते । ।

---

1. <सनः क्तिचि लोपश्च अस्य अन्यतरस्याम्># । । PS_६,४.४५ । ।

______Sठाऽ्ठJKव्_६,४.४५ः

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति, लोपश्च अस्य अन्यतरस्यां ।
सातिः, सन्तिः, सतिः ।
अन्यतरस्यांग्रहणं विस्पष्टार्थम्, येसम्बद्धं हि विभाषाग्रहणं इति निवृत्तं इत्याशङ्क्येत । ।

---

1. <आर्धधातुके># । । PS_६,४.४६ । ।

______Sठाऽ्ठJKव्_६,४.४६ः

आर्धधातुके इत्यधिकारः ।
न ल्यपि (*६,४.६९) इति प्रागेतस्माद्यदित ऊर्ध्वं अनुक्रमिष्यामः आर्धहदातुके इत्येवं तद्वेदितव्यं ।
वक्ष्यति - अतो लोपः (*६,४.४८) ।
चिकिर्षता ।
जिहीर्षिता ।
आर्धधातुके इति किं ? भवति ।
भवतः ।
अदिप्रभृतिभ्यः शपो लुग्वचनं (*२,४.७२) प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यातित्येतन्न ज्ञापकं शपो लोपाभावस्य ।
यस्य हलः (*६,४.४९) ।
बेभिदिता ।
बेभिदितुं ।
बेभिदितव्यं ।
आर्धधातुके इति किं ? बेभिद्यते ।
णेरनिटि (*६,४.५१) ।
कारणा ।
हारणा ।
आर्धधातुके इति किं ? कारयति ।
हारयति ।
आतो लोप इटि च (*६,४.६४) ।
ययतुः ।

ययुः ।
ववतुः ।
ववुः ।
आर्धधातुके इति किं ? यान्ति ।
वान्ति ।
घुमास्थागापाजहातिसां हलि (*६,४.६६) ।
दीयते ।
धीयते ।
आर्धधातुके इति किं ? अदातां ।
अधातां ।
वाऽन्यस्य संयोगादेः (*६,४.६८) ।
स्नेयात्, स्नायाथ् ।
आर्धधातुके इति किं ? स्नायाथ् ।
आशीर्लिङोऽन्यत्र न भवति ।

[#७४३]

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट्च (*६,४.६२) ।
कारिषीष्ट ।
हारिषीष्ट ।
आर्धधातुके इति किं ? क्रियेत ।
ह्रियेत यगन्तस्य अजन्तत्वाच्चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक्प्रसज्येत ।
अतो लोपो यलोपश्च णिलोपश्च प्रयोजनं ।
आल्लोप ईत्वं एत्वं च चिण्वद्भवश्च सीयुटि । ।

---

1. <भ्रस्जो र-उपधयो रं अन्यतरस्याम्># । । PS_६,४.४७ । ।

______Sठा~ठ्JKव्_६,४.४७ः

भ्रस्जो रेफस्य उपधायाश्च रं अन्यतरस्यां भवति ।
रोपधयोः इति स्थानषष्ठीनिर्देशातुपधा रेफश्च निवर्तते ।
मित्त्वाच्च अयं अचोऽन्त्यात्परो भवति ।
भ्रष्टा, भर्ष्टा ।
भ्रष्टुम्, भर्ष्टुं ।
भ्रष्टव्यम्, भर्ष्टव्यं ।
भ्रजजनम्, भ्र्जनं ।
भृष्टः, भृष्टवानित्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति ।
उपदेशे इत्येव, बरीभृज्यते । ।

---

1. <अतो लोपः># । । PS_६,४.४८ । ।

______Sठा~ठ्JKव्_६,४.४८ः

अकारान्तस्य आर्धधातुके लोपो भवति ।
चिकीर्षिता ।

चिकीर्षितुं ।
चिकीर्षितव्यं ।
धिनुतः ।
कृणुतः ।
अतः इति किं ? चेता ।
स्तोता ।
तपरकरणं किं ? याता ।
वाता ।
आर्धाधातुके इति किं ? वृक्षत्वं ।
वृक्षता ।
वृद्धिदीर्घाभ्यां अतो लोपः पूर्वविप्रतिषेधेन ।
चिकीर्षकः ।
जिहीर्षकः ।
चिकीर्ष्यते ।
जिहीर्ष्यते । ।

---

1. <यस्य हलः># । । PS_६,४.४९ । ।

______Sठा‌ऽ्‌ठ्JKव्_६,४.४९ः

हल उत्तरस्य यशब्दस्य आर्धधातुके लोपो भवति ।
बेभिदिता ।
बेभिदितुं ।
बेभिदितव्यं ।
यस्य इति सङ्घातग्रहणं एतथ् ।
तत्र अलोऽन्त्यस्य (*१,१.५२) इत्येतन्न भवति, अतो लोपः (*६,४.४८) इति यकारोऽनेन लुप्यते ।
सङ्घातग्रहणं किं ? ईर्ष्यिता ।
मव्यिता ।
हलः इति किं ? लोलूयिता ।
पोपूयिता । ।

---

1. <क्यस्य विभाषा># । । PS_६,४.५० । ।

______Sठा‌ऽ्‌ठ्JKव्_६,४.५०ः

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके ।
समिध्यिता, समिधिता ।
दृषद्यिता, दृषदिता ।
समिधमात्मनः इच्छति, समिधं इव आत्मानं आचरति इति वा क्यच्क्यङौ यथायोगं कर्तव्यौ । ।

---

1. <णेरनिटि># । । PS_६,४.५१ । ।

_______Sठा-ठ्JKव्_६,४.५१ः

अनिडादावार्धधातुके णेर्लोपो भवति।
इयङ्यण्गुणवृद्धिदीर्घाणां अपवादः।
अततक्षथ्।
अररक्षथ्।
आशिशथ्।
आटिटथ्।
कारणा।
हारणा।
कारकः।
हारकः।
कार्यते।
हार्यते।
ज्ञीप्सति।
अनिटि इति किं? कारयिता।
हारयिता।।

---

[#७४४]

1. <निष्ठायां सेटि>#।। PS_६,४.५२।।

_______Sठा-ठ्JKव्_६,४.५२ः

निष्ठायां सेटि परतो णेर्लोपो भवति।
कारितं।
हारितं।
गणितं।
लक्षितं।
सेटि इति किं? संज्ञपितः पशुः।
सेड्ग्रहणसामर्थ्यादिह पूर्वेण अपि न भवति।
सनीवन्तर्ध (*७,२.४९) इति ज्ञपेरिटि विकल्पिते यस्य विभाषा (*७,२.१५) इति निष्ठायां प्रतिषेधः।
अथ पुनः एकाचः इति तत्र अनुवर्तते, तदा नित्यं अत्र भवितव्यं एव इडागमेन इति सेड्ग्रहणं अनर्थकं? तत्क्रियते कालावधारणार्थम्, इडागमे कृते णिलोपो यथा स्याथ्
।
अकृते हि तत्र णिलोपे सति कारितं इत्यत्र एकाच उपदेशेऽनुदात्तात्(*७,२.१०) इति इटः प्रतिषेधः प्रसज्येत।।

---

1. <जनिता मन्त्रे>#।। PS_६,४.५३।।

_______Sठा-ठ्JKव्_६,४.५३ः

जनिता इति मन्त्रविषये इडादौ णिलोपो निपात्यते।
यो नः पिता जनिता।
मन्त्रे इति किं? जनयिता।।

---

1. <शमिता यज्ञे># । । PS_६,४.५४ । ।

_______Sठाऽ्ठ्JKव्_६,४.५४ः

यज्ञकर्मणि शमिता इति इडादौ तृचि णिलोपो निपात्यते ।
शृतं हविः शमितः ।
तृचि सम्बुद्ध्यन्तं एतथ् ।
यज्ञे इति किं ? शृतं हविः शमयितः । ।

---

1. <अयाम्-अन्त-आल्व्-आय्य-इत्न्व्-इष्णुषु># । । PS_६,४.५५ । ।

_______Sठाऽ्ठ्JKव्_६,४.५५ः

आं अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परतः णेः अयादेशो भवति ।
कारयञ्चकार ।
हारयाञ्चकार ।
अन्त - गण्डयन्तः ।
मण्डयन्तः ।
आलु - स्पृहयालुः ।
गृहयालुः ।
आय्य - स्पृहयाय्यः ।
गृहयाय्यः ।
इत्नु - स्तनयित्नुः ।
इष्णु - पोषयिष्णुः ।
पारयिष्णवः ।
न इति वक्तव्ये अयादेशवचनं उत्तरार्थं । ।

---

1. <ल्यपि लघुपूर्वात्># । । PS_६,४.५६ । ।

_______Sठाऽ्ठ्JKव्_६,४.५६ः

ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेः अयादेशो भवति ।
प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दम्य्य गतः ।
प्रबेभिदय्य गतः ।
प्रगणय्य गतः ।
ह्रस्वयलोपाल्लोपानां असिद्धत्वं न भवति असमानाश्रयत्वात्, ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति ।
लघुपूर्वातिति किं ? प्रपात्य गतः । ।

---

1. <विभाषा+आपः># । । PS_६,४.५७ । ।

______Sठा~ठ्JKव्_६,४.५७ः

आप उत्तरस्य णेर्ल्यपि परतो विभाषा अयादेशो भवति ।
प्रापय्य गतः, प्राप्य गतः ।
इङादेशस्य लाक्षणिकत्वान्न भवति, अध्याप्य गतः । ।

---

[#७४५]

1. <यु-प्लुवोर्दीर्घश्छन्दसि># । । PS_६,४.५८ । ।

______Sठा~ठ्JKव्_६,४.५८ः

यु प्लु इत्येतयोर्ल्यपि परतः छन्दसि विषये दीर्घो भवति ।
दान्त्यनुपूर्वं वियूय ।
यत्रा यो दक्षिणा परिप्लूय ।
छन्दसि इति किं ? संयुत्य ।
आप्लुत्य । ।

---

1. <क्षियः># । । PS_६,४.५९ । ।

______Sठा~ठ्JKव्_६,४.५९ः

क्षियश्च दीर्घो भवति ल्यपि परतः ।
प्रक्षीय । ।

---

1. <नष्ठायां अण्यदर्थे># । । PS_६,४.६० । ।

______Sठा~ठ्JKव्_६,४.६०ः

ण्यतः कृत्यस्य अर्थो भावकर्मणी, ताभ्यां अन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति ।
आक्षीणः ।
प्रक्षीणः ।
परिक्षीणः ।

अकर्मकत्वात्क्षियः कर्तरि क्तः ।
प्रक्षीणं इदं देवदत्तस्य इति क्तोऽधिकरणे च ध्रौव्य-गति. प्रत्यवसानार्थेभ्यः (*३,४.७६) इत्यधिकरणे क्तः ।
अण्यदर्थे इति किं ? अक्षितमसि मा मेक्षेष्ठाः ।
क्षितं इति भावे दीर्घाभावात्क्षियो दीर्घात्(*८,२.४६) इति निष्ठानत्वं अपि न भवति । ।

---

1. <वा+आक्रोश-दैन्ययोः># । । PS_६,४.६१ । ।

_______Sठान्ठ्JKव्_६,४.६१ः

आक्रोशे गम्यमाने दैन्ये च क्षियो निष्ठायां अण्यदर्थे वा दीर्घो भवति ।
क्षितायुरेधि, क्षीणायुरेधि ।
दैन्ये - क्षितकः, क्षीणकः ।
क्षितोऽयं तपस्वी, क्षीणोऽयं तपस्वी । ।

---

1. <स्य-सिच्-सीयुट्-तासिषु भाव-कर्मणोरुपदेशेऽज्-झन-ग्रह-दृशां वा चिण्वद्-इट्च># । । PS_६,४.६२ । ।

_______Sठान्ठ्JKव्_६,४.६२ः

स्व सिच्सीयुट्तासि इत्येतेषु भावकर्मविषयेषु परत उपदेशे अजन्तानां अङ्गानां हन्ग्रः दृशित्येतेषां च चिण्वत्कार्यं भवति वा ।
यदा चिण्वत्तदा इडागमो भवति ।
कस्य ? स्यसिच्सीयुट्तासीनां एव इति वेदितव्यं ।
ते हि प्रकृताः ।
अङ्गस्य तु लक्ष्यविरोधात्न क्रियते ।
कानि पुनरस्य योगस्य प्रयोजनानि ? चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्च+उक्तो यो मितां वा चिणीति ।
इट्च असिद्धस्तेन मे लुप्यते णिर्नित्यश्च अयं वल्निमित्तो विघाती । ।

[#७४६]
अजन्तानां तावत्- चायिष्यते, चेष्यते ।
अचायिष्यत, अचेष्यत ।
दायिष्यते, दास्यते ।
अदायिष्यत, अदास्यत ।
शामिष्यते, शमिश्यते, शमयिस्यते ।
अशामिष्यत, अशमिष्यत अशमयिष्यत ।
हन्- घानिष्यते, हनिष्यते ।
अघानिष्यत, अहनिष्यत ।
ग्रः - ग्राहिष्यते, ग्रहीष्यते ।
अग्राहिष्यत, अग्रहीष्यत ।
ग्रहोऽलिटि दीर्घः (*७,२.३७) इति प्रकृतस्य इटो दीर्घत्वं ।
दृश्- दर्शिष्यते, द्रक्ष्यते ।
अदर्शिष्यत, अद्रक्ष्यत ।
सिचि अजन्तानां - अचायिषाताम्, अचेषातां ।
अदायिषाताम्, अदिषातां ।
अशामिषातम्, अशमिषातम्, अशमयिषातां ।
हन्- अघानिषाताम्, अवधिषाताम्, अहसातां ।

ग्रः - अग्राहिषाताम्, अग्रहीषातां ।
दृश्- अदर्शिषाताम्, अदृक्षातां ।
सीयुटि अजन्तानां - चायिषीष्त, चेषीष्ट ।
दायिषीष्ट, दासीष्ट ।
शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट ।
हन्- घानिषीष्ट, वधिषीष्ट ।
ग्रः - ग्राहिषीष्ट, ग्रहीषीष्ट ।
दृश्- दर्शिषीष्ट, दृक्षीष्ट ।
तासावजन्तानां - चायिता, चेता ।
दायिता, दाता ।
शामिता, शमिता, शमयित ।
हन्- घानिता, हन्ता ।
ग्रः - ग्राहिता, ग्रहीता ।
दृश्- दर्शिता, द्रष्टा ।
स्यसिच्सीयुट्तासिषु इति किं ? चेतव्यं ।
दातव्यं ।
भावकर्मणोः इति किं ? चेष्यति ।
दास्यति ।
उपदेशे इति किं ? कारिष्यते इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद्भवति ।
अज्झनग्रहदृशां इति किं ? पठिष्यते ।
अङ्गाधिकारविहितं कार्यं इह अतिदिश्यते, तेन हनिणिङामादेशा न भवन्ति ।
हनिष्यते, घानिष्यते ।
एष्यते, आयिष्यते ।
अध्येष्यते, अध्यायिष्यते ।
हनो वध लिङि (*२,४.४२), लुङि च (*२,४.४३), इणो गा लुङि (*२,४.४५), विभाषा लुङ्लृङोः (*२,४.५०) इत्येते विधयो न भवन्ति । ।

---

1. <दीङो युडचि क्ङिति># । । PS_६,४.६३ । ।

______Sठान्ठ्JKव्_६,४.६३ः

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः ।
उपदिदीये, उपदिदीयाते, उपदिदीयिरे ।
दीङः इति पञ्चमीनिर्देशादजादेर्युडागमो भवति ।
विधानसामर्थ्याच्च एरनेक-अचोऽसंयोगपूर्वस्य (*६,४.८२) इति यणादेशे कर्तव्ये तस्य सिद्धत्वं न भवति ।
अचि इति किं ? उपदेदीयते ।
क्ङिति इति किं ? उपदानं । ।

---

1. <आतो लोप इटि च># । । PS_६,४.६४ । ।

______Sठान्ठ्JKव्_६,४.६४ः

इट्यजादावार्धधातुके क्ङिति च आकारान्तस्य अङ्गस्य लोपो भवति ।
इटि - पपिथ ।
तस्थिथ ।
किति - पपतुः ।

पपुः ।
तस्थतुः ।
तस्थुः ।
गोदः ।
कम्बलदः ।
ङिति - प्रदा ।
प्रधा ।
आर्धधातुके इत्येव, यान्ति ।
वान्ति ।
व्यत्यरे ।
व्यत्यले ।
रातेर्लातेश्च लङि इटि रूपं ।
अचि इत्येव, ग्लायते ।
दासीय । ।

---

[#७४७]

1. <ईद्यति># । । PS_६,४.६५ । ।

______Sठा-ठ्JKव्_६,४.६५ः

ईकारः आदेशो भवति आकारन्तस्य अङ्गस्य यति परतः ।
देयं ।
धेयं ।
हेयं ।
स्तेयं । ।

---

1. <घु-मा-स्था-गा-पा-जहाति-सा हलि># । । PS_६,४.६६ । ।

______Sठा-ठ्JKव्_६,४.६६ः

घुसञ्ज्ञाकानां अङ्गानां, मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परतः ईकारादेशो भवति ।
दीयते ।
धीयते ।
देदीयते ।
देधीयते ।
मीयते ।
मेमीयते ।
स्थीयते ।
तेष्टःईयते ।
गीयते ।
जेगीयते ।
अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत ।
पीयते ।
पेपीयते ।

पातेरिह ग्रहणं न अस्ति, लुग्विकरणत्वाथ् ।
पायते इत्येव तस्य भवति ।
हीयते ।
जेहीयते ।
जहातेरिह निर्देशात्जिहातेर्ग्रहणं न भवति ।
हायते ।
षोऽन्तकर्मणि ।
अवसीयते ।
अवसेसीयते ।
हलि इति किं ? ददतुः ।
ददुः ।
आतो लोपाद्धि परत्वादीत्वं स्याथ् ।
एतदेव हल्ग्रहणं ज्ञापकं अस्मिन्प्रकरणे विप्रतिषेधेन असिद्धत्वं भवति ।
क्ङिति इत्येव, दाता ।
धाता । ।

---

1. <एर्लिङि># । । PS_६,४.६७ । ।

______Sठा~ठ्JKव्_६,४.६७ः

घुमास्थागापाजहातिसामङ्गानां लिङि परतः एकारादेशो भवति ।
देयाथ् ।
धेया ।
मेयाथ् ।
स्थेयाथ् ।
गेयाथ् ।
पेयाथ् ।
हेयाथ् ।
अवसेयाथ् ।
क्ङिति इत्येव, दासीष्ट ।
धासीष्ट । ।

---

1. <वाऽन्यस्य संयोग-आदेः># । । PS_६,४.६८ । ।

______Sठा~ठ्JKव्_६,४.६८ः

घ्वादिभ्यः अन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः ।
ग्लेयात्, ग्लायाथ् ।
म्लेयात्, म्लायाथ् ।
अन्यस्य इति किं ? स्थेयाथ् ।
संयोगादेः इति किं ? यायाथ् ।
क्ङिति इत्येव, ग्लासिष्ट ।
अङ्गस्य इत्येव, निर्वायात् । ।

---

1. <न ल्यपि># । । PS_६,४.६९ । ।

______Sठा~ठ्JKव्_६,४.६९ः

ल्यपि प्रत्यये परतः घुमास्थागापाजहातिसां यदुक्तं तन्न ।
प्रदाय ।
प्रधाय ।
प्रमाय ।
प्रस्थाय ।
प्रगाय ।
प्रपाय ।
प्रहाय ।
अवसाय । ।

---

1. <मयतेरिद्-अन्यतरस्याम्># । । PS_६,४.७० । ।

______Sठा~ठ्JKव्_६,४.७०ः

मयतेरिकारादेशो वा भवति ल्यपि परतः ।
अपमित्य, अपमाय । ।

---

[#७४८]

1. <लुङ्-लङ्-लृङ्-क्ष्वड्-उदात्तः># । । PS_६,४.७१ । ।

______Sठा~ठ्JKव्_६,४.७१ः

लुङ्लङ्लृङित्येतेषु परतोऽङ्गस्य अडागमो भवति, उदात्तश्च स भवति ।
लुङ्- अकार्षीथ् ।
अहार्षीथ् ।
लङ्- अकरोथ् ।
अहरथ् ।
लृङ्- अकरिष्यथ् ।
अहरिष्यत् । ।

---

1. <आडज्-आदीनाम्># । । PS_६,४.७२ । ।

______Sठा~ठ्JKव्_६,४.७२ः

आडागमो भवति अजादीनां लुङ्-लङ्-लृङ्-क्षु परतः, उदात्तश्च स भवति ।
ऐक्षिष्ट ।
ऐहिष्ट ।
औब्जीथ् ।
ॐभीथ् ।
लङ्- ऐक्षत ।
ऐहत ।
औब्जथ् ।
ॐभथ् ।
लृङ्- ऐक्षिष्यत ।
ऐहिष्यत ।
औब्जिष्यथ् ।
ॐभिष्यथ् ।
इह ऐज्यत, औप्यत, औह्यत इति लङि कृते लावस्थायां अडागमादन्तरङ्गत्वाल्लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते ।
शब्दान्तरप्राप्तेरडागमस्य अनित्यत्वम्, कृते हि विकरणान्तस्य अङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ।
ननु शब्दान्तरादिति विकरणोऽनित्यः ? विकरणे कृते सम्प्रसारणं अडागमान्नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातं इति आडजादीनां इत्याडागमः ।
।

---

1. <छन्दस्यपि दृश्यते># । । PS_६,४.७३ । ।

______Sठा~ठ्JKव्_६,४.७३ः

छन्दसि विषये आडागमो दृश्यते ।
यत्र हि विहितः ततोऽन्यत्र अपि दृश्यते ।
आडजादीनां (*६,४.७२) इत्युक्तम्, अनजादीनां अपि दृश्यते ।
सुरुचो वेन आवः ।
आनक् ।
आयुनक् ।
आवः इति वृञो लुङि मन्त्रे घसह्वर इति लेर्लुकि कृते च भवति ।
तथा आनकिति नशेः ।
आयुनकिति युजेर्लङि । ।

---

1. <न माङ्योगे># । । PS_६,४.७४ । ।

______Sठा~ठ्JKव्_६,४.७४ः

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति ।
मा भवान्कार्षीथ् ।
मा भवान्हार्षीथ् ।
मा स्म करोथ् ।
मा स्म हरथ् ।

मा भवानीहिष्ट ।
मा भवानीक्षिष्ट ।
मा स्म भवानीहत ।
मा स्म भवानीक्षत । ।

---

1. <बहुलं छन्दस्यमाङ्योगेऽपि># । । PS_६,४.७५ । ।

______Sठाऩ्ठ्JKव्_६,४.७५ः

छन्दसि विषये माङ्योगेऽपि बहुलं अडाटौ भवतः, अमाङ्योगेऽपि न भवतः ।
अमाङ्योगे तावत्- जनिष्ठा उग्रः ।
काममूनयीः ।
काममर्दयीथ् ।
माङ्योगेऽपि भवतः - मा वः क्षेत्रे परबीजान्यवाप्सुः ।
मा अभित्थाः ।
मा आवः । ।

---

[#७४९]

1. <इरयो रे># । । PS_६,४.७६ । ।

______Sठाऩ्ठ्JKव्_६,४.७६ः

इरे इत्येतस्य छदसि विषये बहुलं रे इत्ययं आदेशो भवति ।
गर्भं प्रथमं दध्र आपः ।
याऽस्य परिदध्रे ।
धात्रो रेभावस्य असिद्धत्वादातो लोपो भवति ।
न च भवति ।
परमाया धियोऽग्निकर्माणि चक्रिरे ।
अत्र रेशब्दस्य सेटों धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थं इरयोः इत्ययं द्विवचननिर्देशः । ।

---

1. <अचि श्नु-धातु-भ्रुवां य्-वोरियङ्-उवङौ># । । PS_६,४.७७ । ।

______Sठाऩ्ठ्JKव्_६,४.७७ः

श्नुप्रत्ययान्तस्य अङ्गस्य धातोः इवर्ण-उवर्णान्तस्य भ्रु इत्येतस्य इयङुवङित्येतावादेशौ भवतोऽजादौ प्रत्यये परतः ।
आप्नुवन्ति ।
राध्नुवन्ति ।
शक्नुवन्ति ।

धातोः - चिक्षियतुः ।
चिक्षियुः ।
लुलुवतुः ।
लुलुवुः ।
नियौ ।
नियः ।
लुवौ ।
लुवः ।
भ्रुवौ ।
भ्रुवः ।
अचि इति किं ? आप्नुयाथ् ।
शक्नुयाथ् ।
साध्नुयाथ् ।
श्नुधातुभ्रुवां इति किं ? लक्ष्म्यौ ।
वध्वै ।
य्वोः इति किं ? चक्रतुः ।
चक्रुः ।
इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन ।
चयनं ।
चायकः ।
लवनं ।
लावकः ।
इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलं उपसङ्ख्यानं कर्तव्यं ।
तन्वं पुषेम ।
तनुवं पुषेम ।
विष्वं पुषेम ।
विषुवं पुषेम ।
स्वर्गो लोकः ।
सुवर्गो लोकः ।
त्र्यम्बकं यजामहे ।
त्रियम्बकं यजामहे । ।

---

1. <अभ्यासस्य असवर्णे># । । PS_६,४.७८ । ।

______Sठान्ठ्JKव्_६,४.७८ः

अभ्यासस्य इवर्णोवर्णान्तस्य अवसर्णेऽचि परतः इयङुवङित्येतावादेशौ भवतः ।
इयेष ।
उवोष ।
इयर्ति ।
असवर्णे इति किं ? ईषतुः ।
ईषुः ।
ऊषतुः ।
ऊषुः ।
अचि इत्येव, इयाज ।
उवाप । ।

---

1. <स्त्रियाः># । । PS_६,४.७९ । ।

_______Sठा~ठ्JKव्_६,४.७९ः

स्त्री इत्येतस्य अजादौ प्रत्यये परतः इयङादेशो भवति ।
स्त्री, स्त्रियौ, स्त्रियः ।
स्त्रीणां इत्यत्र परत्वानुडागमः ।
पृथग्योगकरणं उत्तरार्थं । ।

---

1. <वाऽंशसोः># । । PS_६,४.८० । ।

_______Sठा~ठ्JKव्_६,४.८०ः
अमि शसि परतः स्त्रियां वा इयङादेशो भवति ।
स्त्रीं पश्य, स्त्रियं पश्य ।
स्त्रीः पश्य, स्त्रियः पश्य । ।

---

[#७५०]

1. <इणो यण्># । । PS_६,४.८१ । ।

_______Sठा~ठ्JKव्_६,४.८१ः

इणोऽङ्गस्य यणादेशो भवति अचि परतः ।
यन्ति ।
यन्तु ।
आयन् ।
इयङादेशापवदोऽयं ।
मध्येऽपवदाः पूर्वान्विधीन्बाधन्ते इति गुणवृद्धिभ्यां परत्वादयं बाध्यते ।
अयनं ।
आयकः । ।

---

1. <एरनेकाचोऽसम्योगपूर्वस्य># । । PS_६,४.८२ । ।

_______Sठा~ठ्JKव्_६,४.८२ः

धातोः इति वर्तते, तेन संयोगो विशेष्यते ।
धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान भवति असावसंयोगपूर्वः, तदन्तस्य अङ्गस्य अनेकाचोऽचि परतो यणादेशो भवति ।
निन्यतुः ।
निन्युः ।

उन्न्यौ।
उन्न्यः।
ग्रामण्यौ।
ग्रामण्यः।
एः इति किं ? असंयोगपूर्वग्रहणं इवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूतिति।
लुलुवतुः, लुलुवुः इत्येतत्तु ओः सुपि (*६,४.८३) इति नियमादपि सिध्यति।
अनेकाचः इति किं ? नियौ।
नियः।
असंयोगपूर्वस्य इति किं ? यवक्रियौ।
यवक्रियः।
धातुना संयोगविशेषणं किं ? इह अपि स्यादुन्न्यौ, उन्न्यः इति।
गतिकारकाभ्यां अन्यपूर्वस्य नेष्यते, परमनियौ, परमनियः इति।।

---

1. <ओः सुपि>#।। PS_६,४.८३।।

______Sठा्ठ्JKव्_६,४.८३ः

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान्न भवति, तदन्तस्य अङ्गस्य अनेकाचः अजादौ सुपि परतो यणादेशो भवति।
खलप्वौ।
खलप्वः।
शतस्वौ।
शतस्वः।
सकृल्ल्वौ।
सकृल्ल्वः।
सुपि इति किं ? लुलुवतुः।
लुलुवुः।
अनेकाचः इत्येव, लुवौ।
लुवः।
असंयोगपूर्वस्य इत्येव, कटप्रुवौ।
कटप्रुवः।
गतिकारकाभ्यां अन्यपूर्वस्य न+इष्यते, परमलुवौ।
परमलुवः।।

---

1. <वर्षाभ्वश्च>#।। PS_६,४.८४।।

______Sठा्ठ्JKव्_६,४.८४ः

वर्षाभू इत्येतस्य अजादौ सुपि परतो यणादेशो भवति।
वर्षाभ्वौ।
वर्षाभ्वः।
पुनर्भ्वश्चेति वक्तव्यं।
पुनर्भ्वौ।
पुनर्भ्वः।
कारापूर्वस्यापीष्यते।
काराभ्वौ।

काराभ्वः । ।

---

1. <न भूसुधियोः># । । PS_६,४.८५ । ।

_______Sठाऱ्ठ्JKव्_६,४.८५ः

भू सुधी इत्येतयोर्यणादेशो न भवति ।
प्रतिभुवौ ।
प्रतिभुवः ।
सुधियौ ।
सुधियः । ।

---

1. <छन्दस्युभयथा># । । PS_६,४.८६ । ।

_______Sठाऱ्ठ्JKव्_६,४.८६ः

छन्दसि विषये भू सुधि इत्येतयोः उभयथा दृश्यते ।
वनेषु चित्र विभ्वं विशे ।
विभुवं विशे ।
सुध्यो हव्यमग्ने ।
सुधियो हव्यमग्ने । ।

---

[#७५१]

1. <हुश्नुवोः सार्वधातुके># । । PS_६,४.८७ । ।

_______Sठाऱ्ठ्JKव्_६,४.८७ः

हु इत्येतस्य अङ्गस्य श्नुप्रत्ययान्तस्य अनेकाचः असंयोगपूर्वस्य अजादौ सार्वधातुके परतो यणादेशो भवति ।
जुह्वति ।
जुह्वतु ।
जुह्वथ् ।
सुन्वन्ति ।
सुन्वन्तु ।
असुन्वन् ।
हुश्नुवोः इति किं ? योयुवति ।
रोरुवति ।
इदं एव हुश्नुग्रहणं ज्ञापकं भाषायां अपि यङ्लुगस्ति इति ।
छन्दसि छन्दस्युभयथा (*६,४.८६) इत्यार्धधातुकत्वादेव यणादेशस्य अप्रसङ्गः ।
नच यङ्लुगन्तादयत्प्रत्युदाहरणं उवर्णान्तं अनेकाचसंयोगपूर्वं सार्वधातुके विद्यते ।

सार्वधातुके इति किं ? जुहुवतुः ।
जुहुवुः ।
असंयोगपूर्वस्य इत्येव, आप्नुवन्ति ।
राध्नुवन्ति ।।

---

1. <भुवो वुग्लुङ्लिटोः># ।। PS_६,४.८८ ।।

______Sठार्ठ्JKव्_६,४.८८ः

भुवो वुगागमो भवति लुङि लिटि च अजादौ परतः ।
अभूवन् ।
अभूवं लिट्- बभूव, बभूवतुः, बभवुः ।।

---

1. <ऊदुपधाया गोहः># ।। PS_६,४.८९ ।।

______Sठार्ठ्JKव्_६,४.८९ः

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः ।
निगूहति ।
निगूहकः ।
साधुनिगूही ।
निगूहंनिगूहं ।
निगूहन्ति ।
गूहो वर्तते ।
उपधायाः इति किं ? अलः अन्त्यस्य मा भूथ् ।
गोहः इति विकृतग्रहणं विषयार्थं ।
यत्र अस्य+एतद्रूपं तत्र+एव यथा स्याथ् ।
इह मा भूत्, निजुगुहतुः ।
निजुगुहुः ।
अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति ।
निगूह्य गतः इत्यूत्वस्य असिद्धत्वाद्ल्यपि लघुपूर्वादिति णेरयादेशः स्याथ् ।
व्याश्रयत्वादेव असिद्धत्वं अत्र न अस्ति, णावूत्वं, ण्यन्तस्य च ल्यप्ययादेश इति ।
अचि इत्येव, निगोढा ।
निगोढुं ।।

---

1. <दोषो णौ># ।। PS_६,४.९० ।।

______Sठार्ठ्JKव्_६,४.९०ः

दोषः उपधाया ऊकारः आदेशो भवति णौ परतः ।

दूषयति, दुषयतः, दूषयन्ति ।
विकृतग्रहणं प्रक्रमाभेदार्थं ।
पूर्वत्र हि गोहः इत्युक्तं ।
णौ इति किं ? दोषो वर्तते । ।

---

1. <वा चित्तविरागे># । । PS_६,४.९१ । ।

______Sठाऌ्JKव्_६,४.९१ः

चित्तविकरार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः ।
चित्तं दूषयति, चित्तं दोषयति ।
प्रज्ञां दूषयति, प्रज्ञां दोषयति । ।

---

[#७५२]

1. <मितां ह्रस्वः># । । PS_६,४.९२ । ।

______Sठाऌ्JKव्_६,४.९२ः
मितो धातवः घटादयो मितः इत्येवं आदयो ये प्रतिपादिताः, तेषां उपधाया ह्रस्वो भवति णौ परतः ।
घटयति ।
व्यथयति ।
जनयति ।
रजयति ।
शमयति ।
ज्ञपयति ।
केचिदत्र वा इत्यनुवर्तयन्ति ।
सा च व्यवस्थितविभाषा ।
तेन उत्क्रामयति, सङ्क्रामयति इत्येवं आदि सिद्धं भवति । ।

---

1. <चिण्-णमुलोर्दीर्घोऽन्यतरस्याम्># । । PS_६,४.९३ । ।

______Sठाऌ्JKव्_६,४.९३ः

चिण्परे णमुल्परे च णौ परतः मितां अङ्गानां उपधायाः दीर्घो भवति अन्यतरस्यां ।
अशमि, अशामि ।
अतमि, अतामि ।
शमंशमम्, शामंशामं ।
तमन्तमम्, तामन्तामं ।
दीर्घग्रहणं किं, न ह्रस्वविकल्प एव विधीयते ? न+एवं शक्यम्, शमयन्तं प्रयुङ्क्ते इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात् ।

णिलोपस्य स्थानिवद्भावाद्दीर्घविधौ त्वजादेशो न स्थानिवथ् ।
शयमन्तं प्रयुक्तवान् ।
अशमि, अशामि ।
शमंशमम्, शामंशामं ।
शंशमयतेः - अशंशमि, अशंशामि ।
शंशमंशंशमम्, शंशामंशंशामं ।
योऽसौ णौ णिर्लुप्यते, यश्च यङ्कारः, तयोर्दिर्घविधौ आदेशो न स्थानिवद्भवति इति अस्थानिवद्भावात्दीर्घः सिद्धो भवति ।
ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्याथ् ।
णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव ।
व्याश्रयत्वादसिद्धत्वं अपि न अस्ति ।
णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वं । ।

---

1. <खचि ह्रस्वः># । । PS_६,४.९४ । ।

______Sठा०्ठ्JKव्_६,४.९४ः

खच्परे णौ परतो ह्रस्वो भवति अङ्गस्य उपधायाः ।
द्विषन्तपः ।
परन्तपः ।
पुरंदरः । ।

---

1. <ह्लादो निष्ठायाम्># । । PS_६,४.९५ । ।

______Sठा०्ठ्JKव्_६,४.९५ः

ह्लादोऽङ्गस्य उपधायाः ह्रस्वो भवति निष्ठायां परतः ।
प्रह्लन्नः ।
प्रह्लन्नवान् ।
निष्ठायां इति किं ? प्रह्लादयति ।
ह्लादः इति योगविभागः क्रियते, क्तिन्यपि यथा स्तात्, प्रह्लत्तिः इति । ।

---

1. <छादेर्घेऽद्व्य्-उपसर्गस्य># । । PS_६,४.९६ । ।

______Sठा०्ठ्JKव्_६,४.९६ः

छादेरङ्गस्य अद्व्युपसर्गस्य घप्रत्यये परतः उपधायाः ह्रस्वो भवति ।
उरश्छदः प्रच्छदः ।
दन्तच्छदः ।
णिलोपस्य असिद्धत्वं स्थानिवद्भावो वावचनसामर्थ्यादत्र न भवति इति ह्रस्वभाविनी उपधा भवति ।
अद्व्युपसर्गस्य इति किं ? समुपच्छादः ।

अद्विप्रभृत्युपसर्गस्य इति वक्तव्यं।
समुपातिच्छादः।
उत्तरा हि सङ्ख्या पूर्वसङ्ख्याकृतं व्यपदेशं निवर्तयति, नहि त्रिपुत्रो द्विपुत्रः इति व्यपदिश्यते।।

---

[#७५३]

1. <इस्-मन्-त्रन्-क्विषु च>#।। PS_६,४.९७।।

______Sठान्ठ्JKव्_६,४.९७ः

इस्मन्त्रन्क्वि इत्येतेषु परतः छादेः उपधायाः ह्रस्वो भवति।
छदिः।
छद्म।
छन्त्त्रं।
धामच्छथ्।
उपच्छत्।।

---

1. <गम-हन-जन-खन-घसां लोपः क्ङित्यनङि>#।। PS_६,४.९८।।

______Sठान्ठ्JKव्_६,४.९८ः

गम हन जन खा घस इत्येतेषां अङ्गानां उपधाया लोपो भवत्यजादौ प्रत्यये क्ङिति अनङि परतः।
जग्मतुः।
जग्मुः।
जघ्नतुः।
जघ्नुः।
जज्ञे, जज्ञाते, जज्ञिरे।
चख्नतुः।
चख्नुः।
जक्षतुः।
जक्षुः।
अक्षन्पितरोऽमोमदन्त पितरः।
क्ङिति इति किं? गमनं।
हननं।
अनङि इति किं? अगमथ्।
अघसथ्।
अचि इत्येव, गम्यते।
हन्यते।।

---

1. <तनि-पत्योश्छन्दसि>#।। PS_६,४.९९।।

_______Sठान्ठ्JKव्_६,४.९९ः

तनि पति इत्येतयोः छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः ।
वितत्निरे कवयः ।
शकुना इव पप्तिम ।
छन्दसि इति किं ? वितेनिरे ।
पेतिम । ।

---

1. <घसि-भसोर्हलि च># । । PS_६,४.१०० । ।

_______Sठान्ठ्JKव्_६,४.१००ः
घसि भस इत्येतयोः छन्दसि उपधाया लोपो भवति लहादौ अजादौ च क्गिति प्रत्यये परतः ।
सग्धिश्च मे सपीतिश्च मे ।
बब्धां ते हरी धानाः ।
सग्धिः इति अदेः क्तिनि बहुलं छन्दसि इति घस्लादेशे उपधायाः लोपे च कृते झलो झलि (*८,२.२६) इति सकारलोपः ।
धत्वं तकारस्य, जश्त्वं घकारस्य ।
ततः समाना ग्धिः सग्धिः इति समासे कृते समानस्य सभावः ।
बब्धां इति भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि ।
द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति, छान्दसत्वात्स तथा न क्रियते ।
अजादौ - बप्सति ।
क्ङिति इत्येव, अंशून्बभस्ति । ।

---

1. <हु-झल्भ्यो हेर्धिः># । । PS_६,४.१०१ । ।

_______Sठान्ठ्JKव्_६,४.१०१ः

हु इत्येतस्माद्झलन्तेभ्यस्च+उत्तरस्य हलादेः हेः स्थाने धिरादेशो भवति ।
जुहुधि ।
झलन्तेभ्यः - भिन्धि ।
छिन्धि ।
हुझल्भ्यः इति किं ? क्रीणीहि ।
प्रीणीहि ।
हेः इति किं ? जुहुतां ।
हलि इत्येव, रुदिहि ।
स्वपिहि ।
इह जुहुतात्, भिन्तात्त्वं इति परत्वात्तातङि कृते सकृद्गतौ विप्रतिषेधेन यद्बधितं तद्बाधितं एव इति पुनः धिभावो न भवति ।
भिन्धकि, छिन्धकि इत्यत्र परत्वाद्धिभावे कृते पुनः प्रसङ्गविज्ञानादकच्क्रियते । ।

---

[#७५४]

1. <श्रु-शृणु-प्é-कृ-वृभ्यश्छन्दसि># । । PS_६,४.१०२ । ।

______Sठाण्ड्JKव्_६,४.१०२ः

श्रु शृणु प्é कृ वृ इत्येतेभ्य उत्तरस्य हेः धिरादेशो हवति छन्दसि विषये ।
श्रुधी हवमिन्द्र ।
शृणुधी गिरः ।
पूर्धि ।
उरु णस्कृधि ।
अपा वृधि ।
शृणुधि इत्यत्र धिभावविधानसामार्थ्यादुतश्च प्रत्ययातिति हेर्लुक्न भवति ।
अन्येषां अपि दृश्यते इति दीर्घत्वं ।
अतोऽन्यत्र व्यत्ययो बहुलं इति शप्, तस्य बहुलं छन्दसि इति लुक् । ।

---

1. <अङितश्च># । । PS_६,४.१०३ । ।

______Sठाण्ड्JKव्_६,४.१०३ः

अङितश्च हेर्धिरादेशो भवति ।
वा छन्दसि इति पित्वेनास्य अङित्त्वं ।
सोमं रारन्दः ।
असमभ्यं तद्धर्यश्व प्रयन्धि ।
युयोध्यस्मज्जुहुराणमेनः ।
अङितः इति किं ? हवयं प्रीणीहि ।
रारन्धि इति रमेर्व्यत्ययेन परस्मैपदं , शपः श्लु, अभ्यासदीर्घत्वं छान्दसत्वाथ् ।
मलोपाभावस्तु अङित्त्वादेव ।
प्रयन्धि इति यमेः शपो लुक् ।
युयोधि इति यौतेः शपः श्लुः । ।

---

1. <चिणो लुक्># । । PS_६,४.१०४ । ।

______Sठाण्ड्JKव्_६,४.१०४ः

चिण उत्तरस्य प्रत्ययस्य लुग्भवति ।
अकारि ।
अहारि ।
अलावि ।
अपाचि ।
अकारितराम्, अहारितमां इत्यत्र तलोपस्य असिद्धत्वात्तरप्तमपोर्न लुग्भवति ।
चिणो लुकित्येतद्विषयभेदाद्भिद्यते । ।

---

1. <अतो हेः># । । PS_६,४.१०५ । ।

_______Sठा~ठ्JKव्_६,४.१०५ः

अकारान्तादङ्गादुत्तरस्य हेः लुग्भवति ।
पच ।
पठ ।
गच्छ ।
धाव ।
अतः इति किं ? युहि ।
रुहि ।
तपरकरणं किं ? लुनीहि ।
पुनीहि ।
ईत्वस्य असिद्धत्वादकार एव भवति । ।

---

1. <उतश्च प्रत्ययादसंयोगपूर्वात्># । । PS_६,४.१०६ । ।

_______Sठा~ठ्JKव्_६,४.१०६ः

उकारो योऽसंयोगपूर्वः तदन्तात्प्रत्ययादुत्तरस्य हेर्लुक्भवति ।
चिनु ।
सुनु ।
कुरु ।
उतः इति किं ? लुनीहि ।
पुनीहि ।
प्रत्ययातिति किं ? युहि ।
रुहि ।
असंयोगपूर्वातिति किं ? प्राप्नुहि ।
राध्नुहि ।
तक्ष्णुहि ।
उतश्च प्रत्ययाच्छन्दोवावचनं ।
उतश्च प्रत्ययादित्यत्र छन्दसि वा इति वक्तव्यं ।
आतनुहि यातुधानान् ।
धिनुहि यज्ञपतिं ।
तेन मा भगिनं कृणु । ।

---

[#७५५]

1. <लोपश्च अस्य अन्यतरस्यां ंवोः># । । PS_६,४.१०७ । ।

_______Sठा॒ठ्JKव्_६,४.१०७ः

योऽयं उकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्य अन्यतरस्यां लोपो भवति वकारं अकारादौ प्रत्यये परतः।
सुन्वः, सुनुवः।
सुन्मः, सुनुमः।
तन्वः, तनुवः।
तन्मः, अनुमः।
प्रत्ययस्य इत्येव, युवः।
युमः।
असंयोगपूर्वस्य इत्येव, शक्नुवः।
शक्नुमः।
लुकिति वर्तमाने लोपग्रहणं अन्त्यलोपार्थं।।

---

1. <नित्यं करोतेः>#।।PS_६,४.१०८।।

_______Sठा॒ठ्JKव्_६,४.१०८ः

करोतेः उत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतः नित्यं लोपो भवति।
कुर्वः।
कुर्मः।
उकारलोपस्य दीर्घविधौ अस्थानिवद्भावाद्हलि च (*८,२.७७) इति दीर्घत्वं प्राप्तम्, न भकुर्छुरां (*८,२.७१) इति प्रतिषिध्यते।।

---

1. <ये च>#।।PS_६,४.१०९।।

_______Sठा॒ठ्JKव्_६,४.१०९ः

यकारादौच प्रत्यये परतः करोतेः उत्तरस्य उकारप्रत्ययस्य नित्यं लोपो भवति।
कुर्यात्, कुर्याताम्, कुर्युः।।

---

1. <अत उत्सार्वधातुके>#।।PS_६,४.११०।।

_______Sठा॒ठ्JKव्_६,४.११०ः
उकारप्रत्ययान्तस्य करोतेः अकारस्य स्थाने उकारः आदेशो भवति सार्वधातुके क्ङिति परतः।
कुरुतः।
कुर्वन्ति।
सार्वधातुकग्रहणं किं? भूतपूर्वेऽपि सार्वधातुके यथा स्यात्, कुरु।
तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थं।

क्ङिति इत्येव, करोति ।
करोषि ।
करोमि । ।

---

1. <श्नसोरल्लोपः># । । PS_६,४.१११ । ।

______Sठा~ठ्JKव्_६,४.१११ः

श्नस्य अस्तेश्च अकारस्य लोपो भवति सार्वधातुके क्ङिति परतः ।
रुन्धः ।
रुन्धन्ति ।
भिन्तः ।
भिन्दन्ति ।
अस्तेः - स्तः ।
सन्ति ।
क्ङिति इत्येव - भिनत्ति ।
अस्ति ।
श्नसोः इति आकारस्य पररूपत्वं शकन्ध्वादिसु द्रष्टव्यं । ।

---

1. <श्ना-अभ्यस्तयोरातः># । । PS_६,४.११२ । ।

______Sठा~ठ्JKव्_६,४.११२ः

श्ना इत्येतस्य अभ्यस्तानां च अङ्गानां आकारस्य लोपो भवति सार्वधातुके क्ङिति परतः ।
लुनते ।
लुनतां ।
अलुनत ।
अभ्यस्तानां - मिमते ।
मिमतां ।
अमिमत ।
संजिहते ।
संजिहतां ।
समजिहत ।
श्नाभ्यस्तयोः इति किं ? यान्ति ।
वान्ति ।
आतः इति किं ? बिभ्रति ।
क्ङिति इत्येव, अलुनाथ् ।
अजहाथ् ।
आद्ग्रहणं स्पष्टार्थं । ।

---

[#७५६]

1. <ई हल्यधोः># । । PS_६,४.११३ । ।

______Sठा~ठ्JKव्_६,४.११३ः

श्नान्तानां अङ्गानां अभ्यस्तानां च घुवर्जितानां आतः ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः ।
लुनीतः ।
पुनीतः ।
लुनीथः ।
पुनीथः ।
लुनीते ।
पुनीते ।
अभ्यस्तानां - मिमीते ।
मिमीषे ।
मिमीध्वे ।
संजिहीते ।
संजिहीषे ।
संजिहीध्वे ।
हलि इति किं ? लुनन्ति ।
मिमते ।
अघोः इति किं ? दत्तः ।
धत्तः ।
क्ङिति इत्येव, लुनाति ।
जहाति । ।

---

1. <इद्दरिद्रस्य># । । PS_६,४.११४ । ।

______Sठा~ठ्JKव्_६,४.११४ः

दरिद्रातेः हलादौ सार्वधातुके क्ङिति परतः इकरादेशो भवति ।
दरिद्रितः दरिद्रिथः ।
दरिद्रिवः ।
दरिद्रिमः ।
हलि इत्येव, दरिद्रति ।
क्ङिति इत्येव, दरिद्राति ।
दरिद्रातेरार्धधातुके लोपो वक्तव्यः ।
सिद्धश्च प्रत्ययविधौ भवति इति वक्तव्यं ।
दरिद्राति इति दरिद्रः ।
आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति ।
न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा । ।
अद्यतन्यां वेति वक्तव्यं ।
अदरिद्रीत्, अदरिद्रासीथ् ।
दरिद्रस्य इति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यं । ।

---

1. <भियोऽन्यतरस्याम्># । । PS_६,४.११५ । ।

______Sठाऱ्ठ्JKव्_६,४.११५ः

भी इत्येतस्य अङ्गस्य अन्यतरस्यां इकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः ।
बिभितः, बिभीतः ।
बिभिथः, बिभीथः ।
बिभिवः, बिभीवः ।
बिभिमः, बिभीमः ।
हलादौ इत्येव, विभ्यति ।
क्ङिति इत्येव, बिभेति ।
सार्वधातुके इत्येव, भीयते । ।

---

1. <जहातेश्च># । । PS_६,४.११६ । ।

______Sठाऱ्ठ्JKव्_६,४.११६ः

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः ।
जहितः, जहीतः ।
जहिथः, जहीथः ।
हलादौ इत्येव, जहति ।
क्ङिति इत्येव, जहाति ।
सार्वधातुके इत्येव, हीयते ।
जेहीयते ।
पृथग्योगकरणं उत्तरर्थं । ।

---

[#७५७]

1. <आ च हौ># । । PS_६,४.११७ । ।

______Sठाऱ्ठ्JKव्_६,४.११७ः

जहातेराकारश्च अन्तादेशो भवति इकारश्च अन्यतरस्यां हौ परतः ।
जहाहि, जहिहि, जहीहि । ।

---

1. <लोपो यि># । । PS_६,४.११८ । ।

_______Sठाऽ्ठ्JKव्_६,४.११८ः

लोपो भवति जहातेः यकारादौ क्ङिति सार्वधातुके परतः ।

[#७५६]

जह्यात्, जह्याताम्, जह्युः । ।

---

[#७५७]

1. <घ्व्-असोरेद्-धावभ्यासलोपश्च># । । PS_६,४.११९ । ।

_______Sठाऽ्ठ्JKव्_६,४.११९ः

घुसञ्ज्ञाकानां अङ्गानां अस्तेश्च एकारादेशो भवति हौ परतः अभ्यासलोपश्च ।
देहि ।
धेहि ।
अस्तेः - श्न-सोरल्-लोपः (*६,४.१११) ।
इत्यकारलोपः, एधि ।
शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति । ।

---

1. <अत एकहल्मध्येऽनादेशादेर्लिटि># । । PS_६,४.१२० । ।

_______Sठाऽ्ठ्JKव्_६,४.१२०ः

लिटि परत आदेशः आदिर्यस्य अङ्गस्य न अस्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति, अभ्यासलोपः च लिटि क्ङिति परतः ।
रेणतुः ।
रेणुः ।
येमतुः ।
येमुः ।
पेचतुः ।
पेचुः ।
देमतुः ।
देमुः ।
अतः इति किं ? दिदिवतुः ।
दिदिवुः ।
तपरकरणं किं ? ररासे, ररासाते, ररासिरे ।
एकहल्मध्ये इति किं ? शश्रमतुः ।
शश्रमुः ।
तत्सरतुः ।
तत्सरुः ।
अनादेशादेः इति किं ? चकणतुः ।
चकणुः ।

जगणतुः ।
जगणुः ।
बभणतुः ।
बभणुः ।
लिटः आदेशविशेषणं किं ? इह अपि यथा स्यात्, नेमतुः ।
नेमुः ।
सेहे, सेहाते, सेहिरे ।
अनैमित्तिके नत्वसत्वे, तदादिर्लिटि आदेशादिर्न भवति ।
इह अभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर्भवति ।
तथा च फलिभजोरेत्वं विधीयते ।
रूपाभेदे चादेशादिर्न अश्रीयते इति शसिदद्योः प्रतिषेधवचनं ज्ञापकं ।
अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुः इत्येवं आदीनां अपि प्रकृतिजश्चरादीनां एत्वं न स्याथ् ।
क्ङिति इत्येव, अहं पपच ।
अहं पपठ ।
दम्भेरेत्वं वक्तव्यं ।
देभतुः ।
देभुः ।
नलोपस्य असिद्धत्वान्न प्राप्नोति ।
नशिमन्योरलिट्येत्वं वक्तव्यं ।
अनेशं ।
मेनका ।
अनेशं इति नशेः लुङि पुषादित्वादङ् ।
मेनका इति मनेः आशिषि च (*३,१.१५०) इति वुन् ।
क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ।

[#७५८]

छन्दस्यमिपचोरप्यलिट्येत्वं वक्तव्यं ।
व्येमानं ।
अमेर्विपूर्वस्य चानशि मुक्न क्रियते ।
लिङि-पेचिरन् ।
पचेरनित्येतस्य छान्दसं ह्रस्वत्वं ।
यजिवप्योश्च ।
आयेजे ।
आवेपे ।
लङि इटि छन्दस्यपि दृश्यते (*६,४.७३) इति अनजादेरपि इडागमः । ।

---

1. <थलि च सेति># । । PS_६,४.१२१ । ।

______Sठान्ठ्JKव्_६,४.१२१ः

थलि च सेटि परतोऽनादेशादेः अङ्गस्य एकहल्मध्यगतस्य अतः स्थाने एकार आदेशो भवति, अभ्यासलोपश्च ।
पेचिथ ।
शेकिथ ।
सेटि इति किं ? पपक्थ ।
थल्ग्रहणं विस्पष्टार्थं ।
अक्ङिदर्थं एतद्वचनं इति अन्यस्येटोऽसम्भवाथ् ।
अतः इत्येव, दिदेविथ ।
एकहल्मध्यगतस्य इत्येव, ततक्षिथ ।
ररक्षिथ ।
अनादेशादेरित्येव, चकणिथ ।

बभणिथ । ।

---

1. <तṛ-फल-भज-त्रपश्च># । । PS_६,४.१२२ । ।

______Sठाऱ्ठJKव्_६,४.१२२ः

तṛ फल भज त्रप इत्येतेषां अङ्गानां अत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि ।
तेरतुः ।
तेरुः ।
तेरिथ ।
फेलतुः ।
फेलुः ।
फेलिथ ।
भेजतुः ।
भेजुः ।
भेजिथ ।
त्रेपे, त्रेपाते, त्रेपिरे ।
तरतेर्गुणार्थं वचनं ।
फलिभजोरादेशाद्यर्थं ।
त्रपेरनेकहल्मध्यार्थं ।
श्रन्थेश्च+इति वक्तव्यं ।
श्रेथतुः ।
श्रेथुः । ।

---

1. <रधो हिंसायाम्># । । PS_६,४.१२३ । ।

______Sठाऱ्ठJKव्_६,४.१२३ः

राधः हिंसायामर्थेऽवर्णस्य एकारः आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि ।
अपरेधतुः ।
अपरेधुः ।
अपरेधिथ ।
हिंसायां इति किं ? रराधतुः ।
रराधुः ।
रराधिथ ।
अतः इत्येतदिह+उपस्थितं तपरत्वकृतमपास्य कालविशेषं असम्भवादवर्णमात्रं प्रतिपादयति ।
अथ वा श्नाभ्यस्तयोरातः (*६,४.११२) इत्यनुवर्तते इति व्याख्येयं ।
एकहल्मध्ये वा यः स स्थानी भविष्यति । ।

---

1. <वा जṝ-भ्रमु-त्रसाम्># । । PS_६,४.१२४ । ।

______Sठाञ्ठ्JKव्_६,४.१२४ः

ज्é भ्रमु त्रस इत्येतेषां अङ्गानां अतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि।
जेरतुः।
जेरुः।
जेरिथ।
जजरतुः।
जजरुः।
जजरिथ।
भ्रेमतुः।
भ्रेमुः।
भ्रेमिथ।
बभ्रमतुः।
बभ्रमुः।
बभ्रमिथ।
त्रेसतुः।
त्रेसुः।
त्रेसिथ।
तत्रसतुः।
तत्रसुः।
तत्रसिथ।।

---

[#७५९]

1. <फणां च सप्तानाम्>#।। PS_६,४.१२५।।

______Sठाञ्ठ्JKव्_६,४.१२५ः

फणादीनां सप्तानां धातूनां अवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि।
फेणतुः।
फेणुः।
फेणिथ।
पफणतुः।
पफणुः।
पफणिथ।
रेजतुः।
रेजुः।
रेजिथ।
रराजतुः।
रराजुः।
रराजिथ।
भ्रेजे, भ्रेजाते, भ्रेजिरे।
बभ्राजे, बभ्राजाते, बभ्राजिरे।
भ्रेशे, भ्रेशाते, भ्रेशिरे।
बभ्राशे, बभ्राशाते, बभ्राशिरे।
भ्लेशे, भ्लेशाते, भ्लेशिरे।
बभ्लाशे, बभ्लाशाते, बभ्लाशिरे।
स्येमतुः।
स्येमुः।

स्येमिथ ।
सस्यमतुः ।
सस्यमुः ।
सस्यमिथ ।
स्वेनतुः ।
स्वेनुः ।
स्वेनिथ ।
सस्वनतुः ।
सस्वनुः ।
सस्वनिथ ।
सप्तानां इति किं ? दध्बनतुः ।
दध्बनुः ।
दध्वनिथ । ।

---

1. <न शस-दद-व्-आदि-गुणानाम्># । । PS_६,४.१२६ । ।

______Sठा-ठ्JKव्_६,४.१२६ः

शस दद इत्येतयोः वकारादीनां च धातूनां गुण इत्येवं अभिनिर्वृत्तस्य च योऽकारः तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च ।
विशशसतुः ।
विशशसुः ।
विशशसिथ ।
दददे, दददाते, ददरिरे ।
वादीनां - ववमतुः ।
ववमुः ।
ववमिथ ।
गुणस्य - विशशरतुः ।
विशशरुः ।
विशशरिथ ।
लुलविथ ।
पुपविथ ।
गुणशब्दाभिनिर्वृत्तस्य अर्शब्दस्य ओकारस्य च अयं अकारः इति एत्वं प्रतिषिध्यते । ।

---

1. <अर्वणस्त्र्-असाव्-अनञः># । । PS_६,४.१२७ । ।

______Sठा-ठ्JKव्_६,४.१२७ः

अर्वनित्येतस्य अङ्गस्य तृ इत्ययं आदेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति ।
अर्वन्तौ ।
अर्वन्तः ।
अर्वन्तम्, अर्वतौ, अर्वतः ।
अर्वता, अर्वद्भ्याम्, अर्वद्भिः ।
अर्वती ।
आर्वतं ।
असौ इति किं ? अर्वा ।

अनञः इति किं ? अनर्वाणौ ।
अनर्वाणः ।
अनर्वाणं वृषभं मन्द्रजिह्वं । ।

---

1. <मघवा बहुलम्># । । PS_६,४.१२८ । ।

______Sठाञ्ठ्JKव्_६,४.१२८ः

मघवनित्येतस्य अङ्गस्य बहुलं तृ इत्ययं आदेशो भवति ।
मघवान्, मघवन्तौ, मघवन्तः ।
मघवन्तम्, मघवन्तौ, मघवतः ।
मघवता ।
मघवती ।
माघवतं ।
न च भवति ।
मघवा, मघवानौ, मघवानः ।
मघवानम्, मघवानौ, मघोनः ।
मघोना, मघवभ्याम्, मघवभिः ।
मघोनी ।
माघवनं । ।

---

1. <भस्य># । । PS_६,४.१२९ । ।

______Sठाञ्ठ्JKव्_६,४.१२९ः

भस्य इत्ययं अधिकारः आ अध्यायपरिसमाअप्तेः ।
यदित ऊर्ध्वं अनुकमिष्यामः भस्य इत्येवं तद्वेदिव्यं ।

---

1. <वक्ष्यति - पादः पत्># । । PS_६,४.१३० । ।

______Sठाञ्ठ्JKव्_६,४.१३०ः

द्विपदः पश्य ।
द्विपदा कृतं ।
भस्य इति किं ? द्विपादौ ।
द्विपादः । ।

[#७६०]

पादः पत्(*६,४.१३०) ।
पादः इति पादशब्दो लुप्ताकारो गृह्यते ।
तदन्तस्य अङ्गस्य भस्य पतित्ययं आदेशो भवति ।
स च निर्दिश्यमानस्यादेशा भवन्ति इति पाच्छब्दस्य+एव भवति, न तदन्तस्य सर्वस्य ।
द्विपदः पश्य ।
द्विपदा ।
द्विपदे ।
द्विपदिकां ददाति ।
त्रिपदिकां ददाति ।
वैयाघ्रपद्यः । ।

---

1. <वसोः सम्प्रसारणं># । । PS_६,४.१३१ । ।

______Sठा-ठ्JKव्_६,४.१३१ः

वस्वन्तस्य भस्य सम्प्रसारणं भवति ।
विदुषः पश्य ।
विदुषा ।
विदुषे ।
पेचुषः ।
पश्य ।
पेचुषा ।
पेचुषे ।
पपुषः पश्य ।
आकारलोपे कर्तव्ये वसुसंप्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति ।
वसुग्रहणे क्वसोरपि ग्रहणं इष्यते । ।

---

1. <वाह ऊटः># । । PS_६,४.१३२ । ।

______Sठा-ठ्JKव्_६,४.१३२ः

वाहः इत्येवं अन्तस्य भस्य ऊटः इत्येतत्सम्प्रसारणं भवति ।
प्रष्ठौहः ।
प्रष्ठौहा ।
प्रष्ठौहे ।
दित्यौहः ।
दित्यौहा ।
दित्यौहे ।
एत्य्-एधत्य्-ऊठ्सु (*६,१.८९) इति वृद्धिः ।
अथ किमर्थमूटः क्रियते, सम्प्रसारणे एव कृते गुणे च वृद्धिरेचि (*६,१.८८) इति वृद्धौ सत्यां सिद्धं रूपं भवति प्रष्ठौहः इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते ? ज्ञापनार्थं ।
एतज्ज्ञापयति, भवत्येषा परिभाषा असिद्धं बहिरङ्गं अन्तरङ्गे इति ।
तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्य असिद्धत्वातन्तरङ्गो गुणो न स्यात् । ।

---

1. <श्व-युव-मघोनां अतद्धिते># । । PS_६,४.१३३ । ।

______Sठाऱ्ठ्JKव्_६,४.१३३ः

श्वन्युवन्मघवनित्येतेषां अङ्गानां अतद्धिते प्रत्यये परतः सम्प्रसारणं भवति ।
शुनः ।
शुना ।
शुने ।
यूनः ।
यूना ।
यूने ।
मघोनः ।
मघोना ।
मघोने ।
अतद्धिते इति किं ? शौवं मांसं ।
यौवनं वर्तते ।
माघवनः स्थालीपाकः ।
शुनो विकारे प्राणिरजतादिभ्योऽञ्(*४,३.१५४), द्वारादित्वादैजागमः ।
श्वादीनां एतत्सम्प्रसारणं नकारान्तानां इष्यते ।
इह न भवति, युवतीः पश्य ।
मघवतः ।
मघवता ।
मघवते ।
तदर्थं उत्तरत्र योगविभागं कुर्वन्ति ।
अल्लोपः ।
अनः ।
अनः इत्युभयोः शेषः इति । ।

---

1. <अल्-लोपोऽनः># । । PS_६,४.१३४ । ।

______Sठाऱ्ठ्JKव्_६,४.१३४ः

अनित्येवं अन्तस्य भस्य अकारलोपो भवति ।
राज्ञः पश्य ।
राज्ञा ।
राज्ञे ।
तक्ष्णः पश्य ।
तक्ष्णा ।
तक्ष्णे ।
अनो नकारान्तस्याय लोप इष्यते ।
इह न भवति, राजकीयं इति । ।

---

[#७६१]

1. <षपूर्व-हन्-धृतराज्ञां अणि># । । PS_६,४.१३५ । ।

_______Sठाऱ्ठ्JKव्_६,४.१३५ः
षकारपूर्वो यः अन्हनः धृतराज्ञश्च तस्य अकारलोपो भवति अणि परतः ।
औक्ष्णः ।
ताक्ष्णः ।
भ्रौणघ्नः ।
धार्तराज्ञः ।
षपूर्वहन्धृतराज्ञां इति किं ? सामनः ।
वैमनः ।
अनिति प्रकृतिभावेन अल्लोपटिलोपौ उभावपि न भवतः ।
अणि इति किं ? ताक्षण्यः । ।

---

1. <विभाषा ङिश्योः># । । PS_६,४.१३६ । ।

_______Sठाऱ्ठ्JKव्_६,४.१३६ः

ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति ।
राज्ञि, राजनि ।
साम्नि, सामनि ।
साम्नी, सामनी । ।

---

1. <न संयोगाद्व-म्-अन्तात्># । । PS_६,४.१३७ । ।

_______Sठाऱ्ठ्JKव्_६,४.१३७ः

वकार-मकारान्तात्संयोगादुत्तरस्य अनः अकारस्य लोपो न भवति ।
पर्वणा ।
पर्वणे ।
अथर्वणा ।
अथर्वणे ।
संयोगातिति किं ? प्रतिदीव्ना ।
प्रतिदीव्ने ।
साम्ना ।
साम्ने ।
वमन्तातिति किं ? तक्ष्णा ।
तक्ष्णे । ।

---

1. <अचः># । । PS_६,४.१३८ । ।

_______Sठा्ठ्JKव्_६,४.१३८ः

अचः इत्ययं अञ्चतिर्लुप्तनकारो गृह्यते ।
तदन्तस्य भस्य अकारस्य लोपो भवति ।
दधीचः पश्य ।
दधीचा ।
दधीचे ।
मधूचः पश्य ।
मधूचा ।
मधूचे । ।

---

1. <उद ईत्># । । PS_६,४.१३९ । ।

_______Sठा्ठ्JKव्_६,४.१३९ः

उदः उत्तरस्य अचः ईकारादेशो भवति ।
उदीचः ।
उदीचा ।
उदीचे । ।

---

1. <आतो धातोः># । । PS_६,४.१४० । ।

_______Sठा्ठ्JKव्_६,४.१४०ः

आकारान्तस्य धातोः भस्य लोपो भवति ।
कीलालपः पश्य ।
कीलालपा ।
कीललपे ।
शुभंयः पश्य ।
शुभंया ।
शुभंये ।
आतः इति किं ? निया ।
निये ।
धातोः इति किं ? खट्वाः पश्य ।
मालाः पश्य ।
आतः इति योगविभागः, तेन क्त्वो ल्यप्, हलः श्नः शानचित्येवं आदि सिद्धं भवति । ।

---

[#७६२]

1. <मन्त्रेष्वाङ्यादेरात्मनः># । । PS_६,४.१४१ । ।

______Sठा¬ठ्JKव्_६,४.१४१ः

मन्त्रेषु आङि परतः आत्मनः आदेर्लोपो भवति ।
त्मना देवेभ्यः ।
त्मना सोमेषु ।
मन्त्रेषु इति किं ? आत्मना कृतं ।
आङि इति किं ? यदात्मनस्तन्नो वरिष्ठा ।
आगोऽन्यत्र अपि दृश्यते ।
त्मन्या समञ्जन् । ।

---

1. <ति विंशतेर्डिति># । । PS_६,४.१४२ । ।

______Sठा¬ठ्JKव्_६,४.१४२ः

भस्य विंशतेः तिशब्दस्यडिति प्रत्यये लोपो भवति ।
विंशत्या क्रीतः विंशकः ।
विंशं शतं ।
विंशतेः पूर्णो विंशः ।
एकविंशः ।
डिति इति किं ? विंशत्या । ।

---

1. <टेः># । । PS_६,४.१४३ । ।

______Sठा¬ठ्JKव्_६,४.१४३ः

टिसञ्ज्ञकस्य डिति प्रत्यये परतः लोपो भवति ।
कुमुद्वान् ।
नड्वान् ।
वेतस्वान् ।
उपसरजः ।
मन्दुरजः ।
त्रिंशता क्रीतः त्रिंशकः ।
डिति अभस्य अपि अनुबन्धकरणसामर्थ्यत्टिलोपो भवति । ।

1. <नस्तद्धिते># । । PS_६,४.१४४ । ।

______Sठा॒ठ्JKव्_६,४.१४४ः

नकारान्तस्य भस्य टेः लोपो भवति तद्धिते परतः ।
आग्निशर्मिः ।
औडुलोमिः ।
बाह्वादित्वादिञ्प्रत्ययः ।
नः इति किं ? सात्वतः ।
तद्धिते इति किं ? शर्मणा ।
शर्मने ।
नानतस्य टिलोपे सब्रह्मचारि-पीठसर्पि-कलापि-कुथुमि. तैतिलि-जाजलिलाङ्ग-लिशिलालि-शिखण्डि-सूकरसद्म-सुपर्वणां उपसङ्ख्यानं कर्तव्यं ।
अत्र ये इन्नन्ताः तेषां इनण्यनपत्ये (*६,४.१६४) इति प्रकृतिभावः प्राप्तः, ये तु अनन्ताः तेषां अन्(*६,४.१६७) इति ।
सब्रह्मचारिणः इमे साब्रह्मचाराः, पीठसर्पिणः पैठसर्पाः ।
कलापिना प्रोक्तमधीयते कालापाः, कुथुमिनः कौथुमाः ।
तैतिलिजाजलिनौ आचार्यौ, तत्कृतो ग्रन्थः उपचारात्तैतिलिजाजलिशब्दाभ्यां अभिधीयते, तं ग्रन्थमधीयते तैतिलाः, जाजलाः ।
शैशिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति ।
एवं लाङ्गलाः ।
शैलालाः ।

[#७६३]

शिखण्डिनः शैखण्डाः ।
सूकरसद्मनः सौकरसद्माः ।
सुपर्वणः सौपर्णाः ।
अश्मनो विकार उपसङ्ख्यानं ।
अश्मनो विकारः आश्मः ।
अश्मनोऽन्यः ।
चर्मणः कोश उपसङ्ख्यानं ।
चार्मः कोशः ।
चार्मणोऽन्यः ।
शुनः सङ्कोच उपसङ्ख्यानं ।
शौवः सङ्कोचः ।
शौवनोऽन्यः ।
अव्ययानां च सायंप्रतिकाद्यर्थं उपसङ्ख्यानं ।
के पुनः सायंप्रातिकादयः ? येषां अव्ययानां अविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायंप्रातिकप्रकाराः ग्रहीतव्याः ।
सायंप्रातर्भवः सायंप्रातिकः ।
पौनःपुनिकः ।
बाह्यः ।
कौतस्कुतः ।
कालाट्ठञ्(*४,३.११) इति ठञ्प्रत्ययः ।
ट्युट्युलौ तु नेष्येते ।
आरातीयः, शाश्वतिकः, शाश्वतः इत्येवं आदिषु न दृश्यते टिलोपः । ।

---

1. <अह्नष्ट-खेरेव># । । PS_६,४.१४५ । ।

_______Sठा~ठ्JKव्_६,४.१४५ः

अहनित्येतस्य टखोरेव परतः टिलोपो भवति।
द्वे अहनी समाहृते द्व्यहः त्र्यहः।
द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः।
त्र्यहीनः।
अह्नां समूहः क्रतुः अहीनः।
अह्नः समूहे खो वक्तव्यः।
सिद्धे सति आरम्भो नियमार्थः।
इह मा भूत्, अह्ना निर्वृत्तं आह्निकं।
एवकारकरणं विस्पष्टार्थं।
अह्नः एव टखोः इत्येवं नियमो न भविस्यति, आत्माध्वानौ खे (*६,१.१६९) इति प्रकृतिभावविधानात्।।

---

1. <ओर्गुणः>#।। PS_६,४.१४६।।

_______Sठा~ठ्JKव्_६,४.१४६ः
उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः।
बाभ्रव्यः।
माण्डव्यः।
शङ्कव्यं दारु।
पिचव्यः कार्पासः।
कमण्डलव्या मृत्तिका।
परशव्यमयः।
औपगवः।
कापटवः।
ओरोतिति वक्तव्ये गुणग्रहणं सञ्ज्ञापूर्वको विधिरनित्यो यथा स्यात्, तेन स्वायम्भुवः इति सिद्धं भवति।।

---

[#७६४]

1. <ढे लोपोऽकद्र्वाः>#।। PS_६,४.१४७।।

_______Sठा~ठ्JKव्_६,४.१४७ः

ढे परतः उवर्णान्तस्य भस्य अकर्वाः लोपो भवति।
कामण्डलेयः।
शैतवाहेयः।
जांवेयः।
माद्रबाहेयः।
अकद्र्वाः इति किं? काद्रवेयो मन्त्रं अपश्यत्।।

---

1. <यस्य+इति च># । । PS_६,४.१४८ । ।

_______Sठान्ठ्JKव्_६,४.१४८ः

इवर्णान्तस्य अवर्णातस्य च भस्य इकारे परे तद्धिते च लोपो भवति ।
इवर्णान्तस्य ईकारे - दाक्षी ।
प्लाक्षी ।
सखी ।
सवर्नदीर्घत्वे हि सति अतिसखेरागच्छति इत्यत्र एकादेशस्य अन्तवत्त्वादस्खि इति घिसञ्ज्ञायाः प्रतिषेधः स्याथ् ।
इवर्णान्तस्य तद्धिते - दुलि - दौलेयः ।
वलि - वालेयः ।
अत्रि - आत्रेयः ।
अवर्णान्तस्य ईकारे - कुमारी ।
गौरी ।
शार्ङ्गरवी ।
अवर्णान्तस्य तद्धिते - दाक्षिः ।
प्लाक्षिः ।
चौडिः ।
बालाकिः ।
स्ॐइत्रिः ।
यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः ।
काण्डे ।
कुड्ये ।
सौर्ये हिमवतः शृङ्गे ।
औङः शीभावे कृते यस्य+इति च इति, सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः (*६,४.१४९) इति च लोपः प्राप्नोति ।
इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन ।
वत्सान्प्रीणाति वत्सप्रीः, तस्य अपत्यं वात्सप्रेयः ।
चतुष्पाद्भ्यो डञ्(*४,१.१३५) इति ढञ्प्रत्ययः ।
लोखाभ्रूः शुभ्रादिः, तस्याः अपत्यं लैखाभ्रेयः । ।

---

1. <सूर्य-तिष्य-अगस्त्य-मत्स्यानां य उपधायाः># । । PS_६,४.१४९ । ।

_______Sठान्ठ्JKव्_६,४.१४९ः

सूर्य तिस्य अगस्त्य मत्स्य इत्येतेषां यकारस्य उपधायाः भस्य लोपो भवति ईति परतस्तद्धिते च ।
सूर्येणैकदिक्सौरी बलाका ।
अणि यो यस्य+इति लोपः तस्य असिद्धत्वं न अस्ति, व्याश्रयत्वाथ् ।
ईकारे तु यस्तस्या - सिद्धत्वादुपधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धी इति लुप्यते ।
तिष्य तैष्महः ।
तैषी रात्रिः ।
अगस्त्य - अगस्त्यस्य अपत्यं स्त्री, ऋषित्वादणि कृते आगस्ती ।
आगस्तीयः ।
मत्स्य - गौरादित्वात्ङीष्, मत्सी ।
उपधायाः इति किं ? मत्स्यचरी ।
यग्रहणं उत्तरार्थं ।
विषयपरिगणनं अत्र कर्तव्यं ।

[#७६५]

मत्स्यस्य ङ्यां इति वक्तव्यं ।
इह मा भूत्, मत्स्यस्य+इदं मांसं मात्स्यं ।
सूर्यागस्त्ययोश्छे च ग्यां च ।
सौरीयः ।
सौरी ।
आगस्तीयः ।
आगस्ती ।
इह मा भूत्, सौर्यं चरुं निर्वपेथ् ।
आगस्त्यः ।
तिष्यपुष्ययोर्नक्षत्राणि ।
तिष्येण नक्षत्रेण युक्तः कालः तैषः ।
पौषः ।
अन्तिकस्य तसि कादिलोप आद्युदात्तं च ।
अन्तिकशब्दस्य तसिप्रत्यये परतः ककारदेः शब्दस्य लोपः, आद्युदात्तत्वं च ।
अन्तितो न दूराथ् ।
तमे तादेश्च ।
तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः ।
तत्र तादिलोपे - अन्तमः ।
कादिलोपे - अन्तितमः ।
कादिलोपे बहुलं इति वक्तव्यं ।
अन्यत्र अपि हि वृश्यते, अन्तिके सीदति इति अन्तिषथ् ।
पूर्वपदात्(*८,३.१०६) इति षत्वं ।
ये च ।
अन्तियः । ।

---

1. <हलस्तद्धितस्य># । । PS_६,४.१५० । ।

______Sठाव्ठ्JKव्_६,४.१५०ः

तद्धिते इति निवृत्तं ।
हल उत्तरस्य तद्धितयकारस्य उपधायाः ईति परतो लोपो भवति ।
गार्गी ।
वात्सी ।
हलः इति किं ? कारिकेयी ।
तद्धितस्य इति किं ? वैद्यस्य भार्या वैध्यी । ।

---

[#७६६]

1. <आपत्यस्य च तद्धितेऽनाति># । । PS_६,४.१५१ । ।

______Sठाव्ठ्JKव्_६,४.१५१ः

आपत्ययकारस्य हलः उत्तरस्य तद्धिते अनाकारादौ लोपो भवति ।
गार्ग्याणां समूहो गार्गकं ।
वात्सकं ।
आपत्यस्य इति किं ? साङ्काश्यकः ।
काम्पिल्यकः ।
तद्धितग्रहणं ईत्यनापत्यस्य अपि लोपार्थं ।
स्ॐई इष्टिः ।
अनाति इति किं ? गार्ग्यायणः ।
वात्स्यायनः ।
हलः इत्येव, कारिकेयस्य अपत्यं कारिकेयिः । ।

---

1. <क्यच्व्योश्च># । । PS_६,४.१५२ । ।

______Sठाऩ्ढ्JKव्_६,४.१५२ः

क्य च्वि इत्येतयोश्च परतः आपत्ययकारस्य हल उत्तरस्य लोपो भवति ।
वात्सीयति ।
गार्गीयति ।
वात्सीयते ।
गार्गीयते ।
च्वौ - गार्गीभूतः ।
वात्सीभूतः ।
आपत्यस्य इत्येव, साङ्काश्यायते ।
साङ्काश्यभूतः ।
हलः इत्येव, कारिकेयीयति ।
कारिकेयीभूतः । ।

---

1. <बिल्वक-आदिभ्यश्छस्य लुक्># । । PS_६,४.१५३ । ।

______Sठाऩ्ढ्JKव्_६,४.१५३ः

नडादिषु बल्वादयः पठ्यन्ते ।
नडादीनां कुक्च (*४,२.९१) इति कृतकुगागमा बिल्वकादयो भवन्ति ।
तेभ्यः उत्तरस्य छस्य भस्य तद्धिते परतो लुग्भवति ।
बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः ।
वेणुकीया - वैणुकाः ।
वेत्रकीया - वैत्रकाः ।
वेतसकीया - वैतसका ।
तृणकीया - तार्णकाः ।
इक्षुकीया ऐक्षुकाः ।
काष्ठकीया - काष्ठकाः ।
कपोतकीया - कापोतकाः ।
क्रुञ्चायां ह्रस्वत्वं च ।
क्रुञ्चकीया - क्रौञ्चकाः ।
छग्रहणं किं ? छमात्रस्य लुग्यथा स्यात्, कुको निवृत्तिर्मा भूतिति ।

अन्यथा हि संनियोगशिष्टानां अन्यतरापाये उभयोरपि अभावः इति कुगपि निवर्तेत ।
लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् । ।

---

1. <तुरिष्ठ-इम-ईयस्सु># । । PS_६,४.१५४ । ।

_______SठाऽJKव्_६,४.१५४ः

इष्ठनिमनिचीयसुनित्येतेषु परतः तृशब्दस्य लोपो भवति ।
आसुतिं करिष्ठः ।
विजयिष्ठः ।
वहिष्ठः ।
दोहीयसी धेनुः ।
सर्वस्य तृशब्दस्य लोपार्थं वचनं ।
अन्त्यस्य हि टेः (*६,४.१५५) इत्येव सिद्धः ।
लुगित्येतदत्र न अनुवर्तते, तथा हि सति न लुमताङ्गस्य (*१,१.६३) इति प्रतिषेधाद्गुणो न स्याथ् ।
इमनिज्ग्रहणं उत्तरार्थं ।
इतरौ तु तुश्छन्दसि (*५,३.५९) इति भवतः । ।

---

[#७६७]

1. <टेः># । । PS_६,४.१५५ । ।

_______SठाऽJKव्_६,४.१५५ः
भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः ।
पटु - पटिष्ठः ।
पटिमा ।
पटीयान् ।
लघु - लघिष्ठः ।
लघिमा ।
लघीयान् ।
णाविष्ठवत्प्रातिपदिकस्य कार्यं भवति इति वक्तव्यं ।
किं प्रयोजनं ? पुंवद्भावरभावटिलोपयणादि. परार्थं ।
पुंवद्भावः - एनीमाचष्टे एतयति ।
श्येतयति ।
तसिलादिष्वाकृत्वसुचः (*६,३.३५) इति इष्ठे पुंवद्भावः उक्तः ।
रभावः - पृथुमाचष्टे प्रथयति ।
म्रदयति ।
टिलोपः - पटुनाचष्टे पटयति ।
लघयति ।
यणादिपरं - स्थूलमाचष्टे स्थवयति ।
भारद्वाजीयास्तु पठन्ति, णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थं इति ।
स्रग्विणमाचष्टे स्रजयति ।
वसुमन्तमाचष्टे वसयति ।
युवानमाचष्टे यवयति ।
कन्यति ।

एतदुभयं अपि उदाहरणमात्रम्, न परिगणनं ।
प्रादयोऽपि हीष्यन्ते, प्रियमाचष्टे प्रापयति । ।

---

1. <स्थूल-दूर-युव-ह्रस्व-क्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः># । । PS_६,४.१५६ । ।

_______Sठाऩ्ठJKव्_६,४.१५६ः

स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति ।
स्थूल - स्थविष्ठः ।
स्थवीयान् ।
दूर - दविष्ठः ।
दवीयान् ।
युवन्- यविष्ठः ।
यवीयान् ।
ह्रस्व - ह्रसिष्ठः ।
ह्रसिमा ।
ह्रसीयान् ।
क्षिप्र - क्षेपिष्ठः ।
क्षेपिमा ।
क्षेपीयान् ।
क्षुद्र - क्षोदिष्ठः ।
क्षोदिमा ।
क्षोदीयान् ।
ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते ।
परग्रहणं किं ? यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयानित्यत्र पूर्वस्य यणादेर्लोपो मा भूथ् ।
पूर्वग्रहणं विस्पष्टार्थं । ।

---

1. <प्रिय-स्थिर-स्फिर-उरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रब्-द्राघि-वृन्दाः># । । PS_६,४.१५७ । ।

_______Sठाऩ्ठJKव्_६,४.१५७ः

प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां प्र स्थ स्फ वर्बंहि गर्वर्षि त्रप्द्राघि वृन्द इत्येते यथासङ्ख्यं आदेशा भवन्ति इष्ठेमेयस्सु परतः ।
प्रिय - प्रेष्ठः ।
प्रेमा ।
प्रेयान् ।
स्थिर - स्थेष्ठः ।
स्थेयान् ।
स्फिर - स्फेष्ठः ।
स्फेयान् ।
उरु - वरिष्ठः ।
वरिमा ।
वरीयान् ।
बहुल - बंहिष्ठः ।
बंहिमा ।
बंहीयान् ।
गुरु - गरिष्थः ।

गरिमा।
गरीयान्।
वृद्ध - यर्षिष्ठः।
वर्षीयान्।
तृप्र - त्रपिष्ठः।
त्रपीयान्।
दीर्घ - द्राधिष्ठः।
द्राधिमा।
द्राधीयान्।
वृन्दारक - वृन्दिष्ठः।
वृन्दीयान्।
प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेन अन्येषामिमनिज्न भवति इति नोदाह्रियते।।

---

[#७६८]

1. <बहोर्लोपो भू च बहोः>#।। PS_६,४.१५८।।

______Sठाऽ्ठ्JKव्_६,४.१५८ः

बहोरुत्तरेषां इष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने भू इत्ययं आदेशो भवति।

[#७६७]

भूमा।
भूयान्।
बहुशब्दः पृथ्वादिषु पठ्यते।
बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्, अन्यथा हि प्रत्ययानां एव भूभावः स्यात्।।

---

[#७६८]

1. <इष्ठस्य यिट्च>#।। PS_६,४.१५९।।

______Sठाऽ्ठ्JKव्_६,४.१५९ः

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति, बहोश्च भूरादेशो भवति।
भूयिष्ठः।
लोपापवादो यिडागमः, तस्मिन्निकार उच्चारणार्थः।।

---

1. <ज्यादादीयसः>#।। PS_६,४.१६०।।

______Sठाञ्ठ्JKव्_६,४.१६०ः

ज्यदुत्तरस्य ईयसः आकार आदेशो भवति ।
ज्यायान् ।
लोपस्य यिटा व्यवहितत्वातातित्युच्यते ।
लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति । ।

---

1. <र ऋतो हलादेर्लघोः># । । PS_६,४.१६१ । ।

______Sठाञ्ठ्JKव्_६,४.१६१ः

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोः इष्ठेमेयस्सु परतः ।
प्रथिष्ठः ।
प्रथिमा ।
प्रथीयान् ।
म्रदिष्ठः ।
म्रदिमा ।
म्रदीयान् ।
ऋतः इति किं ? पटिष्ठः स् ।
पटिमा ।
पटीयान् ।
हलादेः इति किं ? ऋजिष्ठः ।
ऋजिमा ।
ऋजीयान् ।
लघोः इति किं ? कृष्णा - कृष्णिष्ठः ।
कृष्णिमा ।
कृष्णीयान् ।
परिगणनं अत्र कर्तव्यं ।
पृथुं मृदुं भृशं च+एव कृशं च दृढं एव च ।
परिपूर्वं वृढं च+एव षडेतान्रविधौ स्मरेत् । ।
ततः इह न भवति, कृतमाचष्टे कृतयति ।
मातरमाचष्टे मातयति ।
भ्रातयति । ।

---

1. <विभाषा र्जोश्छन्दसि># । । PS_६,४.१६२ । ।

______Sठाञ्ठ्JKव्_६,४.१६२ः

ऋजु इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतः छन्दसि विषये ।
रजिष्ठमनु नेषि पन्थां ।
त्वमृजिष्ठः । ।

---

[#७६९]

1. <प्रकृत्या+एक-अच्># । । PS_६,४.१६३ । ।

______Sठा-ठ्JKव्_६,४.१६३ः

एकाच्यद्भसञ्ज्ञाकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति ।
स्रग्विन्नित्येतस्य विन्नन्तस्य स्रजिष्ठः, स्रजीयान्, स्रजयति ।
स्रुग्वदित्येतस्य मत्वन्तस्य स्रुचिष्थः, स्रुचीयान्, स्रुचयति ।
एकाचिति किं ? वसुमतित्येतस्य वसिष्ठः, वसीयान् ।
प्रकृत्याऽके राजन्यमनुष्ययुवानः ।
अके प्रत्यये परतो राजन्य मनुष्य युवनित्येते प्रकृत्या भवन्ति ।
राजन्यानां समूहो राजन्यकं ।
मनुष्याणां समूहो मानुष्यकं ।
आपत्यस्य च तद्धितेऽनाति (*६,४.१५१) इति यलोपः प्रकृतिभावेन न भवति ।
यूनो भावः यौवनिका ।
मनोज्ञादित्वाद्वुञ् ।
तस्य नस्तद्धिते (*६,४.१४४) इति टिलोपो न भवति । ।

---

1. <इनण्य्-अनपत्ये># । । PS_६,४.१६४ । ।

______Sठा-ठ्JKव्_६,४.१६४ः

इन्नन्तमनपत्यार्थे अणि परतः प्रकृत्या भवति ।
साङ्कूटिनं ।
सांराविणं ।
सांमार्जिनं ।
अभिविधौ भाव इनुण्(*३,३.४४), अणिनुणः (*५,४.१५) इत्यण् ।
स्रग्विण इदं स्राग्विणं ।
अणि इति किं ? दण्डिनां समूहो दाण्डं ।
अनुदात्तादेरञ्(*४,२.४४) इति अञ्प्रत्ययः ।
अनपत्ये इति किं ? मेधाविनोऽपत्यं मैधावः । ।

---

1. <गाथि-विदथि-केशि-गणि-पणिनश्च># । । PS_६,४.१६५ । ।

______Sठा-ठ्JKव्_६,४.१६५ः

गाथिन्विदथिन्केशिन्गणिन्पणिनित्येते च अणि प्रकृत्या भवन्ति ।
गाथिनः अपत्यं गाथिनः ।
वैदथिनः ।

कैशिनः ।
गाणिनः ।
पाणिनः ।
अपत्यार्थोऽयं आरम्भः । ।

---

1. <संयोग-आदिश्च># । । PS_६,४.१६६ । ।

______Sठाञ्ठ्JKव्_६,४.१६६ः

संयोगादिश्च इनणि प्रकृत्या भवति ।
शङ्खिनोऽपत्यं शाङ्खिनः ।
माद्रिणः ।
वाज्रिणः । ।

---

1. <अन्># । । PS_६,४.१६७ । ।

______Sठाञ्ठ्JKव्_६,४.१६७ः
अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च ।
सामनः ।
वैमनः ।
सौत्वनः ।
जैत्वनः । ।

---

[#७७०]

1. <ये च अभाव-कर्मणोः># । । PS_६,४.१६८ । ।

______Sठाञ्ठ्JKव्_६,४.१६८ः

यकारादौ च तद्धिते अभावकर्मणोरर्थयोः अन्प्रकृत्या भवति ।
सामसु साधुः सामन्यः ।
वेमन्यः अभावकर्मणोः इति किं ? राज्ञो भावः कर्म वा राज्यं ।
राजनिति पुरोहितादिषु पठ्यते, ततोऽयं यक्प्रत्ययः । ।

---

1. <आत्म-अध्वानौ खे># । । PS_६,४.१६९ । ।

_______SठाZ्ठ्JKव्_६,४.१६९ः

आत्मनध्वनित्येतौ खे परतः प्रकृत्या भवतः।
आत्मने हितः आत्मनीनः।
अध्वानमलङ्गामी अध्वनीनः।
खे इति किं? प्रत्यात्मं।
प्राध्वं।
प्रत्यात्मं इति अव्ययीभावे अनश्च (*५,४.१०८) इति समासान्तः टच्प्रत्ययः।
प्राध्वं इति उपसर्गादध्वनः (*५,४.८५) इति अच्प्रत्ययः।।

---

1. <न मपूर्वोऽपत्येऽवर्मणः>#।। PS_६,४.१७०।।

_______SठाZ्ठ्JKव्_६,४.१७०ः

मपूर्वः अनवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति।
सुषाम्णोऽपत्यं सौषामः।
चान्द्रसामः।
मपूर्वः इति किं? सौत्वनः।
अपत्ये इति किं? चर्मणा परिवृतो रथः चार्मणः।
अवर्मनः इति किं? चक्रवर्मणोऽपत्यं चाक्रवर्मणः।
मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यं।
हितनाम्नोऽपत्यं हैतनामः, हैतनामनः।।

---

1. <ब्राह्मोऽजातौ>#।। PS_६,४.१७१।।

_______SठाZ्ठ्JKव्_६,४.१७१ः

योगविभागोऽत्र क्रियते।
ब्राह्मः इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्राणि टिलोपार्थं निपात्यते।
ब्राह्मो गर्भः।
ब्राह्ममस्त्रं।
ब्राह्मं हविः।
ततः अजातौ।
अपत्ये इत्येव।
अपत्ये आतावणि ब्रह्मणष्टिलोपो न भवति।
ब्रह्मणोऽपत्यं ब्राह्मणः।
अपत्ये इत्येव, ब्राह्मी ओषधिः।।

---

1. <कार्मस्ताच्छील्ये>#।। PS_६,४.१७२।।

_______Sठाङ्JKव्_६,४.१७२:

कार्मः इति ताच्छील्ये टिलोपो निपात्यते।
कर्मशीलः कार्मः।
शीलम्, छत्रादिभ्यो णः (*४,४.६१) इति णप्रत्ययः।
यद्येवं किं अर्थं इदम्, नस्तद्धिते (*६,४.१४४) इत्येव टिलोपः सिद्धः? सत्यं एतथ्।
ज्ञापकार्थं तु।
एतज्ज्ञापयति ताच्छीलिके णेऽण्कृतानि भवन्ति इति।
तेन चौरी, तापसी इति णान्तादपि ईकारः सिद्धो भवति।
ताच्छील्ये इति किं? कर्मणः इदं कार्मणं।।

---

[#७७१]

1. <औक्षं अनपत्ये>#।। PS_६,४.१७३।।

_______Sठाङ्JKव्_६,४.१७३:

औक्षं इति अनपत्येऽणि टिलोपो निपात्यते औक्षं पदं।
अनप्त्ये इति किं? उक्ष्णोऽपत्यं औक्ष्णः।
षपूर्वहन्धृतराज्ञां अणि (*६,४.१६५) इत्यलोपः।।

---

1. <दाण्डिनायन-हास्तिनायन-आथर्वणिक-जैह्माशिनेय-वासिनायनि-भ्रौणहत्य-धैवत्य-सारव-ऐक्ष्वाक-मैत्रेय-हिरण्मयानि>#।। PS_६,४.१७४।।

_______Sठाङ्JKव्_६,४.१७४:

दाण्दिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वासिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते।
दण्डिन्हस्तिनित्येतौ नडादिषु पठयेते, तयोरायने परतः प्रकृतिभावो निपात्यते।
केषांचित्तु हस्तिनिति नडादिषु न पठ्यते, तेषां अत एव निपातनात्फगपि भवति।
दण्डिनोऽपत्यं दाण्दिनायनः।
हस्तिनोऽपत्यं हास्तिनायनः।
अथर्वनिति वसन्तादिषु पठ्यते।
अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचारातथर्वनिति उच्यते, तमधीते यः स आथर्वणिकः।
इके प्रकृतिभावो निपात्यते।
जिह्माशिनिति शुभ्रादिषु पठ्यते, तस्य ण्ये परतः प्रकृतिभावो निपात्यते।
जिह्माशिनोऽपत्यं जैह्माशिनेयः।
वासिनोऽपत्यं।
ज्दीचां वृद्धादगोत्रात्(*४,१.१५७) इति फिञ्।
तत्र प्रकृतिभावो निपात्यते।
वासिनायनिः।
भ्रूणहन्, धीवनित्येतयोः ष्यञि परतः तकारादेशो निपात्यते।
भ्रूणघ्नः भावः भ्रौणहत्यं।
धीव्नः भावः धैवत्यं।
हनस्तोऽचिण्णलोः (*७,३.३२) इति यत्तत्वं तद्धातुप्रत्यय एव इति भ्रौणघ्नः, वार्त्रघ्नः इत्यत्र न भवति, अतः भ्रौणहत्ये तत्वं निपात्यते।
सारव इति सरयू इत्येतस्य अणि परतो यूशब्दस्य व इत्यादेशो निपात्यते।

सरय्वां भवं सारवं उदकं ।
ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते ।
ततोऽयं आद्युदात्तोऽन्तोदात्तश्च निपात्यते ।
इक्ष्वाकोः उपत्यम्, जनपदशब्दात्क्षत्रियादञ्(*४,१.१६६) इति अञ्, तत्र उकारलोपो निपात्यते ।
ऐक्ष्वाकः ।
इक्ष्वाकुषु जनपदेषु भवः, कोपधादण्(*४,२.१३२) इत्यण् ।
ऐक्ष्वाकः ।
मैत्रेय इति ।
मित्रयुशब्दो गृष्ट्यादिषु पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते ।
मित्रयोरपत्यं मैत्रेयः ।

[#७७२]

अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव न पठ्यते, तत्राञि कृते यादेः इति इयादेशेनैव सिद्धम्, एवं च युलोपार्थं निपातनं कर्तव्यं न भवति, यस्कादिषु च बहुषु लुगर्थः पाठो न कर्तव्यो भवति, मित्रयवः इत्यञः यञञोश्च (*२,४.६४) इत्येव हि लुकः सिद्धत्वात्? न+एतदस्ति ।
मित्रयूणां सङ्घः इत्यत्र गोत्रचरणाद्वुञं बाधित्वा मैत्रेयकः सङ्घः इत्यत्र सङ्घ-अङ्क-लक्षणेष्वञ्. यञ्-इञां अण्(*४,३.१२७) इति अण्प्राप्नोति ।
हिरण्मयं इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः । ।

---

1. <ऋत्व्य-वास्त्व्य-वास्त्व-माध्वी-हिरण्ययानि च्छन्दसि># । । PS_६,४.१७५ । ।

______Sठान्ठ्JKव्_६,४.१७५ः

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये ।
ऋतु वास्तु इत्येतयोः यति यणदेशो निपात्यते ।
ऋतौ भवं ऋत्व्यं ।
वास्तौ भवं वास्त्व्यं ।
वस्तुशब्दस्य अणि यणादेशो निपात्यते ।
वस्तुनि भवः वास्त्वः ।
मधुशब्दस्य अणि स्त्रियां यणादेशो निपात्यते ।
माध्वीर्नः सन्त्वोषधीः ।
हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते ।
हिरण्ययं । ।
इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य चतुर्थः पादः । ।

---

युवोरनाकौ ॥ ७,१.१ ॥

_______ काशिकावृत्तिः७,१.१:

यु वु इत्येतयोः उत्सृष्टविशेषणयोः अनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासङ्ख्यमन अक इत्येतावादेशौ भवतः ।
योः अनः, वोः अकः ।
नन्द्यादिभ्यो ल्युः नन्दनः ।
रमणः ।
सायमादिभ्यष्ट्युट्युलौ तुट्च सायनतनः ।
चिरन्तनः ।
ण्वुल्तृचौ कारकः ।
हारकः ।
वासुदेवार्जुनाभ्यां वुन् (*४,३.९८) वूसुदेवकः ।
अर्जुनकः ।
अनुनासिकयणोः इति किम् ? ऊर्णाया युस्(*५,२.१२३) ऊर्णायुः ।
भुजिमृङ्भ्यां युक्त्युकौ भुज्युः, मृत्युः इति ।
एवमादीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, प्रतिज्ञानुनासिक्याः पाणिनीयाः ।
इह युवोरिति निर्देशाद्द्वन्द्वैकवद्भावपक्षे अनित्यमागमशासनमिति नुं न क्रियते ।
नपुंसकलिङ्गता वा लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य इति न भवति ।
इतरेतरपक्षे तु छान्दसत्वात्वर्णलोपो द्रष्टव्यः ।
युवोश्चेद्द्वित्वनिर्देशो द्वित्वे यण्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद्भवेदयम् ॥
द्वित्वे वैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम् ॥

आयनेयीनीयियः फढखछघां प्रत्ययाअदीनाम् ॥ ७,१.२ ॥

_______ काशिकावृत्तिः७,१.२:

आयनेयीनीयियित्येते आदेशाः भवन्ति यथासङ्ख्यं फ ढ ख छ घ इत्येतेषा प्रत्ययादीनाम् ।
फ इत्येतस्य आयनादेशो भवति ।
नडादिभ्यः फक्(*४,१.९९) नाडायनः ।
चारायणः ।
ढस्य एयादेशो भवति ।
स्त्रीभ्यो ढक्(*४,१.१३०) सौपर्णेयः ।
वैनतेयः ।
खस्य ईनादेशो भवति कुलात्खः (*४,१.१३९) आढ्यकुलीनः ।
श्रोत्रियकुलीनः ।
छस्य ईयादेशो भवति ।
वृद्धाच्छः (*४,२.११४) गार्गीयः ।
वात्सीयः ।
घ इत्येतस्य इयादेशो भवति ।
क्षत्राद्घः (*४,१.१३८) क्षत्रियः ।

प्रत्ययग्रहणं किम् ? फक्कति ।
ढौकते ।
खनति ।
छिनत्ति ।
घूर्णते ।
आदिग्रहणं किम् ? ऊरुदघ्नम् ।
जानुदघ्नम् ।
एते आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति ।
कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति, तथा च घच्छौ च (*४,४.११७) इति घचश्चित्करनमर्थवद्भवति ।
शङ्खः, षण्ढः इत्येवमादीनां हि उणादयो बहुलमिति बहुलवचनादादेशा न भवन्ति ।
ऋतेरीयङ्(*३,१.२९) इति वावचनं ज्ञापकं धातुप्रत्ययानामादेशाभावस्य ।
एजेः खश्(*३,२.२८), पदरुजविशस्पृशो घञ्(*३,३.१६) इत्येवमादिषु तु इत्सञ्ज्ञया भवितव्यम् ।
तद्धितेषु हि खकारघकारयोरादेशवचनमवकाशवदिति इत्सञ्ज्ञां बाधितुं न+उत्सहते ।
आयन्नीनोः नकारस्य इत्सञ्ज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं हि सम्भवति ॥

[॰७७४]

झोऽन्तः ॥ ७,१.३ ॥

_______ काशिकावृत्तिः७,१.३:

प्रत्ययग्रहणमनुवर्तते, आदिग्रहणं निवृत्तम् ।
प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति ।
कुर्वन्ति ।
सुन्वन्ति ।
चिन्वन्ति ।
अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै ।
जॄविशिभ्यां झच् जरनतः ।
वेशन्तः ।
प्रत्ययस्य इत्येव, उज्झिता ।
उज्झितुम् ।
उज्झितब्यम् ।
अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्त्वं भवति ।
तथा च झचः चित्करणमर्थवच्भवति ॥

अदभ्यस्तात् ॥ ७,१.४ ॥

_______ काशिकावृत्तिः७,१.४:

अभ्यस्ता दङ्गादुत्तरस्य झकारस्य अतित्ययमादेशो भवति ।
ददति ।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जातीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥
पक्ता ।
वक्ता ।
विवेक्ता ।
रेक्ता ।
रङ्क्ता ।
प्रष्टा ।
निर्णेक्ता ।
सेक्ता ।
मोक्ता ।
भक्ता ।
भङ्क्ता ।
भ्रष्टा, भर्ष्टा ।
त्यक्ता ।
यष्टा ।
योक्ता ।
रोक्ता ।
सङ्क्ता ।
मङ्क्ता ।
भोक्ता ।
परिष्वक्ता ।
स्रष्टा ।
मार्ष्टा ।
मृजिरयमूदित्पठ्यते, ततोऽस्य विकल्पेन इटा भवितव्यम् ।
मार्ष्टा, मर्जिता इति, अमागमोऽप्यस्य न दृश्यते ? तदिह पाठस्य प्रयोजनं चिन्त्यम् ।
केचिदस्य स्थाने विजिं पठन्ति, सृजिं विजिं विद्ध्यनिट्स्वरानिति ।
निजादिषु यो विजिरसौ अनिडिष्यते ।
तथा च तन्त्रान्तरे निजिविजिष्वञ्जिवर्जमित्युक्तम् ।
एकाच इति किम् ? अवधीत् ।
वृद्धिनिवृत्त्यर्थमदन्तो विधिरुपदिश्यते ।
उपदेशग्रहणं किम् ? इह च यथा स्यात्, लविष्यति, पचिष्यति ।
इह च मा भूत्, कर्ता कटान्, कर्तुमिति ॥

श्र्युकः किति ॥ ७,२.११ ॥

_______ काशिकावृत्तिः७,२.११:

श्रि इत्येतस्य उगन्तानां च किति प्रत्यये परतः इडागमो न भवति ।
श्रि श्रित्वा ।
श्रितः ।
श्रितवान् ।
उगन्तानां चयुत्वा ।
युतः ।

युतवान् ।
लूत्वा ।
लूनः ।
लूनवान् ।
वृत्वा ।
वृतः ।
वृतवान् ।
तीर्त्वा ।
वीर्णः ।
तीर्णवान् ।
श्र्युकः इति किम् ? विदितः ।
किति इति किम् ? श्रयिता ।
श्रयितुम् ।
श्रयितव्यम् ।
केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्नयन्ति, भूष्णुः इत्येवं यथा स्यात् ।
सौत्रत्वाच्च निर्देशस्य श्र्युकः किति इत्यत्र चर्त्वस्य असिद्धत्वमनाश्रित्य रोरुत्वं न कृतं विसर्जनीयश्च कृतः इति ।
ग्लाजिस्थश्च क्स्नुः (*३,२.१३९) इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किंचिदेतत् ।
उपदेशे इत्येव, तीर्ण इत्यत्र अपि यथा स्यात् ।
इत्वे हि कृते रपरत्वे चन स्यात् ।
मा भूदेवम् ।
इट्सनि वा (*७,२.४१) इति विकल्पे विहिते यस्य विभाषा (*७,२.१५) इति निष्ठायां प्रतिषेधो भविष्यति ? कस्य पुनः सा विभाषा ? ॠतः ।
यद्येवमित्वे हि कृते न अयम् ॠकरान्तो भविष्यति ? स्थानिवद्भावाद्भविष्यति ।
अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ? तस्मादनुवर्तयितव्यमुपदेशे इति ।
तथा च सति जागरितः, जागरितवानित्यत्र अपि प्राप्नोति, तदर्थमेकाचः इत्यनुवर्तयितव्यम् ।
ऊर्णोतेस्तु वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥
प्रोर्णुतः ।
प्रोर्णुतवान् ॥

[।८०३]
सनि ग्रहगुहोश्च ॥ ७,२.१२ ॥

_______ काशिकावृत्तिः७,२.१२:

ग्रह गुह इत्येतयोः उगन्तानां च सनि प्रत्यये परतः इडागमो न भवति ।
जिघृक्षति ।
जुघुक्षति ।
उगन्तानां च रुरूषति ।
लुलूषति ।
सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि सनाम् (*७,२.४९) इति विकल्पविधानात्श्रयतिरत्र न अनुकृस्यते ।
ग्रहेर्नित्यं प्राप्तः ।
गुहेः ऊदित्वाद्विकल्पः ॥

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ ७,२.१३ ॥

________ काशिकावृत्तिः७,२.१३:

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यये इडागमो न भवति ।
कृ चकृव, चकृम ।
सृ ससृव, ससृम ।
भृ बभृव, बभृम ।
वृञ् ववृव, ववृम ।
वृङ् ववृवहे, ववृमहे ।
स्तु तुष्टुव, तुष्टुम ।
द्रु दुद्रुव, दुद्रुम ।
स्रु सुस्रुव, सुस्रुम ।
श्रु शुश्रुव, शुश्रुम ।
सिद्धे सत्यारम्भो नियमर्थः , क्रादय एव लिटि अनिटः, ततोऽन्ये सेटः इति ।
बिभिदिव, बिभिदिम ।
लुलुविव, लुलुविम ।
अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः, तदुभयस्य अप्ययं नियमः ।
वृञो हि थलि ववर्थ इति निपातनाद्व्यवस्था ।
स्तुद्रुस्रुश्रुवां तु ऋतो भारद्वाजस्य (*७,२.६३) इत्यस्मादपि नियमात्य इट्प्राप्नोति सोऽपि नेष्यते ।
तुष्टोथ ।
दुद्रोथ सुस्रोथ ।
शुश्रोथ ।
कृञोऽसुट्कस्य+इति वक्तव्यम् ।
ससुट्कस्य इडगमो यथा स्यात् ।
सञ्चस्करिव, सञ्चस्करिम ।
ऋतो भारद्वाजस्य (*७,२.६३) इत्येतदप्यसुट्कस्य+एव+इष्यते, सञ्चस्करिथ ॥

श्वीदितो निष्ठायाम् ॥ ७,२.१४ ॥

________ काशिकावृत्तिः७,२.१४:

श्वयतेः ईदितशनिष्ठायामिडागमो न भवति ।
शूनः ।
शूनवान् ।
ईदितः ओलजी लग्नः ।
लग्नवान् ।
ओविजी उद्विग्नः ।
उद्विग्नवान् ।
ओदितश्च (*८,२.४५) इति निष्ठातकारस्य नकारः ।
दीपी दीप्तः ।

दीप्तवान् ।
डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य ।
स हि नत्वार्थः, नत्वं च निष्थातोऽनन्तरस्य विधीयते ।
उड्डीनः ।
उड्डीनवान् ।
निष्ठायामित्यधिकारः आर्धधातुकस्य+इड्वलादेः (*७,२.३५) इति यावत् ॥

[।८०४]

यस्य विभाषा ॥ ७,२.१५ ॥

_______ काशिकावृत्तिः७,२.१५:

यस्य धातोः विभाषा क्वचिदिडुक्तः तस्य निष्ठायां परतः इडागमो न भवति ।
वक्ष्यति स्वरतिसूतिसूयतिधूञूदितो वा (*७,२.४४) ।
विधूतः ।
विधूतवान् ।
गुहू गूढः ।
गूढवान् ।
उदितो वा वृधु वृद्धः ।
वृद्धवान् ।
तनिपतिदरिद्राणामुपसङ्ख्यानमिति पतेर्विभाषितेट्कस्य अपि द्वितीयाश्रितातीतपतित (*२,१.२४) ति निपातनातिडागमः ॥

आदितश्च ॥ ७,२.१६ ॥

_______ काशिकावृत्तिः७,२.१६:

आदितश्च धतोर्निष्थायमिडागमो न भवति ।
ञिमिदा मिन्नः ।
मिन्नवान् ।
ञिक्ष्विदा क्ष्विण्णः ।
क्ष्विण्णवान् ।
ञिष्विदा स्विन्नः ।
स्वन्नवान् ।
कारोऽनुक्तसमुच्चयार्थः ।
आश्वस्तः ।
वान्तः ।
योगविभागकरणं किमर्थम्, आदितश्च विभाषा भावादिकर्मणोः इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्यां यस्य विभाषा (*७,२.१५) इति प्रतिषेधो भविष्यति ? ज्ञापनार्थमेतत् ।
ज्ञापयति यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः इति ।
तेन विभाषा गमहनविदविशाम् (*७,२.६८) इत्यत्र विदेर्लाभार्थस्य विभाषा इति ज्ञानार्थस्य प्रतिषेधो न भवति ।

विदितः ।
विदितवान् ॥

विभाषा भावादिकर्मणोः ॥ ७,२.१७ ॥

_______ काशिकावृत्तिः७,२.१७:

भवे आदिकर्मणि च आदितो धातोः विभाषा निष्ठायामिडागमो न भवति ।
भिन्नमनेन, मेदितमनेन प्रमिन्नः, प्रमेदितः ।
सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन ।
शकितो घटः कर्तुम्, शक्तो घटः कर्तुम् ।
भावे न भवत्येव, शक्तमनेन ।
अस्यतेर्भावे, असितमनेन ।
आदिकर्मणि च न भवत्येव, अस्तः काण्डः ॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ ७,२.१८ ॥

_______ काशिकावृत्तिः७,२.१८:

क्षुब्ध स्वान्त ध्वान्त लगन्म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासङ्ख्यं मन्थ मनः तमः सक्त अविस्पष्ट स्वरः अनायास भृश इत्येतेष्वर्थेषु ।
क्षुब्ध इति भवति मन्थाभिधानं चेत् ।
क्षुब्धो मन्थः ।
क्षुभितमन्यत् ।

[।८०५]

क्षुभितं मन्थेन ।
क्षुब्धा गिरिनदी इत्येवमाद्युपमानात्भविष्यति ।
स्वान्तमिति मनोऽभिधानं चेत् ।
स्वनितमन्यत ।
स्वनितो मृदङ्गः ।
स्वनितं मनसा ।
ध्वान्तमिति भवति तमोऽभिधानं चेत् ।
ध्वनितमन्यत् ।
ध्वनितो मृदङ्गः ।
ध्वनितं तमसा ।
लग्नमिति भवति सक्तं चेत् ।
लगितमन्यत् ।
म्लिष्टमिति भवति अविस्पष्टं चेत् ।
म्लेच्छितमन्यत् ।

इत्वमप्येकारस्य निपातनादेव विरिब्धमिति स्वरश्चेत् ।
विरेभितमन्यत् ।
रेभृ शब्दे इत्यस्य+एतन्निपातनम् ।
अन्ये तु विरिभितमन्यतिति पठन्ति ।
रभिं सौत्रं धातुं पठन्ति, ते विरिभितमिति प्रत्युदाहरन्ति ।
फाण्टमिति भवति अनायासश्चेत् ।
फाणितमन्यत् ।
यदशृतमपिष्टं च कषायमुदकसम्पर्कमात्रात्विभक्तरसमीषदुष्णं तत्फाण्टम् ।
तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते ।
बाढमिति भवति भृशं चेत् ।
बाहितमन्यत् ।
बाहृ प्रयत्ने इत्यस्य धातोरेतन्निपातनम् ।
अतिशयश्च भृशमिह+उच्यते ॥

धृषी शसी वैयात्ये ॥ ७,२.१९ ॥

_______ काशिकावृत्तिः७,२.१९:

वियातस्य भावो वैयात्यं प्रागल्भ्यम्, अविनीतता ।
तत्र धृष शस इत्येतयोः निष्ठायामिडागमो न भवति ।
धृष्टोऽयम् ।
विशस्तोऽयम् ।
धृषेः आदितश्च (*७,२.१६) इति प्रतिषेधः सिद्ध एव, शसेरपि उदितो वा (*७,२.५६), यस्य विभाषा (*७,२.१५) इति ? नियमार्थं वचनम्, धृषिशस्योः वैयात्ये एव इड्न भवति ।
भावादिकर्मणोरपि वैयात्ये धृषिर्नास्ति ।
धृष्टः ।
विशस्तः ।
वैयात्ये इति किम् ? धर्षितः ।
विशसितः ॥

दृढः स्थूलबलयोः ॥ ७,२.२० ॥

_______ काशिकावृत्तिः७,२.२०:

दृढ इति निपात्यते स्थूले बलवति चार्थे ।
दृढः स्थूलः ।
दृढो बलवान् ।
किमत्र निपात्यते ? दृंहेः क्तप्रत्यये इडभावः, हकारनकारयोः लोपः, परस्य ढत्वम् ।
अथ दृहिः प्रकृत्यनतरमस्ति ? तत्र अप्येतदेव सर्वं नलोपवर्जम्, नकारस्य अभावात् ।
हलोपनिपातनं पूर्वत्र असिद्धत्वनिवृत्त्यर्थम् ।

ढलोपे हि सति तस्य पूर्वत्र असिद्धत्वात्द्रढिमा, द्रढीयान्, द्रढयति इत्यत्र र ऋतो हलादेर्लघोः (*६,२.१६१) इति रेफो न स्यात्, इह च परिद्रढ्य्य गत इति ल्यपि लघुपूर्वात्(*६,४.५६) इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं पारिदृढी कन्या इति गुरूपोत्तमलक्षणः ष्यङ्च प्रसज्येत ।
स्थूलबलयोः इति किम् ? दृंहितम् ।
दृहितम् ॥

प्रभौ परिवृढः ॥ ७,२.२१ ॥

_______ काशिकावृत्तिः७,२.२१:

परिवृढ इति निपात्यते प्रभुश्चेद्भवति ।
परिवृढः कुटुम्बी ।
पूर्वेण तुल्यमेतत् ।
वृंहेर्निपातनम् ।
वृहिश्च यदि प्रकृतियन्तरमस्ति तस्य अपि तदेव सर्वम् ।
हलोपनिपातनस्य च तदेव प्रयोजनम् ।
परिव्रढयति ।
परिव्रढ्य्य गतः ।
पारिवृढी कन्या ।
परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते ।
संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते न अन्यस्मातिति ।
तथा सति परिव्रढयति इति तिङ्ङतिङः (*८,२.२८) इति निघातः ।
परिव्रढय्य इत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति ।
प्रभौ इति किम् ? परिवृंहितम् ।
परिवृहितम् ॥

[।८०६]

कृच्छ्रगहनयोः कषः ॥ ७,२.२२ ॥

_______ काशिकावृत्तिः७,२.२२:

कृच्छ्र गहन इत्येतयोरर्थयोः कषेर्धातोः निष्ठायामिडागमो न भवति ।
कष्टोऽग्निः ।
कष्टं व्याकरणम् ।
ततोऽपि कष्टतराणि सामानि ।
कृच्छ्रं दुःखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते ।
गहने कष्टानि वनानि ।
कष्टाः पर्वताः ।
कृच्छ्रगहनयोः इति किम् ? कषितं सुवर्णम् ॥

घुषिरविशब्दने ॥ ७,२.२३ ॥

_______ काशिकावृत्तिः७,२.२३:

घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति ।
घुष्टा रज्जुः ।
घुष्टौ पादौ ।
अविशब्दने इति किम् ? अवघुषितं वाक्यमाह ।
विशब्दनं प्रतिज्ञानम् ।
घुषिरशब्दार्थे इति भूवादिषु पठ्यते ।
घुषिर्विशब्दने इति चुरादिषु ।
तयोरिह सामान्येन ग्रहणम् ।
विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज्विशब्दनार्थस्य अनित्यः इति ।
तेन अयमपि प्रयोगः उपपन्नो भवति, महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः ।
स्वाभिप्रायं शब्देन अविष्कृतवन्तः इत्यर्थः ॥

अर्देः संनिविभ्यः ॥ ७,२.२४ ॥

_______ काशिकावृत्तिः७,२.२४:

सं नि वि इत्येतेभ्य उत्तरस्य अर्देः निष्ठायामिडागमो न भवति ।
समर्णः ।
न्यर्णः ।
व्यर्णः ।
अर्देः इति किम् ? समेधितः ।
संनिविभ्यः इति किम् ? अर्दितः ॥

अभेश्च आविदूर्ये ॥ ७,२.२५ ॥

_______ काशिकावृत्तिः७,२.२५:

अभिशबादुत्तरस्य अर्देः आविदूर्येऽर्थे निष्ठायामिडागमो न भवति ।
अभ्यर्णा सेना ।
अभ्यार्णा शरत् ।
आविदूर्ये इति किम् ? अभ्यर्दितो वृषलः ।
शीतेन पीडितः इत्यर्थः ।
विदूरं विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भावः आविदूर्यम् ।
एतस्मादेव निपातनात्न नञ्पूर्वात्तत्पुरुषात्(*५,१.१२१) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति ॥

णेरध्ययने वृत्तम् ॥ ७,२.२६ ॥

_______ काशिकावृत्तिः७,२.२६:

ण्यन्तस्य वृत्तेर्निष्ठायामध्ययनार्थे वृत्तमिति इडभावः णिलुक्च निपात्यते ।
वृत्तो गुणे देवदत्तेन ।
वृत्तं पारायणं देवदत्तेन ।
अध्ययने इति किम् ? वर्तितमन्यत्र ।
वृतिरयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति ।
तेन निर्वृत्तमिति हि प्रकृटेरेव कर्मणि क्तप्रत्ययो दृश्यते ।
तद्वदिह अपि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेन इति भविष्यति इति निपातनमनर्थकम् ? तत्क्रियते यदापि णिचैव ण्यर्थोऽभिधीयते तदावर्तितमित्यध्ययने मा भूतिति केचित् ।
अपरे तु वर्तितो गुणो देवदत्तेन इत्यपि इच्छन्ति ॥

[।८०७]

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ ७,२.२७ ॥

_______ काशिकावृत्तिः७,२.२७:

णेः इत्यनुवर्तते ।
दं शं पूरी दस्स्पश्छद्ज्ञपित्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते ।
दान्तः, दमितः ।
शान्तः, शमितः ।
पूर्णः, पूरितः ।
दस्तः, दासितः ।
स्पष्टः, स्पाशितः ।
छन्नः, छादितः ।
ज्ञप्तः, ज्ञपितः ।
इट्प्रतिषेधो णिलुक्च निपात्यते ।
ज्ञप्तेस्तु भरज्ञपिसनामिति विकल्पविधानात्यस्य विभाषा (*७,२.१५) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ॥

रुष्यमत्वरसङ्घुषास्वनाम् ॥ ७,२.२८ ॥

_______ काशिकावृत्तिः७,२.२८:

वा इति वर्तते ।
रुषि अम त्वर सङ्घुष आस्वन इत्येतेषां निष्ठायां वा इडागमो न भवति ।
रुष्टः रुषितः ।

तीषसहलुभरुष. रिषः (*४,२.४८) इति विकल्पविधानात्यस्य विभाषा (*७,२.१५) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् ।
अम अभ्यान्तः, अभ्यमितः ।
त्वर तूर्णः, त्वरितः ।
आदितश्च (*७,२.१६) इति प्रतिषेधे प्राप्ते वचनम् ।
सङ्घुष सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ ।
सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह ।
सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ ।
सम्पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति ।
आस्वन आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः ।
आस्वान्तं मनः, आस्वनितं मनः ।
आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽपि परत्वादयं विकल्पः क्षुब्धस्वान्त इति निपातनं बाधते ॥

हृषेर्लोमसु ॥ ७,२.२९ ॥

_______ काशिकावृत्तिः७,२.२९:

लोमसु वर्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति ।
हृष्टानि लोमानि, हृषितानि लोमानि ।
हृष्टं लोमभिः, हृषितं लोमभिः ।
हृष्टाः केशाः, हृषिताः केशाः ।
हृष्टं केशैः हृषितं केशैः ।
हृषु अलीके इत्युदित्त्वान्निष्ठायामनिट्, हृष तुष्टौ इत्ययं सेट्, तयोरुभयोरिह ग्रहणमित्युभयत्र विभाषा इयम् ।
लोमानि मूर्धजानि अङ्गजानि च सामान्येन गृह्यन्ते, यथा लोमनखं स्पृष्ट्वा शौचं कर्तव्यमिति ।
तद्विषये च हर्षे वर्तमानो लोमसु वर्तते इत्युच्यते ।
लोमसु इति किम् ? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्तः इति तुष्ट्यर्थस्य ।
विस्मितप्रतिघातयोश्च+इति वक्तव्यम् ।
हृष्टो देवदत्तः, हृसितो देवदत्तः ।
विस्मितः इत्यर्थः ।
हृष्टाः दन्ताः, हृषिताः दन्ताः ।
प्रतिहताः इत्यर्थः ॥

[।८०८]

अपचितश्च ॥ ७,२.३० ॥

_______ काशिकावृत्तिः७,२.३०:

अपचितः इति वा निपात्यते ।
अपपूर्वस्य चाय्तेः निष्ठायामनिट्त्वं चिभावश्च निपात्यते ।
अपचितोऽनेन गुरुः, अपचायितोऽनेन गुरुः ।
क्तिनि नित्यमिति वक्तव्यम् ।

क्तिनि नित्यं चिभावो निपात्यते।
अपचितिः॥

ह्रु ह्वरेश्छन्दसि॥ ७,२.३१॥

_______ काशिकावृत्तिः७,२.३१:

ह्वरतेः धातोर्निष्ठायं छन्दसि ह्रु इत्ययमादेशो भवति।
ह्रु तस्य चाह्रु तस्य च।
अह्रु तमसि हविर्धानम्।
छन्दसि इति किम्? ह्वृतम्॥

अपरिह्वृताश्च॥ ७,२.३२॥

_______ काशिकावृत्तिः७,२.३२:

अपरिह्वृताः इति निपात्यते छन्दसि विषये।
ह्रु इत्येतस्य आदेशस्य अभावो निपात्यते।
अपरिह्वृताः सनुयाम वाजम्॥

सोमे ह्वरितः॥ ७,२.३३॥

_______ काशिकावृत्तिः७,२.३३:
ह्वरितः इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति।
मा नः सोमो ह्वरितः।
विह्वरितस्त्वम्॥

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमिति इति च॥ ७,२.३४॥

_______ काशिकावृत्तिः७,२.३४:

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इत्येतानि छन्दसि विषये निपात्यन्ते।

तत्र ग्रसित स्कभित स्तभित उत्तभित इति ग्रसु स्कम्भु स्तम्भु इत्येतेषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते।
ग्रसितं वा एतत्सोमस्य।
ग्रस्तमिति भाषायाम्।
स्कभित विष्कभिते अजरे।
विष्कब्ध इति भाषायाम्।
स्तभित येन स्वः स्तभितम्।
स्तब्धमिति भाषायाम्।
उत्तभित सत्येनोत्तभिता भूमिः।
उत्तब्धा इति भाषायाम्।
उत्तभित इति उत्पूर्वस्य निपातसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति।

[।८०९]

चत्त, विकस्त इति चतेः कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते।
चत्ता वर्षेण विद्युत्चतिता इति भाषायाम्।
विकस्त उत्तानाया हृदयं यद्विकस्तम्।
विकसितमिति भाषायाम्।
निपातनं बहुत्वापेक्षम्, विकस्ताः इति बहुवचनं कृतम्।
अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः।
विशस्तृ शंस्तृ शास्तृ इति शसेर्विपूर्वस्य शंसेः शासेश्च तृचि इडभावो निपात्यते।
विशस्तृ एकस्त्वष्टुरश्वस्याविशस्ता।
विशसिता इति भाषायाम्।
शंस्तृ उत शंस्ता सुविप्रः।
शंसिता इति भाषायाम्।
शास्तृ प्रशास्ता।
प्रशासितमिति भाषायाम्।
तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः इति तरतेः वृङ्वृञोश्च तृचि उटूटित्येतावागमौ निपात्येते।
तरुतारं रथानाम्, तरूतारम्।
तरितारम्, तरीतारमिति भाषायाम्।
वरुतारं रथानाम्, वरूतारं रथानाम्।
वरितारम्, वरीतारमिति भाषायाम्।
वरुत्री त्वा देवी विश्वदेव्यवती।
जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम्।
अतन्त्रं चैतत्।
इदमपि हि भवति अहोरात्राणि वै वरूत्रयः इति।
छान्दसिकमत्र ह्रस्वत्वम्।
प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्।
वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः।
उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम इत्येतेषां च तिपि शपः इकारादेशो निपात्यते, शपो लुग्वा, इडागमः।
अग्निरुज्ज्वलिति।
उज्ज्वलति इति भाषायाम्।
क्षरिति स्तोकं क्षरिति।
क्षरति इति भाषायाम्।
क्षमिति स्तोमं क्षमिति।
क्षमति इति भाषायाम्।
वमिति यः सोमं वमिति।

वमति इति भाषायाम् ।
अमिति अभ्यमिति वरुणः ।
अभ्यमति इति भाषायाम् ।
इतिकरणं प्रदर्शनार्थं तेन क्वचितीकारो भावति, रविमभ्यमीति वरुणः इत्यपि हि वेदे पठ्यते ॥

आर्धधातुकस्य+इड्वलादेः ॥ ७,२.३५ ॥

_______ काशिकावृत्तिः७,२.३५:

छन्दसि इति निवृत्तम् ।
आर्धधातुकस्य वलादेरिडागमो भवति ।
लविता ।
लवितुम् ।
लवितव्यम् ।
पविता ।
पवितुम् ।
पवितव्यम् ।
आर्धधातुकस्य इति किम् ? आस्ते ।
शेते ।
वस्ते ।
रुदादिभ्यः सार्वधातुके (*७,२.७६) इत्येतस्मिन्नियमार्थे वज्ञायमाने प्रतिपत्तिगौरवं भवति इति आर्धधातुकग्रहणं क्रियते ।
वलादेः इति किम् ? लव्यम् ।
पव्यम् ।
लवनीयम् ।
पवनीयम् ।
इटिति वर्तमाने पुनः इड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम् ॥

[॰८१०]

स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ७,२.३६ ॥

_______ काशिकावृत्तिः७,२.३६:

नियमार्थमिदम् ।
स्नुक्रमोः आर्धधातुकस्य वलादेः इडागमो भवति, न चेत्स्नुक्रमी आत्मनेपदस्य निमित्तं भवतः ।
क्व च तावात्मनेपदस्य निमित्तम् ? यत्र आत्मनेपदं तदाश्रयं भवति, भावकर्मकर्मकर्तृकर्मव्यतिहाराः क्रमेर्वृत्त्यादयश्च ।
तेन अयं सत्यात्मनेपदे प्रतिषेधो भवति न असति इति ।
प्रतिषेधफलं च+इदं सूत्रम् ।
स्नुक्रमोरुदित्वातिट्सिद्ध एव ।
प्रस्नविता ।
प्रस्नवितुम् ।

प्रस्नवितव्यम् ।
प्रक्रमिता ।
प्रक्रमितुम् ।
प्रक्रमितव्यम् ।
अनात्मनेपदनिमित्ते इति किम् ? प्रस्नोषीष्ट ।
प्रक्रंसीष्ट ।
प्रस्नोष्यते ।
प्रक्रंस्यते ।
प्रसुस्नूषिष्यते ।
प्रचिक्रंसिष्यते ।
सर्वत्र+एव अत्र स्नैतिः क्रमिश्च आत्मनेपदस्य निमित्तम् ।
सनन्तादपि पूर्ववत्सनः (*१,३.६२) इति आत्मनेपदं विधीयते ।
निमित्तग्रहणं किम् ? सीयुडादेस्तत्परपरस्य च प्रतिषेधार्थम् ।
इह तु प्रस्नवितेवाचरति इति प्रस्नवित्रीयते इति क्यङतमात्मनेपदस्य निमित्तम्, न स्नौतिः ।
क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः ।
प्रक्रन्ता ।
उपक्रन्ता ।
कर्तरि इति किम् ? प्रक्रमितव्यम् ।
उपक्रमितव्यम् ।
आत्मनेपदविषयातिति किम् ? निष्ट्रमितिआ ।
स्नौतेः सनि किति च प्रत्यये श्र्युकः किति (*७,२.११), सनि ग्रहगुहोश्च (*७,२.१२) इत्येव प्रतिषेधो भवति ।
प्रसुस्नूषति ।
प्रस्नुतः ।
प्रस्नुतवान् ॥

ग्रहोऽलिटि दीर्घः ॥ ७,२.३७ ॥

_______ काशिकावृत्तिः७,२.३७:

ग्रहः उत्तरस्य इटः अलिटि दीर्घो भवति ।
ग्रहीता ।
ग्रहीतुम् ।
ग्रहीतव्यम् ।
अलिटि इति किम् ? जगृहिव ।
जगृहिम् ।
प्रकृतस्येटो दीर्घत्वमिदम्, चिण्वदिटो न भवति ।
ग्राहिता ।
ह्राहिष्यते ॥

वृतो वा ॥ ७,२.३८ ॥

_______ काशिकावृत्तिः७,२.३८:

वृ इति वृङ्वृञोः सामान्येन ग्रहणम् ।
तस्मादुत्तरस्य ॠकारान्तेभ्यश्च इटो वा दीर्घो भवति ।
वरिता, वरीता ।
प्रावरिता, प्रावरीता ।
ॠकारान्तेभ्यः तरिता, तरीता ।
आस्तरिता, आस्तरीता ।
वृतः इति किम् ? कर्ष्यति ।
हरिष्यति ।
अलिटि इत्येव, ववरिथ ।
तेरिथ ॥

[।८११]

न लिङि ॥ ७,२.३९ ॥

_______ काशिकावृत्तिः७,२.३९:

वृतः उत्तरस्य इटो लिङि दीर्घो न भवति ।
विवरिषीष्ट ।
प्रावरिषीष्ट ।
आस्तरिषीष्ट ।
विस्तरिषीष्ट ॥

सिचि च परस्मैपदेषु ॥ ७,२.४० ॥

_______ काशिकावृत्तिः७,२.४०:

परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घः न भवति ।
प्रावारिष्टाम् ।
प्रावारिषुः ।
अतारिष्टाम् ।
अतारिषुः ।
आस्तारिष्टाम् ।
आस्तारिषुः ।
परस्मैपदेषु इति किम् ? प्रावरिष्ट, प्रावरीष्ट ॥

इट्सनि वा ॥ ७,२.४१ ॥

_______ काशिकावृत्तिः७,२.४१:

वृतः सनि वा इडागमो भवति ।
वुवूर्षते, विवरिषते, विवरीषते ।
प्रावुवूर्षति, प्राविवरिषति, प्राविवरीषति ।
ऋकारान्तेभ्यः तितीर्षति, तितरिषति, तितरीषति ।
आतिस्तीर्षते, आतिस्तरिषते, आतिस्तरीषते ।
सनि ग्रहगुहोश्च (*७,२.१२) इति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते ।
इटश्च वृतो वा (*७,२.३८) इति पक्षे दीर्घः ।
चिकीर्षति, जिहीर्षति इत्यत्र+उपदेशाधिकारात्लाक्षणिकत्वाच्च इडागमो न भवति ॥

लिङ्सिचोरात्मनेपदेषु ॥ ७,२.४२ ॥

_______ काशिकावृत्तिः७,२.४२:

वृतो लिङि सिचि च आत्मनेपदपरे वा इडागमो भवति ।
वृषीष्ट, वरिषीष्ट ।
प्रवृषीष्ट, प्रावरिषीष्ट ।
आस्तरिषीष्ट, आस्तीर्षीष्ट ।
सिचि खल्वपि अवृत, अवरिष्ट, अवरीष्ट ।
प्रावृत, प्रावरिष्ट, प्रावरीष्ट ।
आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट ।
आत्मनेपदेषु इति किम् ? प्रावारिष्टाम् ।
प्रावारिषुः ।
लिङः प्रत्युदाहरणं न दर्शितम्, असम्भवात्यासुटोऽवलादित्वातिति ॥

ऋतश्च संयोगादेः ॥ ७,२.४३ ॥

_______ काशिकावृत्तिः७,२.४३:

ऋदन्ताद्धातोः संयोगादेः उत्तरयोः लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति ।
ध्वृषीष्ट, ध्वरिषीष्ट ।
स्मृषीष्ट, समरिषीष्ट ।
अध्वृषाताम्, अध्वरिषाताम् ।
अस्मृषाताम्, अस्मरिषाताम् ।
ऋत इति किम् ? च्योषीष्ट ।
प्लोषीष्ट ।
अच्योष्ट ।

अप्लोष्ट ।
संयोगादेः इति किम् ? कृषीष्ट ।
हृषीष्ट ।
अकृत ।
अह्रृत आत्मनेपदेषु इत्येव, अध्वार्षीत् ।
अस्मार्षीत् ।
संस्कृषीष्ट, समस्कृत इत्यत्र+उपदेशाधिकारात्, अभाक्तत्वाच्च सुट इडागमो न भवति ॥

[।८१२]

स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७,२.४४ ॥

______ काशिकावृत्तिः७,२.४४:

स्वरति सूति सूयति धूञित्येतेभ्यः, ऊदिद्भ्यश्च+उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति ।
स्वर्ता, स्वरिता ।
सूति प्रसोता, प्रसविता ।
सूयति सोता, सविता ।
धूञ् धोता, धविता ।
ऊधिद्भ्यः खल्वपि गाहू विगाढा, विगाहिता ।
गुपू गोप्ता, गोपिता ।
वा इति वर्तमने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम् ।
सूतिसूयत्योर्विकरणनिर्देशः षू प्रेरणे इत्यस्य निवृत्त्यर्थः ।
धूञिति सानुबन्धकस्य निर्देसो धू विधूनने इत्यसय्निवृत्त्यर्थः ।
सविता, धुविता इत्येव नित्यमेतयोर्भवति ।
स्वरतेरेतस्माद्विकल्पातृद्धनोः स्ये (*७,२.७०) इत्येतद्भवति विप्रतिषेधेन ।
स्वरिष्यति ।
किति तु प्रत्यये श्र्युकः किति (*७,२.११) इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन ।
स्वृत्वा ।
सूत्वा ।
धूत्वा ॥

रधादिभ्यश्च ॥ ७,२.४५ ॥

______ काशिकावृत्तिः७,२.४५:

रध हिंसासंसिद्ध्योः इत्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति ।
रद्धा, रधिता ।
नंष्टा, नशिता ।
त्रप्ता, तर्प्ता, तर्पिता ।
द्रप्ता, दर्प्ता, दर्पिता ।

द्रोग्धा, द्रोढा, द्रोहिता ।
मोग्धा, मोढा, मोहिता, स्नोग्धा, स्नोढा, स्नोहिता ।
स्नेग्धा, स्नेढा, स्नेहिता ।
क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति ।
अपरे पुनराहुः, पूर्वविधेरिण्निषेधविधानसामर्थ्यात्बलीयस्त्वं प्रतिषेधनियमस्य इति नित्यमिटा भवितव्यम् ।
ररन्धिव, ररन्धिम इति भवति ॥

निरः कुषः ॥ ७,२.४६ ॥

______ काशिकावृत्तिः७,२.४६:

निरित्येवं पूर्वात्कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति ।
निष्कोष्टा, निष्कोषिता ।
निष्कोष्टुम्, निष्कोषितुम् ।
निष्कोष्टव्यम्, निष्कोषितव्यम् ।
निरः इति किम् ? कोषिता ।
कोषितुम् ।
कोषितव्यम् ।
निसः इति वक्तव्ये निरः इति निर्देशेन रेफान्तमुपसर्गान्तरमस्ति इति ज्ञाप्यते ।
तस्य हि निलयनमिति उपसर्गस्य अयतौ (*८,२.१९) इति लत्वं भवति ।
निसो हि रुत्वस्य असिद्धत्वाल्लत्वं न स्यात् ॥

इण्निष्ठायाम् ॥ ७,२.४७ ॥

______ काशिकावृत्तिः७,२.४७:

निरः कुषो निष्ठायामिडागमो भवति ।
निष्कुषितः ।
निष्कुषितवान् ।
इड्ग्रहणं नित्यार्थम् ।
आरम्भो हि यस्य निभाषा (*७,२.१५) इत्यस्य बाधकः, अन्यथा हि निकल्पार्थ एव स्यात् ।
अत्र+एव नित्यमिडागमः, उत्तरत्र विकल्प एव इति ॥

[।८१३]

तीषसहलुभरुषरिषः ॥ ७,२.४८ ॥

______ काशिकावृत्तिः७,२.४८:

तकारादावार्धधातुके इषु सह लुभ रुष इत्येतेभ्यो वा इडागमो भवति ।
इषु एष्टा, एषिता ।
इषु इच्छायामित्यस्य अयं विकल्प इष्यते ।
यस्तु इष गतौ इति दैवादिकः, तस्य प्रेषिता, प्रेषितुम्, प्रेषितव्यमिति नित्यं भवति ।
योऽपि इष आभीक्ष्ण्ये इति कृयादौ पठ्यते, तस्य अप्येवमेव ।
तदर्थमेव तीषसह इति सूत्रे केचितुदितमिषं पठन्ति ।
सह सोढा, सहिता ।
लुभ लोब्धा, लोभिता ।
रुष रोष्टा, रोषिता ।
रिष रेष्टा, रेषिता ।
तीति किम् ? एषिष्यति ॥

सनि इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ७,२.४९ ॥

_______ काशिकावृत्तिः७,२.४९:

इवन्तानां धातूनाम्, ऋधु भ्रस्ज दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सनित्येतेषां च सनि वा इडागमो भवति ।
इवन्तानाम् दिदेविषति, दुद्यूषति ।
सिसेविषति, सुस्यूषति ।
ऋधु अर्दिधिषति, ईर्त्सति ।
भ्रस्ज बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति ।
दम्भु दिदम्भिषति, धिप्सति, धीप्सति ।
श्रि उच्छिश्रयिषति, उच्छिश्रीषति ।
स्वृ सिस्वरिषति, सुस्वूर्षति ।
यु यियविषति, युयूषति ।
ऊर्णु प्रोर्णुनविषति, प्रोर्णुनविषति, प्रोर्णुनूषति ।
भर इति भृञित्येतस्य भौवादिकस्य ग्रहणम्, शपा निर्देशात् ।
विभरिषति, बुभूर्षति ।
ज्ञपि जिज्ञपयिषति, ज्ञीप्सटि ।
सन् सिसनिषति, सिषासति ।
केचिदत्र भरज्ञपिसनितनिपतिदरिद्राणामिति पठन्ति ।
तनि तितनिषति, तितंसति, तितांसति ।
पति पिपतिषति, पित्सति ।
दरिद्रा दिदरिद्रिषति, दिदरिद्रासति ।
सनि इति किम् ? देविता ।
भ्रष्टा ॥

क्लिशः क्त्वानिष्ठयोः ॥ ७,२.५० ॥

_______ काशिकावृत्तिः७,२.५०:

क्लिशः क्त्वानिष्ठ्योः वा इडागमो भवति ।
क्लिष्ट्वा, क्लिशित्वा ।
क्लिष्टः, क्लिशितः ।
क्लिष्टवान्, क्लिशितवान् ।
क्लिशू विबाधने इत्यस्य क्त्वायां विकल्पः सिद्ध एव निष्ठायां तु यस्य विभाषा (*७,२.१५) इति प्रतिषेधः प्राप्नोति ।
क्लिश उपतापे इत्येतस्य तु क्त्वायां निष्ठायां च नित्यमिडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते ॥

पूङश्च ॥ ७,२.५१ ॥

_______ काशिकावृत्तिः७,२.५१:

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति ।
पूर्वा, पवित्वा ।
सोमोऽतिपूतः, सोमोऽतिपवितः ।
पूतवान्, पवितवान् ।
श्र्युकः किति (*७,२.११) इति प्रतिषेधे प्राप्ते विकल्पो विधीयते ॥

[।८१४]

वसतिक्षुधोरिट् ॥ ७,२.५२ ॥

_______ काशिकावृत्तिः७,२.५२:

वसतेः क्षुधेश्च क्त्वानिष्ठयोः इडागमः भवति ।
उषित्वा ।
उषितः ।
उषितवान् ।
क्षुधित्वा ।
क्षुधितः ।
क्षुधितवान् ।
वसति इति विकरणो निर्देशार्थ एव ।
वस्तेस्तु उदात्तत्वादेव भवितव्यमिटा ।
पुनरिड्ग्रहणं नित्यार्थम् ॥

अञ्चेः पूजायाम् ॥ ७,२.५३ ॥

_______ काशिकावृत्तिः७,२.५३:

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोः इडागमो भवति ।
अञ्चित्वा जानु जुहोति ।
अञ्चिता अस्य गुरवः ।
उदितो वा (*७,२.५६) इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायां यस्य विभाषा (*७,२.१५) इति प्रतिषेधः प्राप्तः, तदर्थमिदं प्रारब्धम् ।
पूजायामिति किम् ? उदक्तमुदकं कूपात् ।
उद्धृतमित्यर्थः ॥

लुभो विमोहने ॥ ७,२.५४ ॥

_______ काशिकावृत्तिः७,२.५४:

लुभो विमोहनेऽर्थे वर्तमानात्क्त्वानिष्ठयोः इडागमो भवति ।
लुभित्वा, लोभित्वा ।
विलुभिताः केशाः ।
विलुभितः सीमन्तः ।
विलुभितानि पदानि ।
विमोहनमाकुलीकरणम्, तत्र क्त्वायां तीषसहलुभरुषरिषः (*७,२.४८) इति विकल्पः, निष्ठायां यस्य विभाषा (*७,२.१५) इति प्रतिषेधः प्राप्तः ।
विमोहने इति किम् ? लुब्धो वृषलः ।
शीतेन पीडितः इत्यर्थः ।
लुब्ध्वा, लुभित्वा, लोभित्वा ।
गार्ध्ये यथाप्राप्तमेव भवति ॥

जॄव्रश्च्योः क्त्वि ॥ ७,२.५५ ॥

_______ काशिकावृत्तिः७,२.५५:

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यये इडागमो भवति ।
जरित्वा, जरीत्वा ।
व्रश्चित्वा ।
जॄ इत्येतस्य श्र्युकः किति (*७,२.११) इति प्रतिषेधः प्राप्तः, व्रश्चेरुदित्वाद्विकल्पः ।
क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम् ॥

उदितो वा ॥ ७,२.५६ ॥

_______ काशिकावृत्तिः७,२.५६:

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति ।
शमु शमित्वा, शान्त्वा ।
तमु तमित्वा, तान्त्वा ।
दमु दमित्वा, दान्त्वा ॥

[॰८१५]
सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ७,२.५७ ॥

_______ काशिकावृत्तिः७,२.५७:

सकारादावसिचि आर्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति ।
कृत कर्त्स्यति ।
अकर्त्स्यत् ।
चिकृत्सति ।
कर्तिष्यति ।
अकर्तिष्यत् ।
चिकर्तिषति ।
चृत चएत्स्यति ।
अचर्त्स्यत् ।
चिचृत्सति ।
चर्तिष्यति ।
अचर्तिष्यत् ।
चिचर्तिषति ।
छृद छर्त्स्यति ।
अच्छर्त्स्यत् ।
चिच्छृत्सति ।
छर्दिष्यति ।
अच्छर्दिष्यत् ।
चिछर्दिषति ।
तृद तर्त्स्यति ।
अतर्त्स्यत् ।
तितृत्ससि ।
तर्दिष्यति ।
अतर्दिष्यत् ।
तितर्दिषति ।
नृत नर्त्स्यति ।
अनर्त्स्यत् ।
निनृत्सति ।
नर्तिष्यति ।
अनर्तिष्यत् ।
निनर्तिषति ।
से इति किम् ? कर्तिता ।
असिचि इति किम् ? अकर्तीत् ॥

गमेरिट्परस्मैपदेषु ॥ ७,२.५८ ॥

_______ काशिकावृत्तिः७,२.५८:

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेसु इडागमो भवति ।
गमिष्यति ।
अगमिष्यत् ।
जिगमिषति ।
गमेः इति किम् ? चेष्यति ।
इड्ग्रहणं नित्यार्थम् ।
परस्मैपदेषु इति किम् ? संगंसीष्ट ।
संगंस्यते ।
संजिगंसते ।
संजिगंसिष्यते ।
अधिजिगांसते ।
अधिजिगांसिष्यते ।
गमेरिङादेशस्य अज्झनगमां सनि (*६,४.१६) इति दीर्घत्वम् ।
से इत्येव, गन्तास्मि, गन्तास्वः, गन्तास्मः ।
आत्मनेपदेन समानपदस्थस्य गमेः अयमिडागमो नेष्यते ।
अन्यत्र सर्वत्रैवेष्यते ।
कृत्यपि हि भवति, परस्मैपदलुकि च, संजिगमिषिता, अधिजिगमिषिता व्याकरणस्य, जिगमिष त्वमिति ।
पदशेषकारस्य पुनरिदं दर्शनम् गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात्सकारादेरार्धधातुकस्य इड्भवति ।
तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य इत्येव भवितव्यम् ॥

न वृद्भ्यश्चतुर्भ्यः ॥ ७,२.५९ ॥

_______ काशिकावृत्तिः७,२.५९:

वृतादिभ्यश्चतुर्भ्यः उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडगमो न भवति ।
वृत् वर्त्स्यति ।
अवर्त्स्यत् ।
विवृत्सति ।
वृधू वर्त्स्यति ।
अवर्त्स्यत् ।
विवृत्सति ।
शृधू शर्त्स्यति ।
अशर्त्स्यत् ।
शिशृत्सति ।
स्यन्दू स्यन्त्स्यति ।
अस्यन्त्स्यत् ।

सिस्यन्त्सति ।
चतुर्भ्यः इति न वक्तव्यम्, वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते कृपू सामर्थ्ये वृतिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते न किञ्चिदनिष्टं प्राप्नोति ? तत्क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेत इति ।
चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः संनिधापितो भवति ।
परस्मैपदेषु इत्येव, वर्तिष्यते ।
वर्तिषीष्ट ।
अवर्तिष्यत ।
विवर्तिषते ।
अत्र अपि आत्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते ।
अन्यत्र सर्वत्र प्रतिषेधः ।
कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति, विवृत्सिता, विवृत्स त्वमिति ॥

[०८१६]

तासि च क्लृपः ॥ ७,२.६० ॥

_______ काशिकावृत्तिः७,२.६०:

कृप उत्तरस्य तासेः सकारादेश्च अर्धधातुकस्य परस्मैपदेषु इडागमो न भवति ।
श्वः कल्प्ता ।
कल्प्स्यति ।
अकल्प्स्यत् ।
चिक्लृप्सति ।
पस्मैपदेषु इत्येव, कल्पितासे ।
कल्पिष्यते ।
कल्पिषीष्ट ।
अकल्पिष्यत ।
चिकल्पिषते ।
क्लृपेरप्यात्मनेपदेन समानपदस्थस्य इडागमः इष्यते ।
अन्यत्र प्रतिषेधः ।
कृत्यपि हि पर्समिपदलुकि च प्रतिषेधो भवति, चिक्लृप्सिता, चिक्लृप्स त्वमिति ॥

अचस्तास्वत्थल्यनिटो नित्यम् ॥ ७,२.६१ ॥

_______ काशिकावृत्तिः७,२.६१:

तासौ ये नित्यानिटो धातवः अजन्ताः, तेभ्यस्तासाविव थलि इडागमो न भवति ।
याता ययाथ ।
चेता चिचेथ ।
नेता निनेथ ।
होता जुहोथ ।

अचः इति किम् ? भेत्ता बिभेदिथ ।
तास्वतिति किम् ? लूत्वा लुलविथ ।
थलि इति किम् ? याता ययिव ।
ययिम ।
अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थम् ।
नित्यग्रहणं किम् ? विधोता, विधविता विदुधविथ ।
तासि विभाषितेट्, थलि नित्यमिडागमो भवति ।
तास्वतिति वतिनिर्देशः किमर्थः ? तासौ ततस्थलि प्रतिषेधार्थः ।
यो हि तासावसन्, असत्त्वाच्च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति ।
जघसिथ ।
उवयिथ ।
उत्तरसूत्रेऽपि तास्वदिति वर्तते ।
अदादेशो हि घसिः, वेञादेशश्च वयिस्तासौ न अस्ति ॥

उपदेशेऽत्वतः ॥ ७,२.६२ ॥

_______ काशिकावृत्तिः७,२.६२:

उपदेशे यो धातुरकारवान् तासौ नित्यानिट्तस्मात्तासाविव थलि इडागमो न भवति ।
पक्ता पपक्थ ।
यष्टा इयष्ठ ।
श्क्ता शशक्थ ।
उपदेशे इति किम् ? कर्ष्टा चकर्षिथ ।
अत्वतः इति किम् ? भेत्ता विभेदिथ ।
तपरकरणं किम् ? राद्धा रराधिथ ।
तास्वतित्येव, जिघृक्षति ।
जग्रहिथ ।
नित्यमनिटः इत्येव, अङ्क्ता, अञ्जिता आनञ्जिथ ॥

ऋतो भारद्वाजस्य ॥ ७,२.६३ ॥

_______ काशिकावृत्तिः७,२.६३:

ऋकारान्ताद्धातोः भारद्वाजस्य अचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति ।
स्मर्ता सस्मर्थ ।
ध्वर्ता दध्वर्थ ।
सिद्धे सत्यारम्भो नियमार्थः, ऋत एव भारद्वाजस्य, नान्येषां धातूनाम् ।
ययिथ ।
वविथ ।
पेचिथ ।
शेकिथ ।

तदयमर्थात्पूर्वयोः योगयोर्विकल्पः ।
तपरकरणमृकारान्तस्य निवृत्त्यर्थम् ।
तथा हि सति विध्यर्थमेतत्स्यात् ॥

[।८१७]

वभूथाततन्थजगृभ्मववर्थ+इति निगमे ॥ ७,२.६४ ॥

_______ काशिकावृत्तिः७,२.६४:

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये ।
निगमो वेदः ।
त्वं हि होता प्रथमो बभूथ ।
बभूविथ इति भाषायाम् ।
आततन्थ येनानतरिक्षमुर्वाततन्थ ।
आतेनिथ इति भाषायाम् ।
जगृभ्म जगृभ्मा ते दक्षिणमिन्द्र हस्तम् ।
जगृहिम इति भाषायाम् ।
ववर्थ ववर्थ त्वं हि ज्योतिषा ।
ववरिथ इति भाषायाम् ।
क्रादिसूत्रादेव अस्य प्रतिषेधो सिद्धे नियमार्थं वचनम्, निगमे एव, न भषायामिति ॥

विभाषा सृजिदृशोः ॥ ७,२.६५ ॥

_______ काशिकावृत्तिः७,२.६५:

सृजि दृशि इत्येतयोः थलि विभाषा इडागमो न भवति ।
ससृअष्ठ, ससर्जिथ ।
दद्रष्ठ, ददर्शिथ ॥

इडत्त्यर्तिव्ययतीनाम् ॥ ७,२.६६ ॥

_______ काशिकावृत्तिः७,२.६६:

अत्ति अर्ति व्ययति इत्येतेषां थलि इडागमो भवति ।
आदिथ ।
आरिथ ।
विव्ययिथ ।

व्येञः न व्यो लिटि (*६,१.४६) इति आत्वप्रतिषेधः ।
अत्तिव्ययत्योः ऋतो भारद्वाजस्य (*७,२.६३) इति नियमाद्विकल्पः ।
अर्तेरपि नित्यः प्रतिषेधः ।
अत्र इड्ग्रहणं विस्पष्टार्थम् ।
विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकम्, प्रतिषेधविधाने च अर्तिग्रहणमिति नित्योऽयं विधिः इड्ग्रहणमन्तरेण अपि शक्यते विज्ञातुम् ॥

वस्वेकाजाद्घसाम् ॥ ७,२.६७ ॥

_______ काशिकावृत्तिः७,२.६७:

कृतद्विर्वचनानां धातूनामेकाचाम्, आकारान्तानाम्, घसेश्च वसौ इडागमो भवति ।
आदिवान् ।
आशिवान् ।
पेचिवान् ।
शेकिवान् ।
धात्वभ्यासयोः एकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति आत् ययिवान् ।
तस्थिवान् ।
घस् जक्षिवान् ।
सिद्धे सत्यारम्भो नियमार्थः, एकाजाद्घसामेव वसाविडागमो भवति न अनयेषाम् ।
बिभिद्वान् ।
चिच्छिद्वान् ।
बभूवान् ।
शिश्रिवान् ।
क्रादिनियमात्प्रतिषेधाभावाच्च य इट्प्रसक्तः स नियम्यते ।
आद्ग्रहणमनेकाज्ग्रहणार्थम् ।
द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम् ।
दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यम् ।
दरिद्राञ्चकार ।
अथाप्यां न क्रियते तथापि च दरिद्रातेः आर्धधातुके लोपः सिद्धश्च प्रत्ययविधौ इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति, ददरिद्र्वानिति भवितव्यम् ।
घसेरपि यदि ग्रहणमिह न क्रियते तदा द्विर्वचनात्परत्वाद्घसिभसोर्हलि च (*६,४.१००) इति उपधालोपे कृते द्विर्वचनमेव न स्यात्, अनच्कत्वात् ।
इह तु घसिग्रहणादुपधालोपमपि परत्वातिडागमो बाधते ।
तत्र कृते गमहनजनखनघसाम् (*६,४.९८) इति उपधालोपः ।
स च द्विर्वचनेऽचि (*१,१.५९) इति द्विर्वचने कर्तव्ये स्थानिवद्भवति, तेन जक्षिवानिति सिध्यति ॥

[।८१८]

विभाषा गमहनविदविशाम् ॥ ७,२.६८ ॥

_______ काशिकावृत्तिः७,२.६८:

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति ।
गम जग्मिवान्, जगन्वान् ।
मो नो धातोः (*८,२.६४) इति नकारः ।
हन जघ्निवान्, जघन्वान् ।
विद विविदिवान्, विविद्वान् ।
विश विविशिवान्, विविश्वान् ।
विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम् ।
ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति ।
दृशेश्चेति वक्तव्यम् ।
ददृशिवान्, ददृश्वान् ॥

सनिंससनिवांसम् ॥ ७,२.६९ ॥

_______ काशिकावृत्तिः७,२.६९:

सनोतेः सनतेर्वा धातोः सनिंससनिवांसमिति निपात्यते ।
अग्निंत्वाग्ने सनिंससनिवांसम् ।
इडागम एत्वाभ्यासलोपश्च निपात्यते ।
सनिङ्पूर्वातन्यत्र सेनिवांसमित्येव भवति ।
छन्दसि इदं निपातनं विज्ञायते ।
भाषायां सेनिवांसमिति भवति ॥

ऋद्धनोः स्ये ॥ ७,२.७० ॥

_______ काशिकावृत्तिः७,२.७०:

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति ।
करिष्यति ।
हरिष्यति ।
हनिस्यति ।
स्वरतेर्वेट्त्वातृद्धनोः स्ये इत्येतद्भवति विप्रतिषेधेन ।
स्वरिष्यति ।
तपरकरणं विस्पष्टार्थम् ॥

अञ्जेः सिचि ॥ ७,२.७१ ॥

_______ काशिकावृत्तिः७,२.७१:

अञ्जेः सिचि इडागमो भवति ।

आञ्जीत्, आञ्जीष्टाम्, आञ्जिषुः ।
सिचि इति किम् ? अङ्क्ता अञ्जिता ।
ऊदित्वाद्विभाषा भवति ॥

स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७,२.७२ ॥

_______ काशिकावृत्तिः७,२.७२:

स्तु सु धूञित्येतेभ्यः सिचि परसमिपदे परत इडागमो भवति ।
अस्तावीत् ।
असावीत् ।
अधावीत् ।
परस्मैपदेषु इति किम् ? अस्तोष्ट ।
असोष्ट ।
अधोष्ट, अधविष्ट ॥

[८१९]

यमरमनमातां सक्च ॥ ७,२.७३ ॥

_______ काशिकावृत्तिः७,२.७३:

यम रम नम इत्येषामङ्गानामाकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च ।
यमयंसीत्, अयंसिष्टामयंसिष्टां, अयंसिषुः ।
रम् अरंसीत्, अरंसिष्टाम्, अरंसिषुः ।
नम् अनंसीत्, अनंसिष्टामनंसिषुः ।
अकारान्तानाम् अयासीत्, अयासिष्टाम्, अयासिषुः ।
यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा नेटि प्रतिषिध्यते ।
परस्मैपदेषु इत्येव, अयंस्त ।
अरंस्त ।
अनंस्त ॥

स्मिपूङ्रञ्ज्वशां सनि ॥ ७,२.७४ ॥

_______ काशिकावृत्तिः७,२.७४:

स्मिङ्पूङ् अञ्जू अशू इत्येतेषां धातूनां सनि इडागमो भवति ।

सिस्मयिषते ।
पिपविषते ।
अरिरिषति ।
अञ्जिजिषति ।
अशिशिषते ।
ङकारग्रहणं पूञो मा भूत् ।
पुपूषति इत्येव तस्य भवति ।
अशेः ऊदितो ग्रहणातश्नोतेर्नित्यमिडागमोऽस्त्येव ॥

किरश्च पञ्चभ्यः ॥ ७,२.७५ ॥

_______ काशिकावृत्तिः७,२.७५:

किरादिभ्यः पञ्चभ्यः सनि इडागमो भवति ।
कॄ चिकरिषति ।
गॄ जिगरिषति ।
दृङ् दिदरिषते ।
धृङ् दिधरिषते ।
प्रच्च्ः पित्रच्छिषति ।
पञ्चभ्यः इति किम् ? सिसृक्षति ।
किरतिगिरत्योः इट्सनि वा (*७,२.४१) इति विकल्पः प्राप्तः, वृतो वा (*७,२.३५) इति च ।
अस्येटो दीर्घत्वं न+इच्छन्ति ॥

रुदादिभ्यः सार्वधातुके ॥ ७,२.७६ ॥

_______ काशिकावृत्तिः७,२.७६:

रुदादिभ्यः उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति ।
रुद् रोदिति ।
स्वप् र्वपिति ।
श्वस् श्वसिति ।
अन् प्राणिति ।
जक्ष् जक्षिति ।
पञ्चभ्यः इत्येव, जागर्ति ।
सार्वधातुके इति किम् ? स्वप्ता ।
वलादेः इत्येव, रुदन्ति ॥

ईशः से ॥ ७,२.७७ ॥

_______ काशिकावृत्तिः७,२.७७:

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति ।
ईशिषे ।
ईशिष्व ॥

[।८२०]

ईडजनोर्ध्वे च ॥ ७,२.७८ ॥

_______ काशिकावृत्तिः७,२.७८:

ईड जन इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य, स्ये इत्येतस्य च सर्वधातुकस्य इडागमो भवति ।
ईडिध्वे ।
ईडिध्वम् ।
ईडिषे ।
ईडिष्व ।
जनिध्वे ।
जनिध्वम् ।
जनिषे ।
जनिष्व ।
जनी प्रादुर्भावे इत्यस्य छान्दसत्वात्श्यनो लुकुपधालोपाभावश्च ।
जन जनने इत्यस्य अपि श्लुविकरणस्य ग्रहणमत्र+इष्यते ।
तस्य कर्मव्यतिहारे व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वमिति च भवति ।
ध्वेशब्दे ईशेरपि इडागम इष्यते ईशिध्वे ईशिध्वमिति ।
तदर्थं केचितीडिजनोः स्ध्वे च इति सूत्रं पठन्ति ।
तत्र सकारादेः सेशब्दस्य सूत्र एव+उपादानाच्चशब्दो भिन्नक्रमः ईशेरनुकर्षणार्थो विज्ञायते ।
ईशीडिजनां सेध्वयोः इत्येकमेव सूत्रं न पठितम् ? विचित्रा हि सूत्रस्य कृतिः पणिनेः इति ।
ध्वे इति कृतटेरेत्वस्य ग्रहणात्लङि ध्वमि न भवितव्यमिटा ।
लोटि पुनरेकदेशविकृतस्य अनन्यत्वात्भवितव्यमिटा ॥

लिङः सलोपोऽनन्त्यस्य ॥ ७,२.७९ ॥

_______ काशिकावृत्तिः७,२.७९:

सार्वधातुके इति वर्तते ।
सार्वधातुके यो लिङ्तस्य अनन्त्यस्य सकारस्य लोपो भवति ।
कः पुनरनन्त्यो लिङः सकारः ? यो यासुट्सुट्सीयुटाम् ।

कुर्यात्, कुर्याताम्, कुर्युः ।
कुर्वीत, कुर्वीयाताम्, कुर्वीरन् ।
अनन्यस्य इति किम् ? कुर्युः ।
कुर्याः ।
सार्वधातुके इत्येव, क्रियास्ताम् ।
क्रियासुः ।
कृषीष्ट, कृषीयास्ताम्, कृषीरन् ॥

अतो येयः ॥ ७,२.८० ॥

_______ काशिकावृत्तिः७,२.८०:

अकारान्तातङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इयित्ययमादेशो भवति, पचेत्, पचेताम्, पचेयुः इति ।
अत्र उस्यपदान्तात्(*६,१.९६) इति पररूपं बाधितम् ।
अतः इति किम् ? चिनुयात् ।
सुनुयात् ।
तपरकरणं किम् ? यायात् ।
सार्वधातुक इत्येव, चिकीर्ष्यात् ।
ननु च अतो लोपः (*६,४.४८) इत्यनेन अत्र भवितव्यम्, पचेतित्यत्र अपि हि तर्हि अतो दीर्घो यञि (*७,३.१०१) इति दीर्घत्वेन भवितव्यम्, तदनेन अवश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधकः एवमतो लोपस्य अपि बाधकः स्यात्? स्यादेतदेवं यदि दीर्घः सार्वधातुके विधीयते ।
अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यान्न पुनरतो लोपस्य ।
येयः इत्यविभक्तिको निर्देशः ।
यः इति वा षष्ठीनिर्देशे यलोपस्य असिद्धत्वमनाश्रित्य आद्गुणः कृतः, सौत्रत्वान्निर्देशस्य इति ।
केचितत्र अतो यासियः इति सूत्रं पथन्ति ।
तेषां सकारान्तः स्थानी, षष्ठीसमासश्च ॥

[्८२१]
आतो ङितः ॥ ७,२.८१ ॥

_______ काशिकावृत्तिः७,२.८१:

आकारस्य ङिदवयवस्य आकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इयित्ययमादेशो भवति ।
पचेते पचेथे ।
पचेताम् ।
पचेथाम् ।
यजेते ।
यजेथे ।
यजेताम् ।
यजेथाम् ।
सार्वधातुकमपित्(*१,२.४) इत्यत्र न ङितीव ङिद्वतित्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वतिति ।

पूर्वसूत्र एव उच्चुकुटिषति इति प्रसिद्धये तथाङ्गीकरणम् ।
यदि गाङ्कुटादिसूत्रे ङित इव ङिद्वद्भवति इत्येवमङ्गीक्रियते, तदा अनुदात्तङिति आत्मनेपदम् (*१,३.१२) इत्यात्मनेपदं प्रप्नोति इति ।
आतः इति किम् ? पचन्ति ।
यजन्ति ।
पचन्ते ।
यजन्ते ।
ङितः इति किम् ? पचावहै ।
पचामहै ।
अतः इत्येव, चिन्वाते ।
सुन्वाते ।
तपरकरणं किम् ? मिमाते ।
मिमाथे ॥

आने मुक् ॥ ७,२.८२ ॥

_______ काशिकावृत्तिः७,२.८२:

आने परतोऽङ्गस्यातः मुगागमो भवति ।
पचमानः ।
यजमानः ।
अकारमात्रभक्तोऽयं मुकदुपदेशग्रहणेन गृह्यते इति अदुपदेशादिति लसार्वधातुकानुदत्तत्वं भवति ।
यद्येवमातो ङितः (*७,२.८१) इत्ययमपि चिधिः प्राप्नोति ? तपरनिर्देशान्न भविष्यति ।
मुकि सति अध्यर्धमात्रो भवति ।
लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति ? न+एष दोषः ।
उपदेशग्रहणं तत्र क्रियते ।
तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम् ।
तथा च पचवः, पचामः इत्यत्र अपि भवति ॥

ईदासः ॥ ७,२.८३ ॥

_______ काशिकावृत्तिः७,२.८३:

आसः उत्तरस्य आनशब्दस्य ईकारादेशो भवति ।
आसीनो यजते ।
अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते ॥

अष्टन आ विभक्तौ ॥ ७,२.८४ ॥

_______ काशिकावृत्तिः७,२.८४:

अष्टनो विभक्तौ परतः आकारादेशो भवति ।
अष्टाभिः ।
अष्टाभ्यः ।
अष्टानाम् ।
अष्टासु ।
विभक्तौ इति किम् ? अष्टत्वम् ।
अष्टता ।
आ इति व्यक्तिनिर्देशोऽयम् ।
आकृतिनिर्देशे तु नकारस्थनेऽनुनासिकाकारः स्यात् ।
विकल्पेन अयमाकारो भवति, एतज्ज्ञापितमष्टनो दीर्घात्(*६,१.१७२) इति दीर्घग्रहणात्, अष्टाभ्य औश्(*७,१.२१) इति च कृतात्वस्य निर्देशात् ।
तेन अष्टभिः, अष्टभ्यः इत्यपि भवति ।
तदन्तविधिश्च अत्र+इष्यते ।
प्रियाः अष्टौ येषां ते प्रियाष्टानः ।
प्रियाष्टौ ॥

[।८२२]

रायो हलि ॥ ७,२.८५ ॥

_______ काशिकावृत्तिः७,२.८५:

रै इत्येतस्य हलादौ विभक्तौ परतः आकारादेशो भवति ।
राभ्याम् ।
राभिः ।
हलि इति किम् ? रायौ ।
रायः ।
विभक्तौ इति किम् ? रैत्वम् ।
रैता ।
मृजेर्वृद्धिः (*७,२.११४) इत्यतः प्राग्विभक्त्यधिकारः ॥

युष्मदस्मदोरनादेशे ॥ ७,२.८६ ॥

_______ काशिकावृत्तिः७,२.८६:

युष्मदस्मदित्येतयोः अनादेशे विभक्तौ परतः आकारादेशो भवति ।
युष्माभिः ।
अस्माभिः ।
युष्मासु ।
अस्मासु ।

अनादेशे इति किम्? युष्मत्।
अस्मत्।
हलि इत्यधिकारादप्यत्र न स्यात्।
उत्तरत्र तु अनादेशग्रहणेन प्रयोजनं योऽचि (*७,२.८९) इति, तदिहैव क्रियते॥

द्वितीयायां च॥ ७,२.८७॥

_______ काशिकावृत्तिः७,२.८७:

द्वितीयायां च परतः युष्मदस्मदोः आकारादेशो भवति।
त्वाम्।
माम्।
युवाम्।
आवाम्।
युष्मान्।
अस्मान्।
आदेशार्थं वचनम्॥

प्रथमायाश्च द्विवचने भाषायाम्॥ ७,२.८८॥

_______ काशिकावृत्तिः७,२.८८:

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोः आकारादेशो भवति।
युवाम्।
आवाम्।
प्रथमायाः इति किम्? युवयोः।
आवयोः।
द्विवचने इति किम्? त्वम्।
अहम्।
यूयम्।
वयम्।
भाषायामिति किम्? युवं वस्त्राणि पीवसा वसाथे॥

योऽचि॥ ७,२.८९॥

_______ काशिकावृत्तिः७,२.८९:

अजादौ विभक्तौ अनादेशे युष्मदस्मदोः यकारादेशो भवति ।
त्वया ।
मया ।
त्वयि ।
मयि ।
युवयोः ।
आवयोः ।
अचि इति किम् ? युवाभ्याम् ।
आवाभ्याम् ।
युष्मदस्मदोरनादेशे (*७,२.८६) इत्यत्र यदि हलि इति अनुवर्तते, शक्यमकर्तुमचि इति एतत्? तत्क्रियते विस्पष्टार्थम् ।
अनादेशे इत्येव ।
त्वद्गच्छति ।
मद्गच्छति ॥

शेषे लोपः ॥ ७,२.९० ॥

_______ काशिकावृत्तिः७,२.९०:

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति ।
कश्च शेषः ? यत्र आकारो यकारश्च न विहितः ।
पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र तेषु लोपो विधीयते ॥

[।८२३]

त्वम् ।
अहम् ।
यूयम् ।
वयम् ।
तुभ्यम् ।
मह्यम् ।
युष्मभ्यम् ।
अस्मभ्यम् ।
त्वत् ।
मत् ।
युष्मत् ।
अस्मत् ।
तव ।
मम ।
युष्माकम् ।
कस्माकम् ।
शेषग्रहणं विस्पष्टार्थम् ।
शेषे लोपे कृते स्त्रियां टाप्कस्मान्न भवति, त्वं ब्राह्मणी, अहं ब्राह्मणी ? स्न्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य, अलिङ्गे वा युस्मदस्मदी इति ।

केचित्तु शेषे लोपं टिलोपमिच्छन्ति ।
कथम् ? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते, तेन मपर्यन्ताद्योऽन्यः स शेषः इति ।
तत्र अयं लोपः इति टिलोपो भवति ॥

मपर्यन्तस्य ॥ ७,२.९१ ॥

_______ काशिकावृत्तिः७,२.९१:

मपर्यन्तस्य इत्ययमधिकारः ।
यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्य इत्येवं तद्वेदितव्यम् ।

वक्ष्यति युवावौ द्विवचने ॥ ७,२.९२ ॥

_______ काशिकावृत्तिः७,२.९२:

युवाम् ।
आवाम् ।
मपर्यन्तस्य इति किम् ? युवकाम्, आवकामिति साकच्कस्य मा भूत् ।
त्वमावेकवचने (*७,२.९७) त्वया ।
मया ।
मपर्यन्तस्य इति किम् ? सर्वस्य मा भूत् ।
तथा च सति त्वमयोरकारस्य योऽचि (*७,२.८९) इति यकारे कृते अनिष्टं रूपं स्यात् ।
मान्तस्य इत्येव सिद्धे अस्मिन् यत्परिग्रहणं कृतम्, अवधिद्योतनार्थं तत् ।
मान्ते मा भूत् ।
कदा ? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः ।
स्थानिवत्त्वं च णेरत्र क्वौ लुतत्वान्न विद्यते ॥
युवावौ द्विवचने (*७,२.९२) ।
द्विवचने इत्यर्थग्रहणम् ।
द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोः मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः ।
युवाम् ।
आवाम् ।
युवाभ्याम् ।
आवाभ्याम् ।
युवयोः ।
आवयोः ।
यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्य अन्यसङ्खत्वातेकवचनं बहुवचनं वा भवति, तदा अपि द्व्यर्थयोः युष्मदस्मदोः युवावौ भवतः , यदि त्वाहौ सौ (*७,२.९४) इत्येवमादिना आदेशान्तरेण न बाध्येते ।
अतिक्रान्तं युवामतियुवाम् ।
अत्यावाम् ।
अतिक्रान्तान् युवामतियुवान् ।
अत्यावान् ।

अतिक्रान्तेन युवामतियुवया ।
अत्यावया ।
अतिक्रान्तैर्युवामतियुवाभिः ।
अत्यावाभिः ।
अतिक्रान्तेभ्यो युवामतियुवभ्यम् ।
अत्यावभ्यम् ।
अतिक्रान्ताद्युवामतियुवत् ।
अत्यावत् ।
अतिक्रान्तेभ्यो युवामतियुवत् ।
अत्यावत् ।
अतिक्रान्तानां युवामतियुवाकम् ।
अत्यावाकम् ।
अतिक्रान्ते युवामतियुवयि ।
अत्यावयि ।
अतिक्रान्तेषु युवामतियुवासु ।
अत्यावासु ।
त्वाहादीनां तु विषये परत्वात्ते एव भवन्ति ।
अतिक्रान्तो युवामतित्वम् ।
अत्यहम् ।
अतिक्रान्ता युवामतियूयम् ।
अतिवयम् ।
अतिक्रान्ताय युवामतियुभ्यम् ।
अतिमह्यम् ।
अतिक्रान्तस्य युवामतितव ।
अतिमम ।
यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः ।
अतिक्रान्तौ त्वामतित्वाम् ।
अतिमाम् ।
अतिक्रान्तौ युष्मानतियुष्मान् ।
अत्यस्मान् ।
एवमुन्नेयम् ॥

[॰८२४]
यूयवयौ जसि ॥ ७,२.९३ ॥

_______ काशिकावृत्तिः७,२.९३:

युष्मदस्मदोः मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः ।
यूयम् ।
वयम् ।
परमयूयम् ।
परमवयम् ।
अतियूयम् ।
अतिवयम् ।

तदन्तविधिरत्र भवति, अङ्गाधिकारे तस्य च तदुत्तरपदस्य च इति ॥

त्वाहौ सौ ॥ ७,२.९४ ॥

_______ काशिकावृत्तिः७,२.९४:

युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व अह इत्येतौ आदेशौ भवतः ।
त्वम् ।
अहम् ।
परमत्वम् ।
परमाहम् ।
अतित्वम् ।
अत्यहम् ॥

तुभ्यमह्यौ ङयि ॥ ७,२.९५ ॥

_______ काशिकावृत्तिः७,२.९५:

युष्मदस्मदोः मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशुअ भवतो ङयि परतः ।
तुभ्यम् ।
मह्यम् ।
परमतुभ्यम् ।
परममह्यम् ।
अतितुभ्यम् ।
अतिमह्यम् ॥

तवममौ ङसि ॥ ७,२.९६ ॥

_______ काशिकावृत्तिः७,२.९६:

युष्मदस्मदोः मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः ।
तव ।
मम ।
परमतव ।
परमगम ।
अतितव ।
अतिमम ॥

त्वमावेकवचने ॥ ७,२.९७ ॥

_______ काशिकावृत्तिः७,२.९७:

एकवचने इत्यर्थनिर्देशः ।
एकवचने ये युष्मदस्मदी एकार्थामिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः ।
त्वाम् ।
माम् ।
त्वया ।
मया ।
त्वत् ।
मत् ।
त्वयि ।
मयि ।
यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसङ्ख्यत्वात्द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः ।
आदेशान्तराणां तु त्वाहौ सौ (*७,२.९४) इत्येवमादीनां विषये पूर्वविप्रतिषेधेन ते एवेष्यन्ते ।
अतिक्रान्तः त्वामतित्वम् ।
अत्यहम् ।
अतिक्रान्तौ त्वामतित्वाम् ।
अतिमाम् ।
अतिक्रान्तान् त्वामतित्वान् ।
अतिमान् ।
अतिक्रान्ताभ्यां त्वामतित्वाभ्याम् ।
अतिमाभ्याम् ।
अतिक्रान्तैः त्वामतित्वाभिः ।
अतिमाभिः ।
इत्येवमाद्युदाहर्तव्यम् ॥

[।८२५]

प्रत्ययोत्तरपदयोश्च ॥ ७,२.९८ ॥

_______ काशिकावृत्तिः७,२.९८:

एकवचने इत्यनुवर्तते ।
प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोः युस्मदस्मदोर्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः ।
तवायं त्वदीयः ।
मदीयः ।
अतिशयेन त्वं त्वत्तरः ।
मत्तरः ।

त्वामिच्छति त्वद्यति ।
मद्यति ।
त्वमिवाचरति त्वद्यते ।
मद्यते ।
उत्तरपदे तव पुत्रः त्वत्पुत्रः ।
मत्पुत्रः ।
त्वं नाथोऽस्य त्वन्नाथः ।
मन्नथः ।
एकवचने इत्येव, युष्माकमिदं युष्मदीयम् ।
अस्मदीयम् ।
युष्माकं पुत्रः, अस्माकं पुत्रः युष्मत्पुत्रः, अस्मत्पुत्रः ।
विभक्तौ इत्यधिकारात्पूर्वयोगो विभक्तावेव ।
ततोऽन्यत्र अपि प्रत्यये उत्तरपदे च यथा स्यातित्ययमारम्भः ।
ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेव आदेशौ भविस्यतः ? न+एवं शक्यम्, लुका तस्या भवितव्यम् ।
बहिरङ्गो लुक्, अन्तरङ्गौ आदेशौ, प्रथमं तौ भविष्यतः ? एतदेव तर्हि आदेशवचनं ज्ञापकमन्तरङ्गानपि विधीन् बहिरङ्गोऽपि लुक्बाधते इति ।
तेन गोमान् प्रियोऽस्य गोमत्प्रियः इत्येवमादौ नुमादि लुका बाध्यते ।
एवं च सति त्वाहौ सौ (*७,२.९४) इत्येवमादयोऽपि प्रत्ययोत्तर्पदयोरादेशा न भवन्ति ।
त्वं प्रधानमेषां त्वत्प्रधानाः ।
मत्प्रधानाः ।
यूयं पुत्रा अस्य युष्मत्पुत्रः ।
अस्मत्पुत्रः तुभ्यं हितं त्वद्धितम् ।
मद्धितम् ।
तव पुत्रः त्वत्पुत्रः ।
मत्पुत्रः ।
अथ किमर्थ्मेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते ? लक्ष्यस्थित्यपेक्षया ।
ज्ञाप्कार्थे ह्येतस्मिन् बहुतरमिष्टं सङ्गृह्यते ॥

त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ७,२.९९ ॥

________ काशिकावृत्तिः७,२.९९:

त्रि चतुरित्येतयोः स्त्रियां वर्तमानयोः तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः ।
तिस्रः ।
चतस्रः ।
तिसृभिः ।
चतसृभिः ।
स्त्रियामिति किम् ? त्रयः ।
चत्वारः ।
त्रीणिं ।
चत्वारि ।
स्त्रियामिति च+एतत्त्रिचतुरोरेव विशेषणं न अङ्गस्य ।
तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदा अप्यादेशौ भवत एव ।
प्रियाः तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मणः ।
प्रियतिस्रौ, प्रियतिस्रः ।

प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि ।
प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः ।
प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि ।
नद्यृतश्च (*५,४.१५३) इति समासान्तो न भवति, विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात् ।
यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे, स्त्रियामङ्गम्, तदा आदेशौ न भवतः ।
प्रियाः त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्याः ब्राह्मण्याः सा प्रियत्रिः ।

[।८२६]

प्रियत्री, प्रियत्रयः ।
प्रियचत्वा, प्रियचत्वारौ, प्रियचत्वारः ।
तिसृभावे सञ्ज्ञायां कन्युपसङ्ख्यानं कर्तव्यम् ।
तिसृका नाम ग्रामः ।
चतसर्याद्युदात्तनिपातनं कर्तव्यम् ।
चतस्त्रः पश्य इत्यत्र चतुरः शसि (*६,१.१३७) इत्येष स्वरो मा भूत् ।
चतसृणामित्यत्र तु षट्त्रिचतुर्भ्यो हलादिः (*६,१.१७९) इत्येव स्वरो भवति ।
हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते ॥

अचि र ऋतः ॥ ७,२.१०० ॥

_______ काशिकावृत्तिः७,२.१००:
तिसृ चतसृ इत्येतयोः ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः ।
तिस्रः तिष्ठन्ति ।
तिस्रः पश्य ।
चतस्रः तिष्ठन्ति ।
चतस्रः पश्य ।
प्रियतिस्रः आनय ।
प्रियातस्रः आनय ।
प्रियतिस्रः स्वम् ।
प्रियचतस्रः स्वम् ।
प्रियतिस्रि निधेहि ।
प्रियचतस्रि निर्धेहि ।
पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानामपवादः ।
परमपि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते ।
अचि इति किम् ? तिसृभिः ।
चतसृभिः ।
ऋतः इति किम् ? तिसृचतस्रोः प्रतिपत्त्यर्थम्, अन्यथा हि तदपवादः त्रिचतुरोरेव अयमादेशो विज्ञायेत ॥

जराया जरसन्यतरस्याम् ॥ ७,२.१०१ ॥

_______ काशिकावृत्तिः७,२.१०१:

जरा इत्येतस्य जरसित्ययमादेशो भवति अन्यत्रस्यामजादौ विभक्तौ परतः ।
जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते ।
जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः ।
अचि इत्येव, जराभ्याम् ।
जराभिः ।
नुमो विधानात्जरसादेशो भवति विप्रतिषेधेन ।
अतिजरांसि ब्राह्मणकुलानि ।
इह अतिजरसं ब्राह्मणकुलं पश्य इति लुग्न भवति, आनुपूर्व्या सिद्धत्वत् ।
अतिजर अमिति स्थिते लुक्, अम्भावः, जरस्भावः इति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति ।
तत्र लुक्तावदपवादत्वादम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन ।
न च पुनर्लुक्शास्त्रं प्रवर्तते, भ्रष्टावसरत्वात्, इति एवमेव भवति अतिजरसं ब्राह्मणकुलं पश्य इति ।
प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैः इति च भवितव्यमिति गोनर्दीयमतेन ।
किं कारणम् ? सन्निपातलक्षणो विधिरनिमित्तं तद्विद्घातस्य इति ।
अन्ये तु अनित्यत्वातस्याः परिभाषायाः अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैः इत्येवं भवितव्यमिति मन्यन्ते ॥

[।८२७]

त्यदादीनामः ॥ ७,२.१०२ ॥

_______ काशिकावृत्तिः७,२.१०२:

त्यदित्येवमादीनामकारादेशो भवति विभक्तौ परतः ।
त्यद् स्यः, त्यौ, त्ये ।
तद् सः, तौ, ते ।
यद् यः, यौ, ये ।
एतद् एषः, एतौ, एते ।
इदम् अयम्, इमौ, इमे ।
अदस् असौ, अमू, अमी ।
द्वि द्वौ ।
द्वाभ्याम् ।
द्विपर्यन्तानां त्यदादीनामत्वमिष्यते ।
इह न भवति, भवत् भवान् ।
सञ्ज्ञोपसर्जनीभूताः त्यदादयः पाठादेव पर्युदस्ताः इति इह न भवति, त्यद्, त्यदौ, त्यदः ।
अतित्यद्, अतित्यदौ, अतित्यदः ।
त्यदादिप्रधाने तु शब्दे भवत्येव, परमसः परमतौ, पर्मते ॥

किमः कः ॥ ७,२.१०३ ॥

_______ काशिकावृत्तिः७,२.१०३:

किमित्येतस्य कः इत्ययमादेशो भवति विभक्तौ परतः ।
कः, कौ, के ।
साकच्कस्य अप्ययमादेशो भवति, तेन अकार एव किमो न विधीयते किमोऽत्(*५,३.१२) इति ॥

कु तिहोः ॥ ७,२.१०४ ॥

_______ काशिकावृत्तिः७,२.१०४:

तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य कु इत्ययमादेशो भवति ।
कुतः ।
कुत्र ।
कुह ।
तिहोः इति इकारः उच्चारणार्थः ॥

क्व अति ॥ ७,२.१०५ ॥

_______ काशिकावृत्तिः७,२.१०५:

अति तियेतस्यां विभक्तौ परतः किमित्येतस्य क्व इत्ययमादेशो भवति ।
क्व गमिष्यसि ।
क्व भोक्ष्यते ।
आदेशान्तरवचनमोर्गुण निवृत्त्यर्थम् ।
किमो ड्वतिति प्रत्ययान्तरं न विधीयते, साकच्कार्थम् ॥

तदोः सः सावनन्त्ययोः ॥ ७,२.१०६ ॥

_______ काशिकावृत्तिः७,२.१०६:

त्यदादीनां तकारदकारयोः अनन्त्ययोः सकारादेशो भवति सौ परतः ।
त्यद् स्यः ।
तद् सः ।
एतद् एषः ।
अदस् असौ ।
अनन्त्ययोः इति किम् ? हे स ।
सा ॥

अदस औ सुलोपश्च ॥ ७,२.१०७ ॥

_______ काशिकावृत्तिः७,२.१०७:

अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति ।
असौ ।

[॰८२८]

औत्वप्रतिषेधः साकच्कादृवा वक्तव्यः सादुत्वं च ।
यदा च औत्वप्रतिषेधः तदा सकारादुत्तरस्य उत्वं भवति ।
असुकः ।
असुकौ ।
उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः ।
परमाहम् ।
परमायम् ।
परमानेन ।
अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ॥
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥

इदमो मः ॥ ७,२.१०८ ॥

_______ काशिकावृत्तिः७,२.१०८:

इदमः सौ परतः मकारोऽन्तादेशो भवति ।
इयम् ।
अयम् ।
इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

दश्च ॥ ७,२.१०९ ॥

_______ काशिकावृत्तिः७,२.१०९:

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः ।
इमौ, इमे ।
इमम्, इमौ, इमान् ॥

यः सौ ॥ ७,२.११० ॥

_______ काशिकावृत्तिः७,२.११०:

इदमो मकारस्य यकारादेशो भवति सौ परतः ।
इयम् ।
उत्तरसूत्रे पुंसि इति वचनात्स्त्रियामयं यकारः ॥

इदोऽय्पुंसि ॥ ७,२.१११ ॥

_______ काशिकावृत्तिः७,२.१११:

इदमः इदरूपस्य पुंसि सौ परतः अयित्ययमादेशो भवति ।
अयं ब्राह्मणः ।
पुंसि इति किम् ? इयं ब्राह्मणी ॥

अनाप्यकः ॥ ७,२.११२ ॥

_______ काशिकावृत्तिः७,२.११२:

इदमः अककारस्य इद्रूपस्य स्थाने अन इत्ययमादेशो भवति आपि विभक्तौ परतः ।
अनेन ।
अनयोः ।
अकः इति किम् ? इमकेन ।
इमकयोः ।
आपि इति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण ॥

[।८२९]
हलि लोपः ॥ ७,२.११३ ॥

_______ काशिकावृत्तिः७,२.११३:

हलादौ विभक्तौ परतः इदमोऽककारस्य इद्रूपस्य लोपो भवति ।
आभ्याम् ।

एभिः ।
एभ्यः ।
एषाम् ।
एषु ।
नानर्थकेऽलोन्त्यविधिः इति सर्वस्य अयमिद्रूपस्य लोपः ।
अथ वा न अयमिल्लोपः ।
अनाप्यकः (*७,२.११२) इति अङ्ग्रहणमनुवर्तते ॥

मृजेर्वृद्धिः ॥ ७,२.११४ ॥

_______ काशिकावृत्तिः७,२.११४:

विभक्तौ इति निवृत्तम् ।
मृजेरङ्गस्य इको वृद्धिर्भवति ।
मार्ष्टा ।
मार्ष्टुम् ।
मार्ष्टव्यम् ।
मृजेरिति धातुग्रहणमिदम्, धातोश्च कार्यमुच्यमानं धातुप्रत्यय एव वेदितव्यम् ।
तेन किंसपरिमृड्भ्याम्, कंसपरिमृड्भिः इत्यत्र न भवति ॥

अचो ञ्णिति ॥ ७,२.११५ ॥

_______ काशिकावृत्तिः७,२.११५:

अजन्तस्य अङ्गस्य ञिति णिति च प्रत्यये वृद्धिर्भवति ।
ञिति एकस्तण्डुलनिश्चायः ।
द्वौ शूर्पनिष्पावौ ।
कारः ।
हारः ।
णिति गौः, गावौ, गावः ।
सखायौ, सखायः ।
जैत्रम् ।
यौत्रम् ।
च्यौत्नः ।
जयतेर्यौतेश्च उणादयो बहुलम् (*३,३.१) इति ष्ट्रन् प्रत्ययः ।
च्यवतेरपि त्नण् ॥

अत उपधायाः ॥ ७,२.११६ ॥

अग्नयः ।
वायवः ।
पटवः ।
धेनवः ।
बुद्धयः ।
जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधाया ह्रस्व इत्येतस्मात् ।
इतः प्रकरणात्प्रभृति छन्दसि वा इति वक्तव्यम् ।
किं प्रयोजनम् ? अम्बे, दर्वि, शतक्रत्वः, पश्वे नृभ्यः, किकिदीव्या ।
अम्बे, अम्ब ।
पूर्णा दर्वि, पूर्णा दर्वी ।
अधा शतक्रत्वः, शतक्रतवः ।
पश्वे नृभ्यः, पशवे ।
किकिदीव्या, किकिदीविना ॥

[॰८५८]

ऋतो ङिसर्वनामस्थानयोः ॥ ७,३.११० ॥

_______ काशिकावृत्तिः७,३.११०:

गुणः इति वर्तते ।
ऋकारान्तस्य अङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति ।
ङौ मातरि ।
पितरि ।
भ्रातरि ।
कर्तरि ।
सर्वनामस्थाने कर्तारौ ।
कर्तारः ।
मातरौ ।
पितरौ ।
भ्रातरौ ।
तपरकरणं मुखसुखार्थम् ॥

घेर्ङिति ॥ ७,३.१११ ॥

_______ काशिकावृत्तिः७,३.१११:

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति ।
अग्नये ।
वायवे ।
अग्नेरागच्छति ।

वायोरागच्छति ।
अग्नेः स्वम् ।
वायोः स्वम् ।
घेः इति किम्? सख्ये ।
पत्ये ।
ङिति इति किम्? अग्निभ्याम् ।
सुपि इत्येव, पट्वी ।
कुरुतः ॥

आण्नद्याः ॥ ७,३.११२ ॥

_______ काशिकावृत्तिः७,३.११२:

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य आडागमो भवति ।
कुमार्यै ।
ब्राह्मबन्ध्वै ।
कुमार्याः ।
ब्रह्मबन्ध्वाः ॥

याडापः ॥ ७,३.११३ ॥

_______ काशिकावृत्तिः७,३.११३:

आबन्ता दङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति ।
खट्वायै ।
बहुराजायै ।
कारीषगन्ध्व्यायै ।
खट्वायाः ।
कारीषगन्ध्यायाः ।
बहुराजायाः ।
अतिखट्वाय इत्यत्र अकृते दीर्घे ङ्याब्ग्रहणे अदीर्घः इति वचनाद्याडागमो न भवति, कृते तु लाक्षणिकत्वात् ॥

सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ७,३.११४ ॥

_______ काशिकावृत्तिः७,३.११४:

सर्वनाम्नः आबन्तादङ्गादुत्तरस्य ङितः प्रत्यय्स्य स्याटागमो ह्रस्वश्च भवति ।
सर्वस्यै ।

विश्वस्यै ।
यस्यै ।
तस्यै ।
कस्यै ।
अन्यस्यै ।
सर्वस्याः ।
विश्वस्याः ।
यस्याः ।
तस्याः ।
कस्याः ।
अन्यस्याः ।
आपः इत्येव, भवति ।
भवते ॥

विभाषा द्वितीयातृतीयाभ्याम् ॥ ७,३.११५ ॥

_______ काशिकावृत्तिः७,३.११५:

द्वितीया तृतिया इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याटागमो भवति, द्वितीयातृतियायोश्च ह्रस्वो भवति ।
द्वितीयस्यै, द्वितियायै ।
तृतीयस्यै, तृतीयायै ॥

ङेरां नद्याम्नीभ्यः ॥ ७,३.११६ ॥

_______ काशिकावृत्तिः७,३.११६:

नद्यन्तातावन्तात्नी इत्येतस्माच्च+उत्तरस्य ङेः आमादेशो भवति ।
कुमार्याम् ।
गौर्याम् ।
ब्रह्मबन्ध्वाम् ।
धीबन्ध्वाम् ।
आपः खट्वायाम् ।
बहुराजायाम् ।
कारीषगन्ध्यायाम् ।
नी राजन्याम् ।
सेनान्याम् ॥

इदुद्भ्याम् ॥ ७,३.११७ ॥

_______ काशिकावृत्तिः७,३.११७:

इकारोकाराभ्यां नदीसञ्ज्ञकाभ्यामुत्तरस्य ङेः आमादेशो भवति ।
कृत्याम् ।
धेन्वाम् ॥

औत् ॥ ७,३.११८ ॥

_______ काशिकावृत्तिः७,३.११८:

इदुद्भ्यामुत्तरस्य ङेः औकारादेशो भवति ।
यन्न नदिसञ्ज्ञं न अपि घिसञ्ज्ञमिकारान्तम् , तदिह+उदाहरणम् ।
सख्यौ ।
पत्यौ ॥

अच्च घेः ॥ ७,३.११९ ॥

_______ काशिकावृत्तिः७,३.११९:

औतिति वर्तते ।
घिसञ्ज्ञकादुत्तरस्य ङेः औकारादेशो भवति, तस्य च घेः अकारादेशो भवति ।
अग्नौ ।
वायौ कृतौ ।
धेनौ ।
पटौ ।
अतिति तपरकरणं स्त्रियां टापो निव्र्त्त्यर्थम् ।
औदच्च घेः इति येषामेकमेव+इदं सूत्रम्, ते प्रधानशिष्टमिदुद्भ्यामौत्त्वं वर्णयन्ति, अन्वाचयशिष्टं घेः अकारमिति ॥

आङो नाऽस्त्रियाम् ॥ ७,३.१२० ॥

_______ काशिकावृत्तिः७,३.१२०:

घेः उत्तरस्य आङः न अभावो भवति अस्त्रियाम् ।

अग्निना ।
वायुना ।
पटुना ।
पुंसि इति नोक्तम्, अमुना ब्राह्मणकुलेन ।
अस्त्रियामिति किम् ? कृत्या ।
धेन्वा ॥
इति काशिकायां वृत्तौ सप्तमाध्यायस्य तृतीयः पादः ॥ ॥

सप्तमाध्यायस्य चतुर्थः पादः ।

[।८६०]

णौ चङ्युपधाया ह्रस्वः ॥ ७,४.१ ॥

_______ काशिकावृत्तिः७,४.१:

अङ्गस्य इति वर्तते ।
चङ्परे णौ यदङ्गम्, तस्य उपधाया ह्रस्वो भवति ।
अचीकरत् ।
अजीहरत् ।
अलीलवत् ।
अपीपवत् ।
अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम् ।
इह तु मा भवानटिटतिति नित्यत्वाद्द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्य अकारस्य उपधात्वं विहितमिति ह्रस्वो न स्यात्?
नैष दोषः ।
ओणेः ऋदित् करणं ज्ञापकं नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते इति ।
णौ इति किम् ? चङ्युपधाया ह्रस्वः इत्युच्यमाने अलीलवतित्यत्र वचनसामर्थ्यातन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात् ।
अदीदपतित्यत्र ह्रस्वत्वेन पुको बाधः स्यात् ।
अपीपचतित्येवमादौतु नैव स्यात् ।
चङि इति किम् ? कारयति ।
हारयति ।
उपधाया इति किम् ? अचकाङ्क्षत् ।
अववाञ्छत् ।
तदेददुपधाग्रहणमुत्तरार्थमवश्यं कर्तव्यं तदिह अपि ह्रस्वत्वं निवर्तयति इत्येवमर्थं येन न अव्यवधानमित्येतन्नाश्रयितव्यमिति ।
उपधाह्रस्वत्वे णेर्णिच्युपसङ्ख्यानम् ।
वदित्वन्तं प्रयोजितवानवीवदत्वीणां परिवादकेन ।
योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेन अग्लोपित्वातङ्गस्य ह्रस्वो न प्राप्नोति ।
ण्याकृतिनिर्देशात्सिद्धम् ॥

न अग्लोपिशास्वृदिताम् ॥ ७,४.२ ॥

_______ काशिकावृत्तिः७,४.२:

अग्लोपिनामङ्गानां शासेः ऋदितां च णौ चङि उपधाया ह्रस्वो न भवति ।
अग्लोपिनां तावत् मालामाख्यतममालत् ।
मातरमाख्यतममातरत् ।
राजानमतिक्रान्तवानत्यरराजत् ।
लोमान्यनुमृष्टवानन्वलुलोमत् ।
अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्, हलचोरादेशे तु न सिध्यति इति तदर्थमेतद्वचनम् ।
शासेः अशशासत् ।
ऋदिताम् बाधृ अबवाधत् ।
याचृ अययाचत् ।
ढौकृ अडुढौकत् ॥

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ७,४.३ ॥

_______ काशिकावृत्तिः७,४.३:

भ्राज भास भाष दीप जीव मील पीड इत्येतेषामङ्गानां णौ चङि उपधाया ह्रस्वो भवति अन्यतरस्याम् ।
भ्राज अबिभ्रजत्, अबभ्राजत् ।
भास अबीभसत्, अबभासत् ।
भाष अबीभषत्, अबभाषत् ।
दीप अदीदिपत्, अदिदीपत् ।
जीव अजीजिवत्, अजिजीवत् ।
मील अमीमिलत्, अमिमीलत् ।
पीड अपीपिडत्, अपिपीडत् ।
भ्राजभासोरृदित्करणमपाणिनीयम् ।

[।८६१]

काण्यादीनां चेति वक्तव्यम् ।
कण अचीकणत्, अचकाणत् ।
वण अवीवणत्, अववाणत् ॥

लोपः पिबतेरीच्च अभ्यासस्य ॥ ७,४.४ ॥

_______ काशिकावृत्तिः७,४.४:

पिबतेः अङ्गस्य णौ चङि उपधायाः लोपो भवति, अभ्यासस्य ईकारादेशो भवति ।
अपीप्यत्, अपीप्यताम्, अपीप्यन् ।
उपधालोपे कृते ओः पुयण्वचनं ज्ञापकं णौ स्थानिवद्भावस्य इति स्थानिवद्भावाद्द्विर्वचनम् ॥

तिष्ठतेरित् ॥ ७,४.५ ॥

_______ काशिकावृत्तिः७,४.५:

तिष्ठतेरङ्गस्य णौ चङि उपधायाः इकारादेशो भवति ।
अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन् ॥

जिघ्रतेर्वा ॥ ७,४.६ ॥

_______ काशिकावृत्तिः७,४.६:

जिघ्रतेः अङ्गस्य नौ चङि उपधाया इकारादेशो वा भवति ।
अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन् ।
अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन् ॥

उरृत् ॥ ७,४.७ ॥

_______ काशिकावृत्तिः७,४.७:

णौ चङि उपधायाः ऋवर्णस्य स्थाने वा ऋकारादेशो भवति ।
इररारामपवादः ।
इर् अचिकीर्तत्, अचीकृतत् ।
अर् अववर्तत्, अवीवृतत् ।
आर् अममार्जत्, अमीमृजत् ।
वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते ।
तप्रकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्, अचीकृततिति ।
न च अयं भाव्यमानः, किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेव+एतदभ्यनुज्ञायते ॥

नित्यं छन्दसि ॥ ७,४.८ ॥

_______ काशिकावृत्तिः७,४.८:

छन्दसि विषये णौ चङि उपधाया ऋवर्णस्य स्थाने ऋकरादेशो भवति नित्यम् ।
अवीवृधत्पुरोडाशेन ।

अवीवृधताम् ।
अवीवृधन् ॥

[।८६२]

दयतेर्दिगि लिटि ॥ ७,४.९ ॥

_______ काशिकावृत्तिः७,४.९:

दयतेरङ्गस्य लिटि परतो दिगि इत्ययमादेशो भवति ।
अव्दिग्ये, अवदिग्याते, अवदिग्यिरे ।
दयतेः इति दीङो ग्रहणं न तु दय दाने इत्यस्य ।
तस्य हि लिति आं विहितः ।
दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते ॥

ऋतश्च संयोगादेर्गुणः ॥ ७,४.१० ॥

_______ काशिकावृत्तिः७,४.१०:

ऋकारान्तस्य अङ्गस्य संयोगादेः गुणो भवति लिटि परतः ।
स्वृ सस्वरतुः ।
सस्वरुः ।
ध्वृ दध्वरतुः ।
दध्वरुः ।
स्मृ सस्मरतुः ।
सस्मरुः ।
ऋतः इति किम् ? चिक्षियतुः ।
चिक्षियुः ।
संयोगादेः इति किम् ? चक्रतुः ।
चकृउः ।
प्रतिषेधविषयेऽपि गुणो यथा स्यातित्ययमारम्भः ।
वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेव+इष्यते ।
सस्वार ।
सस्मार ।
लिटि इत्येव, स्मृतः ।
स्मृतवान् ।
संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्तव्यम् ।
सञ्चस्करतुः, सञ्चस्करुः इति ।
अत्र हि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण इत्यत्र दर्शने लिति कृते, तदाश्रये च द्विर्वचने, पश्चादुपसर्गयोगे सति, अडभ्यासव्यवायेऽपि (*६,१.१३६) इति सुत्क्रियते ।
एवं च कृत्वा संस्कृषीष्ट, उपस्कृषीष्ट इत्यत्र सुटो बहिरङ्गलक्षणस्य असिद्धत्वातृतश्च संयोगादेः इति इडागमो न भवति ॥

ऋच्छत्यॄताम् ॥ ७,४.११ ॥

_______ काशिकावृत्तिः७,४.११:

ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ॠकारान्तानां च लिटि परतो गुणो न भवति ।
ऋच्छ आनर्च्छ, आनर्च्छतुः, आनर्च्छुः ।
ऋ आरतुः, आरुः ।
ॠकारान्तानाम् निचकरतुः, निचकरुः ।
निजगरतुः, निजगरुः ।
ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ॠतां तु प्रतिषिद्धः ।
वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेव+इष्यते ।
निचकार ।
निजगार ॥

शॄदॄप्रां ह्रस्वो वा ॥ ७,४.१२ ॥

_______ काशिकावृत्तिः७,४.१२:

शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति ।
शॄ विशश्रतुः, विशश्रुः ।
विशशरतुः, विशशरुः ।
दॄ विदद्रतुः, विदद्रुः ।
विददरतुः, विददरुः ।
पॄ निपप्रतुः, निपप्रुः ।
निपपरतुः, निपपरुः ।
ह्रस्ववचनमित्वोत्वनिवृत्त्यर्थम् ।
केचिदेतत्सूत्रं प्रत्याचक्षते ।
श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे इत्येतेषामनेकार्था धातवः इति शॄदॄप्रामर्थे वर्तमानानां विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः इत्येतानि रूपाणि साधयन्ति ।
तथा च सति क्वसौ विशशॄवानित्येतद्रूपं न स्यात् ॥

[।८६३]

केऽणः ॥ ७,४.१३ ॥

_______ काशिकावृत्तिः७,४.१३:

के प्रत्यये परतोऽणो ह्रस्वो भवति ।
ज्ञका कुमारिका ।
किशोरिका ।
अणः इति किम् ? गोका ।
नौका ।
राका, धाका इत्यत्र उणादयो बहुलम् (*३,३.१) इति ह्रस्वो न भवति ।
न कपि (*७,४.१४) इति प्रतिषेधसामर्थ्यात्कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति ॥

न कपि ॥ ७,४.१४ ॥

_______ काशिकावृत्तिः७,४.१४:
कपि प्रत्यये परतोऽणो ह्रस्वो न भवति ।
बहुकुमारीकः ।
बहुवधूकः ।
बहुलक्ष्मीकः ।
गोस्त्रियोरुपसर्जनस्य (*१,२.४८) इत्ययमपि ह्रस्वः कपि न भवति ।
समासार्थे हि उत्तरपदे कपि कृते, पश्चात्कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ॥

अपोऽन्यतरस्याम् ॥ ७,४.१५ ॥

_______ काशिकावृत्तिः७,४.१५:

आबन्तस्याङ्गस्य कपि ह्रस्वः न भवत्यन्तरस्याम् ।
बहुखट्वाकः, बहुखट्वकः ।
बहुमाल कः बहुमालकः ॥

ऋदृशोऽङि गुणः ॥ ७,४.१६ ॥

_______ काशिकावृत्तिः७,४.१६:

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति ।
शकलाङ्गुष्ठकोऽकरत् ।
अहं तेभ्योऽकरं नमः ।
असरत् ।
आरत् ।
जरा ।
दृशेः अदर्शत्, अदर्शताम्, अदर्शन् ॥

अस्यतेस्थुक् ॥ ७,४.१७ ॥

_______ काशिकावृत्तिः७,४.१७:

अस्यतेरङ्गस्य थुगागमो भवति अङि परतः ।
आस्थत्, आस्थताम्, आस्थन् ॥

श्वयतेरः ॥ ७,४.१८ ॥

_______ काशिकावृत्तिः७,४.१८:

श्वयतेः अङ्गस्य अकारादेशो भवति अङि परतः ।
अश्वत्, अश्वताम्, अश्वन् ॥

पतः पुम् ॥ ७,४.१९ ॥

_______ काशिकावृत्तिः७,४.१९:

पतेरङ्गस्य पुमागमो भवति अङि परतः ।
अपप्तत्, अपप्तताम्, अपप्तन् ॥

[।८६४]

वच उम् ॥ ७,४.२० ॥

_______ काशिकावृत्तिः७,४.२०:

वचेः अङ्गस्य अङि परतः उमागमो भवति ।
अवोचत्, अवोचताम्, अवोचन् ॥

शीङः सार्वधातुके गुणः ॥ ७,४.२१ ॥

_______ काशिकावृत्तिः७,४.२१:

शीङः अङ्गस्य सार्वधातुके परतः गुणो भवति ।
शेते, शयाते, शेरते ।
सार्वधातुके इति किम् ? शिश्ये ॥

अयङ्यि क्ङिति ॥ ७,४.२२ ॥

_______ काशिकावृत्तिः७,४.२२:

यकारादौ क्ङिति प्रत्यये परतः शीङः अङ्गस्य अयङित्ययमादेशो भवति ।
शय्यते ।
शाशय्यते ।
प्रशय्य ।
उपशय्य ।
यि इति किम् ? शिश्ये ।
क्ङिति इति किम् ? शेयम् ॥

उपसर्गाद्ध्रस्व ऊहतेः ॥ ७,४.२३ ॥

_______ काशिकावृत्तिः७,४.२३:

उपसर्गादुत्तरस्य उहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः ।
समुह्यते ।
समुह्य गतः ।
अभ्युह्यते ।
अभ्युह्य गतः ।
उपसर्गातिति किम् ? ऊह्यते ।
ऊहतेः इति किम् ? समीह्यते ।
यि इत्येव, समूहितम् ।
क्ङिति इत्येव, समूह्योऽयमर्थः ।
अणः इत्येव, आ ऊह्यते ओह्यते ।
समोह्यते ॥

एतेर्लिंगि ॥ ७,४.२४ ॥

_______ काशिकावृत्तिः७,४.२४:

एतेरङ्गस्य उपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति ।
उदियात् ।
समियात् ।
अन्वियात् ।
आशिषि लिङि अकृत्सार्वधातुकयोः इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति ।
उपसर्गातित्येव, ईयात् ।
अणः इत्येव, आ ईयातेयत् ।
समेयात् ॥

अकृत्सार्वधातुकयोर्दीर्घः ॥ ७,४.२५ ॥

_______ काशिकावृत्तिः७,४.२५:

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्य अङ्गस्य दीर्घो भवति ।
भृशायते ।
सुखायते ।
दुःखायते ।
चीयते ।
चेचीयते ।
स्तूयते ।
तोष्टूयते ।
चीयात् ।
स्तूयात् ।
अकृतिति किम् ? प्रकृत्य ।
प्रहृत्य ।
परत्वात्दीर्घत्वेन तुको बाधः स्यात् ।
असार्वधातुके इति किम् ? चिनुयात् ।
सुनुयात् ।
क्ङिति इत्येव, उरुया ।
धृष्णुया ॥

च्वौ च ॥ ७,४.२६ ॥

_______ काशिकावृत्तिः७,४.२६:
च्विप्रत्यये परतोऽजन्तस्य अङ्गस्य दीर्घो भवति ।
शुचीकरोति ।
शुचीभवति ।
शुचीस्यात् ।

पटूकरोति ।
पटूभवति ।
पटूस्यात् ॥

[।८६५]

रीङृतः ॥ ७,४.२७ ॥

_______ काशिकावृत्तिः७,४.२७:

ऋकारान्तस्य अङ्गस्य अकृद्यकारे असार्वधातुके यकारे च्वौ च परतो रीङित्ययमादेशो भवति ।
मात्रीयति ।
मात्रीयते ।
पित्रीयति ।
पित्रीयते ।
चेक्रीयते ।
मात्रीभूतः ।
क्ङिति इत्येतन्निवृत्तम्, तेन+इह अपि भवति, पितुरागतं पित्र्यम् ।
ऋत इति तपरकरणं किम् ? चेकीर्यते ।
निजेगिल्यते ॥

रिङ्शयग्लिङ्क्षु ॥ ७,४.२८ ॥

_______ काशिकावृत्तिः७,४.२८:
ऋकारान्तस्य अङ्गस्य शयकित्येतयोः लिङि च यकारादौ असार्वधातुके परतो रङित्ययमादेशो भवति ।
श आद्रियते ।
आध्रियते ।
यक् क्रियते ।
ह्रियते ।
लिङ् क्रियात् ।
ह्रियात् ।
रिङ्वचनं दीर्घनिवृत्त्यर्थम् ।
असार्वधातुके इत्येव, बिभृयात् ।
यि इत्येव, कृषीष्ट ।
हृषीष्ट ॥

गुणोऽर्तिसंयोगाद्योः ॥ ७,४.२९ ॥

_______ काशिकावृत्तिः७,४.२९:

ऋतः यकि लिगि इति वर्तते ।
श इत्यसम्भवान्निवृत्तम् ।
गुणो भवति अर्तेः संयोगादीनामृकारान्तानां यकि परतो लिगि च यकारादौ असार्वधातुके ।
अर्यते ।
अर्यात् ।
स्मर्यते ।
स्मर्यात् ।
इह संस्क्रियते, संस्क्रियातिति सुटो बहिरङ्गलक्षणस्य असिद्धत्वातभक्तत्वात्वा संयोगादित्वमङ्गस्य न अस्ति इति गुणो न प्रवर्तते ।
यि इत्येव, स्वृषीष्ट ।
ध्वृषीष्ट ।
असार्वधातुके इत्येव, इयृयात् ॥

यङि च ॥ ७,४.३० ॥

_______ काशिकावृत्तिः७,४.३०:

यगि च परतः अर्तेः संयोगादेश्च ऋतः गुणो भवति ।
अरार्यते ।
सास्वर्यते ।
दाध्वर्यते ।
सास्मर्यते ।
अर्तेः अट्यर्त्यशूर्णोतीनामुपसंख्यानमिति यङ् ।
न न्द्राः संयोगादयः (*६,१.३) इति द्विर्वचनप्रतिषेधः यकारस्य नेष्यते ।
हन्तेर्हिसायां यङि घ्नीभावो वक्तव्यः ।
जेघ्नीयते ।
हिंसायामिति किम् ? जङ्घन्यते ॥

ई घ्राध्मोः ॥ ७,४.३१ ॥

_______ काशिकावृत्तिः७,४.३१:

घ्रा ध्मा इत्येतयोः यङि परतः ईकारादेशो भवति ।
जेघ्रीयते ।
देध्मीयते ॥

अस्य च्वौ ॥ ७,४.३२ ॥

_______ काशिकावृत्तिः७,४.३२:

ई इति वर्तते ।
अचर्णान्तस्य अङ्गस्य च्वौ परतः ईकारादेशो भवति ।
शुक्लीभवति ।
शुक्लीस्यात् ।
खट्वीकरोति ।
खट्वीस्यात् ॥

क्यचि च ॥ ७,४.३३ ॥

_______ काशिकावृत्तिः७,४.३३:

अस्य इति वर्तते ।
क्यचि परतः अवर्णान्तस्य अङ्गस्य ईकारादेशो भवति ।
पुत्रीयति ।
घटीयति ।
खट्वीयति ।
मालीयति ।
अकृत्सार्वधातुकयोर्दीर्घः (*७,४.२४) इत्यस्य अपवादः ।
पृथग्योगकरणमुत्तरार्थम् ॥

अशनायोदन्यधानाया बुभुक्षापिपासागर्धेषु ॥ ७,४.३४ ॥

_______ काशिकावृत्तिः७,४.३४:

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते बुभुक्षा पिपासा गर्ध इत्येतेषु अर्थेषु ।
अशनाय इत्यशनशब्दस्य आत्वं क्यचि निपात्यते ।
अशनायति इति भवति बुभुक्षा चेत् ।
अशनीयति इत्येव अन्यत्र ।
उदन्य इति वदकशब्दस्य उदन्नादेशो निपात्यते ।
उदन्यति इति भवति पिपासा चेत् ।
उदकीयति इत्येव अन्यत्र ।
धनाय इति धनशब्दस्य आत्वं निपात्यते ।
धनायति इति भवति गर्धः चेत् ।
धनीयति इत्येव अन्यत्र ॥

न च्छन्दस्यपुत्रस्य ॥ ७,४.३५ ॥

_______ काशिकावृत्तिः७,४.३५:

छन्दसि विषये पुत्रवर्जितस्य अवर्णान्तस्य अङ्गस्य क्यचि यदुक्तं तन्न भवति ।
किं चोक्तम् ? दीर्घत्वमीत्वं च ।
मित्रयुः ।
संस्वेदयुः ।
देवाञ्जिगाति सुम्नयुः ।
अपुत्रस्य इति किम् ? पुत्रीयन्तः सुदानवः ।
अपुत्रादीनामिति वक्तव्यम् ।
जनीयन्तोऽन्वग्रवः ॥

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ७,४.३६ ॥

_______ काशिकावृत्तिः७,४.३६:

दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति इत्येतानि छन्दसि निपात्यन्ते ।
दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते ।
अवियोना दुरस्युः ।
दुष्टीयति इति प्राप्ते ।
द्रविणशब्दस्य द्रविणस्भावो निपात्यते ।
द्रविणस्युर्विपन्यया ।
द्रविणीयति इति प्राप्ते ।
वृषशब्दस्य वृषण्भावो निपात्यते ।
वृषण्यति ।
वृषीयति इति प्राप्ते ।
रिष्टशब्दस्य रिषण्भावो निपात्यते ।
रिषण्यति ।
रिष्टीयति इति प्राप्ते ॥

[।८६७]

अश्वाघस्य आत् ॥ ७,४.३७ ॥

_______ काशिकावृत्तिः७,४.३७:

अश्व अघ इत्येतयोः क्यचि परतः छन्दसि विषये आकारादेशो भवति ।

अश्वायन्तो मघवन् ।
मा त्वा वृका अघायवो विदन् ।
एतदेव आत्ववचनं ज्ञापकं न च्छन्दस्यपुत्रस्य (*७,४.३५) इति दीर्घरतिषेधो भवति इति ॥

देवसुम्नयोर्यजुषि काठके ॥ ७,४.३८ ॥

_______ काशिकावृत्तिः७,४.३८:

देव सुम्न इत्येतयोः क्यचि परतः आकारादेशो भवति काठके यजुषि ।
देवायते यजमानाय ।
सुम्नायनतो हवामहे ।
यजुषि इति किम् ? देवाञ्जिगाति सुम्नयुः ।
काठके इति किम् ? सुम्नयुरिदमसीदमसि ॥

कव्यधवरपृतनस्यर्चि लोपः ॥ ७,४.३९ ॥

_______ काशिकावृत्तिः७,४.३९:

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये ।
कव्यन्तः सुमनसः ।
अध्वर अध्वर्यन्तः ।
पृतना पृतन्यन्तः तिष्ठन्ति ॥

द्यतिस्यतिमास्थामित्ति किति ॥ ७,४.४० ॥

_______ काशिकावृत्तिः७,४.४०:

द्यति स्याति मा स्था इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः ।
द्यति तिर्दितः ।
निर्दितवान् ।
स्यति अवसितः ।
अवसितवान् ।
मा मितः ।
मितवान् ।
स्था स्थितः ।
स्थितवान् ।
ति इति किम् ? अवदाय ।

किति इति किम् ? अवदाता ॥

शाछोरन्यतरस्याम् ॥ ७,४.४१ ॥

_______ काशिकावृत्तिः७,४.४१:

शा छा इत्येतयोः अन्यतरस्यामिकारादेशो भवति तकारादौ किति ।
शा निशितम्, निशातम् ।
निशितवान्, निशातवान् ।
छा अवच्छितम्, अवच्छातम् ।
अवच्छितवान्, अवच्छातवान् ।
श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम् ।
शंशितो ब्रह्मणः ।
संशितव्रतः इत्यर्थः ।
व्यवस्थितविभाषविज्ञानात्सिद्धम् ।
देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

[॰८६८]

दधातेर्हिः ॥ ७,४.४२ ॥

_______ काशिकावृत्तिः७,४.४२:

दधातेरङ्गस्य हि इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः ।
हितः ।
हितवान् ।
हित्वा ॥

जहातेश्च क्त्वि ॥ ७,४.४३ ॥

_______ काशिकावृत्तिः७,४.४३:

जहातेरङ्गस्य हि इत्ययमादेशो भवति क्त्वाप्रत्यये परतः ।
हित्वा राज्यं वनं गतः ।
हित्वा गच्छति ।
जहातेर्निर्देशात्जिहीतेर्न भवति ।
हात्वा ॥

विभाषा छन्दसि ॥ ७,४.४४ ॥

_______ काशिकावृत्तिः७,४.४४:

जहातेरङ्गस्य विभाषा हि इत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः ।
हित्वा शरीरं यातव्यम् ।
हात्वा ॥

सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ७,४.४५ ॥

_______ काशिकावृत्तिः७,४.४५:

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते ।
तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधातेः क्तप्रत्यय इत्त्वमिडागमो वा प्रत्ययस्य निपात्यते ।
गर्भं माता सुधितम् ।
सुहितमिति प्राप्ते ।
वसुधितमग्नौ जुहोति ।
वसुहितमिति प्राप्ते ।
नेमधिता बाधन्ते ।
नेमहिता इति प्राप्ते ।
धिष्व इति लोण्मध्यमैकवचने दधातेः इत्त्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते ।
धिष्व स्तोमम् ।
धत्स्व इति प्राप्ते ।
धिषिय इति आशीर्लिङि आत्मनेपदोत्तमैकवचने दधातेः इत्त्वम्, इडागमो वा प्रत्ययस्य निपात्यते ।
धिषीय ।
धासीय इति प्राप्ते ॥

दो दद्घोः ॥ ७,४.४६ ॥

_______ काशिकावृत्तिः७,४.४६:

दा इत्येतस्य घुसञ्ज्ञकस्य ददित्ययमादेशो भवति तकारादौ किति प्रत्यय परतः ।
दत्तः ।
दत्तवान् ।
दत्तिः ।
दः इति किम् ? धीतः ।
धीतवान् ।
धेटः एतद्रूपम् ।

घोः इति किम् ? दाप्लवने दातं बर्हिः ।
दैप्शोधने अवदातं मुखम् ।
अयमादेशः थान्तः इष्यते ।
एवं ह्युक्तम् तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम् ॥
यदि तु दस्ति इति तकारादौ दीर्घत्वं तदा तान्तेऽपि अदोषः ।
दान्तधान्तयोरपि सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति नत्वधत्वे न भविष्यतः इति न दोषः ।

[।८६९]

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥
अच उपसर्गात्तः (*७,४.४७) इति प्राप्ते निपात्यन्ते ।
अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ॥

अच उपसर्गात्तः ॥ ७,४.४७ ॥

_______ काशिकावृत्तिः७,४.४७:

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति ।
प्रत्तम् ।
अवत्तम् ।
नीत्तम् ।
परीत्तम् ।
अचः इति किम् ? निर्दत्तम् ।
दुर्दत्तम् ।
उपसर्गातिति किम् ? दधि दत्तम् ।
मधु दत्तम् ।
घोः इत्येव, अवदातं मुखम् ।
उपसर्गातिति पच्चमीनिर्देशादादेरलः प्राप्नोति ? तत्र समाधिमाहुः ।
अचः इत्येतद्द्विरावर्तयितव्यम्, तत्र एकं पच्चम्यन्तमुपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशर्थमित्याकारस्य स्थाने तकारो भवति ।
द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात्सर्वस्य भविष्यति ।
अपो भि (*७,४.४८) इत्यत्र पञ्चम्यन्तमचः इत्यनुवर्तते ।
तेन पकारमात्रस्य भविस्यति ।
द्यतेरित्त्वादचस्त इत्येतद्भवति विप्रतिषेधेन ।
अवत्तम् ।
प्रत्तं जुहोति ॥

अपो भि ॥ ७,४.४८ ॥

_______ काशिकावृत्तिः७,४.४८:

अपित्येतस्य अङ्गस्य भकारादौ प्रत्यये परतः त इत्ययमादेशो भवति ।
अद्भिः ।
अद्भ्यः ।
भि इति किम् ? अप्सु ।
स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ ।
स्ववद्भिः ।
स्वतवद्भिः ।
माद्भिरिष्ट्वा इन्द्रो वृत्रहा ।
समुषद्भिरजायथाः ॥

सः स्यार्धधातुके ॥ ७,४.४९ ॥

_______ काशिकावृत्तिः७,४.४९:

सकारान्तस्य अङ्गस्य सकारादौ आर्धधातुके परतः तकारादेशो भवति ।
वत्स्यति ।
अवत्स्यत् ।
विवत्सति ।
जिघत्सति ।
सः इति किम् ? वक्ष्यति ।
सि इति किम् ? घासः ।
वासः ।
आर्धधातुके इति किम् ? आस्से ।
वस्से ॥

[।८७०]

तासस्त्योर्लोपः ॥ ७,४.५० ॥

_______ काशिकावृत्तिः७,४.५०:

तासेः अस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति ।
तासेः कर्तासि ।
कर्तासे ।
अस्तेः त्वमसि ।
व्यतिसे ।
अस्तेः अकारासकारयोः लुप्तयोः से इति प्रत्ययमात्रमेतत्पदम्, तेन सात्पदाद्योः (*८,३.१११) इति षत्वं न भवति ॥

रि च ॥ ७,४.५१ ॥

_______ काशिकावृत्तिः७,४.५१:

रेफादौ च प्रत्यये परतः तासस्त्योः सकारास्य लोपो भवति ।
कर्तारौ ।
कर्तारः ।
अध्येतारौ ।
अध्येतारः ॥

ह एति ॥ ७,४.५२ ॥

_______ काशिकावृत्तिः७,४.५२:

तासस्त्योः सकारस्य हकारादशो भवति एति परतः ।
कर्ताहे ।
अस्तेः व्यतिहे ॥

यीवर्नयोर्दीधीवेव्योः ॥ ७,४.५३ ॥

_______ काशिकावृत्तिः७,४.५३:

यकारादौ इवर्णादौ च परतो दीधीवेव्योः लोपो भवति ।
यकारादौ आदीध्य गतः ।
आवेव्य गतः आदीध्यते ।
आवेव्यते ।
इवर्णादौ आदीधिता ।
आवेविता ।
लिङि आदीधीत ।
आवेवीत ।
यीवर्णयोः इति किम् ? आदीध्यनम् ।
आवेव्यनम् ॥

सनि मीमाघुरभलभशकपतपदामच इस् ॥ ७,४.५४ ॥

_______ काशिकावृत्तिः७,४.५४:

सनि प्रत्यये सकारादौ परतः मी मा घु रभ लभ शक पत पद इत्येतेषामङ्गानामचः स्थाने इसित्ययमादेशो भवति ।
मी इति मीनातिमिनोत्योः द्वयोरपि ग्रहणमिष्यते ।
मित्सति ।
प्रमित्सति ।
मा इति गामादाग्रहणेषु अविशेषः ।
मित्सते ।
अपमित्सते ।
घु दित्सति ।
धित्सति ।
रभ आरिप्सते ।
लभ आलिप्सते ।
शक शिक्षति ।
पत् पित्सति ।
पद प्रपित्सते ।
सनि इति किम् ? दास्यति ।
सि इत्येव, पिपतिषति ।
तनिपतिदरिद्राणामुपसङ्ख्यानमिति पतेः इडागमविकल्पः ।
सनि राधो हिंसायामच इस्वक्तव्यः ।
प्रतिरित्सति ।
हिंसायामिति किम् ? आरिरात्सति ॥

[०८७१]

आप्ज्ञप्यृधामीत् ॥ ७,४.५५ ॥

_______ काशिकावृत्तिः७,४.५५:

आप्ज्ञपि ऋध इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः ।
आपीप्सति ।
ज्ञपि ज्ञीप्सति ।
ऋद्ः ईर्त्सति ।
ज्ञपेः द्वावचौ, तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य तु ईत्वम् ।
सनि इत्येव, प्राप्स्यति ।
सि इत्येव, जिज्ञपयिषति ।
अर्दिधिषति ।
सनीवन्तर्ध इति ज्ञपेः ऋधेश्च इटो विकओपः ॥

दम्भ इच्च ॥ ७,४.५६ ॥

_______ काशिकावृत्तिः७,४.५६:

दम्भेः अच इकारादेशो भवति, चकारातीत्च सनि सकारादौ परतः ।
धिप्सति, धीप्सति ।
सि इत्येव, दिदम्भिषति ॥

मुचोऽकर्मकस्य गुणो वा ॥ ७,४.५७ ॥

_______ काशिकावृत्तिः७,४.५७:

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः ।
हलन्ताच्च (*१,२.१०) इति कित्त्वप्रतिषेधो विकल्प्यते ।
मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव ।
अकर्मकस्य इति किम्? मुमुक्षति वत्सं देवदत्तः ।
कर्मकर्तरि मुचिरकर्मको भवति, कर्मविशेषस्य अविवक्षितताद्वा ॥

अत्र लोपोऽभ्यासस्य ॥ ७,४.५८ ॥

_______ काशिकावृत्तिः७,४.५८:

यदेतत्प्रक्रान्तं सनि मीमा इत्यादि मुचोऽकर्मकस्य इति यावत्, अत्र अभ्यासलोपो भवति ।
तथैव उदाहृतम् ।
अभ्यासस्य इत्येतच्च अछिकृतं वेदितव्यमा अध्यायपरिसमाप्तेः ।
इत उत्तरं यद्वक्ष्यामः अभ्यासस्य इत्येवं तद्वेदितव्यम् ।
वक्ष्यति, ह्रस्वः (*७,४.५९) डुढौकिषते ।
तुत्रौकिषते ।
सनि मीमाधुरभलभशकपतपदामच इस्, अभ्यासलोपश्च, इत्येवं सिद्धे यदत्रग्रहनमिह अक्रियते, तद्विषयावधारणार्थम्, अत्रैव अभ्यासलोपो भवति, सन्वद्भावविषये न भवति ।
अमीमपत् ।
अदीदपत् ।
सन्वल्लघुनि चङ्परेऽनग्लोपे (*७,४.९३) इति सन्वद्भावात्प्राप्नोति ।
सर्वस्य अभ्यासस्य अयं लोपः इष्यते, तदर्थमेव केचितत्रग्रहणं वर्णयन्ति ।
नानर्थकेऽलोऽन्त्यविधिः इत्यपरे सर्वस्य कुर्वन्ति ॥

ह्रस्वः ॥ ७,४.५९ ॥

_______ काशिकावृत्तिः७,४.५९:

ह्रस्वो भवति अभ्यासस्य ।
दुढौकिषते ।

तुत्रौकिषते ।
डुढौके ।
तुत्रौके ।
अडुढौकत् ।
अतुत्रौकत् ।
अभ्यासस्य अनचि ।
अभ्यासस्य यदुच्यते अनचि तद्भवति इति वक्तव्यम् ।
चराचरः ।
चलाचलः ।
पतापतः ।
वदावदः ।
हलादिः शेषो न भवति ॥

[।८७२]

हलादिः शेषः ॥ ७,४.६० ॥

_______ काशिकावृत्तिः७,४.६०:

अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते ।
जग्लौ ।
मम्लौ ।
पपाच ।
पपाठ ।
आट, आटतुः, आटुः ।
आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, तत्र अभ्यासजातेः आश्रयणात्क्वचिदपि वर्तमानो हलादिः अनदेः सर्वत्र निवृत्तिं करोति ।
अपरे तु ब्रुवते, शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह ।
तदवस्थानमुक्तितो यद्यपि प्रधानम्, अविधेयत्वात्तु तदप्रधानम् ।
निवृत्तिरेव तु विधेयत्वात्प्रधानम् ।
तत्र अयमर्थोऽस्य जायते, अभ्यासस्य अनादेर्हलो निवृत्तिः भवति इति ।
सा किमिति आदेरविधेयां सतीमनिवृत्तिमपेक्षिष्यते इति ॥

शर्पूर्वाः खयः ॥ ७,४.६१ ॥

_______ काशिकावृत्तिः७,४.६१:

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते ।
चुश्च्योतिषति ।
तिष्ठासति ।
पिस्पन्दिषते ।
शर्पूर्वाः इति किम् ? पपाच ।

खयः इति किम्? सस्नौ।
खर्पूर्वाः खय इति वक्तव्यम्।
उचिच्छिषति इत्यत्र उच्छेः अन्तरङ्गत्वात्तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे सति अभ्यासे तकारः श्रूयेत॥

कुहोश्चुः॥ ७,४.६२॥

_______ काशिकावृत्तिः७,४.६२:

अभ्यासस्य कवर्गहकारयोः चवर्गादेशो भवति।
चकार।
चखान।
जगाम।
जघान।
हकारस्य जहार।
जिहीर्षति।
जहौ॥

न कवतेर्यङि॥ ७,४.६३॥

_______ काशिकावृत्तिः७,४.६३:

कवतेः अभ्यासस्य यङि परतः चुः न भवति।
कोकूयते उष्ट्रः।
कोकूयते स्वरः।
कवतेः इति विकरणनिर्देशः कौतेः कुवतेश्च निवृत्त्यर्थः।
तयोः चुत्वमेव भवति।
चोकूयते।
यङि इति किम्? चुकुवे॥

कृषेश्छन्दसि॥ ७,४.६४॥

_______ काशिकावृत्तिः७,४.६४:

कृषेः छन्दसि विषये यङि परतः अभ्यासस्य चुः न भवति।
करिकृष्यते यज्ञकुणपः।
छन्दसि इति किम्? चरीकृष्यते कृषीवलः॥

[॰८७३]

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदत्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्ति इति च ॥ ७,४.६५ ॥

________ काशिकावृत्तिः७,४.६५:

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिकते अलर्षि आपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदत्भरिभ्रत्दविध्वतः दविद्युतत्तरित्रतः सरिसृपतं वरीवृजत्मर्मृज्य आगनीगन्ति इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते ।
दाधर्ति दर्धर्ति दर्धर्षि इति धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च ।
दाधर्ति ।
एवं दर्धर्ति ।
श्लौ रुकभ्यासस्य निपात्यते ।
तथा दर्धर्षि इति ।
अत्र च यल्लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धम् ।
बोभूतु इति भवतेः यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते ।
नैतदस्ति प्रयोजनम्, अत्र भूसुवोस्तिङि (*७,३.८८) इति गुणाभावः सिद्धः ? ज्ञापनार्थं तर्हि निपातनमेतत् ।
ज्ञापयति, अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवति इति ।
बोभोति, बोभवीति ।
तेतिक्ते तिजेः यङ्लुगन्तस्य आत्मनेपदं निपात्यते ।
यङो ङित्त्वात्प्रत्ययलक्षणेन आत्मनेपदं सिद्धमेव ? ज्ञापनार्थं तु आत्मनेपदनिपातनम्, अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति ।
अलर्षि इति इयर्तेः लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते ।
सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते अलर्ति दक्षः ।
आपनीफणतिति फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीक्निपात्यते ।
संसनिष्यदतिति स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येव अभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते ।
न चास्य सम्पूर्वता तन्त्रम्, अन्यत्र अपि हि दृश्यते, आसनिष्यदतिति ।
करिक्रतिति करोतेः यङ्लुगन्तस्य शतरि चुत्वभ्यावः, अभ्यासककारस्य रिगागमो निपात्यते ।
कनिक्रदतिति क्रन्देः लुङि च्लेः अङादेशः, द्विर्वचनमभ्यासस्य, चुत्वाभावः, निगागमश्च निपात्यते ।
तथा चास्य हि विवरणं कृतम् ।
अक्रन्दीतिति भाषायाम् ।
भरिभ्रतिति बिभर्तेः यङ्लुगन्तस्य शतरि भृञामित्(*७,४.७६) इति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमः निपात्यते ।
दविध्वतः इति ध्वरतेः यङ्लुगन्तस्य शतरि जसि रूपमेतत् ।
अत्र अभ्यासस्य विगागमः ऋकारलोपश्च निपात्यते ।
दविध्वतो रश्मयः सूर्यस्य ।

[॰८७४]

दविद्युतततिति द्युतेः यङ्लुगन्तस्य शतरि अभ्यासस्य अम्प्रसारणाभावः अत्त्वम्, विगागमश्च निपात्यते ।
तरित्रतः इति तरतेः शतरि श्लौ षष्ठ्येकवचने अभ्यासस्य रिगागमः निपात्यते ।
सरीसृपतमिति सृपेः शतरि श्लौ द्वितीयैकवचने अभ्यासस्य रीगागमः निपात्यते ।
वरीवृजतिति वृजेः शतरि श्लौ रीगागमः निपात्यते अभ्यासस्य ।
मर्मृज्य इति मृजेः लिटि णलि अभ्यासस्य रुगागमः धातोश्च युगागमो निपात्यते ।
ततो मृजेर्वृद्धिः (*७,२.११४) न भवति, अलघूपधत्वात् ।
लघूपधगुणे प्राप्ते वृद्धिरारभ्यते ।
आगनीगन्ति इति आङ्पूर्वस्य गमेर्लति श्लौ अभ्यासस्य चुत्वाभावः नीगागमश्च निपात्यते ।
वक्ष्यन्ती वेदागनीगन्ति कर्णम् ।

इतिकरणमेवं प्रकारणामन्येषामप्युपसङ्ग्रहार्थम् ॥

उरत् ॥ ७,४.६६ ॥

_______ काशिकावृत्तिः७,४.६६:

ऋवर्णान्तस्य अभ्यासस्य अकारादेशो भवति ।
ववृते ।
ववृधे ।
शशृधे ।
नर्नर्ति, नरिनर्ति, नरीनर्ति इत्येवमादौ अभ्यासविकारेषु अपवादो न+उत्सर्गान् विधीन् बाधते इति उः अदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

द्युतिस्वाप्योः सम्प्रसारणम् ॥ ७,४.६७ ॥

_______ काशिकावृत्तिः७,४.६७:

द्युति स्वापि इत्येतयोः अभ्यासस्य सम्प्रसारणं भवति ।
विदिद्युते ।
व्यदिद्युतत् ।
विदिद्योतिषते ।
विदिद्युतिषते ।
विदेद्युत्यते ।
स्वापेः सुष्वापयिषति ।
स्वापिः ण्यन्तो गृह्यते, तस्य अभ्यासनिमित्तेन प्रत्ययेन आनन्तर्ये सति सम्प्रसारनमिष्यते ।
इह न भवति, स्वापयतेर्ण्वुल्स्वापकः, तस्मात्क्यचि स्वापकीयति, स्वापकीयते, सन् सिष्वापकीयिष्ति ॥

व्यथो लिटि ॥ ७,४.६८ ॥

_______ काशिकावृत्तिः७,४.६८:

व्यथेर्लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति ।
विव्यथे, विव्यथाते, विव्यथिरे ।
हलादिः शेषेण यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, वकारस्य न संप्रसारने संप्रसारणम् (*६,१.३७) इति प्रतिषिद्यते ।
लिटि इति किम्? वाव्यथ्यते ॥

दीर्घ इणः किति ॥ ७,४.६९ ॥

_______ काशिकावृत्तिः७,४.६९:

इणोऽङ्गस्य योऽभ्यासः तस्य दीर्घो भवति किति लिटि परतः ।
ईयतुः, ईयुः ।
इणो यण्(*६,४.८१) इति यणादेशे कृते स्थानिवद्भावाद्द्विर्वचनम् ।
किति इति किम् ? इयाय ।
इययिथ ॥

अत आदेः ॥ ७,४.७० ॥

_______ काशिकावृत्तिः७,४.७०:

अभ्यासस्य आदेः अकारस्य दीर्घो भवति लिटि परतः ।
अतो गुणे पररूपत्वस्य अपवादः ।
आट, आटतुः, आटुः ।
आदेः इति किम् ? पपाच ।
पपाठ ॥

तस्मान्नुड्द्विहलः ॥ ७,४.७१ ॥

_______ काशिकावृत्तिः७,४.७१:

तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति ।
आनङ्ग, आनङ्गतुः, आनङ्गुः ।
अनञ्ज, आनञ्जतुः, आनञ्जुः ।
द्विहलः इति किम् ? आट, आटतुः, आटुः ।
ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते, तेन+इह अपि द्विहलोऽङ्गस्य नुडागमो भवति, आनृधतुः, आनृधुः ॥

अश्नोतेश्च ॥ ७,४.७२ ॥

_______ काशिकावृत्तिः७,४.७२:

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति ।

व्यानशे, व्यानशाते, व्यानशिरे ।
अश्नोतेः इति विकरणनिर्देशः अश्नातेर्मा भूतिति ।
आश, आशतुः, आशुः ॥

भवतेरः ॥ ७,४.७३ ॥

_______ काशिकावृत्तिः७,४.७३:

भवतेरभ्यासस्य अकारादेशो भवति लिटि परतः ।
बभूव, बभूवतुः, बभूवुः ।
भवतेः इति कृतविकरननिर्देशादिह न भवति, अनुबभूवे कम्बलो देवदत्तेन ।
लिटि इत्येव, बुभूषति ।
बोभूयते ॥

ससूवेति निगमे ॥ ७,४.७४ ॥

_______ काशिकावृत्तिः७,४.७४:

ससूव इति निपात्यते ।
सूतेर्लिटि परस्मैपदं वुगागमः अभ्यासस्य च अत्वं निपात्यते ।
ससूव स्थाविरं विपश्चिताम् ।
सुषुवे इति भाषायाम् ॥

[०८७६]

णिजां त्रयाणां गुणः श्लौ ॥ ७,४.७५ ॥

_______ काशिकावृत्तिः७,४.७५:

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति ।
णिजिर् नेनेक्ति ।
विजिर् वेवेक्ति ।
विष्लृ वेवेष्टि ।
त्रिग्रहणमुत्तरार्थम्, एषां हि वृत्करणं समाप्त्यर्थं पठ्यते एव इति ।
श्लौ इति किम्? निनेज ॥

भृञामित् ॥ ७,४.७६ ॥

________ काशिकावृत्तिः७,४.७६:

भृञादीनां त्रयाणामभ्यासस्य इकारादेशो भवति श्लौ सति ।
भृञ् बिभर्ति ।
माङ् मिमीते ।
ओहाङ् जिहीते ।
त्रयाणामित्येव, जहाति ।
श्लौ इत्येव, बभार ॥

अर्तिपिपर्त्योश्च ॥ ७,४.७७ ॥

________ काशिकावृत्तिः७,४.७७:

अर्ति पिपर्ति इत्येतयोः अभ्यासस्य इकारादेशो भवति श्लौ ।
इयर्ति भूमम् ।
पिपर्ति सोमम् ॥

बहुलं छन्दसि ॥ ७,४.७८ ॥

________ काशिकावृत्तिः७,४.७८:

छन्दसि विषये अभ्यासस्य श्लौ बहुलमिकारादेशो भवति ।
पुर्णां विवष्टि ।
वशेरेतद्रूपम् ।
तथा वचेः जनिमा विवक्ति ।
सचेः वत्सं न माता सिषक्ति ।
जघर्ति सोमम् ।
न च भवति ।
ददाति इत्येवं ब्रूयात् ।
जजनदिन्द्रम् ।
माता यद्वीरं दधनद्धनिष्ठा ॥

सन्यतः ॥ ७,४.७९ ॥

________ काशिकावृत्तिः७,४.७९:

सनि परतोऽकारान्ताभ्यासस्य इकारादेशो भवति ।
पिपक्षति ।
यियक्षति ।
तिष्ठासति ।
पिपासति ।
सनि इति किम् ? पपाच ।
अतः इति किम् ? लुलूषति ।
तपरकरणं किम् ? पापचिषते ॥

ओः पुयण्ज्यपरे ॥ ७,४.८० ॥

_______ काशिकावृत्तिः७,४.८०:

सनि इति वर्तते, इतिति च ।
उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे च अवर्णपरे परतः इकारादेशो भवति सनि प्रत्यये परतः ।
पवर्गे अपरे पिपविषते ।
पिपावयिषति ।
बिभावयिषति ।
यण्यपरे यियविषति ।
यियावयिषति ।
रिरावयिषति ।
लिलावयिषति ।

[॰८७७]

ज्यपरे जु इति सौत्रोऽयं धातुः ।
जिजावयिषति ।
एतदेव पुयण्ज्यपरे इति वचनं ज्ञापकम्, अद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवति इति ।
ओः इति किम् ? पापच्यतेः सन् पापचिषते ।
पुयण्जि इति किम् ? अवतुतावयिषति ।
जुहावयिषति ।
अपरे ।
इति किम् ? बुभूषति ॥

स्त्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ७,४.८१ ॥

_______ काशिकावृत्तिः७,४.८१:

स्रवति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषामभ्यासस्य ओः अवर्नपरे यणि वा इकारादेशो भवति सनि परतः ।
सिस्रावयिषति, सुस्रावयिषति ।

शृणोति शिश्रावयिषति, शुश्रावयिषति ।
द्रवति दिद्रावयिषति, दुद्रावयिषति ।
प्रवति पिप्रावयिषति, पुप्रावयिषति ।
प्लवति पिप्लावयिषति, पुप्लावयिषति ।
च्यवति चिच्यावयिषति, चुच्यावयिषति ।
वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते ।
पूर्वसूत्रेन तु अनन्तर एव यणि भवितव्यमिति अप्राप्तबिभाषेयम् ।
अपरे इत्येव, सुस्रूषति ।
शुश्रूषते ॥

गुणो यङ्लुकोः ॥ ७,४.८२ ॥

_______ काशिकावृत्तिः७,४.८२:

यङि यङ्लुकि च इगन्तस्य अभ्यासस्य गुणो भवति ।
चेचीयते ।
लोलूयते ।
यङ्लुकि जोहवीति ।
यगो वा इति इड्विकल्पः ।
चोक्रुशीति ॥

दीर्घोऽकितः ॥ ७,४.८३ ॥

_______ काशिकावृत्तिः७,४.८३:

अकितोऽभ्यासस्य दीर्घो भवति यगि यङ्लुकि च ।
पापच्यते ।
पापचीति ।
याय्ज्यते ।
यायजीति ।
अकितः इति किम् ? यंयम्यते ।
यंयमीति ।
रंरम्यते ।
रंरमीति ।
ननु चात्र अपवादत्वान्नुकि कृते अभ्यासस्य अनजन्तत्वादेव दीर्घत्वं न भविष्यति ? एवं तर्हि अकितः इत्यनेन एतज्ज्ञाप्यते, अभ्यासविकारेष्वपवादा न+उत्सर्गान् विधीन् बाधन्ते इति ।
किमेतस्य ज्ञापने प्रयोजनम् ? डोढौक्यते इत्यत्र दीर्घोऽकितः इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते, अचीकरतित्यत्र दीर्घो लघोः (*७,४.९४) इत्यनेन सन्वदित्वं न बाध्यते, मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते मीमांसते, ई च गणः (*७,४.९७) इतीत्वेन हलादिशेषो न बाध्यते अजीगणत् ॥

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ७,४.८४ ॥

_______ काशिकावृत्तिः७,४.८४:

वञ्चु स्रंसु ध्वंसु भ्रंसु कस पत पद स्कन्द इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च ।
वञ्चु वनीवच्यते ।
वनीवञ्चीति ।
स्रंसु सनीस्रस्यते ।
सनीस्रंसीति ।
ध्वंसु दनीध्वस्यते ।
दनीध्वंसीति ।
भ्रंसु बनीभ्रस्यते ।
बनीभ्रंसीति ।
कस चनीइकस्यते ।
चनीकसीति ।
पत पनीपत्यते ।
पनीपतीति ।
पद पनीपद्यते ।
पनीपदीति ।
स्कन्द चनीस्कद्यते ।
चनीस्कन्दीति ॥

[॰८७८]

नुगतोऽनुनासिकान्तस्य ॥ ७,४.८५ ॥

_______ काशिकावृत्तिः७,४.८५:

अनुनासिकान्तस्य अङ्गस्य योऽभ्यासः तस्य अकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः ।
तन्तन्यते ।
तन्तनीति ।
जङ्गम्यते ।
जङ्गमीति ।
यंयम्यते ।
यंयमीति ।
रंरम्यते ।
रंरमीति ।
नुकित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम् ।
स्थानिना हि आदेशो लक्ष्यते ।
तेन यंयम्यते इत्येवमादौ अझल्परत्वेऽपि अनुस्वारो भवति ।
पदान्तवच्चेति वक्तव्यम् ।
वा पदान्तस्य (*८,४.५९) इति परसवर्णविकल्पो यथा स्यातिति ।

अतः इति किम्? तेतिम्यते।
तपरकरणं तु भूतपूर्वस्य अपि दीर्घस्य निवृत्त्यर्थम्, बाभम्यते।
अनुनासिकान्तस्य इति किम्? पापच्यते॥

जपजभदहदशभञ्जपशां च॥ ७,४.८६॥

_______ काशिकावृत्तिः७,४.८६:

जप जभ दह दश भञ्ज पश इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः।
जञ्जप्यते जञ्जपीति।
जभ जञ्जभ्यते।
जञ्जभीति।
दह दन्दह्यते।
दन्दहीति।
दश दन्दश्यते।
दन्दशीति दश इति दंशिः अयं नकारलोपार्थमेव निर्दिष्टः।
तेन यङ्लुक्यपि नकारलोपो भवति।
भञ्ज बम्भज्यते।
बम्भञ्जीति।
पश इति सौत्रो धातुः पम्पश्यते।
पम्पशीति॥

चरफलोश्च॥ ७,४.८७॥

_______ काशिकावृत्तिः७,४.८७:

चर फल इत्येतयोः अभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः।
पञ्चूर्यते।
पञ्चूरीति।
पम्फुल्यते।
पम्फुलीति॥

उत्परस्य अतः॥ ७,४.८८॥

_______ काशिकावृत्तिः७,४.८८:

चरफलोः अभ्यासात्परस्य अतः उकारादेशो भवति यङ्यङ्लुकोः परतः।

चञ्चूर्यते ।
चञ्चूरीति ।
पम्फुल्यते ।
पम्फुलीति ।
परस्य इति किम् ? अभ्यासस्य मा भूत् ।
अतः इति किम् ? अलोऽन्त्यस्य मा भूत् ।
उदिति तपरकरणं चञ्चूर्ति, पम्फुलीति इत्यत्र लघूपधगुणनिवृत्त्यर्थम् ।
दीर्घस्य असिद्धत्वातिह लभुत्वं न निवर्तते ॥

[।८७९]

ति च ॥ ७,४.८९ ॥

_______ काशिकावृत्तिः७,४.८९:

तकारादौ प्रत्यये परतः चरफलोः अकारस्य उकारादेशो भवति चरणं चूर्तिः ।
ब्रह्मणः चूर्तिः ।
प्रफुल्तिः ।
प्रफुल्ताः सुमनसः ।
यङ्यङ्लुकोः, अभ्यासस्य इति च अनुवर्तमानमपि वचनसामर्थ्यादिह न अभिसम्बध्यते ॥

रीगृदुपधस्य च ॥ ७,४.९० ॥

_______ काशिकावृत्तिः७,४.९०:

ऋदुपधस्य अङ्गस्य योऽभ्यासः तस्य रीगागमो भवति यङ्यङ्लुकोः परतः ।
वरीवृत्यते ।
वरीवृतीति ।
वरीवृध्यते ।
वरीवृधीति ।
नरीनृत्यते ।
नरीनृतीति ।
रीगृत्वत इति वक्तव्यम् ।
इह अपि यथा स्यात्, वरीवृश्च्यते ।
वरीवृश्चीति ।
परीपृच्छ्यते ।
परीपृच्छीति ॥

रुग्रिकौ च लुकि ॥ ७,४.९१ ॥

_______ काशिकावृत्तिः७,४.९१:

यङ्लुकि ऋदुपधस्य अङ्गस्य योऽभ्यासस्तस्य रुग्रिकौ आगमौ भवतः, चकाराद्रीक्च ।
नर्नर्ति, नरिनर्ति, नरीनर्ति ।
वर्वर्ति, वरिवर्ति, वरीवर्ति ।
उकारः उच्चारणार्थः ।
मर्मृज्यमानास इत्युपसङ्ख्यानम् ।
मर्मृज्यते ।
मर्मृज्यमानासः ॥

ऋतश्च ॥ ७,४.९२ ॥

_______ काशिकावृत्तिः७,४.९२:

ऋकारान्तस्य अङ्गस्य योऽभ्यासः तस्य रुग्रिकौ आगमौ भवतः रीक्च यङ्लुकि ।
चर्कर्ति, चरिकर्ति, चरीकर्ति ।
जर्हर्ति ।
जरिहर्ति ।
जरीहर्ति ।
तपरकरनं किम् ? किरतेश्चाकर्ति ।
किरतिं चर्करीतान्तं पचति इत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः ॥
तत्रेयं प्राप्तिः तपरकरनसामर्थ्यादङ्गविशेषणमृतः इत्येतत्, तया चाप्राप्तिः किरतेरुगादीनामिति ॥

सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७,४.९३ ॥

_______ काशिकावृत्तिः७,४.९३:

लघुनि धात्वक्षरे परतो योऽभ्यासः तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे ।
सन्यतः (*७,४.७९) इत्युक्तम्, चङ्परेऽपि तथा ।

[।८८०]

अचीकरत् ।
अपीपचत् ।
ओः पुयण्ज्यपरे (*७,४.८०) इत्युक्तम्, चङ्परेऽपि तथा ।
अपीपवत् ।
अलीलवत् ।
अजीजवत् ।

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा (*७,४.८१) इत्युक्तम्, चङ्परेऽपि तथा।
असिस्रवत्, असुस्रवत्।
अशिश्रवत्, अशुश्रवत्।
अदिद्रवत्, अदुद्रवत्।
अपिप्रवत्, अपुप्रवत्।
अपिप्लवत्, अपुप्लवत्।
अचिच्यवत्, अचुच्यवत्।
लघुनि इति किम्? अततक्षत्।
अररक्षत्।
जागरयतेः अजजागरत्।
अत्र केचिद्गशब्दं लभुमाश्रित्य सन्बद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यमभ्यासेन न अस्ति इति व्यवधानेऽपि वचनप्रामाण्याद्भवितव्यम्, तदसत्।
येन न अव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यातित्येकेन व्यवधानमाश्रीयते, न पुनरनेकेन।
यद्येवम्, कथमचिक्षणतिति? आचार्यप्रवृत्तिर्ज्ञापयति भवत्येवं जातीयकानामित्त्वमिति।
यदयं तद्बाधनार्थं सम्रत्यादीनामत्वं विदधाति।
चङ्परे इति किम्? अहं पपच।
परग्रहणं किम्? चङि एव केवले मा भूत्, अचकमत।
अनग्लोपे इति किम्? अचकथत्।
दृषदमाख्यातवानददृषत्।
वादितवन्तं प्रयोजितवानवीवददितित्यत्र योऽसौ णौ णेर्लोपो नासावग्लोप इत्याश्रीयते।
किं कारणम्? चङ्परे इति णिजातेर्निमित्तत्वेन आक्षेपात्, ततोऽन्यस्य अको लोपः परिगृह्यते।
मीमादीनामत्र ग्रहणात्सन्वद्भावेन अभ्यासलोपो न भवति इत्युक्तम्।
किं च सन्वतिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः सनमेव अपेक्षते, किं तर्हि, इस्भावाद्यपि।
तदभावातमीमपतित्यादौ अभ्यासलोपो न भविष्यति॥

दीर्घो लघोः ॥ ७,४.९४ ॥

_______ काशिकावृत्तिः७,४.९४:

दीर्घा भवति लघोः अभ्यासस्य लघुनि णौ चङ्परे अनग्लोपे।
अचीकरत्।
अजीहरत्।
अलीलवत्।
अपीपचत्।
लघोः इति किम्? अबिभ्रजत्।
लघुनि इत्येव, अततक्षत्।
अररक्षत्।
चङि इत्यव, अहं पपच।
परे इत्येव, अचकमत।
अनग्लोपे इत्येव, अचकथत्॥

अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ॥ ७,४.९५ ॥

_______ काशिकावृत्तिः७,४.९५:

स्मृ दृ त्वर प्रथ म्रद स्तृ स्पश इत्येतेषामभ्यासस्य अतित्ययमादेशो भवति चङ्परे णौ परतः ।
स्मृ असस्मरत् ।
दृ अददरत् ।
त्वर अतत्वरत् ।
प्रथ अपप्रथत् ।
म्रद अमम्रदत् ।
स्तृ अतस्तरत् ।
स्पश अपस्पशत् ।
सन्वद्भावातित्वं प्राप्तमनेन बाध्यते ।
तपरकरणसामर्थ्याततित कृते दीर्घो लघोः (*७,४.९४) इत्येतदपि न भवति, अददरत् ॥

विभाषा वेष्टिचेष्ट्योः ॥ ७,४.९६ ॥

_______ काशिकावृत्तिः७,४.९६:

वेष्टि चेष्टि इत्येतयोः अभ्यासस्य विभाषा अतित्ययमादेशो भवति चङ्परे णौ परतः ।
अववेष्टत्, अविवेष्टत् ।
अचचेष्टत्, अचिचेष्टत् ।
अभ्यासह्रस्वत्वे कृते अत्त्वं पक्षे भवति ॥

[॰८८१]

ई च गणः ॥ ७,४.९७ ॥

_______ काशिकावृत्तिः७,४.९७:

गणेः अभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारातत्च ।
अजीगणत्, अजगणत् ॥
इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य चतुर्थः पादः ।

अष्टमोऽध्यायः प्रथमः पादः ।

[।८८२]

सर्वस्य द्वे ॥ ८,१.१ ॥

_______ काशिकावृत्तिः८,१.१:

सर्वस्य इति च द्वे इति च+एतदधिकृतं वेदितव्यम् ।
इत उत्तरं यद्वक्ष्यामः पदस्य (*८,१.१६) इत्यतः प्राक्, सर्वस्य द्वे भवतः इत्येवं तद्वेदितव्यम् ।
वक्ष्यति नित्यवीप्सयोः (*८,१.४) इति, तत्र सर्वस्य स्थाने द्वे भवतः ।
के द्वे भवतः ? ये शब्दतश्च अर्थतश्च उभयथान्तरतमे ।
एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ हवतः ।
पचति पचति ।
ग्रामो ग्रामो रमणीयः ।
यदा तु द्विः प्रयोगो द्विर्वचनं तदा स एव पचतिशब्दो द्विरावर्तते, तस्य द्वे आवृत्ती भवतः ।
सर्वस्य इति किम् ? विस्पष्टार्थम् ।
अथ पदस्य इत्येव कस्मान्न+उच्यते ? न+एवं शक्यम्, इह हि न स्यात्प्रपचति प्रपचति इति ।
इह द्रोग्धा, द्रोढा इति घत्वढत्वयोः असिद्धत्वादकृतयोरेव तयोर्द्विवचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्तमपि स्यात्द्रोग्धा द्रोढा, द्रोढा द्रोग्धा इति ।
तस्माद्वक्तव्यमेतत्पूर्वत्र असिद्धीयमद्विर्वचने इति ।
सर्वस्य इत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम् ॥

तस्य परमाम्रेडितम् ॥ ८,१.२ ॥

_______ काशिकावृत्तिः८,१.२:

तस्य द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसञ्ज्ञं भवति ।
चौर चौर ३, वृषल वृषल ३, दस्यो दस्यो ३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ।
आम्रेडितप्रदेशाः आम्रेडितं भर्त्सने (*८,२.९५) इत्येवमादयः ॥

अनुदात्तं च ॥ ८,१.३ ॥

_______ काशिकावृत्तिः८,१.३:

अनुदात्तं च तद्भवति यदाम्रेडितसञ्ज्ञम् ।
भुङ्क्ते भुङ्क्ते ।
पशून् प्शून् ॥

नित्यवीप्सयोः ॥ ८,१.४ ॥

_______ काशिकावृत्तिः८,१.४:

नित्ये चार्थे विप्सायां च यद्वर्तते तस्य द्वे भवतः ।
केषु नित्यता ? तिङ्क्षु नित्यता अव्ययकृत्सु च ।
कुत एतत् ।
आभीक्ष्ण्यमिह नित्यता ।
आभीक्ष्ण्यं च क्रियाधर्मः ।
यां क्रियां कर्ता प्राधान्येन अनुपरमन् करोति तन्नित्यम् ।
पचति पचति ।
जल्पति जल्पति ।
भुक्त्वा भुक्त्वा व्रजति ।
भोजं भोजं व्रजति ।
लुनीहि लुनीहि इत्येवायं लुनाति क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायामेव पौनःपुन्यप्रकाशने शक्तिः ।

[॰८८३]

यङ्तु तन्निरपेक्षः प्रकाशयति, पुनः पुनः पचति पापच्यते इति ।
यदा तु तत्र द्विर्वचनं तदा क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यं पापच्यते पापच्यते इति ।
अथ केषु वीप्सा ? सुप्सु वीप्सा ।
का पुनर्वीप्सा ? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा ।
का पुनः सा ? नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा ।
नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत्प्रयोक्तुमिच्छा वीप्सा ।
ग्रामो ग्रामो रमणीयः ।
जनपदो जनपदो रमणीयः ।
पुरुषः पुरुषो निधनमुपैति ।
यत्तिडन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात्प्रकर्षप्रत्यय इष्यते पचति पचतितरामिति ।
इह तु आढ्यतरमाढ्यतरमानय इति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥

परेर्वर्जने ॥ ८,१.५ ॥

_______ काशिकावृत्तिः८,१.५:

परि इत्येतस्य वर्जनेऽर्थे द्वे भवतः ।
परि परि त्रिगर्तेभ्यो वृष्टो देवः ।

परि परि सौवीरेभ्यः ।
परि परि सर्वसेनेभ्यः ।
वर्जनें परिहारः ।
वर्जने इति किम् ? ओदनं परिषिञ्चति ।
परेर्वर्जनेऽसमासे वेति वक्तव्यम् ।
परि परि त्रिगर्तेभ्यो वृष्टो देवः, परि त्रिगर्तेभ्यः ।
समासे तु तेन+एव+उक्तत्वाद्वर्जनस्य न+एव भवति, परित्रिगर्तं वृष्टो देवः इति ॥

प्रसमुपोदः पादपूरणे ॥ ८,१.६ ॥

_______ काशिकावृत्तिः८,१.६:

प्र समुप उतित्येतषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्वते ।
प्रप्रायमग्निर्भरतस्य शृण्वे ।
संसमिद्युवसे वृषन् ।
उपोप मे परा मृश किं नोदुदु हर्षसे दातवा उ ।
पादपूरणे इति किम् ? प्र देवं देव्या धिया ।
सामार्थ्याच्छन्दस्येव+एतद्विधानम् ।
भाषायामनर्थकं स्यात्, प्रयोगाभावात् ॥

उपर्यध्यधसः सामीप्ये ॥ ८,१.७ ॥

_______ काशिकावृत्तिः८,१.७:

उपरि अधि अधसित्येतेषां द्वे भवतः सामीप्ये विवक्षिते ।
सामीप्यं प्रत्यासत्तिः कालकृता देशकृता च ।
उपर्युपरि दुःखम् ।
उपर्युपरि ग्रामम् ।
अध्यधि ग्रामम् ।
अधोऽधो नगरम् ।
सामीप्ये इति किम् ? उपरि चन्द्रमाः ।
इह कस्मान्न भवति, उपरि शिरसो घटं धारयति ? औत्तराधर्यमेव विवक्षितं न सामीप्यमिति द्विर्वचनं न भवति ॥

[।८८४]

वाक्यादेरामन्त्रितस्य असूयासम्मतिकोपकुत्सनभर्त्सनेषु ॥ ८,१.८ ॥

_______ काशिकावृत्तिः८,१.८:

एकार्थः पदसमूहो वाक्यम् ।
वाक्यादेरामन्त्रितस्य द्वे भवतः असूयासम्मतिकोपकुत्सनभर्त्सनेषु यदि तद्वाक्यं भवति ।
तत्र परगुणानामसहनमसूया ।
पूजा सम्मतिः ।
कोपः क्रोधः ।
निन्दनं कुत्सनम् ।
अपकारशब्दैर्भयोत्पादनं भर्त्सनम् ।
एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः ।
असूयायां तावत् माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, रिक्तं ते आभिरूप्यम् ।
सम्मातौ माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, शोभनः खल्वसि ।
कोपे माणवक ३ माणवक, अविनीतक ३ अविनीतक, इदानीं ज्ञास्यसि जाल्म ।
कुत्सने शक्तिके ३ शक्तिके, यष्टिके ३ यष्टिके, रिक्ता ते शक्तिः ।
भर्त्सने चौर चौर ३, वृषल वृषल ३, घातयिष्यमि त्वां बन्धयिष्यामि त्वाम् ।
असूयादिषु स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु (*८,२.१०३) इति पूर्वपदस्य प्लुतः ।
भर्त्सने तु आम्रेडितं भर्त्सने (*८,२.९५) इत्याम्रेडितस्य+एव प्लुतः ।
वाक्यादेः इति किम् ? अन्तस्य मध्यमस्य च मा भूत्, शोभनः खल्वसि माणवक ।
आमन्त्रितस्य इति किम् ? उदारो देवदत्तः ।
असूयादिषु इति किम् ? देवदत्त गामभ्याज शुक्लाम् ॥

एकं बहुव्रीहिवत् ॥ ८,१.९ ॥

_______ काशिकावृत्तिः८,१.९:

एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति ।
बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ ।
कैकमक्षरं पठति ।
एकैकया आहुत्या जुहोति ।
सर्वनामसञ्ज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते ।
तेन अतिदेशिके बहुव्रीहौ न भवन्ति ।
एकैकस्मै ।
न बहुव्रीहौ (*१,१.१२९) इति प्रतिषेधो न भवति, बहुव्रीहिरेव यो बहुव्रीहिः इति विज्ञानात् ।
नन, सुसु, नञ्सुभ्याम् (*६,२.१७२) इत्यन्तोदात्तत्वं न भवति ।
ऋकृक्, पूः पूः, ऋक्पूः इति समासान्तो न भवति ॥

आबाधे च ॥ ८,१.१० ॥

_______ काशिकावृत्तिः८,१.१०:

आबाधनमाबाधः, पीडा प्रयोक्तृधर्मः, न अभिधेयधर्मः ।
तत्र वर्तमानस्य द्वे भवतः, बहुव्रीहिवच्चास्य कार्यं भवति ।
गतगतः ।
नष्टनष्टः ।
पतितपतितः ।
गतगता ।
नष्टनष्टा ।
पतितपतिता ।
प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवं प्रयुङ्क्ते प्रयोक्ता ॥

[॰८८५]

कर्मधारयवदुत्तरेषु ॥ ८,१.११ ॥

_______ काशिकावृत्तिः८,१.११:

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं भवति इत्येतद्वेदितव्यम् ।
कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ।
सुब्लोपः पटुपटुः ।
मृदुमृदुः ।
पण्डितपण्डितः ।
पुंवद्भावः पटुपट्वी ।
मृदुमृद्वी ।
कालककालिका ।
कोपधाया अपि हि कर्मधारयवद्भावात्पुंवत्कर्मधारयः इति पुंवद्भावो भवति ।
अन्तोदात्तत्वम् पटुपटुः ।
पटुपत्वी ।
समासान्तोदात्तत्वमनेन+एव विधीयते इति परत्वदाम्रेडितानुदात्तत्वं बाध्यते ।
अधिकारेणैव सिद्धे यतुत्तरेषु इति वचनं तद्विस्पष्टार्थम् ॥

प्रकारे गुणवचनस्य ॥ ८,१.१२ ॥

_______ काशिकावृत्तिः८,१.१२:

प्रकारो भेदः सादृश्यं च ।
तदिह सादृश्यं प्रकारो गृह्यते ।
प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः ।
पटुपटुः ।

मृदुमृदुः ।
पण्डितपण्डितः ।
अपरिपूर्णगुणः इत्यर्थः ।
परिपूर्णगुणेन न्यूनगुणस्य+उपमाने सत्येवं प्रयुज्यते ।
जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते ।
पटुजातीयः, मृदुजातीयः इत्यपि हि भवति ।
तत्कथम् ? वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोः शेषो विजायते ।
प्रकारे इति किम् ? पटुर्देवदत्तः ।
मुणवचनस्य इति किम् ? अग्निर्माणवकः ।
गौर्वाहीकः ।
यद्यप्यत्र अग्निशब्दो गोशब्दश्च मुख्यार्थसम्बन्धादवभृतभेदं तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुनविशेषमेव प्रतिपादयितुं प्रवृत्तः, तथापि सर्वदा गुणवचनो न भवति इति न द्विरुच्यते ।
आनुपूर्व्ये द्वे भवत इति वक्तव्यम् ।
मूले मूले स्थूलाः ।
अग्रेऽग्रे सूक्ष्माः ।
ज्येष्ठं ज्येष्ठं प्रवेशय ।
स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् ।
अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि ।
स्वार्थे एतद्द्विर्वचनम्, न वीप्सायाम् ।
अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसम्बन्धिनो माषाः, तेन वीप्सा न विद्यते ।
अवधार्यमाणे इति किम् ? अस्मात्कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन् वा माषान् देहि ।
अनेकस्मिनिति किम् ? अस्मात्कार्षापणादिह भवद्भ्यां माषमेकं देहि ।
चापले द्वे भवत इति वक्तव्यम् ।
सम्भ्रमेण प्रवृत्तिश्चापलम् ।
अहिरहिः, वुध्यस्व बुध्यस्व ।
नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किं तर्हि, यावद्भिः शब्दैः सोऽथोऽवगम्यते तावन्तः प्रयोक्तव्याः ।
अहिरहिरहिः, बुध्यस्व बुध्यस्व बुध्यस्व इति ।
क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ।
स भवान् लुनीहि लुनीहि इत्येव अयं लुनाति ।

[.८८६]

आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् ।
भुक्त्वा भुक्त्वा व्रजति ।
भोजं भोजं व्रजति ।
नित्य इत्येव सिद्ध इति तत्र+उक्तम् ।
डाचि द्वे भवत इति वक्तव्यम् ।
पटपटाकरोति ।
पटपटायते ।
अव्यक्तानुकरणे डाजन्तस्य द्विर्वचनमिष्यते ।
इह न भवति, द्वितीयाकरोति, तृतीयाकरोति ।
तदर्थं केचित्डाचि बहुलमिति पठन्ति ।
पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् ।
पूर्वं पूर्वं पुष्प्यन्ति ।
प्रथमं प्रथमं पच्यन्ते ।

आतिशयिकोऽपि दृश्यते, पूर्वतरं पुष्प्यन्ति, प्रथमतरं पच्यन्ते इति ।
डतरडतमयोः समसम्प्रधारणयोः स्त्रीनिगदे भवे द्वे भवत इति वक्तव्यम् ।
उभाविमावाढ्यौ ।
कतरा कतरा अनयोराढ्यता ।
सर्व इमे आढ्याः ।
कतमा कतमा एषामाढ्यता ।
डतरडतमाभ्यामन्यत्र अपि हि दृश्यते ।
उभाविमाउ आढ्यौ ।
कीदृशी कीदृशि अनयोराढ्यता ।
तथा स्त्रीनिगदाद्भावातन्यत्र अपि हि दृश्यते, उभाविमावाढ्यौ, कतरः कतरोऽन्योर्विभवः इति ।
कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम् ।
यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य अन्यमन्यमिमे ब्राह्मणा भोजयन्ति, अन्योन्यमिमे ब्राह्मणा भोजयन्ति ।
अन्योन्यस्य ब्राह्मणा भोजयन्ति ।
इतरेतरं भोजयन्ति ।
इतरेतरस्य भोजयन्ति ।
स्त्रीनपुंसकयोरुत्तरपदस्य च अम्भावो वक्तव्यः ।
अन्योऽन्यामिमे ब्राह्मण्यौ भोजयतः ।
अन्योन्यं भोजयतः ।
इतरेतरां भोजयतः ।
इतरेतरं भोजयतः ।
अन्योन्यामिमे ब्राह्मणकुले भोजयतः ।
इतरामिमे ब्राह्मणकुले भोजयतः ।
इतरेतरमिमे ब्राह्मणकुले भोजयतः ॥

[़८८७]

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ ८,१.१३ ॥

________ काशिकावृत्तिः८,१.१३:

प्रिय सुख इत्येतयोः अन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये ।
कृच्छ्रं दुःखम्, तदभावः अकृच्छ्रम् ।
प्रियप्रियेण ददाति ।
सुखसुखेन ददाति ।
प्रियेण ददाति ।
सुखेन ददाति ।
अखिद्यमानो ददाति इत्यर्थः ।
अकृच्छ्रे इति किम्? प्रियः पुत्रः ।
सुखो रथः ॥

यथास्वे यथायथम् ॥ ८,१.१४ ॥

_______ काशिकावृत्तिः८,१.१४:

यो य आत्मा, यद्यदात्मीयम्, तत्तद्, यथास्वम्, तस्मिन् यथायथमिति निपात्यते ।
यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते ।
ज्ञाताः सर्वे पदार्थाः यथायथम् ।
यथास्वभावमित्यर्थः ।
सर्वेषां तु यथायथं यथात्मीयमित्यर्थः ॥

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ ८,१.१५ ॥

_______ काशिकावृत्तिः८,१.१५:

द्वन्द्वमिति द्विशब्दस्य द्विर्वचनम्, पूर्व पदस्याम्भावः, अत्त्वं च+उत्तरपदस्य निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेषु अर्थेषु ।
तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः ।
द्वन्द्वं मन्त्रयते ।
मर्यादावचने मर्यादा स्थीत्यनतिक्रमः ।
आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति ।
माता पुत्रेण मिथुनं गच्छति, पौत्रेण, तत्पुत्रेण अपि इति मर्यादार्थः ।
व्युत्क्रमणे द्वन्द्वं व्युत्क्रान्ताः ।
व्युत्क्रमणं भेदः, पृथगवस्थानम् ।
द्विवर्गसम्बन्धनेन पृथगवस्थिता द्वन्व्द्वं व्युत्क्रान्ता इत्युच्यन्ते ।
यज्ञपात्रप्रयोगे द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः ।
अभिव्यक्तौ द्वन्द्वं नारदपर्वतौ ।
द्वन्द्वं सङ्कर्षणवासुदेवौ ।
द्वावप्यभिव्यक्तौ साहचर्येण इत्यर्थः ।
अन्यत्र अपि द्वन्द्वमित्येतद्दृश्यते, तदर्थं योगविभागः कर्तव्यः, द्वन्द्वं युद्धं वर्तते, द्वन्द्वानि सहते धीरः, चार्थे द्वन्द्वः (*२,२.२९) इति ॥

पदस्य ॥ ८,१.१६ ॥

_______ काशिकावृत्तिः८,१.१६:

पदस्य इत्ययमधिकारः प्रागपदान्ताधिकारात् ।
यदित ऊर्ध्वमनुक्रमिष्यामः पदस्य इत्येवं तद्वेदितव्यम् ।
वक्ष्यति संयोगान्तस्य लोपः (*८,२.२३) ।
पचन् ।

यजन् ।
पदस्य इति किम् ? पचन्तौ ।
यजन्तौ ।
वक्ष्यमाणवाक्यापेक्षया पदस्य अधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्याः क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी ॥

[।८८८]

पदात् ॥ ८,१.१७ ॥

_______ काशिकावृत्तिः८,१.१७:

पदातित्ययमधिकारः प्राक्कुत्सने च सुप्यगोत्रादौ (*८,१.६९) इत्येतस्मात् ।
यदिति ऊर्ध्वमनुक्रमिष्यामः पदातित्येवं तद्वेदितव्यम् ।
वक्ष्यति आमन्त्रितस्य च (*८,१.१९) ।
आमन्त्रितस्य पदात्परस्य अनुदात्तादेशो भवति इति ।
पचसि देवदत्त ।
पदातिति किम् ? देवदत्त पचसि ॥

अनुदात्तं सर्वमपादादौ ॥ ८,१.१८ ॥

_______ काशिकावृत्तिः८,१.१८:

अनुदात्तमिति च, सर्वमिति च, अपादादौ इति च, अपादादौ इति च एतत्त्रयमधिकृतं वेदितव्यमा पादपरिसमाप्तेः ।
इत उत्तरं यद्वक्ष्यामः अनुदात्तं सर्वमपादादौ इत्येवं तद्वेदितव्यम् ।
वक्ष्यति आमन्त्रितस्य च (*७,१.१९) इति ।
पचसि देवदत्त ।
अपादादौ इति किम् ? यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम् ।
बहुवचनस्य वस्नसौ (*८,१.२१) ।
ग्रामो वः स्वम्, जनपदो नः स्वम् ।
अपादादौ इति किम् ? रुद्रो विश्वेश्वरो देवो यष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं शत्रुमर्दनः ॥
पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते ।
सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं च अनुदात्तं यथा स्यातिति ।
तेन युष्मदस्मदादेशानामपि वाक्यभेदेन अनुदात्तत्वं विधीयते ।
युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः, यत्र अपि स्वादिपदं पदसञ्ज्ञं भवति ।
ग्रामो वां दीयते ।
जनपदो नौ दीयते ॥

आमन्त्रितस्य च ॥ ८,१.१९ ॥

_______ काशिकावृत्तिः८,१.१९:

आमन्त्रितस्य पदस्य पदात्परस्य अपदादौ वर्तमानस्य सर्वमनुदात्तं भवति ।
पचसि देवदत्त ।
पचसि यज्ञदत्त ।
आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् ।
समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ।
इह मा भूवन्, अयं दण्डो हर अनेन, ओदनं पच तव भविष्यति, ओदनं पच मम अभविष्यति ।
इह च यथा स्यात्, इह देवदत्त माता ते कथयति, नद्यास्तिष्ठति लूके, शालीनां ते ओदनं दास्यामि इति ।
आमन्त्रितान्तं तिङन्तं युष्मदस्मदादेशाश्च यस्मात्पराणि न तेषां सामर्थ्यमिति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, समर्थः पदविधिः (*२,१.१.) इति वचनात् ॥

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ ८,१.२० ॥

_______ काशिकावृत्तिः८,१.२०:

युष्मदस्मदित्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यं वां नौ इत्येतावादेशौ भवतः, तौ चानुदात्तौ ।
पदस्य, पदात्, अनुदात्तं सर्वमपादादौ इति सर्वमिह सम्बध्यते ।
ग्रामो वां स्वम् ।
जनपदो नौ स्वम् ।
ग्रामो वां दीयते ।

[।८८९]

जनपदो नौ दीयते ।
ग्रामो वां पश्यति ।
जनपदो नौ पश्यति ।
एकवचनबहुवचनान्तयोरादेशान्तरविधानाद्द्विवचनान्तयोः एतावादेशौ विज्ञायेते ।
षष्ठीचतुर्थीद्वितीयास्थयोः इति किम् ? ग्रामे युवाभ्यां कृतम् ।
स्थग्रहणं श्रूयमाणविभक्त्यर्थम् ।
इह मा भूत्, अयं युष्मत्पुत्रः अयमस्मत्पुत्रः इति ॥

बहुवचनस्य वस्नसौ ॥ ८,१.२१ ॥

_______ काशिकावृत्तिः८,१.२१:

बहुवचनान्तयोः युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यं वस्नसित्येतावादेशौ भवतः ।

